July 1932.




THE
CHOWKHAMBA SANSKRIT SERIES
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.
NO 415.

श्रीमन्महर्षिकात्यायनप्रणीतं

# श्रौतसूत्रम्

देवयाज्ञिकपद्धतिसहितम् ।

काशीविश्वविद्यालयाध्यापकेन
वेदाचार्य श्रीविद्याधरशर्मणा
संशोधितम् ।

# KATYAYAN SRAUTA SUTRA

WITH

DEVAYĀJÑIKA PADDHATI

*Edited by*

VEDĀCHĀRYA
PANDIT S'RĪ VIDYĀDHARA S'ARMĀ
Professor, Benares Hindu University

FASCICULUS I–१.

*PUBLISHED & SOLD BY THE SECRETARY*
CHOWKHAMBA SANSKRIT SERIES OFFICE,
*Benares City.*

1933




श्रीः



आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—४१५

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

# कात्यायनश्रौतसूत्रम्

## देवयाज्ञिकपद्धतिसहितम् ।

अथातोऽधिकारः ॥ १ ॥ फलयुक्तानि कर्माणि ॥ २ ॥ सर्व्वेषामविशेषात् ॥ ३ ॥ मनुष्याणां वाऽऽरम्भसामर्थ्यात् ॥ ४ ॥ अङ्गहीना-ऽश्रोत्रिय-षण्ढ-शूद्रवर्जम् ॥ ५ ॥ ब्राह्मण-राजन्य-वैश्यानाᳬ श्रुतेः ॥ ६ ॥ स्त्री चाविशेषात् ॥ ७ ॥ दर्शनाच्च ॥ ८ ॥ रथकारस्याधाने ॥ ९ ॥ नियतं च ॥ १० ॥ नाभावादिति वात्स्यः ॥ ११ ॥ निषादस्थपतिर्गावेधुकेऽधिकृतः ॥ १२ ॥ वाऽवकीर्णिनो गर्दभेज्या ॥ १३ ॥ लौकिके ॥ १४ ॥ भूमौ पशुपुरोडाशश्रपणम् ॥ १५ ॥ अप्स्ववदानहोमः ॥ १६ ॥ शिश्नात्प्राशित्रावदानम् ॥ १७ ॥ वैतानिकेषु सर्वᳬ सर्वार्थत्वात् ॥ १८ ॥ दर्शनाच्च ॥ १९ ॥ नौपासनश्रुतेः ॥ २० ॥ अधिश्रयणीये माᳬसप्रतिषेधः ॥ २१ ॥ ॥ १ ॥

---

प्रणम्य विघ्नहर्तारं गुरूंश्च श्रीपतिं (१)तथा ॥
कात्यायनस्य सूत्रस्य पद्धतिः क्रियते मया ॥ १ ॥

[ कर्मस्वधिकारः ]

तत्राग्न्याधेयादिसर्वकर्मसु ब्राह्मण-क्षत्रिय-वैश्यानामधीतवेदानां वेदार्थज्ञानवतामङ्गहीनाऽश्रोत्रिय-षण्ढ-शूद्रवर्जितानां पत्नीसहितानामधिकारो भवति, रथकारस्य च । निषादस्थपतेर्गावेधुके चरावधिकारः । ब्रह्मचारी सन् यः स्त्रियं गच्छति सोऽवकीर्णीत्युच्यते, तस्य प्रायश्चित्तार्थायां गर्दभेज्यायामधिकारः । गावेधुकचरुरवकीर्णिपशुश्च लौकिकेऽग्नौ भवतः(२) । तत्रावकीर्णिपशौ पुरोडाशश्रपणं भूमौ भवति न कपालेषु । अवदानहोम उदके भवति नाऽग्नौ, अन्यदाघाराद्यग्नावेव । प्राशित्रं गर्दभस्य शिश्नादवदेयम् ।

---

१. श्रीपतीन् । २. भवति ।

यज्ञं व्याख्यास्यामः ॥ १ ॥ द्रव्यं देवता त्यागः ॥ २ ॥ तदङ्गमितरत्समभिव्याहार-प्रकरणाभ्याम् ॥ ३ ॥ यजत यश्चाफलयुक्तास्तदङ्गम् ॥ ४ ॥ यजति-जुहोतीनां को विशेषः ॥ ५ ॥ तिष्ठद्धोमा वषट्कारप्रदाना याज्या-पुरोऽनुवाक्यावन्तो यजतयः ॥ ६ ॥ उपविष्टहोमाः स्वाहाकार प्रदाना जुहोतयः ॥ ७ ॥ ब्राह्मणाऽऋत्विजो भक्षप्रतिषेधादितरयोः ॥ ८ ॥ दर्शनाच्च ॥ ९ ॥ फलयुक्तानामारम्भे याथाकामी फलार्थित्वात् ॥ १० ॥ न नियम-मिमित्ता-

---

[ अग्न्यधिकारः ]

श्रौतं सर्वं कर्म वैतानिकेषु विहाराहेंषु गार्हपत्याहवनीयदक्षिणाग्निषु कर्तव्यम्, स्मार्तं चावसथ्येऽग्नौ ॥ १ ॥

इति प्रथमस्य प्रथमा कण्डिका ॥

[ यागस्वरूपम् ]

देवतोद्देशेन द्रव्यत्यागो यागः। ये च यागा "यदाग्नेयोऽष्टाकपाल"(१) इत्यादिवाक्यैर्दर्शपूर्णमाससंयोगेनोत्पन्नास्ते दर्शपूर्णमासशब्दवाच्याः।

[ यागाङ्गनिरूपणम् ]

तेषां च "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति"(२) फलसाधनत्वेन विधानात्प्रधानत्वम्, इतरत्सर्वं तत्प्रकरणपठितमग्न्याधानादि ब्राह्मणतर्पणान्तं तदङ्गम्। अफलयुक्ताः प्रयाजादियागाः पूर्वाघारादिहोमाश्च तत्प्रकरणपठितास्तदङ्गम्।

[ यजति-जुहोत्योर्लक्षणम् ]

यत्र यजतिशब्दः श्रूयते तत्र तिष्ठता होमो वषट्कारेण प्रदानम् याज्यापुरोऽनुवाक्ये च, एतावद् भवति। यत्र च जुहोतिशब्दस्तत्रोपविष्टेन होतव्यं स्वाहाकारेण च।

[ ब्राह्मणानामेवार्त्विज्यम् ]

सर्वकर्मसु ऋत्विजो ब्राह्मणा एव भवन्ति न क्षत्रियवैश्याः, तेषां हविःशेषभक्षणप्रतिषेधात्।

---

१. तै. सं. २. ६. ३ २. आप. श्रौ. ३. १४. ८

ऽग्निहोत्र-दर्शपूर्णमास-दाक्षायणा-ऽऽग्रयण-पशुषु प्रवृत्तेः ॥ ११ ॥ सोमे चैके ॥ १२ ॥ चातुर्मास्येषु चतुर्मुखश्रुतेः ॥ १३ ॥ नियतसहपाठात् ॥ १४ ॥ दर्शनाच्च ॥ १५ ॥ नोत्सर्गयोगात् ॥ १६ ॥ स्यात्त्रिंशद्वत् ॥ १७ ॥ विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदात् ॥ १८ ॥ प्रायश्चित्तविधानाच्च ॥ १९ ॥ तथा च दृष्टम् ॥ २० ॥ न श्रुतिलक्षणत्वात् ॥ २१ ॥ प्रायश्चित्तं तत्कालम् ॥ २२ ॥ दृष्टे तत्परिमाणम् ॥ २३ ॥ २ ॥

ऋचो यजूंषि सामानि निगदा मन्त्राः ॥ १ ॥ तेषां वाक्यं निराकाङ्क्षम् ॥ २ ॥ मिथः सम्बद्धम् ॥ ३ ॥ तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वात् ॥ ४ ॥ मन्त्रान्तैः कर्मादिः सान्निपात्योऽभिधानात् ॥ ५ ॥ अनियमं वात्स्यः ॥ ६ ॥ आदिं

---

[ काम्ये याथाकाम्यं न नित्ये ]

काम्यानि कर्माणि फलेच्छायां सत्यां कर्तव्यानि नावश्यम् । नित्यानि तु अग्निहोत्र-दर्शपूर्णमास-दाक्षायण-ऽऽग्रयण-पशु-चातुर्मास्या-ऽग्निष्टोमादीनि(१) अवश्यं कर्तव्यानि, अकरणे दोषश्रवणात् । सत्यवदना-ऽधःशयन-ब्रह्मचर्यादिनियमा अवश्यमनुष्ठेयाः । गेहदाह-भार्यागोप्रसवजननादौ कर्माङ्गविनाशादौ च यानि नैमित्तिकानि विधीयन्ते तान्यवश्यमनुष्ठेयान्येव न तेषामिच्छया ऽनुष्ठानम । नित्यानि कर्माणि अवश्यकर्त्तव्यत्वाद्यथाशक्त्यङ्गयुक्तान्यनुष्ठेयानि । काम्यानि तु सर्वाङ्गोपेतानि यथाश्रुतान्येव यदा कर्तुं शक्यन्ते फलेच्छायां सत्यामपि तदैवानुष्ठेयानि नान्यथा ॥ २ ॥

इति प्रथमस्य द्वितीया कण्डिका ॥

[ मन्त्रलक्षणम् ]

ऋचो यजूंषि सामानि प्रैषाश्चैते मन्त्रसंज्ञाः । यजुषां च यावति पदसमूहऽ उच्चरिते पदसमूहो निराकाङ्क्षो भवति तावत्परिमाणमेकं वाक्यं कर्मकाले प्रयोक्तव्यम् । यत्र तु मध्ये पठितैः पदैर्यजुर्निराकाङ्क्षं न जायते तत्र पदान्तरं योग्यमध्याहृत्य पूर्वपठितं वाऽनुषज्य निराकाङ्क्षी-

---

१. अग्निहोमादीनि ।

त्वाचार्याः ॥७॥ तऽ आयुक्ताः ॥ ८ ॥ परादिना पूर्वान्तः ॥ ९ ॥ उपाᳫंशु प्रयोगः श्रुतेः ॥१०॥ न संप्रैषाः ॥ ११ ॥ कौशं बर्हिः ॥१२॥ अर्थात्परिमाणम् ॥ १३ ॥ अयुग्धातूनि यूनानि ॥१४॥ प्रागग्रे यूनऽ उदगग्रं बर्हिराचिनोति ॥१५॥ उदगग्रे प्रागग्रमिध्मम् ॥१६॥ प्रत्यग्ग्रन्थीनवगूहति ॥१७॥ अष्टादशेध्मं परिधिवृक्षाणाम् ॥ १८ ॥ एकविᳫंशतिं वा ॥१९॥ ततः परिधीनेके ॥२०॥ अपरिमितं प्रणयनीयं त्रि-

---

कृत्य प्रयोज्यम् । प्रयोगकाले मन्त्राः कर्म्मारम्भे प्रयोज्याः । मन्त्राणामन्त एव कर्मारम्भणीयम् । ते मन्त्राः सूत्रमध्यऽ आदिमात्रेणोपात्ताः सन्तः कर्मकाले सकलाः प्रयोज्याः, सूत्रोपात्तेन परस्य मन्त्रस्यादिना पूर्वस्य मन्त्रस्यान्तो ज्ञातव्यः । यजुर्वेदमन्त्रा उपांशु प्रयोज्याः, ऋग्वेद-सामवेदयोस्तु मन्त्रा उच्चैः प्रयोज्याः, प्रैषास्तु यजुर्वेदविहिता अप्युच्चैरेव प्रयोज्याः, तेषामन्यसम्बोधनार्थत्वादुपांशुप्रयुक्तैरन्यसम्बोधनासिद्धेः ।

[ बर्हिर्लक्षणम् ]

"अथ बर्हीᳫंषि प्राचीनाग्राणि च" इत्यादौ(१) यत्र बर्हिःशब्देन विधानं दृश्यते तत्र तत्रासंस्कृतमेव कुशजातिमात्रं ग्राह्यम् ।

[ परिमाणानुक्तौ ]

अग्न्यगारादौ, वसोर्द्धाराहोमे स्रुक्स्रुवादौ च परिमाणविशेषानुक्तौ अर्थात्परिमाणं ज्ञेयम्, यावता परिमाणेन कार्यसिद्धिर्भवति ।

[ इध्माबर्हिषोर्बन्धनप्रकारः ]

इध्मबर्हिर्बन्धनार्थानि सन्नहनान्ययुग्धातूनि भवन्ति = विषमसंख्यैस्तृणमुष्टिभिर्युतानि भवन्तीत्यर्थः । प्रागग्रे सन्नहन उदगग्रं बर्हिर्निधाय सन्नहनेन बद्ध्वा बर्हिर्मूलभागे ग्रन्थिमवगूहेत् । "पुरस्तात् प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चात् प्राञ्चं वा" इत्यापस्तम्बः(२) ।

[ इध्मलक्षणम् ]

इध्मश्च पालाशोऽष्टादशसंख्यारत्निमात्रकाष्ठकः एकविंशतिसंख्यकाष्ठको वा कार्यः । पालाशाभावे वैकङ्कत इध्मः कार्यः, तदभावे काश्मर्यमयः । काश्मर्यः = श्रीपर्णीवृक्षः । तदभावे बैल्वो वा औदुम्बरो वा खादिरो वा । एके आचार्या एकविंशतिकाष्ठकादिध्मादेव त्रीणि काष्ठान्यर-

---

१. शत. ब्रा. ३. ७. १. ७ २. आप. श्रौ. १. ४. १४

**यूनम् ॥२१॥ निरूप्याज्यं वेदोऽसीति यजमानो वेदं करोति ॥ २२ ॥ कुशमुष्टिं सव्यावृत्तं वत्सजानुं त्रिवृतं मूतकार्यं वा(१)पशु-ब्रह्मवर्चसा-ऽन्नाद्यकामा यथासंख्यम्॥२३॥ आऽमुष्मादिति कर्मसु तत्र ॥ २४ ॥ अन्तवचने च ॥२५॥**

---

त्रिमात्राण्येवोपादाय तैः परिधिपरिधानमिच्छन्ति ।

सामिधेनीविवृद्धौ चेध्मकाष्ठान्यपि वर्धन्ते(२) तद्यथा;-सप्तदशसामिधेनीपक्षे विंशतिः काष्ठानि । इष्टकापशावेकविंशतिसंख्यसामिधेनीपक्षे चतुर्विंशतिः । चतुर्विंशतिसामिधेनीपक्षे तु सप्तविंशतिः । पित्र्यादौ सामिधेनीह्रासे च काष्ठह्रासो न भवति । अग्निप्रणयनार्थं इध्मस्त्वपरिमितकाष्ठकस्त्रिभिः सन्नहनैर्मूलभागे बद्धः स्यात् । अपरिमितशब्देन पूर्वोक्तप्रमाणादतिशयेनाधिकमुच्यते, तेनेष्टकापशौ इध्मकाष्ठानां सप्तविंशतिसंख्यासद्भावात्ततोऽप्यधिकैरष्टाविंशतिप्रभृतिभिः काष्ठैः प्रणयनार्थ इध्मः कार्यः । वेदकरणं दर्शपूर्णमास एव वक्ष्यते ।

[ आङोऽभिविध्यर्थकत्वम् ]

यत्र यत्र कर्मविषये आङ् प्रयुज्यते 'आ प्रयाजेभ्यः'(३) 'आ इडायाः' इत्यादौ(४) तत्र सर्वत्राङभिविधौ ज्ञेयो न मर्यादायाम् । तदपि कर्मकर्तव्यमध्ये ज्ञेयम्, न त्ववधित्वेनेत्यर्थः । 'शंय्वन्तं भवति'(५) 'इडान्तं भवति'(६) इत्यादावप्यन्तशब्देन संयुक्तं शंय्विडादिकं कर्तव्यमध्ये ज्ञेयम्, नत्वन्तशब्दं समीपवाचिनं सम्भाव्य तत्समीपे ततोऽर्वाक् स्थीयते ।

[ प्रतिकर्माग्न्युद्धरणम् ]

वक्ष्यमाणेषु सर्वकर्मस्वनुक्तमपि आदौ आहवनीयदक्षिणाग्न्योरुद्धरणं गार्हपत्यात् कर्तव्यम् । यत्र त्वन्यकर्मार्थं प्रसङ्गादुद्धतौ भवतस्तत्कर्म च समाप्तं न भवति अस्मिन्नवसरे यत्कर्मापतति तत् पूर्वकर्मार्थोद्धृतयोरेव क्रियते न तदर्थं पृथगुद्धरणम् ; यथा दर्शपूर्णमासेष्ट्यर्थमुद्धृतयोरेवाग्निहोत्रहोम आगतोपस्थानादिकं च, पुनराधानानन्तरमग्निधारणे कृते विकृतेष्टि-नित्येष्ट्यादिकं च । यत्कर्मार्थमाहवनीयदक्षिणाग्नी उद्धृतौ भवतस्तत्कर्मसमाप्त्यनन्तरं लौकिकौ ज्ञेयौ; अत उर्ध्वं तयोराह-

---

१. कर्काचार्यैरिदं सूत्रं द्विधाकृत्य व्याख्यातम् ।
२. कर्काचार्यमते सामिधेनीविवृद्धौ नेध्मकाष्ठवर्द्धनम् ।
३. का. श्रौ. ६. ४. १　　४. का. श्रौ. ५. ६. २७
५. का. श्रौ. ३. ७. ३　　६. का. श्रौ. ५. ६. २५

**प्रतिकर्मोद्धरणमप्रसङ्गे ॥ २६ ॥ अपवृत्तकर्मा लौकिकोऽर्थसंयोगात् ॥२७॥ अप्रकरणोत्पत्तिरनारभ्यवाद आश्रयित्वात्सर्वगुणः ॥ २८ ॥ प्रकरणे चाविशेषात् ॥ २९ ॥ दर्शनाच्च ॥ ३० ॥ वैकङ्कतानि पात्राणि ॥ ३१ ॥ खादिरः स्रुवः ॥ ३२ ॥ स्फयश्च ॥३३॥ पालाशी जुहूः ॥३४॥ आश्वत्थ्यु**

---

णीयादिशब्दविहितं कार्यं न करणीयम् । अत एव यदा पौर्णमासादौ बहव इष्टयः पृथक्तन्त्राः क्रियन्ते तदा प्रतीष्टि पृथगेवोद्धरणम्, न सकृदुद्धृतयोरेव सर्वत्रोपयोगः ।

[ अनारभ्याधीतानां प्रकृतिमात्रगामित्वम् ]

"खादिरः स्रुवः"(१) "पर्णमयी जुहूः" इत्येवमादि(२) यस्य कस्यचित्कर्मणः प्रकरणे पठितं न भवति वाक्यान्तरेण च कर्मविशेषे विनियुक्तं न भवति अमुष्मिन् कर्मणि खादिरः स्रुवो भवतीत्येवं, तत्प्रकृतावेव निविशते, ततः प्रकृतिवन्न्यायेनेतराङ्गवद्विकृतावपि गच्छति ।

[ स्रुवादिपात्राणां लक्षणम् ]

अथ पात्राणां लक्षणमुच्यते, खादिरः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करो नासिकावत्पर्वार्द्धखातो भवति । स्फयश्च खादिरः खड्गाकृतिररत्निमात्रः । स्रुचो बाहुमात्र्यो मूलदण्डास्त्वग्बिला हंसमुखसदृशैकप्रणालिकायुक्ताः पाणिमात्रपुष्करास्तावत्खातयुक्ताश्च कार्याः । पालाशी जुहूः । उपभृदाश्वत्थी । वैकङ्कती ध्रुवा । एतेषां वृक्षाणामेकस्य वा सर्वाः स्रुचः कारयेत् । "बाहुमात्र्यो ऽरत्निमात्र्यो वाऽग्राग्रास्त्वक्तोबिला हंसमुख्य" इत्यापस्तम्बः(३) । अग्निहोत्रहवणी वैकङ्कती । अग्निहोत्रस्रुवो वैकङ्कतः । यैः पात्रैर्होमो न क्रियते तानि सर्वाणि वारणानि भवन्ति । तानि चोलूखल-मुसल-कूर्च-इडापात्री-पिष्टपात्री-पुरोडाशपात्री-शम्या-शृतावदाना-ऽभ्युपवेषा-ऽन्तर्द्धानकट-प्राशित्रहरण-षडवत्त-ब्रह्मासनादीनि । तत्रोलूखलमुसलयोर्विशेषः—

"मुसलोलूखले वार्क्षे स्वायते सुदृढे तथा ।
इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च"(४) ॥

तथा—

"खादिरं मुसलं कार्यं पालाशः स्यादुलूखलः ।
यद्वोभौ वारणौ कार्यौ तदभावेऽन्यवृक्षजौ" इति ॥

---

१. का. श्रौ. १. ३. ३२
२. तै. सं. ३. ५. ७
३. आप. श्रौ. १. १५. १२
४. का. स्मृ. १५. १६

पभृत् ॥३५॥ वारणान्यहोमसंयुक्तानि ॥३६॥ बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिला हंसमुखप्रसेका मूलदण्डा भवन्ति ॥३७॥ अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः ॥ ३८ ॥ स्फ्योऽस्याकृतिः ॥३९॥ आदर्शाकृति प्राशित्रहरणम् ॥ ४० ॥ चमसाकृति वा ॥ ४१ ॥ चात्वालोत्करावन्तरेण सञ्चरः ॥४२॥ प्रणीतोत्करावेिष्टिषु ॥४३॥३॥

चोदिताभावेऽनारम्भस्तत्सिद्धित्वात्तस्य ॥ १ ॥ नि·

---

कूर्चो बाहुमात्रः पीठाकारः। इडापात्री-पिष्टपात्र्यौ अरत्निमात्र्यौ मध्यसंगृहीते। पुरोडाशपात्री प्रादेशमात्री समचतुरस्रा षडङ्गुलवृत्तखातवती। शम्या प्रादेशमात्री। प्रादेशमात्रं तीक्ष्णाङ्गुष्ठपर्वमात्रपृथुमुखं श्रृतावदानम्। अभ्रिररत्निमात्रस्तीक्ष्णमुखः। उपवेषोऽरत्निमात्रः प्रादेशमात्रो वा हस्ताकृतिः। अन्तर्धानकटस्त्वर्द्धचन्द्राकारो द्वादशाङ्गुलः। प्राशित्रहरणं वृत्तमादर्शाकारं चतुरस्रं चमसाकारं वा, तथैव द्वितीयमपिधानपात्रम्। षडवृत्तं चोभयत्र खातवत्। आसनानि चारत्निमात्रदीर्घाणि प्रादेशमात्रविपुलानि। सर्वेषु पात्रेषु मूलाभिज्ञानार्थं वृन्तानि कार्याणि। अनादेशे होमसाधनभूतानि पात्राणि वैकङ्कतानि भवन्ति; यथा सोमयागे ग्रह-चमस-द्रोणकलशादीनि। तत्रापि हविर्धानाऽधिषवणफलक-संभरणी-परिप्लवादीन्यहोमसंयुक्तानि वारणान्येव। षोडशिनः पात्रं खादिरं चतुरस्रम्। अंश्वदाभ्यपात्रमौदुम्बरं वचनात्(१)। वाजपेये सप्तदशानो सोमग्रहाणां पात्राणि वारणानि, अहोमसंयुक्तत्वात्। सुराग्रहपात्राण्यपि वारणानि, शाखान्तरान्मृन्मयानि वा, इत्येवमादि सर्वमूहनीयम्।

[ इष्टिषु गमनागमनमार्गः ]

इष्टिषु प्रणीतोत्करावन्तरेण सर्वेषां गमनागमनाय मार्गः। सोत्तरवेदिकेषु कर्मसु चात्वालोत्करयोरन्तरालेन ॥ ३ ॥

इति प्रथमस्य तृतीया कण्डिका ॥

---

[ काम्ये न प्रतिनिधिः किन्तु नित्ये ]

विहितद्रव्याभावे काम्यस्य कर्मण आरम्भ एव न कार्यः, नित्यं च

---

१. का. श्रौ. १२. ५. ६

**यते सामान्यतः प्रतिनिधिः स्यात् ॥२॥ आरम्भान्नियमः ॥ ३ ॥ दोषश्चासमाप्तौ स्यात्सामान्यात् ॥ ४ ॥ दर्शनाच्च ॥ ५ ॥ अन्यार्थं दर्शनं न पुनर्ग्रहणात् ॥ ६ ॥ अन्यार्थं पुनर्ग्रहणम् ॥ ७ ॥ व्रते प्रसङ्गो, ननियमशब्दात् ॥ ८ ॥ शब्देऽविप्रतिपत्तिः ॥ ९ ॥ सोमेन जात्यभावात् ॥ १० ॥ आज्ये चादर्शनात् ॥ ११ ॥ पशौ मन्त्रवर्णात् ॥ १२ ॥ श्रुतेश्च ॥ १३ ॥**

---

कर्म मुख्यद्रव्याभावेऽपि प्रतिनिधिनाऽप्यारम्भणीयमेव ।

[ आरब्धे काम्ये प्रतिनिधिः ]

काम्ये मुख्यद्रव्यस्य सद्भावं ज्ञात्वा आरब्धे आरम्भानन्तरं मुख्यद्रव्यालाभे काम्यमपि नित्यवत्प्रतिनिधिमुपादायावश्यं समापनीयमेव, असमाप्तस्यैव परित्यागो न कार्यः । नित्ये कर्मण्यवश्यकर्तव्यत्वादारब्धे अनारब्धे च प्रतिनिध्युपादानं भवति । काम्ये चावश्यकर्तव्यत्वाभावात्प्रतिनिधिना आरम्भो न भवति । आरब्धे चावश्यसमापनीयत्वात्समाप्त्यर्थं प्रतिनिधिर्भवत्येव ।

[ पयोव्रतादौ प्रतिनिधिः ]

दीक्षितस्य पयआदिके व्रतेऽपि प्रतिनिधिर्भवति । 'व्रतं ह्येव''(१)इत्येवकारस्येष्टाशनस्तुतिपरत्वेन व्रतप्रतिनिधिव्युदासपरत्वाभावात् ।

[ प्रतिनिहितद्रव्यस्य श्रुतशब्देनोच्चारणम् ]

यदा मुख्यद्रव्यालाभे प्रतिनिधिभूतं द्रव्यान्तरं गृह्यते, यथा अग्नीषोमीये छागाभावे मेषः, यथा वा परिक्रयादौ वासोगवादीनामलाभे द्रव्यम्, तदा अग्नीषोमाभ्यां छागस्येत्यादौ वासोऽसि गौरसीत्यादौ च मुख्यद्रव्यवाचिशब्दस्याविपरिणामोऽनूह एव कार्यः, नतु छागस्येत्यस्य स्थाने मेषस्येत्यादिविपरिणतरूपं प्रयोज्यम् । यत्र पुनर्जात्यन्तरं विहितं भवति तत्र विपरिणामो भवत्येव, यथा "ऐन्द्रो वृष्णिः षोडशिनि" इत्यादौ(२) ।

[ पूतीक-पृषदाज्ययोः स्वशब्देनोच्चारणम् ]

तथा सोमाभावे पूतीकेषु गृह्यमाणेष्वपि "अꣳशुरꣳशुष्टे देव सोम"इत्यादौ(३)सोमशब्द एव प्रयोज्यो न पूतीकशब्दः, पूतीकानामपूर्वविध्यभावात् । तथा पश्वादौ पृषदाज्यसाधनकेष्वनुयाजेषु सत्स्वपि "देवा आज्यपा"(४) इत्यत्राज्यशब्दस्यानूह एव, आज्यस्यैव कर्बुरस्य पृषदाज्यशब्दवाच्यत्वेन द्रव्यान्तरत्वाभावात् ।

---

१. श. ब्रा. ३.१.२.१ २. का. श्रौ. ९.८.४ ३. शु. य. ६.७ ४. शु. य. २१.४०

**विकल्पे प्रवृत्तं कर्मान्तरत्वात् ॥ १४ ॥ प्रतिनिधौ तत्काला त ॥ १५ ॥ अर्थद्रव्यविरोधेऽर्थसामान्यं तत्परत्वात**

---

( वैकल्पिकोपात्तद्रव्यापचारे )

तथा 'व्रीहिभिर्यजेत यवैर्यजेत'(१), तथा आग्रयणे द्यावापृथिवीययागे "पुरोडाशेनाज्येन वा यजेत"(२) तथा "सरस्वत्यै चतुर्थोऽतिरात्रे मेषी वे"त्यादौ(३) वैकल्पिकद्रव्यविधाने समविकल्पत्वादन्यतरेण कर्मणि प्रारब्धे सति येन द्रव्येण कर्मारब्धं तस्य नाशदोषादौ जाते पश्चात्तज्जातीयद्रव्यालाभे वैकल्पिकं द्रव्यान्तरं नोपादेयमेव, किन्तु येनारब्धं तत्सदृशमेव प्रतिनिधित्वेनोपादेयम् ।

( प्रतिनिधिनाशे )

अतो व्रीहिभिः कर्मणि आरब्धे व्रीहिषु विनष्टेषु व्रीह्यन्तरालाभे सति व्रीहिसदृशान् नीवारादीनुपादाय कर्म समापनीयम्, विकल्पेन विहिता अपि यवा नोपादेयाः । एवं सर्ववैकल्पिकेषूह्यम्(४) ।

एवं व्रीह्यभावे नीवारैः प्रयोगे प्रारब्धे नीवारेषु विनष्टेषु कथंचिद् व्रीहिप्राप्तौ सत्यां व्रीहिभिरेव, अप्राप्तौ च व्रीहिसदृशैरेव कर्म समापनीयम्, न नीवारसदृशैः, नापि वैकल्पिकैर्यवैः ।

( कार्यासमर्थविहितद्रव्यसत्त्वेऽपि प्रतिनिधिः )

यत्र मुख्यद्रव्येण प्रयोजनसिद्धिर्न भवति प्रतिनिधिद्रव्येण च भवति, तदा मुख्यद्रव्यमनादृत्य प्रतिनिधिनैव कर्म कर्तव्यम्, यथा पुरोडाशनिष्पत्त्यर्थं व्रीहय उपादीयन्ते, ते च न पुरोडाशनिष्पत्तिसमर्थाः, नीवाराश्च पुरोडाशनिष्पत्तिसमर्था विद्यन्ते, तदा व्रीहीननादृत्य नीवारैरेव पुरोडाशो निष्पादनीयः ।

( विहितगुणकेऽपि प्रतिनिधौ अविहितगुणकस्यापि श्रुतद्रव्यस्यैवोपादानम् )

अथ यदा "नैर्ऋतः परिवृत्त्यै कृष्णव्रीहीणा" मित्यत्र(५) कृष्णानां व्रीहीणामभावे अकृष्णा व्रीहयः सन्ति, कृष्णाश्च नीवारा इति यदा कृष्णगुणमनादृत्य व्रीहयो गृह्यन्ते, तदा गुणानामनुग्रहः कृतो न भवति; यदा च कृष्णनीवारा गृह्यन्ते न तदा व्रीहयः; तत्रैवं गुणद्रव्ययोर्विरोधे गुणं हित्वा व्रीहय एव कृष्णा अप्युपादेयाः ।

---

(१) का. श्रौ. १.९.१ (२) का. श्रौ. ४.६.६

(३) का. श्रौ. ९.८.५-६

(४) एवं वै सर्वं वैक इति ख पुस्तक पाठः (५) का. श्रौ. १५।३।१४

॥ १६ ॥ गुणद्रव्ययोर्द्रव्यं प्रधानयोगात् ॥ १७ ॥ न समत्वात् ॥ १८ ॥ गुणानुग्रहात् ॥ १९ ॥ ४ ॥

कर्मणामानुपूर्व्यं न युगपद्भावात् ॥ १ ॥ अर्थनिर्वृत्तेश्च ॥ २ ॥ स्याद्वाऽऽनुपूर्व्यनियमः श्रुत्यर्थक्रमेभ्यः ॥ ३ ॥ प्राकृतं च विकृतौ ॥ ४ ॥ विरोधेऽर्थस्तत्परत्वात् ॥ ५ ॥ श्रुतिः क्रमादानुमानिकत्वात् ॥ ६ ॥ मन्त्रचोदनयोर्मन्त्रबलं प्रयोगित्वात् ॥ ७ ॥ न समत्वात् ॥ ८ ॥ गुणानां तु भूयस्त्वात् ॥९॥ तुल्यसमवाये सामान्यपूर्वमानुपूर्व्ययोगात्

---

एवमेवाग्निहोत्रेऽपि पुंवत्साया अग्निहोत्र्याः पयसोऽभावे(१) पुंवत्सलक्षणं गुणं हित्वा स्त्रीवत्साया अपि पय उपादेयम् ।

एवं पालाशानां परिधीनामार्द्राणामभावे(२) आर्द्रस्वरूपं गुणं हित्वा शुष्का अपि पालाशा ग्राह्याः । एवं सर्वत्र प्रतिनिधिरूह्यम् ।

एवं व्रीहीणामपि प्राशित्रेडादिप्रतिपत्तिकर्मपर्याप्तपुरोडाशनिष्पत्तिसमर्थानामभावेऽवदानद्वयपर्याप्तपुरोडाशनिष्पत्तिमात्रा अपि व्रीहयो ग्राह्याः ।

इति प्रथमस्य चतुर्थी कण्डिका ॥

---

[ क्रमनियमे कारणम् ]

पदार्थानुष्ठानं सर्वत्र श्रुतिपाठक्रमेण मन्त्रपाठक्रमेण च कर्तव्यम्, अर्थसिद्धिक्रमेण च ।

[ अर्थक्रमस्य बलीयस्त्वम् ]

यत्र च पाठक्रमार्थसिद्धिक्रमयोर्विरोधो भवति यथा—"स वै पर्णशाखया वत्सानपाकरोति तामाच्छिनत्ती"ति(३) तत्र पाठक्रममनादृत्यार्थसिद्धिक्रम एवाश्रयणीयः, पूर्वं छेदनं ततो वत्सापाकरणमिति ।

[ श्रौतक्रमो बलवान् ]

यत्र श्रुति-पाठक्रमयोर्विरोधः यथा—"स᳖स्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूया"दितिश्रुतिः (४)संस्थिते यज्ञे ब्राह्मणतर्पणं विदधाति, पाठकमस्तु प्राशित्रावदानात्पूर्वम्, तत्र श्रुतिक्रमेण संस्थित एव कर्तव्यं न पाठक्रमेण ।

---

(१) का. श्रौ. ४।१४.१ (२) का. श्रौ २.८.१.
(३) श. ब्रा. १.७.१.१-२ (४) श. ब्रा. १।७।३।२८

॥१०॥ नैककर्म्माणि सम्बन्धात् ॥११॥ ग्रहणसादनाऽवदानप्रदानेषु तु वचनात् ॥१२॥ न द्रव्यभेदे गुणयोगादिति वात्स्यः ॥१३॥ प्रवृत्ते नियतं दोषविशेषात् ॥१४॥ षोड-

[ मन्त्रपाठो बलवान् ]

यत्र च श्रुतिपाठ-मन्त्रपाठयोर्विरोधो भवति यथा "सोऽसावाज्यमधिश्रयती"त्यधिश्रयणं विधाय तत्समनन्तरमेवोद्वासनं विदधाति "तत्पुनरुद्वासयती"ति(१)। 'मन्त्रक्रमस्तु पत्नीसन्नहनान्ते "विष्णोर्वेष्पोऽस्यूर्ज्जे त्वाऽदब्धेने"ति(२), तत्र श्रुतिपाठक्रममनादृत्य मन्त्रपाठक्रमेणैवाज्योद्वासनं कर्त्तव्यम् ।

[ पदार्थानुसमयः ]

अथ यत्र बहूनां प्रधानानां सहप्रयोगो भवति तदा सन्निपत्योपकारकाः पदार्थाः सर्वेषां प्रधानानां पृथक् पृथक् सदृशपदार्थानुसमयेन कर्त्तव्याः, तद्यथा--सप्तदशसु प्राजापत्येषु पशुषु सर्वेषां प्रथममुपाकरणम् , ततः सर्वेषां नियोजनम् , ततः सर्वेषां प्रोक्षणमिति । यथा बहुषु हविष्षु सर्वेषां प्रथममभिघारणम्, ततः सर्वेषामुद्वासनम् , ततः सर्वेषां प्राणदानम् , ततः सर्वेषामासादनम् , ततः सर्वेषामालम्भ इति । आराादुपकारकास्तु तन्त्रेण भवन्तीति न तेषु क्रमचिन्ता ।

चतुर्मुष्टिकनिर्वापस्यैकपदार्थत्वम् , एकादशकपालोपधानस्य च । तेनैकैकमुष्टिना एकैककपालोपधानेन च नानुसमयः, किन्तु प्रतिप्रधानं चतुर्मुष्टिको निर्वाप उक्तसंख्यककपालोपधानं चैकैकस्य कर्त्तव्यम् । सोमे चैकैकस्य ग्रहस्य ग्रहणं सादनान्तं कर्त्तव्यम् । सर्वत्र हविषोऽवदानं प्रदानान्तं कर्त्तव्यम् । अत्र वचनात्काण्डानुसमय एव, न पदार्थानुसमयः, तथा हविर्मात्रभेदे देवतायामभिन्नायां देवतागुणे चोपांश्वादिके अभिन्ने अवदानं प्रदानान्तं न भवति, किन्तु क्रमेण सर्वाणि हवींष्यवदाय ततः प्रदानं कार्यम, यथा वाजपेये सप्तदशसु प्राजापत्येषु, दर्शेष्टौ दधिपयसोश्च, स्विष्टकृद्यागे चानेकहविष्के । तथा बहुषु प्रधानेषु सप्तदशप्राजापत्यपश्वादिषु प्रथमस्य पदार्थस्य सर्वेष्वनियमः, प्रथमे पदार्थे उपाकरणलक्षणे कृते द्वितीयपदार्थादौ उपाकरणक्रम एवाश्रयणीयो न क्रमान्तरम् ; अयं प्रावृत्तिकः क्रमः । तथा मुख्यानां प्रधानानामाग्नेयादीनां पाठक्रमेण तदङ्गानां निर्वापादीनां क्रमो भवति यथा प्रथमं पठितस्याग्नेयस्य प्रथमं निर्वापादि, पश्चात्पठितस्याग्नीषोमीयस्य पश्चादिति, अयं मुख्यक्रमः ।

(१) श. ब्रा. १।२।२।६ (२) शु. य०१।३०

शिनि त्वानुपूर्व्यभूयस्त्वात् ॥ १५ ॥ अनियमः फलसं-युक्तेषु ॥ १६ ॥ क्रमो विध्यर्थः कर्मण्यसम्भवात् ॥ १७ ॥ ५ ॥

अवत्तनाशेऽन्यद् गुणानुग्रहात् ॥ १ ॥ न पूर्वशेषात् ॥ २ ॥ अचोदितत्वाच्च ॥ ३ ॥ स्विष्टकृद्दानुपूर्व्ययोगात् ॥ ४ ॥ गुणहानौ तु शेषभावात् ॥ ५ ॥ न देवताऽग्नि-शब्द-क्रियाः परार्थत्वात् ॥ ६ ॥ कामं देवताम् ॥ ७ ॥ प्रतिषिद्धं प्रत्यवायात् ॥ ८ ॥ स्वामी फलयोगात् ॥ ९ ॥

---

[ नित्यस्य स्वकालेऽनुष्ठानम् ]

दर्शपूर्णमासादावनेकाहःसाध्ये कर्मणि क्रियमाणे मध्ये नित्यस्याग्निहोत्रादेः काल आयाते मध्येऽपि तत्कर्म कर्तव्यमेव, तस्य कालातिक्रमो न कार्यः । एवं-पशु-चातुर्मास्य-सौत्रामण्यादौ ज्ञेयम् । अमावास्यायां सौत्रामण्यादिविकृतिमध्य एव पिण्डपितृयज्ञानुष्ठानं कर्तव्यं तद्दक्षिणाग्नौ ।

[ षोडशिस्तोत्रे विशेषः ]

तथा षोडश्यतिरात्रादौ षोडशिना नियतकालत्वेऽपि दैवादुक्थ्योत्कर्षे उक्थ्यानन्तरमेव षोडशियागो भवति न कालानुरोधात्ततः पूर्वम् ।

[ क्रमविचारः ]

अग्निष्टोमादीनां प्रधानकर्मणां सत्रपर्यन्तानां हविर्यज्ञानां वाऽनुष्ठाने क्रमनियमो नास्ति, यदा यस्येच्छा भवति तदा तनुष्ठीयते, अध्ययनार्थ एवैषां पाठक्रमो नानुष्ठानार्थः, सर्वस्वारादूर्ध्वं पठितेषु पाठक्रमेणानुष्ठानासंभवात् ॥ ५ ॥

इति प्रथमस्य पञ्चमी कण्डिका ।

---

[ अवत्तस्य हविषो नाशे ]

अवत्तस्य हविषो नाशे हविरन्तरमेवोत्पाद्य तेन स्विष्टकृदादिप्रतिपत्तिसहितो यागः कार्यो न पुनः शेषादवदेयम् ।

[ अग्न्यादौ प्रतिनिध्यभावः ]

अग्न्यादीनां देवतानाम्, आहवनीयादीनामग्नीनाम्, इषे त्वादिमन्त्राणाम्, अदृष्टार्थानां प्रयाजानुयाजादिक्रियाणां च प्रतिनिधिर्न भवति । कुतः अदृष्टार्थत्वात् । दृष्टार्थानां तु क्रियाणामवघातादीनां प्रतिनिधिर्भवत्येव ।

**गुणेषु प्रतिनिधिः परार्थत्वात् ॥ १० ॥ सत्रेषु तु श्रुतेः ॥ ११ ॥ स तद्धर्मा कर्मयोगात् ॥ १२ ॥ सत्राणि ब्राह्मणानामृत्विक्श्रुतेः ॥१३॥ एककल्पानामवैगुण्यात् ॥१४॥ न परार्थत्वात् ॥ १५ ॥ वैश्यराजन्ययोर्गृहपते ॥ १६ ॥ सहस्रसम्वत्सरममनुष्याणामसम्भवात् ॥ १७ ॥ स्याद्देहानित्यत्वात् ॥ १८ ॥ तस्य च कार्यत्वात् ॥ १९ ॥ नासम्भवात् ॥ २० ॥ शास्त्रसम्भवादिति भारद्वाजः ॥२१॥ नादर्शनात् ॥ २२ ॥ कुलसत्त्रमिति कार्ष्णाजिनिः ॥ २३ ॥ साम्युत्थानमिति लौगाक्षिः ॥ २४ ॥ अह्नां वा शक्यत्वात् ॥२५॥ श्रुतिसामर्थ्यात् ॥२६॥ प्रकृत्यनुग्रहाच्च ॥२७॥६॥**

---

प्रतिषिद्धं वस्तु श्रुतद्रव्यसदृशमपि प्रतिनिधित्वेन न ग्राह्यम् । यथा-श्यामाकचरौ कोद्रववरटादि, यथा वा मौद्गे चरौ माषादि ।

[ अङ्गकार्ये प्रतिनिधिः ]

यजमानस्यापि त्यागादौ वपनादौ संस्कारकर्मणि च प्रतिनिधिर्न भवति । गुणकर्मसु पात्रासादना-ऽऽज्यावेक्षणा-ऽग्न्यन्वाधान-व्यूहन-वेदबन्धनादिषु यजमानस्यापि प्रतिनिधिर्भवत्येव, क्रत्वर्थत्वात् । एवं पत्न्यभावेऽप्याज्यावेक्षणा-ऽन्वारम्भा-ऽक्तोपाञ्जनादौ गुणकर्मणि प्रतिनिधिर्भवत्येव ।

[ सत्रेषु प्रतिनिधिः ]

सत्रेषु च श्रुतिवचनबलाद्यजमानस्यापि प्रतिनिधिर्भवति । यजमानकर्मणा सम्बन्धाद्यजमानधर्मा दीक्षणादयोऽपि तस्य प्रतिनिहितस्य भवन्ति ।

[ सत्रे ब्राह्मणोऽधिकारी ]

सत्रेषु "य ऋत्विजस्ते यजमाना" इति यजमानानामृत्विक्पदार्थकर्तृत्वविधानाद् ब्राह्मणानामेव सत्राणि भवन्ति न क्षत्रियवैश्यानाम् । ब्राह्मणानामप्येककल्पानां न भिन्नकल्पानाम् ।

वैश्यराजन्ययोर्गृहपतित्वेऽपि नाधिकारः, ब्रह्मसामादिकल्पभेदेन ब्राह्मणैः सह विरोधात् ।

[ संवत्सरशब्दस्य दिनपरत्वम् ]

सहस्रसम्वत्सरं सत्रं मनुष्याणामपि भवति, सम्वत्सरशब्देन

कर्मणां युगपद्भावस्तन्त्रम् ॥ १ ॥ शक्य-पुरुषार्थ-कृतत्वैं-कार्थसमवायश्रुतिभ्यः ॥२॥ फल-कर्म-देश-काल-द्रव्य-देवता-गुणसामान्ये ॥ ३ ॥ तद्भेदे भेदः ॥४॥ देशकालौ विरोधे न कृत्स्नोपदेशात् ॥ ५ ॥ अहर्गणे सुब्रह्मण्यायाः सर्वोपलक्षणं प्रकृतिवत् ॥ ६ ॥ तन्त्र का-

लक्षणया वृत्त्याऽह्नां प्रतीयमानत्वात् । अतः सहस्रसम्वत्सरे सहस्रं सौत्याम्यहानि भवन्ति ॥ ६ ॥

इति प्रथमस्य षष्ठी कण्डिका ।

---

[ तन्त्रविचारः ]

यत्र एकेन वाक्येन बहूनि प्रधानान्येकफलार्थं विधीयन्ते यथा "वैश्वदेवेन प्रजाकामं याजये"दिति, (१) "मित्रविन्दया आयुःकामो यजेते"त्यादौ(२), तत्र तेषां सहप्रयोगो भवति । यदि च तेषां देश-काल-फल-कर्मादि समानं भवति, तदा तेषां प्रधानानां यान्यारादुपकारकाणि आघार-प्रयाजा-ऽऽज्यभागादीन्यङ्गानि तानि सकृदेव भवन्ति, न प्रतिप्रधानं पृथक् क्रियन्ते । देशभेदे च कालभेदे तन्त्रभेद एव भवति, न सहक्रिया । यथा दर्शपूर्णमासयोः कालभेदे, वरुणप्रघासे च मारुत्या देशभेदे ।

अहर्गणे सुब्रह्मण्यानिगदे द्वादशाहे सुत्यामागच्छेत्येतत्कालसंयुक्तं कर्म तन्त्रेणैव सकृत्सुत्याशब्दोच्चारणेनैव भवति न प्रतिसुत्यम्, त्रयोदशाहे चतुर्दशाह इत्येवम्(३) ।

[ एकद्रव्ये कर्मावृत्तौ ]

एकद्रव्ये कर्मावृत्तौ सत्यां मन्त्रवचनं सकृदेव कर्तव्यम् , न प्रतिक्रियम् । यथा "स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वे"त्यत्रैकवारं मन्त्रेण, वारद्वयं तूष्णीम्(४) । यथा वा "दिवि धा इति त्रिरुत्कम्पयती"त्यत्रैकवारं(५) मन्त्रेणोत्कम्पनम् , वारद्वयं तूष्णीम् । एवं सर्वत्र ज्ञेयम् ।

[ क्वचिन्मन्त्रावृत्तिः ]

हविर्ग्रहणे बर्हिषो लवने तस्यैव स्तरणे आज्यग्रहणे च प्रतिक्रियं मन्त्रावृत्तिर्भवति न सकृत् । आज्यग्रहणे तु वचनात् (६)सकृत्त्रिर्वा मन्त्रेण ग्र-

---

(१) का. श्रौ. ५.१.२०
(२) श. ब्रा. ११.४.३.२०
(३) श० ब्रा० ३. ३. ४. १९
(४) ७. ६. १९
(५) २६. ६. ५.
(६) श. ब्रा. १३.५.१८

ल कर्म प्रत्यहमविधानात्॥७॥ एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनं कृतत्वात्॥८॥न ग्रहण-लवन-स्तरणा-ऽऽज्य-ग्रहणेषु तु ॥९॥ वचनादाज्ये ॥१०॥ मुष्टौ चोत्तमे ॥११॥ स्वप्न-नदीतरणा-ऽववर्षणा-ऽमेध्यदर्शन-प्रयाणेषु तु सकृत् काल-द्रव्यै-कार्थत्वात् ॥ १२ ॥ न निमित्तभेदात् ॥ १३ ॥ अप्रधानकालं सकृदसन्निपातात् ॥ १४ ॥ यूपः ॥ १५ ॥ स्वरुश्च सर्ंस्थावचनात् ॥ १६ ॥ तन्निवृत्तेश्च ॥ १७ ॥

---

हणं, शेषं तूष्णीम् । हविर्ग्रहणे च "चतुर्थं तूष्णीमि"ति(१) वचनादुत्तमे मुष्टौ मन्त्रनिवृत्तिः ।

दीक्षितस्य युगपदनेकामनोज्ञस्वप्नदर्शने "पर्यावर्त्ते दुष्वप्न्यादि"ति(२) मन्त्रं सकृदेव पठेत्, कालैकत्वात् । तथा एकस्या नद्या अनेकप्रवाहतरणे उन्दतीरित्यनुमन्त्रणं(३) सकृदेव, स्रोतसां भेदेऽपि नदीद्रव्यस्यैकत्वात् । अववर्षणे युगपदनेकवृष्टिधारासंयोगेऽपि उन्दतीरित्यनुमन्त्रणं सकृदेव भवति, कालैक्यात् । युगपदनेकामेध्यदर्शने अबद्धं मन इति(४) सूर्योपस्थानं सकृदेव, कालैक्यात् । वनीवाहने तु विश्रम्य विश्रम्य पुनःप्रयाणे च प्रेदग्ने इति(५) मन्त्रवचनं सकृत् आदिमे प्रयाणे एव भवति, न प्रतिप्रयाणं, कुतः ? अर्थैकत्वात् प्रयोजनैकत्वादित्यर्थः । तथा अग्ने त्वꣳ सुजागृहीत्ययमपि मन्त्रः (६)सकृदेव प्रयोज्यः, नैकरात्रिमध्ये पुनःपुनः स्वापादौ । अमेध्यदर्शनादिषु कालभेदे भेदेनैव भवति न सकृत् ।

[ आधानादीनां सकृत्क्रिया ]

अप्रधानकालीनमङ्गं सकृदेव भवति न प्रतिप्रधानमावर्तते, यथाऽग्न्याधेयम् । परमार्थतस्त्वग्न्याधेयमुत्तरकर्माङ्गं न भवतीति कृत्वाचिन्तेयम् ।

तथा यूपोऽप्यप्रधानकालीनत्वादग्नीषोमीय-सवनीया-ऽऽनूबन्ध्यपशूनां साधारण एव । स्वरुरपि यूपवत् सर्वपशुसाधारण एव ।

[ ऋत्विक्कर्तव्यम् ]

आधानादिसर्वकर्मसु पुरुषा एव कर्त्तारो भवन्ति न स्वयं यजमानः ।

---

(१) आप श्रौ. १.१७.२ (२) २९.११.२०
(३) २९. ११. २२ (४) २९. ११. २४
(५) १६. ६. १८ (६) शु. य. ४. १४.

**कर्माणि पुरुषाणाम् ॥ १८ ॥ प्रधानꣳ स्वामी फलयोगात् ॥ १९ ॥ पुरुषयोगिमन्त्र—संस्कारयोस्त्यागे सामर्थ्यात् ॥ २० ॥ वचनादन्यत् ॥ २१ ॥ शेषमितरे यथाऽऽख्यम् ॥ २२ ॥ उपवीतिनः ॥ २३ ॥ प्राञ्च्युदग्वा ॥ २४ ॥ आवृत्तिसामन्तेषु प्रदक्षिणम् ॥ २५ ॥ विपर्यस्य पित्र्येषु तु सकृद्दक्षिणा च ॥ २६ ॥ प्रधानद्रव्यव्यापत्तौ साङ्गावृत्तिस्तदादेशात् ॥ २७ ॥ ७ ॥**

[ यजमानकर्तव्यं कर्म ]

केवलं यत्प्रधानकर्म देवतोद्देशेन द्रव्यत्यागात्मकं तत्स्वामी करोति, फलयोगात् । पुरुषयोगिमन्त्राः तनूपा अग्नेऽसि तन्वं मे पाहि,(१)रायस्पोषस्य ददितारः स्यामेत्येवमादीन्यजमानो(२) जपेत् । संस्काराश्च वपनाभ्यञ्जनादयो यजमानस्यैव भवन्ति वचनाभावे । वचनेनर्त्विजामपि संस्कारा भवन्ति, यथा–हिरण्यमालिनो वाजपेयेन चरन्ति(३) । उक्तव्यतिरिक्तमपि वचनाद्यजमानस्य भवति, यथा–यजमानो वसोर्धारां जुहोति(४) । यजमानः पात्राण्यासादयतीत्यादि(५) । शेषं कर्माध्वर्य्वादयो यथा समाख्यम् , अध्वर्युराध्वर्यवम् , होता हौत्रम , उद्गातौद्गात्रम् , ब्रह्मा ब्रह्मत्वमित्येवं यथाख्यं कुर्वन्ति ।

[ दैवे प्रदक्षिणं विपरीतं पित्र्ये ]

यज्ञोपवीतिनः सर्वाणि कर्माणि प्राक्संस्थान्युदक्संस्थानि वा कुर्वन्ति, यत्र यत्रावृत्तिर्विधीयते सूर्यस्येत्यावर्तत इत्यादौ(६) यच्च कर्म सर्वतो विधीयते यथा परिस्तरणं पर्युक्षणं समन्तं त्रिः पर्युषतीत्यादौ(७) तत्र सर्वत्र प्रदक्षिणं कर्तव्यम् । पितृदेवत्येषु कर्मसु विपर्यासेनापसव्येनाप्रदक्षिणं च । यद्दैवे आवृत्त्या क्रियते तच्च पित्र्ये सकृत् , यथा परिसमुह्येत्यादि फलीकरणादि च । दक्षिणा च दक्षिणपित्र्ये । यद्दैवे प्राक्संस्थमुदक्संस्थं वा पित्र्ये तद्दक्षिणसंस्थं भवति ।

[ प्रधानद्रव्यनाशे ]

प्रधानद्रव्यनाशे सन्निपत्योपकारकाङ्गसहितस्यैव तस्यावृत्तिर्भवति नारादुपकारकसहितस्य ॥ ७ ॥

इति प्रथमस्य सप्तमी कण्डिका ।

---

(१) ३, १७.
(२) शु. य. ७. १४ (३) १४. १. २३ (४) १८. ५. १.
(५) २. ३. ७ (६) ३. ८. २३ (७) ६. ३. ११.

गुणानामेकार्थानाᳪ सर्वारम्भश्चोदितत्वात् ॥ १ ॥ न कृतत्वात् ॥ २ ॥ अनारभ्यत्वात् ॥ ३ ॥ दर्शनाच्च ॥ ४ ॥ श्रुत्यानर्थक्यमिति चेत् ॥ ५ ॥ कालान्तरेऽर्थवत्त्वं स्यात् ॥ ६ ॥ धर्ममात्रेषु समुच्चयोऽविरोधे ॥ ७ ॥ हौत्राधानयोः ॥ ८ ॥ न याज्याऽनुवाक्यासु विरोधात् ॥ ९ ॥ दर्शनाच्च ॥१०॥ प्रायश्चित्तेषु दोषनाशात् ॥ ११ ॥ नाश्रुतेः ॥ १२ ॥ प्रत्यक्षाच्च ॥१३॥ स्याद्वा दर्शनात् ॥१४॥ नान्यार्थत्वात् ॥ १५ ॥ मन्त्रे स्वरक्रिया यथाम्नातमविशेषात् ॥ १६ ॥ भाषिकस्वरो वोपपन्नमन्त्रोपदेशात् ॥ १७ ॥ तानो वा नित्यत्वात् ॥ १८ ॥ एकश्रुति दूरात्सम्बुद्धौ यज्ञकर्मणि सुब्रह्मण्या—साम—जप—न्यूङ्ख—याजमानवर्जम् ॥ १९ ॥ संख्याविकल्पो दानसंयोगे कृ

---

[ एककार्यार्थमनेकद्रव्यविधाने ]

एकप्रयोजनार्थं यत्र द्रव्यद्वयं श्रूयते यथा—व्रीहिभिर्यजेत यवैर्यजेतेति(१)तत्रोभयोरेककार्यत्वादेकेन तस्मिन् कार्य्ये कृते द्वितीयेन तस्यैव करणासम्भवाद्विकल्पो व्रीहिभिर्वा यवैर्वा इति ।

अदृष्टार्थेषु बहुषु विहितेषु सर्वेषां समुच्चयो भवति, कुतः, अविरोधात्, यथाऽऽघारे ऋजु प्राक् दीर्घसन्ततेषु(२) ।

होतृमन्त्राणामग्निमन्थनीयादीना(३)मदृष्टार्थत्वात्समुच्चयो भवति ।

अग्निस्थापनमन्त्राणां च भूर्भुवः स्वरित्येवमादीनां (४)वचनेन समुच्चयः ।

होतृमन्त्रत्वेऽपि याज्याऽनुवाक्यासु समुच्चयो न भवति । पुरोऽनुवाक्या याज्या चैकस्मिन्यागे एकैकैव भवति(५) ।

एकस्मिन्निमित्ते पठितानां सर्वेषां प्रायश्चित्तानां समुच्चयो भवति ।

[ स्वरनिर्णयः ]

यज्ञकर्मणि प्रयुज्यमानानां मन्त्राणां तानेनैकश्रुत्यैव प्रयोगो, न संहितास्वरेण, नापि ब्राह्मणस्वरेण । सुब्रह्मण्या—साम—जप—न्यूङ्ख—याजमानानां कर्मणि प्रयुज्यमानानामपि संहितावदेव स्वरो, नैकश्रुतिः ।

---

(१) श० ब्रा० १. १. ४. २० (२) तै. सं० २. ६. ११ (३) का. हौ. प. ३. २
(४) तै. ब्रा. १. १. ५ (५) श० ब्रा० १. ७. २. १७

त्त्वात् ॥ २० ॥ ऊवध्य-वसा-ऽध्यूध्नी-वनिष्ठुषु समुच्चयो द्रव्यसंस्कारतद्भेदाभ्याम् ॥ २१ ॥ चोदनागुणेषु च प्रक्लृप्त्युपबन्धाभ्याम् ॥ २२ ॥ गार्हपत्याहवनीयौ न व्यवेयात् ॥ २३ ॥ विसृत्याधृत्य वेतरथावृत्तिः ॥ २४ ॥ अतीत्य निष्क्रमणम् ॥२५॥ उत्तरतउपचारो यज्ञः ॥२६॥ दक्षिणतो ब्रह्मयजमानयोरासने ॥ २७ ॥ पश्चाद्यजमानो वेदिस्पृक् ॥ २८ ॥ अध्वर्युः कर्मसु वेदयोगात् ॥ २९ ॥

[ दक्षिणायां विकल्पः ]

आधाने-"ता वै षड् दद्यात् द्वादश दद्यात्, चतुर्विꣳशति दद्यादि"त्येवमाद्या दक्षिणा (१)विकल्पेन भवन्ति न समुच्चयेन, एकयैव दक्षिणाकार्यस्य कृतत्वात् ।

अनेकपशुसाधनके कर्मण्यूवध्य-वसा-ऽध्यूध्नी-वनिष्ठु-पुरीतत्-प्लीह-क्लोमादीनां समुच्चयो भवति, सर्वपशूनामेतानि सर्वाण्यपि प्रतिपाद्यानि इत्यर्थः ।

सोमक्रये यानि गवादीनि दश द्रव्याणि श्रूयन्ते तेषामपि समुच्चयो भवति, क्रयस्यादृष्टार्थत्वात् , दशभिरिति (२)संख्योपबन्धाच्च ।

गार्हपत्याहवनीयौ न व्यवेयात् ।

[ इतरथाऽऽवृत्तिविचारः ]

सर्वत्र प्रदक्षिणीकृत्याप्रदक्षिणमावृत्तिः कार्या, अप्रदक्षिणीकृत्य च प्रदक्षिणमावृत्तिः कार्येति ।

सर्वं कर्म विहारस्योत्तरतः कार्यम्(३) ।

[ ब्रह्मयजमानस्थानम् ]

ब्रह्मयजमानयोरासने विहारस्य दक्षिणतो भवतः,(४) तयोर्मध्ये यजमानो वेदिं स्पृष्ट्वा पश्चादुपविशति, वेदिमध्ये पादाग्रे निधायेत्यर्थः, पुरस्ताद् ब्रह्मोपविशति(५) ।

[ यजुर्वेदेऽध्वर्योः कर्तृत्वम् ]

अनादेशे यजुर्वेदविहितस्य कर्मणोऽध्वर्युरेव कर्त्ता, वचनादन्योऽपि भवति, यथा-"प्रतिप्रस्थाता मन्थिनं जुहोति"(६) । विरोधाच्चाध्वर्योरन्यः

(१) श० ब्रा० २. २. २. ३ (२) श० ब्रा० ३. ३. ३. १८
(३) श० ब्रा० ३.४.३.१९ (४) श० ब्रा० १.७.४.१८.
(५) श० ब्रा० ११. २. ७. ३३ (६) श० ब्रा० ४. २. १. १३.

वचनाविरोधाभ्यामन्यः ॥ ३० ॥ हविष्पात्रस्वाम्यृत्विजां पूर्वं पूर्वमन्तरम् ॥ ३१ ॥ ऋत्विजां च यथापूर्वम् ॥ ३२ ॥ न वाऽचोदितत्वात् ॥ ३३ ॥ गार्हपत्ये संस्काराः ॥ ३४ ॥ श्रपणं वाऽऽहवनीये ॥३५॥ घृतमाज्ये ॥३६॥ लिङ्गात् ॥३७॥ तस्य होमोऽनादेशे ॥ ३८ ॥ चात्वालात्पुरीषम् ॥ ३९ ॥ आहवनीययजतयो ध्रुवायाः ॥ ४० ॥ इडाप्राशित्राघारांश्चैके ॥ ४१ प्राञ्चावाघारौ ॥ ४२ ॥ विदिशावेके ॥ ४३ ॥ आहवनीये होमाः श्रुतिसमाख्यानाभ्याम् ॥ ४४ ॥ जु-

---

कर्त्ता भवति, यथा-पर्यग्न्यध्वर्योरर्थापृतत्वाद्विरोधात् कपालोपधानेऽग्नीत्।

[ अन्तरङ्गबहिरङ्गभावः ]

हविष्पात्रस्वाम्यृत्विजामेकत्र समावेशे यत्पूर्वं तत्तदन्तरं भवति, यद्यदुत्तरं तद् बहिर्भवति। ऋत्विजामपि मध्ये एकत्र समावेशे पूर्वः पूर्वोऽन्तरो भवति, उत्तर उत्तरो बहिर्भवति, हविषामपि मध्ये पूर्वं पूर्वं हविरन्तरं कार्यम्, उत्तरमुत्तरं बहिः।

प्रतपनाद्योऽग्निसाध्याः संस्कारा गार्हपत्ये भवन्ति(१)।

हविःश्रपणं सर्वकर्मस्वाहवनीये गार्हपत्ये वा भवति।

आज्यशब्दे श्रुते सर्वत्र संस्काररहितं घृतमात्रं ग्राह्यम्, तच्चाज्यं गव्यं ग्राह्यम्, कुतः? महीनां पयोऽसीति(२) मन्त्रलिङ्गात्।

यत्र सूत्रमध्ये जुहोतीत्येतावदेवोच्यते द्रव्यं किञ्चिन्नोच्यते तत्र सर्वत्राज्यस्य होमः कार्यः।

[ होमद्रव्यानादेशे ]

यत्र मध्ये पुरीषं निवपतीत्येवमादौ(३) पुरीषेण कार्यं तत्र पुरीषं चात्वालाद् ग्राह्यम्।

[ ध्रुवाकार्यम् ]

आहवनीये ये यजतय आज्यभागोपांशुयाजपथ्यास्वस्त्यादियागाश्च आज्यहविष्कास्ते ध्रुवायाः सकाशादाज्यं चतुरवदायावदाय कार्याः। इडाप्राशित्राघारानप्येके ध्रुवायाः कुर्वन्ति।

आघारौ प्राञ्चौ विदिशौ वा होतव्यौ। उभयपक्षेऽपि ऋजू दीर्घौ सन्ततौ च।

अनादेशे सर्वे होमा आहवनीय एव कर्तव्याः।

---

(१) १. ७. ३. २६ (२) ४. ३. (३) ८. १. ४. १०

ह्वाऽवचने ॥ ४५ ॥ सकृद्गृहीतार्थावाप्तेः ॥ ४६ ॥ अवष-
ट्कारातिरेकाच्च ॥ ४७ ॥ ८ ॥

व्रीहीन्यवान्वा हविषि ॥ १ ॥ तस्य द्विरवद्यति ॥२॥
त्रिर्जमदग्नीनाम् ॥ ३ ॥ पश्चात्तृतीयम् ॥ ४ ॥ सर्वेषां
वोभयमविधानात् ॥ ५ ॥ मध्यात्पूर्वार्द्धाच्चासम्भिन्दन्नङ्गु-
ष्ठपर्वमात्रमवदानम् ॥ ६ ॥ मात्रावद्दधिपयसोः ॥ ७ ॥
आद्यन्तयोराज्यम् ॥८॥ एकप्रत्यवायꣳ स्विष्टकृतः ॥९॥
द्विश्चाभिघारणम् ॥ १० ॥ अवदाय प्रत्यभिघारणं प्राक्

[ जुह्वा होमः ]

वचनादन्यत्रापि वचनाभावे सर्वत्र होमो जुह्वा कर्तव्यः। वचना-
भावे सर्वत्र सकृद्गृहीतमेव होतव्यम् ॥ ८ ॥

इति प्रथमस्य अष्टमी कण्डिका।

[ आग्रयणद्रव्यम् ]

व्रीहीणां यवानां वा हविः सर्वत्र भवति। व्रीह्याग्रयणानन्तरं यवाग्र-
यणादर्वाक् व्रीहिभिरेव दर्शपूर्णमासौ कार्यौ। यवाग्रयणानन्तरं च प्राक्
व्रीह्याग्रयणाद्यवैरेव। अथवा सदा व्रीहिभिरेवेत्यापस्तम्बः। दर्शपूर्ण-
मासयोरेवायं द्रव्यनियमः विकृतिष्वनियमः।

तस्य हविषो द्विरवद्यति।

[ हविर्ग्राह्यप्रदेशः ]

पुरोडाशचर्वादेर्मध्यप्रदेशादेकमङ्गुष्ठपर्वमात्रं तिरश्चीनमवदानमव
द्यति, तथैव द्वितीयं हविः पूर्वभागात्, कथम्—असम्भिन्दन् अव-
दानयोर्मर्यादाभङ्गमकुर्वन्नित्यर्थः।

[ अवदानसङ्ख्या ]

पञ्चार्षेयाणां जमदग्नीनां जमदग्निप्रवराणां च हविषस्त्रिरवद्यति,
एकं मध्यात्, द्वितीयं पूर्वभागात्, तृतीयं पश्चाद्भागात्। यत्र यत्र
चतुरवत्तं दृश्यते, आज्यभागपत्नीसंयाजोपांशुयाजाग्निहोत्रहोमादावपि
तत्र सर्वत्र जमदग्नीनां पञ्चावत्तमेव भवति। अथवा जमदग्नीनां
पञ्चावत्तमेव, इतरेषां चतुरवत्तं पञ्चावत्तं वा(१)। दधिपयसोरपि
स्रुवेणावदानग्रहणम्, अतस्तदवदानमप्यङ्गुष्ठपर्वमात्रमेव भवति,
हविषोऽवदानात्प्रथममाज्यं सकृदवदाय ततो हविरवदेयम् पुनरप्यन्ते

(१) १. ७. २. ७

स्विष्टकृतः ॥ ११ ॥ सर्वहुत एककपालः ॥ १२ ॥ अनुवाचनप्रैषो यथादेवतममुष्मा अनुब्रूहीति ॥ १३ ॥ आश्राव्यप्रैषे च ॥ १४ ॥ अमुं यजेति ॥ १५ ॥ प्रैषानुवाचने षष्ठी 'वपायै धानासोमेभ्य' इति परिहाप्य ॥ १६ ॥ असावित्यपनोदे ॥ १७ ॥ सवषट्कारासु तिष्ठन्दक्षिणत उदङ्प्राङ् वषट्कृते ॥ १८ ॥ सह वा ॥ १९ ॥ उभयत आज्यं हविषः ॥ २० ॥ सह वा ॥ २१ ॥ ९ ॥

आज्यं सकृदेवादेयम्(१) । स्विष्टकृति तु प्रधानावदानादेकेनोनं हविषोऽवदानं भवति, येषां प्रधानयागे अवदानद्वयं तेषां स्विष्टकृत्येकमवदानम् , येषामवदानत्रयं प्रधानयागे, तेषां हविष उत्तरार्द्धादेव स्विष्टकृत्यवदानद्वयम् , उपस्तारः सकृत्, उपर्यभिघारणं द्विर्वारं भवति । हविषोऽवदायावदानयोः प्रत्यभिघारणम् । स्विष्टकृदवदानानन्तरं हविषः प्रत्यभिघारणं न भवति । एककपालः पुरोडाशः सर्वहुतः कर्तव्यः ।

चतुर्थ्यन्तेन देवतापदेनानुवाचनप्रैषः कर्तव्यः अग्नयेऽनुब्रूहि सोमायानुब्रूहीत्येवम् । आश्रावणानन्तरं यत्र मैत्रावरुणः प्रेष्यते तत्रापि चतुर्थ्यन्तमेव देवतापदं प्रयोज्यम् अग्नये प्रेष्य सोमाय प्रेष्येत्येवम् । आश्रावणानन्तरं यत्र मैत्रावरुणस्य प्रैषाभावस्तत्र द्वितीयान्तं देवतापदमुच्चारणीयम् , अग्निं यज सोमं यजेत्येवम् । प्रैषसंबन्धिन्यनुवाचने द्रव्ये षष्ठी विभक्तिर्भवति, 'यथा "इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहि"(२) । इति, वपायै(३) धानासोमेभ्य(४) इति प्रैषद्वयं वर्जयित्वा ।

यत्रासौ यजेति विहितं भवति, यथा—"नामग्राहं यज यजेति प्रशास्त्रादी"निति,(५) तत्र देवतापदं न प्रयोज्यम् प्रशास्तर्यज पोतर्यज नेष्टर्यजेत्येव वक्तव्यम् । अथवा यत्र यत्र मन्त्रे असाविति सर्वनामपदं श्रूयते, तत्र तत्र तत्तत्पदमपनीय तस्य स्थाने तद्वाच्यस्य नामोच्चारणीयम् , यथा "इममुष्य पुत्र"मित्यादौ(६) ।

सवषट्कारास्वाहुतिषु वेदेर्दक्षिणभागे उदङ्कीशानाभिमुखस्तिष्ठन् वषट्कारानन्तरं वषट्कारेण सह वा जुहुयात्(७) । यत्राऽऽज्यमिश्रं हविस्तत्र पूर्वमाज्यं हुत्वा ततो मध्ये हविर्हुत्वा पुनरुपर्याज्यं जुहुयात् , अथवा सहैव सर्वमाज्यं हविश्च जुहुयात्(८) ॥ ९ ॥

इति प्रथमस्य नवमी कण्डिका ॥

(१) १. ६. १. २१ (२) ३. ८. २. २६ (३) ४. ४. ३. ९ (४) ३. ८. १४
(५) ९. ११. ७ (६) ९. ४० (७) १. ७. २. २ (८) ११. ४. २. १६

वर्त्तमानापदेशाच्चोदनाशब्दाच्छ्रुत्यर्थाभावात्तवेचेति वचनान्निर्देशात्कर्मचोदकः ॥ १ ॥ मन्त्रो वा समभिव्याहारात् ॥२॥ अर्थप्रसंख्यया द्रव्योपकल्पनम् ॥३॥ चर्माण्युत्तरलोमानि प्राग्ग्रीवाणि ॥ ४ ॥ अवरोक्तमुत्तरं हविषि ॥ ५ ॥ एकद्रव्ये साज्ये वेदेनोपग्रहणम् ॥ ६ ॥ स्फ्येनान्यत्र ॥ ७ ॥ कुशैरसत्सु ॥ ८ ॥ पाणिभ्यां जुहूं परिगृह्योपभृत्याधानमादानकाले ऽसंह्लादयन् ॥ ९ ॥ वाच्यफलेषु स्वर्गः सामर्थ्यात् ॥ १० ॥ एककर्मणि गुणविशेषे फलविशेषः ॥ ११ ॥ दान-वाचनाऽन्वारम्भण-

---

यदाग्नेयोऽष्टाकपालो भवतीत्येवमादिः पञ्चमलकारपरिकल्पनया कर्मविधायको भवति ।

दर्शपूर्णमासपश्वादौ कर्मणि करिष्यमाणे एतावद्भिर्द्रव्यैरत्र प्रयोजनमस्ति इत्येवं पात्रहविःप्रभृतिद्रव्याणां प्रयोजनं विचिन्त्य कर्मारम्भात्प्रागेव तावतामुपकल्पनम् आनीय समीपे कर्मकरणप्रदेशे स्थापनं कर्तव्यम् ।

चर्माण्युत्तरलोमानि प्राग्ग्रीवाणि सर्वत्रास्तरणीयानि, (१)यथा "नीड़े कृष्णाजिनमास्तृणाती"त्यादौ(२) ।

हविषां मध्ये यत्पश्चात्पठितं तद्देशतः कालतश्चोत्तरं कर्तव्यम्, ग्रहणादिकं पूर्वपठितस्य पूर्वमुत्तरपठितस्योत्तरम्, अधिश्रयणासादनाद्यपि पूर्वपठितस्य दक्षिणतः, पश्चात्पठितस्योत्तरत इति(३) ।

एकद्रव्ये स्थालीस्रुवादौ साज्ये दक्षिणहस्तेन गृहीते सति सव्येन वेदस्योपग्रहणं कर्तव्यम्(४) । एकद्रव्य इत्युक्तत्वादुपभृदादौ द्वितीयद्रव्ये सति वेदोपग्रहणाभावः । अन्यत्र सर्वत्र स्फ्येन अन्यद्रव्येण द्रव्यवति जपोपस्थानादौ च असत्सु वेदवज्रद्वितीयद्रव्येषु कुशैरुपग्रहणम्, यथा समिष्टयजुर्होमे वेदाभावे कुशैः, वेदबन्धनात्प्राक् प्रायश्चित्ताहुतौ च । यथा च स्फ्ये अन्यत्र व्यापृते सोमे ग्रहहोमादौ द्वितीयद्रव्याभावे च कुशोपग्रहणम् ।

---

(१) ९. ३. ४. १४ (२) श० ३. ३. ४. १.
(३) २. १. १. १७ (४) ४. २. २. ११

वर—वरण—व्रत-प्रमाणेषु यजमानं प्रतीयात् ॥ १२ ॥ खात —लून-च्छिन्ना-ऽवहत-पिष्ट-दुग्ध-दग्धेषु यजुष्क्रियाऽसम्भवात् ॥ १३ ॥ रौद्रं राक्षसमासुरमाभिचरणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्योपस्पृशेदप उपस्पृशेदपः ॥ १४ ॥ १० ॥

---

स्रुचोरादानकाले आसादितां स्रुचं जुहूं पाणिभ्यां परिगृह्योपभृत उपरि निदध्यात्, परस्परसंस्पर्शने शब्दमनुत्पादयन्(१)।

उद्भिदा यजेत बलभिदा यजेतेत्येवमादौ यत्र फलं न श्रूयते तत्रापि न्यायेन स्वर्गः फलत्वेन कल्प्यते, तस्य सर्वेषामपीष्टत्वात्।

एकस्मिन् कर्मणि वैकल्पिकेष्वङ्गेष्वधिकेष्वाम्नातेष्वधिकाङ्गानुष्ठानपक्षे फलाधिक्यं भवति, यथा पौर्णमासादौ वैकल्पिकवैमृधाद्यधिकाङ्गानुष्ठाने फलाधिक्यं भवति। यथा वा तनूहविःष्वधिकदक्षिणादानपक्षाश्रयणे, बृहस्पतिसवे च, एवं सर्वत्र।

अन्वाहार्यादिदक्षिणादाने आ वो देवास इत्यादिवाचनो(२) स्थाल्यन्वारब्ध इत्यादावन्वारम्भणे, (३)वरप्रार्थने, ऋत्विग्वरणे, सत्यवादी स्यात् पयोव्रतो दीक्षितः स्यादित्यादौ(४) व्रते, त्र्यरत्निश्चतुररत्निर्वेत्यादिप्रमाणे च(५) सर्वत्रानुक्तमपि यजमानं कर्तारं जानीयात्,

खाते यूपावटोपरवादौ, लूने बर्हिषि, छिन्ने शाखायूपादौ, अवहतेषु व्रीहिषु, पिष्टेषु तण्डुलेषु, दुग्धे पयसि, दग्धे महावीरोखादौ असंभवाल्लोकनिष्पत्तेर्गृहीते यजुःक्रिया भवति, यजुर्युक्तं क्रियामात्रं भवति तावन्मात्रस्यासिद्धत्वात्, लौकिकस्य क्रियामात्रस्य सिद्धत्वात्।

रुद्रदेवतं रक्षोदेवतमसुरदेवतमाभिचरणिकं पितृदेवत्यं च मन्त्रमुक्त्वा एतद्देवत्यममन्त्रकं कर्म च कृत्वाऽऽत्मानमालभ्यापां स्पर्शनं हस्तेन कुर्यात् ॥ १० ॥

इति प्रथमस्य दशमो कण्डिका।

इति श्रीयाज्ञिकदेवकृतायां कात्यायनसूत्रपद्धतौ आदिमोऽध्यायः समाप्तः।

---

(१) ११. ४. २. १　(२) ७. ३. ६　(३) ४. २. २३
(४) ९. ५. १. १.　(५) ११. ७. ४. १.

# अथ द्वितीयोऽध्यायः ।

पूर्वां पौर्णमासीमुत्तरां वोपवसेत् ॥१॥ अग्न्यन्वाधानमध्वर्युर्यजमानो वा ॥२॥ ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम । मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेमेत्याहवनीये समिधमादधाति ॥३॥ तूष्णीं द्वितीयाम् ॥४॥ एवमितरयोरग्न्योः ॥५॥ महाव्याहृतिभिर्वा प्राक्संस्थम् ॥६॥ तूष्णीं वा यथा-

---

अथ दर्शपूर्णमासयोः पद्धतिर्लिख्यते ।

कृताधानस्याधानानन्तरं प्रथमपौर्णमास्यां मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् । ततो मुख्यायामेव पौर्णमास्यां सद्योऽन्वारम्भणीयेष्टिः, तदनन्तरं पौर्णमासस्यारम्भः । "समूहन्त्यग्न्यगारमुपलिम्पन्त्यग्न्यातनान्यलङ्कुर्वत" इत्यापस्तम्बसूत्रे विशेषः । तत्र पूर्वमाहवनीयखरे पञ्च भूसंस्काराः कर्त्तव्याः, तद्यथा—दर्भैः खरं प्राक्संस्थमुदक्संस्थं वा त्रिः परिसमुह्य गोमयेन त्रिरुपलिप्य स्फ्येन प्रागायता उदक्संस्था उदगायताः प्राक्संस्था वा तिस्रो लेखाः खरप्रमाणाः कृत्वा अनामिकाङ्गुष्ठेन ताभ्यो लेखाभ्यः पांसूनुद्धृत्याद्भिस्त्रिरभ्युक्षेत्, एवमेव दक्षिणाग्नेः खरे पञ्च भूसंस्काराः कार्याः । ततो गार्हपत्यादाहवनीयस्योद्धरणम्, तत्र पौर्णमासेष्ट्यर्थं गार्हपत्यादाहवनीयमुद्धरामीति मनसि संकल्प्य गार्हपत्यात्कर्परेण ज्वलन्तमग्निं कर्परादिना आहवनीयखरे प्राञ्चं स्थापयेत् । ततः पौर्णमासेष्ट्यर्थं गार्हपत्याद्दक्षिणाग्निमुद्धरामीति संकल्प्य गार्हपत्यात्कर्परेणाग्निमादाय दक्षिणाग्नेः खरे स्थापयेत् ।

अथाग्न्यन्वाधानमुच्यते—तत्र षट् समिधो हस्ते गृहीत्वा स्फ्यं सव्ये हस्ते धृत्वा ममाग्न इति मन्त्रेणाहवनीये एकां समिधमादधाति. ततस्तूष्णीं द्वितीयां समिधमादधाति, एवमेव गार्हपत्ये दक्षिणाग्नौ च द्वे द्वे समिधावादधाति, एकोऽयं पक्षः ।

अथवा भूरित्येतावता मन्त्रेण प्रथमं गार्हपत्ये एकां समिधमादधाति तूष्णीं द्वितीयाम्, ततो भुव इति दक्षिणाग्नावेकां तूष्णीं द्वितीयाम्, ततः स्वरित्याहवनीय एकां तूष्णीं द्वितीयाम्, अयं द्वितीयः पक्षः ।

अथवा तूष्णीमेव युगपत्समिद्द्वयं गार्हपत्ये, तत आहवनीये, ततो दक्षिणाग्नौ, इति तृतीयः पक्षः

**पूर्वम् ॥७॥ अहनि माᳬंसमैथुने वर्जयेत् ॥८॥ केशश्मश्रु वपते वाऽशिखम् ॥९॥ अपराह्णे व्रतोपायनीयमश्नीतः सर्पिषा ऽसुहितौ॥१०॥ अन्तरेणापराग्नी गत्वाऽपरेणाहवनीयं प्राङ् तिष्ठन्नग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैत्यग्ने**

---

प्रयोगकाले सर्वमन्त्रादौ ओंकारोच्चारणं कार्यम्, एतच्चाग्न्यन्वाधानपक्षेऽपि। यजमानस्य सपत्नीकस्य मांसमैथुनवर्जनसंकल्पः।

केशश्मश्रुवपनं शिखां वर्जयित्वा। कर्कमते–वपनस्य विकल्पः। भर्तृयज्ञ–मते वपनं नियमेन। अशिखं वा सशिखं वेति विकल्पः।

मानवे विशेषः–केशश्मश्रु यजमानो वापयते दक्षिणोपक्रमान्केशान्सव्योपक्रमान्नखानङ्गुष्ठं कनिष्ठिकातः कारयते न कक्षौ, पत्नी नखांश्च कारयीतेति।

अपराह्णे पत्नीयजमानौ माषमांसलवणप्रातर्होष्यमाणद्रव्यव्यतिरिक्तं घृतसंयुक्तमल्पमश्नीतो न तृप्तिपर्यन्तम्।

परिशिष्टे–शाकं मांसं मसूरं च चणकं कोरदूषकान्।
माषान् मधु परान्नं च वर्जयेदौपवस्तके।
तथा–लवणं मधु मांसं च क्षारान् श्वो येन हूयते।
उपवासे न भुञ्जीत नोऽरात्रौ न किञ्चनेति।
तथा–तिलमुद्गादृते शैम्ब्यं सस्यं गोधूमकोद्रवौ।
चीणकं देवधान्यं च सर्वशाकं तथैवम्।
सज्जीक्षारं यवक्षारं टङ्कणक्षारमेव च।
व्रतस्थो वर्जयेन्नित्यं सामुद्रं लवणं तथेति(१)।

अत एव सामुद्रविशेषणात्सैन्धवमानसादेरसामुद्रस्य न निषेध इति केचिदाहुः।

हविष्ट्वमपि तस्योक्तं स्मृतौ–मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम्।
अक्षारलवणं चैव प्रकृत्या हविरुच्यते(२)।
अक्षारलवणं सैन्धवमिति सर्वे निबन्धकारा व्याख्यातवन्तः।
तथा–सैन्धवं लवणं यच्च यच्च मानससंभवम्।
पवित्रे परमे ह्येते प्रत्यक्षमपि सर्वश इति।

[ व्रतग्रहणम् ]

व्रत्याशनानन्तरं यजमानः स्फ्यमादाय गार्हपत्यदक्षिणाग्न्योरन्तरालेन गत्वा आहवनीयस्य पश्चात्समीपे पूर्वाभिमुखस्तिष्ठन्नाहवनीयं

---

(१) कर्मप्रदीप ३. ८. ६.। (२) मनु० ३. २५७.।

व्रतपत ऽइदमहमिति वा सत्यवाद्यतः ॥११॥ कर्माङ्गमुत्तरे सत्यवदनम् ॥१२॥ वृक्षारण्यौषधीनामश्नीयाद्वा ॥१३॥ आहवनीयगृहशाय्यधः ॥१४॥ गार्हपत्यस्य वा ॥१५॥ सद्यो वा ॥१६॥ प्रातः ॥१७॥ अग्निहोत्रꣳ हुत्वा ब्रह्माणं वृणीते ब्रह्मꣳ भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इति ॥१८॥ वृतो जपत्यहं भूपतिरहं भुवनप-

---

विलोकयन्नुदकं दक्षिणहस्तेन स्पृष्ट्वा—अग्ने व्रतपते व्रतमिति—मन्त्रेण(१) व्रतमुपैति सत्यवदनादिनियममङ्गीकरोतीत्यर्थः। अथवा इदमहमनृतादित्यनेन (२)मन्त्रेण व्रतमुपैति न पूर्वोक्तेन।

अतः प्रभृति क्रियमाणकर्माङ्गभूतो यजमानस्य सत्यवदननियमः। रात्रौ तस्मिन्नेव विहारे स्वयमेवाग्निहोत्रहोमः।

सायाशनेच्छायां सत्यां होमानन्तरमारण्यौषधीनां नीवारश्यामाककङ्ग्वादीनामशनं वा। आरण्यवृक्षाणामाम्रराजादनादीनां फलानि वाऽश्नीयात् नाश्नीयाद्वा।

रात्रावाहवनीयागारे गार्हपत्यागारे वा पत्नीयजमानाभ्यां खट्वाद्यपेक्षया अधो नीचैं शयनं कर्तव्यम्। आस्तरणस्य न निषेधः। व्रतग्रहणे कृते अयमारण्याशनशय्यानियमो नापरथेति हरिस्वामिनः। आपस्तम्बोऽपि-"अमावास्यायां रात्रिं जागर्त्यपि वा सुप्यादुपरि त्वेव न शयीतापि वोपरि शयीत ब्रह्मचारी त्वेव स्यादुभयत्र जागरणमेके समामनन्तीति(३)"। प्रातरपि तस्मिन्नेव विहारे स्वयमेवाग्निहोत्रहोमः।

[ ब्रह्मवरणम् ]

तत उदिते सूर्ये ब्रह्मवरणाद्युपक्रमः। ततः पूर्वं षडासनान्युपकल्पयेत्। ब्रह्मवरणार्थं ब्रह्मयजमानयोर्द्वे आसने विहारस्योत्तरतो दर्भास्तृते स्थापनीये। आहवनीयस्य दक्षिणतो ब्रह्मोपवेशनार्थमेकं दर्भास्तृतमासनं, तथैव पश्चाद् द्वितीयं यजमानस्योपवेशनार्थं, तथा गार्हपत्यस्योत्तरत एकं दम्पत्योरुपवेशनार्थम्, आहवनीयस्योत्तरतो द्वितीयं च। एतदासनद्वयं प्रणीताप्रणयनार्थम्।

ततो ब्रह्मवरणम्—विहारस्योत्तरत उदङ्मुखोपविष्टो यजमानः प्राङ्मुखोपविष्टं ब्रह्माणं वृणीते। तत्रैवमाचारः—साक्षतेन दक्षिण

---

(१) यजु० सं० १. ५. (२) शु० यजु० १. ५. (३) ४. ३. १३-१६.

तिरहं महतो भूतस्य पतिर्भूर्भुवः स्वर्देव सवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब् जगत्यै जगत्यनुष्टुभे ऽनुष्टुप्प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो बृहस्पतिर्देवानां ब्रह्माऽहं मनुष्याणामिति ॥१९॥ वाचस्पते यज्ञं गोपायेत्याह ॥२०॥ अपरेण वाऽऽहवनीयं दक्षिणाऽतिक्रामति ॥२१॥ 'अहं दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर' इति ब्रह्मसदनमीक्षते ॥ २२ ॥ ब्रह्मसदनात्तृणं निरस्यति 'निरस्तः पाप्मा सह तेन यं द्विष्म' इति ॥२३॥ 'इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सवित्रा तदग्नये प्रब्रवीमि तद्वायवे तत्पृथिव्या' इति ॥ २४ ॥ १ ॥

---

हस्तेन ब्रह्मणो दक्षिणजानुमालभ्य अमुकगोत्रामुकशर्मन् पौर्णमासेष्ट्या वयं यक्ष्यामहे—"तत्र भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे" इति अनेन मन्त्रेण वृणीते। ततो वृतो ब्रह्मा "अहं भूपति रित्यादि मनुष्याणा" मित्यन्तं जपति। सूत्रे व्रतग्रहणाच्च यज्ञप्रधानेष्टि-दीक्षणीयादौ वरणाभावस्तत्राहं भूपतिरिति जपस्याप्यभावः। ततो ब्रह्मैव वाचस्पते यज्ञं गोपायेति मन्त्रं पठति। ततो ब्रह्मा वरणस्थानादुत्थायाहवनीयात्पूर्वमार्गेणापरमार्गेण वा वेदेर्दक्षिणतः स्थापितं ब्रह्मासनं प्रति गच्छति। तत्समीपे उत्तरतः प्राङ्मुखः स्थित्वा "अहे दैधिषव्य" इति मन्त्रेण ब्रह्मसदनमीक्षते। ततो ब्रह्मसदनादेकं तृणं गृहीत्वा नैर्ऋत्यां दिशि निरस्यति—"निरस्तः पाप्मेति"। "समानं होत्रा तृणनिरसन"मिति शाङ्खायनः(१) काठके—तस्मात्तृणमादायोभयतः प्रच्छिद्य दक्षिणा प्रत्यक् तृणं निरस्यतीति। मानवे प्येवमेवास्ति ॥१॥

इति द्वितीयस्य प्रथमा कण्डिका ॥ १ ॥

---

तत इदमहं बृहस्पतेरिति मन्त्रेण ब्रह्मसदने आहवनीयाभिमुखो ब्रह्मा उपविशति। मानवे विशेषः-'ब्रह्मण्युपचरत्यन्यस्य वा कर्म कुर्वाणे यो नेदिष्ठी ऋत्विजां स्यात्स उपासीतापि वा दर्भमुष्टिमुदपात्रं वा ब्रह्मासने

---

(१) शां० ४. १. ३ (२) ४. ६. ९.

ब्रह्मसदनऽ आहवनीयमभिमुखऽ उपविशति ॥१॥ वाग्यतऽ आऽनुयाजप्रसवात् ॥ २ ॥ भागपरिहरणादि वा ॥ ३ ॥ आवृताऽवषट्कारासु ॥ ४ ॥ अत्र वा व्रतोपायनम् ॥ ५ ॥ व्याहृत्य वैष्णवं मन्त्रं जपेत् ॥ ६ ॥ अध्वर्युश्च ॥ ७ ॥ "प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तऋषीणाꣳ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्योम् प्रणये"ति प्रणीताः प्रसौति ॥८॥ एवमामन्त्रित ओँकारेण॥९॥ प्रोक्ष यज्ञमिति हविषि॥१०॥ इध्माबर्हिषोश्च ॥११॥ "बृहस्पते परिगृहाण वेदिꣳ सुगा वो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथताꣳ साध्वन्तर्हिꣳस्रा पृथिवी देवी देव्यस्त्वि"ति वेदिं परिगृह्णन्तम् ॥ १२ ॥ प्रजापतेऽनुब्रूहि यज्ञमिति सामिधेनीरनुवक्ष्यन्तम् ॥ १३ ॥ देवता वर्द्धय त्वामिति सर्वत्रानुषजति ॥ १४ ॥ मित्रस्य त्वा चक्षुषा प्रतीक्ष' इति प्राशित्रं प्रतीक्षते ॥१५॥ देवस्य त्वेति प्रतिगृह्णाति ॥१६॥ पृथिव्यास्त्वेति सादयत्यपोह्य बर्हीꣳषि ॥ १७॥ पुनरादाय देवस्य त्वेत्यनामिकाङ्गुष्ठाभ्यामग्नेष्ट्वेति प्राश्नाति दन्तैरनुपस्पृशन्नत्र चेत् ॥ १८ ॥ निदधाति वाऽꣳसदेशे ॥ १९ ॥ प्रक्षाल्य पात्रं नाभिमालभते 'या अप्स्वन्तर्देवतास्ता इदꣳ शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ घसिना मे मा संपृक्था ऽऊर्द्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामी'ति ॥ २० ॥ 'एतं त' इति समिदामन्त्रितः प्रसौति ॥ २१ ॥ प्रतिष्ठेति ब्रूयाद्वा ॥ २२ ॥ कर्मापवर्गे समिधमादधाति जुहोत्युपतिष्ठते वा 'नमः

---

न्यस्येदशून्यासनमेवꣳ स्यादिति'। अत्रवा यथोक्तं व्रतग्रहणं यजमानः करोति ।

अथवा सद्य एव प्रतिपद्युद्धरणाग्न्यन्वाधानादि कर्त्तव्यम् । अ-

कृताय कर्मणे अकृताय कर्मणे नमः । अयाड् यज्ञं जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य । सन्वꣳ सनिꣳ सुविमुचा विमुञ्च धेह्यस्मभ्यं द्रविणं जातवेदः स्वाहेति' यथेतमेत्य ॥ २३ ॥ एतद् ब्रह्मत्वमिष्टिपश्वोः ॥ २४ ॥ २ ॥

गार्हपत्यमुत्तरेणोदपात्रं निधायालभते 'भूतस्त्वा भूत करिष्यामीति' ॥१॥ ब्रह्मन्नपः प्रणेष्यामि यजमान व्वाचं यच्छेत्याह ॥ २ ॥ अनुज्ञात उत्तरेणाहवनीयꣳ सम्प्रति निदधाति कस्त्वेति ॥ ३ ॥ नान्तरेण गच्छेयुः ॥४॥ कांꣳस्य—व्वानस्पत्य—मार्त्तिकैरभिचार—ब्रह्मवर्चस—प्रतिष्ठाकामा यथासङ्ख्यम् ॥ ५ ॥ तृणैरग्निप-

रिमन्पक्षे अर्थाद् व्रतोपायनीयाशन-शयनयोरभावः । रागप्राप्त एवाशने सर्पिरादिगुणविधानात्, यागात्प्राग्भोजनशयनकालाभावाच्च । अन्यत्सर्वं वपनादि भवत्येव ॥ २ ॥

इति द्वितीयस्य द्वितीया कण्डिका ॥ २ ॥

[ प्रणीताप्रणयनम् ]

ततोऽध्वर्यु र्वारणं चमसं सव्यहस्ते कृत्वा दक्षिणहस्तस्थेनोदपात्रेण स्वयं तस्मिन्नुदकमासिच्य दक्षिणहस्तेन तं चमसं गार्हपत्यस्योत्तरतो निधाय तदनन्तरं भूतस्त्वेति मन्त्रेण हस्तेन चमसस्थमुदकमालभते । चमसस्यालम्भ इति कर्कः । उदकस्यालम्भ इति याज्ञिकाः । ततो ब्रह्मन्नपः प्रणेष्यामीति ब्रह्माणं पृच्छति । यजमान वाचं यच्छेति यजमानं प्रेष्यति । सर्वेषु प्रैषेषु कृतेषु ब्रह्मा प्रणय यज्ञमित्यादि ( २. २. ८. ) यजमानं च धेह्यीत्यन्तमुपांशु पठित्वा ॐ३प्रणयेत्युच्चैरनुज्ञां करोति, यथाऽध्वर्युः शृणोति । ततोऽध्वर्युश्चमसं गृहीत्वा आहवनीयादुत्तरस्यां दिशि बहिर्वेदि दर्भेषु प्रणीताचमसं निदधाति कस्त्वा युनक्तीति ( १. ६. ) मन्त्रेण, नाहवनीयमतिक्रम्य न चाप्राप्य, किन्त्वाहवनीयमुत्तरेणार्जवेन समतयैवासादयेत्, तत उपरिष्टादपि दर्भैराच्छादयेत् ।

[ परिस्तरणम् ]

तत आहवनीयस्य प्रागग्रैरुदगग्रैश्च दर्भः परिस्तरणं, प्रथमं पुरस्तात् उदगग्रैः, ततो दक्षिणतः प्रागग्रैः, पश्चादुदगग्रैः, उत्तरतः प्रागग्रैः । एवं

रिस्तीर्य पुरस्तात्प्रथमं द्विशः पात्राणि सꣳसादयति ॥६॥ यजमानो वा ॥ ७ ॥ शूर्पाग्निहोत्रहवणी स्फ्यकपालꣳ शम्याकृष्णाजिनमुलूखलमुसलं दृषदुपलमर्थवच्च ॥ ८ ॥ श्रपणस्य पश्चादुत्तरतो वा ॥ ९ ॥ कर्म्मणे वामिति शूर्पाग्निहोत्रहवण्यादाय वाचं यच्छति ॥ १० ॥ प्रतप्तं प्रत्युष्टं निष्टप्तमिति वा ॥ ११ ॥ गच्छत्युर्वन्तरिक्षमिति श्रपणस्य पश्चादनास्तिष्ठत्समङ्क्षि ॥ १२ ॥ धूरसीति धूरभिमर्शनम् ॥ १३ ॥ देवानामित्युपस्तम्भनस्य पश्चादीषाम् ॥ १४ ॥ विष्णुस्त्वेत्यारोहणम् ॥ १५ ॥ प्रेक्षत उरु-

---

गार्हपत्यस्य परिस्तरणं, ततो दक्षिणाग्नेरप्येवमेव । आपस्तंबः-"उदगग्रैः प्रागग्रैश्च दर्भैरग्नीन् परिस्तृणात्युदगग्राः पश्चात्पुरस्ताच्चेति" (१.१४.१४-१५)।

[ पात्रासादनम् ]

ततोऽध्वर्युर्यजमानो वा द्विशः पात्राण्यासादयति विनियोगक्रमेण। आहवनीये गार्हपत्ये वा यत्र हविःश्रपणं करिष्यन् भवति तस्योत्तरतः पश्चाद्वा । उत्तरतश्चेदुदुक्संस्थम् , असम्भवे प्राक्संस्थमपि, पश्चाच्चेत्प्राक्संस्थम्, असम्भवे उदक्संस्थमपि। द्विश इत्येकेन प्रयत्नेन द्वे द्वे पात्रे गृहीत्वा निदधातीत्यर्थः।आसादनं च समीपे निधानम् । तथाहि-शूर्पाग्निहोत्रहवणी, स्फ्यकपाले, शम्याकृष्णाजिनम् , उलूखलमुसलम्, दृषदुपलम् , अनो वा, पात्री वा, धान्यमिति व्रीहयो वा, यवा वा।तत्र व्रीह्याग्रयणानन्तरं यवाग्रयणात्प्राग्व्रीहय एव । तथा यवाग्रयणानन्तरं प्राग्व्रीह्याग्रयणाद्यवा एव । अयं नियमो दर्शपूर्णमासयोरेव, न तद्विकारेषु । तथा चौहापस्तंबः । "व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेतायवेभ्यो दर्शपूर्णमासावेवं यवैराव्रीहिभ्योऽपि वा व्रीहिभिरेवोभयत्रैते ह वै सूपचरतमा भवन्तीति बह्वृचब्राह्मणम् इति ( ६.३१.१३. ) । पवित्रच्छेदनानि पवित्रे च । धृष्टिः संवपनार्थं, स्थाली, आज्यं च, वेदो दक्षिणार्थश्च, उदकतृणमश्मिः इध्माबर्हिः, स्रुवश्चेत्यत्र स्रुवो जुहूः । उपभृतद् ध्रुवा । संमार्गार्हाणि यानि वेत्यत्र द्वे प्राशित्रहरणे, शृतावदानं, द्वयोः पुरोडाशयोः साधारणी एका पुरोडाशपात्री, न द्वे, योक्त्रं यूनकुशाश्च, पक्षे परिधयस्त्रयः, पीठं कुशास्तीर्णम् , इडापात्री षडवत्तम् , अन्तर्धानकटः , पूर्णपात्रं , पक्षे कर्मापवर्गा समित्।

एवं पात्राण्यासाद्य हविष्यसहितमनो गार्हपत्यस्य पश्चात्प्राक्शीष-

**त्वा वातायेति हविष्यान् ॥ १६ ॥ अपहतमिति निरस्यत्य-न्यत् ॥ १७ ॥ अविद्यमानेऽभिमृशेत् ॥ १८ ॥ य-च्छन्तामित्यालभते ॥ १९ ॥ देवस्य त्वेति गृह्णात्याग्नेयं चतुरो मुष्टीन् ॥ २० ॥ एवमग्नीषोमीयम् ॥ २१ ॥ यथा-देवतन्यत् ॥ २२ ॥ भूताय त्वेति शेषाभिमर्शनम् ॥२३॥**

---

मवस्थापयेत् । अनः शकटं, तच्च युगयोक्त्रसंयुक्तं वरत्रापरिवेष्टितं च स्थापनीयम् ।

[ हविर्ग्रहणादि ]

ततः कर्मणे वामिति( १. ६. ) मन्त्रेणाध्वर्युः शूर्पाग्निहोत्रहवण्योरादानं करोति । तत आरभ्य हविरावपनपर्यन्तं हविष्कृदाह्वानपर्यन्तं वाऽध्वर्यो-र्वाग्यमनम् । ततः प्रत्युष्टꣳ रक्ष इति (१.७.) मन्त्रेण शूर्पाग्निहोत्रहवण्यो-र्गार्हपत्ये प्रतपनं निष्टप्तमिति (१. ७.) मन्त्रेण वा । तत उदकोपस्पर्शनम् ।

तत उर्वन्तरिक्षमिति(१. ७.) शकटं प्रति गच्छति । शकटाग्रसमीप उप-विश्य धूरसीति (१. ७.) मन्त्रेण तस्य दक्षिणामुत्तरां वा एकां धुरमभिमृ-शति । ततस्तत्र स्थित एवोपस्तम्भनस्य पश्चादुत्तरामीषामालभ्य देवा-नामसीति ( १. ७-९. ) मन्त्रं जपति । ततः शकटस्य पश्चान्मार्गेण दक्षिणतो गत्वा विष्णुस्त्वा क्रमतामिति ( १. ९. ) मन्त्रेण दक्षिणचक्र-स्योपर्यारोहति । आरुह्योरु वातायेति ( १.९. ) हविष्यान्व्रीहियवादी-न्प्रेक्षते । ततो हविर्मध्ये यदि किञ्चित्तृणलोष्टाद्यन्यत्पतितं भवति तदा ततस्तद् गृहीत्वाऽपहतमिति ( १.९. ) निरस्यति । अन्यस्याभावे अनेनैव मन्त्रेण हविरालभते । ततोऽपः स्पृशति । ततो यच्छन्तामिति ( १. ९. ) हविरालभते ।

ततः सव्यहस्ते शूर्पं निधाय तस्योपर्यग्निहोत्रहवणीमुत्तानां निधाय प्राङासीनो मुष्टया अनसः सकाशात्तूष्णीं हविर्गृहीत्वा देवस्य त्वा अग्नये जुष्टमिति (१.१०.) मन्त्रेण अग्निहोत्रहवण्यां प्रक्षिपति । एवमपरं मुष्टिद्वय मनेनैव मन्त्रेण प्रक्षिप्य चतुर्थं मुष्टिं तूष्णीं प्रक्षिपति । ततो गृहीतं हविः शूर्पमध्ये दक्षिणपार्श्वे प्रक्षेपणीयं यथा हविरन्तरेण संकरो न भवति । ततोऽग्नीषोमीयपुरोडाशार्थं देवस्य त्वा अग्नीषोमाभ्यां जुष्टमिति ( १. १०. ) मन्त्रेण त्रिर्गृह्णाति चतुर्थं तूष्णीम् ।

ततः शूर्पमध्ये पृथगुत्तरतस्तद्धविः प्रक्षिप्य भूताय त्वेति मन्त्रेण (१. ११.) शकटे यत्परिशिष्टं हविस्तदभिमृशति । तच्च गृहीतहविर्मध्ये न मिश्रयणीयम् । ततोऽनस्युपविष्ट एव स्वरभिविख्येषमिति ( १. ११. )

स्वारिति प्राङीक्षते ॥ २४ ॥ दृꣳहन्तामित्यवरोहति ॥२५॥ गच्छत्युर्वन्तरिक्षमिति ॥२६॥ अपणस्य पश्चात्सादयति पृथिव्यास्त्वेति ॥२७॥ पात्र्यां वा स्फ्योपहितायाम् ॥२८॥ धूरीषारोहणानि पात्रीबिले जपति ॥ २९ ॥ दृꣳहन्तामित्युत्थानम् ॥ ३० ॥ कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैश्छिनत्ति पवित्रे स्थ इति ॥ ३१ ॥ त्रीन् वा ॥ ३२ ॥ हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इति ॥ ३३ ॥ ता स्थानं तयोः ॥ ३४ ॥ सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इति ॥३५॥ प्रोक्षिता-

---

प्राचीमीक्षते । ततो दृꣳ० हन्तामिति (१. ११.) मन्त्रेण शकटादवरोहति । तत उर्वन्तरिक्षमिति (१. ११.) मन्त्रेण गार्हपत्यसमीपे उत्तरस्यां गच्छति । ततस्तच्छूर्पं सहविष्कं पृथिव्यास्त्वेति (१. ११.) मन्त्रेण अपणस्य पश्चात्सादयति निदधाति । अपणशब्देनात्र यस्मिन्हविःश्रपणं क्रियते-गार्हपत्ये वा आहवनीये वा सोऽभिधीयते ।

अथवा अनसः कार्यं पात्र्यां कर्त्तव्यम् । अस्मिन्पक्षे अनस आसादनाभावः । तत्स्थाने पात्री आसादनीया, तदा पात्र्यासादनानन्तरं सहविष्कां पात्रीं गार्हपत्यस्य पश्चात्प्रागग्रामुदगग्रां वा स्थापयित्वा तस्या अधस्तात्स्फ्यं प्रागग्रमुदगग्रं वा प्रेरयित्वोपधेयम् ।

ततः शूर्पाग्निहोत्रहवण्योरादानादि । अस्मिन्पक्षे उर्वन्तरिक्षमिति पात्रीसमीपे गत्वा धूरसि देवानामसि विष्णुस्त्वा क्रमतामित्येतान् त्रीन्मन्त्रान् पात्रीविले जपति पात्र्याः पूर्वार्द्धमभिमृश्य जपति । बिलं पात्रीमुखम् ।

तैत्तिरीयसूत्रे—"यद्य वैतानो भवति जघनेन गार्हपत्यं स्फ्यं निदधाति स्फ्य उपरि पात्रीं पात्र्यां पुरोडाशीयानावपत्यथ पूर्वार्द्धे पात्र्या अभिमृशति धूरसी"त्यादि । पात्र्या उत्तरतः पश्चाद्दक्षिणतो वा यथासम्भवं प्राङ्मुख उपविष्टो हविरीक्षणमपद्रव्यनिरसनमालम्भनं च कृत्वाऽप उपस्पृश्य हविरालभ्य ग्रहणं शेषाभिमर्शनं प्राङीक्षणं च कृत्वा दृꣳ०हन्तामित्यनेन मन्त्रेणोत्तिष्ठति, तत उत्तरतो गत्वा अपणस्य पश्चादासादयति ।

[ पवित्रकरणम् ]

ततः समप्रमाणौ साग्रौ अनन्तर्गर्भौ अच्छरिताग्रौ कुशौ पवित्रे स्थ

**स्थेति तासां प्रोक्षणम् ॥ ३५ ॥ हविश्चाग्नये त्वाऽग्नीषोमाभ्यां त्वेति ॥३६॥ यथादेवतमन्यत् ॥३७॥ पात्राणि दैव्यायेति ॥ ३८ ॥ असञ्चरे प्रोक्षणीर्निधाय ॥३९॥३॥**

---

इति ( १.१२. ) मन्त्रेण कुशैः स्रुग्बिलस्थानीयैश्छिनत्ति । अथ वा एवंविधान् त्रीन्कुशाननेनैव मन्त्रेणानूदितेन कुशैश्छिनत्ति ।

[ प्रोक्षणीसंस्कारः ]

ततोऽग्निहोत्रहवण्यां सशूकायामनिर्मृष्टायां स्वयमेवोदकमासिच्य सवितुर्व इति ( १.१२. ) मन्त्रेण ताभ्यां पवित्राभ्यामुत्पुनाति उत्क्षिपति । पवित्रयोर्हविर्ग्रहणयां स्थापनम् । ततः सव्यहस्तेऽग्निहोत्रहवणीं निधाय सव्यहस्तस्थामेव संलग्नामेव दक्षिणहस्तेनोदिङ्गयति ऊर्ध्वं चालयति । ततः प्रोक्षिता स्थेति ( १.१३. ) ताभिरेव स्रुक्स्थाभिस्तासामेव प्रोक्षणं हस्तेनैव कार्यम् ।

[ पात्रप्रोक्षणम् ]

ततो ब्रह्मन् हविः प्रोक्षिष्यामीति ब्रह्माणं पृच्छति । ततो ब्रह्मा प्रोक्ष यज्ञं येहीत्यन्तमुपांशूक्त्वा ओ३म् प्रोक्षेत्युच्चैः प्रसौति(२.२.१०.)। ततोऽध्वर्युरग्निहोत्रहवण्याः सकाशादुदकं हस्तेनादाय शूर्पस्थे हविषी प्रोक्षति अग्नये त्वा जुष्टमिति (१.१३.) प्रथमम्, अग्नीषोमाभ्यां त्वा जुष्टमिति(१.१३.) द्वितीयम् । ततः सर्वाणि पात्राण्येकत्र राशीकृत्य दैव्याय कर्मण इति ( १.१३. ) मन्त्रेण सर्वाणि सहैव प्रोक्षति । अत्र बहु उदकमादाय तथा प्रोक्षणं कार्यं यथा सर्वेषां प्रोक्षणीबिन्दवः स्पृशन्ति । प्रतिपात्रं प्रोक्षणावृत्तिपक्षस्तु युक्ततरः, प्रोक्षणस्य पात्रसंस्कारत्वात् । प्रतिसंस्कार्यं च संस्कारावृत्तेरवश्यत्वादिति । मन्त्रे तु बहुवचनं पूजार्थम् । पात्राणि न्युब्जान्यासादनीयानि उत्तानानि कृत्वा त्रिः प्रोक्षतीति सर्वेषु सूत्रान्तरेषु । तत्र सकृन्मन्त्रः द्विस्तूष्णीम् । ततोऽसंचरे प्रणीताहवनीयान्तराले (१.१.१.२१.) गार्हपत्याहवनीयान्तराले वा प्रोक्षणीनां निधानं कर्त्तव्यम् । आपस्तम्बः—प्रोक्षणीशेषमग्रेण गार्हपत्यं निधायेति(१) । अथमप्यसंचरो भवति । "गार्हपत्याहवनीयौ न व्यवेयादि"त्यनयोरन्तराले संचरणप्रतिषेधात् (१.८.२३.) । पवित्रयोः प्रोक्षणीष्वेव निधानम् ॥३॥

इति द्वितीयस्य तृतीया कण्डिका ॥

---

(१) १.१९.३.

शर्माऽसीति कृष्णाजिनादानम् ॥ १ ॥ अपेत्य पात्रेभ्योऽवधूनोत्यवधूतमिति ॥ २ ॥ प्रत्यग्ग्रीवमास्तृणात्यादित्यास्त्वगसीति ॥ ३ ॥ सव्याशून्ये निदधात्युलूखलमद्रिरसि, ग्रावाऽसीति वा ॥४॥ प्रति त्वेत्युभयोः ॥५॥ हविरावपत्यग्नेस्तनूरिति॥६॥ वाचं विसृजते ॥७॥ यजमानश्च ॥८॥ हविष्कृता वा ॥९॥ नानार्बीजेष्वन्त्ये सामर्थ्यात् ॥१०॥ बृहद्ग्रावेति मुसलमादत्ते ॥११॥ सऽ इदमित्यवदधाति ॥१२॥ हविष्कृदेहीति त्रिराह्वयति ॥१३॥ अतः पत्न्यवहन्त्यन्यो वा ॥१४॥ आह्वयत्याहन्त्यन्यो दृष-

[ हविः संस्कारः ]

ततोऽध्वर्युः शर्माऽसीति (१. १४.) मन्त्रेण कृष्णाजिनं हस्तेन गृह्णाति । तत आसादितपात्रेभ्यः परतो गत्वा कृष्णाजिनमवधूनोति अवधूतमिति ( १. १४. ) मन्त्रेण । उदकोपस्पर्शनम् ।

तत उत्तरेण गार्हपत्यमुत्तरदेशे वा प्रत्यग्ग्रीवं कृष्णाजिनमास्तृणाति, अदित्यास्त्वगसीति ( १।१४ ) द्वाभ्यां हस्ताभ्यां विस्तारयति । सव्येन हस्तेनाविमुक्ते कृष्णाजिने दक्षिणेन हस्तेनोलूखलमाहृत्य कृष्णाजिनस्योपरि निदधाति अद्रिरसि वानस्पत्य इत्यनेन मन्त्रेण (१. १४) ग्रावासि पृथुबुध्न इत्यनेन वा । प्रति त्वाऽदित्यास्त्वग्वेत्त्वित्युभयोर्मन्त्रयोः शेषः कार्यः ।

ततः शूर्प पृथक् स्थापितं हविर्द्रव्यं मिश्रीकृत्य सव्येनाविमुक्तोलूखलमध्ये अग्नेस्तनूरिति ( १०।१५ )मन्त्रेण शूर्पेणैव हविरावपति । ततोऽध्वर्युयजमानयोर्वाग्विसर्गः ।

ततोऽध्वर्युर्बृहद्ग्रावेति ( १. १५ ) मुसलं हस्तेन गृह्णाति । स इदं देवेभ्य इत्युलूखलमध्ये ( १. १५ ) मुसलं प्रवेशयति ।

ततः स्वयमेव कण्डने प्रवृत्तः कण्डनं कुर्वन्नेव हविष्कृदेहीति ( १।१५ ) त्रिर्हविःकण्डनकर्त्रीं पत्नीं हविषः कण्डनार्थमाह्वयति । अत्र वाऽध्वर्युयजमानयोर्वाग्विसर्गः ।

यस्मिन्कालेऽध्वर्युर्हविष्कृदेहीत्याह्वयति तस्मिन्नेव काले सहैवाग्नीध्रः कुक्कुटोऽसीति (१. १६) मन्त्रेण शम्यया त्रिर्दृषदं कुट्टयति । मन्त्रावृत्तिः । उपलां शम्यया एकवारं कुट्टयति अनेनैव मन्त्रेण । तदनन्तरं पत्नी वा आग्नीध्रो वा कण्डनं करोति । कण्डनं तूत्थाय कर्त्तव्यम् । "हविष्कृदुपोत्ति-

दुपले कुक्कुटोऽसीति त्रिः शम्यया, द्विर्दृषदं सकृदुपलाम् ॥१५॥ वर्षवृद्धमसीति शूर्पमादत्ते ॥१६॥ प्रति त्वेति हविरुद्वपति ॥१७॥ परापूतमिति निष्पुनाति ॥१८॥ अपहतमिति तुषान्निरस्यति ॥१९॥ वायुर्व इति विविनक्ति ॥२०॥ देवो व इति पात्र्यामोप्याभिमन्त्रयते ॥२१॥ त्रिः फलीकरोति देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वमित्येके ॥२२॥ फलीकृत्य कणान्निदधाति ॥२३॥ पेषणोपधाने युगपत् ॥२४॥ धृष्टिरसीत्युपवेषमादायापाग्न इत्यङ्गारान्प्राचः करोति ॥२५॥ आ देवयजमित्यङ्गारमाहृत्य

हर्ताऽऽति वचनात्(१)।

वितुषीभूतेषु व्रीहिषु अध्वर्युर्वर्षवृद्धमिति (१. १६.) मन्त्रेण हस्तेन शूर्पं गृह्णाति। ततः प्रति त्वा वर्षवृद्धमिति (१.१६) मन्त्रेण कण्डितं हविरुलुखलमध्यादुद्धृत्य निष्काश्य तूष्णीं शूर्पं निदधाति। ततः परापूतमिति (१. १६) मन्त्रेण शूर्पेण निष्पुनाति तुषान् पृथक्करोति। ततोऽप उपस्पृश्य वायुर्व इति (१. १६) मन्त्रेण तण्डुलान् कण्डितांश्च विविनक्ति पृथक् पृथक्करोति। ततः कण्डितान् निधाय अकण्डितान्पुनरुलुखलमध्ये प्रक्षिप्य कण्डनं कृत्वा पुनर्निष्काश्य शूर्पे कृत्वा तुषान् पृथक्कुर्यात्। ततः सर्वांस्तुषानपहतमिति (१. १६) मन्त्रेणोत्करदेशे निरस्यति।

अत्र शाखान्तरेषु पुरोडाशकपालेनाधः कृष्णाजिनमिति कणवन्निरसनमुक्तमस्ति।

तुषनिरसनानन्तरमुदकस्पर्शनम्। ततः शूर्पस्थांस्तण्डुलान्पात्र्यां प्रक्षिप्य देवो वः सवितेत्यभिमन्त्रयते (१. १६)। तण्डुलाननामिकाग्रेण स्पृशन्विलोकयन्वा मन्त्रं पठतीत्यर्थः। तथा चोक्तं कात्यायनेन (३. १. १९)—

"स्पृशंस्त्वनामिकाग्रेण क्वचिद्विलोकयन्नपि।

अनुमन्त्रणीयं सर्वत्र सदैवमनुमन्त्रयेदिति"॥

ततस्त्रिः फलीकरोति त्रिः कण्डनेन सूक्ष्मकणिकाभ्यां वियोज्योज्वलान् करोतीत्यर्थः। तच्चैवं पूर्वं हविरुलुखलमध्ये न्युप्य कण्डनं कृत्वा निष्काश्य शूर्पेण निष्पूय कणान् निदधाति। एवमेव वारत्रयम्। प्रतिफलीकरणं च कणनिधानं कर्त्तव्यम्।

(१) श. ब्रा. १. १. ४. १३.

कपालेनावच्छादयति ध्रुवमसीति ॥२६॥ अमुष्येति द्विषच्छब्दे ऽभिचरन् ॥२७॥ अन्यत्रापि ॥ २८ ॥ सव्याङ्गुल्याऽशून्येऽङ्गारं निदधात्यग्न ब्रह्मेति ॥२९॥ धरुणामिति पश्चात् ॥३०॥ पुरस्ताद्धर्त्रमिति ॥३१॥ विश्वाभ्य इति दक्षिणतः ॥३२॥ समं विभज्य द्वे दक्षिणत एवमुत्तरत श्चित स्थेति ॥३३॥ तूष्णीं वा ॥३४॥ एवमेकादशाग्नीषो-

---

ततः पेषणोपधाने सह भवतः। तत्र विरोधादध्वर्युः पेषणं करोति, अग्नीध्र कपालोपधानम्। तत्र सूत्रक्रमेण प्रथमं कपालोपधानमुच्यते—तत्राग्नीत्प्रथमं कपालानि प्रक्षालयति। तैत्तिरिसूत्रे—

"अथैतानि कपालानि प्रक्षालितानि जघनेन गार्हपत्यमुपसादयत्यष्टौ दक्षिणत एकादशोत्तरतो गार्हपत्यमुपविश्य धृष्टिमादत्ते धृष्टिरसीति।" अतो गार्हपत्यस्य पश्चादुपविश्य कपालोपधानं कार्यं वचनात्। तत्र धृष्टिरसीत्यमनोपवर्यं (१. १७.) हस्तेन गृह्णाति। ततोऽपाग्नेऽ अग्निमिति (१. १७) मन्त्रेणापवर्येण श्रपणस्याङ्गारान्स्वस्थानात्प्राच्यां प्रेरयति खरमध्य एव। यथाऽङ्गारस्थानेऽतितप्तभूमौ कपालान्युपधीयन्ते। तत आ देवयजमित्युपवेषेणैव (१. १७) प्राक्प्रेरिताङ्गारमध्यात् एकमङ्गारं गार्हपत्यखरस्य पश्चाद्भागे दक्षिणपुरोडाशस्थानस्य मध्ये आनयति। ततो ध्रुवमसीत्यनेन (१. १७) मन्त्रेण तस्यानीतस्याङ्गारस्योपयुक्तानं मध्यमं कपालमुपदधाति। तत्राभिचारं कुर्वन् भ्रातृव्यस्य वधायेत्यत्र भ्रातृव्यस्येति पदस्य स्थाने अमुकस्य वधायेति शत्रोर्नाम गृह्णीयात्। तदा चोदकोपस्पर्शनम्। अभिचारबुध्यभावे उदकोपस्पर्शनाभावः। मन्त्रस्यानभिचरणिकत्वात्। ततः सव्यहस्तस्याङ्गुल्या अशून्ये स्पृष्टे मध्यमकपाले एकमङ्गारं निदधाति अग्ने ब्रह्मेति (१. १८) मन्त्रेण। ततो धरुणमसीति (१. १८) मन्त्रेण मध्यमकपालस्य पश्चाद् द्वितीयं कपालमुपदधाति। ततो मध्यमकपालस्य पुरस्तात्तृतीयं कपालमुपदधाति धर्त्रमसीति (१. १८.) मन्त्रेण। ततो विश्वाभ्यस्त्वाऽऽशाभ्य इति (१. १८) मन्त्रेण मध्यमकपालस्य दक्षिणतश्चतुर्थं कपालमुपदधाति। ततश्चितस्थेति (१. १८) चतुर्थात्पूर्वं पञ्चमं कपालमुपदधाति। चतुर्थादपरं षष्ठम्। उत्तरतो द्वे प्राक्संस्थे। पञ्चमप्रभृतीनां सर्वेषां चित स्थेत्युपधानमन्त्रः। तूष्णीं वा पञ्चमादीनामुपधानं न चित स्थेति।

मीयस्य ॥३५॥ अधिकं दक्षिणतः ॥ ३६ ॥ भृगूणामित्यङ्गारैरभ्यूहति ॥ ३७ ॥ ४ ॥

उपसर्जनीरधिश्रयति ॥१॥ कृष्णाजिनमादत्ते पूर्ववत्प्रतिकृष्णाजिनम् ॥ २ ॥ तस्मिन्दृषदं धिषणाऽसीति ॥३॥ पश्चाच्छम्यामुपोहत्युदीचीं दिव इति ॥४॥ दृषदु-

| | | | | | | |
|---|---|---|---|---|---|---|
| चित ११ | धर्त्रमसि ३ | ५ चित<br>६ चित | | चित ८ | धर्त्रम ३ | चितस्थ५ |
| १० चित | ध्रुवम् १ | चित ४ | | | १ ध्रुवम | विश्वा०४ |
| ६ चित | धरुण २ | चित ७<br>चित ८ | | चित ७ | धरुण २ | चित ६ |

एवमेकादश कपालान्यग्नेषामीयस्योपदधाति तैरेव मन्त्रैः। अत्रैवं पूर्वं मध्यममुपदधाति, ततः पश्चाद् द्वितीयं, ततः पुरस्तात्तृतीयं, मध्यमाद्दक्षिणतश्चतुर्थं, चतुर्थात्पूर्वमकस्य कपालस्यान्तरालं परिशिष्य पञ्चमम्, चतुर्थपञ्चमयोरन्तराले षष्ठं, चतुर्थस्य पश्चात्सप्तमं, तस्य पश्चादष्टमं, सर्वस्य उत्तरतो नवमदशमैकादशानि प्राक्संस्थानि। ततो भृगूणामित्यनेन ( १. १८. ) ज्वलद्भिरङ्गारैः सर्वाणि कपान्याच्छादयति। प्रतिचिति मन्त्रपाठः ॥ ४ ॥

इति द्वितीयस्य चतुर्थी कण्डिका ॥ ४ ॥

ततस्तदैवोपसर्जनीरग्नावेव गार्हपत्येऽधिश्रयति। पिष्टसंयवनार्था आप उपसर्जनीशब्देनोच्यन्ते।

अथ पेषणमुच्यते—तत्राध्वर्युः शर्माऽसीति (१. १९) कृष्णाजिनमादायावधूतमिति ( १. १९ ) पूर्ववदवधूनोति। ततोऽप उपस्पृश्य प्रत्यग्ग्रीवमदित्या इत्यास्तीर्य ( १. १२. ) सव्यहस्तेनाविमुक्ते कृष्णाजिने दक्षिणेन हस्तेन प्रागग्रां दृषदं कृष्णाजिनस्योपरि निदधाति धिषणाऽसीति (१.१९)। ततो दिव स्कम्भनीरिति (१. १९.) दृषदः पश्चाद्भागे अधस्तादुदगग्रां शम्यां प्रेरयति यथा दृषदः प्राचीनप्रवणता जायते। ततो धिषणाऽसि पार्वतेयोत्यु-

पलां धिषणाऽसीति ॥ ५ ॥ धान्यमसीति तण्डुलानोप्य पिनष्टि प्राणाय त्वेति प्रतिमन्त्रम् ॥ ६ ॥ दीर्घामिति कृष्णाजिने प्रोहति ॥ ७॥ चक्षुषे त्वेतीक्षते ॥ ८ ॥ पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यम् ॥९॥ पात्र्याᳬ सपवित्रायां पिष्टान्यावपति देवस्य त्वेति ॥१०॥ श्रपणस्य पश्चादुपविशत्यन्तर्वेदि वा ॥११॥ उपसर्जनीरानयत्यन्यः ॥ १२ ॥ पवित्राभ्यां प्रतिगृह्णाति समाप

---

पलां ( १. १९ ) दृषदुपर्युदगग्रामुपदधाति । ततो धान्यमसीति (१. २०) दृषदि तण्डुलानोप्य प्राणाय त्वेति (१. २०) प्रतिमन्त्रं पिनष्टि । पिष्यमाणेषु तण्डुलेषु कपालेषु च भृगूणामिति ( १. १८ ) ताप्यमानेषु यजमानो महीनामिति ( १. २० ) पात्रान्तरादाज्यमाज्यस्थाल्यां प्रक्षिपति ।

ततो वेदोऽसीति ( २. २१ ) मन्त्रेण वेदं करोति । तत्र पशुकामो यजमानः कुशमुष्टिं प्रदक्षिणावृत्त्या वत्सजानुसदृशं प्रादेशमात्रं वेदं करोति । ब्रह्मवर्चसकामस्त्रिवृतं त्रिगुणम् , अन्नाद्यकामो मूताकरम् ।

काठके—"वेदं करोति दर्भमुष्टिं प्रसव्यमावेष्ट्योपभुज्याग्राणां शुल्बं कृत्वा त्रिः परिहृत्य गुणेषु शुल्बान्तमवकृष्यायम्य शुल्बं प्रादेशे छित्त्वाऽऽग्नीध्रे निधायोत्करे मूलानी"ति । वत्सजानुर्वत्सजानुतुल्यः। मूतकार्यो मूतवत्क्रियते । मूतः तृणवर्त्यादिनिर्मितं धान्यावपनपात्रम् । कामाभावेऽप्येत एव वेदस्याकारा भवन्ति निष्कामस्याकारान्तरानुपदेशादिति धूर्तस्वामिनः ।

ततोऽध्वर्युर्दीर्घामनु प्रसितिमिति (१. २०) दृषद उपरि वर्त्तमानानि पिष्टान्युपलयैव कृष्णाजिने प्रोहति प्रेरणयाऽधः पातयति । ततश्चक्षुषे त्वेति(१. २०) कृष्णाजिने पतितानि विलोकयति । ततः पवित्रे पात्र्यां कृत्वा कृष्णाजिनात्पिष्टान्यादाय सवित्रायां पात्र्यामावपति । कृष्णाजिनमुत्थाप्य तेनैवावपेदिति हरिस्वामिनः । देवस्य त्वेति ( १. २१ ) संवपामीत्यन्तेन मन्त्रेणावापः । तत उत्थाय गार्हपत्यस्य पश्चादुपविशति वेदिमध्ये वा ।

तत आग्नीध्रः स्फ्यं सव्ये गृहीत्वोपसर्जनीरुद्धास्याध्वर्योर्दक्षिणेनानीय पिष्टानामुपरि धृतस्य सपवित्रस्याध्वर्योर्हस्तस्योपरि निनयति । ततोऽध्वर्युराग्नीध्रा निनीयमाना उपसर्जनीर्दक्षिणहस्तधृताभ्यां पवित्राभ्यां प्रतिगृह्णाति समाप ओषधीभिरिति । आग्नीध्रा च तथा नीयमानं कार्यं यथा-

इति ॥ १३ ॥ संयौति जनयत्यै त्वेति ॥ १४ ॥ समं विभज्यामहरिष्यन्नालभत इदमग्नेरिदमग्नीषोमयोरिति ॥ १५ ॥ यथादेवतमन्यत् ॥ १६ ॥ इषे त्वेत्याज्यमधिश्रयत्यन्यः ॥ १७ ॥ अपत्नीकस्याहननीये तच्छ्रापिणः ॥१८॥ घर्मोऽसीति पुरोडाशौ युगपत् ॥ १९ ॥ उरुप्रथा इति प्रथयति यावत्कपालमनतिपृथुम् ॥ २० ॥

---

ऽध्वर्योर्मन्त्रान्ते ग्रहणं संपद्यते । ततो जनयत्यै त्वेति ( १. २२ ) मन्त्रेणोदकं पिष्टानि च संयौति मिश्रयति । समं विभज्य द्वौ पिण्डौ कृत्वा पात्र्यामुदकसंस्थौ निधाय क्रमेणालभते-इदमग्नेरिति ( १२२ ) प्रथमम् , इदमग्नीषोमयोरिति ( १२२ ) द्वितीयम् । ततोऽग्नीध्रेदं सव्यहस्ते गृहीत्वा इषे त्वेति (१।२२) मन्त्रेण दक्षिणत आज्यमधिश्रयति अग्नेरुपर्याज्यस्थालीं निदधातीत्यर्थः ।

अध्वर्युः सहैवाष्टसु कपालेषु प्रथमं पुरोडाशमधिश्रयति घर्मोऽसीति (१।२२) स्फ्योपग्रहेण । तत एकादशसु कपालेषु द्वितीयं पुरोडाशमधिश्रयति घर्मोऽसीति । तत उरुप्रथा इति (१२२) मन्त्रेण यावत्कपालं पुरोडाशं प्रथयति । "अतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृति"मित्यापस्तम्बः(१) । अतिपृथुं न करोति । एवमेव द्वितीयमपि पुरोडाशं प्रथयति ।

ततोऽग्निष्टे त्वचमिति ( १।२२ ) मन्त्रेण पुरोडाशमद्भिरभिमृशति सकृद्वा त्रिर्वा । त्रिःपक्षेपि मन्त्रः सकृदेव । एवं द्वितीयमपि अद्भिरभिमृशति श्लक्ष्णयति । प्रथने क्रियमाणे यत्र क्वचन दीर्णं भवति तं सन्दधातीत्यर्थः ।

ततः पात्र्या अङ्गुलीनां च प्रक्षालनम् । ततो गार्हपत्यादङ्गारमादायान्तरितꣳ रक्ष इति मन्त्रेण पर्यग्निकरणं करोति आज्यस्थालीं पुरोडाशान्पत्नितः प्रदक्षिणमङ्गारं परिहरतीत्यर्थः । ततोऽङ्गारं गार्हपत्ये प्रक्षिप्य हस्तस्याप्रदक्षिणयेनानयनम् । तत उदकस्पर्शः ।

ततो देवस्त्वेति (१२२) मन्त्रेण ज्वलद्भिर्दर्भतृणैः प्रथमं पुरोडाशं श्रपयति, एवमेव द्वितीयम् । "दर्भैरभिज्वलयति ज्वालैर्वे"त्यापस्तम्ब(२) ।

ततः शृताशृतज्ञानाय माभेर्मा संविक्था इति ( १. २३ ) मन्त्रेण द्वौ पुरोडाशावालभते । अशृतौ चेत्पुनः श्रपणप्रक्षेपः । शृतौ चेदुत्तमेहरिति

---

(१) १. २५. ४ (२) १. २५. ९

**अग्निष्ट इत्यद्भिरभिमृशति सकृत्त्रिर्वा ॥ २१ ॥ पर्यग्निकरोत्यन्तरितꣳ रक्षोऽन्तरिता अरातय इति सहाज्यम् ॥२२॥देवस्त्वेति श्रपणम् ॥२३॥ मा भेरित्यालभते ॥२४॥ अतमेरुरिति शृतावभिवासयति भस्मना वेदेनोपवेषेण वा ॥२५॥ पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयत्यभितप्य प्रत्यगसꣳस्यन्दमानं त्रिताय त्वेति प्रतिमन्त्रम् ॥२६॥ अन्वाहार्यं दक्षिणाग्नावधिश्रयति ॥२७॥ अत्र वा व्रतोपायनम् ॥ २८ ॥ ५ ॥**

( १. २३ ) वेदेनोपवेषेण वा तमनरेणाङ्गारमिश्रेण भस्मनाऽऽच्छादयति । ततः पात्र्यङ्गुलिप्रक्षालनजलं पात्रीस्थमेव गार्हपत्यादीप्तैस्तृणैरुल्मुकैर्वाद्भिस्तापयित्वा विहारस्योत्तरतः स्फ्येन तिस्रो लेखाः प्राक्संस्थाः कृत्वा तासु लेखासु प्रत्यक्सस्थं परस्परं संसर्गमप्राप्नुवन् त्रिताय त्वेति (१. २३) प्रतिमन्त्रं निनयति । इदं त्रितायाप्त्याय, इदं द्वितायाप्त्याय, इदमेकतायाप्त्यायेति त्रयस्त्यागाः । तथा च स्मृतिः—

"आदौ द्रव्यपरित्यागः पश्चाद्धोमो विधीयते ।
प्रयोग इदमिन्द्राय नममेति यथार्थतः ॥
अदत्तं तु त्यजेदन्नं मनसा वचसाऽपि च ।
ततश्च प्रतिपेदग्नाविति धर्मः सनातनः ॥
अत्यक्त्वा जुहुयाद्यस्तु मोहेनान्वितमानसः ।
देवा हव्यं न गृह्णन्ति कव्यञ्च पितरस्तथा ॥
यत्किञ्चिज्जुहुयादग्नौ तत्सर्वं त्यागपूर्वकम् ।
अन्यथा जुहुयाद्यस्तु नरकं स तु गच्छति" इति ॥

सर्वत्र त्यागादौ ॐकारप्रयोगः कार्यः । यागहोमादिष्विति वचनात् । शाट्यायनः—दानयज्ञतपःस्वाध्यायजपध्यानसन्ध्योपासनप्राणायामहोमदैवपित्र्यमन्त्रोच्चारणब्रह्मारम्भादीनि प्रणवमुच्चार्य प्रवर्त्तयेदिति ।

दाल्भ्यपरिशिष्टे च—

"ब्रह्मयज्ञो जपो होमो देवर्षिपितृकर्म च ।
अनोङ्कृत्य कृतं सर्वं न भवेत्सिद्धिकारकमिति" ॥

ततोऽन्वाहार्यं दक्षिणार्थमोदनं चतुर्णामृत्विजां तृप्तिपर्यन्तभोजनसमर्थं दक्षिणाग्नावधिश्रयति श्रपणार्थम् । अत्रावसरे वा व्रतग्रहणम् ॥ ५ ॥

इति द्वितीयस्य पञ्चमी कण्डिका ॥ ५ ॥

अपरेणाहवनीयं वेदिं खनति त्र्यङ्गुलखातां व्याममात्रीं पश्चात् त्र्यरत्निं प्राचीमपरिमितां वा प्राक्प्रवणामुदग्वा मध्यसङ्गृहीतामग्निमभितोऽंसौ ॥१॥ आमूलोच्छेदनादोषधीनाम्॥२॥ओषधीनां मूलान्युच्छेत्तवै ब्रूयात् ॥३॥ आहार्यपुरीषां पशुकामस्य ॥४॥ वेदिं परिसमुह्य वितृतीयेऽग्नीदुत्तरत उत्करं करोति ॥ ५ ॥ देवस्य त्वेति

ततो वेदिमानम्—प्रथमं पश्चात्तिर्यक् व्याममात्रीं मिमीते । चतुर्भिररत्निभिर्व्यामो भवति । ततो मध्ये त्र्यरत्निं प्राचीं मिमीते— "पुनः पुरस्तादुर्वी"ति(१) वचनात् । वरुणप्रघासेषु "त्रयः पुरस्ता"दिति(२) पुरस्तान्माने त्र्यरत्निदर्शनाच्च । ततः श्रोणेरारभ्य दक्षिणत उत्तरतश्च वेदिं मध्यसंगृहीतां कुर्यात् । ततोऽग्निमभितोऽंसौ च कुर्यात् । वेदिकरणोपायो लिख्यते—

"षडरत्निर्द्विपाशा च मध्ये पञ्चसु लक्षिता ।
द्विहस्तेऽङ्गुलषट्के च त्रिष्वष्टादशकेषु च ॥
सार्द्धहस्ते च पाशः स्याद्वेदिः स्यात्पौर्णमासिकी ।
आनीय रज्जुं पूर्वार्द्धात्पश्चार्द्धं यावदेव तु ॥
द्विगुणीकृत्य तां रज्जुमन्ते तस्यास्तु शङ्कुकौ ।
भ्रामयेत्तेन मानेन तया रज्वाऽष्टभागया ॥
वा पृथुस्वतुरीयेण भागेनालिख्य संग्रहौ" इति ।

अथवा—

"वेदिश्रोण्यंसयोर्मध्ये तया रज्वाऽष्टभागया ॥
विलिखेन्मध्यतो वेदौ स ज्ञेयो मध्यसंग्रह" इति ।

ततोऽग्नीद्वेदेः परिसमूहनं कृत्वा गार्हपत्याहवनीययोरन्तरालस्योत्तर पूर्ववितृतीये उत्करं तृणधूल्यादिराशिं करोति । तच्च गार्हपत्याहवनीययोरन्तरं षड्धा सप्तधा वाऽऽगन्तुसमं त्रेधा विभज्य पूर्ववितृतीयलक्षणेनोत्तरत आयम्य तत्रोत्करं कुर्यात् "विपर्यस्योत्तरत उत्कर" इति वचनात्(३) ।

प्रकारान्तरं चोक्तम्-"अपिवाऽन्तरत्रिभागोनया रज्वा पूर्वार्द्धं समचतुरश्रं कृत्वा तस्य चतुरश्रस्योत्तरांस उत्करो भवति "विपर्यस्योत्तरांस

(१) १. २. ९. १६ (२) का. श्रौ. ५.३. १३.
(३) कात्या. शुल्ब. प. १. २७

स्फ्यमादाय सतृणं सव्ये कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरिति ॥ ६ ॥ नोपस्पृशेत्पृथिव्यात्मानौ तेन स्तम्बयजुर्हरिष्यन् ॥ ७ ॥ वेद्यां तृणं निदधात्युदक्पृथिव्यै वर्माऽसीति ॥ ८ ॥ पृथिवि देवयजनीति तृणेऽन्तर्हिते प्रहरति ॥९॥ व्रजं गच्छेति पुरीषमादत्ते ॥१०॥ वर्षतु त इति वेदिं प्रेक्षते ॥११॥ बधानेत्युत्करे करोति ॥१२॥ प्रहरणशेषो वाऽविशेषोपदेशात् ॥१३॥ अपाररुमिति द्वितीयं प्रहरणादि ॥१४॥ अभिन्यस्यत्यग्नीदुत्करमररो

---

उत्कर" इति वचनात्(१)। वेदिपूर्वापरायामस्यैव पूर्वत्रितृतीये उत्तरत उत्करोभवतीति कर्कः।

ततोऽध्वर्युर्देवस्य त्वा आददेऽध्वरकृतमिति ( १.२४. ) मन्त्रेणाऽऽसादिततृणसहितं स्फ्यमादाय सव्ये हस्ते सतृणं स्फ्यं निधाय दक्षिणेन हस्तेनालभ्येन्द्रस्य बाहुरिति (१. २४.) स्वरेण जपति। अत्र हस्तमार्जनेन स्फ्यस्य तीक्ष्णीकरणं कार्यम्--"सꣳश्यत्येवैनमेत"दिति श्रुतेः(२)। तेन वज्रेण स्तम्बयजुर्हरणादर्वाक् पृथिव्यात्मनोः स्पर्शो न कर्त्तव्यः। अभिचरतो द्विषत इत्यस्य स्थाने अमुष्य वध इति शत्रोर्नाम गृह्णीयात्। तत उदकोपस्पर्शनम्। अभिचाराभावे उदकोपस्पर्शनाभावः।

ततः पृथिव्यै वर्माऽसीति मन्त्रेण तत्तृणमुदगग्रं निदधाति। पृथिवि देवयजनीति (१. २५) मन्त्रेण तृणस्याधस्ताद् भुवि स्फ्येन प्रहरति। ततो व्रजं गच्छेति ( १. २५ ) प्रहरणेनोत्खातं पुरीषं हस्तेन गृह्णाति। ततो वर्षतु त इति ( १. २५ ) मन्त्रेण वेदिप्रहरणदेशे प्रेक्षते। ततो बधान देवेत्यनेन ( १. २५ ) तद् गृहीतं पुरीषमुत्करे प्रक्षिपति। अत्राभिचरतस्तमतो मामौगित्यत्र तमित्यस्य पदस्य स्थानेऽमुकमिति शत्रुनाम गृह्णीयात्। तत उदकोपस्पर्शनम्। अभिचाराभावे उदकोपस्पर्शनाभावः।

ततोऽपाररुमिति ( १. २६ ) मन्त्रेण पूर्वप्रहृतादुत्तरतस्तृणस्याधस्तात् स्फ्येन द्वितीयं प्रहरति। मन्त्रस्याऽऽसुरत्वादुदकस्पर्शः। ततः पूर्ववत्पुरीषादानवेदिप्रेक्षणपुरीषप्रक्षेपणानि।

ततोऽग्नीत् स्फ्यं गृहीत्वा द्वाभ्यां पाणिभ्यामुत्करमभिन्यस्यति पाणिभ्यामधः पीडयतीत्यर्थः। उदकोपस्पर्शनम्।

---

( १ ) कात्या. श्रु. १. २८ ( २ ) १. २. ४. ७

दिवमिति ॥१५॥ द्रप्सस्त इति तृतीयम् ॥१६॥ तूष्णीं चतुर्थं सतृणम् ॥१७॥ पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फ्येन गायत्रेणेति प्रतिमन्त्रम् ॥१८॥ वेद्यां त्रिरुल्लिख्याह हर त्रिरिति ॥१९॥ हृत्वाऽग्नील्लेखाः सम्मृशति ॥२०॥ पितृयज्ञाग्निचित्ययोर्वा तत्र दर्शनात् ॥२१॥ अत्र वेदिकरणं यथोक्तम् ॥२२॥ उत्तरं परिग्रहं परिगृह्णाति सुक्ष्मा स्योनोर्जस्वतीति प्रतिमन्त्रं पूर्ववत् ॥२३॥ पुरा क्रूरस्येत्यनुमार्ष्टि ॥२४॥ अध्यधिवेदि

---

ततो द्रप्सस्त इति (१. २३) मन्त्रेण द्वितीयप्रहृतादुत्तरतस्तृणस्याधस्तात्तृतीयं प्रहरति । अत्रापि पुरीषादानवेदिप्रेक्षणपुरीषनिरसनानि पूर्ववत् । ततस्तृतीयप्रहृतादुत्तरतस्तृणस्याधस्तात्तूष्णीं चतुर्थं प्रहरति । तूष्णीमेव सतृणपुरीषादानम् । तूष्णीमेवोत्खातप्रदेशप्रेक्षणम् । सतृणस्य पुरीषस्योत्करे प्रक्षेपस्तूष्णीमेव ।

ततो ब्रह्मन्पूर्वं परिग्रहं परिगृहीष्यामीति ब्रह्माणं पृच्छति । ततो ब्रह्मा बृहस्पते परि गृहाणेतीमं मन्त्रं प्रहीत्यन्तमुपांशु पठित्वा ॐ परि गृहाणेत्युच्चैरध्वर्युमनुजानाति । ततोऽनुज्ञातोऽध्वर्युः स्फ्येन श्रोणेरारभ्य दक्षिणतो गायत्रेण त्वेति । (१. २७) वेदिं परि गृह्णाति आहवनीयखरपर्यन्तां रेखां करोतीत्यर्थः । त्रैष्टुभेनेति (१. २७) दक्षिणश्रोणेरारभ्योत्तरश्रोणिं यावत् परिगृह्णाति । ततो जागतेनेत्यनेनोत्तरश्रोणेरारभ्योत्तरपार्श्वे परिगृह्णाति आहवनीयखरं यावत् ।

ततो वेद्यां प्रागग्रता उदक्संस्थास्तिस्रो लेखास्तूष्णीं स्फ्येन लिखित्वा हर त्रिरित्याग्नीध्रं प्रति ब्रूयात् । ततोऽग्नीत्ताभ्यो लेखाभ्यः पांसूनुद्धृत्योत्करे प्रक्षिप्य ता लेखाः संमृशेत् मार्जनेन स्फोटयेत् ।

ततोऽभ्रिमादाय प्रदक्षिणां सर्वतो वेदिं खनति त्र्यङ्गुलम् । ओषधिमूलोच्छेदनपर्यन्तं वा । अस्मिन्पक्षे ओषधीनां मूलान्युच्छेत्तवा इति प्रैषमध्वर्युराग्नीध्रं प्रति ब्रूयात् । स च प्रेषितो मूलच्छेदनपर्यन्तं खननं करोति ।

ततो ब्रह्मन्नुत्तरं परिग्रहं परिग्रहीष्यामीति ब्रह्माणं पृच्छति । ब्रह्मा च पूर्ववद् बृहस्पते परिगृहाणेति पठित्वा ॐ ३ परिगृहाणेति प्रसौति । ततः पूर्ववत् स्फ्येन दक्षिणपश्चिमोत्तरपार्श्वेषु वेदिं परिगृह्णाति । सुक्ष्मा चासीति (१. २७) दक्षिणतः स्योना चासीति पश्चात् , ऊर्जस्वती-

प्रोक्षणीर्धारयति ॥२५॥ अन्योऽथ स्फ्यमुद्यम्याह प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः संमृड्ढि पत्नीꣳ सन्नह्याज्येनोदेहीति यदीच्छेत् ॥२६॥ यथाप्रेषितमन्यः पराधिकारात् ॥२७॥ स्वयं वा ऽविरोधात् ॥२८॥ सम्प्रैषावचनाच्च ॥२९॥ प्राक्स्तरणाद्वेदिं नावमृशेत् ॥३०॥ शृतानि च हवीꣳष्याप्रचरणात् ॥३१॥ अङ्गुष्ठाङ्गुलिभ्यां माꣳससꣳहिताभ्यामवद्यन्त्येके ॥३२॥ आपन्नꣳ स्तृणन् निरस्येत् ॥३३॥ द्विषतो वध इति स्फ्यमुदञ्चं प्रहराति ॥३४॥ अवनिज्य पाणी अपरेण प्रणीता स्फ्यं निदधाति ॥३५॥ इध्माबर्हिश्च ॥३६॥ पूर्वमिध्मम् ॥३७॥

---

त्युत्तरतः ।

ततः स्फ्येन दक्षिणां दिशं प्रति वेदिपुरीषमुदुह्य पुरा क्रूरस्येति (१.२८) मन्त्रेणानुमार्ष्टि प्रत्यक्संस्थम् , पुरस्तादारभ्य प्रतीचीं दिशं प्रति पुरा क्रूरस्येति अनुमार्ष्टि । शाखान्तरसूत्रेषु सर्वेषु प्रत्यक्संस्थमेवानुमार्जनमुक्तमस्तीति तथैवानुष्ठेयम् । स्वशाखायां विशेषानुपदेशात् । अनुमार्जनं चात्र खननेन विषमस्य समीकरणम् । पशुकामस्य यजमानस्य प्रागनुमार्जनाद्वेदिपुरीषं निष्काश्योत्करे प्रक्षिप्यान्यत्पुरीषमानीय वेदेः पूरणं, ततोऽनुमार्जनेन समीकरणम् ।

ततोऽग्नीत्प्रोक्षणीर्गृहीत्वा वेदेरुपरिष्टात् समीप एव धारयति । ततो-धार्यमाणासु प्रोक्षणीष्वध्वर्युः स्फ्यमुद्यम्य सर्वं प्रैषजातमाह-'प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः संमृड्ढि पत्नीꣳ सन्नह्याज्येनोदेही'ति । अनेकपत्नीकेऽपि पत्नीशब्दस्य नोहः । यदि प्रेषणेच्छा भवति तदा प्रेषणं कुर्यात् । यदि नेच्छेत्तदा अप्रेषितोऽप्याग्नीध्र एव कुक्कुटाहननादिवत् प्रोक्षण्यासादनादि पदार्थान्कुर्यात् इति हरिस्वामिनः । अप्रैषपक्षेऽध्वर्युः पदार्थान्करोतीत्यपरे ।

ततो द्विषतो वध इति ( १. २८ ) मन्त्रेण स्फ्यमुदगग्रमुत्करे प्रक्षिपति । अभिचरतोऽमुष्मै त्वा वज्रं प्रहरामीति विशेषः । अमुष्मै इत्यत्र शत्रोश्चतुर्थ्येकवचनान्तं नामग्रहणम् । ततोऽपामुपस्पर्शनम् । अभिचाराभावे उदकस्पर्शाभावः ।

ततोऽध्वर्युः स्फ्यं गृहीत्वोत्करे पाणी प्रक्षाल्य प्रणीतानां पश्चात् प्रा-

**प्रणीतादक्षिणेन वाऽऽहृत्य ॥३८॥ स्रुवं प्रतप्य पूर्ववद्वेदा- ग्रैरन्तरतः प्राक्संमाष्टर्यनिशित इति, विपर्यस्य बहिर्मू- लैः प्राङुत्क्रम्य ॥३९॥ प्रतप्य प्रतप्य प्रयच्छति ॥४०॥ अ- निशितेति स्रुचः ॥४१॥ तूष्णीं प्राशित्रहरणं शृताव- दानं पात्रीं च ॥४२॥ सम्मार्जनान्यपास्यति ॥४३॥ आ- हवनीये प्रासनमेके ॥४४॥६॥**

---

गग्रमुदगग्रं वा स्फ्यं निदधाति ।

ततोऽग्नीद्वेदिमध्ये उदगग्रामग्निहोत्रहवणीमासाद्य प्रणीतानां पश्चा- त्स्फ्यस्योत्तरतः प्रागग्रमिध्ममासाद्येध्मादुत्तरतो बर्हिः प्रागग्रमासाद- यति । अथवा इध्मं प्रणीतादक्षिणेन प्रदक्षिणमाहृत्य प्रणीतानां पश्चादेव प्रथममासादयति, ततो बर्हिः ।

तत आग्नीध्रः खादिरं स्रुवमादाय प्रत्युष्टमिति (१. २९) वा निष्टप्तमिति वा मन्त्रेण गार्हपत्ये प्रतप्याप उपस्पृश्याग्निसमीपात्प्राच्यां गत्वा वेदा- ग्रैरन्तरतः प्राञ्चं संमार्ष्टि मूलादारभ्याग्रपर्यन्तम् अनिशितोऽसीति (१.२९) मन्त्रेण । ततो वेदमूलैर्बहिःप्रदेशे स्रुक् पुष्करस्य बुध्नादारभ्य मूलपर्यन्तं प्रत्यञ्चं च संमार्ष्टि अनेनैव मन्त्रेण । ततोऽग्निसमीपे गत्वा पूर्ववत् प्रतप्या- पउपस्पृश्याध्वर्यवे समर्पयति । ततो जुहूमादाय प्राङुत्क्रम्याऽनिशिताऽसीति स्रुववदन्तरतो बाह्यतश्च मन्त्रेण संमृज्य पूर्ववत्प्रतप्याप उपस्पृश्याध्वर्यवे प्रयच्छति । एवमेवोपभृतं ध्रुवां च संमृज्य प्रतप्य प्रयच्छति । ततस्तूष्णीं प्राशित्रहरणं शृतावदानं पुरोडाशपात्रीं च प्रत्येकं प्राङुत्क्रम्य तूष्णीमन्त- र्बहिश्च संमृज्याग्निसमीपमागत्य तूष्णीं प्रतप्याध्वर्यवे समर्पयति । तत्र रक्षोदेवतमन्त्रोच्चारणाभावादुदकस्पर्शाभावः । ततः संमार्जनान्यपास्यति अपक्षिपत्युत्करे, प्रदेशान्तराविधानाल्लिङ्गाच्च–"उत्करो वा अतिरिक्तस्य प्रतिष्ठे"ति । उत्करे प्रक्षिपत्याहवनीये वा । "उत्ताना धारयमाणः स्रुचः संमार्ष्टि । न संमृष्टान्यसंमृष्टैः स्पर्शयति । प्रतप्याग्रेणोत्तरं दर्भेषु सादयति जघनेन वा । यथास्थानमुत्तानाः स्रुचः सादयतीति" शाखान्त- रीया अत्र विशेषाः । इडापात्रीषडवत्तयोस्तु न संमार्गः, क्वचिदपि सूत्रेऽदर्शनात् । पुरोडाशपात्री च द्वयोः पुरोडाशयोः साधारणी एकैव भवति, पात्रीमित्येकवचनात् ॥ ६ ॥

इति द्वितीयस्य षष्ठी कण्डिका ॥ ६ ॥

**पत्नीᳫं सन्नह्यति प्रत्यग्दक्षिणत उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता, परिहरत्यधीवासोऽदित्यै रास्नेति ॥१॥ दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति विष्णोर्वेष्प इति ॥२॥ न ग्रन्थिं करोति ॥३॥ ऊर्जे त्वेत्याज्यमुद्वास्य पत्नीमवेक्षयत्यदब्धेनेति ॥४॥ वेद्यां करोत्यपरं प्रोक्षणीभ्यः ॥५॥ आहवनीये वा कृत्वा तच्छ्रापिणः ॥६॥ सवितुस्त्वेत्याज्यमुत्पुनाति प्रोक्षणीश्च पूर्ववत् ॥७॥ आज्यमवेक्षते तेजोऽसीति यजमानो वा ॥८॥ स्रुवेणाज्यग्रहणं चतुर्जुह्वां धाम नामेति सकृन्मन्त्रः ॥९॥ अष्टावुपभृत्यल्पीयोऽनुयाजाश्चेत् ॥१०॥ चतुरन्यत्र प्रतिविभागात् ॥११॥ पश्वातिथ्यादर्शनाच्च ॥१२॥ न कृ-**

---

ततः पत्नीसंनहनम् । तत्राग्नीत् योक्त्रमादाय गार्हपत्यात् नैर्ऋत्यां दिशीशानाभिमुखीमूर्द्धज्ञुमुपविष्टां पत्नीं परिधानवस्त्रादूर्ध्वाहिर्योक्त्रेण प्रदक्षिणं वेष्टयति अदित्यै रास्नाऽसीति ( १. ३० ) मन्त्रेण । ततो दक्षिणं पाशमुत्तरे शङ्कुस्थानीये प्रतिमुच्य सामर्थ्याद्द्विर्वेष्टयित्वा योक्त्रस्यान्तरूर्ध्वमुद्गूहति विष्णोर्वेष्पोऽसीति ( १. ३० ) मन्त्रेण । ग्रन्थिं न करोति ।

ततो वेदोपग्रहेणोर्जे त्वेत्याज्यस्थालीमुत्तरत ( १. ३० ) उद्वास्य पत्न्या अग्रे निधाय पत्न्याज्यमवेक्षस्वेति वक्ति । सा पत्नी अदब्धेनेति (१.३०) मन्त्रेणाज्यमवेक्षते । अनेकासु पत्नीषु सर्वासां योक्त्रबन्धनम् , पत्नीसंस्कारत्वात् । आज्यावेक्षणमपि सर्वासाम् । "अथ यत्पत्नीं नावकाशयेदन्तरियाद्ध यज्ञात्पत्नीमि"त्यनेनावेक्षणे निन्दार्थवाददर्शनात् । एकस्या एवेत्यपरे, आज्यसंस्कारत्वात् ।

ततोऽग्नीत्पत्न्या अग्रत आज्यं गृहीत्वा वेदिमध्ये प्रोक्षणीभ्योऽपरं सादयत्युपविश्य । ततोऽध्वर्युर्वेदं गृहीत्वा प्रोक्षणीभ्यः पवित्रे आदाय सवितुस्त्वा प्रसव इत्याज्यमुत्पुनाति (०. ३१) । ततः स्फ्यं गृहीत्वा आज्यलिप्ताभ्यामेव पवित्राभ्यां सवितुर्वः प्रसव इति मन्त्रेण प्रोक्षणीरुत्पुनाति । ततस्तेजोऽसि शुक्रमसीत्यनेन ( १. ३१ ) मन्त्रेणाज्यमवेक्षतेऽध्वर्युर्यजमानो वा वेदोपग्रहेण ।

ततोऽध्वर्युः सव्येन जुहूं वेदं च गृहीत्वा दक्षिणेन स्रुवमादाय तेनाज्यस्थाल्याः सकाशात्तूष्णीमाज्यमादाय जुह्वां निनयति धाम नामासीति

**त्स्नोपदेशात् ॥१३॥ पशवातिथ्ययोर्वचनात् ॥१४॥ ध्रुवायां च जुहूवत् ॥१५॥ इध्मं प्रोक्षति विस्रंस्य, वेदिं च, बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थि कृष्णोऽसीति प्रतिमन्त्रम् ॥१६॥ शेषं मूलेषूपासिञ्चत्यदित्यै व्युन्दनमिति ॥१७॥ पवित्रे निधाय प्रणीतासु बर्हिर्विस्रंस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरिति ॥१८॥ ब्रह्मणे प्रदाय, स-**

---

( १. ३१ ) मन्त्रेण जुह्वां चतुरः स्रुवान् गृह्णाति । तत्र एकवारं मन्त्रः । त्रिस्तूष्णीम् । अथवा त्रिर्मन्त्रः, सकृत्तूष्णीम् । तत उपभृत्यष्टकृत्वो घृतं गृह्णाति । अत्रापि सकृद्धाम नामेति मन्त्रः । सप्तकृत्वस्तूष्णीम् । अथवा त्रिर्मन्त्रः पञ्चकृत्वस्तूष्णीम् । अष्टकृत्वो गृह्णन्नपि जौहवादाज्यादल्पतरं यथा स्यात्तथा गृह्णीयात् । ततो ध्रुवायां चतुराज्यं गृह्णाति । अत्रापि धामनापेति सकृन्मन्त्रेण त्रिस्तूष्णीम् । अथवा त्रिर्मन्त्रेण सकृत्तूष्णीमिति ।

ततो वेदिमध्यादाज्यस्थालीमादाय क्वचित्सुगुप्ते निदधाति ।

तत इध्मं विस्रंस्य ब्रह्मन्निध्मं प्रोक्षिष्यामीति ब्रह्माणं पृच्छति । ततो ब्रह्मा प्रोक्ष यज्ञमित्युक्त्वा प्रोक्षेत्यनुजानाति । ततोऽध्वर्युः प्रोक्षणीरादाय कृष्णोऽस्या खरेष्ठ इतीध्मं ( २. १. ) प्रोक्षणीभिः प्रोक्षति । ततो वेदिरसीति ( २. १. ) वेदिं प्रोक्षति । ततोऽग्नीत्समर्पितं बर्हिः प्रतिगृह्य प्रणीताहवनीयान्तरालेन प्रागनाहृतं चेत् इदानीं तेन मार्गेणाहृत्य वेद्यां प्राग्ग्रन्थि आसाद्य ब्रह्मन्बर्हिः प्रोक्षिष्यामीति ब्रह्माणं पृष्ट्वा प्रोक्ष यज्ञमिति तेन पूर्ववदनुज्ञातो बर्हिरसीति ( २. १. ) प्रोक्ष्य प्रोक्षणीशेषं समस्तं बर्हिर्मूलेषु निनयेत् ।

ततः पवित्रे प्रणीतासु निधाय बर्हिर्विस्रंस्य विष्णोस्तूप इति ( २ २. ) बर्हिः पूलकस्य पूर्वस्मात्प्रदेशात्प्रस्तरं गृह्णाति । ततः प्रस्तरं तूष्णीं ब्रह्मणे प्रदाय बर्हिःसन्नहनं विस्रंस्य दक्षिणस्यां वेदिश्रोणौ निधायाऽन्यैर्बर्हिस्तृणैरवच्छाद्य वेद्यां पतितं तृणपर्णकाष्ठादिकं हस्तेनैवादायोत्करे निरस्येत् ।

ततो वेदिं त्रिवृत्स्तृणाति । उपपरया त्रिवृद्वा अयुग्धातु पञ्चवृत्सप्तवृद्वा । तच्चैवम्—स्फ्यं निधाय दर्भपूलकात्तृतीयं भागमादायोर्णम्रदसमिति ( २. २. ) दक्षिणादंसादारभ्योत्तरांसं यावत्स्तृणाति । ततो द्वितीयं भागमादाय पूर्वस्तृतस्य बर्हिषो मूलान्याच्छादयंस्ततः पश्चात् स्तृणाति । ततस्तृतीयं भागमादाय तथैव वेदेः पश्चिमान्ते स्तृणाति । एतत्त्रिवृत्स्त-

श्रहनं विस्रꣳस्य दक्षिणस्यां वेदिश्रोणौ निधायान्यैरव-च्छाद्य वेदिꣳ स्तृणात्यूर्णम्म्रदसमिति त्रिवृत् ॥१९॥ उपपत्त्या वा बहुलम् ॥२०॥ अधरमूलम् ॥२१॥ पश्चाद-पवर्गम् ॥२२॥ प्रबृहं वा ॥२३॥ अत्रोद्वासनमाहवनीय-श्रापिणः ॥२४॥ उपर्युपरि प्रस्तरन् धारयन् ॥२५॥ उल्मुके उदूहत्यनुयाजार्थेत् ॥२६॥७॥

परिधीन्परिदधात्यार्द्रानेकवृक्षीयान्बाहुमात्रान्पालाश-वैकङ्कतकार्ष्मर्यबैल्वान्पूर्वालाभे पूर्वालाभ ऽउत्तरान् खा-दिरौदुम्बरान्वा मध्यमदक्षिणोत्तरान् गन्धर्व इति प्र-तिमन्त्रम् ॥१॥ प्रथमं परिधिꣳ समिधोपस्पृश्य वीतिहो-त्रमित्यादधाति ॥२॥ अनुपस्पृश्य द्वितीयाꣳ समिदसी-

---

रणम् । पञ्चवृत्पक्षे एवमेव तृतीयस्तृतस्य पश्चाच्चतुर्थं ततः पश्चात्पञ्च-ममिति । एवं सप्तवृदादिपक्षेऽपि ज्ञेयम् । सर्वपक्षेऽन्तिमस्तरणे स्पया-ग्रहः कार्यः । बहुलं स्तृणाति यथा वेदिभूमिर्न दृश्यते तथा बर्हिषाऽऽच्छा-दयतीत्यर्थः । एवं पश्चादपवर्गं स्तरणमुक्तम् , अथ प्रागपवर्गमुच्यते-अथवा पूर्वं वेदेः पश्चात्प्रदेशे तृतीयं भागं स्तीर्त्वा तदग्राणि यष्ट्यादि नोत्पाट्य तदग्राणामधस्तादु द्वितीयं भागं स्तृणाति पुनरपि तथैव । एवं प्रागपवर्गं वा स्तरणम् ।

तत इध्मात्समिधमादाय ब्रह्मणो हस्तात्प्रस्तरं चादायाहवनीयस्यो-परि समीप एव प्रस्तरं धारयन्समिधाऽऽहवनीयं कल्पयति हविर्दहनसमर्थं करोति । तत्र मतद्वयम्—केचित्काष्ठप्रक्षेपणेन केचिदिध्मकाष्ठेनाहत्य ।

तत आहवनीयादुल्मुकद्वयमुदूहति प्राञ्चं प्रेरयित्वा खरप्रान्ते निद-धातीत्यर्थः । "अनुयाजार्थे प्राची उल्मुके उदूहतो"ति वाजसनेयकमि-त्यापस्तम्बः ( २. ६. ८. ) ॥ ७ ॥

इति द्वितीयस्य सप्तमी कण्डिका ॥ ७ ॥

---

ततो गन्धर्वस्त्वा विश्वावसुरिति ( २. ३ ) मन्त्रेणाहवनीयस्य पश्चादु-दगग्रं स्थूलं मध्यमं परिधिं परिदधाति । तत इन्द्रस्य बाहुरसीति ( २. ३ )

ति ॥३॥ सूर्यस्त्वेति जपत्याहवनीयमीक्षमाणस्तद्रूचन-त्वात् ॥४॥ आवृत्य वेदिं बर्हिषस्तृणे तिरश्ची निदधाति सवितुरिति ॥५॥ अन्ये वाऽयुक्तत्वात् ॥६॥ अन्यत्रापि तृणार्थे ॥७॥ यूपाञ्जने च सर्पिः ॥८॥ पुरोडाश-पयस्या-धानासु-चेच्छन् ॥९॥ तयोः प्रस्तरꣳ स्तृणात्यूर्णम्रद-समिति ॥१०॥ अभिनिदधात्याःत्वा वसव इति ॥११॥ सव्याशून्ये जुहूं प्रतिगृह्य निदधाति घृताचीति ॥ १२ ॥

---

दक्षिणतः प्रागग्रमणिष्ठं द्वितीयं परिधिं निदधाति । ततो मित्रावरुणौ त्वेत्यु-त्तर ( २. ३ ) तस्तृतीयमणिष्ठतरं प्रागग्रं परिधिं परिदधाति ।

ततः स इध्मात् गृहीतया समिधा तूष्णीं प्रथमं परिधिं स्पृष्ट्वा उत्था-य तां समिधं वीतिहोत्रमि(२. ४)त्याहवनीयेऽभ्यादधाति । तत इध्मादेव द्वितीयां समिधमादाय परिधिमस्पृष्ट्वैव समिदसी(२.५)त्यनेन मन्त्रेणादधा-ति । तत उपविश्याहवनीयमीक्षमाणः सूर्यस्त्वेति ( २. ५ ) जपति स्वरेण ।

ततः प्रादक्षिण्येन वेदिं प्रत्यावृत्यागत्य स्तीर्णाया एव वेदेर्द्वे तृणे साग्रे अरत्निमात्रे आदाय वेदिमध्य उत्तराग्रे निदधाति सवितुर्बाहू स्थ इति(२.५)। तत ऊर्णम्रदसमिति ( २. ५ ) तयोस्तृणयोरुपरि मूलभागे प्रागग्रं प्रस्तरं स्तृणाति । "अभिहततराणि प्रस्तरमूलानि बर्हिर्मूलेभ्यः" इत्यापस्तम्बः ( २. ६. १४. ) ।

तत आ त्वा वसव इत्यु( २. ५ )भाभ्यां हस्ताभ्यां प्रस्तरमभिनिदधाति अधः पीडयतीत्यर्थः।ततोऽग्नीधा समर्पितांजुहूं दक्षिणेन पाणिना प्रतिगृ-ह्य सव्यहस्तेनाविमुक्ते प्रस्तरे प्रागग्रां सादयति घृताच्यसि जुहूरिति (२.६.)। "समं मूलैर्जुह्वा दण्डं करोती"ति सूत्र(१)म् ।

ततः सव्येन वेदं गृहीत्वोपभृतं तथैव प्रतिगृह्य घृताच्यस्युप भृदिति ( २.६. ) बर्हिष्येव जुह्वा उत्तरत आसादयति जुहूतोऽवकृष्टां पश्चाद्वर्त-मानामसंस्पृष्टाम् ।

ततो घृताच्यसि ध्रुवेति( २.६. ) मन्त्रेण ध्रुवामुपभृत उत्तरतो वि-धृत्य तयोरुपर्यासादयति । उपभृदपेक्षया अवकृष्टामसंस्पृष्टां च । "अनूचीरसंस्पृष्टाः स्रुचः प्रस्तरे सादयती" ति सूत्र(२)म् । तथा–"उत्त-रेण जुहूमुपभृतं प्रतिकृष्टतरामिवाधस्ताद्विधृत्योः । उत्तरेणोपभृतं ध्रुवां प्रतिकृष्टतरामिवोपरिष्टाद्विधृत्योरिति च । तथा दक्षिणेन जुहूं सादय-

---

१. आप. श्रौ. २. १०. २.  २. आप. श्रौ. २. ९. १९.

**एवमितरे ऽउत्तराभ्यां प्रतिमन्त्रं बर्हिष्युपभृतं ध्रुवां चावकृष्टे अनुपूर्वम् ॥१३॥ पुरोडाशावभिघार्योद्वास्योपस्तीर्णे निधायानक्ति "यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे। आत्मन्वान् सोम घृतवान् हि भूत्वाऽग्निं गच्छ स्वर्यजमानाय विन्दे" ति ॥ १४ ॥**

त्युत्तरेण वा ध्रुवामि"ति(१)। अथ दक्षिणेनाज्यस्थालीं स्रुवं चादाय सव्ये पुरोडाशपात्रीं वेदं चादाय प्रदक्षिणमावृत्य प्रत्यगागत्य गार्हपत्यस्य पश्चादुपविश्य गार्हपत्यस्योत्तरत आज्यस्थालीं निधाय उत्तरतः पुरोडाशपात्रीमुदक्संस्थां स्थापयित्वा वेदेन पुरोडाशाभ्यां भस्म पराकृत्य स्थाल्याः स्रुवेण पुरोडाशौ तूष्णीमभिघार्यैकस्यामेव पात्र्यां दक्षिणत उत्तरतश्च द्वयो स्थानयोरुपस्तृणाति पात्र्या उपर्युभयत्रैकैकं स्रुवं निनयतीत्यर्थः।

तित्तिरिसूत्रे—"अथादत्ते दक्षिणेनाज्यस्थालीं स्रुवं च सव्येन पात्रीं वेदमित्येतत्समादाय प्रदक्षिणमावृत्य प्रत्यङ्ङागत्य जघनेन गार्हपत्यमुपविश्य पात्र्यां द्वधोपस्तृणीत" इति। अन्येष्वपि सूत्रेषु पात्र्यामुपस्तृणातीत्येकवचनमेवास्ति।

ततः पुरोडाशावपर्यावर्तयन् द्वयोरुपस्तीर्णयोः पात्र्यामुपरि क्रमेण निदधाति, तत्र प्रथमं पुरोडाशमपर्यावर्त्तयन् हस्तेन स्पर्शमकुर्वन् काष्ठ्याद्युपायेनादायोत्तरं पुरोडाशं पूर्वेणाज्यस्थालीमपरेण नीत्वा पात्र्यां स्थापयेत्। द्वितीयं पुरोडाशमाज्यस्थालीं प्रथमं पुरोडाशं चापरेण नीत्वा पात्र्यां स्थापयेत्।

मानवे—"वेदेन पुरोडाशयोर्भस्मापोहति वेदोपयाम आज्यस्थाल्याः स्रुवेणाभिघारयति पात्र्यामुपस्तृणात्युदगुद्वासयति वेदेनापभस्मानं करोत्यनभिन्नपाणिना वेदशिरसा च तत उपस्तीर्णे सादयति यस्त इत्यनक्ति अपर्यावर्त्तयन्नधस्ताच्चोपानक्ती"ति। तित्तिरि सूत्रे चायमेव क्रमोऽस्ति।

पुरोडाशविभस्मीकरणं पात्रीस्थापनं तयोरुपस्तारः, कपालस्थयोरेव पुरोडाशयोरभिघारः, उद्वासनमिति। उभयोः पुरोडाशयोः ततः कपालानि गणयित्वा, स्रुवेणोपग्रहः स्रुवेणाज्यास्थाल्या-घृतमादाय पुरोडाशावनक्ति यस्ते प्राण इति मन्त्रेण। अग्निं गच्छेति

१. आप. श्रौ. २. १०. २-३.

**यथादेवतमन्यत् ॥१५॥ प्रत्यनक्ति कपालानि "यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपिव्रत इन्द्रवायू विमुञ्चतामि"ति ॥१६॥ तूष्णीं वा ॥१७॥ संख्ययोद्वासयति ॥१८॥ प्रियेण धाम्नेति हवीꣳषि वेद्यां कृत्वा ध्रुवा असदन्निति सर्वाण्यालभते ॥१९॥ पाहि मामित्यात्मानम् ॥२०॥ अत्र वा व्रतोपायनमत्र वा व्रतोपायनम् ॥२१ ॥ ८ ॥**

---

प्रथमम् , अग्नीषोमौ गच्छेति द्वितीयम् । यथास्वं मन्त्रे अयं विशेषः ।

ततः स्रुवेण सर्वाणि कपालान्याज्येनाभ्यनक्ति । उपधानक्रमेण तूष्णीं, यानि घर्मे कपालानीति मन्त्रेण वा । प्रतिकपालं मन्त्रावृत्तिः ।

ततः स्फ्यमादाय प्रथममुद्वासयामीति प्रथमं कपालमुत्तरत उद्वासयति एवं सर्वाणि । द्वितीयमुद्वासयामि, तृतीयं, चतुर्थं, पञ्चमं, षष्ठं, सप्तमम् , अष्टममिति प्रथमस्य । द्वितीयस्याप्येवमेवोद्वास्य नवमं, दशमम् , एकादशमुद्वासयामीति सर्वत्र शेषः । अनेन प्रकारेण पूरणप्रत्ययान्तेन संख्याशब्देन करणमन्त्रभूतेन कपालान्युद्वासयति ।

ततः सर्वाणि हवींषि वेदिसमीपे नीत्वा वेदोपग्रहेणाज्यस्थालीं ध्रुवाया उत्तरतो बर्हिष्यासाद्य स्फ्योपग्रहेण । तस्या उत्तरतः पुरोडाशावुदक्संस्थौ आसादयेत् । प्रियेण धाम्नेत्य (२.६.) यमेव सर्वेषामासादन मन्त्रः । ततो वेदं गृहीत्वा ध्रुवा असदन्नृतस्ये (२. ६.) त्याज्यस्थाल्याज्यमालभते । ततो जौहवम् , तत उपभृतम् , ततो ध्रौवम् । ततो वेदं ध्रुवायाः पुरस्तान्निधाय स्फ्योपग्रहेण प्रत्येकं पुरोडाशावालभते । ध्रुवा असदन्नित्ययमेव सर्वेषामालम्भे मन्त्रः । ततोऽध्वर्युः पाहि मामिति (२.६.) स्वमात्मानं हृदये आलभते । तत उदकोपस्पर्शः । अस्मिन्काले वा यजमानस्य व्रतग्रहणम् ॥ ८ ॥

इति द्वितयस्य अष्टमी कण्डिका ॥ ८ ॥

इति श्री त्रिरग्निचित्सम्राट् स्थपति त्रिशत्क्रतुकृन्महायाज्ञिक श्रीप्रजापति सुतयाज्ञिकदेवकृतायां कात्यायनसूत्रपद्धतौ द्वितीयोऽध्यायः ।

# अथ तृतीयोऽध्यायः ।

होतृषदनं कृत्वाऽपरेण वेदिꣳश्रोणिं स्वोत्तरेणेध्मात्समिधमादायाग्नये समिध्यमानायानुब्रूहीत्याह ॥ १ ॥ होतरिति चैके ॥२॥ प्रथमस्थानेन प्राक् स्विष्टकृतः ॥३॥ मध्यमेनेडायाः ॥४॥ शेषमुत्तमेन ॥५॥ "सन्तन्वन्निव मेऽनुब्रूही" त्याह यजमानः ॥६॥ अङ्गुष्ठाभ्यां चावबाधते पाद्याभ्यां वेदमहममुमवबाध ऽइति द्वेष्यम् ॥७॥ अभावे द्विषन्तं भ्रातृव्यमिति वा॥८॥ यावत्सामिधेनि स्वेदिदमहं तावतिथेन स्वज्रेणेति ॥९॥ प्रतिप्रणवमाधानम् ॥ १० ॥ समिद्धऽइति प्रागतः सर्वामिध्ममेकवर्जमनुयाजार्थेत्॥११॥

# अथ तृतीयोध्याऽयः ।

अथाध्वर्युर्होतुरासनं दर्भास्तृतं गार्हपत्याहवनीययोरन्तरालदेशस्य मध्यभागे वेदेः पश्चात्स्थापयित्वा एहि होतरिति होतुरामन्त्रणं करोति । ततो होतर्याचम्यागते सति अध्वर्युः इध्मादेकां समिधमादाय होतारं प्रति अग्नये समिध्यमानायानुब्रूहीति ब्रवीति । होता च ब्रह्मन्त्सामिधेनीरनुवक्ष्यामीति ब्रह्माणं पृच्छति । ब्रह्मा च प्रजापतेऽनुब्रूहि धेहीत्यन्तमुपांशु पठित्वा ॐ ३ अनुब्रूहीति होतारं प्रसौति ।

ततो होतारं प्रपद्य इत्यादि जपति । अस्यान्ते यजमानः स्फ्यं गृहीत्वा सन्तन्वन्निव मेऽनुब्रूहीति होतारं प्रेषयति ।

अस्मिन्कर्मण्यादित आरभ्य स्विष्टकृतः प्राक् सर्वं मन्त्रजातं प्रथमस्थानेन प्रयोज्यम् । स्विष्टकृत आरभ्येडामार्जनान्तं मध्यमस्वरेण, ततः शेषं समाप्तिपर्यन्तमुत्तमेन स्वरेणेति तन्त्रटीकायाम् । प्रैषाणामेवायं धर्मो न मन्त्रान्तरे इति कर्कादयः सर्वे ।

ततो होत्रा उपांशु त्रिर्हिंकृत्य प्र वो वाजा इत्यासु ऋक्षु मध्यमस्वरेणानूच्यमानासु यजमानः पादाङ्गुष्ठाभ्यां भूमिमधः पीडयति इदमहं पञ्चदशेन वज्रेणामुकमवबाध इति वैरिनाम द्वितीयान्तं गृहीत्वा । शत्रोरभावे इदमहं पञ्चदशेन वज्रेण द्विषन्तमवबाधे इति प्रयोगः । वज्रेण भ्रातृव्यमवबाधे इति वा । नात्रापां स्पर्शः अभिचाराभावात् । पाप्मानमिति पदं तु स्वश्रुतौ सूत्रे च नास्ति । शाङ्खायने (१)होतुर्वेद्यभिमर्शने पठितमस्ति ।

(१) १.६. १.

स्रुवेण पूर्वमाघारमाघार्याऽऽग्नीध्राग्निमग्नीत्सम्मृड्ढीति ॥१२॥ इध्मसन्नहनैरनुपरिधि सम्मार्ष्ट्यग्ने वाजजिदिति त्रिस्त्रिः परिक्रामम् ॥१३॥ तूष्णीमुपरि ॥१४॥ अपरमाहवनीयादञ्जलिं करोति नमो देवेभ्यः, स्वधा पितृभ्य इति दक्षिणत उत्तानम् ॥१५॥ अप उपस्पृश्य सुयमे मे इति जुहूपभृतावादायोत्तरां जुहूं कृत्वा दक्षिणाऽति-

---

अध्वर्युः स्फ्यमादाय तिष्ठन् 'सामिधेनीनां प्रणवे प्रणव एकैकमिध्मकाष्ठमाहवनीयेऽभ्यादधाति समिध्यमानो अध्वर इत्यस्या ऋचः प्रणवे समिद्धो अग्न इत्यतः प्राक् एकमिध्मकाष्ठं परिशिष्यावशिष्टानां पञ्चानां काष्ठानां सहैव प्रक्षेपं कुर्यात् । तत उत्तरत उपविश्य दक्षिणं जान्वाच्य वृणीध्वर्ठ० हव्यवाहनो ३ अग्ने महाँ असीत्येतस्मिन्होत्रा पठ्यमाने वेदेनाहवनीयं त्रिरुपवाज्य वेदोपग्रहः स्रुवेणाज्यस्थाल्या आज्यं गृहीत्वोत्तरं परिधिसन्धिमभ्यवहृत्य प्रजापतिं मनसा ध्यायन् अग्नेरुत्तरप्रदेश ऋजुं दीर्घं सन्ततं प्राञ्चं पूर्वमाघारयति । इदं प्रजापतये ।

ततोऽग्नीधे स्फ्यमिध्मसंनहनं च समर्पयन् अग्निमग्नीत्संमृड्ढीति अग्नीधं प्रेष्यति ) ततोऽग्नीत् स्फ्यं सव्ये गृहीत्वाऽग्निं प्रदक्षिणीकृत्य दक्षिणपरिधिसंनिधौ स्थित्वा इध्मसंनहनैर्दक्षिणपरिधिसमीपपार्श्वेऽग्निं त्रिः प्राक्संमार्ष्टि अग्ने वाजिदिति (२०७.) मन्त्रेण सकृत् द्विस्तूष्णीम् । ततस्तत्रैवावस्थितो मध्यमपरिधिसंनिहितपार्श्वेऽग्निं त्रिरुदक्संमार्ष्टि । अत्राप्यग्ने वाजिजदिति ( २. ७. सकृन्मन्त्रेण द्विस्तूष्णीम् । ततो दक्षिणपार्श्वादुत्तरपार्श्वं गत्वोत्तरपरिधिसन्निहितपार्श्वेऽग्निं त्रिः प्राक्संमार्ष्टि, सकृन्मन्त्रेण द्विस्तूष्णीम् । स एव मन्त्रः । ततस्तत्रैवास्थितो मध्ये प्राञ्चं तूष्णीं त्रिः संमार्ष्टि इति हरिस्वामिनः ।

अन्ये तु उत्तरपार्श्वाद्दक्षिणपार्श्वं गत्वा दक्षिणपरिधिसंनिधौ संमृज्योत्तरपार्श्वं गत्वा मध्यमपरिधिसंनिधावग्निं संमृज्य पुनर्दक्षिणपार्श्वं गत्वोत्तरपरिधिसन्निधावग्निं पुनरप्रादक्षिण्येन उत्तरतो गत्वा मध्ये तूष्णीं त्रिः संमार्गः कार्य इत्याहुः ।

ततो जुहूपभृतोः पुरस्तादाहवनीयमपरेण भूमौ पुटाञ्जलिं निदधाति नमो देवेभ्य इति ( २. ७. ) मन्त्रेण । ततस्तस्मादञ्जलिकरणस्थानाद्दक्षिणायां द्वितीयमञ्जलिमुत्तानं करोति स्वधा पितृभ्य इति (२. ७.) मन्त्रेण । तत उदकोपस्पर्शनम् । नात्रापसव्यं नाऽपि दक्षिणमुखता ।

क्रामत्यङ्घ्रिणा विष्णवित्ति ॥१६॥ परिधीनपरेण म-
ध्यरो होष्यतः ॥१७॥ सव्येनेतो दक्षिणेनामुतः ॥१८॥
वसुमतीमित्यवस्थाय ॥१९॥१॥

इत ऽइन्द्र ऽइति जुहोत्युत्तराघारम् ॥१॥ आघार्या-
सᳪस्पर्शयन् स्रुचावेत्य जुह्वा ध्रुवाᳪ समनक्ति संज्यो-
तिषेति ॥ २ ॥ निधायेध्मसन्नहनान्यादायाश्रावयेत्या-
ह ॥३॥ अस्तु श्रौषडित्यग्नीत् ॥४॥ वेदिबर्हिरिध्मशक-
लमपाच्छिद्यैके ॥५॥ एवᳪ सर्वत्राश्रुतप्रत्याश्रुतेषु ॥ ६ ॥
अथ प्रवृणीतेऽग्निर्देवो दैव्यो होता देवान्यक्षद्विद्वांश्चिकि
त्वान्मनुष्वद्भरतवत् ॥७॥ अमुवदमुवदिति यजमानार्षे
याण्याह परस्तादर्वाञ्चि त्रीणि ॥८॥ यावन्तो वा मन्त्र-

---

तत उभाभ्यां पाणिभ्यां जुहूं परिगृह्योपभृतोऽग्रस्योपरिमार्गेणानी-
योपभृत उपरि निदधाति । ततः सुयमे म इति ( २. ७. ८. ) मन्त्रेण ते
सहैव जुहूपभृतावादायोत्थायाङ्घ्रिणा विष्णवित्ति (२. ८.) मन्त्रेण सव्येन
पादेनाग्रतोऽग्रतश्चालितेन वेदेर्दक्षिणभागं प्रति गच्छति । तत्र स्रुचां
पूर्वेण परिधीनपरेण प्रस्तराग्रमनाक्रामतो गमनागमनमार्गः । एवमनेन
मार्गेण गत्वा वेदेर्दक्षिणभागे वसुमतीमग्न इति ( २. ८. ) मन्त्रेणावस्थानं
कृत्वेशानाभिमुखस्तिष्ठति ॥ १ ॥

इति तृतीयस्य प्रथमा कण्डिका ॥ १ ॥

ततो जुहूपभृतोऽग्रस्योपरिमार्गेण प्राचीमेवोत्तार्य दक्षिणपरिधिसंधि-
मन्ववहृत्येत इन्द्रो वीर्यमिति ( २. ८.-६. ) मन्त्रेणाग्नेर्दक्षिणपार्श्वे स-
मिद्धे ऋजुं दीर्घं सन्ततं प्राञ्चमुत्तराघारं जुहोति । ॐ ३ इदमिन्द्राय
न ममेति त्यागः ।

ततः स्रुचोः परस्परं स्पर्शमकुर्वन्नेव दक्षिणेन पादेनाग्रतोऽग्रतः प्रे-
रितेन प्रत्यागत्य जुहूस्थेनाज्येन ध्रुवास्थमाज्यं जुह्वैव समनक्ति संज्योतिषेति
(२. ९.) मन्त्रेण । जुह्वा ध्रौवाज्यमध्ये बिन्दुं पातयतीत्यर्थः । तत उपभृतं
सव्ये गृहीत्वा दक्षिणेन जुहूं प्रस्तरस्योपरि निधाय वेदं सव्येन गृहीत्वोपभृतं जुह्वा उत्तरतः स्वस्थाने निदध्यात् ।

**कृतः ॥९॥ पुरोहितार्षेयेण वा ॥ १० ॥ क्षत्रियवैश्ययोश्च नित्यम् ॥११॥ मनुवदिति वा सर्वेषाम् ॥१२॥ ब्रह्मण्वदा च वक्षद् ब्राह्मणा ऽअस्य यज्ञस्य प्रावितारोऽसौ मानुष इति होतृनामग्रहणम् ॥१३॥ उपांशु वा ॥१४॥ सम्मृष्टा ऽउपविशतः ॥१५॥ अग्निर्होतेति स्रुगादापनं प्रयाजेषु सन्निधः ॥१६॥ घृतवतीमित्युक्ते स्रुचावादायातिक्रम्या-श्राव्याह समिधो यजेति पञ्च प्रयाजान्त्समिद्धतमे ॥१७॥ यज यजेति शेषम् ॥१८॥ ध्रुवस्तिष्ठन् ॥१९॥ पूर्वं पूर्वं वा-ऽभिक्रामम् ॥२०॥ उपभृतो जुह्वामानयत्यनवमृशंश्चतुर्थम् ॥२१॥ एवं प्रवृद्धौ ॥२२॥ अनुयाजेषु च ॥२३॥ उत्तरां जुहू-**

---

ततो होतारं प्रादक्षिण्येन गत्वोत्करमपरेण प्राङ्मुखोऽध्वर्युरिध्मसंनहनान्यादायो ३ श्रा ३ वयेत्याह । ततोऽग्नीद्दक्षिणामुखोऽध्वर्युमुत्तरेण-स्थितः स्फ्यसंनहने पाणौ गृहीत्वैवास्तु श्रौ ३ षडिति प्रत्याह । आपस्तम्बः—"अस्तु श्रौषडित्याग्नीध्रोऽपरेणोत्करं दक्षिणामुखस्तिष्ठन् स्फ्यं संमार्गांश्च धारयन् प्रत्याश्रावयत्याग्नीध्रे सोमे सर्वत्रैवमाश्रुतप्रत्याश्रुते भवत" इति(१) ॥

ततोऽध्वर्युर्गृहीतसंनहन एवाह—अग्निर्देवो दैव्यो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्वद्भरतवत् इति उक्त्वा परस्तादर्वाञ्चि यजमानस्य त्रीणि, प्रवरनामधेयान्याह । तद्यथा—कश्यपवदवत्सारवन्नैध्रुववत् इति । तदनन्तरं ब्रह्मण्वदा च वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रविताऽरोऽमुकशर्मा होता मानुष इति होतृनामग्रहणमुच्चैरुपांशु वा कर्त्तव्यम् । ततो होता देव सवितरित्यादिकं (१. ५. १. १५.). जपित्वोत्थायाध्वर्युमग्नीधं चांसयोः प्रादेशेन संमृशति । ततस्तौ होत्रा संमृष्टौ सन्तावुपविशतः । तावत्पर्यन्तं तिष्ठत एव ।

यदा होताऽग्निर्होता वेत्त्विति स्रुगादापनं पठति तदाऽध्वर्युरुभाभ्यां पाणिभ्यां जुहूमुपभृत उपरि पूर्ववन्निधाय घृतवतीमित्यस्मिञ्छब्दे होत्रा उक्ते जुहूपभृतावादाय हवींष्युत्तरेण परिधीनपरेण सव्येन पादेन वेदेर्दक्षिणभागे गत्वा ईशानाभिमुखः स्थित्वाऽऽश्राव्यास्तु श्रौषडिति प्रत्युक्ते समिधो यजेति होतारं प्रति ब्रूयात् ।

---

(१) २. १९. ४. ६.

मध्युह्य प्राचीमवहृत्य जुहोति ॥२४॥ एवꣳ सर्वत्र॥२५॥२॥

नाभिदेशे धारणम् ॥१॥ प्रयाजानुमन्त्रणमेको ममै-
का तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति ॥ २ ॥
एवं मिथुनैर्यथासंख्यम् ॥३॥ न तस्य किञ्चनेति पञ्चमे ॥४॥
त्विषिमानपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नाद इति च॥५॥
आगन्तूनां चतुर्थपञ्चमाभ्याꣳ स्थानात् ॥६॥ प्रथमचतुर्था-
भ्यां वा यथालिङ्गम् ॥७॥ सर्वान्वोत्तमेनोपायित्वात् ॥८॥
एत्य जुह्वाऽभिघारणं ध्रुवाया हविष ऽउपभृतश्च ॥९॥ आ-
ज्यभागाभ्यां चरत्याग्नेयेन सौम्येन ॥१०॥ चतुरवत्तꣳस-
वषट्कारासु ॥११॥ अनिधायावदायावदाय ध्रुवामभि-

---

ततो जुहूं प्राचीमवतार्य वषट्कारेण सह वा वषट्कारे कृते वा समिद्ध-
तमे वह्नेः प्रदेशे जुहूस्थतृतीयांशं जुहोति । ततो पुनर्जुहूमुपभृतोऽग्रमा-
र्गेणैवाधिहृत्योपभृत उपरि निदधाति ॥ २ ॥

इति तृतीयस्य द्वितीया कण्डिका ॥ २ ॥

आश्रावणकाले स्रुचोर्नाभिदेशे धारणं कुर्यात् । यजमानश्च इदं स-
मिद्भ्यो न ममेति त्यागं विधाय एको ममेति त्विषिमानिति च द्वे अनुम-
न्त्रणे कुर्यात् ।

ततोऽध्वर्युः पुनराश्राव्य यजेति प्रेष्यति । पूर्ववद्धोमः । इदं तनून-
पात इति इदं नराशंसायेति वा द्वितीयप्रयाजस्य त्यागः । तत्रेयं व्यव-
वस्था–वसिष्ठशुनकात्रिवध्र्यश्वकण्वकश्यपसंकृतिप्रवराणां यजमानानां
नराशंसः । एभ्योऽन्येषां तनूनपादिति । त्यागानन्तरं द्वौ ममेति अप-
चितिमानिति चानुमन्त्रणे ।

ततः पुनरपि जुहूमध्युह्याश्राव्य यजेति प्रेष्यति । ततो जुहूं प्राचीमव-
तार्य पूर्ववत्सर्वं घृतं जुहोति । इदमिड्भ्यो न ममेति त्यागः । त्रयो ममेति
यशस्वीति चानुमन्त्रणे ।

ततो जुहूमध्युह्य सव्येन जुहूं गृहीत्वा दक्षिणेनोपभृतमधो विद्यमानां
जुह्वग्रमार्गेणोपरिष्टादानीयोपभृता जुह्वाः स्पर्शमकुर्वन्नुपभृतः सकाशा-
दर्धमाज्यं जुह्वां निनयति । ततः पुनरुपभृतमधस्तात्कृत्वा पुनरप्याश्राव्य
यजेति होतारं ब्रूयात् । समिद्धे जुहोति । इदं बर्हिषे न ममेति त्यागः ।

**धारयति, "आप्यायतां ध्रुवा हविषा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः । सूर्याया ऽऊधो ऽअदित्या ऽउपस्थ ऽ उरुधारा पृथिवी यज्ञे ऽ अस्मिन्" इति ॥१२॥ अनुब्रूहीत्युक्त्वा नापव्याहरेद्धोता चाऽऽश्रावणात् ॥१३॥ आश्रावितेऽग्नीदा प्रत्याश्रवणात् ॥१४॥ प्रत्याश्रावितेऽध्वर्युरा होतृप्रैषात् ॥१५॥ होता ऽऽवषट्कारात् ॥१६॥ सोमे च ग्रहं गृहीत्वोपाकरणात् ॥१७॥ उपाकृत ऽ उद्गातार ऽआहोतृप्रैषात् ॥१८॥**

---

चत्वारो मम ब्रह्मवर्चसीति चानुमन्त्रणे ।

पुनर्जुहूमध्युह्याश्राव्य यजेति प्रेष्य वषट्कृते जुहोति । इदमग्नये सोमायाग्नयेऽग्नीषोमाभ्यामग्नीषोमाभ्यां देवेभ्य आज्यपेभ्यो न ममेति त्यागः । पञ्च मम न तस्येति, अन्नादो भूयासमिति चानुमन्त्रणे ।

ध्रुवो निश्चल एकस्मिन्नेव स्थाने स्थितः सर्वान् प्रयाजानतिप्रदीप्तेऽग्निप्रदेशे जुहोति । अथवा प्रतिहोममाहवनीयसंमुखं स्तोकं स्तोकं गत्वा गत्वा प्राक्संस्थान् पञ्चसु स्थानेषु प्रयाजान् जुहुयात् ।

ततो दक्षिणपादेन हविःसमीपे प्रत्यागत्योपविश्य जुहूस्थेन प्रयाजशेषेण जुह्वैव ध्रुवाया आज्यस्थाल्याः पुरोडाशयोः उपभृतश्च क्रमेणाभिघारणं करोति ।

तत उपविष्ट एवाग्नयेऽनुब्रूहीति होतारं प्रेष्यति । ततो ध्रुवायाः स्रुवेणाज्यं जुह्वामवद्यति तूष्णीमेव । तत आज्यस्थाल्यास्तूष्णीं स्रुवेणाज्यं गृहीत्वा आप्यायतामिति मन्त्रान्ते ध्रुवामभिघारयति । एवं चतुरवत्तिनश्चतुर्वारं कुर्वन्, पञ्चावत्तिनस्तु पञ्चकृत्वः । एवं चतुरवत्तं कृत्वोत्थायातिक्रम्याश्राव्याग्निं यजेति होतारं प्रेष्यति । उत्तरपूर्वार्द्धे होमः । इदमग्नये ।

अत्र सर्वत्रानुब्रूहीत्येवमुक्त्वाऽध्वर्युर्विहितमन्त्रादिव्यतिरिक्तं किमपि न वदेत् । होताऽपि न वदेदाऽऽश्रावणं यावत् । आश्रावणानन्तरं प्रत्याश्रावणात्प्राक् अग्नीदपि नापव्याहरेत् । प्रत्याश्रावणव्यतिरिक्तं किमपि न वदेत् । प्रत्याश्रावणानन्तरमध्वर्युः प्राक् यजतिप्रैषात्तद्व्यतिरिक्तं न वदेत् । यजेत्यनन्तरं होता वषट्कारपर्यन्तं याज्यादिव्यतिरिक्तं किमपि न वदेत् । यद्यपव्याहरेत्पुनरप्याश्रावणादि कुर्यात् । "व्याहृतीर्वा जपेदि"त्यापस्तम्बः(१) ।

(१) २. १६. ४.

**होता ऽऽवदूकारात् ॥ १९ ॥ आग्नेयमुत्तरपूर्वार्द्धे दक्षिण-पूर्वार्द्धे सौम्यम् ॥२०॥ समिद्धतमे वा ॥२१॥ हविर्भ्यां च ॥२२॥ पुरोडाशावन्तरेणाग्नीषोमा उपांशुवाज्यस्य ॥२३॥ विष्णुर्वा ऽमावास्यायाँ हौत्राम्नानात् ॥२४॥ याव-**

आग्नेयाज्यभागहोमानन्तरं दक्षिणेन पादेन हविःसमीपे आगत्योपविश्य सोमायानुब्रूहीति प्रैषः । पूर्ववच्चतुरवत्तमाज्यं ध्रुवाया गृहीत्वाऽतिक्रम्याश्राव्य सोमं यजेति प्रैषः । दक्षिणपूर्वार्द्धे होमः । इदं सोमायेति त्यागः । अथवा समिद्धतमे अतिशयेन प्रदीप्त एवाग्निप्रदेशे आज्यभागयोर्होमः, अन्यासामाहुतीनां च । सर्वत्र सव्येन पादेनाग्रतोऽग्रतश्चालितेन होमार्थं गमनम् ।

ततः प्रधानहविर्यागाः—आगत्योपविश्याग्नयेऽनुब्रूहीति प्रैषः । ध्रुवातः सकृत्स्रुवेणाज्यं गृहीत्वा जुह्वामुपस्तारः । आप्यायतामिति ध्रुवाया अभिघारः । ततः प्रथमपुरोडाशस्य मध्यात् पूर्वार्द्धाच्च शृतावदानेनाङ्गुष्ठपर्वमात्रं तिर्यक् अवदानद्वयं क्रमेणावदाय पुनर्ध्रुवायाः स्रुवेणोपरिष्टादभिघार्य ध्रुवामाप्याय्य हविषि कृते अवदानस्थाने आज्यस्थालीतः स्रुवेण प्रत्यभिघारयेत् । पञ्चावत्तिनो हविषः पश्चाद्भागात्तृतीयमवदानं गृहीत्वा पञ्चावत्तं सम्पादनीयम् । ततोऽतिक्रम्याश्राव्याग्निं यजेति प्रैषः । मध्ये समिद्धतमे होमः । इदमग्नय इति त्यागः ।

प्रत्यागत्याग्नीषोमाभ्याम् इत्युपांशूक्त्वा अनुब्रूहीति प्रथमस्वरेण प्रैषः । आज्यभागवत् ध्रुवायाश्चतुर्ग्रहणं पञ्चावत्तिनः पञ्चकृत्वः । अतिक्रम्याश्राव्य अग्नीषोमौ उपांशु यजति । प्रथमस्वरेण मध्ये होमः । इदमग्नीषोमाभ्याम् ।

प्रत्यागत्याग्नीषोमाभ्यामनुब्रूहीति प्रथमस्वरेण प्रैषः । ध्रुवाया जुह्वामुपस्तारः । ध्रुवाभिघारणं द्वितीयपुरोडाशस्य पूर्ववदवदानम् । उपरिष्टादभिघारः । ध्रुवाभिघारणम् । ततोऽभ्यङ्कः । अतिक्रम्याश्राव्याग्नीषोमौ यजेति प्रैषः । प्रदीप्ते मध्ये होमः । इदमग्नीषोमाभ्याम् ।

ततः प्रत्यागत्याग्नय स्विष्टकृतेऽनुब्रूहीति मध्यमस्वरेण प्रैषः । जुह्वामुपस्तारः । द्वयोरपि पुरोडाशयोरुत्तरार्द्धादेकैकमवदानम् । पञ्चावत्तिनो द्विर्द्विः । उपरिष्टाद् द्विरभिघारः । कृते प्रत्यभिघारणाभावः । उत्थायातिक्रम्याश्राव्याग्निं स्विष्टकृतं यजेति प्रैषः । अग्नेरुत्तरार्द्धे समिद्धे होमः । स्विष्टकृदाहुतेरितराहुतिभिरग्निमध्ये संसर्गो न कार्यः । ततोऽपामुपस्पर्शनम् ।

द्धविरुत्तरार्द्धात्स्विष्टकृतः ॥२६॥ ततऽ एव होमः ॥२६॥ नाज्यादशेषात् ॥ २७ ॥ असꣳसृष्टामाहुतिभिः ॥२८॥ निधाय ॥२९॥३॥

सञ्चरमभ्युक्ष्य प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वाऽन्यतरत ऽआस्यमुभयतो वाऽऽग्नेयात् ॥१॥ भागां श्च ॥२॥ अध्वर्युसञ्चरेण ब्रह्मणे प्रदाय पूर्वेणैकेऽप ऽउपस्पृश्येडां पञ्चावत्तां दक्षिणतो मध्याच्च यावद्धविः स्वि-

प्रत्यागत्य स्वस्थाने स्रुचोरासादनम् । पञ्चार्षेयाणां जमदग्नीनामाज्यभागादिषु सर्वत्र पञ्चावत्तं भवति । प्रधानयागे तु पुरोडाशस्य पश्चाद्भागात्तृतीयमवदानम् । उत्तरार्द्धात्स्विष्टकृत्यवदानद्वयम् । पत्नीसंयाजेष्वपि पञ्चावत्तता इति विशेषः । अन्यत्सर्वं समानम् ॥

इति तृतीयस्य तृतीया कण्डिका ॥ ३ ॥

ततः स्फ्यं गृहीत्वाऽद्भिः सञ्चरं होमार्थं गमनागमनमार्गमभ्युक्ष्य प्राशित्रहरणे प्राशित्रमवद्यति । तत्र प्राशित्रहरणं सव्ये गृहीत्वा आज्यस्थाल्या उपस्तीर्य पुरोडाशमस्तकाद् द्वे शकले यवमात्रे पिप्पलमात्रे वा अवदाय द्वितीयपुरोडाशस्यापि तथैवावदायोपरिष्टादभिघारयेत् । अत्रोपस्तारणाभिघारयोरेकं कुर्यादुभयं वा । ततः प्राशित्रं द्वितीयेन पात्रेणापिधायाध्वर्युसञ्चरेण होमार्थगमनागमनमार्गेणैव तत्प्राशित्रं ब्रह्मणे प्रदायाहवनीयं पूर्वेण वा प्रदायाप उपस्पृशेत् । ब्रह्मा चाऽध्वर्युणा च दीयमानं समर्प्यमाणं वा प्राशित्रं मित्रस्य त्वा चक्षुषेति(१) प्रतीक्षते । ततः सपात्रं प्राशित्रं देवस्य त्वा स० भ्याम् प्रति गृह्णामीति (२।११) अञ्जलिना प्रतिगृह्णाति । "अवदीयमानं प्रेक्षत"इत्यापस्तम्बः(२) । समर्पणमिति मानवे । "अञ्जलिना प्रतिगृह्य प्राग्दण्डं सादयती"त्याश्वलायनः(३) । ततो दक्षिणांसे स्तृतानि बर्हींष्यपोह्य पृथिव्यास्त्वा नाभाविति मन्त्रेणास्तृतभूमौ सपात्रं सादयति । पुनरनामिकाङ्गुष्ठाभ्यां देवस्य त्वेति प्राशित्रहरणादवत्तं द्रव्यमादायाग्नेष्ट्वाऽऽस्येनेति (२.११) दन्तैरचर्वयन्प्राश्नाति । आचम्य प्राशित्रहरणपात्रे अद्भिरुत्करे प्रक्षाल्य या अप्स्वन्तरिति मन्त्रेण नाभिमालभते ।

ततोऽध्वर्युरिडापात्रीं गार्हपत्ये प्रतप्य तस्यां स्थाल्या एवोपस्तीर्य

(१) काण्वसं० २।२।१९ २. ३. १९. ९. । ३. १. १३. ३. ।

ष्टकृद्वदाज्यम् ॥३॥ यजमानभागं पूर्वार्द्धाद्दीर्घं प्रशीर्य पुरस्ताद् ध्रुवायाः करोति ॥४॥ इडाꣳ होत्रे प्रदायाविसृजन् दक्षिणाऽतिक्रामति ॥५॥ इडां प्रतिगृह्य होतुरङ्गुलिपर्वणी ऽअनक्ति ॥६॥ अवान्तरेडामादधाति पूर्ववत् ॥७॥ इडां च ॥८॥ सर्वेऽन्वारभन्ते ॥९॥ इडोपहूतेत्युच्यमान ऽआग्नेयं बर्हिषदं करोति "अघ्न ऽपिन्वस्वायुर्मे धुक्ष्व प्रजां मे धुक्ष्व पशून् मे धुक्ष्व ब्रह्म मे धुक्ष्व क्षत्रं मे धुक्ष्व विशो मे धुक्ष्व योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्य

---

पुरोडाशस्य दक्षिणतो मध्याच्चावद्यति । एवमेव द्वितीयपुरोडाशस्य दक्षिणतो मध्याच्चावदाय स्थाल्या एवोपरिष्टाद् द्विरभिघारयति । ततः षडवत्ते स्थानद्वये स्थाल्या एवोपस्तीर्याग्नेयपुरोडाशस्यानियतप्रदेशादेकैकमवदानमुभयत्रावदाय स्थाल्या एवोपरिष्टाद्दक्षिणक्रमेणाभिघारयति ।

तत आग्नेयादेव पुरोडाशादेवानियतस्थानाद् ब्रह्मभागमवदाय ध्रुवायां निदधाति । तत आग्नेयपुरोडाशस्य पूर्वार्द्धाद्यजमानभागमणु दीर्घं प्रशीर्य त्रोटयित्वा ध्रुवायाः पुरस्ताद् बर्हिषि निदधाति । ध्रुवाग्रस्योपरि निदधातीति कर्कः । प्रधानावदानापेक्षया महत्स्विष्टकृदवदानम्, तदपेक्षया महदिडावदानम्, इडापेक्षया महच्चतुर्द्धाकरणानाम् । "दैवतसौविष्टकृतैडाचतुर्द्धाकरणिकानामुत्तरमुत्तरं ज्याय" इति वचनात्(१) ।

ततः प्रत्यङ्मुखो भूत्वा होत्रे इडां प्रदाय हस्तेनाविमुञ्चन् होतारं प्रदक्षिणीकृत्य होतुरग्रे प्रत्यङ्मुख उपविश्य होत्रा समर्पितामिडां प्रतिगृह्य इडाया एव स्रुवेणाज्यमादाय होतुः प्रदेशिन्या उत्तमे पर्वणि मध्यमे स्रुवेणैवानक्ति । पर्वशब्दः सन्धिवाची, काण्डवाचीति केचित् ।

ततो होतुर्हस्ते इडाया एव पञ्चावत्तमवद्यति । होता च पञ्चममवदानं स्वयमेवादत्ते । अत्र पुरोडाशावदानादेव पञ्चावदानानि ग्राह्याणीति कर्कः, शाखान्तरसूत्रेषु च—"लेपादुपस्तारः द्विरवदानं लेपाद् द्विरभिघारणमि"ति । काठके च—"लेपाद् द्विरुपस्तारः, सकृत्पुरोडाशावदानं, लेपाद् द्विरभिघारणम्" इति । तत इडां पुनर्होत्रे ददाति । उपहूयमानायां सर्वेऽन्वारभन्ते । होतारमिति कर्कः । इडामित्यन्ये, शाखान्तरसूत्रेषु च । इडाशब्देनेडापात्र्यामवत्तं पुरोडाशादि द्रव्यमुच्यते न तु पात्री ।

१. आप. श्रौ. ३. २१. ४. ।

**प्रजया पशुभिरा प्यायस्वे''ति तं चतुर्द्धा कृत्वा ॥ १० ॥ बर्हिष्यृत्विग्भ्य ऽआदिशति ॥११॥ उभौ वाऽविशेषात् ॥१२॥ अत्र पितर ऽइति यजमानो जपति ॥१३॥ विसृज्यामीमदन्तेति ॥ १४ ॥ एकैकमाहराति ॥ १५ ॥ द्यावापृथिव्योरुपह्वानेऽग्नीधे षडवत्तम् ॥१६॥ प्राश्नात्युपहूता पृथिवीति ॥१७॥ आशासाने मयीदमिति यजमानो जपति ॥१८॥ उपहूतां प्राश्नन्ति युक्ताः ॥१९॥ यजमा-**

तत इडोपहूतेति होत्रा पठ्यमाने आग्नेयं पुरोडाशं चतुर्द्धा कृत्वा ब्रध्न पिन्वस्वेति मन्त्रान्तेऽध्वर्युर्बर्हिषि निदधाति ।

ततो यजमान आग्नेयादेविदिक्षु चतुरो भागान् निधाय प्रदक्षिणमाग्नेयस्थादारभ्य इदं ब्रह्मणः, इदं होतुः, इदमध्वर्य्योः, इदमाग्नीध्रस्येति ऋत्विग्भ्य आदिशति, ऋत्विक्सम्बन्धित्वेन प्रकाशयतीत्यर्थः ।

ततो यजमानोऽपसव्यं कृत्वा दक्षिणाभिमुखो भागानालभ्यात्र पितर इति ( २.३१ ) स्वरेण जपति । ततो भागान्विसृज्यापसव्येनैवामीमदन्तेति ( २.३१ ) स्वरेण जपति ।

ततः सव्यं कृत्वाऽप उपस्पृश्य ऋत्विग्भ्यो भागान्यथादिष्टं समर्पयति-इदं ब्रह्मणे, इदं होत्रे, इदमध्वर्यवे, इदमाग्नीध्रायेति । तत उपहूते द्यावापृथिवी इति होत्रा पठ्यमानेऽग्नीधे षडवत्तं समर्पयति । उपहूतोऽयं यजमान इत्यस्मिन्होत्रा पठ्यमाने मयीदमिति (२.१) मन्त्रं स्वरेण यजमानो जपति । अत्र चतुर्द्धाकरणमाग्नेयादेव । अन्यत्प्राशित्रेडाषडवत्तब्रह्मयजमानभागानुभाभ्यामप्यवद्येदिति कर्कः । इडाप्राशित्रपात्रयोरवदानमुभाभ्यां, तद्व्यतिरिक्तं सर्वमाग्नेयादेवेत्यन्ये; सर्वेषु शाखान्तरसूत्रेषु च ।

ततः सर्वे प्रणीतोत्करावन्तरेण निष्क्रम्य समर्पणक्रमेण भक्षयन्ति । अग्नीत्प्रथमं चतुर्द्धाकरणभागं प्राश्याचम्यापहूता पृथिवीति (२.११.) मन्त्रेण प्रथमावत्तं षडवत्तभागं प्राश्नाति । तत आचम्य द्वितीयमुपहूतो द्यौरिति (२.११.), । तत इडां भक्षयति । अन्येऽपि सर्वे प्रथमं चतुर्द्धाकरणभागं प्राश्येडां प्राश्नन्ति । यजमानोऽपीडायामवत्तस्य पञ्चमं भागं भक्षयति न न्यूनाधिकम् ।

ततः सर्वे आचम्य यथागतं प्रत्यागत्य वेदेः पश्चादुपविश्य ब्रह्मादिक्रमेण सुमित्रिया न इति (६.२२.) पवित्रयोरवस्थिताभिरद्भिर्मार्जयन्ते । ततोऽध्वर्युर्यजमानस्य प्राणापानाविति पवित्रे प्रस्तरमध्ये प्रवेशयति । तूष्णीं

नश्च ॥२०॥ पवित्रयोर्मार्जयन्तेऽपरेण वेदिꣳ "सुमित्रिया न" इति॥२१॥ "यजमानस्य प्राणापानौ पात" मिति प्रस्तरे ते करोति ॥ २२ ॥ तूष्णीं वा ॥ २३ ॥ अत्र वा ब्रह्मा प्राश्नाति ॥२४॥ भागमस्मै परिहरति ॥२५॥ यजमानभागं चाप्रोषिते ॥२६॥ अन्वाहार्यमभिघार्योद्वास्यान्तरा ब्रह्म-यजमानौ हृत्वा ऽवेद्यां निधायाऽऽलभते "प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यूर्गस्यूर्जं मयि धेह्यक्षितिरसि मा मे क्षेष्ठाऽ अमुत्रामुष्मिन् लोक ऽइह चे"ति ॥२७॥ सा दक्षिणा ॥२८॥ उदगुद्वासयति हविश्च ॥२९॥४॥

वा पवित्रे प्रस्तरे करोति ।

अत्रावसरे वा ब्रह्मप्राशित्रप्राशनं नाभ्यालम्भनान्तं करोति । ततोऽध्वर्यु-र्ब्रह्मभागमाहवनीयं पूर्वेण परिहृत्य ब्रह्मणे समर्पयति । ब्रह्माऽवत्तं भागं प्रति-गृह्य प्राशित्रे निदधाति । ततोऽध्वर्युर्यजमानभागमपरेण गार्हपत्यं परि-हृत्य यजमानाय समर्पयति अप्रोषिते यजमाने । प्रोषिते तत्रैव तिष्ठति । यजमानस्तु तं भागं बर्हिष्येव निदधाति । तथा चाश्वलायनः । "मार्जयि-त्वाऽस्मिन्ब्रह्मभागं निदध्यात् पश्चात्कुशेषु यजमानभागमि"ति(१) ।

ततोऽध्वर्युः अन्वाहार्यं स्थाल्याः स्रुवेणाभिघार्योदगुद्वास्य गार्हपत्य-दक्षिणाग्न्योरन्तरालेन दक्षिणाग्नेर्दक्षिणेन च नीत्वा ब्रह्मयजमानयोर-न्तरालेन हृत्वा तत्रापि यजमानाद्बहिर्ब्रह्माणमन्तरेणाहवनीयं पूर्वेण सं-चरेणानीय वेद्यां निधाय प्रजापतेर्भागोऽसीत्यालभते ।

ततो यजमानोऽस्याः पौर्णमासेष्टेः समृद्ध्यर्थं अन्वाहार्यं दक्षिणां ब्रह्मणे होत्रे अध्वर्यवे अग्नीधे च समविभागेनाहं संप्रददे । ब्रह्मन्यस्ते० भा-गः स प्रतिगृह्यतां, होतर्यस्ते०, अध्वर्यो यस्ते० अग्नीद्यस्ते० । द्यौस्त्वा ददा-त्विति सर्वेषां प्रतिग्रहमन्त्रः । ब्राह्मणा अयं व ओदनः प्रतिगृह्णीतेति शाखान्तरे दानमन्त्रः पठितोऽस्ति । ततस्तमन्वाहार्यमुदगुद्वासयति, पाञ्यादिस्थं हविरुच्छिष्टं चोदगुद्वासयति ॥ ४ ॥

इति तृतीयस्य चतुर्थी कण्डिका ॥

---

१. १. १२. १४. ।

समस्योल्मुके समिधमादायाऽऽह ब्रह्मन्प्रस्थास्यामि, समिधमाधायाग्निमग्नीत्सम्मृड्ढीति ॥१॥ एषा तऽ इति होताऽनुमन्त्रयते ॥२॥ अजानति यजमानः ॥३॥ सम्मार्ष्टि पूर्ववदपरिक्रामꣳ सकृत्सकृत्सम्रुवाꣳसमिति ॥ ४ ॥ ब्रह्माऽनुज्ञातोऽनुयाजैस्त्रिभिश्चरत्यौपभृतꣳ समानीय ॥५॥ अतिक्रम्याश्राव्याह देवान्यजेति ॥६॥ यज यजेत्युत्तरौ ॥ ७ ॥ देवान्देवानिति वा सर्वत्र नियमशब्दात् ॥ ८ ॥ विकृतिदर्शनाच्च ॥९॥ प्रतीचो जुहोति ॥१०॥ उपसत्सु च ॥ ११ ॥ ध्रुवः ॥ १२ ॥ चतुर्थꣳ समानीय प्राचीम् ॥ १३ ॥ अभिचरन्ननुयाजानुमन्त्रणमशान्यमुं जहि

---

ततोऽध्वर्युरुल्मुके आहवनीयमध्ये आनीय परिशेषितमिध्मकाष्ठं हस्तेन गृहीत्वा प्रेष्यति । ब्रह्मन्प्रस्थास्यामीति ब्रह्माणं पृच्छति । समिधमाधायाग्निमग्नीत्संमृड्ढीत्यग्नीध्रं प्रति प्रैषः ।

ततो ब्रह्मा एतं ते देव सवितरित्यादि मादयन्तामित्यन्तं (२.१२.—१३.) पठित्वा ॐ३प्रतिष्ठेति (२.१३.) ब्रूयाद्वा न ब्रूयाद्वा ।

ततोऽग्नीदुत्तरतस्तिष्ठंस्समिधमाहवनीयेऽभ्याधायोत्तरपार्श्वे तिष्ठन्नेवाग्ने वाजजिद्वाजं त्वा ससृवाꣳसमिति (२.१४.) मन्त्रेणानुपरिधि दक्षिणपश्चिमोत्तरपार्श्वेष्वग्निं सकृत्सकृत्संमार्ष्टि । प्रतिदिशं मन्त्रावृत्तिः । ततः सकृत्तूष्णीं मध्ये उपरिष्टात्संमार्ष्टि । ततो होता आहवनीयेऽभ्याहितां तां समिधमेषा ते अग्न इत्यनुमन्त्रयते (२.१४) । होतर्यनुमन्त्रणं कर्त्तुमजानति यजमानोऽनुमन्त्रयते ।

ततो ब्रह्मणा प्रतिष्ठेत्यनुज्ञातोऽध्वर्युरौपभृतं सशेषं जह्वां समानीय स्रुचावादायातिक्रम्याश्राव्य देवान्यजेति होतारं प्रेष्यति । ततो जुहूमवतार्य प्रदीप्तायाः समिधः पूर्वार्द्धे प्रथमं तृतीयं भागं जुहोति । इदं देवाय बर्हिषे इति त्यागः ।

पुनर्जुहूमध्युह्याश्राव्य देवान्यजेति प्रैषः । जुहूमवतार्य पूर्वहुतात्प्रतीच्यां समिदुपरि मध्यभागे होमः । इदं देवाय नराशंसायेति त्यागः ।

पुनर्जुहूमध्युह्याश्राव्य देवान्यजेति प्रैषः । अवतार्य द्वितीयवारहुतापेक्षया पश्चात्समिधि मूलभागे होमः । इदं देवायाग्नये स्विष्टकृत इति त्यागः । एवं प्रत्यक्संस्था एते होतव्याः । स्वयं तु ध्रुव एकत्राविचल-

ह्रादुन्यमु जह्युल्कुष्यमुं जहीति ॥१४॥ एवं प्रवृद्धौ समं विभजेत् ॥१५॥ स्वस्थानान्त्येन वोपायित्वात् ॥ १६ ॥ एत्य जुहूपभृतौ व्यूहत्यग्नीषोमयोरिति जुहूं प्राचीं दक्षिणेनोत्तानेनाग्नीषोमौ तामितीतरेणेतरां नीचा प्रतीचीम् ॥१७॥ यथादेवतमन्यत् ॥१८॥ अध्वर्युर्वाऽनूज्जयत्वयं यजमानो वाजस्यैनमिति पूर्वे, यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टीत्युत्तरे ॥१९॥ अभ्युक्ष्य जुह्वा परिधीनक्ति यथापूर्वम् ॥ २० ॥ ५ ॥

---

स्थित एव जुहोति ।

अभिचारं कुर्वन्यशन्यमुं जहीति प्रथममनुयाजमनुमन्त्रयते, ह्रादुनीति द्वितीयम्, उल्कुषीति तृतीयमनुमन्त्रयते । तत उदकस्पर्शः । अभिचाराभावे उदकस्पर्शाभावः ।

ततः प्रत्यागत्योत्तरत उपविश्यौपभृतं जुह्वां सर्वं समानीय देवेभ्यः स्वाहेति प्राचीमाहुतिं जुहोति । "अनया आहुत्या समिधि प्रत्यक्संस्थान्हुतान्त्रीननुयाजान्संभिनत्ती"ति सूत्रान्तरेषु । इदं देवेभ्य इति त्यागः ।

ततः प्रत्यागत्य स्वस्थाने स्रुचावासाद्य व्यूहति । तत्राध्वर्युः सव्येन वेदं गृहीत्वा दक्षिणेन पाणिनोत्तानेन जुहूं प्रस्तरात्प्राचीं प्रेरयति । तन्मन्त्रः-अग्नेः अग्नीषोमयोः (उपांशु) अग्नीषोमयोरुज्जितिमनूज्जयत्वयं यजमानो वाजस्यैनं प्रसवेन प्रोहामीति । ततो दक्षिणेन वेदमादाय सव्यहस्तेनाधोमुखेनोपभृतं प्रतीचीं बहिर्वेदि प्रेरयति-अग्निः अग्नीषोमौ (उपांशु)अग्नीषोमौ तमपनुदन्तु यमयं यजमानो द्वेष्टि यश्चनं द्वेष्टि वाजस्यैनमिति मन्त्रेण ।

यजमानो वा स्वस्थानाद्वेदेः पश्चादागत्य स्रुचौ एवमेव व्यूहति । मन्त्रमात्रे विशेषः—अग्नेः अग्नीषोमयोः अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेनापोहामीति (२.१५.) जुह्वाः । अग्निः अग्नीषोमौ अग्नीषोमौ तमपनुदन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामीत्युपभृतः (२.१५.) । ततोऽध्वर्युः स्रुचावभ्युदय स्वस्थाने प्रत्यासादयति ।

मानवे—"विषूची व्यूहति प्राचीं जुहूं प्रस्तरात् प्रतीचीमुपभृतं बहिर्वेदेर्निरस्याभ्युदय प्रत्यासादयति न जुहूं प्रस्तर इति एवं सर्वेषु" ॥

इति तृतीयस्य पञ्चमी कण्डिका ॥ ५ ॥

र्वसुभ्य इति प्रतिमन्त्रम् ॥१॥ प्रथमं परिधिं गृहीत्वाऽऽश्राव्या "इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूही" ति ॥ २ ॥ पशौ प्रेष्येति ॥ ३ ॥ सञ्ज्ञानाथामिति प्रस्तरादानम् ॥४॥ विधृती स्थाने कृत्वाऽनक्त्येनं व्यन्तु वय इति ॥ ५ ॥ अग्रं जुह्वामुपभृति मध्यं मूलमितरस्याम् ॥ ६ ॥ मरुतामिति नीचैर्हृत्वा तृणमादायाऽनुप्रहरति ॥७॥ हस्तेनाचरति॥८॥ यजमानभागं च प्रोषिते ॥ ९ ॥ क्षत्रियवैश्ययोश्च नित्यम् ॥ १० ॥ "अहं त्वदस्मि मदसि त्वमेतन्मम त्वं योनिस्तव योनिरस्मि । ममैव सन्द्विवि देवेष्वधि पुत्रः पित्र्ये लोककृज्जातवेदः स्वाहे"ति॥११॥सूक्तवाकान्ते॥१२॥ अग्नीदाहानुप्रहरेति ॥१३॥ प्रास्य तृणं चक्षुष्पा इत्या-

---

ततो जुहूमादाय वसुभ्यस्त्वेति ( २० १६० ) मध्यमपरिधिं जुह्वा अनक्ति, रुद्रेभ्यस्त्वेति दक्षिणम् , आदित्येभ्यस्त्वेत्युत्तरम् । ततो जुहूं प्रस्तरादुत्तरतः सादयति न प्रस्तरे ।

ततः प्रथमं परिधिमालभ्याश्राव्येषिता दैव्या होतार इति प्रैषं होतारं प्रत्याह ।

ततः संजानाथामिति( २० १६० ) सपवित्रं प्रस्तरमादाय विधृती यतः प्रदेशाद् गृहीते तत्रैव निधाय व्यन्तु वय इति (२० १६०) प्रस्तरस्याग्रं जुह्वामनक्ति, मध्यमुपभृति, मूलं ध्रुवायां तेनैव मन्त्रेणानक्ति ।

ततः स्वयं गृहीत्वा प्रस्तरं स्रुचां दक्षिणेनानीय नीचैर्भूमिलग्नमिव होमार्थमाहवनीयं प्रति हरति मरुतां पृषतीरिति मन्त्रेण (२.१६) । ततः प्रस्तरादेकं तृणं पृथगादाय सूक्तवाकान्ते जुह्वा प्रस्तरं प्रागग्रमुदगग्रं वा जुहुयात् । "तं प्राञ्चमनु समस्यति अथो उदञ्चमि"त्युभयथा श्रुतेः ( १.८.३.१८. ) । तत्र इदमग्नये सोमायाग्नयेऽग्नीषोमाभ्यामग्नीषोमाभ्यां देवेभ्य आज्यपेभ्योऽग्नये होत्रायेति त्यागः ।

ततो हुतं प्रस्तरमध्वर्युरङ्गुलिभिरग्नौ प्रेरयेत् । यजमानः प्रोषितश्चेत्सूक्तवाकान्तेऽध्वर्युर्हस्तेनैव यजमानभागमाहवनीये जुहुयात् । इदं जातवेदस इति त्यागः । ततोऽग्नीदनुप्रहरेत्यध्वर्युं प्रति ब्रूयात् । ततोऽध्वर्युः प्रस्तराद् गृहीतं तृणमग्नावनुप्रहरति । चक्षुष्पा इत्यात्मानमालभते

त्मानमालभते ॥१४॥ सम्वदस्वागानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीत्येतेषाॸ सम्वदस्वागञ्छ्रौषडित्यग्नीच्छेषमितरो व्यत्यासं ब्रूतः ॥१५॥ परिधीननुप्रहरति यं परिधिमिति प्रथममितरौ च युगपदग्नेः प्रियमिति ॥१६॥ स्रुचौ प्रगृह्णाति सॸस्रवभागा इति सॸस्रवाञ्जुहोति ॥१७॥ घृताची ऽइति धुरि निदधात्यनसि चेद् ग्रहणम् ॥१८॥ स्फ्ये पात्र्यां चेत् ॥१९॥ यज्ञ नमश्च त इति वेदिमालभते ॥२०॥ वेदॸ होता स्रुक्स्रुवमध्वर्युराज्यस्थालीमग्नीदादाय ॥२१॥६॥

पत्नीसंयाजेभ्यो गार्हपत्यं गच्छन्ति ॥१॥ अध्वर्युः

---

(२१.६) । उदकस्पर्शः ।

ततोऽग्नीत्सम्वदस्वेत्याह । अगानग्नीदित्यध्वर्युः । अगन्नित्यग्नीत् । श्राश्रवयेत्यध्वर्युः । श्रौषडित्यग्नीत् । स्वगा दैव्येत्यध्वर्युः ।

ततोऽध्वर्युर्यं परिधिमिति (२. १७.) प्रथमं परिधिं हस्तेनैवानुप्रहरति । दक्षिणोत्तरौ परिधी अग्नेः प्रियमित्यनुप्रहरति (२. १७.) ।

ततो जुहूपभृतावादाय सॸस्रवभागा इति (२. १८.) संस्रवानुभाभ्यां स्रुग्भ्यां जुहोति । इदं विश्वेभ्यो देवेभ्य इति त्यागः ।

ततो घृताची स्थो धुर्याविति (२. १९.) मन्त्रेण स्रुचौ अनसो धुरि निदधाति अनडुहोर्योजनस्थाने, यद्यनसः पूर्वं हविर्ग्रहणं कृतं भवति । अथ यदि पात्र्याः सकाशाद्धविर्ग्रहणं कृतं तदोत्तरांसे स्फ्यमुदगग्रं निधाय तस्योपरि प्रागग्रे जुहूपभृतौ निदधाति घृताची इति मन्त्रेण (२.१९.) । ततो लिङ्गाद्यजमानो यज्ञ नमश्च त इति (२. १९.) वेदिमालभते स्फ्योपग्रहेण ॥ ६ ॥

इति तृतीयस्य षष्ठी कण्डिका ॥ ६ ॥

---

ततो होता वेदमादायाध्वर्युराज्यलिप्तां जुहूं स्रुवं च प्रक्षाल्यादायाग्नीदाज्यस्थालीमादायाऽऽग्नीध्रप्रथमाः पत्नीसंयाजान् कर्त्तुं गार्हपत्यं प्रति गच्छन्ति ।

आपस्तम्बः—“आज्यलेपान् प्रक्षाल्य सस्रवे जुहूपभृतावादत्ते, तथा

**पूर्वदक्षिणेन गार्हपत्यमेत्य पूर्वेणा, परेणान्तरेण पत्नीमेकेषाम् ॥२॥ उपविश्य दक्षिणं जान्वाच्य ॥३॥ एवꣳ सर्वत्रोपविष्टहोमेषु ॥४॥ उपाꣳशु चरन्ति ॥५॥ चरणशब्दे सर्वं देवताऽन्यत्र ॥६॥ यजति सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमिति ॥७॥ तृतीयेऽन्तर्धानं पुरस्तात् ॥८॥ पत्न्यन्वारभतेऽध्वर्युम् ॥९॥ शंय्वन्तं भवती-**

---

आग्नीध्रप्रथमाः प्रत्यञ्चो यन्ति अपरेण गार्हपत्यमूर्द्ध्वज्ञव आसीना, दक्षिणोऽध्वर्युरुत्तर आग्नीध्रो मध्ये होतेति, वेदमुपभृतं कृत्वा जुह्वा स्रुवेण चेत्येक" इति(१)।

तत्राध्वर्युर्गार्हपत्यदक्षिणाग्नी अन्तरेण गत्वा पत्न्या अग्रे गार्हपत्यस्य दक्षिणत ईशानाभिमुख उपविशति। अथवा आहवनीयं पूर्वेणैत्य दक्षिणाग्निं दक्षिणेनैवागत्य पूर्वोक्तस्थाने उपविशति। अथवा गार्हपत्यमुत्तरेण परेण च गत्वा पत्नीमन्तरेण पत्नीं बाह्यतो वा गत्वा पूर्वोक्तस्थाने तथैवोपविशति, इत्यध्वर्योः सञ्चरचतुष्टयं विकल्पेन। गार्हपत्यस्य पश्चाद्धोता ऊर्ध्वजानुरास्ते, तस्योत्तरतो दक्षिणामुखोऽग्नीत्।

ततोऽध्वर्युर्वेदं गृहीत्वा सोमायानुब्रूहीत्युक्त्वा आज्यस्थाल्या जुह्वां चतुर्गृहीतमाज्यं गृहीत्वाऽऽश्राव्य सोमं यजेत्याह। इदं सोमायेति त्यक्ते जुहोति।

ततस्त्वष्ट्रेऽनुब्रूहीत्युक्त्वा पुनश्चतुर्गृहीतं कृत्वाऽऽश्राव्य त्वष्टारं यजेत्याह। इदं त्वष्ट्रे। हुत्वा अन्तर्द्धानं गार्हपत्यस्य पुरस्तात्कृत्वा पत्न्याऽध्वर्योरन्वारम्भे कृते—

देवानां पत्नीभ्योऽनुब्रूहीत्युक्त्वा जुह्वां चतुर्गृहीतं गृहीत्वाऽऽश्राव्य देवानां पत्नीर्यजेत्याह। इदं देवानां पत्नीभ्यः। हुत्वाऽन्तर्द्धानं हस्तेन पराकरोति। अन्वारम्भश्चानुवाचनादिहोमान्तः। पत्न्या असन्निधाने येन केन चिदध्वर्योरन्वारम्भः कार्यः। अध्वर्युसंस्कारकत्वात्।

ततोऽग्नये गृहपतयेऽनुब्रूहीत्युक्त्वा जुह्वां चतुर्गृहीतं गृहीत्वाऽऽश्राव्याग्निं गृहपतिं यजेत्याह। इदमग्नये गृहपतय इत्युक्ते जुहोति।

ततः स्रुवं भूमौ निधायेडापात्र्यां पञ्चकृत्व आज्यमवदाय प्रत्यङ्मुखो होत्रे इडां प्रदायाविसृजन्होतारं पत्नीं च प्रदक्षिणीकृत्य होतुः पुरस्तात्प्रत्यङ्मुख उपविश्य होत्राऽर्पितामिडां प्रतिगृह्येडायाः सकाशात् स्रुवे-

---

(१) ३.९.१-९

डान्तं वा ॥१०॥ शंय्वन्ते वेदतृणमादायानक्ति प्रस्तरवत्स्रुचि स्रुवे स्थाल्यां च ॥११॥ अग्नीदाहानुप्रहरेति॥१२॥ प्रास्यतृणादि पूर्ववत्॥१३॥ शंय्वन्ते स्रुक्स्रुवं प्रगृह्णात्यग्नेऽदब्धायविति ॥१४॥ सव्येनावृत्य दक्षिणाग्नौ जुहोत्यग्नय इति सरस्वत्या इति च ॥१५॥ "उलूखले मुसले यच्च शूर्पे ऽआशिश्लेष दृषदि यत् कपाले। उत्प्रुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहे"ति ॥१६॥७॥

---

णाज्यमवदाय होतुरङ्गुलिपर्वणी उत्तममध्यमे स्रुवेणाक्त्वा होतुर्हस्ते चतुष्कृत्वोऽध्वर्युराज्यमवद्यति। होता स्वयं पञ्चमं गृह्णीयात्। तत उपहूयमानायामिडायां सर्वे ऋत्विजो यजमानश्च होतारमन्वारभन्ते, इडां वा। उपहूतोऽयं यजमान इति होत्रा पठ्यमाने यजमानो मयीदमिति ( २. १० ) जपति।

सर्वे सञ्चरेण निष्क्रम्येडां भक्षयित्वा पुनस्तथैवागत्यापरेण वेदिमुपविश्य ब्रह्मादिक्रमेण दर्भैरुदकमादाय सुमित्रिया न इति ( ६. २२. )। मार्जयन्ते।

ततः सर्वे यथास्थानमुपविशन्ति। अध्वर्युर्गार्हपत्यस्योत्तरत उपविश्य वेदस्यैकं तृणमाच्छिद्य तस्य तृणस्याग्रं जुह्वामनक्ति मध्यं स्रुवे मूलं स्थाल्यामक्त्वाऽग्नीदनुप्रहर इत्याह। अध्वर्युस्तदक्तं तृणं गार्हपत्ये प्रक्षिप्य चतुष्पा इत्यात्मानमालभ्याप ( २. १६. ) उपस्पृशति।

ततोऽग्नीस्संवदस्वेत्याह। अध्वर्युरगानग्नीदित्याह। अग्नीदगन्निति प्रत्याह। श्रावयेत्यध्वर्युः। श्रौषडित्यग्नीत्। स्वगा दैव्या होतृभ्य इत्यध्वर्युर्होतारं प्रेषयेत्।

ततो जुहूं स्रुवं च सम्प्रगृह्याग्नेऽदब्धायवित्यनेनो (२. २०.) भाभ्यां संस्रवान् जुहोति। इदमग्नयेऽदब्धायवेऽशीतमायेति त्यागः।

ततो गार्हपत्यं परीत्य दक्षिणाग्नेरुत्तरत उपविश्य समिदाधानपूर्वं सकृद् गृहीतमाज्यं जुह्वा दक्षिणाग्नावग्नये संवेशपतये (२. २०.) स्वाहेति जुहोति। इदमग्नये संवेशपतये। पुनः सकृद् गृहीतं गृहीत्वा सरस्वत्यै यशोभगिन्या इति ( २. २. ) जुहोति। इदं सरस्वत्यै यशोभगिन्यै ॥७॥

इति तृतीयस्य सप्तमी कण्डिका ॥७॥

**पिष्टलेपाञ्जुहोति ॥१॥ पत्नीं वेदं प्रमुञ्चति वेदो-सीति, योक्तं च "प्र मा मुञ्चामि वरुणस्य पाशाद्येन माऽबध्नात्सविता सुशेवः। ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां मा सह पत्या दधात्वि"ति ॥२॥ स्तृणात्यावेदेः ॥३॥ ध्रौवात् समिष्टयजुर्जुहोति देवा गातुविद इति ॥४॥ बर्हिः सम्बर्हिरिति ॥५॥ वेद्यां प्रणीता निनयति परीत्य**

---

ततो जुह्वां चतुर्गृहीतमाज्यं गृहीत्वा केवलमाज्यं प्रायश्चित्तार्थं जुहोति। अथवा चतुर्गृहीतं गृहीत्वा तत्र पिष्टलेपं निधाय अथवोपस्तीर्य पिष्टलेपं द्विरवदायाभिघार्योलूखलमुसल इति जुहोति।

तैत्तिरिसूत्रे-"अथ स्रुचि चतुर्गृहीतं गृहीत्वाऽपसलवि पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं जुहोत्युलूखले मुसल इत्यादिना"। मानवे-"तस्यां पुनर्गृहीत्वा पिष्टलेपं द्विरवत्तमभिघार्योलूखल" इत्यादि।

आपस्तम्बः-"चतुर्गृहीत आज्ये पिष्टलेपानोप्य जुहोत्युलूखल" इत्यादि(१)। त्यागश्च प्रकृतौ विकृतौ च इदं विश्वेभ्यो देवेभ्य इत्येव कार्यः।

ततो वेदोऽसीति (२. २.) मन्त्रेण पत्नी वेदं विमुञ्चति। ततः प्र मा-मुञ्चामीति योक्त्रं पत्नी विमुञ्चति।

ततो होता वेदयोक्त्रे परिविच्य पत्नीं वाचयित्वा गार्हपत्यस्योत्तरत आरभ्य वेदेः पूर्वान्तं यावद्वेदं स्तृणाति। ततोऽध्वर्युर्ध्रौवमाज्यं विलाप्य बर्हिषः सकाशात्कुशमुष्टिं सव्ये पाणौ गृहीत्वोर्ध्वास्तिष्ठन्देवा गातुविद इति (२. २१.) मन्त्रेण सन्ततं ध्रुवयैव समिष्टयजुर्जुहोति। इदं वाताय न ममेति त्यागः। दर्भमुष्टिमनुप्रहरति।

ततः सर्वं बर्हिर्जुह्वामवधाय सम्बर्हिरित्याहवनीये (२. २२.) जुहोति। इदं दिव्याय नभसे। इदं बर्हिषे न मम इति केचित्।

ततः प्रणीता वेदिमध्ये आसाद्याहवनीयं प्रदक्षिणीकृत्य वेदिमध्ये उदङ्मुख उपविष्टो वेद्यां प्रणीता निनयति कस्त्वा वि मुञ्चतीति मन्त्रेण (२. २३)। ततोऽप्रदक्षिणं प्रत्यागच्छति।

ततः प्रथमकपालेन फलीकरणानन्तरं स्थापितान् कणान्निधायोत्करस्योपरि समीप एव कृष्णाजिनं सव्ये धारयन् कृष्णाजिनस्याधस्तादुत्करे कपालेनैव कणान्प्रास्यति रक्षसां भागोऽसीति (२. २३.) मन्त्रेण। इदं रक्षोभ्य इति त्यागः। उदकोपस्पर्शनम्।

---

(१) ३. १०. १.

कस्त्वेति ॥६॥ पुरोडाशकपालेन कणानपास्यत्यधः कृष्णाजिनꣳ रक्षसामिति ॥७॥ पूर्णपात्रं निनयति परीत्य सन्ततं यजमानोऽञ्जलिना प्रतिगृह्णाति संवर्चसेति ॥८॥ मुखं विमृष्टे ॥९॥ विष्णुक्रमान्क्रमते दिवि विष्णुरिति प्रतिमन्त्रं पृथिव्यामितीतऽ ऊर्ध्वो वा ॥१०॥ अस्मादन्नादिति भागमवेक्षते ॥११॥ अस्यै प्रतिष्ठाया इति भूमिम् ॥१२॥ अगन्म स्वरिति प्राङ् ॥१३॥ संज्योतिषेत्याहवनीयम् ॥१४॥ स्वयम्भूरिति सूर्यम् ॥१५॥ वर्चोदा इति यं वा कामं कामयते ॥१६॥ सूर्यस्येत्यावर्त्तते प्रदक्षिणम् ॥१७॥ ग्रहग्रहणप्रतिगरहोमेषु च तूष्णीम् ॥१८॥ गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत ऽइति शतꣳ

ततः पूर्णपात्रमादाय पूर्वेणाहवनीयं परीत्य दक्षिणत उत्तराभिमुखो यजमानस्याञ्जलौ सन्ततं निनयति। निनीयमानं पूर्णपात्रं यजमानोऽञ्जलिना प्रतिगृह्णाति संवर्चसेति ( २.२४. )। ततस्तूष्णीं मुखं विमृष्टे।

अत आरभ्य भागप्राशनान्तं सर्वं कर्म यजमानः करोति। तत उत्थाय दक्षिणवेदिश्रोणेरारभ्याहवनीयादर्वाक् विष्णुक्रमान् क्रमते।

आपस्तम्बः—"दक्षिणे वेद्यन्ते दक्षिणेन पदा चतुरो विष्णुक्रमान्प्राचः क्रामत्युत्तरमुत्तरं ज्यायांसमतिहरन्सव्यम्, नाहवनीयमतिक्रामती" ति(१)। 'दक्षिणाद्वेदिश्रोणिदेशादाहवनीयं यावदि"ति शाङ्खायनः(२)।

तेन दक्षिणश्रोणेरारभ्य दिवि विष्णुरिति (२।२५) मन्त्रेण दक्षिणपादेन दक्षिणे वेद्यन्ते प्राच्यां गच्छति। सव्यं पादं ततोऽर्वागेव स्थापयति।

ततोऽन्तरिक्षे विष्णुरिति ततः प्राच्यां द्वितीयं, पृथिव्यां विष्णुरिति ततोऽपि प्राच्यां तृतीयम्। अथवा प्रथमं पृथिव्यां विष्णुरिति मन्त्रेण क्रामति, ततोऽन्तरिक्ष इति, ततो दिवि विष्णुरिति क्रमविकल्पः। क्रमणं कुर्वता आहवनीयस्यातिक्रमणं न कर्त्तव्यम्।

ततोऽस्मादन्नान्निर्भक्त इति ( २।२५ ) स्वभागमवेक्षते उपविष्ट एव। ततोऽस्यै प्रतिष्ठायास्ततो निर्भक्तो योऽस्मानिति (२।२५) वेदिभूमिमवेक्षते। ततोऽगन्म स्वरिति ( २।२५ ) प्राचीं दिशमीक्षते।

सं ज्योतिषाऽभूमेत्याहवनीयमीक्षते (२।२५)। स्वयम्भूरिति (२।२६) सू-

( १ ) ४. १४. ६-७. ( २ ) ४. १२. ११.

हि मा इति ब्रूयाद्वा ॥१९॥ सूर्यस्येत्यावर्त्तते प्रदक्षिणम् ॥२०॥ गच्छति प्राङुरु विष्णविति ॥२१॥ "ततोऽसि तन्तुरस्यनु मा तनु ह्यस्मिन्यज्ञे ऽस्याᳬ साधुकृत्यायामस्मिन्नन्नेऽस्मिँल्लोक ऽइदं मे कर्मेदं वीर्य्यं पुत्रोऽनुसन्तनोत्वि"ति पुत्रस्य नाम गृह्णाति ॥२२॥ आत्मनोऽविद्यमाने, "तन्तवे त्वा, ज्योतिषे त्वे"ति वा ॥२३॥ आहवनीयमुपतिष्ठते तू-

र्यमीक्षते । वर्चोदा इति सूर्यं प्रार्थयते । अथवा वर्चोदा इत्यस्य स्थाने धनदा असि धनं मे देहि, गोदा असि गा मे देहि पुत्रदा असि पुत्रान्मे देहीत्येवं यं कामं वाञ्छति तं याचते । ततः सूर्यस्यावृतमिति ( २।२६ ) प्रदक्षिणमावर्त्तनं करोति । ततोऽप्रदक्षिणं चावर्त्तते ।

ततो गार्हपत्यस्य समीपे आगत्याग्ने गृहपत ( २।२७ ) इति गार्हपत्यमुपतिष्ठते । अत्र मन्त्रे शतं हिमा इत्ययमंशः पठनीयो न वा । पुनः ( २।२७ ) प्रदक्षिणमावर्त्तते । ततस्तूष्णीमप्रदक्षिणं चावर्त्तते । तत उरु विष्णविति मन्त्रेण गार्हपत्यसमीपात्प्राच्यां गच्छति ।

ततो वेदिमध्ये उपविष्टः पुत्राणां नाम गृणाति । तत्र मन्त्रः—ततोसि तन्तुरस्यनु मा तनुहीति । अस्मिन्मन्त्रे इदं मेऽकर्मेदं वीर्यं पुत्रोऽनुसन्तनोत्वित्यत्र वीर्यं पुत्रो यज्ञदत्तशर्माऽनु संतनोत्वित्येवं पुत्रनाम गृह्णाति । अनेकेषु पुत्रेषु सर्वेषां ज्येष्ठाऽनुक्रमेण नामग्रहणम् । प्रतिपुत्रं च ततोऽसि तन्तुरसीत्यस्यावृत्तिः । ज्येष्ठस्य पुत्रस्य वेति । यावन्तो वा भवन्ति तावतां नाम ग्राह्यमिति शाङ्खायनः (१)प्रियस्य पुत्रस्येत्यापस्तम्बः(२) । अविद्यमाने पुत्रे इदं मे कर्मेदं वीर्यं विष्णुमित्रोऽनुसंतनोत्वित्यात्मनो नाम गृह्णाति । इदं मे कर्मेदं वीर्यं देवदत्तोऽहं संतनवानीति हरिस्वामिनः प्रयोगं प्रदर्शितवन्तः ।

तत उत्थाय तूष्णीमाहवनीयमुपतिष्ठते ।

ततोऽग्ने व्रतपत इदमहमित्यनयोर्मध्ये येन मन्त्रेण पूर्वं व्रतं गृहीतं भवति तेनैवेदानीं विसृजते । आहवनीयस्याग्रे स्थित्वा तं मन्त्रं पठतीत्यर्थः । यद्यग्ने व्रतपते व्रतं चरिष्यामीत्यनेन गृहीतं तदाऽग्ने व्रतपते व्रतमचारिषमित्यनेन विसर्गः कार्यः । यदीदमहमनृतादित्यनेन प्राग्व्रतमुपेतं तदा इदमहं य एवास्मि सोऽस्मीत्यनेन विसर्गः कार्यः ।

तदनन्तरं पूर्वेणाहवनीयं गत्वा दक्षिणाग्नेरुत्तरेण गत्वाऽपराग्न्योर-

( १ ) ११. १८. )　　( २ ) ४. १६. ७

ष्णीम् ॥२४॥ व्रतं विसृजते येनोपेयात् ॥२५॥ संयज्ञपतिराशिषेति भागं प्राश्नाति ॥२६॥ ब्राह्मणं तर्प्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्प्पयतीति श्रुतेः ॥२७॥८॥

---

## अथ चतुर्थोऽध्यायः ।

अपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावास्यायाम् ॥१॥

न्तरालेन निष्क्रामेत् । ततः संयज्ञपतिराशिषेति मन्त्रेण स्वभागं प्राश्नाति ।

ब्रह्माऽप्यत्रैव स्वभागं प्राश्नाति। "तमिष्टौ संस्थितायां प्राश्नीयादि"ति छन्दोगसूत्रे लाट्यायनः(१) "ब्रह्मभागमाहरति नाऽसंस्थिते तं भक्षयती"त्यापस्तम्बः(२) । "तं शंय्वन्ते प्राश्नात्यूर्द्ध्वं वा समिष्टयजुष" इति मानवे । संस्थिते यत्प्राशनं तत्कर्मापवर्गान्ते कर्त्तव्यम् । ऊर्ध्वं वा समिष्टयजुष इत्यस्मिन्पक्षे समिष्टयजुषोऽनन्तरं यदेच्छा तदा प्राशनम् ।

ततोऽध्वर्युर्ब्राह्मणं तर्पयितवा इत्येवं यजमानं प्रेष्यति । ततो यजमानो वाग्रूपवयः श्रुतशीलवृत्तादिगुणवन्तं ब्राह्मणं तृप्तिपर्यन्तमन्नं भोजयति । कर्मापवर्गे ब्राह्मणभोजनं, वाग्रूपवयः श्रुतशीलवृत्तानि गुणाः । श्रुतं तु सर्वानत्येति-"न श्रुतमतीयादि"ति बह्वृचगृह्ये श्रुतत्वात् । ततो ब्राह्मणभोजनानन्तरं ब्रह्मा यथेतमेत्य ब्रह्मवरणानन्तरं येन मार्गेण स्वासने प्रत्यागतो भवति आहवनीयं पूर्वेण वाऽपरेण वा तेनैव प्रत्यागत्य नमः कृतायेति स्वाहाकारान्तेन मन्त्रेणाहवनीये प्रादेशमात्रीं समिधमादधाति । अथवा स्थाल्याः सकृद् गृहीतं जुह्वा अनेनैव मन्त्रेण जुहोति, अथवाऽनेनैवाहवनीयमुपतिष्ठते ।

इति पौर्णमासेष्टिः समाप्ता ॥ ८ ॥

इति श्रीत्रिरग्निचित्सम्राट्स्थपति महायाज्ञिक श्री प्रजापतिसुतयाज्ञिकदेवकृतायां कात्यायनपद्धतौ तृतीयोऽध्यायः ॥ ३ ॥

---

## अथ चतुर्थोऽध्यायः ।

पौर्णमासेष्टिरुक्ता अथ दर्शेष्टिरुच्यते । तत्र चतुर्दश्यां रात्रौ सायं प्रातर्द्दध्नाऽग्निहोत्रं हुत्वा स्थालीस्थस्य प्रातर्हुतशेषस्य सायं हुतशेषस्य चातञ्चनार्थं स्थापनम् ।

---

(१) ४. ७. ८. (२) ३, २०, ६.

**॥१॥ दक्षिणाग्नौ श्रपणं होमश्च ॥२॥ परिस्तीर्य तं पूर्ववत्पात्रासादनमेकशः ॥३॥ अपरेण गार्हपत्यं चरुमपूर्णं**

सान्नाय्यवति दर्शयागे करिष्यमाणे चतुर्दश्यां दध्ना होमो नान्यथा। अमावास्यायां पञ्चभूसंस्कारपूर्वकं पूर्वाह्ण एवाग्न्योरुद्धरणम्। ततोऽग्न्यन्वाधानम्, ततो मांसमैथुनवर्जनसङ्कल्पः, वपनं वा, ततो वैश्वदेवः, ततोऽपराह्णे पिण्डपितृयज्ञः, ततो दर्शश्राद्धम्। तदुक्तम्—

"पक्षान्ते कर्म निर्वर्त्य वैश्वदेवं च साग्निकः(१)।
पिण्डयज्ञं प्रकुर्वीत ततोऽन्वाहार्यकं बुध" इति।

पक्षान्तं कर्माग्न्यन्वाधानम्।

अथ पिण्डपितृयज्ञ उच्यते।

अस्य चाध्वर्युः कर्ता। स च त्रिधाविभक्तदिनतृतीयांशे भवतीति कर्कः। द्विधा विभक्तस्यैव द्वितीये भाग इत्यपरे।

तत्र पूर्वं नीविकरणं, तच्च कुशतिलसंयुक्तानां वस्त्रदशानां सव्यभागे परिहितवस्त्रेण संवेष्ट्यावगूहनम्। ततः सव्येनैव दक्षिणाग्नेः परिस्तरणमिष्टिवत्। होमस्य दैवत्वात्, परिस्तरणस्य तदङ्गत्वात्। येषामपसव्येनाग्नौकरणहोमः तेषां परिस्तरणमप्यपसव्येन पित्र्यत्वात्। अत्र होमवर्जं सर्वं कर्मापसव्येन दक्षिणाभिमुखेन च कर्त्तव्यम्।

ततोऽपसव्यं कृत्वा दक्षिणाग्नेरुत्तरतो दक्षिणसंस्थं दक्षिणाग्राणां पात्राणामेकैकेनासादनं न द्विशः। स्फ्यः शूर्पम्, अग्निहोत्रहवणी वा, स्थाली वा, व्रीहयः, कृष्णाजिनम्, उलूखलम्, मुसलम्, स्रुचि ग्रहणपक्षे अत्र चरुस्थाली, श्रपणार्थमुदकम्, आज्यम्, मेक्षणम्, तिस्रः समिधः, उदपात्रम्, सकृदाच्छिन्नानि, सूत्राणि च, ऊर्णा वा, वस्त्रदशा वा।

ततो गार्हपत्यस्य पश्चाद्दक्षिणाग्रेषु कुशेषु स्फ्यं निधाय तस्योपरिष्टात् पात्र्यां व्रीहीन् निदध्यात्। ततः स्रुचि ग्रहणपक्षे शूर्पेऽग्निहोत्रहवणीं निधाय चरुस्थाल्यां ग्रहणपक्षे शूर्पे चरुस्थालीं निधाय गार्हपत्यमपरेण दक्षिणामुख उपविश्य मनसोद्दिश्य तूष्णीमपूर्णां स्रुचं व्रीहीन् गृह्णीयात्। अपूर्णां स्थालीं वा तूष्णीं गृह्णीयात्। अत्र स्थाल्यैव ग्रहणं सकृदेव, स्रुक्पक्षे स्रुचैव मुष्टिना। "नीचा मुष्टिना व्रीहीन् गृह्णाती"ति

(१) मदनपारिजाते वैश्वदेवकालनिर्णये—"ननु वैश्वदेवस्य पक्षान्तपिण्डपितृयज्ञविधिबलादेव साग्निककर्तृत्वावगतेः पुनः साग्निकशब्दोपादानमनर्थकमिति चेत्, मैवम्। अन्वाधानपिण्डपितृयज्ञकर्तुरौपासनाग्नेर्निवृत्त्यर्थत्वेन सार्थकत्वात्। तस्मादत्र साग्निः श्रौताग्निमानित्यर्थः।

स्रुचं वा तूष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमवहन्ति तिष्ठन् ॥४॥ सकृत्फलीकरोति ॥५॥ सारतण्डुलमपूर्णᳫँ श्रपयित्वाऽभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमायेति च ॥६॥ प्राग्य तद्दक्षिणेनोल्लिखत्यपहता इत्यपरेण वा ॥७॥ उल्मुकं परस्तात्करोति ये रूपाणीति ॥८॥ उदपात्रेणावनेजयत्यपसव्यᳫँ सव्येन वोद्धरणसामर्थ्यात् ॥९॥ असाववनेनिक्ष्वेति यजमानस्य पितृप्रभृति त्रीन्

शाङ्खायनः(१)। आपस्तम्बः—"पितृभ्यो वो जुष्टं निर्वपमीति तूष्णीमि"ति(२)। मुष्टिना ग्रहणपक्षेऽपि तावदेव सकृद् ग्राह्यम्, यावता स्रुक् स्थाली वा न पूर्यत इति।

तत उत्थाय दक्षिणाग्नेरुत्तरत उदग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य तस्मिन्नुलूखलं निधाय व्रीहीनोप्य मुसलमादायाऽवधाय दक्षिणाभिमुखस्तिष्ठन्नवहन्ति।

ततो वितुषीभूतेषूलूखलान्निष्काश्य शूर्पे न्युप्य निष्पूय तुषान्पृथक्कृत्वा सकृत्फलीकृत्य निष्पवनेन कणान्पृथक् कुर्यात्। ततः स्थाल्यामोप्य सकृत्प्रक्षाल्य दक्षिणाग्नावधिश्रित्य श्रपयित्वाऽभिघार्य दक्षिणत उद्वास्य दक्षिणाग्निं पूर्वेण प्रदक्षिणमानीय सव्यं कृत्वा तिस्रः समिधोऽभ्याधायोत्तरतः प्राङ्मुख उपविश्य दक्षिणं जान्वाच्य मेक्षणेन द्वे आहुती देवेभ्यो जुहोति—ॐ अग्नये कव्यवाहनाय स्वाहा (२. २९.), इदमग्नये कव्यवाहनाय। ॐ सोमाय पितृमते स्वाहा (२. २९.), इदं सोमाय पितृमते। ततः सव्येनैवाग्नौ मेक्षणप्रक्षेपः, होमाङ्गत्वात्।

ततोऽपसव्यं कृत्वा दक्षिणाभिमुखो भूत्वा दक्षिणाग्नेर्दक्षिणतः पश्चाद्वा अपहता इति (२. २९.) स्फ्येन दक्षिणसंस्थां लेखामुल्लिखेत्।

ततो रेखायाः परस्तादग्रतो ये रूपाणीत्युल्मुकं (२. ३०.) निदधाति।

तत उदपात्रमादाय लेखायां यजमानस्य पितृप्रभृति त्रीन्पुरुषानवनेजयति। अमुकसगोत्र यजमानपितः अमुकशर्मन्नवनेनिक्ष्वेति रेखामूले, अमुकसगोत्र यजमानपितामह अमुकशर्मन्नवनेनिक्ष्वेति रेखामध्ये, अमुकसगोत्र यजमानप्रपितामहामुकशर्मन्नवनेनिक्ष्वेति रेखान्ते, इति दक्षिणसंस्थं त्रयाणामवनेजनं कृत्वा मूलसमीपे एकप्रयत्नेनैव छिन्नानि दर्भतृणानि लेखायां दक्षिणाग्राण्यास्तीर्यावनेजनस्थाने पिण्डदानं करोति—

(१) २. ४. ६. (२) १. ७. ९.

॥१०॥ उपमूलं सकृदाच्छिन्नानि लेखायां कृत्वा यथाऽवनिक्तं पिण्डान् दद्यात्यसावेतत्तऽ इति ॥११॥ ये च त्वामन्विति चैके ॥१२॥ अत्र पितर इत्युक्त्वोदङ्ङास्तऽआतमनात् ॥१३॥ आवृत्याऽमीमदन्तेति जपति ॥१४॥ अवनेज्य पूर्ववन्नीविं विस्रंस्य नमो व इत्यञ्जलिं करोति ॥१५॥ एतद्व इत्युपास्यति सूत्राणि प्रतिपिण्डम् ॥१६॥ ऊर्णा दशा वा ॥१७॥ वयस्युत्तरे यजमानलोमानि वा ॥१८॥ ऊर्जमित्यपो निषिञ्चति ॥१९॥ अवघ्रायाऽवजिघ्रति यज-

---

अमुकसगोत्र यजमानपितः अमुकशर्मन्नेतत्त इति मन्त्रेण । ये च त्वा मन्वितीमं मन्त्रशेषं च केचित्कुर्वन्ति । एवं रेखामूले पितुः पिण्डं निधाय, ततः अमुकसगोत्र यजमानपितामह अमुकशर्मन्नेतत्त इति रेखामध्ये, ततोऽमुकसगोत्र यजमानप्रपितामह अमुकशर्मन्नेतत्त इति रेखान्ते। आर्द्रामलकमात्रः प्रथमः पिण्डः, तदपेक्षया द्वितीयः स्थूलः, तृतीयः स्थूलतरः । एवं स्तीर्णेषु सकृदाच्छिन्नेषु मूलमध्याग्रदेशेषु दक्षिणसंस्थान् त्रीन् पिण्डान् दत्त्वा,—अत्र पितर इत्यमुं मन्त्रं (२. ३१.) पिण्डाभिमुखः स्वरेण जपेत् ।

ततो हस्तं प्रक्षाल्याप्रदक्षिणमुदङ् पर्यावृत्याऽऽतमनादास्ते । पुनरप्रदक्षिणं पर्यावृत्य पिण्डाभिमुखोऽमीमदन्तेति ( २. ३१.) स्वरेण जपति ।

ततः पूर्ववत्पिण्डानामुपर्यवनेज्य नीविं विस्रंस्य नमो व इति (२. ३२.) षडञ्जलीन् करोति । नमस्कारार्थत्वाच्च पुटाञ्जलयः । तत्र नमो वः पितरो रसाय १, शोषाय २, जीवाय ३, स्वधायै ४, घोराय ५, नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो व इत्येतावता मन्त्रेण षष्ठमञ्जलिं कुर्यात् ।

ततो गृहान्नः पितर इति ( २. ३२. ) प्रतिपिण्डं पृथक् पृथक् त्रीणि त्रीणि सूत्राण्युपास्यति पिण्डानामुपरि निदधाति । पञ्चाशदूर्ध्वं यजमानस्य हृदयाद्युत्तमस्थानलोमानि वा प्रतिपिण्डमुपास्यति । आपस्तम्बः—"वाससो दशां छित्वा निदधात्यूर्णास्तुका वा पूर्वे वयसि उत्तर आयुषि स्वं लोम वे"ति ( १. १०. १. ) ।

तत ऊर्जं वहन्तीरिति मन्त्रेण (२. ३४.) उदपात्रस्थमवनेजनावशिष्टमुदकं पिण्डानामुपर्येव निषिञ्चति । ततः पिण्डान् स्थाल्यां प्रत्यवदधात्यध्वर्युः । ततो यजमानः स्थालीस्थान् पिण्डानवजिघ्रति ।

मानः ॥२०॥ उल्मुक-सकृदाच्छिन्नान्यग्नौ ॥२१॥ आधत्तेति मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा ॥२२॥ प्रेतेभ्यो ददाति जीवपितृकोऽपि जीवान्तर्हितेऽपि ॥२३॥ जीवपितृकस्य होमान्तम् ॥२४॥ अनारम्भो वा ॥२५॥ न व्यवेते जातूकर्ण्यः ॥२६॥ न जीवन्तमतीत्य ददातीति श्रुतेः ॥२७॥ पूर्वो वाऽङ्गत्वात् पिण्डपितृयज्ञः ॥२८॥ प्रकरणकाललिङ्गानुग्रहवचनानाहिताग्निश्रुतिभ्योऽनङ्गम् ॥२९॥ अङ्गं वा समभिव्याहारात् ॥३०॥ ॥१॥

इषो नोदेतेत्यदृष्टे वा पर्णशाखां छिनत्ति शमीलीं वेषे त्वेत्यूर्जे त्वेति वा ॥१॥ छिनद्मीति वोभयोः साकाङ्क्षत्वात् ॥२॥ सन्नमयामीति वोत्तरे ॥३॥ बहुलपलाशामशुष्काग्रां प्रागुदीचीमन्यतमां वा ॥४॥ व्रतमुपैति ॥५॥ यथोक्तं वा ॥६॥ मातृभिर्वत्सान्त्सꣳसृज्य वत्सꣳ शाखयो-

---

ततोऽध्वर्युः सकृदाच्छिन्नान्यग्नौ प्रक्षिप्य सव्यं कृत्वोल्मुकं दक्षिणाग्नौ प्रतिप्रास्यति । तत उदकोपस्पर्शनम् ।

पुत्रकामा गर्भग्रहणयोग्या ऋतुमती पत्नी आधत्त पितर इति मन्त्रेण (२. ३३, ) मध्यमं पिण्डं प्राश्नाति । तस्मिन्पक्षे तस्यावघ्राणं न कार्यम् । ततः पार्वणं श्राद्धम् ।

जीवपितृकस्य पिण्डपितृयज्ञो दर्शाङ्गमिति कर्कादयः सर्वे भाष्यकाराः । नेति सम्प्रदायः । "पितृयज्ञः स्वकालत्वादनङ्गं स्यादि"ति जैमिनिः (४.४.८.) । अनाहिताग्नेरप्ययं पिण्डपितृयज्ञो भवति आवसथ्येऽग्नौ ॥ १ ॥

इति चतुर्थस्य प्रथमा कण्डिका ॥ १ ॥

---

जीवपितृकस्य चतुर्दश्यां वा उद्धरणाद्युपक्रमः, अमावास्यायां यागः । पिण्डपितृयज्ञस्यानङ्गत्वपक्षे मृतपितृकस्यापि विकल्पः । अङ्गत्वपक्षे तु मृतपितृकस्यामावास्यायामेवोपवासनियमः । श्राद्धानन्तरं पत्नीयजमानौ व्रत्यमश्नीतः ।

ततोऽध्वर्युः पलाशशाखां छिनत्ति इषे त्वेति ( १. १. ) । शमीशाखां वा । शाखा वृक्षात्प्राच्यां प्रसृता, उदीच्यां वा, ऐशान्यां वा, सा छेत्त-

पस्पृशति वायव स्थेति ॥७॥ उपायव स्थेति चैके ॥८॥ देवो व इति मातृणामेकां व्याकृत्य ॥९॥ ऐन्द्रं भवति माहेन्द्रं वा ॥१०॥ यजमानस्य पशूनित्यग्न्यगारस्यान्यतरस्य पुरस्ताच्छाखामुपगूहति ॥११॥ मूलादुपवेषं करोति "वेषोऽस्युपवेषो द्विषतो ग्रीवा उपवेविड्ढि वेशाँ अग्ने सुभग धारयेह । ऋद्धाः कर्मण्या अनपायिनो यथा सन्" इति ॥ १२ ॥ सान्नाय्ये शाखासंयोगात् ॥ १३ ॥ उपधानाद्धोभयोः ॥१४॥ वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ ॥१५॥ त्रिवृद्धा ॥१६॥ यवाग्वाऽग्निहोत्रहोमः सन्नयतस्तां रात्रिम् ॥१७॥ हुत उपसृष्टां प्रब्रूतादित्याह ॥१८॥ प्रोक्ते द्यौरसीति स्थाल्यादानम् ॥१९॥

---

व्या । इषे त्वा छिनद्मीति मन्त्रेण ( १. १. ) । उर्जे त्वा सन्नमयामीति मन्त्रेण (१. १.) तस्याः शाखायाः पर्णादि पातयति । ततो व्रतग्रहणं वा ।

ततः षड्भिर्गोभिः सह षड् वत्सान् संसृज्य तान्वत्सान् प्रत्येकं शाखयोपस्पृशति वायव स्थेति मन्त्रेण ( १. १. ) शाखोपस्पर्शनेन गोभ्यो वियोजयतीत्यर्थः । प्रतिवत्सं मन्त्रावृत्तिः । सान्नाय्ये स्त्रीवत्सा अपि गावो भवन्ति । केचिद् वायवस्थोपायवस्थेत्येवं मन्त्रं पठन्ति ।

ततो मातृभ्यो वत्सान् वियोज्य षण्णां गवां मध्ये एकां गां देवो वः सवितेति ( १. १. शाखयोपस्पृशति । आप्यायध्वमघ्न्या इन्द्राय भागम् , महेन्द्राय भागमिति वा मन्त्रे विशेषः । सान्नाय्यस्य दध्नो दुग्धस्य च इन्द्रो देवता महेन्द्रो वा देवता, आदिविकल्पः । प्रथमे प्रयोगे याऽङ्गीकृता इन्द्रो वा महेन्द्रो वा सैव यावज्जीवं भवति । तत्रापि शाखान्तरे व्यवस्थोक्ता—'नागतश्रीर्महेन्द्रं यजेत त्रयो ह है गतश्रिय इत्युक्तमौर्वो गौतमो भरद्वाजस्तेऽनन्तरं सोमेज्याया महेन्द्रं यजेरन्यो वा कश्चित्' इत्यापस्तम्बः ( १. १४. २–११ ) ।

मानवे च—सोमयाजिनां गतश्रीरौर्वो गौतमो भारद्वाजस्ते महेन्द्रं यजेरन्नित्वितरे सम्वत्सरमिन्द्रमिष्ट्वाऽग्नये व्रतपतयेऽष्टाकपालं निरूप्य ते महेन्द्रमि"ति ।

ततो यजमानस्य पशूनिति मन्त्रेण (१. १.) गार्हपत्यागारस्य पुरस्तादाहवनीयस्य पुरस्ताद्वा शाखामुपगूहति ।

मातरिश्वन इत्यधिश्रयति ॥२०॥ वसोः पवित्रमिति पवित्रमस्यां करोत्युदग्वा ॥२१॥ वाग्यतो दोहयत्यशूद्रेण ॥२२॥ स्थाल्यन्वारब्धे देवस्त्वेत्यासिच्यमाने जपति ॥२३॥ कामधुक्ष इति प्रश्नः ॥२४॥ प्रोक्ते सा विश्वायुरित्याह ॥२५॥ एवमितरे उत्तराभ्यां प्रतिमन्त्रम् ॥२६॥ विसृष्टवागुत्तरा अनन्वारब्धे ॥२७॥ यावत्स्वमधिकारात् ॥२८॥ तिस्रो वा नित्यत्वात् ॥२९॥ आदिसामर्थ्यात् ॥३०॥ दर्शनाच्च ॥३१॥ परिक्षालनमानयति "सम्पृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः । पृञ्चतीर्मधुना पयो मन्द्रा धनस्य सातये" इति ॥३२॥ उद्वास्यात-

---

ततः प्रादेशमात्रमधिकं वा शाखाया अग्रं परिशिष्य तूष्णीं छित्वा मूलं पृथक्कुर्यात् । ततस्तस्मान्मूलादरत्निमात्रं वेषोऽस्युपवेष ( ४. २. ३. ) इत्युपवेषं करोति प्रादेशमात्रं वा । ततो वसोः पवित्रमसीति ( १. २. ) मन्त्रेण प्रादेशमात्री या शाखा परिशेषिता तस्यां साग्रौ द्वौ कुशौ पवित्रं बध्नाति, त्रीन्वा कुशान् ।

तस्यां रात्रौ सायं प्रातश्च नियमेन यवाग्वा स्वयमग्निहोत्रहोमः सान्नाय्यं कुर्वतो यजमानस्य भवति । "तण्डुलैः शिथिलपक्वा यवागू"रिति कर्कः । "यवागूर्विरलद्रवा" इत्यपरः । "यवागूरल्पतण्डुलचूर्णमिश्रं द्रवरूपमन्नम्" इति स्मृतिचन्द्रकारः । "पेया यवागू"रिति धूर्तस्वामिनः ।

ततोऽग्निहोत्रे हुते अध्वर्युरुपसृष्टां प्रब्रूतादिति दोग्धारं प्रति प्रेष्यति । दोग्धा उपसृष्टेति प्रत्युक्तेऽध्वर्युर्द्यौरसीति ( १. २. ) स्थालीमादत्ते । मातरिश्वन इति ( १. २. ) गार्हपत्ये स्थालीमधिश्रयति । वसोः पवित्रमसीति ( १. ३. ) स्थाल्या उपर्युदगग्रं प्रागग्रं वा पवित्रं निदधाति । वाग्यतोऽध्वर्युस्तिस्रो गा अशूद्रेण दोहयति गां धुक्ष्वेति प्रैषेण । ततः प्रेषितो दोग्धा काष्ठमये दोहने प्रथमोपाकृतां गां दोहयित्वा आनीय दोहनेनैव स्थाल्यां यजमानेनान्वारब्धायां पवित्रस्योपरि दुग्धमासिञ्चति । अध्वर्युरासिच्यमाने पयसि देवस्त्वा सवितेति ( १. ३. ) जपति । ततो ऽध्वर्युः कामधुक्ष इति ( १. ३. ) दोग्धारं पृच्छति । दोग्धा अमूमिति गोनाम्नि द्वितीयैकवचनान्ते प्रत्युक्ते सा विश्वायुरित्याह ( १. ४. ) ।

**नक्ति प्राग्घुतशेषेणेन्द्रस्य त्वेति ॥३३॥ सोदकेनापिदधात्यमृन्मयेन विष्णो हव्यमिति ॥३४॥ निधाय वत्सापाकरणं पूर्ववत् ॥ ३५ ॥ प्रातराग्नेय ऐन्द्राग्नश्च द्वादशकपालो ऽसन्नयतः ॥३६॥ निरुप्याज्यं प्रातर्दोहनमन्यस्मिन् ॥३७॥ परिक्षालनान्तं कृत्वा सायंदोहमाहृत्य**

पुनर्गां धुक्ष्वेति दोग्धारं प्रेष्यति । ततः प्रेषितो दोग्धा द्वितीयां गां दुग्ध्वा पुनः स्थाल्यां यजमानेनान्वारब्धायां पवित्रस्योपरि निनयति(१)। अध्वर्युरपि (२)निनीयमाने पयसि देवस्त्वा सवितेति जपति। ततः कामधुक्ष इति दोग्धारं पृच्छति । अमूमिति दोग्ध्रा प्रत्युक्ते सा विश्वकर्मेत्यध्वर्युराह ( १. ४. ) ।

पुनर्गां धुक्ष्वेति दोग्धारं प्रेष्यति । ततः प्रेषितो दोग्ध्रा तृतीयां गां दुग्ध्वा तत्पयः स्थाल्यां पूर्ववदासिञ्चति । ततः कामधुक्ष इति दोग्धारं पृच्छति । स प्रत्याह अमुकीमिति। ततोऽध्वर्युः सा विश्वधाया इत्याह(१.४.)।

अध्वर्युर्वाचं विसृज्यात ऊर्ध्वं तिस्रो गा दोहयति । अत ऊर्ध्वं यजमानस्य स्थाल्यन्वारम्भो न भवति । ततो गा धुक्ष्वेति अध्वर्युर्दोग्धारं प्रेष्यति । दोग्धा तु दुग्ध्वा दुग्ध्वा आनीय स्थाल्यामासिञ्चति । आसिच्यमाने ऽध्वर्युः पूर्ववज्जपति । षष्ठीं दोहयित्वा येन पात्रेण दोहयति तस्मिन्पात्रे स्तोकमुदकमासिच्य तत्पात्रं प्रक्षाल्य तत्र क्षालनजलं स्थाल्यां दुग्धमध्ये आसिञ्चति । सम्पृच्यध्वमिति (का०श्रौ० ४.२.३२.)। ततः स्थालीमुद्वास्य स्थापितेन प्रातरग्निहोत्रशेषेण दध्ना स्थालीस्थेन आतनक्ति इन्द्रस्य त्वेति (१. ५.) । महेन्द्रपक्षे महेन्द्रस्य त्वा भागमिति । "ओषधयः पूतिकाः(३) कलास्तण्डुलाः पर्णवल्का"(४) इत्यातञ्चनविकल्पः । "उच्छ्रेषणाभावे तण्डुलैरातञ्च्याक्तण्डुलाभाव ओषधीभि"रित्यापस्तम्बः (१.१४.१-२)

ततो मृन्मयेन पात्रेण सोदकेनोत्तानेन दोहस्थालीमपिदधाति विष्णो हव्यमिति ( १. ४. ) । ततस्तां सुगुप्ते देशे निधाय प्रातर्दोहार्थं मातृभि-

( १ ) दुग्धमासिञ्चतीति 'क' पुस्तकपाठः ।

( २ ) रासिच्यमाने पयसि इति 'ख' पुस्तकपाठः ।

( ३ ) पूतीका इति क० पु० पाठः ।

( ४ ) ओषधयो व्रीह्यादयः, पूतिका लताविशेषाः, कला बदरीफलानि, पर्णवल्काः पलाशशकलानि । पूतीका इत्यपि पाठः ।

**प्रातर्दोहꣳ श्रपयित्वाऽभिघार्योद्वास्योभावनक्ति ॥३८॥ श्रृतस्याग्रेऽवद्यतीति श्रुतेः ॥३९॥ समस्य मार्जनम् ॥४०॥ इन्द्राग्न्योरिति व्यूहनम् ॥४१॥ सह शाखया प्रस्तरानु-**

वत्सान् संसृज्य तेषां पूर्ववदपाकरणं शाखोपगूहनान्तं कुर्यात् ।

रात्रौ आहवनीयागारे गार्हपत्यागारे वा यजमानः सपत्नीकः शयीत । प्रातः स्वयमेव यवाग्वाऽग्निहोत्रं हुत्वा अनुदित एव सूर्ये तन्त्रोपक्रमं कुर्यात् । पौर्णमासवद् ब्रह्मवरणादि कर्मापवर्गान्तं कुर्यात् । तत्र विशेषो लिख्यते—

गोत्र शर्मन् दर्शेष्ट्या वयं यक्ष्यामह इति ब्रह्मवरणम् । व्रतग्रहणमत्र वा । प्रणीताप्रणयनम् । पात्रासादने—अष्टौ कपालानि, शाखोपवेषः, वेदश्च, दोहनचतुष्टयम् , तत्र दोहनं, नियोजनं, शाखापवित्रं, स्थाली चेति, पुरोडाशपात्र्येका, शेषं पूर्ववत् ।

हविर्ग्रहणे एकस्याऽऽग्नेयपुरोडाशस्यैव ग्रहणम् । वेदबन्धानन्तरं प्रोक्षणान्ते उपसृष्टादिपरिक्षालनान्तो दोहः पूर्ववत्कर्त्तव्यः । ततश्चक्षुषे त्वेति ( १. २० ) कृष्णाजिनस्थहविषः प्रेक्षणादि । पयसः पर्यग्निकरणाभावः । देवस्त्वेति (१. २२) मन्त्रेणाधः श्रपणं भवत्येव, नोपरि श्रपणप्रक्षेपः । ध्रुवामासाद्य सायन्दोहाहरणम् ।

ततः पुरोडाशविभस्मीकरणम् , पुरोडाशपात्रीस्थापनम् , तस्यामुपस्तारः । पुरोडाशे पयसि च तत्रस्थाभिघारः, न दधनि । उद्वास्य पुरोडाशं तस्योत्तरतो दध्नः स्थापनम् , तस्योत्तरतः पयसः । ततः पुरोडाशदधिपयसां प्राणदानं दधनि पयसि च । इन्द्रं गच्छेति ( २. ८. १५ ) प्राणदानमन्त्रे विशेषः । महेन्द्रपक्षे महेन्द्रं गच्छेति ।

ततः कपालान्यज्योद्वास्याज्यस्थालीपुरोडाशदधिपयसां प्रियेण धाम्नेति ( २. ६. ) क्रमेण सादनम् । आज्यस्थाल्यादीनामालम्भः । आत्मालम्भः । उदकालम्भः । होतुरामन्त्रणादि । उत्तमप्रयागत्यागे इदमग्नये सोमायाग्नये ऽग्नीषोमाभ्यामिन्द्राय देवेभ्य आज्यपेभ्यो न मम । पक्षे ममेत्यादि ।

आग्नेययागानन्तरमग्नीषोमीय उपांशुयाजः । ततो दधिपयोभ्यां तन्त्रेण यागः । तत्र इन्द्रायानुब्रूहि इति होतारं सम्प्रेष्य जुह्वामुपस्तीर्य प्रथमं पयसो द्विरवदानं मध्यात्पूर्वार्द्धाच्च । ततो दध्नः । तत उपरि सकृदभिघारः । दधिपयसोः प्रत्यभिघारः । उत्थायातिक्रम्याश्राव्येन्द्रं यजेति प्रैषः इदमिन्द्रायेति त्यागः । महेन्द्रपक्षे च महेन्द्रायानुब्रूहि, महेन्द्रं यज, इदं

**प्रहरणम् ॥४२॥ परिधिभिः सहोपवेषं जुहोति ।"जुहोमि त्वा सुभग सौभगाय पुरुतमं पुरुहूत अवस्यामिति ॥४३॥**

महेन्द्रायेति विशेषः । शेषं पूर्ववत् ।

ततः सर्वहविर्भ्यः स्विष्टकृदादि । दधिपयसोः प्राशित्रहरणे इडायां चावदेयं, नान्यत्र । तत्रापि पूर्वं पयसः पश्चाद्दध्नः । ऐष्टिकं पवित्रं शाखापवित्रं चोभे समस्य प्राज्ञनम् । पुनः शाखायामेव तस्य पवित्रस्य करणम् । यजमानस्येति ( ३. ४. २५ ) प्रस्तरे करणं शाखापवित्रयोर्न भवति ।

व्यूहने–अग्नः अग्नीषोमयोः इन्द्रस्योज्जितिमिति । अग्निः अग्नीषोमौ ( उपांशु ) इन्द्रस्तमपनुदन्त्विति । प्रस्तरहोमकाले प्रस्तरेण सह शाखाया होमः कर्त्तव्यः । इदमग्नये सोमायाग्नयेऽग्नीषोमाभ्यामिन्द्राय देवेभ्य आज्यपेभ्योऽग्नये होत्रायेति त्यागः ।

ततः शाखोपवेषं जुह्वां प्रागग्रं निधाय जुहोमि त्वेति मन्त्रेण (४. २. ४३.) परिधिभिः सह जुहुयात् । इदं भगायेति त्यागः । शेषं सर्वं पौर्णमासवत्कर्मापवर्गान्तम् । इति सान्नाय्ययाजिनोऽमावास्येष्टिरुक्ता ।

अथासान्नाय्ययाजिन उच्यते–उद्धरणादि पूर्ववत् । शाखाच्छेदादि वत्सापाकरणान्तस्याभावः । न च तयाग्न्या होमनियमः । होमानन्तरमुपस्थानप्रैषादिवत्सापाकरणान्तस्याभावः । प्रातरनुदिते ब्रह्मवरणादि । पात्रासादने विंशतिः कपालानि । द्वयोः पुरोडाशयोः साधारण्येकैव पुरोडाशपात्री । दोहनचतुष्टयस्याभावः । उपवेषो धारणः । अन्यत्पौर्णमासवत् ।

हविर्ग्रहणे आग्नेयपुरोडाशग्रहणानन्तरमैन्द्राग्नस्य ग्रहणम् , तत्र इन्द्राग्निभ्यां जुष्टं गृह्णामीति । विभज्यालम्भने इदमग्नेः इदमिन्द्राग्न्योरिति । कपालोपधाने आग्नेयस्याष्टौ कपालान्युपधायोत्तरत ऐन्द्राग्नस्य द्वादशकपालोपधानमग्नीषोमीयवत् । उत्तरतश्चत्वारीति विशेषः । प्राणदाने अग्निं गच्छ, इन्द्राग्नी गच्छेति । उत्तरप्रयाजत्यागे इदमग्नये सोमायाग्नये विष्णव इन्द्राग्नीभ्यां देवेभ्य इत्यादि ।

आग्नेययागानन्तरं वैष्णव उपांशुयाजः । तत्र विष्णवे उपांशु अनुब्रूहीत्युच्चैः । ध्रुवातश्चतुरवत्तमाज्यमवदायोत्थायाश्राव्य विष्णुं (उपांशु) यजेति प्रथमस्वरेण प्रेष्यति । इदं विष्णव इति त्यागः । तत इन्द्राग्निभ्यामनुब्रूहि । जुह्वामुपस्तारः । ऐन्द्राग्नस्य हविषो मध्यात्पूर्वार्द्धाच्चावदायाभिघार्यावदाने प्रत्यभिघार्योत्थायातिक्रम्याश्राव्येन्द्राग्नी यजेति संप्रेष्य मध्ये जुहोति । इदमिन्द्राग्निभ्यामिति त्यागः । ततः स्विष्टकृदादि । ऐन्द्राग्नस्य प्राशित्रेडाव्यतिरिक्तं किमपि न भवति ।

पौर्णमासवदन्यदसद्यः ॥४४॥ सोमयाजी सन्नयेत् ॥४५॥ कामादितरः ॥४६॥ त्रिꣳशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत ॥४७॥ पञ्चदश दाक्षायणयज्ञी ॥४८॥ अग्निहोत्रमेव वा जुहुयात् ॥४९॥२॥

कर्मशब्दो द्रव्यदेवतायुक्तो यजतिः ॥१॥ दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यात् ॥२॥ दर्शनाच्च ॥३॥ वैश्वदेवधर्माश्चातुर्मास्येषु वचनप्रवृत्तिभ्याम् ॥४॥ सोमाच्चावभृथे सामप्रतिषेधात् ॥५॥ कणवत्पशौ न मन्त्रोपदेशात् ॥६॥ विशये लौकिकमयुक्तत्वात् ॥७॥ विधि-

---

व्यूहने-अग्नेर्विष्णोरिन्द्राग्न्यारुज्जितिम् । अग्निर्विष्णुरिन्द्राग्नी तमपनुदन्त्विति । अत्राप्युपांशुयाजस्य देवताया विष्णोरुपांशूच्चारणम् । प्रस्तरहोमे इदमग्नये सोमायाग्नये विष्णव इन्द्राग्निभ्यां देवेभ्य इति विशेषः । अन्यत्सर्वं ससान्नाय्यामावास्येष्टिवत् ।

सोमयाजिनो नियमेन सान्नाय्यं भवति । असोमयाजिनस्तु इच्छया सान्नाय्यं भवति ।

त्रिंशतं वर्षाण्येव दर्शपूर्णमासाभ्यां यागो भवति यावज्जीवं वा । दाक्षायणयागपक्षश्चेत्पञ्चदश वर्षाण्येव यावज्जीवं वा । उत्सर्गपक्षेऽपि यावज्जीवमग्निहोत्रं हूयत एव । अन्यान्यपि सर्वाणि कर्माणि भवन्त्येव ॥२॥

इति चतुर्थस्य द्वितीया कण्डिका ॥ २ ॥

---

ऐन्द्राग्नं द्वादशकपालं निर्वपेत्, सौर्यं चरुं निर्वपेत्, अग्नीषोमीयं पशुमालभेतेत्येवमादिर्यत्र द्रव्यदेवतायुक्तः कर्मशब्दः आख्यातप्रत्ययान्तः शब्दो वेदवाक्ये दृश्यते स सर्वोऽपि यजतिर्यागो ज्ञेयः ।

सर्वास्विष्टिष्वग्नीषोमीये पशौ च दर्शपूर्णमासयोर्धर्मा भवन्ति ।

चातुर्मास्येषु वैश्वदेवपर्वणो धर्मा वरुणप्रघासमहाहविः शुनासीरीयेष्विष्टिषु भवन्ति । "अथैतान्येव पञ्च हवीꣳषि भवन्ती"ति वचनात् (२-५-२-७) । अतो मारुत्यां पयस्यायामनीकवत्यादिषु च न भवन्ति ।

सौमिकादवभृथाद्वारुणप्रवासिकावभृथे धर्मा भवन्ति ।

"उलकुषीमेवादायोपपरेयादित्यादौ (३-६-२९) यत्र सन्देहो जायते किमत्र लौकिकोऽग्निर्ग्राह्य उत वैदिक आहवनीयादिरिति, तत्र सर्वत्र लौकिक एवाग्निरविनियुक्तत्वाद् ग्राह्यः । एवमन्यत्राप्यूह्यम् ।

वैकृते कर्मण्येकदेवत्ये सर्वत्राग्नेयाद्धर्मा भवन्ति । अनेकदेवत्ये त्व-

**विशेषः कर्मण्येक-द्वि-शब्दपरिमाण-द्रव्य-देवता-गुण-सामान्येभ्यः ॥८॥ नियमो द्रव्यदेवताविरोधे द्रव्यस्य समवायात् ॥९॥ आमिक्षायामुभयोस्तन्निवृत्तेः ॥१०॥ नैकचोदनात् ॥११॥ दध्नः संघातात् ॥१२॥ पयसस्तद्भावात् ॥१३॥ पशोः सान्नाय्यस्य तदुक्तम् ॥१४॥ प्रायश्चित्तश्रुतेश्च ॥१५॥ पयसः कालानन्तर्यधर्मानुग्रहेभ्यः ॥१६॥ मध्यस्त्वं काशकृत्स्नः ॥१७॥ अनुवादः पूर्वस्येति वात्स्यबादरी ॥१८॥ स्थानापत्तेर्द्रव्येषु धर्मलाभोऽविप्रतिषिद्धः ॥१९॥ यथार्थमूहश्चोदिते ॥२०॥ न प्रकृतावपू-**

ग्नीषोमीयैन्द्राग्नादेः । तत्राप्याग्नावैष्णवादौ अग्नीषोमीयादैन्द्राग्नाद् वेति सन्देहे उभयोः पञ्चाक्षरत्वलक्षणस्य शब्दपरिमाणस्य साम्यादग्नीषोमीयस्यैव नैन्द्राग्नस्येति निर्द्धार्यते । तथा मारुतेऽप्येवं सन्देहे शब्दपरिमाणादैन्द्राग्नस्यैवेति निर्द्धार्यते ।

द्रव्यसामान्येनापि धर्मप्रवृत्तिर्भवति यथा—पुरोडाशचरुधानासक्त्वादौ पुरोडाशे पुरोडाशस्य, सान्नाय्ये सान्नाय्यस्य, आज्ये आज्यस्येति ।

देवतागुणस्योपांशुत्वादेः साम्ये धर्मप्रवृत्तिर्भवति, यथोपांशुयाजे उपांशुयाजस्य । ऐन्द्रपुरोडाशादौ देवतासामान्यात्सान्नाय्यविध्यन्तः प्राप्नोति, द्रव्यसामान्यात्पुरोडाशस्येति, एवं द्रव्यदेवताविरोधे द्रव्यसामान्यादेव धर्मा भवन्ति न देवतासामान्यादिति ।

पयस्यायां च पयस एव धर्मा भवन्ति न दध्नः । अतश्चातुर्मास्यादौ परिवासितया शाखया पवित्रबन्धनानन्तरं वत्सापाकरणं दोहनचतुष्टयासादनं च भवति ।

पशावपि पयस एव धर्मा भवन्ति न दध्नः । अत एव सान्नाय्योखास्थानापन्नानां वपाश्रपणीशूलोखानामासादनप्रोक्षणे भवतः ।

द्रव्येषु स्थानापत्तेर्धर्मा भवन्ति, यथा श्यामाकचरौ श्यामाकानां व्रीहियवस्थानापत्तेस्तद्धर्माणां ग्रहणासादनप्रोक्षणकण्डनादीनां प्रवृत्तिः । यथा "ऐन्द्रो वृष्णिः षोडशिनी"त्यत्र (९.८.४) वृष्णो मेषस्य छागस्थानापन्नत्वात्तद्धर्माणामुपाकरणादीनां प्रवृत्तिर्भवति । प्राकृतद्रव्यस्थानापन्नस्यापि ये स्थानिनो धर्मा विरुध्यन्ते स्थानापन्ने द्रव्ये ते न भवन्ति । यथा "परिधौ पशुनियोजन"मित्यत्र (१२.७.५) परिधेर्यूपस्थानापन्नस्यापि तक्षणाष्टाश्रिकरणादयो यूपधर्मा न भवन्ति विरुद्धत्वात् ।

**त्वात् ॥ २१ ॥ विकृतौ वचनार्थलोपविरोधेभ्योऽप्रवृत्तिः ॥२२॥ परार्थोत्पत्तेस्तदभावेऽभावः ॥२३॥ चोदितत्वाद्वा भावः ॥२४॥ न विपक्षे क्रियाः स्युः समभिव्या-**

---

विकृतौ यत्र प्राकृतद्रव्यदेवतादेः स्थानेऽन्यद्रव्यदेवतादि विधीयते तत्र प्राकृतमन्त्राणां यथार्थमूहो भवति, यथायथा तं विकृतिविहितमर्थं प्रकाशयति तथातथोहः कर्त्तव्यः । यथा ऐन्द्राग्नादौ अग्नये जुष्टमित्यस्य प्राकृतस्य मन्त्रस्येन्द्राग्निभ्यां जुष्टमित्यूहः । यथा ऐन्द्रो वृष्णिरित्यत्रा"ग्नीषोमाभ्यां छागस्ये"त्यस्य ( ६.८.२.३५ ) मन्त्रस्य इन्द्राय मेषस्येत्यूहः । एवं सर्वत्र ज्ञेयम् ।

प्रकृतौ मन्त्राणामूहो न भवति, प्रकृतेरपूर्वत्वात् । यथा एकपत्नीक प्रयोगे "पत्नीᳬ सन्नह्येत्येकवचनान्तो मन्त्रो (२.६.३५) यथार्थः अनेकपत्नीकप्रयोगेऽप्येकवचनान्त एव प्रयुज्यते नोह्यते । तथा पवित्रे स्थ इत्यविकृत एव ( २. ३. ३२ ) पवित्रत्रयपक्षेऽपि प्रयुज्यते न पवित्राणि स्थेत्येवमूह्यते ।

विकृतौ वचनात्प्राकृतधर्मा न भवन्ति ।यथा पितृयज्ञे "नार्षेयं वृणीते न होतारम्", यथा-"शुनासीरीये न मन्थत्यग्निमि"ति ( २. ६. ३. ३ ) ।

अर्थलोपात्प्रयोजनलोपादपि प्राकृता धर्मा न भवन्ति, यथा मौद्गे चरौ कण्डनस्य प्रकृतितः प्राप्तस्यापि प्रयोजनाभावादभावः । यथा चरौ प्रथनाद्भिरभिमर्शन-संयवनादेः । यथा च पयस्यादौ कृष्णाजिनोलूखलमुसलादेरासादनादेः ।

तथा विरोधादपि प्राकृतधर्माणां विकृतावप्रवृत्तिर्भवति । यथा चरौ पेषणस्याभिवासनस्य च । दध्युपसर्जनीनामधिश्रयणस्य च ।

यच्च प्रकृतौ परार्थमुत्पन्नं भवति विकृतौ तस्य परस्याभावे तस्याप्यभावो भवति । यथा प्रकृतौ प्रतिपत्तिकर्माणां परार्था प्रतिपाद्यद्रव्यार्था उत्पत्तिरस्ति, अतो विकृतौ परस्य प्रतिपाद्यद्रव्यस्याभावे तदर्थद्रव्यकर्मणामप्यभावो भवति । यत्र तु परार्थोत्पन्नं द्रव्यं कश्चित्कार्यान्तरसाधनत्वेन विहितं भवति, तत्र परस्याभावेऽपि परार्थोत्पन्नस्य भावो भवति, परार्थोत्पन्नेन द्रव्येण यत्कार्यं तदन्येनापि येन केन चित्कर्त्तव्यमित्यर्थः । तद्यथा-"यूपशकलेन शुक्रᳬ संमार्ष्टी"ति (४.२.१.१४) यूपार्थं यूपकाष्ठ तक्ष्यमाणे उत्पन्नं शकलं यूपाभावे तत्सम्बन्धिशकलाभावेऽपि ग्रहसंमार्गसाधनत्वेन विहितत्वाद्येन केन चिच्छकलेन शुक्रसंमार्जनं कर्त्तव्यम् ।

तत्रेदं रहस्यम्-यत्र परार्थोत्पन्नं द्रव्यं क्रियार्थं तत्र क्रिया प्रधानभूता स्वसिध्यर्थं द्रव्यान्तरमाक्षिपति । यत्र तु क्रिया द्रव्यार्था तत्र द्रव्याभावे

हारात् ॥२५॥३॥

**दाक्षायणयज्ञः प्रजापश्वन्नयशस्कामस्य ॥१॥ नाम-फलगुणयोगात्कर्मान्तरम् ॥२॥ गुणविधानं वा सान्निधि-सम्पद्वचनाभ्याम् ॥३॥ अग्नीषोमीयः पौर्णमास्यामैन्द्रा-**

क्रियाया अभाव एव भवति ।

"य इष्ट्या पशुनाऽऽग्रयणेन सोमेन वा यक्ष्यमाणः सोऽमावास्यायां यजेते"त्यनेन वाक्येन सर्वविकृतीनां साङ्गानां मुख्यायां पौर्णमास्याममावास्यायां च सद्योऽनुष्ठानं विधीयते । तेन सर्वा विकृतयः सद्यस्काला एव भवन्ति, न प्रकृतिवद् द्व्यहकालाः । प्राकृतकालस्यैवायं य इष्ट्येत्यनुवाद इति वास्यवादरिमतनिराकरणार्थं "न विपत्ते क्रियाः स्यु"रिति सूत्रम् । विपत्ते प्रतिपदि विकृतयः क्रिया न स्युः, कस्मात्समभिव्याहारात्, य इष्ट्येत्यादिवाक्यात् । ननु प्राकृतकालस्यैवायमनुवाद इत्युक्तम्, नानुवादः । अनुवादे हि वाक्यमनर्थकमेव भवेत् । प्रवृत्तिविशेषकरत्वाभावात् । पौर्णमास्यमावास्याशब्दयोर्लक्षणाप्रसङ्गाच्च । न च मुख्येऽर्थे संभवति सा न्याय्या । किञ्च सोमस्येदमेव कालविधानं, न ह्यन्येन वाक्येन सोमस्य कालो विहितोऽस्ति, तस्मादपि अपूर्वविधिरेवायं, नानुवादः ।

अत्रेष्टिग्रहणेनैवाग्रयणस्यापि सिद्धेऽनिष्टिरूपस्यापि "तदाशिनाया वा पयसे"त्यादिरूपस्याग्रयणस्यैतत्कालसिध्यर्थं पृथगाग्रयणग्रहणम् ॥३॥

इति चतुर्थस्य तृतीया कण्डिका ॥ ३ ॥

---

अथ दाक्षायणयज्ञ उच्यते । स च प्रजाकामपशुकामान्नाद्यकामयशस्कामानां भवति । अत्र पर्यायेण सर्वफलसिद्धिः न सह । दर्शपूर्णमासयाग एवायं गुणविकृतो न कर्मान्तरम् । तत्र प्रथमपौर्णमास्यां पूर्वाह्णे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धमन्वारम्भणीयां च कृत्वा तदानीमेव पुनरुद्धृत्याग्नीषोमीयः पुरोडाशोऽग्न्यन्वाधानादिकर्मापवर्गान्तः पौर्णमासाग्नीषोमीयवद्भवति । हिरण्यं दक्षिणेति विशेषः । तत्र प्रजापतेर्भागोऽसीति मन्त्रे ( ३. ४. ३० ) ऊर्गसीत्यस्य स्थाने हिरण्यमसीति प्रयोगः । अथवाऽन्वाहार्य एव दक्षिणा ।

ततः पुनरुद्धरणम् , अग्न्यन्वाधानम् , मांसमैथुनवर्जनसङ्कल्पः, वपनं वा, अपराह्णे पत्नीयजमानयोर्व्रत्याशनम् , शाखाच्छेदः, ऊर्जे त्वेत्यनुमार्जनम् , व्रतग्रहणमत्र वा, वत्सापाकरणम्, इन्द्राय भागमिति देवतानियमः । "ऐन्द्रं सान्नाय्यमि"ति श्रुतेः ( २. ४. ४. ८ ), न पाक्षिको महेन्द्रः । उद्गूहनम् , शाखापरिवासनम् , मूलादुपवेषकरणम् , पवित्रब-

**ओऽमावास्यायाम् ॥४॥ सान्नाय्यवत्प्रातः ॥५॥ अमावा-**

न्धनं, रात्रौ स्वयमेव यवाग्वाऽग्निहोत्रहोमः । हुते उपसृष्टादि निधाय वत्सापाकरणं पूर्ववदित्यन्तम् । आरण्याशनं वा, अन्यतरागारशयनं, प्रातर्यवाग्वा स्वयं होमः । उदिते ब्रह्मवरणादि । दाक्षायणयज्ञेनाहं यक्ष्य इति वा । ससान्नाय्यामावास्येष्टिवत्सर्वं भवति । उपांशुयाजाभावः । आग्नेयः पुरोडाशः, ऐन्द्रं दधि, ऐन्द्रं पय इति हविस्त्रयम् । अन्वाहार्यो हिरण्यं वा दक्षिणा । उत्तमे प्रयाजे इदमग्नये सोमायाग्नय इन्द्राय देवेभ्य आज्यपेभ्य इति । प्रस्तरहोमे च । व्यूहने–अग्नेरिन्द्रस्योज्जितिम् । अग्नि-रिन्द्रस्तमपनुदतामिति । सहशाखया प्रस्तरानुप्रहरणम् । परिधिभिः सहोपवेषहोमः । पक्षे वैमृधष्टिरन्वाहार्यदक्षिणा । अमावास्यापर्यन्तं-मांसस्त्र्यनृतकारुधौतवाससां वर्जनम् ।

अमावास्यायां पूर्वाह्णे ऐन्द्राग्नो द्वादशकपाल उद्धरणादिकर्मापव-र्गान्तोऽमावास्येष्ट्यन्तर्गतैन्द्राग्नवत् । दर्शेष्ट्यर्थं दर्शेष्ट्या यक्ष्ये इत्येवं प्रयोगः । अन्वाहार्यो दक्षिणा हिरण्यं वा ।

कर्मापवर्गान्ते पुनरुद्धरणम् । अग्न्यन्वाधानं, मांसमैथुनवर्जनस ङ्कल्पः, वपनं वा, अपराह्णे पिण्डपितृयज्ञः, दर्शश्राद्धं, व्रत्याशनं, शाखा-च्छेदः, सन्नमनं, व्रतग्रहणं वा, शाखापरिवासनम् , उपवेषनिष्पत्ति, पवित्रबन्धनं, रात्रौ स्वयमग्निहोत्रहोमः, हुते पयस्यार्थं षड्वर्गस्यापाक-रणं, तत्र मित्रावरुणाभ्यां भागमिति विशेषः । उद्गूहनम् , आरण्याशनं वा, अन्यतरागारे शयनं, प्रातः स्वयंहोमः ।

अनुदिते ब्रह्मवरणादि । दर्शेष्ट्याऽहं यक्ष्य इति । पात्रासादनादि दर्शे-ष्टिवत्सर्वम् । शृतावदानानन्तरं वाजिनभाण्डम् । दक्षिणा हिरण्यं वा । पयस्यार्थं दधि चेति । तत्रस्थाभिघारमदत्वा दत्वा वा वाजिनस्यावस्रा-वणम् । तत्रस्थाभिघारः । यथाक्रममुद्वासनम् । वाजिनस्य च । यथाक्रमं प्राणदानम् , अग्निं गच्छेति पुरोडाशे, मित्रावरुणौ गच्छेति पयस्यायां, वाजिनो गच्छेति वाजिने । पुरोडाशपयस्ययोर्वेद्यामासादनम् , उत्करे वाजिनस्यासादनम् । सर्वाण्यालभ्यान्ते वाजिनस्यालम्भः । उत्तमप्रयाजे इदमग्नये सोमायाग्नये मित्रावरुणाभ्यां देवेभ्य आज्यपेभ्यो वाजिभ्यश्च, इति विशेषः ।

आग्नेययागानन्तरं मित्रावरुणाभ्यामनुब्रूहीत्युक्त्वा जुह्वामुपस्तीर्य शृ-तावदानेन पयस्याया मध्यात्पूर्वार्द्धाच्च, पयोविकारत्वात्स्रुवेण वा द्विर-वदायोपरिष्टादभिघार्यावदाने प्रत्यभिघार्योत्थायातिक्रम्याश्राव्य मित्राव-रुणौ यजेत्युक्त्वा वषट्कृते जुहोति । इदं मित्रावरुणाभ्यामिति त्यागः । उपांशुयाजाभावः ।

**स्यायां पयस्या मैत्रावरुणी ॥६॥ तत्रैव दोहनं शृते वा दध्यानयति ॥७॥ वाजिनं निषिच्योत्करे करोति ॥८॥ अनाज्यलिप्तं वा ॥९॥ प्रहृत्य तृणं तेन (वाजिनेन) चरति विमुच्य वा स्रुचौ ॥१०॥ बर्हिरवासिञ्चन् गृह्णाति तद्वृषभेषु रेतो दधातीति श्रुतेः ॥ ११ ॥ वाजिभ्योऽनुवाचयति॥१२॥ प्रतिवषट्कारं हुत्वा वाजिनशेषेण दिशो व्याघारयति दिश इति प्रतिमन्त्रं प्रदक्षिणं पुरस्तात्प्रथमम् ॥१३॥ उत्तमाभ्यां मध्ये पूर्वार्द्धे च ॥१४॥ स्वाहाकारः**

---

ततः स्विष्टकृदादि । पयस्यायाः प्राशित्रेडयोरेवावदेयं नान्यत्र । अन्वाहार्यो हिरण्यं वा दक्षिणा । व्यूहने—अग्नेर्मित्रावरुणयोरुज्जितिम्' अग्निर्मित्रावरुणौ तमपनुदन्त्विति । प्रस्तरहोमे—इदमग्नये सोमायाग्नये मित्रावरुणाभ्यां देवेभ्य आज्यपेभ्योऽग्नये होत्राय वाजिभ्य इति विशेषः । तृणं प्रास्यात्मानमालभ्याप उपस्पृश्य वाजिनयागः स्रुग्विमोकानन्तरं वा ।

तत्र बर्हिषि वाजिनमवसिञ्चन् स्थाल्यैव जुह्वां निनयति । ग्रहणानन्तरं वाजिभ्योऽनुब्रूहीत्यनुवाचनम् । उत्थायातिक्रम्याश्राव्य वाजिनो यजेत्युक्त्वा वषट्कृते अग्नेः पूर्वभागे जुहोति । इदं वाजिभ्य इति त्यागः । अनुवषट्कृते पुनः पूर्वभागे एव जुहोति । "स वै प्रागेवाग्ने जुहोती"ति ( २. ४. ४. २३ ) श्रुतेः ।

ततोऽप उपस्पृश्याग्नेरुत्तरत उपविश्य जुहूस्थेन वाजिनशेषेण दिशः स्वाहेति प्रतिमन्त्रं दिशो व्याघारयति । दिशः स्वाहेत्यग्नेः पूर्वभागे ( ६. २९. ), इदं दिग्भ्यः । प्रदिशः स्वाहेति दक्षिणतः, इदं प्रदिग्भ्यः । आदिशः स्वाहेति पश्चात् , इदमादिग्भ्यः । विदिशः स्वाहेत्युत्तरतः इदं विदिग्भ्यः । उद्दिशः स्वाहेति मध्ये, इदमुद्दिग्भ्यः, । स्वाहेति पूर्वार्द्धे, इदं दिग्भ्यः ।

ततः स्रुक्स्थं वाजिनशेषमुपहवपूर्वकं होत्रध्वर्युब्रह्माग्नीद्यजमानाः क्रमेण भक्षयन्ति । तद्यथा—होता वाजिनं हस्ते गृहीत्वाऽध्वर्य उपह्वयस्व, ब्रह्मन् उपह्वयस्व, अग्नीदुपह्वयस्व, यजमानोपह्वयस्वेति पृष्ट्वा भक्षयति । ततोऽध्वर्युर्वाजिनं भक्षार्थं हस्ते कृत्वा होतरुप० ब्रह्मन् उप० अग्नीदुप० यजमानोपह्वयस्वेति पृष्ट्वा भक्षयति । भक्षणे विकल्पेन त्रयो मन्त्राः । ऋतूनां त्वेति वा । वाज्यहं वाजिनस्येति वा । वाजे वाजीति वा । एवं ब्रह्मा होत्रध्वर्य्वग्नीद्यजमानान् पृष्ट्वाऽनेनैव मन्त्रेण भक्षयति ।

**सर्वत्र साकाङ्क्षत्वात् ॥१५॥ शेषमुपह्वयस्वेत्यामन्त्र्याम न्त्र्य भक्षणमुपहूत इति प्रसूतः ॥१६॥ युक्तनामाभिर्वा॥१७॥ सोमे च ॥ १८ ॥ साधारणेषु वा सामर्थ्यात् ॥१९॥ ऋतूनां त्वा वाजिनां वाजिनं भक्षयामीति वा ॥२०॥ वाज्यहं वाजिनस्योपहूतस्योपहूतो भक्षयामीति वा ॥२१॥ वाजे वाजी भूयासमिति वा ॥२२॥ होत्रध्वर्युब्रह्माग्नीध्य जमानाः ॥२३॥ प्रथमो वोभयतस्तु यजमानः ॥२४॥ दाक्षायणं वा दक्षिणा ॥२५॥ सम्वत्सरं वा यजेत ॥२६॥ माꣳसस्त्र्यनृतमूत्रकृतवासाꣳसि वर्जयेत् ॥२७॥४॥**

ततोऽग्नीत् होतारमध्वर्युं ब्रह्माणं यजमानं च पृष्ट्वा भक्षयति । ततो यजमानो होतारमध्वर्युं ब्रह्माणमग्नीधं च पृष्ट्वैवमेव भक्षयति । एवं पञ्च भक्षयन्ति । अथवा सर्वेभ्यः पूर्वं पश्चाच्चोभयतो यजमानो भक्षयति । तदा चोपहवेऽपि पूर्वं पश्चाच्चोभयतो यजमानोपह्वयस्वेति यजमानः प्रष्टव्यः । परिधिभिः सहोपवेषहोमः । ततः पुनरुद्धृत्यादित्येष्टिर्वा ।

दाक्षायणयज्ञेन पञ्चदश वर्षाण्येव यजेत । अथवा सम्वत्सरमेवान्वहं दाक्षायणयज्ञेन यजेत, न तत ऊर्ध्वम् ।

तत्र यस्यां पौर्णमास्यामारम्भः क्रियते तस्यां पूर्वाह्णेऽग्नीषोमीयः पुरोडाश उद्धरणाद्याब्राह्मणतर्पणान्तः । ततस्तस्मिन्नेव दिने पुनरुद्धरणादि सायन्दोहमातञ्चनान्तं कृत्वा प्रातर्दोहार्थं वत्सापाकरणं कुर्यात् । प्रतिपदि प्रातर्ब्रह्मवरणादि । आग्नेयपुरोडाशेनैन्द्रेण सान्नाय्ये दध्ना पयसा च यागो ब्राह्मणतर्पणान्तः । पक्षे वैमृधेष्टिश्च ।

ततस्तस्मिन्नेव दिने पुनरुद्धृत्य कर्मापवर्गान्त ऐन्द्राग्नः कर्त्तव्यः । ततस्तस्मिन्नेव दिने उत्तरेष्ट्युपक्रमः पयस्यार्थं वत्सापाकरणान्तः । प्रातर्द्वितीयायां ब्रह्मवरणाद्याग्नेयेन पुरोडाशेन मैत्रावरुण्या पयस्यया च यागः कर्मापवर्गान्तः । तत आदित्येष्टिर्वा ।

ततस्तस्मिन्नेव दिने पुनरग्नीषोमीयः कर्मापवर्गान्तः । पुनरुद्धरणाद्युत्तरेष्ट्युपक्रमश्च ।

एवं सम्वत्सरं यावत्प्रतिदिनमिष्टिद्वयं भवति । सम्वत्सरेण पञ्चदशवर्षसंख्या सम्पद्यते । पञ्चदशभिर्वर्षैः सप्तशतानि विंशतिश्चेष्टयो भवन्ति । सम्वत्सरं प्रतिदिनमिष्टिद्वयानुष्ठाने चैतावत्य एवेष्टयो भवन्ति । अथवाऽग्निहोत्रहोममिव यावज्जीवं दाक्षायणयज्ञेन यजेत ॥ ४ ॥

इति चतुर्थस्य चतुर्थी कण्डिका ॥ ४ ॥

उपाᳫंशु काम्यदेवता ॥१॥ आग्रयणे वैश्वदेवः ॥२॥ एककपालाश्चावारुणाः ॥३॥ प्राजापत्यः ॥४॥ सावित्रश्चातुर्मास्येषु ॥५॥ वैश्वदेवी ॥६॥ वायव्यम् ॥७॥ तनूहवीᳫंषि ॥८॥ दीक्षणाया-ऽऽयणीया ऽऽतिथ्यादेवताः ॥९॥ देवसू-देविकाहवीᳫंषि ॥१०॥ वायव्योऽग्नौ ॥११॥ मैत्रावरुणी च ॥१२॥ ऐन्द्रः सौत्रामण्यां प्रथमः ॥१३॥ वायोधसश्च ॥१४॥ आग्नेयं प्रतिकाममाहरेत् ॥१५॥ वर्षार्थे पुनः प्रकृतौ ब्रूयाद् वृष्टिकामोऽस्मीति ॥ १६ ॥ अध्वर्युं

अथ सर्वकर्मसूपांशुदेवताः कथ्यन्ते । काम्यस्य कर्मणो देवता उपांशु भवति । अत्राहुः कर्काचार्याः—

"व्यक्तत्वे चोदनैकत्वे तन्त्रैक्ये यत्र कामना ।
तादर्थ्येनैव चोत्पत्तिस्तत्रैव स्यादुपांशुते"ति ॥

आग्रयणे वैश्वदेव उपांशु भवति । वारुणवर्जिताः सर्वे एककपाला उपांशु भवन्ति । प्राजापत्यः सर्वत्रोपांशु भवति ।

चातुर्मास्येषु चतुर्ष्वपि पर्वसु सावित्र उपांशु भवति । चातुर्मास्येष्वेव वैश्वदेवपर्वणि वैश्वदेवी पयस्योपांशु भवति । वैश्वदेवीति स्त्रीलिङ्गनिर्देशात्पाशुकेषु वैश्वदेवः पशुः पुरोडाशो वा नोपांशु । शुनासीरीये वायव्यं पय उपांशु भवति । यवागूपक्षेऽपि वायोरुपांशुत्वं भवति ।" तेषां वै चतुर्णां द्वयोस्त्रीणि त्रीणि हवीᳫंष्यनिरुक्तानि भवन्ती"ति (११.५.२.७) श्रुतत्वात् ।

अग्न्याधेये तनूहविषां देवता उपांशु भवन्ति न सकला इष्टयः चरण शब्दाभावात् । यत्रोपांशु चरन्तीत्येवं चरणशब्दस्तत्रैव सर्वमुपांशु भवति । "चरणशब्दे सर्वमि"त्युक्तत्वात् (३.७.८) । आदित्येष्ट्यास्तनूहविष्ट्वाभावेऽपि बह्वृचवशादुपांशुत्वम् ( शां० २.२.१५ ) । दीक्षणीयाप्रायणीयाऽऽतिथ्येष्टीनां देवता उपांशु भवन्ति । अग्नौ चयने वायव्य इष्टकापशुरुपांशु भवति । चयन एवान्ते या मैत्रावरुणी पयस्या सोपांशु भवति । अग्नाविति विशेषोक्तेर्दाक्षायणाग्निष्टोमादौ मैत्रावरुण्याः पयस्याया नोपांशुत्वम् । सौत्रामण्यां प्रथम ऐन्द्रः पशुरुपांशु । प्रथमग्रहणात्त्रिपशौ "ऐन्द्र ऋषभ" इत्यत्र ( १९.३.३ ) नोपांशुत्वम् । वायोधसोऽपि सौत्रामण्यामन्ते भवति, सोऽप्युपांशु ।

अत्र बह्वृचानां विशेष उक्तः—"प्रणवो, येयजामहो, वषट्कारः, संप्रैषाः,

**ब्रूयात्पुरोवातं च विद्युतं च मनसा ध्यायेति ॥ १७ ॥ अभ्राण्यग्नीधम् ॥१८॥ स्तनयित्नुं च वर्षं चेति होतारम् ॥१९॥सर्वाण्येतानीति ब्रह्माणम् ॥२०॥ अन्वारम्भणीया-ऽऽग्नावैष्णव एकादशकपालः सरस्वत्यै चरुः सरस्वते**

---

प्रैषाश्चोच्चैः, उपांशुहविःषु देवतानामधेयं चोपांश्विगति (शां० ११..३६-३७) । सर्वकामावाप्त्यर्थमाग्नेयोऽष्टाकपालः काम्यो भवति, (१.३.५.१०) तत्रापि देवता उपांशु भवति ।

वृष्ट्यर्थे आग्नेये क्रियमाणे विशेषः । आग्नेयस्यारम्भे वृष्टिकामोऽ-ऽस्मीत्येवं यजमानो ब्रूयात् ( १.५.२.१९ ) । अथ यजमान एव पुरोवातं च विद्युतं च मनसा ध्यायेत्यध्वर्युं प्रति ब्रूयात् । ततो ऽभ्राणिः मनसा ध्यायेत्यग्नीधं प्रति ब्रूयात् । ततः स्तनयितुं च वर्षं च मनसा ध्यायेति होतारं प्रति ब्रूयात् । ततः पुरोवातं च विद्युतं चाभ्राणि च स्तनयित्नुं च वर्षं च मनसा ध्यायेति ब्रह्माणं प्रति ब्रूयात् । एवं कृते आग्नेययागाद् वृ-ष्टिलक्षणं फलं भवति । अथवा वृष्टिकामो यजमानः प्रकृतौ दर्शपूर्णमासे-ष्टावेवोद्धरणकाल एवं ब्रूयात् न पृथगाग्नेयेष्टिः कार्या ।

अथान्वारम्भणीयेष्टिरुच्यते—सा च दर्शपूर्णमासयोरारम्भे मातृश्रा-द्धानन्तरं पौर्णमास्यां भवति द्व्यहपक्षे । सद्यःपौर्णमासानुष्ठानं चेत्प्रतिपद्ये-वान्वारम्भणीया भवतीति सम्प्रदायः । तस्यां त्रीणि हवींषि भवन्ति, आग्नावैष्णव एकादशकपालः पुरोडाशः, सरस्वत्यै चरुः, सरस्वते द्वादशकपालः पुरोडाशः, उद्धरणादिकर्मापवर्गान्ता पौर्णमासेष्टिवत् ।

विशेषः-अन्वारम्भणीष्ट्यर्थमित्युद्धरणे । अन्वारम्भणीयेष्ट्या वयं यक्ष्यामह इति वरणे । पात्रासादने दशगणे ( २.३.८-९ ) शूर्पाग्निहोत्र हवणि, स्पयः कपालानि त्रयोविंशतिः २३, चरुस्थाल्येका, शम्यादि अर्थ-वन्ति । अन्वाहार्यस्थाने पष्ठौही दक्षिणा । पष्ठौही बालगर्भिणी । मिथु-नौ मिथुनार्हौ गावौ स्त्रीगवी पुंगवश्च । विंशतिकाष्ठक इध्मः । श्रृताव-दानानन्तरं मेक्षणम् । अन्यत्पूर्ववत् ।

ग्रहणे–अग्नाविष्णुभ्यां जुष्टं गृह्णामि पुरो० । सरस्वत्यै जुष्टं० चरुः सरस्वते जुष्टं० पुरो० । प्रोक्षणे–अग्नाविष्णुभ्यां त्वा जुष्टं प्रोक्षामि । स-रस्वत्यै त्वा जुष्टं० । सरस्वते त्वा जुष्टं० । कणान्ते चरोस्तण्डुला-न्विभज्यालम्भः । इदमग्नाविष्णवोः सरस्वतश्च । इदं सरस्वत्याः । एतच्च व्रीहिमयपुरोडाशपक्षे । यवपुरोडाशपक्षे चरुर्व्रीहिमय एव । तदा नाना बीजपक्षे उरु वातायेतीक्षणं ( २.३.१६ ) भेदेन । अपद्रव्यनिरसनं (१७)

**द्वादशकपालो दर्शपूर्णमासारम्भे ॥२१॥ षष्ठौही दक्षिणा**

---

तन्त्रेण । अभिमर्शनं चेद् (१८) भेदेन । शेषाभिमर्शनं च (२३) भेदेन । अवघाते फलीकरणान्तमेकस्य कृत्वा ततो द्वितीयस्य मन्त्रेणाऽऽवपनम् । मुसलं तु गृहीतमेव ( २.४.११ ) । स इदमिति तु (१२) भवति । न शूर्पादानमन्त्रः (१६) । प्रति त्वेत्युद्वपनम् (१८) । पूर्वस्य तुषैः सह तुषनिरसनं (१९) भेदेन वा । निष्पवनादिफलीकरणा(१८-२२)न्तं भेदेन । चरोः पेषण-संयवन-पात्र्यां संवापो-पधान-भृगूणामिति तापन-प्रथना-ऽद्भिरभिमर्शन-ज्वालयोपरिश्रपणा-ऽभिवासन-स्थाल्या उद्धृत्य पात्र्यामासादनानि न भवन्ति । अन्यत्सर्वं भवति । तथाचोक्तम्—

"पेषणं यवनं वापस्तापश्चोपहितिः प्रथा ।
मार्जनाभ्यूहनज्वालास्तथा व्युद्धृत्य सादनमि"ति ॥

पेषणं चूर्णनम्, यवनं पिष्टस्योदकमिश्रणम् । वाप उदकमिश्रणाय पात्र्यां प्रक्षेपः, तापः कपालानामङ्गारैः प्रतापनम्, उपहितिरङ्गारेषु कपालस्थापनम् । प्रथा कपालेष्ववस्थापितस्य पुरोडाशस्य हस्तसंघटनेन सर्वेषु कपालेषु प्रसारणम् । मार्जनं श्लक्ष्णीकरणम् । अभ्यूहनं भस्मनाऽङ्गारैश्चोपर्याच्छादनम् । ज्वाला दर्भैरवज्वालनम् । व्युद्धृत्य सादनं कपालेभ्यः पुरोडाशं पृथक्कृत्यान्तर्वेद्यवस्थापनम् ।

पिष्टानामीक्षणं कृत्वा चरोस्तण्डुलानामीक्षणम् । पिष्टानि पात्र्यामोप्य सपवित्रे तण्डुलावापः । ततस्त्रिः प्रक्षालनम् । तत उपसर्जन्यानयनम् । पिष्टेषूपसर्जनीर्निनीय चरावपि निनयति । संयवनान्तरं विभज्य पुरोडाशयोरालम्भः । इदमग्नाविष्णवोः, इदं सरस्वतः । प्रथमपुरोडाशस्योत्तरतश्चरोरधिश्रयणम् । चरोरुत्तरतो द्वितीयस्य पुरोडाशस्य । कपालोपधानकाल एव प्रथमस्य कपालान्युपधाय तस्योत्तरतश्चरोः स्थानं परिकल्प्य तस्योत्तरतो द्वितीयपुरोडाशकपालानामुपधानं कर्त्तव्यम् । चरोरधस्ताच्छूपणदानं, प्रसिद्धेः, नोपरि ।

प्राणदाने ( २.८.१४ ) अग्नाविष्णू गच्छ । सरस्वतीं गच्छ । सरस्वन्तं गच्छेति । अवबाधने सप्तदशेन वज्रेणेति । उत्तमप्रयाजस्यागे इदमग्नये सोमायाग्नाविष्णुभ्यां सरस्वत्यै सरस्वते देवेभ्य इत्यादि । आज्यभागानन्तरं प्रधानयागे अग्नाविष्णुभ्यामनुब्रूहि । अग्नाविष्णू यज । चरोर्मेक्षणेनावदानम् । सरस्वत्या अनुब्रूहि । सरस्वतीं यज । सरस्वतेऽनुब्रूहि । सरस्वन्तं यज । ततः स्विष्टकृदादि ।

आग्नावैष्णवस्य चतुर्द्धाकरणभागानामभावः । इतरयोस्तु सर्वं भ-

**मिथुनौ वा ॥ २२ ॥ इन्द्राय विमृध एकादशकपालः पौर्णमासमनु ॥२३॥ आदिविकल्पः ॥२४॥ आदित्यश्चरुरामावास्यम् ॥२५॥५॥**

---

वति । दक्षिणाऽऽलम्भे प्रजापतेर्भागो ऽसीति मन्त्रे ऊर्गसीत्यस्य स्थाने पष्ठौही गौरस्यूर्जमित्यादि । अस्या अन्वारम्भणीयेष्टेः समृद्ध्यर्थं पष्ठौहीं गां दक्षिणां ब्रह्मणे होत्रे इत्यादि । ब्राह्मणा इयं वः पष्ठौही गौः प्रतिगृह्यतेति । द्यौस्त्वा ददात्वित्येव प्रतिग्रहमन्त्रः सर्वेषाम् । मिथुनौ वेति पक्षे गोमिथुनमस्यूर्जमिति । ब्राह्मणा इदं वो गोमिथुनं प्रति गृह्यतामिति ।

व्यूहने-अग्नाविष्णुवोः सरस्वत्याः सरस्वत उज्जितिम्० । अग्नाविष्णू सरस्वती सरस्वांस्तमपनुदन्त्विति । प्रस्तरहोमत्यागे इदमग्नये सोमायाग्नाविष्णुभ्यां सरस्वत्यै सरस्वते देवेभ्य इत्यादि । पिष्टलेपहोमे इदं विश्वेभ्यो देवेभ्य इति त्यागः । अन्यत्सर्वं कर्मापवर्गान्तं प्रकृतिवत् ।

इयं च दर्शपूर्णमासप्रकृतिषु सर्वास्विष्टिषु आरम्भे भवति । व्रीह्याग्रयणयवाग्रयणयोः साधारणी एकैव । एकस्यैवाग्रयणस्याग्निहोत्रवदभ्यस्यमानत्वात् । याज्ञिकानां मते पशोरप्यारम्भे भवति, न कर्कमते ।

पौर्णमासेष्ट्यनन्तरं विकल्पेन तत्कालमेवोद्धरणादि कर्मापवर्गान्त इन्द्राय विमृध एकादशकपालः पुरोडाशो भवति। अन्वाहार्यो दक्षिणा । ग्रहणादौ विशेषः । इन्द्राय विमृधं जुष्टं० । इन्द्राय विमृधे त्वा जुष्टं० । इन्द्रं विमृधं गच्छ । इन्द्राय विमृधेऽनुब्रूहि । इन्द्रं विमृधं यज । चतुर्द्धाकरणादि सर्वं भवति । इन्द्रस्य विमृध उज्जितिम्। इन्द्रो विमृधस्तमपनुदतु । शेषं पौर्णमासवत् ।

दर्शेष्ट्यनन्तरं विकल्पेनादित्यै चरुर्भवति । तत्र चरुधर्मा अन्वारम्भणीयायामुक्ताः । उद्धरणादि कर्मापवर्गान्तमाग्नेयवत् । अन्वाहार्यो दक्षिणा। ग्रहणे अदित्यै जुष्टं०, प्रोक्षणे-अदित्यै त्वा जुष्टं० । अदितिं गच्छ । अदित्या अनुब्रूहि । अदितिं यज । अदित्या उज्जितिम् । अदितिस्तमपनुदतु । प्राशित्रादि सर्वं भवति । अनयोरिष्ट्योरादिविकल्पः । दर्शपूर्णमासारम्भे एकवारं यदि कृते तदा यावज्जीवं कर्त्तव्ये । यदि न कृते तदा यावज्जीवं न क्रियेते एव ॥ ५ ॥

इति चतुर्थस्य पञ्चमी कण्डिका ॥ ५ ॥

---

**आग्रयणमैन्द्राग्नमग्रपाकस्य ॥१॥ व्रीहीणां यवानां च ॥२॥ वैश्वदेवश्चरुः ॥३॥ पयसि वा ॥४॥ द्यावापृथिवीय**

---

अथाग्रयणमुच्यते—

तच्च शरद्वसन्तयोर्भवति । नवधान्यस्य प्रथमप्राप्तौ वा ।

तदुक्तम्—( कर्म प्र० ३.१ ७ )

"शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते ।

धान्यपाकवशादन्ये श्यामाको वनिनः स्मृत" इति ।

एतदाग्रयणं पौर्णमास्याममावास्यायां वा भवति । शुक्लपक्षे वा पुण्ये नक्षत्रे, बह्वृचब्राह्मणे श्रवणात् । यदि पूर्वाह्णे पर्वान्तस्तदा सद्यस्काल-पौर्णमासेष्टेः पूर्वमाग्रयणेष्टिः, ततः पौर्णमासेष्टिः । अमावास्येष्टयनन्तरं चाग्रयणेष्टिः । तदा च वचनादमावास्येष्टिरमावास्यामध्य एव समापनीया । तदुक्तम्—

"अथो पूर्वाह्णपर्वक्षये दर्शेष्ट्याः परमुक्तमाग्रयणकं प्राक्पौर्णमासाच्च तदिति, अथो पूर्वाह्णपर्वक्षये चान्या इष्टिपश्वाद्या विकृतय उभयत्र प्रकृतेष्टेरनन्तरमेव भवन्ति" इति ।

अत्रोक्तकाले नवानां व्रीहीणां नवानां यवानां चाग्रयणसंज्ञकेष्टिर्भवति । तत्र त्रीणि हवींषि भवन्ति । ऐन्द्राग्नो द्वादशकपालः पुरोडाशः । वैश्वदेवश्चरुर्यवकाले यवानां, व्रीहिकाले व्रीहीणां नवानां वा पुराणानां वा । पुराणा जीर्णाः । द्यावापृथिवीय एककपालः पुरोडाशो वा, आज्ययागो वोपांशुयाजवत् ।

एतानि त्रीणि हवींषि व्रीहिकाले नवानां व्रीहीणां भवन्ति । यवकाले नवानां यवानाम् , चरुस्तु विकल्पेन नवानां जीर्णानां वा ।

तत्रोद्धरणे व्रीह्याग्रयणेष्टयर्थं यवाग्रयणेष्ट्यर्थं वा । ब्रह्मवरणे-व्रीह्याग्रयणेष्ट्या वयं यक्ष्यामहे, यवाग्रयणेष्ट्या वा । पात्रासादने-ऐन्द्राग्नस्य द्वादश कपालानि । एका चरुस्थाली । द्यावापृथिवीयपुरोडाशपक्षे तस्यैकं कपालं पाणिसंमितम् , द्वितीया दुग्धोपसर्जनी विकल्पेन वैश्वदेवचरुश्रपणार्था । दक्षिणार्थं च प्रथमजो वत्सः । विंशतिरिध्मकाष्ठानि । द्वे पात्र्यौ एका वा । शृतावदानानन्तरं मेक्षणम् । अन्यत्सर्वं प्रकृतिवत् ।

ग्रहणे-इन्द्राग्निभ्यां जुष्टं०, विश्वेभ्यो देवेभ्यो जुष्टं०, द्यावापृथिवीभ्यां जुष्टं०, । प्रोक्षणे-इन्द्राग्निभ्यां त्वा जुष्टं०, विश्वेभ्यस्त्वा देवेभ्यो जुष्टं०, द्यावापृथिवीभ्यां त्वा जुष्टं० । कणनिधानान्ते चरोस्तण्डुलाम्पृ-

एककपालः ॥५॥ उद्वास्यान्तांश्छादयेदाज्येन ॥६॥ आज्यस्य वा यजेत् ॥७॥ पुराणानां वा चरुः ॥८॥ प्रथमजो गौर्दक्षिणा ॥९॥ वैश्वदेवस्य च ॥१०॥ दर्शपूर्णमासानीजानो दक्षिणाग्निपक्वं चातुष्प्राश्यं ब्राह्मणान् भोजये-

---

थकृत्यालम्भः। इदमिन्द्राग्न्योर्द्यावापृथिव्योश्च। इदं विश्वेषां देवानाम्।

कपालोपधाने ऐन्द्राग्नस्य द्वादशकपालान्युपधाय तस्योत्तरतश्चरुस्थानं कृत्वा तस्योत्तरत एककपालस्य प्रथमकपालधर्मेणोपधानम्। तपसा तव्यस्त्वेत्यभ्यूहनम्।

"पयसि वै"ति वैश्वदेवचरोः पयसा श्रपणपक्षे पयस उपसर्जनीमधिश्रित्योद्वास्य चरौ निनयति। तत्र प्रतिग्रहमन्त्रे ऊहः। संपय ओषधीभिः समोषधयो रसेन। स꣡ꣳ रेवतीर्जगतीभिः पृच्यता꣡ꣳ संमधुमन्मधुमतीभिः पृच्यतामिति। उदकेन श्रपणपक्षे प्रकृतिवत्। चरुधर्मा अन्वारम्भणीयायामुक्ताः।

पुनरपि संयवनानन्तरं समं विभज्यालम्भः। इदमिन्द्राग्न्योः, इदं द्यावापृथिव्योः। पुरोडाशयोर्मध्ये चरोरधिश्रयणम्। द्यावापृथिवीयस्य प्राणदानं कृत्वा लौकिकेनाज्येन तस्यान्ताच्छादनम्। प्राणदाने इन्द्राग्नी गच्छ। विश्वान्देवान् गच्छ। द्यावापृथिव्यौ गच्छ। प्राकृतं च विकृताविति न्यायात्।

अवबाधने सप्तदशेन वज्रेणेति। उत्तमप्रयाजे—इदमग्नये सामायेन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां देवेभ्य आज्यपेभ्यः। आज्यभागौ।

प्रधानयागे इन्द्राग्निभ्यामनुब्रूहि। इन्द्राग्नी यज। विश्वेभ्यो देवेभ्यः। उपांशु अनुब्रूहीति प्रथमेन। चरोर्मेक्षणेनावदानम्। विश्वान्देवान् उपांपांशु यज। द्यावापृथिवीभ्याम् ( उपांशु ) अनूब्रूहि। द्यावापृथिव्यौ ( उपांशु ) यज। सकृदुपस्तीर्य सर्वमपि पुरोडाशमखण्डमेव जुह्वां निधायोपरिष्टाद् द्विरभिघारयति।

मानवे—"एककपालमन्यस्यां पात्र्यामलंकुर्वन्नभिपूरयति प्रचरणवेलायां बर्हिषि सादयित्वोपस्तीर्यैककपालं सकृत्समवद्यत्याशयस्यान्वासिच्य द्विरभिघार्योपांश्वेककपालेन प्रचर्य वषट्कृते मध्ये पाणिना जुहूस्यृजुं प्रतिष्ठितमाशयेनाभि जुहोतो"ति। अथवोपांशुयाजवद् ध्रुवायाश्चतुरवदाय द्यावापृथिवीययागः कर्त्तव्यः। ततः स्विष्टकृदादि। प्राशित्रेडाव्यतिरिक्तं किमपि न भवति। कर्कमते चतुर्द्धाकरणवर्जं सर्वं भवत्येव।

त्किञ्चिद्दद्यात् ॥११॥ अग्निहोत्रायणिनो नवैः सायम्प्रा·

दक्षिणायामूर्गंसीत्यस्य स्थाने प्रथमजो गौरस्यूर्जमिति । अस्या इष्टेः समृद्ध्यर्थं प्रथमजं गां दक्षिणां ब्रह्मणे इत्यादि पूर्ववत् । ब्राह्मणा अयं वः प्रथमजो गौः प्रतिगृह्णीतेति । द्यौस्त्वा ददात्वित्ययमेव प्रति· ग्रहणमन्त्रः ।

व्यूहने-इन्द्राग्न्योर्विश्वेषां देवानां द्यावापृथिव्योरुज्जितिम् । इन्द्राग्नी विश्वेदेवा द्यावापृथिव्यौ तमपनुदन्त्विति । प्रस्तरत्यागे इदमग्नये सोमा· येन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां देवेभ्य इत्यादि कर्मा पवर्गान्तम् । अन्यत्प्रकृतिवत् ।

दर्शपूर्णमासेष्ट्यनन्तरमेवाग्रयणाद्या विकृतयो भवन्ति न ततः पूर्वम्। तत्र कृताधानस्य सूतकशुक्रास्तादिवशेनानिष्टदर्शपूर्णमासस्य यजमान· स्याग्रयणकाले आगते कालातिक्रमे जायमाने आग्रयणकाल एव मातृ· श्राद्धं कृत्वा दक्षिणाग्नौ नवान्नं चातुष्प्राश्यं पक्त्वा ब्राह्मणान् भोजयेत् । तेभ्यो भुक्तवद्भ्यो यथाशक्ति किञ्चिद्दक्षिणां दद्यात् ।

दर्शपूर्णमासोत्सर्गानन्तरं केवलाग्निहोत्रहोमिनो यजमानस्य नवान्नेन सायंप्रातरग्निहोत्रहोमः कर्त्तव्यः । अथवा पूर्वदिने ऽग्निहोत्रीं गां नवान्नं खादयित्वा तस्या गोः पयसा सायंप्रातरग्निहोत्रं जुहुयादाग्रयणकाल एव । तेनैवाग्रयणसिद्धिः । गवामयनादिमध्ये आग्रयणकाले आयाते न· वान्नाशितायाः पयसा दीक्षितव्रतं कार्यं, तेनैवाग्रयणसिद्धिः । संवत्स· रोपसत्कादौ उपसत्स्वाग्रयणकाल आगते नवान्नेन रौहिणौ पुरोडाशौ कार्यौ । सुत्यास्वाग्रयणकाले नवान्नेन सवनीयाः कार्याः । आपस्तम्ब सूत्रे बह्वृचब्राह्मणे च दर्शपूर्णमासाभ्यां (प्रकृतिविकृत्योः सन्निपाते वैकृत· मेव बलीयः, तस्य निरवकाशत्वात्) समानतन्त्रमाग्रयणं पठित· मस्ति । तत्र पूर्वं प्राकृतानि हवींषि । (अपि वा "पौर्णमासे वा ऽमावास्यायां हवींष्यनुवर्त्तयेदि"ति शाङ्खायनश्रुतेः)पश्चादाग्रयणस्य । सा· मिधेन्यः प्राकृतसंख्या एव । दक्षिणाऽपि प्राकृत्येव ।

अथ श्यामाकाग्रयणमुच्यते-तच्च वर्षासु शरदि वा यजनीयेऽहनि शुक्लपक्षे· पुण्ये नक्षत्रे वा भवति । तत्र प्रथमप्रयोगे मातृश्राद्धमन्वारम्भणीयावत्कृ· त्वा श्यामाकेष्टिः कार्या । सोमदेवत्यः श्यामाकानां चरुर्भवति । तत्र श्यामाकाग्रयणेष्ट्यर्थमित्युद्धरणे । श्यामाकाग्रयणेष्ट्याऽहमिति वरणे । पात्रासादने कपालस्थाने चरुस्थाली । उपवेषाभावः । दक्षिणार्थं पुनः संकृतो रथः, क्षौमं वा, मधुपर्को वा दधिमधुघृतानि, वर्षाकाले धृतं परिहितं वासो वा । एते दक्षिणाविकल्पाः ।

तराग्निहोत्रहोमः ॥१२॥ तदाशितया वा पयसा ॥१३॥ दीक्षितव्रतं च ॥१४॥ उपसत्सु रौहिणौ कुर्वीत ॥१५॥ सुत्यासु सवनीयाः ॥१६॥ सौम्यः श्यामाकचरुरारण्यस्य ॥१७ वैणवो ग्रीष्मे ॥१८॥ पुनः संस्कृतो रथो दक्षिणा क्षौमं मधुपर्को वर्षाधृतं वा वासः ॥१९॥६॥

अमावास्यायामग्न्याधेयम् ॥१॥ कृत्तिकारोहिणीमृ-

---

हविः श्यामाकाः, विंशतिरिध्मकाष्ठानि। श्रुतावदानस्थाने मेक्षणम्। अन्यत्प्रकृतिवत्।

ग्रहणे-सोमाय जुष्टं०, प्रोक्षणे-सोमाय त्वा जुष्टं०। चरुधर्मा अन्वारम्भणीयायामुक्ताः। करणनिधानान्ते अध्वर्योः स्वयमेवोपसर्जन्यधिश्रयणम्। यजमानस्याज्यनिर्वापो वेदबन्धश्च। तण्डुलावापः। उपसर्जन्यानयनादि। पाऽयङ्गुलिप्रक्षालननिनयनाभावः। प्राणदाने-सोमं गच्छ। इदमहं सप्तदशेनेत्यवबाधनम्। उत्तमप्रयाजे-इदमग्नये सोमाय देवेभ्य इति त्यागः। प्रधानयागे-इदं सोमाय। मेक्षणेन चरोरवदानग्रहणम्। चतुर्द्धाकरणादि सर्वं भवति।

दक्षिणालम्भमन्त्रे ऊर्गसीत्यस्य स्थाने पुनः संस्कृतो रथोऽसीति, क्षौममसीति-वा, मधुपर्कोऽसीति वा, वर्षाधृतं वासोऽसीति वा। ब्राह्मणा इदं वो वर्षाधृतं वास इति। व्यूहने-सोमस्योज्जितिम् सोमस्तमपनुदत्विति। प्रस्तरहोमे-इदमग्नये सोमाय देवेभ्य इति। शेषं प्रकृतिवत्।

ग्रीष्मे ऋतौ वेणुयवानां सौम्यश्चरुर्भवति। तत्र सर्वं श्यामाकाग्रयणवन्निर्विशेषम्। आपस्तम्बे-विशेषः। "वेणुयवानामिष्टिमेके समामनन्ति वेणुयवेषु पक्वेषु वेणुयवानुद्धर्त्तवा इति सम्प्रेष्यति, तस्या एतदेव तन्त्रमेषा देवता आग्नेयी मत्रावरुणी प्राजापत्या वेति, ( ६ ३१. ८-११ ) एतत्तन्त्रमेषा देवते"ति श्यामाकेष्टौ यदुक्तं तस्यादेशः।

अत्र देवतान्तरपक्षे आरम्भे वृद्धिश्राद्धाऽन्वारम्भणीये भवतः। देवतान्यत्वे कर्मान्यत्वात्। सोमदेवतापक्षे तु न भवतः। श्यामाकेष्टिस्त्वापस्तम्बसूत्रे वैतानसूत्रे च व्रीह्याग्रयणेन समानतन्त्रतयाऽभ्युक्ताऽस्ति ॥ ६ ॥

इति चतुर्थस्य षष्ठी कण्डिका ॥ ६ ॥

---

अथाग्न्याधेयमुच्यते। तच्चामावास्यायां भवति। शाखान्तरात्पौर्णमास्यां च। तथा कृत्तिकासु वा रोहिण्यां वा, मृगशिरसि वा, पूर्वोत्तरफा-

७१ ब्रह्मसूत्रशाङ्करभाष्यम्। चतुःसूत्र्यन्त पूर्णानन्दीय व्याख्या सहितया श्रीगोविन्दानन्द प्रणीतया रत्नप्रभया समन्वितम्। सम्पूर्णम्। [ वेदान्तविभागे ९ ] रु० ५—०

७२ सिद्धान्तशिरोमणिः। श्रीभास्कराचार्य विरचितः। वासनाभाष्य सहितः ज्योतिषाचार्य म० म० श्री ६ मद्बापूदेवशास्त्रिकृतटिप्पणी सहितः। "गणिताध्यायः"। रु० २—० "गोलाध्यायः"। रु० २—० [ ज्यो० वि० ४ ] सम्पूर्ण रु० ४—०

७३ काकचण्डीश्वरकल्पतन्त्रम्। पण्डित रामकृष्ण शर्म्मणा सम्पादितम्। पण्डित बटुकनाथ शर्म्मा एम. ए साहित्योपाध्याय इत्येतेन लिखितया प्रस्तावनया सनाथीकृतम्। [ आयुर्वेद शास्त्रविभागे १ ] रु० ०—८

७४ किरातार्जुनीयम्। श्रीमत्कविकुलचूडामणिभारविविरचितम्। मल्लिनाथसूरिकृतया घण्टापथसमाख्यव्याख्यया तथा पं० श्रीगङ्गाधरशर्मणा कृतया सुधाऽऽख्यव्याख्यया समलङ्कृतम्। [ सर्गत्रयमात्रम् ]। [ काव्य वि० १० ] रु० ०—१२

७५ चन्द्रालोकः। पीयूषवर्षश्रीजयदेवकवि प्रणीतः। श्रीमत्पद्मनाभमिश्रापराभिधान प्रद्योतनभट्टाचार्य विरचितया चन्द्रालोकप्रकाशापराख्य 'शरदागम' टीकया सङ्कलितः। साहित्याचार्येण खिस्ते इत्युपाख्यनारायणशास्त्रिणा भूमिकादिभिः सम्भूष्य सम्पादितः। [ अलङ्कार वि० ३ ] रु० ०—१०

७६ किरातार्जुनीयम्। श्रीमत्कविकुलचूडामणिभारविविरचितम्। मल्लिनाथसूरिकृतया घण्टापथसमाख्यया तथा पं० श्रीकनकलालशर्मणा कृतया भावार्थदीपिनीव्याख्यया समलङ्कृतम्। [ सर्गत्रयमात्रम् ] [ काव्य वि० ११ ] रु० ०—६

७७ शक्तिवादः, श्रीगदाधरभट्टाचार्यप्रणीतः, पण्डितप्रवरश्रीहरिनाथतर्कसिद्धान्तभट्टाचार्यविरचितविवृतिसहितः। [ न्यायविभागे १० ] रु० ३—

७८ माथुरीपञ्चलक्षणी। पं श्रीउमानाथज्योतिकृतव्याख्या सहिता तथा माथुरीसिंहव्याघ्रलक्षणम्। पं० श्रीहरिरामशुक्ल विरचितया व्याख्यया सहितं तथा पं० श्रीहरिहरशास्त्रि सङ्कलित माथुरीपञ्चलक्षणी कारपत्रेण च। [न्याय वि० ११] रु० ०—६

७९ रसाध्यायः। टीकया संवलितः। [ आयुर्वेदशास्त्र वि० २ ] रु० ०—१०

८० (१) पाणिनिव्याकरणे वादरत्नम्। न्यायव्याकरणाचार्य मीमांसक शिरोमणि पं० सूर्यनारायणशुक्लेन विरचितम्। ( तत्र च न्याय परिष्कारपरिशिष्ट भेदेन प्रकरण त्रयम् यत्र पञ्चन्यून सार्धशतसूत्रेषु १४५ महताटोपेन न्यायाविचारितः तत्र प्रथमं प्रकरणं मुद्रितं प्रथमो भागः। [ व्या० वि १० ] रु० १—८

८० (२) पाणिनीव्याकरणे वादरत्नम्। द्वितीयोभागः [ न्या० वि० ] रु० १—४

८१ गणितकौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितगणितसंग्रहपुस्तकम्। [ गणितविभागे १ ] रु० ०—६

८२ छन्दः कौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितछन्दसंग्रहपुस्तकम्। [ छन्दोविभाग ३ ] रु० ०—८

८३ योगदर्शनम्। महर्षिप्रवरपतञ्जलिप्रणीतम्। तत्र ( १ ) भोजवृत्तिः, [ २ ] भावागणेशवृत्तिः, [३] नागोजीभट्टवृत्तिः, [४] मणिप्रभा, [५] योगचन्द्रिका, [६] योगसुधाकराख्य टीका षटकसमेतम्। सटिप्पण। [ योग० विभागे १ ] रु० २—०

८४ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम्। म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा परीक्षोपयोगि सुधाऽऽख्यव्याख्या सहितः। १ से ४ सर्गः मूल्यम् रु० १—४—० तथा १ से ५ सर्गः रु० १—८ तथा ६ से १० सर्गः। रु० १—०

८५ योगदर्शनम्। पं० श्रीबलदेवमिश्रकृत योगसूत्रप्रदीपिकाख्यव्याख्यया सहितम्। सटिप्पण। [ योग वि० २ ] १—०

८६ काव्यमीमांसा। राजशेखरविरचिता। साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्ते कृत काव्यमीमांसा—चन्द्रिका टीका सहित [ १ से ५ अध्याय ] प्रथमो भागः। [ काव्यविभागे १३ ] रु० १—८

८७ नागानन्दनाटकम् । श्रीहर्षदेवप्रणीतम् । काशीविश्वविद्यालयाध्यापकेन एम० ए० साहित्याचार्य पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्यया समलङ्कृत्य बृहत् भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम् । [ नाटक विभागे १ ] रु० १—४

८८ मेघदूतकाव्यम् । महाकवि श्रीकालीदास विरचितम् । मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य पं० श्री नारायण शास्त्री खिस्तेकृत भावप्रबोधिनीव्याख्या टिप्पण्या च सहितम् । [काव्य० १४] रु० ०—८

८९ जागदीशीव्यधिकरणम् । न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्यायविभागे १२ ) रु० २—०

९० काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ४ ) रु० १—४

९१ वैयाकरणसिद्धान्तचन्द्रिका । श्रीरामाश्रमप्रणीता । श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता । पं० श्रीनवकिशोर-शास्त्रिणानिर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया लिङ्गानुशासनप्रक्रियया उणादिकोषेण च सहिता । ( व्या० वि० ११ ) पूर्वार्द्धम् । रु० २—८
उत्तरार्द्धं । रु० २—८

९२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शास्त्रिणा संशोधितम् । साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम् । (पुराणेतिहास वि० १) रु० ८—०

९३ आपस्तम्बधर्मसूत्रम् । श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम् । ( कर्मकाण्डविभागे ७ ) रु० ४—०

९४ अवच्छेदकत्वनिरुक्तिः । श्रीजगदीशतर्कालङ्कारकृताः । न्यायाचार्य श्रीशिवदत्त-मिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितः । ( न्याय वि० १३ ) रु० १—४

९५ संस्कारदीपकः । गणेशपूजादिग्रहयागान्त-पूर्वाङ्ग-निरूपणात्मकः प्रथमो भागः । म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीयविरचितः । ( कर्मकाण्ड वि० ८ ) रु० २—०

९६ वर्षकृत्यदीपकः । कालनिर्णयव्रतोद्यापनसहितः । म० म० पं० नित्यानन्दपन्त-पर्वतीय विरचितः । ( कर्मकाण्ड वि० ९ ) रु० ३—८

९७ श्रौतसूत्रम् । श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम् । (कर्म० वि० १०) रु० २—०

९८ नलचम्पूः अथवा दमयन्तीकथा । महाकविश्रीत्रिविक्रमभट्ट विरचिता । विषमपद-प्रकाशाख्यव्याख्यया सहिता । भावबोधिनी टिप्पणी सहिता । (का० वि० १६) रु० १—४

९९ श्रीब्रह्मसूत्रम् । श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभा-ख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येन च सनाथीकृतम् । ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—०

१०० वाग्वल्लभः । सर्वथाऽपि नवीनोऽपूर्वः प्रौढः परमोपयोगितया नियतमुपादेयतमश्छ-न्दोनिबन्धः, श्रीमता दैवज्ञाग्रेसरेणागममार्मिकेण कविपुङ्गवेन दुःखभञ्जनविदुषा विरचितः, तत्सुतेन बहुशास्त्रपारगेण कविचक्रवर्तिना महामहोपाध्यायेन देवीप्रसाद पाण्डेयप्रवरेण कृतया वरवर्णिन्या टीकयोपस्कृतः । ( छन्दः शास्त्र वि० ४) रु०

१०१ सिद्धान्तलक्षणम् । श्रीजगदीशतर्कालङ्कारकृतम् । न्यायाचार्य श्रीशिवदत्तमिश्र-विरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्याय विभागे ) रु० १—८

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 434.

श्रीमन्महर्षिकात्यायनप्रणीतं

# श्रौतसूत्रम्

देवयाज्ञिकपद्धतिसहितम् ।

काशीविश्वविद्यालयाध्यापकेन

वेदाचार्य श्रीविद्याधरशर्मणा

संशोधितम् ।

# KĀTYĀYAN SRAUTA SŪTRA

WITH

DEVAYĀJÑIKA PADDHATI

*Edited by*

VEDĀCHĀRYA

PANDIT S'RĪ VIDYĀDHARA S'ARMĀ

Professor, Benares Hindu University

FASCICULAS. II-२.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE.

*Benares City.*

1934.

श्रीः



आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबक ४३५

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

**गशिरःफल्गुनीषु ॥२॥ हस्तो लाभकामस्य ॥३॥ चित्रा च क्षत्रियस्य ॥४॥ वसन्तो ब्राह्मणब्रह्मवर्चसकामयोः ॥५॥**

ल्गुनीषु वा, लाभकामस्य ब्राह्मणस्य हस्तनक्षत्रे वा, क्षत्रियस्य लाभकामस्य चित्रानक्षत्रे वा, वसन्तर्तौ ब्राह्मणस्य निष्कामस्य ब्रह्मवर्चसकामस्यापि, ग्रीष्मे क्षत्रियस्य निष्कामस्य, श्रीकामानां सर्वेषामपि, वर्षासु प्रजाकामस्य पशुकामस्य च त्रैवर्णिकस्य, वैश्यस्य निष्कामस्यापि, रथकारस्य वा । "यदहरेवैनं श्रद्धोपनमेत्तदहरादधीते"ति श्रुतेर्यदा श्रद्धोत्पद्यते तदैवाधानं नात्र कस्यापि कालस्य नियमः ॥

आपस्तम्बः-"हस्ते यः कामयेत प्र मे दीयेनेति चित्रायां राजन्यो भ्रातृव्यवान् विशाखयोः प्रजाकामो ऽनुराधेष्वृद्धिकामः श्रवणे पुष्टिकाम उत्तरेषु प्रोष्ठपदेषु प्रतिष्ठाकामः सर्वाणि नित्यवदेके समामनन्ती"ति(१)॥

ज्योतिःशास्त्रे—

"अग्नेः परिग्रहं कुर्याद्विशाखाकृत्तिकामृगे ।
रेवतीरोहिणीपुष्ये ज्येष्ठायामुत्तरात्रये" इति ॥

कारिकायाम्—

"माघादिपञ्चमासेषु श्रावणे चाश्विने तथा ।
कुर्यान्मृगोत्तमाङ्के वा आधानं शुक्लपक्षतः ॥
हस्तत्रये विशाखासु कृत्तिकादित्रये तथा ।
पुनर्वसुद्वये तद्वद्रेवतीषूत्तरासु च ॥
भौमार्किवर्जिते वारे नाधिमासे तथा क्षये ।
चन्द्रेऽनुकूले पूर्वाह्णे रिक्ताविष्टिविवर्जिते" इति ॥

मानवे-"श्वोऽग्नीनाधास्यमान उपवसेत्पूर्वां पौर्णमासीमुत्तराममावास्यां नक्षत्रं वेति ॥

आपस्तम्बः—"पौर्णमास्यां तु पूर्वस्मिन्पर्वणि सेष्टिं सान्वारम्भणीयमपवृज्य श्वोभूते पौर्णमासेन यजत" इति ॥

काठके च—"आधानं चेत्पौर्णमास्यां पूर्वां तनूदेवताभ्य उपवसेदुत्तराम न्वारम्भणीयायै पर्वणे चे"ति ॥

लौगाक्षिः—"पौर्णमास्यामादधानः पूर्वामुपोष्याधायाग्न्याधेयेष्टिभिरिष्ट्वा जुह्वदग्निहोत्रमुपतिष्ठमानो वसति श्वोऽन्वारम्भणीया पौर्णमासं चेति (४. ७. १.) । अतश्चामावास्यायामाधाने अमावास्यायामुपक्रमः, प्रतिपदि मन्थनादीष्ट्यन्तम् । पौर्णमास्यां चेच्चतुर्दश्यामुपक्रमः,

(१) ४. ७. ४.

**ग्रीष्मः क्षत्रियश्रीकामयोः ॥६॥ वर्षाः प्रजापशुकामवैश्यरथकृताम् ॥७॥ अग्न्यगारे कुर्वन्ति ॥८॥ उदग्वंशं**

---

पौर्णमास्यां मन्थनादि इष्ट्यन्तम् ।

अथ हपक्षे तस्मिन्नेव दिने ऽन्वारम्भणीया पौर्णमासार्थमग्न्यन्वाधानाद्युपक्रमश्च । प्रतिपदि पौर्णमासयागः । सद्यश्चेत्पौर्णमासं तदा प्रतिपद्येवान्वारम्भणीया पौर्णमासं चेति । नक्षत्राधानपक्षेऽपि पूर्वेद्युरुपक्रमः । नक्षत्रदिने मन्थनादि । त्रिरात्रषड्रात्राद्यग्निधारणमध्ये चेत्पौर्णमासेष्ट्यारम्भस्तदा तेषु नित्यधृतेष्वेवाग्निष्वन्वारम्भणीया पौर्णमासेष्टिश्च कार्या, न पृथगुद्धरणम् ।

अथात्र पदार्थक्रमः । तत्र देहशुद्धये कृतप्रायश्चित्तो यजमानो मातृपूजापूर्वकं मातृश्राद्धं कृत्वा ऋत्विजो वृणीते । तत्र स्फ्योपग्रहो यवानादाय ऋत्विजो दक्षिणं जान्वालभ्यामुकसगोत्रामुकशर्मन् नित्यनैमित्तिककाम्यकर्मानुष्ठानार्थं श्रौताग्नीनग्नीनहमाधास्ये तत्र मे त्वं ब्रह्मा भव, होता भव, अध्वर्युर्भव, अग्नीद्भवेति वृत्वा तानभ्यर्च्य सुप्रोक्षितादि । यजमानस्य तिलकादिमाङ्गल्यम् , आशीर्वादाः ।

तत्र पूर्वमरण्यादेर्लक्षणमुच्यते—शमीगर्भस्याश्वत्थस्य या प्राङ्मुखी शाखा भवति उदङ्मुखी वा, ऊर्ध्वगा वा तां छित्त्वोभे अरणी कुर्यात् । अरणिश्चतुर्विंशत्यङ्गुष्ठदीर्घा, षडङ्गुष्ठविस्तारा, चतुरङ्गुष्ठोच्छ्राया च भवति । एवंविधा अधरारणिरुत्तरारणिश्च कार्या । अष्टाङ्गुलदीर्घो द्व्यङ्गुलोत्सेधविस्तार उत्तरारण्या ईशानदिग्भागस्थितः प्रमन्थो गृह्यते । द्वादशाङ्गुलं खादिरं चात्रं वृत्तमष्टाश्रि मूलेऽग्रे च लोहपट्टिकया नद्धं, तस्याग्रे लोहमयः कीलकः कार्यः । मूले च चतुरस्रो गर्त्तः प्रमन्थाग्रप्रवयणार्थः कार्यः । ओविली च ( कर्म प्र. १. ७. ५. ) खादिरी द्वादशाङ्गुला ऽधोभागे लोहपट्टिकायुक्ता च कार्या । तस्यां पट्टिकायां कीलकस्योपरि स्थापनार्थानि निम्नानि स्थानानि कार्याणि । गोबालैः शणमिश्रैस्त्रिगुणं वृत्तं व्यामप्रमाणं च नेत्रं कार्यम् ।

अत्र पूर्वं द्वे अग्निगृहे ऽर्थपरिमाणे कर्त्तव्ये । तत्राहवनीयगृहमध्ये वेदिराहवनीयखरसंयुक्ता । गार्हपत्यमध्ये गार्हपत्यखरो दक्षिणाग्निखरश्च कार्यः । तत्साधनोपाय एवम् । पूर्वं केनचिदुपायेन प्राचीं निश्चित्याग्न्यगारयोर्मध्ये पूर्वापरायतां रज्जुदण्डरेखां कृत्वा गार्हपत्यागारस्यापरभागे यथासम्भवं भूमिं परित्यज्य चतुर्दशाङ्गुलैर्वृत्तं गार्हपत्यखरं कुर्यात् । अत्रारत्नेश्चतुर्विंशो भागोऽङ्गुलम् , न त्वङ्गुष्ठबृहत्पर्वप्रमाणं षड्यवप्रमाणं

**वाऽपरम् ॥९॥ दक्षिणपूर्वे द्वारे ॥ १० ॥ पौर्णमासवद्रूप**

वा(१)। कुतः, परिशिष्टेषु सर्वखराणामरत्निप्रमाणोक्तेः। तथाहि—

"अरत्निश्चतुरस्रस्तु पूर्वस्याग्नेः खरो भवेत्।
रथचक्राकृतिः पश्चाच्चन्द्रार्द्ध इव दक्षिणः"

इति यज्ञपार्श्वे।

निगमेऽपि—"परिमण्डलं गार्हपत्यस्य धिष्ण्य, मरत्निमात्रं चतुरश्रमाहवनीयस्या,ऽर्द्धं चन्द्रवद्दक्षिणाग्नेः, सभ्यावसथ्ययोर्गार्हपत्यव"दिति।

एवमरत्निमात्रक्षेत्रगतं गार्हपत्यखरं साधयित्वा तस्य मध्यादारभ्याष्टासु प्रक्रमेष्वेकादशसु द्वादशसु मत्या वेति ( ४. ८. १९ ) उक्तप्रमाणादधिकेषु वा न्यूनेषु वा प्रक्रमेष्वाहवनीयखरस्य मध्यं कुर्यात्। ततः—

"यावत्प्रमाणा रज्जुः स्यात् तावानेवागमो भवेत्।
आगमार्द्धं भवेच्छङ्कुरन्तरर्द्धे निरञ्छनम्" ( का० शु० प० )

इत्यनेनोपायेनारत्निमात्रं चतुरश्रमाहवनीयखरं साधयेत्।

ततो "गार्हपत्याहवनीययारन्तरं षड्ढा सप्तधा वाऽऽगन्तुसमं त्रेधा विभज्यापरवितृतीयलक्षणेन दक्षिणाऽऽयम्य तस्मिन्नग्नि" (का०शु० प०) रित्यनेनोपायेन दक्षिणाग्निखरस्य मध्यं कल्पयित्वा "विपर्यस्योत्तरत उत्कर" इत्युत्करस्थानमप्यङ्कयेत्।

प्रकारान्तरमप्युच्यते—"अपिवाऽन्तरत्रिभागोनया रज्वा पूर्वार्द्धे समचतुरश्रं कृत्वा श्रोण्यामग्निरि"त्यनेनोपायेन ( शु० प० ) दक्षिणाग्निस्थानमप्यङ्कयित्वा "विपर्यस्योत्तराऽंसे उत्तर" इत्युत्करस्थानं कुर्यात्। ततः—

(२)"सयवैरङ्गुलैः षड्भिरथर्ये वृत्तमालिखेत्।
चतुर्भिः सयवस्त्रिंशद्भिरेन्मण्डलकं ततः" ॥

इति दक्षिणाग्निखरमर्द्धचन्द्रकारं साधयेत्। अथवा—

"षोडशाङ्गलतार्तीये वृत्तं स्यात् षोडशाङ्गुलम्।
तावानेव ततो गत्वा हरेद् वृत्तमथर्यके" ॥

इत्युपायेन वा दक्षिणाग्निखरं साधयेत। अत्राप्यरत्नेश्चतुर्विंशो भागो ऽङ्गुलम्। अतोऽरत्निप्रमाणरज्ज्वास्तृतीयं भागं परित्यज्य

( १ ) शुल्बप० श्लो० २४.

( २ ) शुल्वोक्तरीत्या वितृतीये शङ्कुं निखाय तस्मादुत्तरतः सयवैः षड्भिरङ्गुलैः शङ्कुदंयः। षोडशभिरङ्गुलैस्तत्र वृत्तम्परि लिखेत्। त्रिंशद्भिरङ्गुलैरायम्य तृतीयं भागं हरेत् इति रत्नगुम्फः। यत्र देशे त्रिंशदङ्गुला ज्या भवति तत्र त्रिंशदङ्गुलां प्राचीज्यारूपां रज्जुं दत्वा परिशिष्टमुत्तरं तृतीयं भागं त्यजेत् इत्यर्थः।

नम् ॥११॥ क्षौमे वस्ते ऽहते पत्नी च ॥१२॥ सᳪंस्थिते ऽध्वर्यवे दद्यं ॥ १३ ॥ गार्हपत्यागारे निर्मथ्याभ्यादधाति ॥१४॥ वैश्यकुलाम्बरीषमहानसाद्वा ॥१५॥ दिवाऽश्नाति रात्रौ वा ॥१६॥ उपास्तमयं "देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे । यस्याहमस्मि न तमन्तरयामि स्वं मऽइष्टᳪं स्वᳪं श्रान्तᳫं हुतमस्त्वि"ति ॥१७॥ पूर्वेण प्रविशति दक्षिणेन पत्नी ॥ १८ ॥ पश्चादग्नेरुपविशतो दक्षिणतः पत्नी ॥१९॥ अश्वत्थशमीगर्भाऽरणी प्रयच्छति ॥२०॥ अभावे ऽगर्भस्य ॥२१॥ वाचं यच्छापूर्णा-

---

भागद्वयेन षोडशाङ्गुलं वृत्तं कुर्यात् । वेदिसाधनोपायश्च दर्शपूर्णमासेष्टावेवोक्तः ( २.६.१-१० ) । सभ्यस्य खरोऽपि गार्हपत्यखरवद् वृत्तः कार्य्यः ।

अत्रायं पदार्थ क्रमः । पूर्वं गार्हपत्यागारकरणम्, तच्चार्थात्परिमाणं, पूर्वं दक्षिणद्वारं प्राग्वंशं वा कार्यम् । तत आहवनीयागारं नियमेन प्राग्वंशं पूर्वापरद्वारं कार्यम् । सर्वे ऋत्विग्यजमानाः सम्भूयाग्न्यगारे कुर्वन्ति बहुवचनात् । ततः पौर्णमासवद्वपनम् । अत्राहापस्तम्बः—"केशश्मश्रु वपते नखानि निकृन्तते स्नात्येवं पत्नी केशवर्जम्" इति । ततः क्षौमे अहते वाससी यजमानः परिधत्ते पत्नी च । तत्र यजमानस्य परिधास्यै यश इति परिधानमन्त्रः । यशसा मेत्युत्तरीयस्य । द्विराचमनम्, पत्न्याश्च । ततोऽध्वर्युर्गार्हपत्यागारे अर्थाक्षिप्तकाष्ठाभ्यामग्निं निर्मथ्य गार्हपत्यागारमध्ये गार्हपत्यखरे पञ्चभूसंस्कारपूर्वकं स्थापयति । अथवा वैश्यकुलादग्निमाहृत्याम्बरीषाद् भ्राष्ट्राद्वा आहृत्य, अथवा महानसादाहृत्य । महानसं नित्यपाकार्थं गृहम् ।

ततो यजमानो दिवा अश्नात्येव, रात्रौ चेच्छया । ततो ऽस्तमयसमीपे आहवनीयागारात्पूर्वस्यां दिश्युपविश्य स्फ्योपग्रहो देवाः पितर इति मन्त्रेण देवान् पितॄंश्चाह्वयति । पत्न्यपि तत्र सन्निधावुपविशति, अग्रे उभयोः प्रवेशविधानात् । ततो यजमानः पूर्वेणाहवनीयागारद्वारेण प्रविशति । गार्हपत्यस्य दक्षिणद्वारेण पत्नी प्रविशति । गार्हपत्यागारमध्ये स्थापितस्याग्नेः पश्चात्पत्नीयजमानौ प्राङ्मुखावुपविशतः । तयोर्मध्ये पत्नी दक्षिणत उपविशति ।

हुतेरित्याहास्तमिते निशायां पर्युदयं वा प्रधानकाल-त्वात् ॥२२॥७॥

गार्हपत्यागारेऽजं बध्नाति न वा, विद्यमानं प्रात-रग्नीधे दद्यात् ॥ १ ॥ अस्तमिते रोहिते चर्मण्यानडुहे च-त्वारि हविष्यपात्राणि मिमीते तं चातुष्प्राश्यं पच-ति ॥२॥ उद्धास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याऽऽश्व-त्थीस्तिस्रः समिधो घृताक्ता आदधाति समिधाऽग्निमिति प्रत्यृचम् ॥३॥ उप त्वेति जपति ॥४॥ द्वितीयां वाऽध्व-र्युः ॥५॥ चत्वार ऋत्विजः प्राश्नन्ति ॥६॥ रात्रिस्ते ब्र-

ततोऽध्वर्युः पूर्वोक्तलक्षणे अरणी आचारात् अहतवस्त्राच्छादिते यजमानाय समर्पयति। पत्नी तु यजमानहस्तादधरारणिं गृहीत्वाऽङ्के निदधाति। यजमानोऽपि अङ्के उत्तरारणिं निदधाति। उभावप्यरण्योः कुङ्कुमचन्दनपुष्पादिभिः पूजां कुरुतः। ततस्तिलकादिमाङ्गल्यमाशी-र्वादाश्च। ततो दम्पती आचम्य देवान् ब्राह्मणांश्च नमस्कृत्य पीठाद्युप-र्यरणी निधत्तः ॥ ७ ॥

इति चतुर्थस्य सप्तमी कण्डिका ॥ ७ ॥

---

ततोऽस्तमयादारभ्य सकलां रात्रिं स्वकीयं परकीयं वा अजं गार्ह-पत्यागारे बध्नाति, न बध्नाति वा। यदि बद्धः स्वकीयो भवति तदा प्रातः कर्मणि संस्थिते तमजमाग्नीध्रे दद्यात्। स्वकीयाभावे दानाभावः।

ततोऽस्तमिते सूर्येऽध्वर्युः रक्ते आनडुहे चर्मणि चत्वारि तण्डुल-पात्राणि प्रक्षिपति। प्रसृतित्रयपरिमितमेकैकं पात्रम्। एवं विधानि चत्वारि। ततस्तांस्तण्डुलान् स्थाल्यामोप्य द्विःप्रक्षाल्य स्थापितेऽग्नाव-धिश्रित्य तं चातुष्प्राश्यसंज्ञकमोदनं पचति। तत उद्वास्य पक्वस्यौदनस्य मध्ये गर्त्तं कृत्वा तत्र गर्त्ते घृतमासिच्य तेन घृतेनाक्ता आश्वत्थीस्तिस्रः समिधः प्रादेशमात्रीर्हस्ते कृत्वोत्थाय तस्मिन्नग्नौ समिधाऽग्निमित्यनेन म-न्त्रेण ( ३. १ ) तासां समिधां मध्यादेकामादधाति। तत उपविश्य उपसमिद्धायेति ( ३. २. ) स्वरेण जपति। तत उत्थाय तं त्वा समिद्भिरित्य-नेन ( ३. ३ ) द्वितीयां समिधमादधाति। तत उप त्वाऽग्न इति ( ३. ४. ) तृतीयां समिधमादधाति।

**ह्मौदन इत्याह ॥७॥ वरं ददाति ॥८॥ सम्वत्सरं वा पुरस्तात्कुर्यात्ततः सर्वानादधीत ॥९॥ गार्हपत्येऽनुगते ग्रामाग्निमाहृत्य चातुष्प्राश्यं पक्त्वा विहरेत् ॥ १० ॥ रात्रिं जागरणधारणे ॥११॥ शकलैर्वा ॥१२॥ व्युष्टायामुपशमय्य दक्षिणा वा सꣳहरेदन्वाहार्यपचनश्चेत् ॥१३॥ स्थान·**

ततो यजमानश्चतुर्णामृत्विजां ब्रह्मादिक्रमेण पादौ प्रक्षाल्योपवेश्य तान् गन्धमाल्यादिभिरभ्यार्च्यान्नं संकल्प्य भोजयेत्। तत्र छन्दांसि एतद्वः पाद्यम्, छन्दोभ्य इदमासनम् इदमर्घ्यं छन्दोभ्यः स्वाहा इदमन्नं परिविष्टं परिवेदयमाणं चातृप्तेः छन्दोभ्यः स्वाहा छन्दांसि प्रीयन्ताम्, छन्दांस्यनेन प्रीणीम इति ( २.१.४.४ ) श्रवणादत्रैवमिदमर्चनं प्रकुर्वन्ति । ततस्ते ब्रह्मादयश्चत्वार ऋत्विजस्तमोदनं प्राश्नन्ति । ततोऽशनानन्तरं स्मृतिशुद्धो भूत्वाऽध्वर्युः स्फ्यं गृहीत्वा राद्धस्ते ब्रह्मौदन इत्याह । ततो यजमान ऋत्विग्भ्यो वरं ददाति । अस्य चातुष्प्राश्यपचनकर्मणः समृद्ध्यर्थमिमं वरं ब्रह्मादिभ्य ऋत्विग्भ्योऽहं सम्प्रददे । ब्रह्मन् यो भाग इत्यादि । वरशब्देनात्र येभ्यो दीयते तदभीष्टं यद्यजमानेन दातुं शक्यते हिरण्यवस्त्रधान्यादि तदुच्यते ।

(१)अथवैतच्चातुष्प्राश्यमाधानदिनात्पूर्वं सम्वत्सरं प्रतिदिनमुक्तविधिना कृत्वा सम्वत्सरे पूर्णे वर्षं यावत् समिदाधानसंस्कृतात्तस्मादग्नेः सकाशात्सर्वान् गार्हपत्याहवनीयदक्षिणाग्निसभ्यानादधीत । अत्र सम्वत्सरस्यान्त्यरात्रौ अशनम्, अजबन्धनं, जागरणं, वाग्बन्धप्रैष इत्येतानि भवन्ति, पूर्वेद्युर्विधानात । अयं श्रौताग्नीनामरणी विनैवोत्पादनप्रकारः । अस्मिन्पक्षे यदा गार्हपत्योऽनुगच्छति तदा लौकिकाग्निमाहृत्य चातुष्प्राश्यं पक्त्वा चतुर्भ्यो दत्वा ततोऽग्निहोत्रार्थं विहरेत् । पुनः स्वयोनेराहरणम् इति सम्प्रदायः ।

अथ प्रकृतमुच्यते। रात्रौ यजमानस्य जागरणम्, स्थापितस्याग्नेः सकलायां रात्रौ शकलैरेव धारणम्, गोमयपिण्डैरेव वा, न समुध्दितैः । ततोऽन्ये वाससी परिधाय परिहिते वाससी क्षालयित्वा शोषणार्थं विस्तार्येते । तत उषसि स्नात्वा पुनः परिदधीयाताम् । रात्रौ विभातायातायामरुणोदयकाले ऽध्वर्युः स्नात्वा तं स्थापितमाग्न स्वप्रयत्नेनोप·

(१) यस्मिन्नक्षत्रेऽग्निमाधातुकामः पर्वणि वा तस्य पुरस्तात्संवत्सरं द्वादशाहादौ वा संकल्पं करोति ततोऽरण्योराहरणादिसमिदाधानान्तमिति रामाण्डाराः ।

**मुल्लिख्याभ्युक्ष्यान्वारब्धे हिरण्यं निधायोषाऽऽखूत्करा-न्निवपत्यन्तेषु शर्कराः ॥ १४ ॥ हिरण्यमुपर्येके ॥ १५ ॥ एवमितरयोः ॥ १६ ॥ पुरस्तादाहवनीयस्याष्टासु प्रक्रमे-ष्वेकादशसु द्वादशसु मत्या वा ॥ १७ ॥ इतरस्य वितृतीये**

---

शामयेत् । अथवा यदि इममेवाग्निमन्वाहार्यपचनं करिष्यन् भवति तदै-नमग्निं तत उत्सार्य दक्षिणाग्निस्थापनावसरं यावद्दक्षिणस्यां दिशि क्वचित् सुगुप्ते धारयेत् , नोपशमयेत् ।

ततोऽध्वर्युर्वाचं यच्छाऽऽपूर्णाहुतेरिति यजमानं प्रेष्यति । ततो यज-मानः पूर्णाहुतिहोमपर्यन्तं वाग्यतो भवति ।

ततोऽध्वर्युर्गार्हपत्यखरे पञ्चभूसंस्कारान् कृत्वा पुनस्त्रिरुल्लिख्य यज-मानेऽन्वारब्धे(१) पुनरभ्युक्ष्य हिरण्यशकलं मध्ये निधाय ऊषान् मध्ये निवपति । ततस्तैरुपैर्वृत्तः खरः कार्यः । ऊषाः क्षारमृत्तिकाः । ततो मध्ये आखूत्कराणामाखुभिर्मूषिकैरुत्खातानां पांसूनां निवापं कृत्वा वृत्तं सम्पादनीयम् । ततः खरस्य परितः पञ्चाशतं शर्कराः संलग्ना नि-दधाति । एके सम्भाराणामुपरि हिरण्यनिधानं कुर्वन्ति ।

ततो गार्हपत्यखरमध्यादष्टासु प्रक्रमेषु पदप्रमाणेषु एकादशसु द्वाद-शसु वा मत्या वाऽऽहवनीयखरस्य मध्यं कर्तव्यम् । तत्रापि पूर्ववदे-व परिसमूहनादीन् पञ्चभूसंस्कारान् कृत्वा पुनरुल्लिख्य यजमानेऽन्वार-ब्धेऽभ्युक्ष्य हिरण्यशकलं निधायोषाखूत्कराणामावापं कृत्वा तैश्चतुरस्र-माहवनीयस्य खरं स्थण्डिलं कुर्यात् । ततस्त्रिसप्ततिसंख्याभिः शर्क-राभिः परितः (२)खरस्य तथा संलग्नं वेष्टनं कुर्यात् यथोखूत्करो पाऽऽनिःसृत्य न यान्ति । एवं सर्वखरेषु ज्ञेयम् ।

ततो दक्षिणाग्निखरे पञ्च भूसंस्कारान् कृत्वा तत उल्लिख्यान्वार-ब्धेऽभ्युक्ष्य हिरण्यं निधायोषाखूत्करनिर्वापं कृत्वा तैरर्द्धचन्द्राकारं खरं कुर्यात् । ततो द्वाविंशतिं शर्कराः परितः संलग्ना निदधाति । ततो गार्ह-पत्यखरवत्सभ्यखरं संस्कुर्यात् । तत्रापि पञ्चाशत् शर्कराः(३) । तत उदितेऽनुदिते वाऽग्निमन्थनं कुर्यात् । तत्र पूर्वमश्वमानयेति प्रैषमन्त्रोर्ध्वं

---

( १ ) अथ रामवाजपेयिमते परिसमुह्य उपलिप्य-उल्लिख्य-उद्धृत्य यजमानेऽन्वारब्धे अभ्युक्षणं पञ्चमं श्रौतं स्मार्तं तन्त्रेण । शर्करोपधानान्तमन्वारभः ॥

( २ ) यज्ञपा० ६३. ( ३ ) निगमप० २३.

**दक्षिणतः ॥१८॥ उत्सृप्तेऽग्निमन्थनमनुत्सृप्त एके ॥ १९ ॥ उदिते तूद्धरणम् ॥२०॥ अपरेण गार्हपत्यायतनम् ॥२१॥ अश्वमानयेति ब्रूयात् ॥२२॥ स्थितेऽश्वे पुरस्तात् ॥२३॥ जाते वरदानम् ॥ २४ ॥ मनसैके ॥२५॥ तस्याभिश्वासः प्राणममृते दध इति ॥२६॥ उच्छ्वासोऽमृतं प्राण आदध इति ॥ २७ ॥ २८ ॥**

---

प्रति ब्रूयात् ।

ततोऽग्नीदश्वमानीय पुरस्तात्प्रत्यङ्मुखं स्थापयति । अश्वस्तरुणो भवति तदभावेऽतरुणः । तदभावेऽनड्वान् । अश्वाभावे प्रैषाभावः, अनभिधानात् । प्रकृतावूहस्य निषिद्धत्वाच्चोहोऽपि न भवति ।

ततो गार्हपत्यायतनमपरेण दर्भाद्यास्तृतायां भूमौ अधरारणिमुत्तराग्रां निधायोत्तरारणेरीशानदिक्स्थमष्टाङ्गुलं प्रमन्थं छित्वा तस्य प्रमन्थस्याग्रं श्लक्ष्णं कृत्वा चात्रबुध्नगतगर्तमध्ये प्रवयति । ततोऽधरारणेर्मूलादष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलं त्यक्त्वा तत्र यच्चतुरङ्गुलमन्तराले भवति तन्मध्येऽग्निमन्थनार्थं तीर्थं कृत्वा प्राच्यामग्निनिःसरणाय वाहिनीं कृत्वा चात्रयुक्तं प्रमन्थं तीर्थस्योपरि निदध्यात्(१) । ततो यजमानः प्राङ्मुख उपविश्य चात्राग्रे यो लोहकीलको भवति तस्योपर्योविलीमुदगग्रां निधायावाष्टभ्य यन्त्रं कम्परहितं धारयेत । ततः पत्नी नेत्रेण त्रिर्वेष्टयित्वा मन्थति । ततोऽध्वर्युः प्रत्यङ्मुखो मन्थति । अग्नौ जाते यजमानोऽध्वर्यवे वरं ददाति अध्वर्यो वरं तुभ्यमहं सम्प्रदद इति वाचा । मनसैके संकल्पं कुर्वन्ति ।

ततस्तमग्निं शुष्कगोमयचूर्णकीर्णे कर्परे निधाय तं जातमग्निमभिलक्षीकृत्य यजमानो मुखेन श्वासं प्रेरयति फूत्कारं करोति "प्राणममृते दध" इति मन्त्रेण । ततः सुसमिद्धेऽग्नौ जातेऽग्नेर्ज्वालामूर्ध्वश्वासेन मुखमध्ये गृह्णाति "अमृतं प्राण आदध" इति मन्त्रेण ।

इति चतुर्थस्य अष्टमी कण्डिका ॥ ८ ॥

---

(१) कर्म प्र० (१.८.२-४)

दारुभिर्ज्वलन्तमादधाति भूर्भुव इति सम्भारेष्व-मुष्य त्वा व्रतपते व्रतेनादध इति यथर्षि ॥१॥ वरुणस्य त्वेति क्षत्रियस्येन्द्रस्य त्वेति राजन्यस्य ॥ २ ॥ मनोष्ट्वा ग्रामण्य इति वैश्यस्य, ऋभूणां त्वेति रथकृतः ॥ ३ ॥ रथन्तरं गायेति प्रेष्यति ॥ ४ ॥ गानमध्वर्योः ॥ ५ ॥ ब्रह्मा वा वेदयोगात् ॥ ६ ॥ युक्तस्त्वाच्चाध्वर्योः ॥ ७ ॥ इध्मेनोद्धरणमुपयम्य ॥ ८ ॥ यथैनं धूम उपेयात् ॥ ९ ॥ वामदेव्यमिति प्रेष्यत्यश्वः पुरस्ताद्युवा, तदभावेऽयुवा, ऽश्वाभावेऽनड्वान् ॥ १० ॥ सम्भारानधि-ष्ठाप्य दक्षिणपूर्वपादेन प्राञ्चं नीत्वाऽऽवर्त्य स्थापयति ॥११॥ बृहदिति प्रेष्यत्यग्निना पदं द्विरुपस्पृश्य तृतीयेना-ऽऽदधाति द्वितीयेन प्रथमेन वा भूर्भुवः स्वरिति पूर्ववत् ॥१२॥

---

ततोऽग्निं यज्ञियदारुभिर्ज्वलन्तं कृत्वा गार्हपत्यखरे स्थापयति, तत्र मन्त्रः–"ॐभूर्भुवः स्वः आदित्यानां त्वा देवानां व्रतपते व्रतेनादधे" इति । येषामङ्गिराः प्रवरो भवति तेषाम् "अङ्गिरसां त्वा देवाना"मिति स्थापन-मन्त्रः । येषां भृगुः प्रवरः तेषां "भृगूणां त्वा देवाना"मिति । भृग्वङ्गिरो-व्यतिरिक्ताना"मादित्यानां त्वा देवानामि"त्येव भवति । वरुणस्य त्वेति-क्षत्रियमात्रस्य मन्त्रः । इन्द्रस्य त्वा व्रतपत इति राज्ञः क्षत्रियस्य । मनो-ष्ट्वा ग्रामण्यो व्रतपत इति वैश्यस्य । ऋभूणां त्वा देवानां व्रतपत इति रथकृतो मन्त्रः ।

ततो रथन्तरं गायेति ब्रह्माणं प्रेष्यति । ततो ब्रह्मा रथन्तरं साम गा-यति। ततोऽपरिमितकाष्ठं त्रियूनबद्धमिध्मं गार्हपत्ये मूलभागेऽधिश्रयेत् । ततः प्रदीप्तमिध्ममुद्यम्योपयमनीभिर्मृद्भिः कर्परस्थाभिरधस्तादुपयम्याह-वनीयखरं प्रति नयति । अश्वश्च पुरस्तादग्रतो नीयते । यजमानश्च धूम-मनु गच्छति । गमनप्रारम्भ एव वामदेव्यं गायेति प्रैषः । ब्रह्मणो वामदे-व्यगानम् । तत आहवनीयखरसमीपे गत्वोपविश्याश्वस्य पूर्वदक्षिणपा-देनाहवनीयखरे न्युप्तान् सम्भारानधिष्ठाप्याऽऽक्रमय्य ततोऽश्वं प्राञ्चं नीत्वा प्रदक्षिणमावृत्य सम्मुखं स्थापयति । ततो बृहद् गायेति प्रैषः । ब्रह्मणो बृहत्सामगानम् ।

पुरस्तात्परिक्रम्येध्मपूर्वार्द्धं गृहीत्वा द्यौरिव भूम्नेत्याह ॥१३॥ आऽयं गौरिति चोपतिष्ठते सार्पराज्ञीभिः ॥ १४ ॥ दक्षिणाग्निमादधाति ॥ १५ ॥ सभ्यं च निर्मथ्य ॥ १६ ॥ गां दीव्यध्वमित्याह ॥१७॥ धारणोपस्थानमतः ॥१८॥९॥

श्यैत-वारवन्तीय-यज्ञायज्ञियानीति च प्रेष्यति ॥१॥ दक्षिणेनाग्नीन्परीत्योदगुत्सृजति ॥२॥ ऋतु-नक्षत्र-सम्भा-

---

ततोऽध्वर्युरग्निना अश्वस्य पदं द्विवारमुपस्पृश्य तृतीयेनोपस्पर्शनेनाग्निं स्थापयति द्वितीयेन वा, प्रथमेन वा । तत्र मन्त्रः—ओं भूर्भुवः स्वः आदित्यानां त्वेति । तत्सन्निधावेवोपयमनीरुपनिवपति ।

ततो यजमानोऽग्नेः पुरस्तात्परिक्रम्योपविश्येध्मस्य पूर्वार्द्धं गृहीत्वा द्यौरिव भूम्नेति मन्त्रं ( ३. ५. ) जपति । तत उत्थायाऽऽयं गौरित्याद्याभिस्तिसृभिः ( ३. ६-८. ) सार्पराज्ञीभिरुपतिष्ठते । अत एवेध्मपूर्वार्द्धस्य ग्रहणविधानादिध्ममूलस्यादीपनम् ।

ततोऽध्वर्युर्गार्हपत्यात्कर्परेणाग्निमादाय ज्वलन्तं दक्षिणाग्निखरे स्थापयति भूर्भुवः आदित्यानां त्वेति । ततो गार्हपत्यवदेव सभ्यस्य मन्थनम् । ततो यजमानो गां दीव्यध्वमित्यृत्विजः प्रेष्यति ।

ततो ब्रह्मादय ऋत्विजो विहारस्योत्तरत आनडुहं चर्मास्तीर्य तस्योपर्यधोमुखं कांस्यपात्रं निधाय पञ्च कपर्दकान् हस्ते गृहीत्वा समेन जयामि विषमेन जीयस इत्युक्त्वा कांस्यपात्रोपरि चतुर्वारं प्रक्षिपन्ति । तदलाभे शलाकादिभिर्वा द्यूतं कुर्वन्ति । ऋत्विज एव दीव्यन्ति न यजमानः, तस्य प्रेषणे कर्तृत्वात् । ततस्तां गां तेभ्य ऋत्विग्भ्यो दद्यात् । अस्मिन् द्यूते पणीकृतां गां ब्रह्मणे होत्रे अध्वर्यवे अग्नीधे च समविभागे नाहं सम्प्रदद इति । द्यौस्त्वेति प्रतिग्रहमन्त्रः ।

ततो दारुभिर्ज्वलन्तं सभ्यं स्थापयति, भूर्भुवः आदित्यानां त्वेति । अतः प्रभृति सभ्यस्य धारणमुपस्थानं च सदा कार्यम् ॥ ९ ॥

इति चतुर्थस्य नवमी कण्डिका ॥ ९ ॥

---

ततः श्यैतं गायेति प्रैषः । तद्गानम् । यज्ञायज्ञियं गायेति प्रैषः । ततस्तद्गानम् । अथवा समुदित एव यथा सूत्रितं प्रैषः । श्यैतवारवन्तीययज्ञायज्ञियानि गायेति । ब्रह्मणः क्रमेण गानम् ।

ततः सर्वानग्नीन्प्रदक्षिणं परीत्याश्वमुदगुत्सृजति । अजस्तु प्रातरुत्सृष्ट एव ।

**र-साम-वपन-चातुष्प्राश्य-जागरणे-ध्मपूर्वार्द्धान्वारम्भण-सार्पराज्ञानं वा कुर्यात् ॥३॥ अग्निहोत्रं च तूष्णीं श्रुतेः पूर्णाहुत्यन्ते ॥४॥ निरुप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं च सम्मृज्योद्वास्योत्पूयावेक्ष्य गृहीत्वाऽन्वारब्ध एवं**

अत्र वसन्तादीनामृतूनाम्, कृत्तिकादीनां नक्षत्राणाम्, अभ्युक्षणादीनां सम्भाराणाम्, रथन्तरादिसाम्नां, वपनस्य, चातुष्प्राश्यस्य, जागरणस्य, इध्मपूर्वार्द्धान्वारम्भणस्य, सार्पराज्ञीनां च विकल्पः।

ततः पूर्णाहुतिहोमः। तत्र विधिः—पात्रान्तरादाज्यस्थाल्यामाज्यनिर्वापः। गार्हपत्येऽधिश्रयणम्। खादिरस्रुवस्य दर्भैः सम्मार्गः। जुह्वाश्चाग्रैरन्तरतः प्राक्, मूलैर्बाह्यतः प्रत्यक्। आज्यस्योद्वासनम्। पवित्राभ्यामुत्पवनम्। स्रुवेण आज्यं गृहीत्वा स्रुक्पूरणम्। स्रुचाऽधस्ताद्भाजनादिनिधानं यथा स्कन्दनं न भवति। तत एकां पालाशीं प्रादेशमात्रीं समिधमुपसंगृह्योत्थाय गत्वाऽऽहवनीयस्योत्तरत उपविश्याहवनीयं परिस्तीर्योत्थाय समिधमाधायोपविश्य दक्षिणं जान्वाच्याग्निं मनसा ध्यायन् स्वाहाकारेण यजमानेऽन्वारब्धे जुहोति। इदमग्नय इति त्यागः। ततो यजमानो वरं ददामीति मन्त्रेण वाचं विसृजते। ततो यजमानोऽध्वर्यवे वरं ददाति। अस्याः पूर्णाहुतेः समृद्धये वरं दक्षिणां ब्रह्मणेऽध्वर्यवे चाहं सम्प्रददे इति। वरशब्देनात्र यस्मै दीयते तदभिलषितं यद्यजमानेन दातुं शक्यते वस्त्रहिरण्यधान्यादि तदुच्यते इति हरिस्वामिनः।

ततोऽध्वर्युरेव तूष्णीमग्निहोत्रं जुहोति। तत्र पूर्वं यजमानो गार्हपत्यदक्षिणाग्न्योरन्तरालेनाहवनीयं प्रत्यागत्याप्रदक्षिणमाहवनीयं परीत्य स्वस्थान उपविश्य तूष्णीमाचामति। पत्न्यप्येवमेवागत्य स्वस्थान उपविश्याचामति। ततोऽध्वर्युरपरेणाहवनीयं कूर्चं प्रागग्रमुदगग्रं वा निदधाति।

तत आहवनीयस्य परिस्तरणं पुरस्तात्पश्चाच्चोदगग्रैर्दर्भैः दक्षिणत उत्तरश्च प्रागग्रैः, पुरस्तात्प्रथमं ततः प्रदक्षिणमुदक्संस्थम्, ततो गार्हपत्यस्य परिस्तरणम्, ततो दक्षिणाग्नेः। ततो गार्हपत्यस्य पर्युक्षणम्, ततो दक्षिणाग्नेः। ततो गार्हपत्यादारभ्याहवनीयं यावदुदकधारां सन्ततां निनयति। तत आहवनीयस्य पर्युक्षणम्।

ततोऽशूद्रेण पुंवत्सामग्निहोत्रीं गां दोहयति, सङ्केतादिना दोहने प्रेरयति। सा च गौर्विहारं दक्षिणेन प्राङ्मुखी वोदङ्मुखी वा स्थाल्यां त्रैवर्णिककृतायामूर्ध्वकपालायां मार्त्तिक्यां दोह्यते। ततोऽध्वर्युर्गार्हपत्यस्य कतिपयानङ्गारानुत्तरतः पृथक्कृत्वा तत आहवनीयं पूर्वेण तद् दुग्धमु-

**सर्वत्र स्वाहेति ॥५॥ वरं ददामीति वाग्विसर्जनम् ॥६॥ द्वादशाहान्ते तनूहवींᳪषि निर्वपति मासे द्वितीये तृतीये षण्मास्ये सम्वत्सरे सद्यो वा न वा ॥७॥ अग्नये पवमानाय प्रथमा ॥ ८ ॥ अग्नये पावकायाग्नये शुचये च द्वितीया ॥९॥ अदित्यै चरुस्तृतीया ॥ १० ॥ आग्नेय एव वा पुरस्तादादित्यस्य ॥११॥ षड् दक्षिणाः प्रतिविभज्य**

रतः कुर्वन्नाहृत्य तेषूत्तरतः कृतेष्वङ्गारेष्वधिश्रयति । ततो ज्वलता एकेन दर्भतृणेन स्थाल्या उपरि धृतेन दुग्धमवज्योत्य स्रुवेण दुग्धमध्ये उदकमवनीय पुनस्तथैवावज्योत्योत्तरत उद्वास्य निदधाति । हस्तं विमुच्य पुनरादाय तत उत्तरतो निदधाति । पुनरप्यादाय ततोऽप्युत्तरतो निदधाति । एवं त्रिरुदगुद्वास्य वैकङ्कतं स्रुक्स्रुवं प्रतप्य पाणिना संमृज्य पुनः प्रतप्य यजमानं संकेतादिना पृष्ट्वा तिष्ठता यजमानेन तथैवानुज्ञातोऽग्निहोत्रहवण्यां सव्यहस्ते गृहीतायां स्रुवेण चतुरुन्नयति । पञ्चातिनः पञ्च स्रुवामुन्नयति ।

ततः स्रुवं स्थाल्यां मुक्त्वा पालाशादियज्ञियवृक्षसम्बन्धिनीं प्रादेशमात्रीं समिधं प्रागग्रां स्रुग्दण्डस्योपरि अङ्गुल्याद्यन्तरितां धारयन् गार्हपत्यस्योपरि समीप एव स्रुचं धृत्वा ततो मुखमात्रे स्रुचं धारयन् आहवनीयं प्रति हरति । ततो गार्हपत्याहवनीययोर्मध्ये स्रुचं नीचैः कृत्वा पुनर्मुखमात्र एव धारयित्वाऽऽहवनीयं प्राप्य तत्समीपे उत्तरत उपविश्य सव्यहस्ते स्रुचं कृत्वा तूष्णीं समिधमाधाय प्रदीप्तायां समिधि द्व्यङ्गुलं समिधो मूलादतिहृत्याग्निं ध्यात्वा गृहीतस्य चतुर्थांशं तूष्णीं जुहोति । इदमग्नय इति यजमानस्य त्यागः ।

ततः स्रुक्स्थमवशिष्टं पयः पात्रान्तरे कृत्वा तत्रैव निधाय प्रत्यागत्य पुनः सङ्केतादिना यजमानं पृष्ट्वा तथैव तिष्ठता यजमानेनानुज्ञातः पुनश्चतुरुन्नीय तथैव समिधमुपरि धारयंस्तथैवाहवनीये पुनः समिधमभ्याधाय सूर्यं मनसा ध्यायंश्चतुर्थांशं हुत्वा पूर्वमन्यत्र पात्रान्तरे कृतं पयः स्रुचि निनीय तां स्रुचं कूर्चे निधाय गार्हपत्यमवेक्षते । पुनः स्रुचमादाय पूर्वाहुतेरुत्तरतः स्रुवत्रयपर्याप्तामाहुतिं प्रजापतिमुद्दिश्य जुहुयात् । इदं प्रजापतय इति यजमानस्य त्यागः ।

ततः स्रुचं द्विरूर्ध्वामुत्क्षिप्य कूर्चे निदधाति । ततः स्रुगग्रं प्राक् प्रत्यक् अपमृज्य कूर्चे निमार्ष्टि तूष्णीम् । पुनरुत्तानेन हस्तेन तथैव द्विरु-

दद्याति द्वादश चतुर्विंशतिं वा ॥ १२ ॥ भूयसीश्च यथा-

न्मृज्य कूर्चस्य दक्षिणतो भूमौ पाणिमुत्तानं निदधाति । तत उदकं स्पृष्ट्वा गार्हपत्यं गत्वा तत्र समिधमाधाय कस्मिंश्चित्पात्रे एकं स्रुवं गृहीत्वा पात्रान्तरे द्वितीयं स्रुवं स्थापयित्वा तृतीयं स्रुवं गृहीत्वा पूर्वगृहीतेन सह तूष्णीं गार्हपत्ये जुहोति । इदमग्नये गृहपतये रयिमते पुष्टिपतय इति मनसा त्यागः । ततश्चतुर्थं स्रुवं गृहीत्वा द्वितीयवारं पात्रान्तरस्थापितेन सह जुहोति । इदं प्रजापतय इति त्यागः । ततो दक्षिणाग्नावेवमेव वारद्वयं जुहोति । इदमग्नयेऽन्नादायान्नपतये, इदं प्रजापतय इति त्यागौ ।

ततः स्रुचं गृहीत्वा बहिर्निष्क्रम्यानामिकया स्रुक्स्थं दुग्धं गृहीत्वा प्राश्याचम्य पुनरनामिकयैव गृहीत्वा प्राश्नाति । तत आचम्य पुनरनामिकयैव गृहीत्वा प्रश्नाति । तत आचम्य स्रुचः सकाशात्सर्वं पयो हस्तेन गृहीत्वा प्राश्य दुग्धलिप्तहस्तं जिह्वया सकृन्निर्लेढि आस्वादयति ।

तत आचम्याहवनीयसमीपे स्रुचि दक्षिणहस्तेनोदकं निनीय तया स्रुचोत्तरत उदकमुत्सिञ्चति तूष्णीम् । ततोऽपसव्यं कृत्वा स्रुचमुदकेन पूरयित्वा दक्षिणत उत्सिञ्चति पितृतीर्थेन तूष्णीम् । ततः सव्यं कृत्वाऽप उपस्पृश्य पुनस्तृतीयवारं स्रुचं पूरयित्वा प्रागुदीच्यां दिश्यूर्ध्वमुदकमुत्क्षिपति । पुनः स्रुचं पूरयित्वा कूर्चस्थाने आहवनीयमपरेण प्राक्संस्थं त्रिर्निषिञ्चति । ततः स्रुक्स्रुवमाहवनीये प्रतप्य वेदिमध्ये निधाय गार्हपत्याहवनीयदक्षिणाग्निषु क्रमेण तिस्रः तिस्रः समिध आदधाति तूष्णीम् । अत्राग्न्योरुपस्थानं न भवति ।

ततो गार्हपत्यदक्षिणाग्न्याहवनीयानां क्रमेण पर्युक्षणम् । ततः पत्नीयजमानौ वाचं विसृज्याऽऽचम्याहवनीयं प्रदक्षिणं परीत्य गार्हपत्यदक्षिणाग्नी अन्तरेण यथाप्रविष्टं निष्क्रामतः ।

इति तूष्णीमग्निहोत्रहोमः समाप्तः ॥

---

अथ तनूहवींषि लिख्यन्ते—

तत्राग्नये पवमानाय प्रथमा इष्टिर्भवति । तत्र विशेषः-उद्धरणाभावः । त्रिष्वप्यग्निष्वग्न्यन्वाधानं, ब्रह्मवरणाभावः, तदभावाद् व्रतजपस्याप्यभावः । चतुरासनम् । ब्रह्मा समन्त्रकमहे दैधिषव्य इत्यादिनाऽऽसनं संस्कृत्योपविशति । ततो यजमानस्य व्रतग्रहणं, प्रणीताप्रणयनम् , पात्रासादने अष्टौ कपालानि, दक्षिणार्थे तिस्रो गावः, षड् वा, द्वादश वा, त्रयोदशप्रभृतिपरार्द्धपर्यन्तमिच्छासंख्या वा । अष्टादशेध्मकाष्ठानि, "पाञ्चदश्यं सा-

मिधेनीनामि"ति ( २.३.१६ ) शाङ्खायनोक्तेः । अन्यत्सर्वं प्रकृतिवत् ।

ग्रहणे-अग्नये पवमानाय जुष्टं० । प्रोक्षणे-अग्नये पवमानाय त्वा जुष्टम् । प्राणदाने—अग्निं पवमानं गच्छ । अवबाधने-इदमहं पञ्चदशेन वज्रेणेति । उत्तमप्रयाजत्यागे—इदमग्नये सोमायाग्नये पवमानाय देवेभ्य इत्यादि । प्रधानयागे देवतापदमात्रमुपांशु । अग्नये पवमानाय उपांशु अनुब्रूहीति प्रथमस्थानेन । अग्निं पवमानं ( उपांशु ) यजेति प्रथमस्वरेण । इदमग्नये पवमानाय । ततः स्विष्टकृदादि प्राशित्रादि च सर्वम् ।

दक्षिणालम्भमन्त्रे ऊर्गसीति पदस्य स्थाने त्रिगवमसीति वा, षड्गमसीति वा, द्वादशगवमसीति वा, त्रयोदशगवं, पञ्चदशगवं, शतगवं, सहस्रगवमित्यादि पराद्धर्पर्यन्तं विकल्पेन ज्ञेयम् । अन्यत्प्रकृतिवत् । ब्राह्मणा इमा वस्तिस्रो गाः प्रतिगृह्णीतेति । एवं षट्पक्षे षड्गा दक्षिणाः द्वादश गा दक्षिणाः शतं गाः सहस्रं गा इत्यादि । अत्र भूयसीदानं चतुर्थं पक्षान्तरमेव । न तु भूयसीनां षडादिभिः समुच्चयः ।

व्यूहने-अग्नेः पवमानस्योज्जितिम् , अग्निः पवमानस्तमपनुदत्विति । प्रस्तरत्यागे-इदमग्नये सोमायाग्नये पवमानाय देवेभ्य इत्यादि । शेषं प्रकृतिवत्कर्मापवर्गान्तम् । इति प्रथमेष्टिः ।

अथ द्वितीया द्विहविष्का । अग्नये पावकायाष्टाकपालः पुरोडाशः, अग्नये शुचयऽष्टाकपालः । तत्र विशेषः । अग्न्यन्वाधानं, समन्त्रकं ब्रह्मोपवेशनम् । व्रतग्रहणं, प्रणीतादि । पात्रासादने षोडश कपालानि, दक्षिणापक्षाः पूर्वेष्टिवत् । अष्टादशेध्मकाष्ठानि । "पाञ्चदश्यं च सामिधेनीना"मिति शांखायनवचनात् (२. ३. १६) । अन्यत् प्रकृतिवत् । ग्रहणे-अग्नये पावकाय जुष्टम् । अग्नये शुचये जुष्टम् । प्रोक्षणे-अग्नये पावकाय त्वा जुष्टम् । अग्नये शुचये त्वा जुष्टम् । विभज्यालम्भे—इदमग्नेः पावकस्य, इदमग्नेः शुचेः । प्राणदाने—अग्निं पावकं गच्छ, अग्निं शुचिं गच्छ । अवबाधने-इदमहं पञ्चदशेन वज्रेणेति । उत्तमप्रयाजत्यागे-इदमग्नये सोमायाग्नये पावकायाग्नये शुचये देवेभ्य इत्यादि ।

प्रधानयागे द्वयोरपि यागयोरुपांशुदेवतापदम् । अन्यदुच्चैः । अग्नये पावकाय उपांशु अनुब्रूहि । अग्निं पावकं यज।इदमग्नये पावकाय । अग्नये शुचयेऽनु ब्रूहि । अग्निं शुचिं यज । इदमग्नये शुचये । स्विष्टकृदादि प्राशित्रादि च सर्वम् । दक्षिणालम्भे दाने च पूर्वेष्टिवत् । व्यूहने—अग्नेः पावकस्याग्नेः शुचेरुज्जितिम् । अग्निः पावकोऽग्निः शुचिस्तमपनुदतामित्यादि । शेषं कर्मापवर्गान्तं प्रकृतिवत् । इति द्वितीयेष्टिः ।

अथ तृतीयोच्यते । तत्रादित्ये चरुरेकं हविः । तत्र विशेषः-अग्न्यन्वाधा

अद्भ्यम्॥१३॥ धेनुरादित्यस्य॥१४॥ अनृता-ऽतिथ्यंपनोद्- नम् । ब्रह्मवरणाभावः । चतुरासनम् । ब्रह्मोपवेशनं समन्त्रकम् । व्रतग्रहणम् । प्रणीताप्रणयनादि । पात्रासादने कपालस्थाने चरुस्थाली । उपवेषाभावः । दक्षिणार्थे धेनुः, विंशतिरिध्मकाष्ठानि । "सप्तदशादित्यायामि" ति शाङ्खायनसूत्रात् (२. ३. १७) । पाञ्या अभावः । मेक्षणम् । शेषं प्रकृतिवत् । ग्रहणे—अदित्यै जुष्टम्० । प्रोक्षणे-अदित्यै त्वा जुष्टम । चरुधर्मा अन्वारम्भणीयायामुक्ताः । पाव्यङ्गुलिप्रक्षालननिनयनयोरभावः । प्राणदाने—अदितिं गच्छ ।

प्रधानयागे शाङ्खायनसूत्राद्देवतापदमुपांशु (२. ३. १५) । अदित्या अनुब्रूहि । अदितिं यज । इदमदित्यै । ततः स्विष्टकृदादि । भागचतुर्द्धाकरणादि सर्वं भवति । दक्षिणालम्भे—धेनुरस्यूर्जमिति । अस्या इष्टेः समृद्ध्ये धेनुं दक्षिणां ब्रह्मण इत्यादि । ब्राह्मणा इयं वो धेनुः प्रति गृह्णीतेति। व्यूहने –अदित्या उज्जिति० अदितिस्तमपनुदत्विति । प्रस्तरत्यागे—इदमग्नये सोमायादित्यै देवेभ्य इत्यादि । अन्यत्कर्मापवर्गान्तं सर्वं प्रकृतिवत । उद्धरणब्रह्मवरणवर्जमग्न्यन्वाधानादि कर्मापवर्गान्तं सर्वेष्टिषु सर्वं भवति ।

कर्मापवर्गान्ते शतं ब्राह्मणान् भोजयेत् । "आधाने च पशौ शतमि" ति परिशिष्टात । अस्य श्रौताग्नीनामाधानकर्मणः समृद्ध्यर्थं यथासम्पन्नेन तृप्तिपर्यन्तं भोजनपर्याप्तेनान्नेन शतं ब्राह्मणानहं तर्पयामीति प्रयोगः । ततोऽन्यानि वस्त्राणि परिधाय परिहितान्यहतवासांस्यध्वर्यवे ददाति यजमानः । आत्मवाससी पत्निवाससी चाध्वर्यो तुभ्यमिति । ततो गृहे विद्यमानस्याजस्याग्नीधे दानम् । "संस्थिते दद्यादि" ति कण्वपाठात् । इममजमग्नीत्तुभ्यमिति । ततो यजमानस्य तिलकादिमाङ्गल्यमाशीर्वादादि ।

अथवा त्रयाणां तनूहविषां स्थाने केवल आग्नेयोऽष्टाकपालः पुरोडाशो भवति । तत्र षड् वा द्वादश वा चतुर्विंशतिर्वा पञ्चविंशतिप्रभृति परार्द्धसंख्या वा यथाश्रद्धं गावो दक्षिणा भवन्ति । अत्रापि देवतापदमुपांशु । अन्यत्सर्वं तनूहविर्वत् । इत्येका इष्टिः ॥

अथ द्वितीयेष्टिरदित्यै चरुः पूर्ववत् भवति न कोऽपि विशेषः । शांखायन सूत्रे त्वस्मिन्पक्षे आग्नेय्यां प्रथमायामिष्टौ वैकल्पिकोऽयं विशेषः ।तथा च सूत्रम् । (२. ३. १०) "आग्नेयी वा द्वयोः पूर्वाऽऽज्येन तनूर्देवताः पुरस्तात्पुरोडाशस्याग्निं पवमानं पावकं च शुचिं वोपरिष्टादि" ति । तेनाज्यभागानन्तरं प्रधानयागात्पूर्वमग्नये पवमानायाज्येन याग उपांशुयाग-

**पूतिदार्वाधान-र्षोसपक्व-नाव्युदकानि वर्जयेत्॥१५॥ ब्रह्मचार्यग्निनित्यधारी क्षीरहोम्यग्निमुपशायी द्वादशरात्रꣳषड्रात्रं त्रिरात्रमन्ततः ॥ १६ ॥ १० ॥**

---

वत्। ततः स्विष्टकृदादि।

अस्मिन्पक्षे अनेनैव क्रमेणोत्तमप्रयाजादिषु देवतानां संकीर्त्तनं कर्त्तव्यम्। अग्नेः पवमानस्याग्नेः पावकस्याग्नेः शुचेरुज्जितिम्। अग्निः पवमानोऽग्निः पावकोऽग्निः शुचिस्तमपनुदन्त्विति व्यूहने। शेषं पूर्ववत्। इदमग्नये सोमायाग्नये पवमानायाग्नये पावकायाग्नये शुचये देवेभ्य इति उत्तमप्रयाजे प्रस्तरहोमे च त्यागः।

शाङ्खायनानां दक्षिणायां विशेषः। "षड् दक्षिणा द्वादश वा अश्वशतमानरथवासोऽजाश्चे"ति (२.३.१-२१)। एतास्तु तिसृष्विष्टिषु समं विभज्य दीयन्त इति तद्भाष्ये। छन्दोगानां तु विशेषः(१)। "धेनुमनड्वाहं वत्सतरीं वत्सतरमजं च पूर्णपात्रं तत्प्रथमायामिष्टौ दद्यादेवमितरयोरन्यत्राजपूर्णपात्राभ्यामि"ति। तत्र द्वन्द्वैकवद्भावेनैकवचनान्तं दक्षिणापदमूर्गसीत्यस्य स्थाने प्रयोज्यम्। धेन्वडुद्वत्सतरीवत्सतरमसीत्युत्तरयोः। शाङ्खायनानामपि द्विगवाश्वशतमसीति प्रथमायाम्। द्विगवरथवासोऽसीति द्वितीयायाम्। द्विगवाजमसीति तृतीयायाम्।

अथ यजमानस्य नियमा उच्यन्ते। आधानानन्तरं यजमानो यावज्जीवमनृतं न वदेत्। अतिथिमागतं नापनुदेत्। दुर्गन्धिकाष्ठस्याग्नौ प्रक्षेपं न कुर्यात्। अथवा पूतिदारुशब्देन क्लिन्नं दारु कथ्यते। "न क्लिन्नं दार्वादध्यादि"ति शाखान्तरात्। पृथिव्यां गतं पक्वं तिन्दुकादि नाश्नीयात्। अग्निहोत्रार्थमुद्धृतेषूदकदानं च वर्जयेदिति कर्कः। अथवा नावि नौकामध्ये यदुदकं तस्य पानं यजमानो न कुर्यात्। "या अन्तर्नाव्यापः स्युर्न तासामाचामेदि"ति। तथा "अन्तर्नाव्यपां नाश्नीयादि"ति च सूत्रान्तरे। एतावद्यावज्जीवम्। ततो द्वादशरात्रं वा षड्रात्रं वा त्रिरात्रं वा यजमानो ब्रह्मचारी स्यात्। गार्हपत्याहवनीयदक्षिणाग्नीनां नित्यं धारणं कुर्यात्। दुग्धेनैवाग्निहोत्रं जुहुयात्। अग्निसमीपे भूमौ शयीत। एते नियमास्त्रिरात्रादिकालपर्यन्तं शक्त्यपेक्षया ज्ञेयाः। अत्राधिककालपक्षाश्रयणे फलाधिक्यं भवति।

पुनराधाने चाधानवत्सर्वं भवति। तत्र केनचिन्निमित्तेन विनष्टेष्वग्निषु विनष्टानग्नीनुत्सृज्य पुनराधानं कुर्यात्। ब्रह्मचर्याग्निधारणादयो नियमा अपि भवन्त्येव ॥ १० ॥

इति चतुर्थस्य दशमी कण्डिका ॥ १० ॥

**पुनराधेयमाधानाप्रतिज्ञातस्य ॥ १ ॥ राज्ययशस्कामस्य वा ॥ २ ॥ त्रिरात्रावरमग्नीनुत्सृज्य ॥३॥ सद्यो वा ॥ ४ ॥ पुनर्वस्वोः ॥ ५ ॥ वर्षासु मध्यन्दिने वा ॥६॥ कुशैराधानम् ॥ ७ ॥ व्रीह्यपूपमर्कपलाशयोः पक्कं गार्ह-**

---

समाप्तमग्न्याधेयम् । अथ पुनराधेयमुच्यते । आधानानन्तरं सम्वत्सरादर्वागेव यस्य महत्त्वस्य कीर्तेर्हानिर्भवति धनधान्यादिहानिर्वा तस्य पुनराधेयं भवति । पुनराधेयमाधानाप्रतिज्ञातस्येति सूत्रम् । प्रतीतः प्रसिद्धो विख्यातो ज्ञातः प्रतिज्ञातः । न प्रतिज्ञातः अप्रतिज्ञातः । आधानेन निमित्तेनाप्रतिज्ञातः अप्रसिद्धो ज्ञातः अप्रतिष्ठ इव जातः आधानाप्रतिज्ञातः । तस्येदं भवतीत्यर्थः ।

अथवा प्रतिज्ञातं प्रियम् । "एतद्वास्य प्रतिज्ञाततमं धाम यथा प्रियो वा पुत्रो हृदयं वे"त्यत्र तथा दर्शनात् ( ९. १. १. २२ ) । न प्रतिज्ञातमप्रतिज्ञातम् । पुत्रमरणसर्वस्वहानि-प्रतिग्रहान्याद्यनिष्टफलदत्वादाधानमप्रतिज्ञातमप्रियं यस्यासावाधानाप्रतिज्ञातः । तस्य पुनराधेयं भवतीत्यर्थः । तथा राज्यकामस्य यशस्कामस्य वा पुनराधेयं भवति । तत्र पुनराधेयकरणदिनात्पूर्वं त्रिरात्रचतूरात्रप्रभृति सम्वत्सरपर्यन्तमग्नीनामुत्सर्गः कर्त्तव्यः । "सम्वत्सरं पराद्धर्यमुत्सृष्टाग्निर्भवती"त्यापस्तम्बः (५. २७. ४.) अथवा सद्योऽग्नीनुत्सृज्य पुनराधेयं कर्त्तव्यम् । तत्र सभ्यस्योत्सर्गो न भवति । अग्नीनुत्सृज्येति बहुवचनस्य त्रिष्वपि उत्सृष्टेषु चरितार्थत्वादिति कर्कः । अविशेषात्सभ्यस्याप्युत्सर्ग इत्यपरे । तच्च पुनराधेयं वर्षास्वृतौ भवति । मध्यन्दिने वा पुनर्वसुनक्षत्रे भवति ।

तत्राग्न्याधेयवत्सद्यः सर्वं भवति न द्व्यहम् । अमुकनिमित्तं पुनराधेयमहं करिष्ये इति वरणे । तत्राग्न्यगारकरणं, वपनं, अहतक्षौमपरिधानम्, गार्हपत्यागारेऽग्नेः स्थापनम्, देवाः पितर इति जपः, यजमानस्य पूर्वद्वारेण प्रवेशनम् । दक्षिणद्वारेण पत्न्याः, अग्नेः पश्चात्तयोरुपवेशनम्, अरणिप्रदानम्, अजबन्धनं वा, मानादिवरदानान्तम्, चातुष्प्राश्यं वा । स्थापितस्याग्नेरुपशमनम्, वाचं यच्छापूर्णाहुतेरिति प्रैषः । वाग्यमनं यजमानस्य । ततो गार्हपत्यखरे पञ्च भूसंस्काराः । पुनस्त्रिरुल्लेखनम् । सद्योऽग्नय उत्सृष्टाश्चेद् व्रीहिमयमपूपमर्कपर्णयोः कपालस्थानीययोर्लौकिकाग्निपक्कमावसथ्याग्निना वा गार्हपत्यस्थानेऽस्मिन्नवसरे निदधाति । ततोऽन्वारब्धेऽभ्युक्षणादिशर्करान्तम् ।

तत आहवनीयखरे पञ्च भूसंस्कारान् कृत्वा पुनरुल्लिख्य यवमयमपूपं

**पत्यस्थाने निदधात्येवमाहवनीयस्य यावत्सभ्यश्चेत् ॥८॥ आग्नेयः पञ्चकपाल उपांशु प्रागुत्तमादनुजायात् ॥९॥ तदूर्जं वा ॥ १० ॥ अग्नीनिति वा प्रथमे प्रयाजेऽनुयाजे**

---

पूर्वापूपवत्पक्वमाहवनीयस्थाने निधायाऽन्वारब्धेऽभ्युक्षणादिशर्करान्तम् । त्रिरात्रेपूत्सर्गपक्षेऽपूपाभावः । ततो दक्षिणाग्निखरे प्रकृतिवच्छर्करान्तम् । सभ्यखरे गार्हपत्यवदपूपवर्जम् । ततो मन्थनादि । उच्छ्वासोऽपि भवत्येव । कुशैर्ज्वलतोऽग्नेः स्थापनम् । इध्मस्थाने कुशैरेवोद्धरणम् । सभ्यमन्थनादिस्थापनान्तं भवत्येव । अन्यदग्निहोत्रहोमान्तं सर्वमग्न्याधेयवत् ।

ततस्तनूहविषां स्थाने आग्नेयः पञ्चकपालः पुरोडाशो भवति । तत्राग्न्यन्वाधानादि कर्मापवर्गान्तं सर्वमुपांशु भवति । उत्तममनुयाजं वर्जयित्वा । स तूच्चैर्भवति ।

तत्र विशेषः—अग्न्यन्वाधानम् , ब्रह्मवरणाभावः, ब्रह्मणः समन्त्रकासनसंस्कारपूर्वकमुपवेशनम , व्रतग्रहणम् , प्रणीतादि, पात्रासादने पञ्च कपालानि । दक्षिणार्थं हिरण्यमनड्वान्वा । अष्टादशेध्मकाष्ठानि । ग्रहणे अग्नये जुष्टम् । प्रोक्षणे—अग्नये त्वा जुष्टम् । कपालोपधाने–आद्यानि चत्वार्युपधाय चतुर्थस्य पश्चात्पञ्चममुपदध्यात् । प्राणदाने—अग्निं गच्छ । प्रथमप्रयाजे-आश्राव्याग्नीन्यजेत्येव प्रैषः । द्वितीयादिषु यज यजेत्येव । प्रथमे-इदमग्निभ्य इति त्यागः । इदमग्नय इति द्वितीयादिषु त्यागः । त्यागे–इदमग्नयेऽग्नये पवमानायाग्नयेऽग्निभ्य आज्यपेभ्यः । अथवा-इदमग्नयेऽग्नय इन्दुमतेऽग्नयेऽग्निभ्य आज्यपेभ्य इति । शाङ्खायनमते (१)देवेभ्य आज्यपेभ्य इत्येव,न त्वग्निभ्य आज्यपेभ्य इति विशेषः। पूर्वेऽपि त्यागाः प्रकृतिवदेव तन्मते । अन्ये त्यागाः प्रकृतिवत् ।

प्रथम आज्यभाग आग्नेयः । द्वितीये-अग्नये पवमानायानुब्रूहि, अग्निं पवमानं यज । इदमग्नये पवमानाय । अथवा अग्नय इन्दुमतेऽनुब्रूहि । अग्निमिन्दुमन्तं यज । इदमग्नय इन्दुमते ।

प्रधानयागे—अग्नयेऽनुब्रूहि । अग्निं यज । इदमग्नये । ततः स्विष्टकृदादि प्राशित्रादि सर्वं भवति । दक्षिणालम्भे—हिरण्यमसीति, अनड्वानसीति वा । ब्राह्मणा इदं वो हिरण्यं प्रतिगृह्णीत, अयं वोऽनड्वान् प्रतिगृह्णीतेति वा । प्रथमानुयाजे अग्नीन्यजेत्येव प्रैषः । द्वितीयतृतीययोर्यजेत्येव । इदमग्निभ्य इति त्यागः । व्यूहने-अग्नेरुज्जितिम् , अग्निस्तमपनुदत्विति ।

---

१. श. ११, ३१,

**च ॥ ११ ॥ आज्यभागो द्वितीयोऽग्नये पवमानायेन्दुमते वा ॥ १२ ॥ हिरण्यं दक्षिणाऽनड्वान्वाऽऽग्न्याधेयिकीश्चे- च्छ्रुतेः ॥ १३ ॥ अग्न्याधेयवदन्यत्सर्वः ॥ १४ ॥ अ-**

---

प्रस्तरहोमे—इदमग्नयेऽग्नये पवमानाय वा अग्नय इन्दुमते वा अ- ग्नयेऽग्निभ्य आज्यपेभ्योऽग्नये होत्रायेति । अन्यत्कर्मापवर्गान्तं प्रकृतिवत् । तदन्ते शतब्राह्मणभोजनम् । परिहिताहतवस्त्रदानमध्वर्यवे । ब्रह्मचर्याग्नि- धारणादिनियमा भवन्ति ।

अत्र शतपथोक्तं(१) हौत्रं लिख्यते ।

आचमनादि । आवाहने-आवह देवान्यजमानाय । अग्निमग्न आवह । अग्निं पवमानमावह । अग्निमिन्दुमन्तमावहेति वा । अग्निमावह अग्नीना- ज्यपानावह अग्निं होत्रायावहेत्यादि प्राकृतम् ।

प्रयाजेषु-प्रथमे अग्नीन्यजेत्युक्ते-ये यजामहे अग्न आज्यस्य व्यन्तु३वौ- षट् १ । ये० हेऽ अग्निमाज्यस्य वेतु ३ वौ ३ षट् २ । ये० हेऽग्निनाज्य- स्य व्यन्तु ३ वौ ३ षट् । ये० हेऽग्निराज्यस्य वेतु ३ वौ ३ षट् ४ । ये० हे स्वाहाऽग्निं पवमानं स्वाहाऽग्निमिन्दुमन्तमिति वा स्वाहाऽग्निं स्वा- हाग्नीनाज्यपान् जुषाणो अग्निराज्यस्य वेतु ३ वौ३षट् । अग्निं स्तोमेन बोधयेत्याग्नेयाज्यभागस्य पुरोऽनुवाक्या । ये० हेऽग्निं जुषाणोऽ अग्निरा- ज्यस्य वेतु ३ वौ ३ षट् । द्वितीयाज्यभागोऽग्नये पवमानाय वा, अग्नय इन्दुमते वा ।

तत्र प्रथमे पक्षे-अग्न आयूंषि पव० च्छुनो ३म् । ये० हेऽग्निं पवमानं जुषाणो अग्निः पवमान आज्यस्य वेतु ३ वौ ३ षट् । द्वितीये पक्षे-पह्यू- षु ब्रवाणि० दुभो ३ म् । ये० हेऽग्निमिन्दुमन्तं जुषाणो अग्निरिन्दुमाना- ज्यस्य वे तु ३ वौ ३ षट् । आग्नेययागे-अग्निं तं मन्ये० भरो३म् पुरोऽनु- वाक्या । ये० हेऽग्निसो अग्निर्यो०भरो ३ वौ३ षट् याज्या। स्विष्टकृति-अग्न तमद्या० ओहो ३ पुरो०। ये० हे० अग्निं स्विष्टकृतमयाग्निरग्नेः प्रिया०याडग्नेः पवमानस्य प्रि० अथवा अयाडग्नेरिन्दुमतः प्रियेति धामान्ययाडग्नेः प्रि- या० डग्नीनामाज्यपानां प्रिया धामानि यक्षद० हविः । अधाह्यग्ने क्रतो० भूथों ३ वौ ३ षट् ।

अनुयाजेषु-देवं बर्हिरग्नेर्वसुवने वसुधेयस्य वेतु ३ वौ ३ षट् । देवो नराशंसोऽग्नेर्वसुवने ३ वौ ३ षट् २ । देवो ऽअग्निः स्विष्टकृदिति प्रकृ-

---

१. २. २. ३. १९—२७ ।

**पराह्णे मैत्रावरुणी वशाऽनस्तमिते पुरोडाशेडान्तं कृत्वा रात्रिभृतया प्रातश्चरन्ति तत आधानम् ॥ १५ ॥ ११ ॥**

**सायमाहुत्याᳪं हुतायां यजमानोऽग्नी उपतिष्ठते वात्सप्रेण ॥ १ ॥ न वा ॥ २ ॥ तिस्रस्त्रिरुपप्रयन्तोऽस्य प्रत्नां परिते चित्रावसाविति च ॥३॥ सन्त्वमित्युपविश्य ॥४॥**

तिवत् । अयमानुयाज उच्चैः । अन्यत्सर्वमुपांशु । सूक्तवाके—अग्निर्हविᳪंकृत । अग्निः पवमानो ह० षता० कृत । अथवाऽग्निरिन्दुमान्हवि० षता० कृत । अग्निर्हᳪंकृत । अग्नय आज्यपा हविरजुषन्ता० धन्त० कृत । अग्निर्होत्रेणेत्यादि । एकोऽयम्पुनराधेयस्य पक्ष उक्तः ।

अथ पुनराधेयस्य पक्षान्तरमुच्यते—

पूर्वेद्युरपराह्णे मैत्रावरुणीं वशामालभ्यास्तमयात्पूर्वं पुरोडाशेडान्तं कुर्यात् । ततः सद्योऽग्नीनुत्सृज्य यथोक्तं पुनराधेयमिष्ट्यन्तं कुर्यात् । नात्र त्रिरात्रावरमुत्सर्गो नापूपाविति कर्कः । मैत्रावरुण्यां वशायां विशेषः । निरूढपशुवदृत्विग्वरणादि कर्मापवर्गान्ता । मित्रावरुणाभ्यां जुष्टं नियुनज्मि । मित्रावरुणाभ्यां त्वा जुष्टमिति प्रोक्षणे । मित्रावरुणाभ्यामुस्राया वपायै मेदसोऽनुब्रूहि । मित्रावरुणाभ्यामुस्राया वपां मेदः प्रेष्य । वपायामाज्यभागौ ।

पशुपुरोडाशयागे मैत्रावरुण एकादशकपालः । मित्रावरुणाभ्यां पशुपरोडाशस्यानुब्रूहि । मित्रावरुणाभ्यां पुरोडाशं प्रेष्य । हविर्यागे मित्रावरुणाभ्यामुस्राया हविषोऽनुब्रूहि । मित्रावरुणाभ्यामुस्राया हविः प्रेष्य । मित्रावरुणयोर्वनस्पतेरुज्जितिं० मित्रावरुणौ वनस्पतिस्तमपनुदन्त्विवति । शेषमनुक्तं निरूढवत् । इति पुनराधेयं समाप्तम् ॥ ११ ॥

इति चतुर्थस्य एकादशी कण्डिका ॥ ११ ॥

अत्र सूत्रक्रमेणाग्निहोत्राङ्गं वात्सप्रोपस्थानमुच्यते ।

सायमग्निहोत्रहोमे समिदसीति समिदाधानानन्तरं यजमानो वात्सप्रेणाग्नी उपतिष्ठते, नोपतिष्ठते वा । तत्रोपस्थानपक्षे आहवनीयसमीपे स्थित्वोपप्रयन्त इति ( ३. ११ ) त्रिः पठित्वा, अग्निर्मूर्द्धा (१२)उभा वाम(१३) अयन्ते(१४) अयमिहेत्येता(१५) ऋचो जपित्वाऽस्य प्रत्नामिति (१६)त्रिर्जपेत् । ततस्तनूपा अग्नेऽसि(१७) इन्धानास्त्वेति (१८)सकृज्जपित्वा चित्रावसो(१८) इति त्रिर्जपेत् । एतावत्पर्यन्तं तिष्ठन् जपति ।

**गां गच्छत्यन्ध स्थेति ॥ ५ ॥ सᳪहितेत्यालभते ॥ ६ ॥ गार्हपत्यं गत्वोपातिष्ठत उप त्वेति ॥ ७ ॥ गां गच्छतीड एहीति ॥८॥ काम्या एतेत्यालभते ॥९॥ सोमानमित्यनुदकं**

अथाहवनीयसमीप एवोपाविश्य सं त्वमग्न इति (१९)जपेत् । ततोऽन्ध स्थेति(२०) गां प्रति गच्छति । ततः सᳪहिताऽसीति (२१)गामालभते । ततो गार्हपत्यसमीपे आगत्य गार्हपत्यमुपतिष्ठते उप त्वाऽग्न (२२-२६)इत्यत आरभ्य अग्नायतः समस्मादित्यन्तेन । तत इडऽ एहीति (२७)पुनर्गां प्रति गच्छति । ततः काम्या एतेति (२७)गामालभते ।

तत आगत्यापरेणाहवनीयं प्राङ् तिष्ठन्नग्निमीक्षमाणः सोमानᳪ स्वरणमित्यारभ्य तत्सवितुरित्यन्तं जपित्वा ( २८-३५ ) परि ते दूडभ इति (३६)त्रिर्जपेत् । ततस्ततोऽसि तन्तुरसीति (३. ८. २५ ) पठित्वा इदं मे कर्मेदं वीर्यं पुत्रो यज्ञदत्तशर्माऽनुसन्तनोत्वित्येवं पुत्रनाम गृह्णाति । प्रतिपुत्रं मन्त्रावृत्तिः । अविद्यमाने पुत्रे इदं मे कर्मेदं वीर्यममुकशर्माऽनुसन्तनोत्विति स्वं नाम गृह्णीयात् । अथवा इदं मे कर्मेदं वीर्यममुकशर्माऽहमनु सन्तनवानीति प्रयोगः । तन्तवे त्वा ज्योतिषे त्वाऽनुसन्तनोत्विति वा । एतद्वात्सप्रोपस्थानम् ।

अथवाऽस्योपस्थानस्य स्थाने भूर्भुवः स्वः सुप्रजा इत्यनेनाह(३. ३७) वनीयमुपस्थाय गार्हपत्यमप्यनेनैवोपतिष्ठेत । एतदुपस्थानद्वयं सायमेव भवति न प्रातः ।

अथोपस्थानप्रसङ्गात्प्रवत्स्यदुपस्थानं प्रवसधर्मा आगतोस्थानं चाभिधीयते—

तत्र प्रवासशब्दार्थमाह कारिकाकारः—

"ग्रामान्तरे नगर्यां वा पल्ल्यां वाऽन्यत्र वा क्वचित् ॥
सीमामतीत्य चेद्रात्रौ वासः प्रवसनं स्मृतम्" ।

तत्र प्रवासं करिष्यन्यजमानो भूसंस्कारपूर्वकं प्रवत्स्यदुपस्थानार्थमिति गार्हपत्यादाहवनीयदक्षिणाग्नी उद्धृत्य प्रदीप्तं कृत्वा नर्य प्रजामिति ( ३. ३७ ) गार्हपत्यमुपतिष्ठते । शᳪस्य पशूनि(३. ३७ )त्याहवनीयम् । अथर्य पितुमिति( ३. ३७ ) दक्षिणाग्निम् । ततः सभ्याय नम इति सभ्यम् । तत आवसथ्याय नम इत्यावसथ्यम् । ततो वाग्यमनम् । यथार्थं गमनम् । अग्निसम्बन्धे गृहस्य छदिषां दर्शनं यावत् तस्य वाग्यमनं भवति । तत ऊर्ध्वं गत्वा वाग्विसर्गः । तथा चोक्तम्(१)—

"अग्न्यन्तिकं समारभ्य तावन्मौनी प्रतिष्ठते ।

---

१. कारिकायाम् ४. १२, १९.

यावच्छर्दींषि दृश्यन्ते हव्यवाहस्य सद्मनः" इति ।
"अनलादर्शनं यावत्तावच्छाङ्खायनश्रुतेः(२) ।
स्वबुद्धिकल्पितो देश इति वाजसनेयिनः ॥
बलाद्राजादिपुरुषा यजमानं नयन्ति चेत् ।
न प्रयच्छन्त्युपस्थानावसरं क्रूरचेष्टिताः ॥
तदा कुर्यादुपस्थानं तद्देशगत एव सः" ।

तत्र प्रकारद्वयम्-होमाद्यर्थमुद्धृतान्सम्भाव्य प्रयत्स्यदुपस्थानेनवोपस्थानमिति कठसूत्रे । अनेन वा मन्त्रेण । "इहैव संस्तत्र सन्तं त्वाऽग्ने हृदा वाचा मनसा वा बिभर्मि । तिरो मा सन्तमायुर्मा प्रदासीर्ज्योतिषा वैश्वानरेणोपतिष्ठते" इति मन्त्रेणाग्नीनुपतिष्ठेत् । शाङ्खायनोऽपि—( ३. २१. ७-८ ) "अनुपस्थाय प्रसर्गे प्रतिदिशमुपस्थानम् । उपस्थायाप्रसर्गे यथा प्रोष्येऽति ।

"आगमिष्यामि चाद्यैवेत्यनुपस्थाय निर्गतः ।
दैवात्तत्र स्थितः कुर्यादिदमेवेति केचन ॥
विस्मृत्या बुद्धिपूर्वं वा यातेऽप्येष विधिर्भवेत् ।
वाग्यमनस्य लोपोऽत्र भाष्यकारेण दर्शितः ॥
अरण्यारोपिते वह्नौ प्रविशेद्वा व्रजेत्तु वा ।
उभयत्राप्युपस्थानं नास्ति कोपितकिस्मृतेरि"ति ॥

अथ प्रोषितस्य यजमानस्य कर्तव्यमुच्यते—प्रवसन्नग्निहोत्रकाले होत्रस्य विहाराभिमुखो भूत्वा सर्वं याजमानं करोति । पौर्णमासकाले पौर्णमासस्य, दर्शकाले दर्शस्य । याजमानमपि न सर्वं किन्तु यदात्मसंस्कारकं धर्ममात्रं तदेव । यथा वपनविष्णुक्रमणव्रतग्रहणमयीदमिति जपादि, नान्यद् यथा-वेदबन्धनपात्रासादनादि । अन्यत्सर्वं कर्माध्वर्य्वादिभिर्गृहे क्रियमाणं मनसा चिन्तनीयम् । तथा च कात्यायनः ( कर्मप्र० २. १०. १-२ )-

"निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा ।
प्रवसेत्कार्यवान्विप्रो मृषैव न चिरं क्वचित् ॥
मनसा नैत्यकं कर्म प्रवसन्नप्यतन्द्रितः ।
उपविश्य शुचिः सर्वं यथाकालमनुद्रवेदि"ति ॥

तेन प्रवसताऽग्निहोत्रादि नित्यं कर्म स्वस्वकाले सर्वं मनसा चिन्तनीयम् । तत्राग्निहोत्रे मन्त्रेणाचमनम् । यथादेवतं त्यागः । उपस्थानम् । पुनराचमनम् । एतावत्समन्त्रकं कर्तव्यम् । अन्यत्सर्वं मनसा चिन्तनीयम् ।

---

१. २. १४. ६.

व्रतोपायनवत् ॥१०॥ पौर्णमासवत्पुत्रनामग्रहणम् ॥११॥ भूर्भुवः स्वरिति वोभौ ॥१२॥ प्रवत्स्यन्त्सर्वानग्नीनेति प्रतिमन्त्रम् ॥ १३ ॥ गच्छति मत्या वाग्विसर्जनम् ॥ १४ ॥ प्रवसन्याजमानं कुर्याद्यथाकालमात्मसंस्काराद्धर्ममात्रत्वाच्छ्रुतेश्च ॥१५॥ एत्य च मत्या वाग्यमनम् ॥ १६ ॥ समित्पाणिरनुपेत्य कश्चिदुपतिष्ठत आहवनीयगार्हपत्यदक्षिणाग्नीनागन्मेति प्रतिमन्त्रम् ॥१७॥ समित्परिसमूहनानि चोपाविश्य ॥ १८ ॥ तूष्णीं वोपस्थानं पूर्व-

---

दर्शपूर्णमासयोरपि पर्वणि—

"इक्षुक्षीरविकारांश्च व्रीहभृष्टान्यवांस्तथा ।
फलमूलानि चाश्नीयात् पर्वणि प्रोषितोऽग्निमान्" ॥

तथा—

"पराग्निपक्वं नाश्नीयाद् गुडगोरसमन्तरा"

इत्याद्युक्तानुसारेण व्रतं कुर्यात् । रात्रौ भूमौ शयीत । तथा—

"असामर्थ्यात् शरीरस्य अद्यद्रव्याद्यभावतः ।
स्वसत्तया पचेदन्नमश्नीयात्प्रोषितोऽग्निमानि"ति ॥

प्रातरिष्टिकाले सर्वं कर्म मनसा चिन्तयेत् । प्राङ्मुखो व्रतग्रहणं कुर्यात् । पूर्णपात्रमासाद्य दैव्यायेति प्रोक्षेत् । इदं त्रितायाप्त्यायेत्यारभ्य सर्वांस्त्यागान् कुर्यात् । प्रयाजानुमन्त्रणानि च । वाग्द्वयं मयीदमिति जपश्च स्वस्वकाले । ततः संवर्चसेति कंनचित् निनीयमानं पूर्णपात्रं प्रतिगृह्य मुखं विमृष्टे । ततो विष्णुक्रमणादि व्रतविसर्गान्तं कुर्यात् । प्राञ्चो विष्णुक्रमा न विहाराभिमुखाः । तथा चापस्तम्बः—"प्रवसन् काले विहाराभिमुखो याजमानं जपति प्राचो विष्णुक्रमान् क्रामती"ति (४.१६.१८-१९)। भागभूम्या-हवनीयेक्षण-गार्हपत्योपस्थानानां मनसैव चिन्तनं नानुष्ठानम् ।

एवमिष्टिगतानामपि वेदबन्धनाववाधनात्रपितरो वेद्यालम्भादीनाञ्च मनसैव चिन्तनम् । एवं पश्वादिकर्मणोऽपि याजमानं कार्यम् । याजमाने कृतेऽपि यदा गृहे इष्टि-पश्वादिकर्मणः समाप्तिं चित्ते जानाति तदनन्तरं भुञ्जीत, न ततः प्राक् ।

एवं पितृयज्ञाष्टकादेरपि नित्यस्य गृहे क्रियमाणस्य याजमानं मनसा चिन्तनं च कार्यम् । बह्वृचानां शाङ्खायनसूत्रभाष्ये च सर्वेषां नित्यकर्मणा-

**वत् ॥१९॥ एत्य च ॥ २० ॥ गृहा मा बिभीतेति गृहानुपैति ॥२१॥ क्षेमाय व इति प्रविशति ॥२२॥ न हिंᳬस्याद् गृह्यान्कामᳬ श्वः ॥ २३ ॥ १२ ॥**

---

माग्रयणचातुर्मास्यपशुबन्धाग्निष्टोमानां च प्रवसति यजमानेऽनुष्ठानम् । तेषां याजमानं च प्रवसता कर्तव्यमित्युक्तमस्ति ।

आगच्छता यजमानेन यथालाभं यज्ञियवृक्षसमिधो हस्ते गृहीत्वा छदिर्दर्शने वाग्यतेन सता आगन्तव्यम् । उपस्थानादर्वाक् पितरं मातरं गुरुं वा राजानं वा नोपगच्छेत् । स्वयमेव समीपमागतानामेषां नमस्कारादिकं न कुर्यात् ।

तत्कालमेव स्नात्वा शुचिर्भूत्वा भूसंस्कारपूर्वकमाहवनीयदक्षिणाग्नी आगतोपस्थानार्थमिति विहृत्य समिधो हस्ते गृहीत्वा स्फ्योपग्रह आगन्मेति मन्त्रेणाहवनीयमुपस्थायोपविश्य तूष्णीं समिधमाधाय परितः ( ३. ३८ ) पतितानि तृणान्यपसार्याग्निमध्ये प्रक्षिपेत् । ततोऽयमग्निर्गृहपतिरिति ( ३. ३९ ) गार्हपत्यमुपस्थायोपविश्य तूष्णीं समिधमाधाय परितः पतितानि तृणानि परिसमुह्याग्नौ प्रक्षिपेत् । ततोऽयमग्निः पुरीष्य इति (३. ४.) दक्षिणाग्निमुपस्थायोपविश्य तूष्णीं समिमाधाय तृणानि परिसमुह्याग्नौ प्रक्षिपेत् । ततः सभ्याय नम इति सभ्यं नमस्कुर्यात् । आवसथ्याय नम इत्यावसथ्यं नमस्कुर्यात् ।

ततो गृहा मा बिभीतेति(३. ४१ ) सर्वान् गृहानुपतिष्ठते । क्षेमाय व इति (३.४३) गृहान् प्रविशति । ततः पुत्रं दृष्ट्वा "अङ्गादङ्गात्सम्भवसी"ति (पार०गृ०१.१८)जपति । ततः पुत्रस्य मस्तकमवजिघ्रति प्रजापतेष्ट्वेति । असावित्यस्य स्थाने अमुकशर्म्मन्निति सम्बुद्ध्यन्तं पुत्रस्य नाम गृह्णाति । ततो "गवां त्वा हिङ्कारेणावजिघ्रामि सहस्राऽऽयुषाऽमुकशर्मन् जीव शरदः शतमि"ति मन्त्रेण ( पा०गृ० १. १८ ) सकृत्पुत्रशिरोऽवघ्राय तूष्णीं द्विरवजिघ्रति । ततः पुत्रस्य दक्षिणे कर्णे "अस्मे प्रयन्धी"ति जपति ( पार० गृ०१।१८ ) । ततः सव्ये कर्णे "इन्द्र श्रेष्ठानीति (पार०गृ०१।१८) जपति । पुत्रदर्शनजपादि प्रतिपुत्रमावर्त्तनीयम् । पुत्रस्याशीःप्रार्थना पश्चात् । पुत्र्याश्च तूष्णीं मूर्द्धाऽवघ्राणमात्रमेव ।

कठसूत्रे विशेषः—"प्रवसत उपस्थानं याजमानं चेत्येके नेति लौगाक्षिः । प्रवसन्यदा हुतं मन्येताथ भुञ्जीत पर्वण्युपोष्य यदा संस्थितं मन्येताथ भुञ्जीते"ति । तथा—"अनुपस्थाय प्रवसन् प्रवत्स्यदुपस्थानेन प्रतिदिशमुपतिष्ठेते"ति । तथा-"यदाऽग्निहोत्रे संस्थिते वा तन्त्र आगच्छेदागतोपस्थान-

उद्धरेति यजमानो ब्रूयात्सायम्प्रातरग्निहोत्रे ॥ १ ॥ गार्हपत्यादाहवनीयस्योद्धरणमनस्तमितानुदितयोः ॥२॥ प्रत्यङ्मुखो वा सायं निदध्यात् तस्मिन्त्सायम्प्रातर्होममेके ॥३॥ नित्यो दक्षिणाग्निः ॥४॥ सर्वे गतश्रियः ॥५॥

---

मेव स्यान्न नित्यमग्न्युपस्थानं न याजमानमित्येके, विसंस्थिते वा तत्र आगच्छेदागतोपस्थानेनोपस्थाय यदतीतं याजमानं तज्जपेन्नातीतं जपेदिति लौगाक्षिरि"ति ।

अथवा प्रवत्स्यता प्रवासादागच्छता चाग्नीनामुपस्थानं तूष्णीमेव कर्तव्यम् । गृहा मेत्यादि तूष्णींपक्षेऽपि भवत्येव । प्रवासादागत्य गृह्याणां पुत्रभार्याभृत्यादीनामपराधे सत्यपि क्रोधादिकं न कर्तव्यं, किमपि न वक्तव्यम् । सति कारणे श्वः सर्वं कर्तव्यम् ॥ १२ ॥

इति चतुर्थस्य द्वादशी कण्डिका ॥ १२ ॥

---

अथाग्निहोत्रमुच्यते—

तत्र सायम्प्रातर्यजमानो होमकर्तारं प्रत्युद्धरेति प्रैषं ब्रूयात् । स्वयं कर्तव्यश्चेत्प्रैषाभावः । अनस्तमिते सूर्ये उद्धरणं कर्तव्यम्, तत्र सायमग्निहोत्रहोमार्थं गार्हपत्यादाहवनीयमुद्धरामीति संकल्प्याहवनीयं ज्वलन्तमुद्धरति । सायमग्निहोत्रहोमार्थं गार्हपत्याद्दक्षिणाग्निमाहरामीति संकल्प्य दक्षिणाग्निमुद्धरति । सायङ्काले प्रत्यङ्मुखो वाऽहवनीयं स्थापयेत् । अस्मिन् पक्षे सायमुद्धृत एव प्रातर्होममप्येके कुर्वन्ति । एके प्रातः पुनरुद्धरन्ति । दक्षिणासंहतो दक्षिणाग्निश्चेत्सर्वदा नित्य एव न कदाऽपि तस्योद्धरणम् । अनुगतस्य च स्वयोनेराहरणम् । गतश्रियस्तु सर्वेऽग्नयः सदा धार्यन्ते । "त्रयो ह वै गतश्रियः शुश्रुवान् ब्राह्मणः क्षत्रियो विजयी राजा वैश्यो ग्रामणीरि"ति ।

अथवा सदाऽऽहवनीयवदेव दक्षिणाग्नेरप्याहरणमेव कर्तव्यम् । केषाञ्चिन्मते पौर्णमास्यमावास्ययोरेवाहरणं न सर्वदा । उपवसथान्तं यावत्तस्यैव धारणम् । अथवा यदा नवगृहं कृतं भवति तदा तत्र नवगृहे दक्षिणाग्निराहरणीयः, न सर्वदा नाप्युपवसथे । अस्मिन्पक्षे तस्मिन्नवगृहाहृते दक्षिणाग्नौ यत्किञ्चित्सम्पद्यते तत्सर्वं पचेन्मांसवर्जम् । पक्त्वा च ब्राह्मणान् भोजयेत् । पाक्यद्रव्याभावे गोः पयोऽधिश्रयितवा इति यजमानोऽध्वर्युं प्रेष्यति ।

सदा वाऽऽहरणम् ॥६॥ एकेषामुपवसथे ॥७॥ नवावासिते वा ॥८॥ तस्मिन्पचेयुरमांऽसम् ॥ ९ ॥ पात्र्याभावे गोः पयोऽधिश्रयितवै ब्रूयात् ॥१०॥ तद् ब्राह्मणं पाययितवै ब्रूयात् ॥११॥ अन्तरेणापराग्नी गत्वा दक्षिणेन वाऽप्रदक्षिणमाहवनीयं परीत्योपविशति यजमानः ॥ १२ ॥ पत्नी च पूर्ववत् ॥१३॥ अपरेणाहवनीयं कूर्चं निदधाति कुशान्वा ॥१४॥ परिस्तरणं वा सर्वेषां प्रागुदग्भिरुदगग्रान् दक्षिणाग्रान्करोति श्रुतेः ॥ १५ ॥ आहवनीयं प-

---

ततोऽध्वर्युर्दक्षिणाग्नौ गोदुग्धस्याधिश्रयणम् । ततस्तद् ब्राह्मणं पाययितवा इति प्रैषं यजमानं प्रति ब्रूयात् । ततस्तत्पयो ब्राह्मणांस्त्रीन्पाययेत् । अन्यार्थमुद्धृतेष्वग्निहोत्रकाले आगते तेष्वेवाग्निहोत्रहोमः । पशुवरुणप्रघासादावुत्तरवेदावाहवनीये प्रणीते होमकाले आगतेऽतिप्रणीत एव होमः । तथाचाहापस्तम्बः—"प्रणीते चेदग्निहोत्रस्य काल एतस्मिन्नेवाग्निहोत्रं जुहुयादेवमन्यत्रे"ति पशुप्रकरणे सूत्रम्(१) ।

अथ प्रकृतमुच्यते—

अनस्तमिते आहवनीयदक्षिणाग्न्योरुद्धरणानन्तरं सन्ध्यावन्दनं कृत्वा प्रथममग्निहोत्रं जुहुयात् । तत्र यजमानो गार्हपत्यदक्षिणाग्न्योरन्तरालमार्गेणाहवनीयं प्रति गत्वा, अथवा अनयोर्दक्षिणतो गत्वा अप्रदक्षिणमाहवनीयं परीत्य स्वस्थाने उपविश्याचामति वृष्टिरसीति (४. १५. ४) । ततो वाग्यमनं पुनराचमनं यावत् । पत्न्यपि यजमानवदेव सञ्चरेण प्रविश्य गार्हपत्यस्य प्रत्यग्दक्षिणत ईशानाभिमुखी उपविश्य तूष्णीमेवाप आचम्य वाचं यच्छति । उपवेशनव्यतिरिक्तं पत्नी किमपि न करोतीति सम्प्रदायः । तच्च साधुतरम् ।

ततोऽध्वर्युराहवनीयस्य पश्चात्प्रागग्रमुदगग्रं वा बाहुमात्रमासनपट्टसदृशं कूर्चं निधाय प्रदक्षिणमाहवनीयस्य परिस्तरणं दर्भतृणैः कुर्यात् । तानि दर्भतृणानि पुरस्तात्पश्चाच्चोदगग्राणि, दक्षिणोत्तरयोः प्रागग्राणि । प्रथमं पुरस्तात्परिस्तरणम्, ततो दक्षिणतः पश्चादुदगिति क्रमः । तत एवमेव गार्हपत्यस्य परिस्तरणम्, ततो दक्षिणाग्नेः ।

ततो हस्तेनोदकमादाय प्रथममाहवनीयस्य पर्युक्षणम् ईशानदिशमा-

---

(१) ४. १३. २.

युक्ष्योदधारां निनयत्या गार्हपत्यात् ॥१६॥ तं च ॥१७॥ ततो दक्षिणाग्निम् ॥ १८ ॥ हुते च धारावर्जम् ॥१९॥१३॥

अग्निहोत्रीं दोहयति पुंवत्सामशूद्रेण स्थाल्यामार्यकृत्यामूर्ध्वकपालायां दक्षिणतः प्राचीमुदीचीं वा ॥ १ ॥ पूर्वेणाहवनीयमाहृत्य गार्हपत्येऽधिश्रयत्युत्तरतो निरूह्याङ्गारान् ॥ २ ॥ एवमन्यत्रापि होमार्थस्याहरणम् ॥३॥ दक्षिणेन वौषधम् ॥ ४ ॥ तृणेनावज्योत्याऽऽसिच्यापः पुनरवज्योत्य निधायं त्रिरुद्वासयत्युदक् ॥५॥ अस्तमिते जुहोति ॥ ६ ॥ वैकङ्कतꣳ स्रुक्स्रुव प्रतप्य पाणिना सम्मार्ष्टि ॥ ७ ॥ पुनः प्रतप्योन्नेष्यामीत्याह ॥८॥ ओ ३

---

रभ्य प्रदक्षिणमुदक्संस्थम्, तत आहवनीयादारभ्य गार्हपत्यं यावत्प्रतीचीमुदधारां निनयन् गच्छति । ततो गार्हपत्यस्य प्रदक्षिणं पर्युक्षणम्, ततो दक्षिणाग्नेः पर्युक्षणम् । अथवा पूर्वं गार्हपत्यं दक्षिणाग्निं च पर्युक्ष्य गार्हपत्यादारभ्याहवनीयं यावत्प्राचीमुदधारां सन्ततां निनयन् गच्छन्नाहवनीयस्य पर्युक्षणं कुर्यात् । "उदस्थालीं चैवोदकमण्डलुं वाऽऽदाय गार्हपत्यादग्र आहवनीयान्निनयन्नियादि"ति ( १२. ४. १. ५ ) प्रायश्चित्तप्रकरणे गच्छतो धारानिनयनदर्शनादिहापि तथैव कल्पनात् ॥ १३ ॥

इति चतुर्थस्य त्रयोदशी कण्डिका ॥ १३ ॥

---

ततोऽग्निहोत्रीं धुदवेति दोग्धारं प्रति प्रैषः । दोग्धा च शूद्रव्यतिरिक्तो भवति । ततः प्रेषितो दोग्धा वितानस्य दक्षिणतः प्राङ्मुखीं वोदङ्मुखीं वाऽग्निहोत्रीं गामवस्थाप्य वत्सं संसृज्यापनीय त्रैवर्णिकघटितायामूर्ध्वकपालायां मृन्मय्यां स्थाल्यां पयो दोग्धि । अध्वर्योर्दोहप्रभृति होमसमाप्तिपर्यन्तं विकल्पेन वाग्यमनं भवति नियमो नेति केचित् । दक्षिणाग्निहोमानन्तरं वाग्विसर्गः । ततोऽध्वर्युर्गार्हपत्यात्कतिपयानङ्गारान् दुग्धश्रयणार्थमुत्तरतः पृथक् करोति खरमध्य एवोत्तरतो भूमिसंलग्नानेव प्रेरयति न तूत्पाट्य । ततो गोः समीपे गत्वा दुग्धस्थालीमादाय तामभ्यन्तरे कुर्वन्नाहवनीयं पूर्वेणाहृत्य गार्हपत्यस्य पश्चादुपविश्य पृथक्कृतेष्वङ्गारेषु तां दुग्धस्थालीमधिश्रयति ।

**मुन्नयेति यजमानस्तिष्ठन् ॥९॥ चतुरः स्रुवानुन्नयति ॥१०॥ स्थाल्यां परिशिनष्टि तद् ब्राह्मणः पिबेत् ॥११॥ उपरि समिधं धारयन्वार्क्षीमध्याधि गार्हपत्यादाहवनीयं ह- रति मुखमात्रे धारयन् ॥ १२ ॥ मध्ये निगृह्योद्गृह्यो पविश्य समिधमादधात्यग्निज्योतिषं त्वा वायुमतीं प्रा- णवतीᳬ स्वर्ग्याᳬ स्वर्गायोपदधामि भास्वतीमिति॥१३॥ प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरिति सजूरिति वा ॥ १४ ॥ अग्निर्वर्च इति ब्रह्मवर्चसकामस्य ॥ १५ ॥ कूर्चे निधाय गार्हपत्यमवेक्षते होष्यन्नस्मिन् ॥ १६ ॥ तूष्णीमुत्तरां**

---

ततो गार्हपत्ये परिस्तृतेभ्योऽन्यद्दर्भतृणमेकं कृत्वा तेन तृणेन स्थालीस्थं पयोऽवज्योत्य स्रुवेणापः प्रत्यानीय पुनस्तथैवावज्योत्योद्गुह्यास्य निद- धाति । ततो हस्तं विसृज्य पुनः स्थालीमादाय तत उत्तरतो निदधाति, पुनरपि स्थालीमादाय ततोऽप्युत्तरतो निदधाति । एवं त्रिरुद्वास्य वक्र कृतᳬ स्रुक्स्रुवं गार्हपत्ये प्रतप्य हस्तेनोभयं सहैव तथा समार्ष्टि यथोभ- योरप्युपरि अधस्ताच्च सर्वं हस्तेन सम्मर्शनं भवति ।

अथवा पूर्वं स्रुवमन्तर्बहिश्च हस्तेन संमृज्य पश्चात्स्रुचमपि तथैव समार्ष्टि । ततः पुनः स्रुक्स्रुवं गार्हपत्ये प्रतप्योन्नेष्यामीति यजमानं पृ- च्छति । यजमानश्च तिष्ठन् ॐ इ मुन्नयेत्यध्वर्युमनुजानाति । ततोऽध्वर्युः सव्ये हस्तेऽग्निहोत्रहवणीमुत्तानां निधाय दक्षिणेन स्रुवमादाय स्थाली- तोऽग्निहोत्रहवण्यां स्रुचि चतुरुन्नीय स्रुवं स्थाल्यामेव निदधाति । पञ्चा- वत्तिनः पञ्चकृत्व उन्नयनं कार्यम् ।

ततः प्रादेशमात्रीं पालाशादियज्ञियवृक्षोद्भवां समिधं स्रुग्दण्डस्यो- पर्यङ्गुल्याद्यन्तरितां धारयंस्तां स्रुचं गार्हपत्यस्योपरि समीप एव नीचैः कृत्वा ततो मुखमात्रे स्रुचं धारयन्नाहवनीयं प्रति हरति । गार्हपत्याहव- नीययोर्मध्यदेशे स्रुचं नीचैर्गृहीत्वा पुनरप्युद्धृत्य मुखमात्रे एव धारयित्वा आहवनीयं गत्वा तत्समीपे वायव्यां प्राङुपविश्य दक्षिणं जान्वाच्य स- व्येन स्रुचं गृहीत्वा दक्षिणेन समिधमादधाति अग्निज्योतिषमिति । ततो दक्षिणेन स्रुचमादायाग्निं प्रदीप्तं कृत्वा प्रदीप्तायां समिधि समिधो मूल- भागादङ्गुलद्वयं त्यक्त्वा समिध उपर्याहुतिं जुहोति अग्निर्ज्योतिरिति (३. ९.) मन्त्रेण । गृहीतस्य पयसश्चतुर्थांशं जुहोति । इदमग्नय इति त्यागः ।

भूयसीम् ॥ १७ ॥ भूयिष्ठꣳ स्रुचि ॥ १८ ॥ द्विः प्रकम्प्य निदधाति ॥ १९ ॥ उपमृज्य स्रुचं, कूर्चे निमार्ष्टि नमो देवेभ्यः, स्वधा पितृभ्य इति दक्षिणत उत्तानम् ॥२०॥ अप उपस्पृश्य ॥ २१ ॥ इतरयोश्च पुष्टिकाम स्थाल्याः स्रुवेणेह पुष्टिं पुष्टिपतिर्दधात्विह प्रजाꣳ रमयतु प्रजापतिः। अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहेति गार्हपत्ये ॥ २२ ॥ तूष्णीं द्वितीयाम् ॥ २३ ॥ अग्नयेऽन्नादायान्नपतये स्वाहेति दक्षिणाग्नौ ॥ २४ ॥ तूष्णीं द्विती-

---

अथवा सजूर्देवेनेति (३. १०) मन्त्रेण रात्र्याऽग्निपदयुक्तेन पूर्वामाहुतिं जुहोति । ब्रह्मवर्चसकामस्य यजमानस्याग्निर्वर्च इति (३.९) मन्त्रेण पूर्वामाहुतिं जुहोति । इति पूर्वाहुतौ त्रयो मन्त्रविकल्पाः ।

एवं पूर्वाहुतिं स्वल्पां हुत्वा स्रुचं कूर्चे निधाय हस्तं विसृज्य गार्हपत्यमवेक्षते । पुनः स्रुचमादाय प्रजापतिं मनसा ध्यायन् तूष्णीमुत्तराहुतिमग्नेरुत्तरभागे पूर्वाहुत्या संसर्गं कुर्वन् पूर्वाहुतितो भूयसीं जुहोति । तूष्णीमिति श्रुतेः स्वाहाकारस्याप्यत्राभावः । इदं प्रजापतय इति त्यागः । भक्षार्थं द्वितीयाहुतितोऽप्यति बहु पयः स्रुचि परिशेषयेत् ।

ततः स्रुचमुदीचीं द्विरुत्क्षिप्य कूर्चे निदधाति । ततः स्रुगग्रमधोमुखेन हस्तेन प्रत्यगुपमृज्य कूर्चस्योत्तरभागे पयोलेपं निमार्ष्टि नमो देवेभ्य इति । तत उत्तानेनैव पुनः स्रुगग्रं प्रत्यक् परिमृज्य कूर्चस्य दक्षिणतो भूभावुत्तानं पाणिं निदधाति स्वधा पितृभ्य इति । ततः केवलमुदकोपस्पर्शनम् । नात्रापसव्यं न दक्षिणाभिमुखता ।

ततो गार्हपत्यं गत्वा तिष्ठन्समिधमाधाय वायव्यां प्राङुपविश्य दक्षिणं जान्वाच्य स्थाल्याः स्रुवेण पयो गृहीत्वा इह पुष्टिमिति समित्पार्श्वे जुहोति गार्हपत्येऽग्नौ । इदमग्नये गृहपतये रयिमते पुष्टिपतये । ततो द्वितीयं स्रुवं गृहीत्वा तूष्णीं द्वितीयामाहुतिमुत्तरतो जुहोति । इदं प्रजापतये । तत उत्थायापरेण गार्हपत्यं दक्षिणाग्निं गत्वा तस्माद्वायव्यां स्थितः समिधमाधाय तत्रैवोपविश्य स्थाल्याः स्रुवेण पयो गृहीत्वा दक्षिणाग्नौ समित्पार्श्वे जुहोति अग्नयेऽन्नादायेति मन्त्रेण । इदमग्नयेऽन्नादायान्नपतये । पुनः स्थाल्याः स्रुवेण पयो गृहीत्वा द्वितीयामाहुतिमुत्तरतस्तूष्णीं जुहोति इदं प्रजापतये । सर्वत्र होमः प्रदीप्तेऽग्नौ कर्तव्यः—

"योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।

याम् ॥ २५ ॥ अनामिकया द्विः प्राश्नाति ॥२६॥ उत्सृप्य निर्लिह्याचम्योत्सिञ्चति देवान् जिन्व पितॄन् जिन्व तृतीयामुदुक्षति सप्तऋषीन् जिन्वेति ॥२७॥ चतुर्थीं कूर्चस्थाने त्रिर्निषिञ्चत्यग्नये पृथिवीक्षिते स्वाहा, पृथिव्या अमृतं जुहोमि स्वाहा, ऽमृते ऽअमृतं जुहोमि स्वाहेति ॥ २८ ॥ स्रुक्स्रुवमाहवनीये प्रतप्य निदधाति ॥ २९ ॥ समिध आदधाति सर्वेषु यथापर्युक्षितः समिदसि स

---

मन्दाग्निरामयावी च दरिद्रश्च स जायते" ।

इति दोषस्मरणात्(१) । "समिद्धहोमेन होव समिद्धा आहुतय" इति श्रुतेश्च(२) ।

ततः स्रुचमादाय भक्षार्थं बहिरागत्योपविश्यानामिकया स्रुक्स्थं पयो गृहीत्वा भक्षयित्वाऽऽचम्य पुनरनामिकयैव गृहीत्वा भक्षयित्वाऽऽचामति। ततः सर्वं पयो दक्षिणहस्ते कृत्वा प्राश्य पयोलिप्तं हस्तं सकृदेव निर्लेढि जिह्वयाऽऽस्वादयतीत्यर्थः ।

ततो हस्तं प्रक्षाल्य द्विराचम्य गत्वाऽऽहवनीयसमीप उपविश्य दक्षिणहस्तेनोदकपात्रमादाय स्रुचमुदकेन पूरयित्वा तदुकमाहवनीयादुत्तरस्यां दिशि स्रुचोत्सिञ्चति देवाञ्जिन्वेति । ततः पुनः स्रुचमुदकेन पूरयित्वाऽऽहवनीयस्य दक्षिणतः स्रुचा तदुदकमुत्सिञ्चति पितृतीर्थेन प्राचीनावीती दक्षिणामुखः पितॄन् जिन्वेति । ततोऽप उपस्पृश्य पुनस्तृतीयवारं स्रुचं पूरयित्वा प्रागुदीच्यां दिश्यूर्द्धमुदकमुत्क्षिपति सप्तऋषीन् जिन्वेति । ततश्चतुर्थीं स्रुचं पूरयित्वाऽऽहवनीयस्य पश्चात् कूर्चस्थाने प्राक्संस्थमुदकसस्थं वा त्रिर्निषिञ्चति निनयति अग्नये पृथिवीक्षित इत्यादिभिस्त्रिभिर्मन्त्रैः स्वाहान्तैः । ततः स्रुक्स्रुवमाहवनीये प्रतप्य कूर्चे निदधाति ।

ततः पर्युक्षणक्रमेण सर्वेष्वग्निषु तिस्रस्तिस्रः समिध आदधाति । पर्युक्षणस्य प्राक् द्वौ पक्षावुक्तौ—पूर्वमाहवनीये, ततो गार्हपत्ये, ततो दक्षिणाग्नाविति । अथवा गार्हपत्ये दक्षिणाग्नौ आहवनीये चेति । अतो येन क्रमेणादौ पर्युक्षणं कृतं तेनैव क्रमेण समिध आदधातीत्यर्थः । तत्र समिदसीत्येतावता मन्त्रेण प्रथमां, समिदसि समिद्धो मे अग्ने दीदिहीति

---

(१) कर्मप्र० १. ९. २२. (२) १. ५. ३. ७.

**मिद्धो मेऽग्ने दीदिहि समेद्धा ते अग्ने दीद्यासमिति ॥ ३० ॥ वाग्यतो दोहप्रभृत्याहोमात् क्षीरहोता चेत् ॥ ३१ ॥ १४ ॥**

---

द्वितीयाम् , समिद्धा ते अग्ने दीद्यासमिति तृतीयाम् । अथवा सहैव तिस्रस्तिस्रः समिधः सर्वेष्वग्निषु आदधाति, तदा समिदसि समिद्धोमे अग्ने दीदिहि समिद्धा ते अग्ने दीद्यासमित्येतावता मन्त्रेण ।

ततो यजमानः पूर्वोक्तेन वात्सप्रेणाग्नी उपतिष्ठते न वा । अथवा वात्सस्थाने भूर्भुवः स्वरित्यनेनैवाहवनीयं गार्हपत्यं चोपतिष्ठते, पूर्वमाहवनीयं ततो गार्हपत्यमिति । ततः पुनराहवनीयं तूष्णीमुपस्थाय तत्समीपे क्षणमुपविशति, इन्द्रायाहवनीयाय नम इति चाह । तत उत्थाय गार्हपत्यस्य समीपे शयीत, उपविशति वा यमाय राज्ञे गार्हपत्याय नम इति चाहेति । ततोऽध्वर्युः पूर्वपर्युक्षणक्रमेण सर्वेषामग्नीनां पर्युक्षणं करोति । ततो यजमानो वाचं विसृज्य विद्युदसीत्यप (४.१५.५) आचामति । पत्न्यपि तूष्णीमाचामति । ततो यजमानो यथाप्रविष्टं निष्क्रामति ।

तत्र यद्यपराग्नी अन्तरेण प्रविष्टस्तदाऽऽहवनीयं प्रदक्षिणीकृत्यापराग्नी दक्षिणेनैव प्रत्यङ् निष्क्रामति । तत्र निष्क्रमणं कुर्वन् नडाय नैषिधायान्वाहार्यपचनाय नम इति मनसा दक्षिणाग्निमुपस्मरेत् । तत आवसथ्येऽग्नौ होमं कुर्यात् । तयो वैश्वदेवम् ।

तदुक्तम्—

"होमं वैतानिके कृत्वा स्मार्त्तं कुर्याद् विचक्षणः ।
स्मृतीनां वेदमूलत्वात् स्मार्त्तं केचित्पुरा जगुः" ॥

तथा—

"पालाश्यः समिधः कार्याः खादिर्यस्तदभावतः ।
शमीरोहितकाश्वत्थास्तदभावेऽर्कवेतसौ" ॥

तथा—

"पालाशखदिराश्वत्थशम्युदुम्बरजा अपि ।
अपामार्गार्कदूर्वाश्च कुशाश्चेत्यपरे विदुरि"ति ॥

होमद्रव्याण्याह कात्यायनः—

"तैलं दधि पयः सोमो यवागू रोचनं घृतम्" ।
तण्डुला मांसमापश्च दश द्रव्याण्यकामत" इति(१)

**इति सायं होम उक्तः ॥ १४ ॥**

इति चतुर्थस्य चतुर्दशी कण्डिका ॥ १४ ॥

---

(१) कर्म प्र.४.१९.३६

**प्रातर्जुहोत्यनुदिते ॥ १ ॥ अन्तरेणापराग्नी गत्वा दक्षिणेन वा प्रदक्षिणं गार्हपत्यं परीत्योपविशति यजमानः ॥२॥ पत्नी च यथादेशम् ॥३॥ अप आचामति वृष्टिरसि वृश्च मे पाप्मान्ꣳ सत्येन व्रतमुपैम्यापः सत्यं मयि व्रतमिति ॥ ४ ॥ वाचं विसृज्य पुनराचामति विद्यु-**

---

अथ प्रातर्होमे विशेष उच्यते । यजमानेनोद्धरेत्युक्ते अनुदिते प्रातरग्निहोत्रहोमार्थं गार्हपत्यादितराग्नेरुद्धरणम् । अनुदित एव सन्ध्यामुपास्य होमः कर्तव्यः । य एव रात्रौ सञ्चरो गृहीतः स एव प्रातरिति सम्प्रदायः । पर्युक्षणं प्राक्संस्थमेव । धाराऽपि प्राक्संस्थैव । न सायं होमवत्प्रत्यक्संस्थमेतद्द्वयम् । उन्नेष्यामि इत्यस्य स्थाने उन्नयामीति वक्तव्यम् । सूर्यं ज्योतिषं त्वेत्याहवनीये समिदाधानम् । सूर्यो ज्योतिरिति पूर्वाहुतिहोममन्त्रः । सजूर्देवेनेत्ययं वा उषः सूर्यपदयुक्तः । अथ वौषसेत्यस्य स्थाने अहनेन्द्रवत्येति प्रातः प्रयोज्यम् । ब्रह्मवर्चसकामस्य सूर्यो वर्च इति वा, इति चत्वारो मन्त्रविकल्पाः प्रातः पूर्वाहुतौ । इदं सूर्यायेत त्यागः । स्रुगग्रस्योपरिमार्जनं प्राक्संस्थमेव वारद्वयमपि । समिदसीति समिदाधानम् । भूर्भुव इत्युपस्थानं तु प्रातर्न भवत्येव । केवलं तूष्णीमाहवनीयस्योपस्थानं तत्समीपे आसनं च इन्द्रायाहवनीयाय नम इति च ।

ततो गार्हपत्यं प्रति गत्वा तत्समीपे शयनमासनं वा । यमाय राज्ञ इति च । ततः प्राक्संस्थमेव पर्युक्षणं वाचं विसृज्याचमनम् । अतीत्य निष्क्रामतो दक्षिणाग्नेर्मनसा ध्यानम् । ततो भोजनात्प्राक् सभ्यसमीपे मुहूर्त्तमुपविश्य अनश्नते साङ्क्रमनाय सभ्याय नम इति वदेत् । ततः सर्वाग्निभ्यो भस्मोद्धृत्य यत्र राशी कृतो भवति तत्समीपं गच्छेत् । असते पांसवाय भस्मोद्धापाय नम इति च वदेत् । "अथ यत्रैव भस्मोद्धृतमुपनिगच्छेत्" इति श्रुतेः ( २-३.२.५ ) । भस्मोद्धृतमुपेयादिति सूत्राच्च ( ४.१५.३४ ) । तत आवसथ्येऽग्नौ प्रातर्होमं कुर्यात् ।

अथ सायंप्रातर्होमे वैकल्पिकं सञ्चरान्तरमुच्यते ॥

उत्तरतः सकाशात्पूर्वेणाहवनीयं प्रदक्षिणमागत्य दक्षिणाग्नेरुत्तरतो गार्हपत्यदक्षिणाग्न्योरन्तरालेन प्रत्यङ्गत्वा गार्हपत्यं प्रदक्षिणं परीत्य स्वस्थाने आगत्योपविश्याचामति । अथवोत्तरतः सकाशादाहवनीयं पूर्वेण दक्षिणाग्निं गार्हपत्यं च दक्षिणेन गार्हपत्यं प्रदक्षिणं परीत्य अप-

**दासि वृश्च मे पाप्मानं जह्यपो ऽवभृथमभ्युपैमि मयि सत्यं गोषु मे भूतामिति ॥ ५ ॥ उन्नयामीत्याह प्रातः ॥ ६ ॥ प्राक्सꣳस्थꣳ समित्पर्युक्षणं धारा चोभयत्र वा ॥ ७ ॥ अग्निशब्दे सूर्यः ॥ ८ ॥ रात्र्युषसाऽह्नेति वा ॥ ९ ॥ ज्योतिः सूर्य इति वा प्रातः ॥ १० ॥ प्रथमाऽस्तमिते पर्युदयं च स्वर्गकामस्य ॥ ११ ॥ तमोऽभ्य-**

राज्योरन्तरेण प्रत्यङ् निष्क्रम्य स्वस्थाने गत्वोपविश्याचामति । होमान्ते च यथाप्रविष्टं निष्क्रमणम् । एवमग्निहोत्रे वैकल्पिकं मन्त्रचतुष्टयमुक्तम् ।

अथाग्निहोत्रहोमस्य काम्याः काला उच्यन्ते—

स्वर्गकामस्यास्तमितमात्रे उदयसमीपे च होमकालः । आयुष्कामस्य सायमन्धकारागमे प्रातरन्धकारे विगच्छति होमकालः । पशुकामस्य सायं पशुषु ग्राममध्ये समागतेषु प्रातर्ग्रामादनिष्क्रान्तेषु होमकालः । श्रीकामस्य सर्वस्मिल्लोके सुप्तेऽप्रबुद्ध एव प्रातर्होमकालः । सायंहोमकालस्तु श्रीकामस्य प्रकृत एव । निष्कामस्य तु—

"यावत् सम्यङ् न भाव्यन्ते नभस्यृक्षाणि सर्वतः ।
न च लोहितिमाऽपैति तावत्सायं तु हूयते" इत्यादि (१) ।

अथ काम्या अग्न्यवस्था अभिधीयन्ते—

यो राजा प्रजाभ्यो बलात्कारेण प्रजा हत्वैवान्नादिकं ग्रहीतुमिच्छति तस्य प्रथमत एव समिद्धे धूममिश्रेऽग्नौ होमः । यो राजा प्रजा बलेन गृहीत्वैवोपरुध्यैव ताभ्योऽन्नादिकं ग्रहीतुमिच्छति तस्याति बहुलज्वालायुक्ते प्रदीप्ततरेऽग्नौ होमः । सर्वेषां ब्राह्मणादीनां श्रीकामानां यशस्कामानां वा प्रदीप्ततमेऽग्नौ होमः । यो मित्रभावेन प्रजाभ्योऽन्नादिकं ग्रहीतुमिच्छति तस्य ज्वालापसरणे जायमाने होमः । यो ब्रह्मवर्चसकामस्तस्य चाकश्यमानेषु देदीप्यमानेष्वङ्गारेषु होमः। निष्कामस्य तु समिद्धतमे एव होमः । "यत्रो एव समिद्धतमं मन्येत तदाहुतीर्जुहुयादि"ति श्रुतेः ( १.५.३.७ ) ।

अथ काम्यानि होमद्रव्याण्युच्यन्ते—

स्वर्गकामः पशुकामो वा पयसाऽग्निहोत्रं जुहोति । ग्रामकामो यवाग्वा, बलकामस्तण्डुलैः ।

( १ ) कमपु. १.९.३ ।

**ये सायं जुहुयाद्ध्रियति प्रातरायुष्कामस्य ॥ १२ ॥ अन्तः पशौ पशुकामस्य सायंप्रातः ॥ १३ ॥ शयाने श्रीकामस्य प्रातः ॥१४॥ प्रथमसमिद्धे धूप्यमाने प्रजासु निहत्येव सहसाऽन्नमत्स्यतः ॥ १५ ॥ भूयिष्ठार्चिषि गृहीत्वेव महसा ॥ १६ ॥ प्रदीप्ततमे श्रीयशस्कामस्य ॥ १७ ॥ अर्चिःप्रत्य-**

---

"व्रीहिश्यामाकनीवारा यवगोधूमशालयः ।
एतेषां तण्डुला होम्या यावनालाः प्रियङ्गवः ।"

इन्द्रियकामो दध्ना । तस्य दध्नोऽधिश्रयणाभावः, तण्डुलानां च । यवाग्वां ते चोदकासेकपुनरवज्योतनवर्जितं सर्वं भवति । तेजस्कामो घृतेन जुहोति । एतेषां प्रागुक्तानां कालानामग्न्यवस्थानां होमद्रव्याणां च मध्ये एकैकेन कालादिनाऽङ्गेन सम्वत्सरं होमे कृते उक्तफलसिद्धिः । सायं प्रातर्होममात्रेण वा । तत्राग्न्यवस्थानां सम्वत्सरनियमो नान्येषाम् ।

अग्निहोत्रहोमे सर्वाग्निषु च गार्हपत्यागारस्य दक्षिणद्वारेण प्रवेशनं कर्तव्यम् । अयं प्रवेशने सदा नियमः । सर्वदा यजमानः स्वयमग्निहोत्रं जुहुयात् । अध्वर्युणा वा होमयेत् । तत्र स्वयं होमपक्षे उन्नयने उद्धरणे च प्रैषाभावः । अन्यत्समानम् । अमावास्यायां पौर्णमास्यां च नियमेन स्वयं होमः कर्तव्यः ।

तदुक्तम्—

"सन्ध्याकर्मावसाने तु स्वयं होमं समाचरेत् ।
स्वयंहोमे फलं यत्स्यान्न तदन्येन जायते" ॥

किन्तर्ह्यन्येन हुते फलमित्यपेक्षिते स एवाह—

"होमे यत्फलमुद्दिष्टं जुह्वतः स्वयमेव तु ।
हूयमाने तदन्येन फलमर्द्धं प्रपद्यते" इति ॥

तथा—(१) "ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एतरेव हुतं यत्स्यात्तद्धुतं स्वयमेव तु" ॥

विट्पतिर्जामाता । अन्यत्प्रसिद्धम् ।

स्मृत्यर्थसारे—

"यजमानः प्रधानं स्यात्पत्नी पुत्रश्च कन्यका ।
ऋत्विक् शिष्यो गुरुर्भ्राता भागिनेयः सुतापतिः ॥
एतैरेव हुतं यत्तु तद्धुतं स्वयमेव तु ।

---

(१) कर्म पु. १.९.३ ।

वायै (ज्वालापसरणे) मैत्रेणान्नमन्त्र्यन्तः ॥१८॥ अङ्गारेषु-चाकृष्यमाणेषु ब्रह्मवर्चसकामस्य ॥१९॥ पयसा स्वर्गकामः पशुकामो वा ॥ २० ॥ यवाग्वा ग्रामकामः ॥ २१ ॥ तण्डुलैर्बलकामः ॥ २२ ॥ दध्नेन्द्रियकामः ॥२३॥ अनधिश्रयणं च श्रुतिसामर्थ्याभ्याम् ॥ २४ ॥ घृतेन तेजस्कामः ॥ २५ ॥ संवत्सरं जुहुयादेतेषामेकैकेन कामसंयोगे ॥ २६ ॥ सायंप्रातर्वा ॥ २७ ॥ दक्षिणेन ( द्वारेण ) प्रवेशनमग्निहोत्रेष्टिषु ॥ २८ ॥ सायंप्रातराहवनीयस्यासनो-

---

पत्नी कन्या च जुहुयाद्विना पर्युक्षणक्रियामि"ति ।
"न वै कन्या न युवतिर्नाल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य नार्तो नासंस्कृतस्तथा ॥
नरके हि पतन्त्येते जुह्वतः स च यस्य तत् ।
तस्माद्वैतानकुशलो होता स्याद् वेदपारगः ॥
प्रोषितेऽप्यथवाऽशक्ते स्वामिन्यग्न्यधिकारिणि ।
पुत्रो भ्राताऽथवा पत्नी शिष्यो वा जुहुयादिति ॥
सूतके च प्रवासे च अशक्तौ श्राद्धभोजने ।
एवमादिनिमित्तेषु हावयेद्धेति योजयेत् ॥
जन्महानौ वितानस्य कर्मत्यागो न विद्यते ।
शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैः ॥
शिवविष्ण्वर्चनं दीक्षा यस्य चाग्निपरिग्रहः ।
स तत्कर्माणि कुर्वीत स्नातः शुद्धिमवाप्नुयात् ॥
सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते ।
होमः श्रौते तु कर्तव्यः शुष्कान्नेनापि वा फलैः ॥
श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् ।
वैतानौपासनाः कार्याः क्रियाश्च श्रुतिचोदनादि"

त्यादिवचनात्सूतके मृतके च तत्कालं स्नात्वा श्रौतस्मार्त्तहोमः स्वयं शुष्कान्नेन फलादिना वा कर्त्तव्यः, दुग्धदध्यादिना त्वसगोत्रेणैव कारयितव्यः ।

पस्थाने ॥ २९ ॥ शय्याऽऽसनं वा गार्हपत्ये ॥ ३० ॥ संवृजन्मंनसोपस्मृत्य दक्षिणाग्निम् ( उपतिष्ठते) ॥ ३१ ॥ अनशित्वा प्रातर्मुहूर्त्तं सभासनं सभ्यस्य ॥ ३२ ॥ भस्मोद्धृतमुपेयात् ॥ ३३ ॥ स्वयं वा जुहुयात् ॥३४॥ उपवसथे नियमः ॥ ३५ ॥ १५ ॥

---

"न वर्द्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः ।
न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत्" ॥

शङ्खोऽपि ।

"अग्निहोत्राद्यर्थं स्नानोपस्पर्शनात्तत्कालं शौचमि"ति ।

"सुहुतान्यग्निहोत्राणि नयन्ति परमां गतिम् ।
अत्र स्वर्गश्च मोक्षश्च यो यथा गन्तुमिच्छति" ।
"सन्निधौ यजमानः स्यादुद्देशत्यागकारकः ।
असन्निधौ तु पत्नी स्यादुद्देशत्यागकारिका ॥
असंनिधौ तु पत्न्याः स्यादध्वर्युस्तदनुज्ञया ।
उन्मादे प्रसवे चार्त्तौ कुर्वीतानुज्ञया विना ॥
सर्वदा यजमानो वा त्यजेत्तद्दिङ्मुखः शुचिरि"ति ॥

तथा चापस्तम्बः ।

"प्रवसन्विहाराभिमुखो याजमानं जपति प्राचो विष्णुक्रमान् क्रामतो"ति ।

गणडनः—

"त्यागं तु सर्वथा कुर्यात्तत्राऽप्यन्यतरस्तयोः ।
उभावप्यसमर्थौ चेन्नियुक्तः कश्चन त्यजेत्" ॥ १५ ॥

इति चतुर्थस्य पञ्चदशी कण्डिका समाप्ता ॥ १५ ॥

इति श्रीत्रिरग्निचित्संम्राट्स्थपतित्रिंशत्क्रतुकृन्महायाज्ञिक श्रीप्रजापतिसुतेन याज्ञिकदेवेन कृतायां कात्यायन सूत्रपद्धतौ चतुर्थोऽध्यायः समाप्तः ।

# पञ्चमोऽध्यायः ।

चातुर्मास्यप्रयोगः फाल्गुन्याम् ॥ १ ॥ वैश्वानरपार्जन्यौ निरुप्येच्छन् ॥ २ ॥ वैश्वानरो द्वादशकपालश्च रुरुत्तरः ॥ ३ ॥ आग्नेयः, सौम्यश्चरुः, सावित्रो द्वादशकपालोऽष्टाकपालो वा, सारस्वतश्चरुः, पौष्णश्चरुः

## अथ चातुर्मास्यानां पद्धतिर्लिख्यते ।

तत्र प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् । तेषां प्रारम्भः फाल्गुन्यां पौर्णमास्याम् । शाखान्तराच्चैत्र्यां वैशाख्यां वा । तत्र पौर्णमास्यामिच्छयाऽन्वारम्भणीया । इच्छया वैश्वानरपार्जन्येष्टिः । तत्र वैश्वानरो द्वादशकपालः पुरोडाशः पार्जन्यश्चरुरिति द्वे हविषी भवतः ।

उद्धरणादिकर्मापवर्गान्ते विशेषः । वैश्वानरपार्जन्येष्ट्यर्थमित्युद्धरणे । वैश्वानरपार्जन्येष्ट्याऽहम् इति वरणे । पात्रासादने द्वादश कपालानि । एका चरुस्थाली, दक्षिणाऽन्वाहार्य एव । विंशतिरिध्मकाष्ठानि । एका पुरोडाशपात्री । अन्यत्सर्वं प्रकृतिवत् । यवमयपुरोडाशपक्षे नानाबीजधर्मा उक्ताः । ग्रहणे-अग्नये वैश्वानराय जुष्टं गृह्णामि । प्रोक्षणे-अग्नये वैश्वानराय त्वा जुष्टम्, पर्जन्याय त्वा जुष्टमिति । व्रीहिमयपुरोडाशपक्षे कणान्ते विभाज्यालम्भः । इदमग्नेर्वैश्वानरस्य । इदं पर्जन्यस्य । प्राणदाने-अग्निं वैश्वानरं गच्छ । पर्जन्यं गच्छ । इदमहं सप्तदशेन वज्रेणेत्यवबाधने ।

उत्तमे प्रयाजे—इदमग्नये सोमायाग्नये वैश्वानराय पर्जन्याय देवेभ्य इत्यादि । प्रधानयागे—अग्नये वैश्वानरायानुब्रूहि, अग्निं वैश्वानरं यज, इदमग्नये वैश्वानराय । पर्जन्यायानुब्रूहि, पर्जन्यं यज, इदं पर्जन्याय । ततः स्विष्टकृदादि । प्राशित्रचतुर्द्धाकरणाद्युभयोः सर्वम् । व्यूहने-अग्नेर्वैश्वानरस्य पर्जन्यस्योज्जितिम् । अग्निर्वैश्वानरः पर्जन्यस्तमपनुदतामिति । प्रस्तरत्यागे-इदमग्नये सोमायाग्नये वैश्वानराय पर्जन्याय देवेभ्य इत्यादि ।

एवं पूर्वस्यां पौर्णमास्यामिष्टिं कृत्वा प्रतिपदि प्राक्पौर्णमासाद्वैश्वदेवं पर्व भवति । तत्राष्टौ हवींषि भवन्ति । आग्नेयोऽष्टाकपालः, सौम्यश्चरुः, सावित्रो द्वादशकपालोऽष्टाकपालो वा उपांशु, सारस्वतश्चरुः, पौष्णश्चरुः, मरुद्भ्यः स्वतवद्भ्यः सप्तकपालः पुरोडाशः, मारुतो वा, वैश्वदेवी पयस्या उपांशु, द्यावापृथिवीय एककपाल उपांशु। अत्र प्राचीनप्रव-

**प्रपिष्टानाम् ॥४॥ द्विदेवतोऽपि नियमसामर्थ्यात् ॥५॥ अर्द्धपिष्टं वोभयसामर्थ्यात् ॥ ६ ॥ सौमापौष्णदर्शना-च्च ॥ ७ ॥ अपिष्टो वा देवताऽन्यत्वात् ॥ ८ ॥ सोमा-पौष्णे वचनात् ॥ ९ ॥ एतानि सर्वत्र ॥ १० ॥ मरुद्भ्यः स्वतवद्भ्यः सप्तकपालः ॥ ११ ॥ मारुतो वा ॥ १२ ॥ वै-श्वदेवी पयस्या ॥१३॥ द्यावापृथिवीय एककपालः ॥१४॥**

---

णायां भूमौ कर्म कर्त्तव्यम्। पूर्वं पत्नीयजमानावहते वाससी परिदधाते।

तत ऋत्विजां वरणम् । अमुकगोत्रामुकशर्म्मन् प्रथमजगवदक्षिणे-नैष्टिकेन वैश्वदेवपर्वणाऽहं यक्ष्ये, तत्र मे त्वं ब्रह्मा, होताऽध्वर्युराग्नीध्रो भवेति प्रत्येकं वरणम् । ततो यथासम्भवं तानर्चयेत् ।

ततोऽध्वर्युः पञ्चभूसंस्कारपूर्वकमाहवनीयदक्षिणाग्न्योरैष्टिकवैश्व-देवपर्वार्थमिति विहरणं करोति । ततोऽग्न्यन्वाधानम् । ततः शाखाच्छे-दः । सन्नमनम् । शाखापरिवासनं तूष्णीम् । शाखामूलान्मन्त्रेणोपवेष-करणम् । शाखायां पवित्रबन्धनं च । वैश्वदेवपयस्यार्थं वत्सापाकरणं, विश्वेभ्यो देवेभ्यो भागमिति विशेषः । शाखोपगूहनम् । पद्मासनोप-कल्पनम् । ब्रह्मवरणम् । गोत्र शर्मन्नैष्टिकवैश्वदेवपर्वणाऽहं यक्ष्ये तत्र भूयत इति विशेषः । व्रतग्रहणमत्र वा । प्रणीताप्रणयनम् । परिस्तरणम् ।

पात्रासादने—शूर्पाग्निहोत्रहवणी, स्फ्यकपालम्, तत्र कपालान्यष्टा-विंशतिश्चतुर्विंशति वा,चरुस्थाल्यस्तिस्रः । शम्या कृष्णाजिनम् । उलूख-लमुसलम् । दृषदुपलम् । पात्री धान्यम् । पवित्रच्छेदनानि पवित्रे । शाखो-पवेषः । संयवनोदकम् । स्थाली, आज्यं, वेदश्च, दोहनचतुष्टयम् , दक्षि-णार्थं ऋषभः । उदकतृणमग्निः । विंशतिकाष्ठक इध्मः, कुशप्रस्वः प्रस्तरो-पसन्नद्धं त्रेधा बर्हिः । तत्र पूर्वं त्रीन्पूलकानेकैकेन संहननेन पृथग्बद्ध्वा प्रस्तरमपि पृथग्बद्ध्वा पुनस्तान् सप्रस्तरान् त्रीनपि दर्भपूलकान् महता एकेन संहननेनैकत्र बध्नीयात् । स्रुवो जुहूः उपभृत् ध्रुवा च । द्वे प्राशित्र-हरणे, श्रृतावदानं मेक्षणं च । चतस्रः पात्र्यः योक्त्रं यूनकुशाश्च, पञ्च प-रिधयः । वाजिनभाण्डम्, मन्थनचतुष्टयं-तत्राधरारणिः, प्रमन्थः शकलं, द्वे तृणे, कुशास्तीर्णं पीठम् । इडापात्री षडवत्तं च । अन्तर्द्धानकटः, पूर्णपात्रं, कर्मापवर्गो च । क्षुरचतुष्टयं पञ्च । तत्र क्षुरः नवकुशतृणानि, श्येणी शलली, आपश्चेति क्षुरचतुष्टयम् ।

ततः स्फ्योपहितपात्रीकरणम्, शूर्पाग्निहोत्रहवण्योरादम्, वाग्यमनम्,

**एतद्वैश्वदेवम् ॥ १५ ॥ प्राचीनप्रवणे ॥१६॥ अहतवासाः पत्नी च ॥ १७ ॥ त एव वरुणप्रघासेष्वपि ॥ १८ ॥ त्रेधा बर्हिः सन्नह्य पुनरेकधा ॥१९॥ कुशप्रस्वः प्रस्तर उपसन्नद्धः ॥२०॥ आस्माद्याग्निमन्थनम् ॥२१॥ अग्नेर्जनित्रमि-**

---

प्रतपनं, गमनं पात्रीबिले जपः, नानाबीजपक्षे उरु वातायेत्युभयोः प्रेक्षणम्। उभयोरपद्रव्यमादाय तन्त्रेण निरसनम् । अन्यतरस्मिन्नपद्रव्यमादाय तन्त्रेण निरसनम् । अन्यतरस्मिन्नपद्रव्याभावे तस्याभिमर्शनम् । उभयोरपद्रव्याभावे पृथक् पृथक् तन्त्रेणाभिमर्शनम् । ततो यच्छन्तामित्यालम्भनं भेदेन । ग्रहणे अग्नये जुष्टम् । सोमाय जुष्टम् , चरुः । सवित्रे जुष्टम् पुरोडाशः । सरस्वत्यै जुष्टम् चरुः । पूष्णे जुष्टं, पिष्टानां चरुः। मरुद्भ्यः स्वतवोभ्यो जुष्टम् , पुरोडाशः । अथवा मरुद्भ्यो जुष्टम् इति देवताविकल्पः । द्यावापृथिवीभ्यां जुष्टं, पुरोडाशः । एवं सप्त हवींषि गृहीत्वा भूताय त्वेति भेदेन शेषाभिमर्शनं कुर्यात् । प्राङ्वीक्षणम् । उत्थानम् । उत्तरतो गमनम् । हविरासादनम् । पवित्रकरणम् । प्रोक्षणयुत्पवनम् । सव्यहस्ते कृत्वा दक्षिणेनाद्विङ्गनम् । प्रोक्षणीनामेव प्रोक्षणम् ।

ब्रह्मन् हविः प्रोक्षिष्यामीति प्रैषः । प्रोक्षेत्यनुज्ञातः । अग्नये त्वा जुष्टम् । सोमाय त्वा जुष्टम् । सवित्रे त्वा जुष्टम् । सरस्वत्यै त्वा जुष्टम् । पूष्णे त्वा जुष्टम् । मरुद्भ्यः स्वतवोभ्यस्त्वा जुष्टम् । अथवा मरुद्भ्यस्त्वा जुष्टम् । द्यावापृथिवीभ्यां त्वा जुष्टम् इति हवींषि प्रोक्ष्य दैव्यायेति सर्वाणि पात्राणि प्रोक्षति । ततोऽसञ्चरे प्रोक्षणीनां निधानम् ।

कृष्णाजिनादानम् । अवधूननम् । प्रत्यग्ग्रीवस्यास्तरणम् । सव्याङ्गुष्ठे उलूखलनिधानम् । पुरोडाशसम्बन्धिनां यवानामावपनम् । मुसलादानम् । मुसलावधानम् । कण्डनादि, फलीकरणान्तं कण्डनम् । तुषास्तु तावत् स्थाप्यन्ते । तच्चरुसम्बन्धिनां व्रीहीणां मन्त्रेणोलूखल आवपनम् । स इदमिति मुसलावधानम् । अस्मिन्नवसरेऽध्वर्युयजमानयोर्वाग्विसर्गः । वितुषीकरणम् । शूर्पमात्तमेव । प्रति त्वेति हविरुद्वपनादि, स्थापितान् पूर्वांस्तुषानेकत्र कृत्वा सहैव तुषनिरसनम् । पात्र्यामोप्याभिमन्त्रणादिकणनिधानान्तम् । व्रीहिमयपुरोडाशपक्षे पुरोडाशार्थांश्चरुवर्थांश्च तण्डुलान् विभज्य तेषामालम्भनम् । इदमग्नेः सवितुः पूष्णो मरुतां स्वतवसां द्यावापृथिव्योश्च । इदं सोमस्य सरस्वत्याश्च ।

ततोऽग्नीधः कपालोपधानम् । अध्वर्योः पेषणम् । आग्नेयस्याष्टौ कपालानि । तत एकं चरुस्थानं परिशिष्य सावित्रस्याष्टौ द्वादश वा कपा-

ति शकलमादाय वेद्यां करोति ॥ २२ ॥ वृषणाविति कुशतरुणे तस्मिन् ॥२३॥ उर्वश्यसीत्यधरारणिं तयोः॥२४॥ आयुरसीत्युत्तरयाऽऽज्यस्थालीᳬं सᳬंस्पृश्य पुरूरवा

---

लानि । ततश्चरुस्थानद्वयम् । ततो मरुद्भ्यः स्वतवद्भ्यः सप्त कपालानि । तत्रोत्तरत एकम् । ततः पयस्यास्थानम् । ततो द्यावापृथिवीयस्यैकं कपालम् । तच्च पाणिमात्रम् । तत्र तपसा तप्यस्वेत्यभ्यूहनम् । उपसर्जन्यधिश्रयणम् । यजमानस्याज्यनिर्वापः । वेदबन्धश्च ।

प्रोक्षणान्ते उपसृष्टादिपरिक्षालनान्तो दोहः । तत ईक्षणादि । नानाबीजे उभयोरीक्षणम् । ईक्षणानन्तरं पूष्णः पिष्टानि पृथक्कृत्यालम्भः । इदमग्नेः सवितुर्मरुतां स्वतवसां द्यावापृथिव्योश्च । इदं पूष्णः । पिष्टानि पृथक्कृत्यालम्भः इदं सोमस्य, इदं सरस्वत्याः । ततः पात्र्यां पिष्टान्योप्य चरुपात्रे पवित्रं कृत्वा अध्वर्योः संवापः । त्रिः प्रक्षालनम् । पूषचरोः पिष्टानां स्थाल्यामावापः । प्रक्षालनाभावोऽर्थलोपाद्विरोधाच्च । तत उपसर्जन्यानयनादि । सर्वं चरुषु भेदेनोपसर्जनीनां निनयनं क्रमेण ।

ततः पिष्टसंयवनम् । विभज्यालम्भः । इदमग्नेः, इदं सवितुः, इदं मरुतां स्वतवसाम्, इदं द्यावापृथिव्योः । सावित्रः पुरोडाशो महान् कार्यः । "स वै वर्षिष्ठः पुरोडाशो भवती"ति श्रवणात् (२.१.४.) । ततः सर्वेषां क्रमेणाधिश्रयणादि । चरूणां प्रथनाद्भिरभिमर्शनयोरभावः । पयोवर्जं पर्यग्निकरणम् । श्रपणं, चरूणामभस्मनाच्छ्रपणदानम्, नोपरि । पयस्यायाश्च । तप्ते पयसि दधिप्रक्षेपः । मा भेरित्यालम्भः । शृताभिवासनं पुरोडाशानामेव, न चरूणाम् ।

आप्त्योदकनिनयनम् । वेदिमानादि प्राणदानान्ते विशेषः । सर्वाणि संनहनानि विसृज्य दक्षिणश्रोणौ निधेयानि । शृतावदानानन्तरं मेक्षणस्य सम्मार्गप्रतपने । ततो वाजिनभाण्डस्य सम्मार्गः । केचिदस्य संमार्गं नेच्छन्ति, उपदेशातिदेशाभावात् । तत्रस्थाभिघारमदत्त्वा दत्त्वा वा वाजिनानपेक्षः । ततोऽभिघारादिः । प्राणदाने-अग्निं गच्छ, सोमं गच्छ, सवितारं गच्छ, सरस्वतीं गच्छ, पूषणं गच्छ, मरुतः स्वतवसो गच्छ, विश्वान्देवान् गच्छ, द्यावापृथिव्यौ गच्छ, वाजिनो गच्छेति । प्राणदानानन्तरं द्यावापृथिवीयस्याज्येनान्ताच्छादनम् । उत्करे वाजिनस्यासादनम्, आलम्भश्च । हवींष्यासाद्यालभ्यात्मानमालभ्यापः स्पृष्ट्वाऽग्निमन्थनं करोति ।

तत्राग्नेर्जनित्रमसीति (५. ३.) शकलं गृहीत्वा तूष्णीं वेदिमध्ये उदगग्रं निदधाति । तत आयुरसीति ( ५. २ ) प्रमन्थमुखेन स्थालीस्थमा-

इत्यभिनिधानं तया ॥ २५ ॥ ॥ १ ॥

अग्नये मथ्यमानायानुवाचयति ॥१॥ मन्थति गायत्रेणेति प्रतिमन्त्रं त्रिः प्रदक्षिणम् ॥ २ ॥ जाते जाता·

---

ज्यं स्पृष्ट्वा पुरूरवा इति ( ५. २ ) तीर्थस्योपरि प्रमन्थं निदधाति । ततश्चात्रकीलकस्योपर्योविलेमुदगग्रां निधाय कश्चिदन्यो यन्त्रं धारयति॥१॥

इति पञ्चमस्य प्रथमा कण्डिका ॥ १ ॥

---

ततश्चात्रं नेत्रेण त्रिरुद्धृत्य अध्वर्युरग्नये मथ्यमानायानुब्रूहीति होतारं प्रत्युक्त्वा गायत्रेणेति ( ५. २ ) प्रतिमन्त्रं त्रिः प्रदक्षिणं मन्थति । तत ऊर्ध्वं प्रदक्षिणमप्रदक्षिणं चाग्निजन्मपर्यन्तं मन्थति । अग्नौ जाते जातायानुब्रूहीति होतारं प्रेष्य भवतं न इत्याहवनीये ( ५. ३ ) ऽग्निं प्रक्षिपति । ततः समिधमाधाय तस्मिन्प्रक्षिप्तेऽग्नौ अग्नावग्निरिति (५. ४) मन्त्रेण स्थाल्याः सकाशाद् गृहीत्वा स्रुवेणाज्यं जुहोति । इदमग्निभ्याम्।

तत एहि होतरित्यामन्त्रणादि । इदमहं सप्तदशेनेत्यत्रबाधनम् । नव प्रयाजाः । चतुर्थसप्तमयोः समानयनम् । चतुर्णां प्रयाजानां त्यागा अनुमन्त्रणानि च प्रकृतिवत् । पञ्चमप्रयाजे इदं द्वाभ्यः । पञ्च मम न तस्येति, अन्नादो भूयासमिति चानुमन्त्रणं पञ्चमादीनां नवमपर्यन्तानां सर्वेषाम् । षष्ठे इदमुषासानक्ताभ्याम् , सप्तमे इदं दैव्याभ्यां होतृभ्याम्, अष्टमे इदं तिसृभ्यो देवीभ्यः, नवमे इदमग्नये सोमाग्नये सोमाय सवित्रे सरस्वत्यै पूष्णे मरुद्भ्यः स्वतवोभ्यो विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां देवेभ्य आज्यपेभ्यो वाजिभ्यश्च न मम। पञ्च ममेत्यादि पूर्ववत् । प्रत्येत्य वाजिनान्तानां हविषां प्रयाजशेषेणाभिघारणम् । आज्यभागौ ।

प्रधानयागे-अग्नयेऽनुब्रूहि । अग्निं यज, इदमग्नये १ । सोमायाऽनुब्रूहि, सोमं यज, इदं सोमाय २ । सावित्रे उपांशु, अनुब्रूहि सवितारम् उपांशु, यज, इदं सवित्रे ३ सरस्वत्या अनुब्रूहि, सरस्वतीं यज, इदं सरस्वत्यै, ४ । पूष्णेऽनुब्रूहि पूषणं यज, इदं पूष्णे। ५ मरुद्भ्यः स्वतवोभ्योऽनुब्रूहि । मरुतः स्वतवसो यज इदं मरुद्भ्यः स्वतवोभ्यः । अथवा मरुद्भ्योऽनुब्रूहि मरुतो यज इदं मरुद्भ्यः । विश्वेभ्यो देवेभ्योऽनुब्रूहि, विश्वान्देवान् यज, इदं विश्वेभ्यो देवेभ्यः ७ द्यावापृथिवीभ्यामनुब्रूहि, द्यावापृथिव्यौ यज, इदं द्यावापृथिवीभ्याम् ८ । द्यावापृथिवीयः

**येति ॥ ३ ॥ प्रह्रियमाणायेति प्रास्यन् ॥४॥ भवतन्न इति प्रास्यति ॥ ५ ॥ अग्नावाग्निरिति जुहोति स्थाल्याः स्रुवेण**

सर्वहुतः कार्यः । अपर्यावर्तनं च ( ४.६.४. ) अग्नये स्विष्टकृत इत्यादि । सप्तकपालस्य पयस्यायाश्च चतुर्द्धाकरणभागाभावः । अन्येषां सर्वं भवति।

समस्य मार्जनम् । दक्षिणालम्भे ऊर्गसीत्यस्य स्थाने प्रथमजो गौरसीत्यूहः । अस्यौष्टिकवैश्वदेवपर्वणः समृद्ध्यर्थं प्रथमजं गां दक्षिणां ब्रह्मणे इत्यादि । ब्राह्मणा अयं वः प्रथमजो गौः प्रतिगृह्णीतेति । द्यौस्त्वा ददात्विति प्रतिग्रहमन्त्रः ।

अनुयाजा नव । तत्र चतुर्थे सप्तमे चोपभृतः समानयनम् । प्रथमस्य पूर्वार्द्धे होमः । इदं देवाय बर्हिषे १ । द्वितीयप्रभृतीनां नराशंसान्तानां मध्ये होमः । अन्यस्य पश्चाद्धोमः । द्वितीये इदं देवीभ्यो द्वार्भ्यः २ । इदं देवीभ्यामुषासानक्ताभ्याम् ३ । इदं देवीभ्यां जोष्ट्रीभ्याम् ।४। इदं देवीभ्यामूर्जाहुतिभ्याम् ५ । इदं देवाभ्यां दैव्याभ्यां होतृभ्याम् ६ । इदं देवीभ्यस्तिसृभ्यो देवीभ्यः ७ । इदं देवाय नराशꣳ० साय ८ । इदं देवायाग्नये स्विष्टकृते ९ ।

ततो धारानुयाजः । इदं देवेभ्यः । स्रुचोरासादनम् । व्यूहने—अग्नेः सोमस्य सवितुः सरस्वत्याः पूष्णो मरुतां स्वतवसाम् अथवा मरुतां विश्वेषां देवानां द्यावापृथिव्योरुज्जितिम० । अग्निः सोमः सविता सरस्वती पूषा मरुतः स्वतवसः अथवा मरुतः विश्वे देवा देवापृथिव्यो तमपनुदन्तु । उपांशुदेवतानामुपांशूच्चारणम्, अन्येषामुच्चैः । प्रस्तर होमे—इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्णे मरुद्भ्यः स्वतवोभ्यः अथवा मरुद्भ्यो विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां देवेभ्य आज्यपेभ्योऽग्नये होत्राय वाजिभ्यश्चेति । सहशाखया प्रस्तराऽनुप्रहरणम् । ततस्तृणं प्रास्यात्मानमालभ्यापः स्पृष्ट्वा वाजिनेन यागः कार्यः ।

तत्र वेदिमध्ये जुहूं निधाय वाजिनस्थालीमुखेनैव बर्हिषि स्कन्दनं कुर्वन् जुह्वां वाजिनस्य निनयनं करोति । ततोऽनुवाचनम् । वाजिभ्योऽनुब्रूहीति । तत उत्थायातिक्रम्याश्राव्य वाजिनो यजेति प्रैषः । अग्नेः पूर्वार्द्धे होमः । "स वै प्रागेवाग्ने जुहोति" इति श्रुतेः (२.४.४.२३) । अनु वषट्कारेऽपि पूर्वार्द्धे एव होमः । "स वै प्रागेव जुहोतीति श्रुतेः" ( २.४.४.२३ ) ।

तत उत्तरत उपविश्य स्रुक्स्थेन वाजिनशेषेण दिशो व्याघारयति- दिशः स्वाहा, अग्नेः पूर्वभागे, इदं दिग्भ्यः । प्रदिशः स्वाहा, दक्षिणतः,

॥६॥ नवप्रयाजं नवानुयाजम् ॥७॥ वरुणप्रघासा महा० विश्च ॥८॥ त्रीणि समिष्टयजूंषि जुहोति देवा गातुविदो, यज्ञ यज्ञ,मेष त इति ॥९॥ पशौ च ॥ १० ॥ याँ २॥ आवह इति वा पशौ ॥११॥ एकं वा वैश्वदेवे ॥१२॥ पर्वसंस्थासु वपनं वा प्रागन्त्यात् ॥१३॥ अपरेण दक्षिणाग्निं दक्षिणं गोदानमुन्दति सवित्रा प्रसूता दैव्या आप उन्दतु ते तनूं दीर्घायुत्वाय वर्चस इति ॥१४॥ त्र्येण्या शलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधात्योषध

---

इदं प्रदिग्भ्यः। अवादेशः स्वाहा, पश्चात्, इदमादिग्भ्यः। विदिशः स्वाहा, उत्तरतः इदं विदिग्भ्यः। उद्दिशः स्वाहा, अग्निमध्ये, इदमुद्दिग्भ्यः। दिग्भ्यः स्वाहा, पूर्वार्द्धे, इदं दिग्भ्यः।

ततो बर्हिर्गत्वा स्रुच्यवशिष्टं वाजिनशेषं भक्षार्थं हस्ते कृत्वा होता अध्वर्यो उपह्वयस्व ब्रह्मन्नु० अग्नीदु० यजमानोपह्वयस्वेत्येवं कर्मसम्बन्धिभिर्नामभिरेतान् पृष्ट्वा उपहूत इति तैरनुज्ञातो भक्षयति।

ततोऽध्वर्युर्वाजिनमादायैवमेव होतारं ब्रह्माणमग्नीधं यजमानं च पृष्ट्वा ऋतूनां त्वा वाजिनमिति मन्त्रेण वाजिनशेषं भक्षयति। वाज्यहं वाजिनस्येति वा। वाजे वाजीति वा। ततो ब्रह्मा होतारमध्वर्युमग्नीधं यजमानं च पृष्ट्वा भक्षयति। ततोऽग्नीद्धोतारमध्वर्युं ब्रह्माणं यजमानं च पृष्ट्वा भक्षयति।

ततो यजमानो वाजिनं हस्ते कृत्वा होतारमध्वर्युं ब्रह्माणमग्नीधं च पृष्ट्वा ऋतूनामिति भक्षयति। मन्त्रास्तु सर्वेषां पूर्वोक्ता एव।

अथवा यजमानः प्रथमो भक्षयति उत्तमश्च। अस्मिन्पक्षे सर्वैर्यजमानः पूर्वं पश्चाच्च वारद्वयं प्रष्टव्यः। यजमानोपह्वयस्व, होतरुपह्वयस्वेत्येवम्।

ततः संवदस्वेत्यादि। स्रुग्विमोकानन्तरं वा वाजिनयागः। परिधिभिः सहोपवेषहोमः। एकं समिष्टयजुः त्रीणि वा। अस्मिन्पक्षे देवा गातुविदो यज्ञ यज्ञमेष त इति त्रयाणां क्रमेण मन्त्राः। इदं वाताय, इदं यज्ञाय, इदं यज्ञपतय इति क्रमेण त्यागाश्च। नमः कृतायेति।

कर्मापवर्गान्ते वपनं वा। तत्र वपनपक्षे दक्षिणाग्निमपरेण प्राङ्मुखं यजमानमुपवेश्य स्वयमुदङ्मुखो यजमानस्य दक्षिणं गोदानं मस्तकस्य

इति ॥ १५ ॥ ऽयायुषमिति यजमानो जपति ॥ १६ ॥ शिवो नामेति लोहक्षुरमादाय निवर्त्तयामीति वपति ॥ १७ ॥ एवं पश्चादुत्तरतश्च ॥१८॥ गृहेषु पौर्णमासः स-मारूढ-निर्मथितयोस्तथा चेत् ॥ १९ ॥ प्रजाकामस्यापि वैश्वदेवम् ॥ २० ॥ एकेऽधः प्राक्शायी मध्वाश्यृतुजा-योपायी ॥ २१ ॥ माꣳसस्त्र्यनृतानि वर्जयेदुदकाभ्यवा-यं च ( उदकप्रवेशं च ) प्रागवभृथात् ॥ २२ ॥ ॥ २ ॥

---

दक्षिणं प्रदेशं सवित्रा प्रसूता ( पा० २.१ ) इत्यनेनाङ्कुराद्रं करोति । ततस्त्रेण्या शलल्या कातपयान् केशान् पृथक्कृत्य त्रीणि कुशतृणान्यन्तर्द-धाति ओषध इति । ततस्त्र्यायुषमिति (३.६२) यजमानो जपति । ततः शिवो नामेति (३.६३) ताम्रं ( ३.१. ) चितं क्षुरमादाय निवर्त्तयामीति ( ३.६२ ) केशाँश्छिनत्ति । एवं पश्चात्, एवमेवोत्तरतः । तत्र त्र्यायु षमिति । ( ३.६२ ) जपस्य क्षुरादानस्य चाभावः । ततो नापितो वपन करोति । ततः शतं ब्राह्मणान् भोजयेत् ।

"चातुर्मास्येषु च चत्वारि शतं शतं पर्वणि पर्वणी"ति परिशिष्टात् । अस्यैष्टिकवैश्वदेवपर्वणः समृद्ध्यर्थं यथासम्पन्नेन तृप्तिपर्यन्तभोजनपर्या-प्तेनान्नेन शतं ब्राह्मणानहं तर्पयामीति सङ्कल्पः ।

ततः सद्यःपक्षेण पौर्णमासेष्टिः । ततः पत्न्यादिकर्म. ततो वैश्वदेवादि नित्यं कर्म । ततो भोजनम् । अहतवाससां वरुणप्रघासार्थं यत्नेन रक्ष-णम् । नाशादावन्ये अप्यहते ग्राह्ये । प्रजाकामस्यापि केवलं वैश्वदेवं पर्व भवतीति केचित । नेत्यपरे ।

अथ यजमानश्चातुर्मास्यस्य समाप्तिं यावत् भूमौ प्राक्शिराः शयीत । मध्वश्नीयात् । ऋतुकाले स्त्रियं गच्छेदेव । मांसं नाश्नीयात् । अनृतौ स्त्रियं न गच्छेत् । अनृतं न वदेत् । वरुणप्रघासावभृथपर्यन्तमुदक-मध्ये प्रवेशमपि वर्जयेत् ॥

( इति याज्ञिक श्रीदेवकृत पद्धतौ वैश्वदेवपर्व समाप्तम् ) ॥ २ ॥

इति पञ्चमस्य द्वितीया कण्डिका ॥ २ ॥

---

**आषाढ्यामयन्ते योनिरिति समारोह्योदवसाय नि-र्मथ्य वरुणप्रघासाः ॥ १ ॥ पूर्वेद्युर्दक्षिणाग्नौ निस्तुष भृष्टयवानां करम्भपात्रकरणम् ॥ २ ॥ यावन्तो यजमा-**

अथ वरुणप्रघासा लिख्यन्ते । ते च फाल्गुन्यां प्रारम्भपक्षे आषाढ्यां, चैत्र्यामारम्भे श्रावण्यां, वैशाख्यामारम्भे भाद्रपद्याम् । तत्र पूर्वेद्युः पौर्णमास्यां वैश्वदेवपर्वणि परिहिताहतवस्त्राणि प्रक्षाल्य शोषयित्वा पत्नीयजमानौ परिदधाते । तत ऋत्विग्वरणम् । गोत्र शर्मन्नैष्टिकेन धेनुदक्षिणेनेति वा । द्वादशगवदक्षिणेनेति वा । ततोऽध्वर्युः पञ्चभूसंस्कारपूर्वकं समारोपार्थमाहवनीमुद्धृत्यारणी गृहीत्वाऽयं त ( ३.१४ ) इति मन्त्रेण गार्हपत्ये प्रतपति ततो द्विस्तूष्णीम् । "सकृन्मकृन्मन्त्रेण द्विस्तूष्णीमि"ति शाङ्खायनसूत्रात् ( २.१७.२ ) ।

एवमेवाहवनीयेऽरणी प्रतप्योदवसाय प्राचीनप्रवणे वितानं साधयित्वा गार्हपत्यखरे संस्कारः । मन्थनं, स्थापनम् । ततो भूसंस्कारपूर्वकमाहवनीयदक्षिणाग्न्योरुद्धरणमैष्टिकवरुणप्रघासार्थमिति संकल्पः । वरुणप्रघासार्थमेव सर्वेष्वग्न्यन्वाधानं मन्त्रेण । तत उभयोः समन्त्रकः शाखाछेदः । अनुमार्जनम् । "अग्नीनन्वाधाय पृथक् शाखे आहरत"इत्यापस्तम्बवचनात् (५.३१.२६) । अत्र वा व्रतग्रहणम् । चतुरासनम् । ब्रह्मवरणम् । धेनुदक्षिणैष्टिकेन वरुणप्रघासपर्वणाऽहं यक्ष्ये तत्र भूपत इत्यादि । ब्रह्मणः समन्त्रकमुपवेशनम् । अत्र वा व्रतग्रहणम् ।

ततः करम्भपात्रकरणम् । मेषमेषीकरणं च । तत्र मेषकरणमध्वर्योः समन्त्रकम् । प्रतिप्रस्थातुः करम्भपात्रकरणं तूष्णीम् । मन्त्रेण मेषीकरणं च । तत्र सर्वार्थत्वसंयनार्थत्वपक्षयोरध्वर्योरेव प्रणीताप्रणयनं नादृष्टार्थत्वपक्षे ।

दक्षिणाग्नेरुत्तरतो विप्रकृष्टमध्वर्योः पात्रासादनम् । शूर्पाग्निहोत्रहवणि, स्फ्यः कर्परम्, शम्याकृष्णाजिनम्, उलूखलमुसलम्, दृषदुपलम्, पात्रीधान्यम्, मेषार्था यवा एव । पवित्रे पवित्रछेदनानि च, धृष्टिः संयवनार्थं दधि, ऊर्णाश्च । द्व्यहपक्षे—उदकृतणं शम्या च । सद्यःपक्षे त्वनयोः श्व एवासादनप्रोक्षणे । प्रतिप्रस्थाताऽऽसादितपात्राणां दक्षिणतो दक्षिणाग्नेरुत्तरत एवैतान्येव पात्राण्यासादयति । विशेषस्तु महत्कर्परं, मेषी करम्भपात्रनिष्पत्तिपर्याप्ता यवाः । द्व्यहपक्षे उदकूतृणम् ।

उभयोः स्फ्योपहितपात्रीकरणम् । उभयोः शूर्पाग्निहोत्रहवण्यादा-

**नगृह्या एकाधिकानि ॥ ३ ॥ प्रजायां वा जातश्रुतेः ॥४॥ त्रीणि वा नित्यत्वात् ॥ ५ ॥ मेषामिथुनं च ॥ ६ ॥ अनैडकीरूर्णाः प्रक्षाल्याश्लेषयेत्तयोः ॥ ७ ॥ कुशोर्णा वाऽभावे ॥ ८ ॥ आहवनीयस्य पुरस्ताद्वेदी करोति ॥ ९ ॥ प्रादेशोऽन्तरा पृथो वा ॥ १० ॥ रथमात्र्युत्तरा ॥११॥ चतुररत्निर्वा पश्चात्, सप्त प्राची षड्वा, त्रयः पुरस्तात्॥१२॥**

---

नादि सर्वं समन्त्रकम् । प्रतिप्रस्थातुर्यदसाधारणं करम्भपात्रसम्बन्धि कर्म ग्रहणप्रोक्षणविभज्यालम्भप्राणदानासादनालम्भादिकं तत्सर्वं तूष्णीम् । यच्च साधारणं मेष्या सह शूर्पाग्निहोत्रहवण्यादानप्रतपनपात्र्यादिसंस्कारकण्डनपेषणसंयवनादिकं तन्मन्त्रेणैव ।

तत्र प्रथमं प्रतिप्रस्थाता तूष्णीं करम्भपात्रार्थान् यवान् गृह्णाति । यजमानस्य यावन्त्यपत्यानि पुत्रपुत्रीपौत्रप्रपौत्रादीनि तावत्संख्यानि एकाधिकानि करम्भपात्राणि भवन्ति प्रत्येकं तूष्णीम् । चतुर्मुष्टिकग्रहणं, प्रतिग्रहणं शूर्पे निवापः । द्विप्रजाप्रजैकप्रजानां चत्वारि भवन्ति । ततोऽध्वर्युर्मेषार्थं यवान् गृह्णाति, वरुणाय जुष्टमिति ।

ततः प्रतिप्रस्थाता मेष्यर्थं यवान् गृह्णाति मरुद्भ्यो जुष्टमिति । गार्हपत्यस्य पश्चादेवोभयोर्ग्रहणम् । पृथिव्यास्त्वेति सादनं तु दक्षिणाग्नेः पश्चात, तस्यात्र श्रपणत्वात् ।

ततः पवित्रच्छेदनाद्युभयोः । प्रोक्षणीसंस्कारः । अध्वर्योरेव ब्रह्मन् हविषी प्रोक्षिष्यावः इति प्रैषः । ओं ३ प्रोक्षतं यज्ञं देवता वर्द्धयतं युवां नाकस्य० यजमानं च धत्तम् ओं ३ प्रोक्षतमित्यूहः ( २.२.८ )। हरिस्वामिमते वरुणप्रघासेषु क्वचिदप्यूहो न भवति । वरुणाय त्वा जुष्टमित्यध्वर्योर्हविः प्रोक्षणम् । प्रतिस्थाता तूष्णीं करम्भपात्रार्थान्यवान्प्रत्येकं ग्रहणसंख्यया प्रोक्ष्य मेष्यर्थान्प्रोक्षति मरुद्भ्यस्त्वा जुष्टमिति मन्त्रेण । उभयोः पात्रप्रोक्षणम्, असञ्चरे निधानं च ।

कृष्णाजिनादानाद्युभयोः । नात्र कुक्कुटाहननं, अध्वर्युणाऽऽहूतैव पत्नी क्रमेणोभयत्र कण्डनं करोति अग्नीद्वा । शूर्पादानादि तुषनिरसनान्तमुभयोः । फलीकरणं न भवत्येव । स्वयमेवोभयोर्दक्षिणाग्नौ कर्पराधिश्रयणं मन्त्रेण, तत्र नाङ्गाराणां प्राक्करणम्, स्वस्थानस्थेष्वेवाङ्गारेषु ध्रुवमसीति १.१७.) कर्परोपधानं, सव्याङ्गुल्याशून्येऽङ्गारनिधानम्, अभ्यूहनाभावः, घर्मो स्थ विश्वायुष इति ( १.२२ ) मन्त्रेणोभयोर्यवतण्डुला-

**तेषां मध्ये शङ्कुः ॥ १३ ॥ अपारोमिता वा ॥१४॥ स्फ्या-द्यासम्मर्शनात्करोति ॥१५॥ उभयोरेक उत्करः ॥ १६ ॥ अपरेण वेदिं प्रतिप्रस्थातुः सञ्चरः ॥ १७ ॥ उत्तरवेदिं निवपत्युत्तरस्याम् ॥१८॥ शम्यामादाय चात्वालं मिमी-**

---

नामधिश्रयणम् । गार्हपत्यादङ्गारमादाय यथास्वमुभयोर्मन्त्रेण पर्यग्निकरणम् । अङ्गारस्य गार्हपत्ये प्रतिप्रक्षेपः । देवो नः सविता श्रपयतु वर्षिष्ठेऽधि नाक इत्युभयोः ( १.२२ ) कर्परस्याधः श्रपणप्रेरणम् । ईषच्छ्रतान् कृत्वा मा भेष्ट मा संविक्थ्वमित्युभयोरालम्भः ( १.२३ ), उद्वासनम् । पात्र्यामोष्यामिमन्त्रणादि संयवनान्तमुभयोः ।

अध्वर्योर्मेषकरणम् । मेषः सश्रृङ्ग आण्डयुग्मपुंल्लिङ्गयुक्तः । प्रतिप्रस्थातुर्यावद् गृहीतं करम्भपात्रकरणम् , पत्न्या वा । तानि चाङ्गुष्ठपर्वमात्राणि एककृतीनि भाजनाकृतीनि कार्याणि. उत्तानानि च निधेयानि पात्रत्वात् । ततो मेषीकरणम् । मेषी अश्रृङ्गा द्विस्तनी पुच्छस्याधः स्त्रीप्रजननयुक्ता च कार्या । उभावप्यनैडकीरूर्णाः प्रक्षाल्य यथास्वं मेषमेष्योः शरीरे आश्लेषयतः । अनैडकीनामूर्णानामभावे दर्भमञ्जरी तूलानि प्रक्षाल्याश्लेषयतः । करम्भपात्राणां प्रत्येकं तूष्णीमालम्भः । इदं मरुतामिति । मेष्याः पात्र्यङ्गुलिप्रक्षालनस्थापनं, द्व्यहपक्षे ।

ततः शाखाच्छेद उभयोः, प्रगुणीकरणं च । शाखापरिवासनमुभयोः । उपवेषकरणमध्वर्योरेव । पवित्रबन्धनमुभयोः । तत आहवनीयस्य पुरस्ताद् वेदिमानमुभयोः । तत्र ब्रह्मयजमानयोर्दक्षिणवेदि दक्षिणेनोपवेशनम् , तत्राध्वर्योरुत्तरा वेदिः, प्रतिप्रस्थातुर्दक्षिणा । तत्रोत्तरा वेदिश्चतुररत्निः पश्चात्, तिर्यक् षडरत्निः सप्तारत्निर्वा प्राची दीर्घा, त्रिररत्निः पुरस्तात्तिर्यक् । तेषां मध्ये शङ्कुः । एतदेकं प्रमाणम् ।

अथवा चतुःशतमङ्गुलानि पश्चात्तिर्यक् अष्टाशीतिशतमङ्गुलानि प्राची दीर्घा । षडशीत्यङ्गुलानि पुरस्तात्तिर्यक् । अत्रारत्नेश्चतुर्विंशो भागोऽङ्गुलम् । अत्रापि पुरस्तात् प्रमाणमध्ये शङ्कुः । एतद्वेदेर्द्वितीयं प्रमाणम् ।

अथवोक्तमानद्वयोरतिशयेनाधिकप्रमाणा सर्वतो वेदिर्भवति । अयं तृतीयः प्रकारः ।

प्रतिप्रस्थातुर्दर्शपूर्णमासवद्वेदेः प्रमाणे । तत्र प्राचीनप्रवणे गार्हपत्याहवनीयदक्षिणाग्नीनां खराः पूर्ववत् प्रसाध्याहवनीयस्य पुर-

ते पूर्वेणोत्करꣳ सञ्चरं परिहाप्य ॥१९॥ शम्यामुदीचीं निदधाति पुरस्ताच्च ॥ २० ॥ दक्षिणतः प्राचीमुत्तर·

---

स्तात् प्रक्रमत्रयमधिकं वा परित्यज्य ततः पुरस्तादध्वर्योरुत्तरा वेदिः कार्या । तस्याः साधनश्लोकाः षडरत्निप्राचीपक्षे—

"नवारत्निमिता रज्जुर्लक्षिता षट्स्वतः परम् ।

अर्द्धेऽर्द्धे त्रिषु पाशः स्यात्पशुवेदेः प्रसाधनम्" इति साधयित्वा प्रकृतिवत्संग्रहौ साधनीयौ, तस्यां वेदावाहवनीयखरस्थाने समचतुरस्रा द्वात्रिंशदङ्गुलोत्तरवेदिः साधनीया यावत्प्रमाणेत्याद्युपायेन । वेदिसाधने प्रकारान्तरं च—

"द्व्यरत्नौ लक्षणं कुर्यादर्द्धं सार्द्धत्रये तथा ।

अर्द्धारत्नौ ततः सार्द्धे वेदिः सा पाशुकी मते"ति । अयं पाशविपर्यासेन साधनोपायः ।

ततस्तस्या वेदेः प्रादेशमात्रमन्तरालं पृथमात्रं शाखान्तराद् द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं रथवर्त्म सीतावर्त्माद्यन्तरालं परित्यज्य प्रतिप्रस्थातुर्दैक्षिकी वेदिः साधनीया । तन्मध्येऽरत्निमात्रमाहवनीयखरं कुर्यात् ।

अत्र पूर्वमध्वर्युः कर्म करोति तमनु प्रतिप्रस्थाता करोति, समन्त्रकमेव सर्वम् । उभयोर्वेदिमानानन्तरमग्नीदुभयोर्वेद्योः परिसमूहनं करोति । उत्करकरणमुत्तरस्यामेव । उभयोः सतृणवज्रादानादि सतृणपुरीषस्योत्करे प्रक्षेपान्तम् । प्रतिप्रस्थातुरुत्तरामध्वर्युर्वेदिमपरेण उत्करे पुरीषप्रक्षेपार्थः सञ्चरो, नान्यत्र ।

ततोऽध्वर्युरेवाह ब्रह्मन्पूर्वौ परिग्रहौ परिग्रहीष्याव इति । ओं ३ बृहस्पती परिगृह्णीतं वेदी सुगावो देवाः सदनानि सन्त्वनयोर्बर्हिषो प्रथेताꣳ साध्वन्तर्हिꣳस्रे पृथिव्यौ देव्यौ देव्यौ स्तां, देवता वर्द्धयतं युवां नाकस्य० स्तु । सत० यजमानं च धत्तम् ओं परिगृह्णीतमित्यूहः (२. २.१२) । हरिस्वामिमते वरुणप्रघासेषूहाभावः । तत उभयोः पूर्वपरिग्रहः । उभयोर्वेद्यां त्रिरुल्लेखनम् । ततोऽध्वर्युरेव हर त्रिस्त्रिरित्याह । अग्नीदुभयत्र लेखाहरणसंमर्शनानि करोति । पूर्वमध्वर्योः । हृत्वा संमृश्य तत इतरस्य हृत्वा संमृशति । अग्नीध्र उत्तरवेदिं पूर्वेण वेद्योरन्तरा च प्रतिप्रस्थातृवेदौ गमनागमनाय सञ्चरः ।

ततोऽध्वर्युरेव शम्यां स्फ्यं चादायोत्करात्पूर्वदेशे गमनागमनायान्तराले मार्गं मुक्त्वा वेदिसंलग्नं चात्वालं मिमीते । "वेदेरुत्तरतः प्रक्रममात्रे प्रक्रमत्रये वा परिमिते वे"ति शाखान्तरसूत्रेषु । तत्र प्रथमं पश्चादु·

तश्च ॥२१॥ स्फ्येनान्तर्लिखति तप्तायनीति प्रतिमन्त्रम् ॥२२॥ विदेदग्निरिति चात्वाले प्रहरति स्फ्येनान्वारब्धे ॥ २३ ॥ अग्ने अङ्गिर इति पुरीषꣳ हरति ॥२४॥ हस्तेन च ॥२५॥ योऽस्यामिति निवपति पूर्वार्द्धे शङ्कुसहितम् ॥२६॥ अग्नीदुत्करवत्तूष्णीꣳ हृतम् ॥ २७ ॥ एवं द्विरपरं द्वितीयस्यां तृतीयस्यामिति विशेषः ॥ २८ ॥ अनुत्वेति चतुर्थं यथार्थमाहृत्य सिꣳहीरसीति व्यूहत्युत्तरवेदिम् ॥ २९ ॥ शम्यामात्रीं वितृतीयामपरिमितां युग-

दग्रग्रां शम्यां दक्षिणेन हस्तेन निधाय तदन्तरत. तप्तायनीति ( ५.९ ) स्फ्येनादक्संस्थां लेखां परिलिखेत् ।

ततः शम्यामात्रमन्तरालं परित्यज्य पुरस्तादुदगग्रां शम्यां वेदिसंलग्नां निधाय वित्तायनीत्यन्तरतः (५.९) स्फ्येन परिलिखति । ततो दक्षिणपार्श्वे वेद्यन्तसंलग्नां प्रागग्रां शम्यां निधाय तदन्तरतोऽवतान्मा नाथितादिति (५.९) स्फ्येन परिलिखति । तत उत्तरपार्श्वे प्रागग्रां शम्यां निधाय तदन्तरतोऽवतान्मा व्यथितात् इति मन्त्रेण स्फ्येन प्राक्संस्थं परिलिखति । एवं शम्याप्रमाणं चतुष्कोणं चात्वालं परिलिख्य यजमानेऽन्वारब्धे विदेदग्निरिति (५. ९) मन्त्रेण स्फ्येन चात्वाले प्रहारं कुर्यात् । प्रहरणानन्तरमेव विसर्गः । ततोऽध्वर्युर्हस्तेन स्फ्येन च पुरीषमादायाग्ने अङ्गिर इत्युत्तरवेदिं (५. ९) प्रति हरति । हरणे मन्त्रः । ततो योऽस्यामिति (५. ९) मन्त्रेण पूर्वार्द्धशङ्कुसन्निधौ वेदेः पूर्वार्द्धे पुरीषं निवपति । अग्नीत्तं निहितं पुरीषमुत्करवत् पाणिद्वयेन तूष्णीमभिनिदधाति, हस्ताभ्यामधः पीडयतीत्यर्थः । ततः पुनः प्रत्यागत्य यजमानेऽन्वारब्धे विदेदग्निरिति ( ५. ९ ) चात्वाले प्रहृत्य हस्तेन स्फ्येन च पुरीषमादायाग्ने अङ्गिर इति ( ५.९ ) हृत्वा यो द्वितीयस्यामिति वेदिपूर्वार्द्धे निवपति । अग्नीदुत्करवत्तूष्णीमभिन्यस्यति । पुनरप्येवं प्रहरणं हरणं च कृत्वा यस्तृतीयस्यामिति (५.९) निवपति । अग्नीच्चाभिन्यस्यति । ततोऽभ्रिं गृहीत्वाऽध्वर्युश्चात्वालं खनति । ततश्चात्वालादुत्तरवेदिनिर्माणपर्याप्तं पुरीषं पिटकादौ गृहीत्वाऽनुत्वेत्युत्तरवेदिं ( ५. ९ ) प्रति हरति ।

ततो निवापमकृत्वैव तेन पुरीषेणोत्तरवेदिं शम्याप्रमाणां सिंहीꣳसीति ( ५. ९. ) मन्त्रेण कल्पस्वेत्यन्तेन सर्वतः पुरीषं प्रेरयित्वा निष्पादयतीत्यर्थः । द्वात्रिंशदङ्गुला शम्या तन्मात्रीम् । वेदेस्तृतीयांशं क्षेत्र

**मात्रीं यजमानदशपद्यां वा ॥ ३० ॥ सोमे वोत्तरे व्यपस्फुरणश्रुतेरसम्भवाच्च ॥ ३१ ॥ मध्ये नाभिं करोति प्रादेशसमां चतुःस्रक्तिम् ॥३२॥ प्रोक्षत्युत्तरवेदिꣳ सिकताश्च प्रकिरति सिꣳह्यसीति प्रतिमन्त्रम् ॥ ३३ ॥ ३ ॥**

**छन्ना वसति ॥ १ ॥ प्रातः पञ्चगृहीतं गृहीत्वाऽग्नी प्रणयतीध्माभ्यामुपयम्य ॥२॥ सर्वं वा विभज्य प्राकृतत्वात् ॥३॥ प्रणयनꣳ सोमाद्वाच्यत्वात् ॥४॥ प्रकृतेर्वाऽनामत्वात् ॥ ५ ॥ ग्रहणं गुणार्थमुत्तरवेद्यग्निनिधानात् ॥ ६ ॥**

---

फलेन निष्काश्य समचतुरस्त्रीकृतं यावत्प्रमाणं भवति तावतीं वा। उक्तप्रमाणादधिकतरप्रमाणां वा। तत उत्तरवेदिमध्ये प्रादेशमात्रीं समचतुरश्रां नाभिं करोति। उत्तरवेद्या नाभेश्च पूर्वत आरभ्य प्रदक्षिणं शम्यया प्रादेशेन चतुर्ष्वपि पार्श्वेषु मानं कार्यम्। ततो लौकिकोदकेन सिꣳह्यसीति मन्त्रेण (५. ९) शुन्धस्वेत्यन्तेनोत्तरवेदिं प्रोक्षति। ततः सिकता उत्तरवेदौ प्रकिरति सिꣳह्यसीति (५. १०) मन्त्रेण शुम्भस्वेत्यन्तेन। तत उदुम्बरशाखाभिः प्लक्षशाभिर्वा दर्भैर्वा उत्तरवेदिं सकलां छादयेत् ॥३॥

इति पञ्चमस्य तृतीया कण्डिका ॥ ३ ॥

---

सा उत्तरवेदिरेवमाच्छादिता सकलां रात्रिं वसति। ततो रात्रौ स्वयमेवाग्निहोत्रहोमः। पूर्वपरिवासितया शाखया पयस्यार्थं वत्सापाकरणमुभयोः। वरुणाय भागमित्यध्वर्योः। मरुद्भ्यो भागमिति प्रतिप्रस्थातुः। उभयोः शाखोपगूहनम्। ततः प्रातःकालेऽहतवस्त्रपरिधानम्। तत अष्टाविंशतिप्रभृतिकाष्ठकमिध्मं त्रियूनबद्धमध्वर्युराहवनीयेऽधिश्रयति। प्रतिप्रस्थाता चैवंविधमेव दक्षिणतो द्वितीयमाहवनीय एवाधिश्रयति। उभयोश्चात्वालादाहृत्योपयमनीनामुपकल्पनम्।

ततोऽध्वर्युराज्यस्थाल्यां तूष्णीमाज्यं निरुप्य गार्हपत्येऽधिश्रित्य, स्रुवं दभरन्तरतो बाह्यतश्च सम्मृज्य जुहूमपि तथैव सम्मृज्याज्यमुद्वास्य पवित्राभ्यामुत्पूय जुह्वां पञ्चगृहीतं गृहीत्वा कस्यचिद्धस्ते धारणार्थं समर्पयेत्। देवदारुपरिधित्रयग्गुलुरोहिष(१)पुष्पमेषशिरोरोमाण्यपि कस्यचिद्धस्ते समर्पयेत्। एकस्मिन् पूर्णपात्रे प्रोक्षणार्थं लौकिकमुदकं च कृत्वा तदपि कस्यचिद्धस्ते समर्पयेत्।

---

( १ ) 'ह्रीष' इति क पुस्तकपाठः।

आज्यप्रोक्षणीरुद्यम्याग्नी चाहाग्निभ्यां प्रह्रियमाणाभ्या- मनुब्रूह्येकस्फ्ययाऽनूदेहीति ॥ ७ ॥ त्रिरुक्तायां यथावे- दि हरणम् ॥८॥ प्रतिप्रस्थाता स्फ्येन लिखत्यावेदि श्रोणे- रुत्तरवेदेर्वा ॥९॥ वेद्यन्तरे स्थित्वोदङ्ङुत्तरवेदिं प्रोक्षती- न्द्रघोषस्त्वेति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् ॥१०॥ द- क्षिणांऽसंसहितं बहिर्वेदि शेषं निषिञ्चतीदमहं तप्तं वारि- त्यमुमित्यभिचरन् ॥११॥ नाभ्याः श्रोण्यंऽसेषु पञ्चगृहीतं जुहोत्यक्ष्णया दक्षिणेऽंसे श्रोण्यांऽ श्रोण्यामंऽसे मध्ये

ततः प्रदीप्ताविध्मौ यथास्वमुद्यम्योपयमनीभिः सिकताभिर्मृद्भिर्वा युक्तं कर्परादिकमग्न्योरधस्ताद्धारयति दाहनिवारणाय । एवमाज्यप्रो- क्षणीरग्नी चोद्यम्याध्वर्युरेव होतारं प्रत्याह—अग्निभ्यां प्रह्रियमाणाभ्याम- नुब्रूहि इति । तत एकस्फ्ययाऽनूदेहीति प्रतिस्थातारं प्रेष्यति ।

ततो होत्रा प्रदेवं देव्येत्यस्यां(१) प्रथमायामृचि त्रिः पठितायां स- त्यामध्वर्युः स्ववेदिं प्रति स्वमग्निं हरति, प्रतिप्रस्थाता च स्ववेदिं प्रति स्वमग्निं हरति । उभौ स्वस्ववेदी उत्तरेण गच्छतः ।

ततः प्रतिप्रस्थाता स्वाग्निं हरन्नेव सव्यहस्ते कृत्वा आहवनीयखर- रादारभ्याध्वर्युवेदिमध्यं यावत् स्फ्येन लेखां करोति, अथवोत्तरवेदिं यावत्, उत्तरस्या वेदेर्दक्षिणांसं यावद् वा इति त्रयो विकल्पाः ।

ततोऽध्वर्युरुत्तरवेदिसमीपे गत्वा विरोधादसामर्थ्यादग्निमन्यस्मै प्र- दायान्यहस्तात् पूर्णपात्रादिस्थं प्रोक्षण्युदकमादायोत्तरवेदेर्दक्षिणतो वे- दिमध्ये उत्तराभिमुखः स्थित्वा इन्द्रघोषस्त्वा वसुभिरिति ( ५. ११ ) मन्त्रेण तेन लौकिकेन प्रोक्षण्युदकेन पूर्वभागे उत्तरवेदिं प्रोक्षति । ततः प्रचेतास्त्वेति पश्चात्प्रोक्षति । मनोजवास्त्वेति दक्षिणतः प्रोक्षति । ततो विश्वकर्मा त्वेत्युत्तरतः प्रोक्षति । तत उत्तरवेदेर्दक्षिणांससंलग्नं बहि- र्वेदि इदमहमिति ( ५. ११ ) प्रोक्षणीशेषं निनयति । अभिचरत इदमहं तप्तं वारमुं वैरिणमभि निःसृजामीति मन्त्रे विशेषः । अमुमित्यत्र शत्रो- र्नामग्रहणम् । तत उदकस्पर्शः । अभिचाराभावे उदकोपस्पर्शनाभावः ।

तत उत्तरत उपविश्य दक्षिणं जान्वाच्य नाभिं दर्भैः परिस्तीर्य यत्र क्वचन स्थितं हिरण्यं विलोकयन्नाभ्याः श्रोण्योरंसयोर्मध्ये च पञ्चसु-

( १ ) शाङ्खा० श्रौ० ३. १४ ।

थ हिरण्यं पश्यन्त्सिᳬह्यसीति प्रतिमन्त्रम् ॥१२॥ भूतेभ्य-स्त्वेति स्रुचमुद्यच्छाति ॥१३॥ नाभिं पैतुदारवैः परिदधाति पूर्ववद् ध्रुवोऽसीति प्रतिमन्त्रम् ॥१४॥ अग्नेः पुरीषमिति निवपति गुग्गुलु–सुगन्धितेजन–वृष्णेस्तुकाश्चोपरि शीर्षण्या अभावेऽन्याः ॥ १५ ॥ तेष्वग्निं निदधा-

---

स्थानेषु पञ्चगृहीतमाज्यं कुशोपग्रहो ऽध्वर्युर्जुहोति सिᳬह्यसीति (५.१२) नाभेराग्नेयकोणे। इदᳬ० सिᳬह्यै। सिᳬह्यस्यादित्यवनिः स्वाहा, उत्तरश्रोण्याम्। इदᳬ० सिᳬह्या आदित्यवन्यै॥२॥ सिᳬह्यसि ब्रह्मवनिरिति दक्षिणश्रोण्यौ। इदᳬ० सिᳬह्यै ब्रह्मवन्यै क्षत्रवन्यै ॥ ३ ॥ सिᳬह्यसि सुप्रजावनिरित्युत्तरेऽसे जुहोति, इदᳬ० सिᳬह्यन्यै रायस्पोषवन्यै ॥ ४ ॥ सिᳬह्यस्यावहेति नाभिमध्ये जुहोति। इदᳬ सिᳬह्यै ॥५॥ ततो होमार्थं नीचैः कृतां स्रुचमुर्ध्वां करोति भूतेभ्यस्त्वेति ( ५. १२ )।

ततो नाभिं प्रादेशमात्रैर्देवदारुपरिधिभिः परिदधाति। ध्रुवोऽसीति पश्चात् (५.१३)। ध्रुवक्षिदसीति दक्षिणतः। अच्युतक्षिदसीत्युत्तरतः। ततो ऽग्नेःपुरीषमसीति ( ५. १३ ) मन्त्रेण गुग्गुलुसुगन्धितेजनवृष्णेस्तुकानां नाभेरुपरि मध्ये निधानम्। सुगन्धितेजनं रोहिषपुष्पाणि। वृष्णेस्तुका मेषरोमाणि। ताश्च मेषस्य शृङ्गान्तराले वर्त्तमाना मस्तकाद् ग्राह्याः। तदभावे ऽन्यस्मात् प्रदेशात्। ततस्तेषु सम्भारेष्वग्निं स्थापयति। उपयमनीरग्निसन्निधावेवोत्तरत उत्तरवेदावेव निवपति। प्रतिप्रस्थाता ऽप्याहवनीयखरे पञ्च भूसंस्कारान् कृत्वा पुनरुल्लेखनाभ्युक्षणे चाधिके कृत्वा तत्राग्निं स्थापयति। अग्निसन्निधौ खरस्योपर्येवोपयमनीर्निवपति।

“सद्यस्काला वा वरुणप्रघासा भवन्ती”ति आपस्तम्बवचनात्स्वशाखोक्तद्व्यहकालतासम्भवाभावे सद्यस्काला यदा क्रियन्ते तदा पूर्वेद्युः करम्भपात्रमेषमेषीकरणान्तं कृत्वा वज्रप्रोक्षण्यादिकं सुगुप्ते देशे निधाय प्रातरहतवस्त्रपरिधानादि। अध्वर्युप्रतिप्रस्थात्रोः शाखाच्छेदनादि उपगूहनान्तम्।

ततो यजमान वाचं यच्छेति प्रैषः। अध्वर्योस्तृणशम्ययोरासादनम्। प्रतिप्रस्थातुस्तृणस्य। पूर्वसंस्कृतप्रोक्षणीभिर्दैव्यायेत्युभयोः प्रोक्षणम्। तृणाग्रहणम्। ततो वेदिमानाद्युपयमन्युपनिवपनान्तमिति विशेषः। अत्र कर्कमते पूर्वेद्युः समारोपाद्यकृत्वैव करम्भपात्रकरणार्थमेव

**ति ॥१६॥ उद्धृतावोक्षिते दक्षिणम् ॥१७॥ उपयमनी-रुपनिवपति ॥१८॥ प्रणीताश्चतः ॥१९॥ व्रतोपायनं वाऽकृतं चेत् ॥२०॥ नित्येभ्योऽधिकान्यैन्द्राग्नः, पयस्ये वारुणी मारुती, काय एककपालः ॥२१॥ नानाऽऽज्यनिर्वपण-**

---

केवलं दक्षिणाग्निमुद्धृत्याध्वर्योस्तूष्णीं करम्भपात्रकरणं निधानान्तम् । उदकेनैव संयवनम् । नेदानीं मेषमेष्योः करणम् ।

तदन्ते दक्षिणाग्निर्लौकिकः । प्रातः समारोपः केवलस्य गार्हपत्यस्य । ततो मन्थनम् । नोद्धरणम् । ब्रह्मवरणम् । प्रणीताप्रणयनम् । पञ्चकासादनाद्युपयमन्युपनिवपनान्तं कृत्वा दक्षिणाग्निमुद्धृत्याग्न्यन्वाधानशाखाच्छेदपरिस्तरणपात्रासादनादि । ऐन्द्राग्नानन्तरमध्वर्योर्मन्त्रेण मेषार्थं-यवग्रहणम् । तमनु प्रतिप्रस्थातुर्मेष्यर्थं यवग्रहणम् । इतरहविर्भिः सहैव कण्डन-पेषण-संयवन-मेषमेषीकरणो-र्णाश्लेषणानि कृत्वा श्रपणकाले कुम्भ्योरुदकमध्येऽवधाय श्रपणमिति विशेषः । मेषमेष्योर्यागसाधनत्वमेव कर्कमते शाखान्तरीयसर्वसूत्रेषु च । हरिस्वामिश्रीअनन्तयाज्ञिकमते च होमसाधनत्वम्(१) । उभयमतेऽपि मेषकर्तृत्वमध्वर्योरेव युज्यते मेषीकर्तृत्वं च प्रतिप्रस्थातुरेव ।

समन्त्रकमात्रे विशेषः(२) । शाखान्तरीयस्पष्टवचनात्करम्भकर्तृत्व-मपि प्रतिप्रस्थातुः, पत्न्या वा । करम्भपात्राणां च निःसन्दिग्धं होमसाधनत्वमेव । तेन तेषां सर्वं तूष्णीमेव । तत्रापि जुहोतीनामपूर्वत्वपक्षाश्रयणे निर्वपणवितुषीकरणप्रक्षालनपेषणसंयवनानि कृत्वा पात्राणि कार्याणि प्रतिप्रस्थात्रा पत्न्या वा नाध्वर्युणापात्रनिर्वापे प्रतिप्रस्थातुः कर्तृत्वम् । पात्रकरणे तु "पत्न्या" इत्यापस्तम्बः ।

तन्मते पात्रघटनमात्रं पत्न्याः नाधिकम् । तत्र पयस्यया सह प्रदाने मेषमेष्योरपि यागसाधनत्वमेव युज्यते । अन्यथैकस्यैव वारुणयागस्य यागत्वं होमत्वं चेत्युभयरूपतापत्तेः ।

अत्राहापस्तम्बः—"एतस्मिन्काले प्रतिप्रस्थाता तूष्णीं करम्भार्थान्यवान्निर्वपति । यजुषाऽध्वर्युर्मेषार्थान्प्रतिप्रस्थाता तयोरामिक्षावद् देवतमामपेषाणां पत्नी करम्भपात्राणि करोति । यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त्येकातिरिक्तान्यामपेषाणां मेषप्रतिकृती भवतो मेषमध्वर्युः करोति मेषीं प्रतिप्रस्थाता स्त्रियाः स्त्रीव्यञ्जनानि पुंसः पुंव्यञ्जनान्यपि

---

(१) ९.३ ८ । (२) १.२ ९ ।

वा पूर्वेद्युरन्वाहार्यपचने विदुषा निवपनान्तं कृत्वा तेषामीषदुपपन्नानां पत्नीकरम्भपात्राणि करोत्यत्रापि मेषञ्च मेषीञ्च कुर्वन्तीति वाजसनेयकमैन्द्राग्नपर्यन्तानाधिश्रित्यैकादशसु कपालेषु मेषीमधिश्रयति अष्टासु मेषं कुम्भीपाक्यौ वा भवत इति(१)।

काठके—"यावन्तो यजमानस्य पुत्रपौत्रा यजमानः पत्नी च प्रतिपिष्टे एकमधिकश्टङ्गिणं मेषमश्टङ्गां मेषीं शुक्लोर्णाभिरावेष्टये"ति(२)।

मानवे—उत्तरतो गार्हपत्यस्य प्रतिप्रस्थाता आमयवपिष्टानां दध्नाकरम्भपात्राणि करोत्यङ्गुष्ठपर्वमात्राण्येकादूर्ध्वनिमेषं कृत्वा मेषीञ्च करोति। यावन्ति पुँल्लिङ्गानि शक्यन्ते स्त्रीलिङ्गानि मेष्याः प्रतिप्रस्थाता प्रत्तालयोर्णाः श्लेषयत" इति।

अथ प्रकृतमुच्यते—उपयमनीनां निवपानन्तरमध्वर्युः प्रणीतार्थमासनद्वयमुपकल्प्य प्रणीताप्रणयनं करोति। ब्रह्मवरणोत्तरकालं ततः प्राग्वा व्रतग्रहणमकृतश्चेदत्र प्रणीताप्रणयनात्पूर्वं यजमानः करोति। प्रतिप्रस्थातुः प्रणीतापत्नीसन्नहनादीनां सूत्रोक्तानामभावः। तद्वर्जितं सर्वमध्वर्युकरणानन्तरं समन्त्रकमेवं करोति। अध्वर्योर्मध्यमाहवनीयवर्जं त्रयाणामग्नीनां परिस्तरणम्। प्रतिप्रस्थातुः स्वाहवनीयस्यैव।

अध्वर्योः पात्रासादनम्। शूर्पः, कपालानि त्रयस्त्रिंशदेकोनत्रिंशद्वा। स्थाल्यस्तिस्रः, शम्याकृष्णाजिनम्, उलूखलमुसले, दृषदुपलम्, पात्रीधान्यं, शाखोपवेषः, वज्राग्निहोत्रहवणी, पवित्राणि पूर्वमेवासादित प्रोक्षितानि विद्यन्ते, तेन नात्र पुनरासाद्यन्ते। संयवनोदकम्। स्थाली आज्यं च, वेदश्च। दोहनचतुष्टयम्। दक्षिणार्थे धेनुर्वा अश्वो वा। षड् वा गावो द्वादश वा, अग्निः विंशतिकाष्ठक इध्मः कुशप्रस्वः प्रस्तरोपसन्नद्धं त्रेधा बर्हिः स्रुवो जुहूः उपभृद्द्वयम्। एका ध्रुवा। संमार्गार्हाणि यानि चेत्यत्र प्राशित्रहरणे, श्टतावदानमेक्षणे। वाजिनभाण्डम्। चतस्रः पुरोडाशपात्र्यः। योक्त्रम्। पृषदाज्यार्थं दधि। यूनकुशाः, पक्षे परिधयः। शमीपत्रमय्याणि करीराणि। मन्थनचतुष्टयम्। कुशास्तृतं पीठम्, इडापात्री। षडवत्तं च। अन्तर्द्धानकटः, पूर्णपात्रम्। पक्षे कर्मापवर्गा समिदिति। क्षुरचतुष्टयं वा।

प्रतिप्रस्थातुः पात्रासादनमुच्यते—स्फयाग्निहोत्रहवणी, पवित्राणि सन्त्येव। शेषमासाद्यते। तद्यथा-स्थाली आज्यं च वेदश्च। दोहनचतुष्टयम्, अग्निः। इध्मो वशतिकाष्ठकः, बर्हिः प्राकृतमेव न त्रेधा। स्रुवो जुहूः क-

---

(१) १.२.५.७। (२) ९.३.६।

रम्भपात्रहोमार्यमैषीकं शूर्पम् । अर्थपरिमाणदीर्घा एका करम्भपात्री च, उपभृत् ध्रुवा च, शृतावदानम् । यूनकुशाश्च । परिधयः, वाजिनभाण्डम् । शमीपलाशमिश्राणि करीराणि । पक्षे पृषदाज्योपभृत । पृषदाज्यार्थं दधि ।

ततोऽध्वर्युः पात्रीमपरेण गार्हपत्यं प्रागग्रां निधायाधस्तादुदञ्चं स्फ्यं प्रेरयति । ततः पात्रान्तरे प्रोक्षणीरुन्नीय शूर्पाग्निहोत्रहवण्यादानादि । नानाबीजधर्माश्चरुधर्माश्च वैश्वदेवपर्वण्युक्ता एव । तेनात्र विशेषमात्रं लिख्यते ।

ग्रहणे—अग्नये जुष्टम् , सोमाय जुष्टम् , सवित्रे जुष्टम् , सरस्वत्यै जुष्टम् , पूष्णे जुष्टम् , इन्द्राग्निभ्यां जुष्टम् , काय जुष्टम् इति । प्रोक्षण्यः संस्कृता एव सन्त्युभयोरपि । पात्रान्तरात्प्रोक्षणीरग्निहोत्रहवण्यां कृत्वा हविःप्रोक्षणम् । तत्र चतुर्थ्यन्तदेवतापदोच्चारणानन्तरं त्वा जुष्टम् इति विशेषः । उभयोः पात्रप्रोक्षणादि ।

ततः कृष्णाजिनादानादि । अध्वर्युतन्त्र एव कुक्कुटाहननम् । कणान्ते विभज्यालम्भो व्रीहिमयपुडाशपक्षे । इदमग्नेः सवितुः पूष्ण इन्द्राग्न्योः कस्य च । इदठं० सोमस्य सरस्वत्याश्च । अग्नीधः कपालोपधाने आग्नेयस्याष्टौ सवितुर्द्वादशाष्टौ वा । ऐन्द्राग्नस्य द्वादश, कस्यैकम् । तस्मिंस्तथ्यस्वेत्यूहः । पूर्वमध्वर्योराज्यं निरुप्य ततः प्रतिप्रस्थातुराज्यं निर्वपेत् । एवमेव क्रमेण वेदौ करोति । प्रोहणान्तेऽध्वर्योर्वारुणीपयस्यार्थमुपसृष्टादि परिक्षालनान्तो दोहः ।

ततः प्रतिप्रस्थातुर्मारुत्यर्थमुपसृष्टादि परिक्षालनान्तो दोहः । तत उपसृष्टां प्रब्रूतादित्यादीन् प्रैषान् प्रतिप्रस्थातैव ब्रूयात् इत्यापस्तम्बसूत्रे । तत ईक्षणं पिष्टानां तण्डुलानां च । ईषणान्ते पौष्णविवेकः । तत्र इदमग्नेः संवितुरिन्द्राग्न्योः कस्य च । इदं पूष्णः । चर्वोर्विभज्यालम्भः—इदं सोमस्य, इदठं० सरस्वत्याः । ततो यथाक्रमं संवापः । संयवनान्तरं विभज्यालम्भे इदमग्नेः, इदं सवितुः, इदमिन्द्राग्न्यो, इदं कस्येति । यथाक्रममधिश्रयणम् । अग्नीदध्वर्योराज्यमधिश्रित्य दक्षिणतः प्रतिप्रस्थातुरधिश्रयति । ऐन्द्राग्नादुत्तरं वारुण्याः पयस्यायाः स्थानम् । तदनन्तरं मारुत्याः प्रतिप्रस्थातुराज्याद्दक्षिणतः, तदुत्तरं कायस्येति सम्प्रदायः ।

पयस्ये वर्जयित्वा पर्यग्निकरणम् । यथाक्रमं श्रपणमुभयोः । तप्ते पयसि दधिप्रक्षेप उभयोः । शृतालम्भनम् । पुरोडाशानामभिवासनम् । पात्र्यङ्गुलिप्रक्षालनस्थापनपक्षे पूर्वस्थापितपात्र्यङ्गुलिप्रक्षालनेन सहोभयोः पृथगाप्योदकनिनयनम् । ततोऽग्निमादाय वेदिखननमुभयोः ।

ततो ऽध्वर्योरेव ब्रह्मन्नुत्तरौ परिग्रहौ परिग्रहीष्याव इति प्रैषः। ब्रह्मणः पूर्वपरिग्रहवदूहः। हरिस्वामिमते ऊहाभावः। परिगृह्णीतमित्यनुज्ञातौ उत्तरं परिग्रहं कुरुतः। दक्षिणतः पुरीषमुद्धृत्य प्रत्यक्संस्थमनुमार्जनमभयोः। अग्नीदध्वर्योः प्रोक्षणीर्धारयति। प्रतिप्रस्थाता च इतरस्यैव। ततोऽध्वर्युः स्फ्यमग्रस्य प्रेष्यति—तत्रोहः—प्रोक्षणीरासादयेध्मौ बर्हिषी उपसादय स्रुचः संमृड्ढि पत्नीᳬ सन्नह्याज्याभ्यामुदेहीति। स्फ्योदक (१)हार उत्करे उभयोः। अग्नीदुभयत्र प्रोक्षणीरासादयति। प्रतिप्रस्थातुर्देशे स्फ्येध्मबर्हिषां सादनं प्रणीताभावेऽपि।

ततः पात्रसंमार्गः। उभयोर्वेद्योस्तृणाग्राणि मूलानि च गृहीत्वा पृथक्पृथक् स्थापयति। यथास्वं तृणैरुभयोः पात्राणि सम्मार्ष्टि। पूर्वमध्वर्योः स्रुवम्। ततः प्रतिप्रस्थातुः स्रुवम्। पूर्वमध्वर्योर्जुहूं, ततः प्रतिप्रस्थातुर्जुहूम्। तूष्णीं शूर्पं च। ततो ऽध्वर्योरुपभृतं पृषदाज्योपभृतं च। ततः प्रतिप्रस्थातुरुपभृतं पक्षे पृषदाज्योपभृतं च। ततो ऽध्वर्योर्ध्रुवाम्, ततः प्रतिप्रस्थातुर्ध्रुवाम्। ततस्तूष्णीं प्राशित्रहरणे शृतावदानं मेक्षणं चाध्वर्योः। ततः प्रतिप्रस्थातुः शृतावदानस्य। ततः करम्भपात्र्याश्च। ततो वाजिनभाण्डस्याध्वर्योः। ततः प्रतिप्रस्थातुर्वाजिनभाण्डस्य। ततः पुरोडाशपात्रीणाम्। ततः सम्मार्जनान्युत्करे निरस्यति। आहवनीये प्रासनपक्षे यथास्वं प्रासनम्।

ततः पत्नीसन्नहनम्। आज्ये उद्वास्य पत्न्याज्ये ऽवेक्षस्वेति प्रैषेण द्वे अप्याज्ये प्रदर्श्य यथास्वं वेद्योरासादयति। ततोऽध्वर्युराज्यमुत्पूय प्रोक्षणीश्चोत्पूयाज्यमवेक्षते। ईक्षणान्ते पृषदाज्यार्थं दधि स्थाल्यन्तरे प्रक्षिप्य दधन्येवाज्यं प्रक्षिपेत। "दधन्याज्यमानीये"त्यापस्तम्बवचनात्।

ततो जुह्वामुपभृति च चतुर्गृहीतं गृहीत्वा पृषदाज्योपभृति पञ्चगृहीतं गृह्णीयात्। ज्योतिरसि विश्वरूपं विश्वेषां देवानाᳬ समिदित्यनेन। अत्रापि सकृन्मन्त्रस्त्रिर्वा इति कर्कः। अपूर्वस्यैव मन्त्रस्य सङ्ख्यायाश्च विधानात्पञ्चकृत्वोऽपि भवतीति याज्ञिकः। ध्रुवायां चतुर्गृहीतमेव। प्रतिप्रस्थातुराज्योत्पवनादि प्राकृतमेवाज्यग्रहणम्। पृषदाज्यपक्षेऽध्वर्युवत्।

उभयोरिध्मविस्रंसनादि। ब्रह्मन्निध्मौ प्रोक्षिष्याव इत्यध्वर्योरेव प्रैषः। ब्रह्मा च प्रोक्षतं यज्ञं देवता वर्द्धयतं युवां नाकस्य० यजमानं च धत्तम्। ओं प्रोक्षतमित्यूहितेन मन्त्रेणानुजानाति। यथास्वमिध्म वेद्योः प्रोक्षणम्। उभयोर्बर्हिःसमर्पणम्। प्रगृह्य वेद्यां प्रागग्रन्थ्यासादनम्। ब्रह्मन्

---

(१) स्फ्योदकप्रहारोऽध्वर्योरेवेति भाष्ये स्पष्ट

म् ॥२२॥ दक्षिणं प्रतिप्रस्थातुः ॥ २३॥ ध्रुवायाः पुरस्तात्पृषदाज्यमाज्यं दीधीमंश्च पञ्चगृहीतं ज्योतिरसीति समिदन्तेन ॥२४॥ अनुयाजार्थं सर्वत्र ॥२५॥ औपभृतासादनम् ॥२६॥ प्रियेण धाम्नेति वाऽविशेषोपदेशात् ॥२७॥ उत्तरं वाऽपरकालत्वात् ॥ २८ ॥ प्रतिप्रस्थाता च ॥२९॥ न वा ॥३०॥ प्रणीतापत्नीसन्नहनाग्निमन्थनाश्रुतप्रत्याश्रुतप्रैषयजमानवाचनहोतृषदनवरणप्राशित्राङ्गुलिपर्वाञ्जनावान्तरेडाभागापराग्न्यवभृथान्न प्रतिप्रस्थाता ॥३१॥ कृतानुकरोऽन्यत्र दक्षिणस्याम् ॥ ३२ ॥ वाजिने निषिच्य ॥३३॥ ॥४॥

उभयोः करीराण्यावपति शमीपलाशमिश्राणि ॥१॥ मेषमिथुनं च ॥२॥ मारुत्यां मेषम् ॥ ३ ॥ सर्वाणि हवींषि

---

बर्हिषी प्रोक्षिष्याव इति प्रैषः । बर्हिषः प्रोक्षणमुभयोः । मूलावसेक उभयोः । पवित्रयोः कृतचिह्नयोः प्रणीतासु स्थापनमुभयोः । चत्वार्यपि सन्नहनानि विस्रंस्य श्रोणौ निधेयानि ।

पञ्चधातुभिः सप्तधातुभिर्वा वेदिं स्तृणीयादध्वर्युः । प्रतिप्रस्थाता च प्रकृतिवत् । तत इध्मात्समिधमादायोभयोः प्रस्तरादानादि प्रस्तराभिन्यासान्तम् । प्रतिप्रस्थाता जुहूमासाद्य दक्षिणवेदौ तूष्णीं शूर्पमासादयति प्रस्तर एव प्रतिग्रहपूर्वकं च । अग्नीदुभाभ्यां स्रुचोऽर्पयति । उपभृदनन्तरं तद्वदेव पृषदाज्योपभृतमासादयति । "उपभृद्वत्पृषदाज्यधानीमि" त्यापस्तंबवचनात् ।

ततो ध्रुवासादनान्तमुभयोः । ततः पुरोडाशानां विभस्मीकरणम् । प्रतिप्रस्थातुः करम्भपात्र्याः स्थापनम् । वाजिनपात्रस्य स्थापनमुभयोः । पुरोडाशपात्राणां स्थापनमध्वर्योः । एकस्यामेव करम्भपात्र्यां करम्भपात्रसंख्यस्थानेषूपस्तारः । यथास्वं वाजिनपात्रयोः पुरोडाशपात्रीषु च । ततस्तत्रस्थाभिघारमदत्वा वा वाजिननिषेक उभयोर्यथास्वम् ॥ ४ ॥

इति पञ्चमस्य चतुर्थी कण्डिका ॥ ४ ॥

ततो यथास्वमुभयोः पयस्ययोः करीरावापः । ततः शमीपत्राणां च । यथास्वं मेषमिथुनस्य च । अध्वर्युर्मारुत्यामुपस्तीर्य मेषमवदधाति ।

**ष्युत्तरस्यामासादयति मारुतीᳯ सहाज्यां प्रतिप्रस्थाता दक्षिणस्याम् ॥ ४ ॥ सम्मार्जनाय प्रेषिते ऽसंमृष्टे प्रतिप्रस्थाता पत्नीमानेष्यन्नाह केन चरसीति ॥ ५ ॥ सᳯस्तुतानाचष्टे ॥६॥ तृणानि वोद्गृह्णाति प्रतिसᳯस्तुतम् ॥ ७ ॥**

---

प्रतिप्रस्थाता वारुणमुपस्तीर्य मेषीमवद्याति । प्रतिप्रस्थातुः करम्भपात्राणामभिघारः । अध्वर्योराग्नेयादीनामभिघारः । यथास्वं पयस्ययार्वाजिनयोश्च । ततो यथाक्रमं यथास्वं हवींष्युद्वास्य कपालानि गणयित्वा प्राणदानं कुर्यात् । पूर्वं तूष्णीं करम्भपात्राणां प्रत्येकं प्राणदानं प्रतिप्रस्थाता करोति । ततोऽध्वर्युराग्नेयादीनां प्राणदानं करोति अग्निं गच्छ, सोमं ग० सवितारं ग० सरस्वतीं ग० पूषणं ग० इन्द्राग्नी ग० वरुणं ग० । पयस्याञ्जनानन्तरमध्वर्युर्मेषस्य प्राणदानं करोति वरुणं गच्छेति । ततो मरुतो गच्छेत्युक्त्वा प्रतिप्रस्थाता स्वपयस्यायाः प्राणदानं कृत्वा अनेनैव मन्त्रेण मेषीमनक्ति । ततः कं गच्छेत्येककपालस्याध्वर्युः । ततः कायस्य घृतेनान्ताच्छादनम् । ततो वाजिनं गच्छेत्युभयोर्वाजिनस्याञ्जनम् ।

कपालाञ्जनाद्यात्मालम्भनान्ते विशेषः अध्वर्युरुत्तरस्यां वेदावाज्यस्थाल्यादीनि सर्वाणि हवींष्यासादयति । प्रतिप्रस्थाता च स्वाज्यस्थालीमासाद्य करम्भपात्राण्यासादयति ततो मारुतीम् । मेषमेष्योः समन्त्रककरणपक्षे प्रियाभ्यां धामभ्यां प्रियᳯ० सद आसीदतमित्यूहितेन मन्त्रेण पयस्ययोर्यथास्वमासादनम् । काले यथास्वं मेषमेष्योरालम्भः ।

तत उभावुत्करे वाजिनयोरासादनं कुरुतः । ततो ध्रुवा असदन्निति वाजिनान्तानामालम्भः । प्रतिप्रस्थाता आज्यस्थालीस्थमाज्यमालभ्य करम्भपात्राण्यालभते । ततो जौहवादीनि वाजिनान्तानि । तत आत्मालम्भोदकालम्भावुभयोः । ततोऽध्वर्योरेव शकलादानादि अग्नावग्निरिति होमान्तमग्निमन्थम् ।

ततो होतृषदनस्थापनमुत्तरस्या वेदेः पश्चात् । ततो होतुरामन्त्रणम् । इध्मात्समिदादानमुभयोः । अध्वर्योरेवाग्निभ्यां समिध्यमानाभ्यामनुब्रूहीति प्रैषः । सप्तदशनेत्यववाधनम् । उभयोः प्रातप्रणवमिध्मप्रक्षेपः । समित्परिशेषणमुभयोः । आहवनीयोपवाजनं पूर्वाघारश्चोभयोः । सम्मार्गप्रैषोऽध्वर्योरेव अग्नी अग्नीत् संमृड्ढीति ।

ततः समार्गं अकृत एव प्रतिप्रस्थाता पत्नीसमीपे गत्वा पत्नीं पृच्छति केन चरसीति । स्वभर्तृव्यतिरिक्तेन केन पुंसा सह त्वं मैथुनसुख-

**अनाख्यातमहित ज्ञातिभ्य इति श्रुतेः ॥ ८ ॥ आख्याते प्रघासिन इत्येनां वाचयति नयन् ॥९॥ करम्भपात्राणि जुहोति शूर्पेण मूर्द्धनि कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखी जायापती वा दक्षिणेनाहृत्य तीर्थेन पूर्वेण वेदिमपरेण वा यद् ग्राम इति ॥१०॥ मोषूण इति यजमानो जपति ॥११॥अक्रन्कर्मेत्येनां वाचयति प्रतिनयन् ॥ १२ ॥ आगते**

---

मनुभवसीति प्रश्नार्थः। सा प्रत्याह अमुकनामुकेनेति। यदि लज्जया जारस्य नाम न गृह्णाति तदा प्रतिजारम् एकैकं तृणं हस्तेन गृह्णाति। जारश्चेन्न भवति तदा भर्तृव्यतिरिक्तेन न केनापि चरामीति कथयति। पत्न्या प्रतिवचने कृते प्रतिप्रस्थाता पत्नीमुत्थाप्य स्वाहवनीयं प्रति नयन् प्रघासिन इत्यमुं मन्त्रं वाचयति :

ततः प्रतिप्रस्थाता स्वाया ध्रुवायाः शूर्प उपस्तीर्य सर्वाणि करम्भपात्राण्यवधाय ध्रुवाया एवोपरिष्टाद् द्विरभिघार्य पत्नीहस्ते समर्पयति। सा च शूर्पं मूर्द्धनि निदधाति। जुहोतीनामपूर्वस्यपक्षाश्रयणे उपस्तीराद्यभावः। यथाश्रुतमेव तदा कर्तव्यम्।

ततः प्रतिप्रस्थात्रा वाहुगृहीता पत्नी ब्रह्मयजमानयोरुत्तरतोऽग्नेश्च दक्षिणत इत्येवमन्तरालमार्गेण नीत्वा स्वयं च ब्रह्मयजमानयोर्दक्षिणतो गत्वा द्वयोरप्याहवनीययोः पूर्वमार्गेण नीत्वा चात्वालोत्करयोरन्तरालेन वेदिमध्ये प्रवेश्य चात्वालवेद्योरन्तरालेन पूर्वेणोत्तरवेदिं गत्वा, अथवा तीर्थेन प्रवेश्योत्तरां वेदिमपरेण वेद्योरन्तरालेन प्राङ् नीत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखो तिष्ठन्ती शूर्पमवतार्य हस्तेनादाय यद् ग्रामे यदरण्य इति मन्त्रेण शूर्पेणैव जुहोति। अथ जायापती प्रत्यङ्मुखौ तिष्ठन्तौ अनेनैव मन्त्रेण जुहुतो नैकाकिनी पत्नी। "मूर्द्धस्थितेनैव शूर्पेण होम" इति मन्त्रापस्तम्बौ(१)। इदं प्रघासिभ्यो मरुद्भ्यो रिशादोभ्यः करम्भेण सजोषोभ्यः इति त्यागो मन्त्रवर्णात। इदं मरुद्भ्य इत्येतावानेव वा। प्रघासिनो मारुती गायत्री"ति कात्यायनोक्तेः (२)।

ततो यजमानस्य मोषूण इति जपः। दम्पत्योर्होमपक्षे उभयोरपि सञ्चरः।

तदुक्तमापस्तम्बसूत्रे-"अन्तरा वेदी गत्वा यजमानः पत्नी चोत्तरेण चो-

---

(१) ८. ६. २३. (२) सर्वानु १. २०।

**सम्मार्जनाद्याज्यभागाभ्याम् ॥ १३ ॥ स्रुक्पाणिरास्ते प्रतिप्रस्थाता ॥१४॥ हविर्भिश्चरति ॥ १५ ॥ पयस्याप्रचरणकाले मेषौ व्यतिहरतः ॥ १६ ॥ अन्यतरेणावदानेन सह मेषम् ॥ १७ ॥ सव्येन स्रुचौ गृहीत्वा प्रतिप्रस्थातुर्वासो**

---

त्तरां वेदिमैषीके शूर्पे करम्भपात्राण्योप्य शीर्षन्नधि निधाय पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ दक्षिणेऽग्नौ शूर्पेण जुहुतः" इति(१)। अपि वाऽध्वर्युः प्रतिप्रस्थाता वा जुहुयादन्वारम्भेयातामितराविति।

तत्राध्वर्योर्होमपक्षे करम्भपात्राणामध्वर्योरेव निर्वपणादिहोमपर्यन्तं कर्तृत्वं निःसन्देहम्।

ततो येन मार्गेण पत्नी होमार्थमानीता तेनैव मार्गेण प्रतिनयन्प्रतिप्रस्थाता अक्रन् कर्मेत्यमुं मन्त्रं पत्नीं वाचयति। प्रतिगमने ब्रह्माणमन्तरा यजमानाद्बहिश्च नेयेति विशेषः। ततः पत्नी स्वस्थाने उपविशति।

प्रतिप्रस्थातरि च वेदिसमीपमागते अग्नीधाऽध्वर्युसन्नहनेनौत्तरवेदिकमाहवनीयं संमृज्य प्रतिप्रस्थात्रा सक्तेनेध्मसन्नहनेन दक्षिणमाहवनीयं प्रकृतिवत्संमार्ष्टि। ततो ऽञ्जलिकरणमुभयोः। उत्तराघार उभयोः। ध्रुवासमञ्जनं स्रुक्सादानमुभयोः।

होतृवरणमध्वर्योरेव। प्रतिप्रस्थाताऽध्वर्योः पश्चात्तथा तिष्ठति यथा होता तन्त्रेणोभयोरंससंमर्शनं कर्त्तुं शक्नोति। द्वयोरप्यंसयोरुपरि सहैव प्रादेशं निदधातीत्यर्थः। ततस्त्रयाणां संमृष्टानामुपवेशनम्। ततः स्रुगादापनादि। उभावपि जुहूपभृतावादाय होमार्थं गच्छतः। आश्रावणं प्रेषणं च सर्वत्राध्वर्युरेव करोति न प्रतिप्रस्थाता।

उभयोर्नव प्रयाजाः। चतुर्थसप्तमयोः समानयनमुभयोः। अध्वर्योः सप्तमे निःशेषं समानयनम्। पृषदाज्यग्रहणपक्षे प्रतिप्रस्थातुरपि। त्यागास्तु वैश्वदेवपर्वण्युक्ता एव। उत्तमप्रयाजे विशेषः-इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्ण इन्द्राग्निभ्यां वरुणाय मरुद्भ्यः काय देवेभ्य आज्यपेभ्यो वाजिभ्यः। पञ्च मम न तस्येत्यादि। प्रत्यागत्य यथास्वं वाजिनान्तानां प्रयाजशेषेणाभिघारणमुभयोः। तत आज्यभागौ। सर्वत्र वषट्कारानन्तरमेव क्रमेण होमो न सह "वषट्कृते तु जुहुत" इति पुनः श्रवणात् (२.५.२.३१)

आज्यभागानन्तरं प्रतिप्रस्थाता स्रुक्पाणिरास्ते। स्रुचौ हस्ते

---

(१) ८.६.२३.

**दक्षिणेन मरुद्भ्योऽनुवाचयति ॥१८॥ वारुणीवदवदानम् ॥१९॥ हविर्भिश्चरित उभौ स्विष्टकृत्प्रभृति ॥ २० ॥ इडा-**

धारयित्वोपविशतीत्यर्थः। ततोऽध्वर्युर्हविर्भिः प्रचरति । अग्नये ऽनुब्रूहि । अग्निं यज, इदमग्नये १ । सोमायानुब्रूहि, सोमं यज, इदं सोमाय २ । सवित्रे उपांशु अनुब्रूहीति प्रथमस्वरेण, सवितारं यज, इदं सवित्रे ३ । सरस्वत्या अनुब्रूहि, सरस्वतीं यज, इदं सरस्वत्यै ४ पूष्णेऽनुब्रूहि, पूषणं यज, इदं पूष्णे ५ इन्द्राग्निभ्यामनुब्रूहि, इन्द्राग्नी यज, इदमिन्द्राग्निभ्याम् ६ ततो ऽध्वर्युप्रतिप्रस्थातारौ मेषौ व्यतिहरतः । तत्राध्वर्युः स्वपयस्यायाः सकाशान्मेषीं निःकाश्य प्रतिप्रस्थात्रे समर्पयति । प्रतिप्रस्थाता च मेषमध्वर्यवे समर्पयति ।

ततोऽध्वर्युर्मेषं वारुण्यामवदधाति । प्रतिप्रस्थाता मारुत्यां मेषीम् । ततोऽध्वर्युः वरुणायानुब्रूहि इत्युक्त्वा जुह्वामुपस्तीर्य वारुण्याः पयस्याया द्विरवद्यति । तत्र प्रथमावदानेन सहाखण्डं मेषमवदधाति, द्वितीयावदानेन सह वा । अत्र जुह्वां प्रक्षेप एव साहित्यम् , ग्रहणे ऽनियमः । पुनरुपरिष्टात्सकृदभिघार्यावदाने प्रत्यभिघार्यातिक्रम्याश्राव्य वरुणं यजेत्युक्त्वा वषट्कृते जुहोति, इदं वरुणाय ।

ततोऽध्वर्युः सव्यहस्ते स्रुचौ कृत्वा दक्षिणहस्तेन प्रतिप्रस्थातुरुत्तरीयवस्त्रमन्वारभ्य मरुद्भ्यो ऽनुब्रूहीत्याह । ततः प्रतिप्रस्थाता जुह्वामुपस्तीर्य द्विरवद्यति । तत्र प्रथमेन द्वितीयेन वाऽवदानेन सहाखण्डां मेषीमवदधाति जुह्वां सह प्रक्षिपतीत्यर्थः । तत उपरिष्टात्सकृदभिघार्यावदाने प्रत्यभिघार्यातिक्रामति । अथाध्वर्युरेवाश्राव्य मरुतो यजेत्याह । वषट्कृते प्रतिप्रस्थाता जुहोति, इदं मरुद्भ्यः । ततो ऽध्वर्युः काय उपांशु अनुब्रूहीत्याह । उपस्तीर्य सर्वं पुरोडाशं जुह्वामवधाय द्विरभिघार्योत्थायाश्राव्याह कमुपांशु यजेति प्रथमेन स्वरेण । इदं काय ।

ततो ऽध्वर्युरेवाग्नये स्विष्टकृते ऽनुब्रूहीत्याह । उभयोर्जुह्वामुपस्तारः । यथास्वं सर्वहविषामुत्तरार्द्धादेकप्रत्यवायमवदानम् । द्विरभिघार उभयोः । अनतिक्रमणं च । ततो ऽध्वर्युरेवाश्राव्याग्निं स्विष्टकृतं यजेत्याह । वषट्कृते उभौ जुहुतः । अपां स्पर्शः । पत्य स्रुचावासाद्य सञ्चराभ्युक्षणमुभयोः ।

ततो ऽध्वर्युरेव सर्वहविर्भ्यः प्राशित्रमवद्यति न प्रतिप्रस्थाता । प्राशित्रं ब्रह्मणे दत्त्वेडापात्र्यामुपस्तीर्य सर्वहविर्भ्य इडामवदाय प्रतिप्रस्थात्रे समर्पयति । प्रतिप्रस्थाता स्वपयस्याया द्विरुपर्यवदाया-

**मवदाय प्रतिप्रस्थात्रे प्रयच्छति ॥२१॥ तत्र प्रतिप्रस्थाता मारुत्यां: ॥२२॥ स्रुचौ व्यूहतोऽध्वर्यू ॥२३॥ समासिच्य**

ध्वर्यवे इडां प्रत्यर्पयति । ततो ऽध्वर्युर्द्विरभिघार्य आग्नेभ्यः पञ्चभ्यो हविर्भ्यः षडवत्तब्रह्मयजमानभागचतुर्द्धाकरणान् करोति, नैन्द्राग्नपयस्ययोः ।

ततो होतुरिडासमर्पणादि मयीदमिति जपान्तम् । इडामुपहूय पवित्रे समस्य पूर्वं मार्जनम् । तत इडाभक्षणादि । "उपहूय मार्जयन्त" इति गृहमेधीयवदत्रापि ( २. ५. २. ४० ) श्रवणात् । सूत्रकृता तु केनाभिप्रायेण न सूत्रितम् इति स एव वेद । प्रतिप्रस्थाता स्ववेदिमपरेण स्वकीयपवित्रे समस्य मार्जनं करोति । तत इडाभक्षः । प्रस्तरे पवित्रकरणमुभयोः । भागपरिहारो ऽध्वर्य्योः । दक्षिणां चात्वालोत्करावन्तरेण वेद्यामानीयालभते । ऊर्गसीत्यस्य स्थाने धेनुरसीति विशेषः । अश्वोऽसीति वा, षड्गवमसीति वा, द्वादशगवमसीति वा । अस्य वरुणप्रघासपर्वणः समृध्यर्थं धेनुं दक्षिणां ब्रह्मण इत्यादि । ब्रह्मणा इयं वो धेनुः प्रतिगृह्णीतेति । अयं वोऽश्वः, इदं वः षड्गवम् , इदं वो द्वादशगवमिति वा । वारुण्याः स्थापनमवभृथार्थम् ।

ततो हविःशेषानुदगुद्वास्योल्मुकसमासाद्युभयोर्धारानुयाजान्तम् । तत्र विशेषः । ब्रह्मन्प्रस्थास्यावः समिधमाधायाग्नीऽ अग्नीत् सम्मृड्ढीति प्रैषः । अग्नीध उभयत्र समिदाधानम् । संमार्गश्च । ॐ प्रतिष्ठतमिति ब्रह्मणोऽनुज्ञायामूहः । यजमानस्य समिदनुमन्त्रणम् । एते वामग्नी समिधौ ताभ्यां वर्द्धेथां चा च प्यायेथाम् इत्यूहः । पृषदाज्योपभृतः पृषदाज्यं जुह्वामुपभृति च विभज्यानीयाऽऽज्योपभृतमधः कृत्वा ऽनुयाजा यष्टव्या इति । "स स्रुचोरेवाध्वयुः पृषदाज्यं व्यानयत्" इत्यादिश्रुत्यर्थः । ( २. ५. २. ४. )

आपस्तम्बसूत्रे तु विशेषः—"पृषदाज्यं जुह्वामानीय पृषदाज्यधान्यामुपभृतं कृत्वा तेन नवानूयाजान्यजती"ति(१) । उभयोर्नवानुयाजाः । चतुर्थसप्तमयोः समानयनम् । प्रतिप्रस्थातुः स्वाज्येनैवानुयाजाः पक्षे । तस्यापि पृषदाज्येन भवति । द्वितीयानुयाजप्रभृति यज यजेति प्रैषः । अविशेषश्रवणादिति सम्प्रदायः । नेति श्री अनन्तयाज्ञिकः । त्यागास्तु वैश्वदेवपर्वण्युक्ताः ।

---

(१) ८. २. ३. २०.

वाजिनभक्षः ॥ २४ ॥ अध्वर्युविकारात्प्रतिप्रस्थाता भक्षेषु ॥२५॥ मैत्रावरुणश्च होत्रध्वर्युविकारात् ॥ २६ ॥ समिष्टयजूंषि तूष्णीं दक्षिणस्याम् ॥२७॥ वारुणीनिष्काषेणा-

धारानुयाज उभयोः । अत्र नियमेनाध्वर्योरेव स्रुग्व्यूहनं न यजमानस्य । अग्नेः सोमस्य सवितुः सरस्वत्याः पूष्ण इन्द्राग्न्योर्वरुणस्य कस्य उज्जितिमिति । अग्निः सोमः सविता सरस्वती पूषेन्द्राग्नी वरुणः कस्तमपनुदन्तु यमिति। अत्रोपांशुदेवतानामपांशूच्चारणम् , अन्येषामुत्तमस्वरेण। शूर्पं जुह्वा उपरि निधाय प्रतिप्रस्थातुर्व्यूहनम् । मरुतामुज्जिति० मरुतस्तमपनुदन्तु यमयम्० । अभ्युदय परिध्यञ्जनाद्युभयोः । सह शाखया प्रस्तरहोमान्तम् । इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्णे इन्द्राग्निभ्यां वरुणाय मरुद्भ्यः काय देवेभ्यः आज्यपेभ्यो ऽग्नये होत्राय वाजिभ्यो न मम । तृणप्रहरणप्रैषोऽनुप्रहरतमिति । तृणप्रक्षेपात्मालम्भोदकालम्भा उभयोः ।

तत उभयोर्वाजिनयागो व्याघारणान्तः । उभौ वाजिनशेषावेकत्र कृत्वा तन्त्रेण वाजिनभक्षः । अध्वर्योरनन्तरं प्रतिप्रस्थाता उपहवे भक्षे च । ततः संवदस्वेत्यादि अध्वर्योरेव। परिधिप्रक्षेप उभयोः । अध्वर्युसक्तस्यैवोपवेषस्य होमः । संस्रवाहुतिरुभयोर्धुरि निधानं च । अध्वर्योस्तिसृभिः स्रुग्भिः संस्रवहोमः । तत्र धुरि निधाने घृताच्य स्थ धुर्यौ पात सुम्ना स्थ सुम्ने मा धत्तेति तिसृणामपि धुरि निधानम् । पृषदाज्यग्रहणपक्षे प्रतिप्रस्थातुरप्येवम् । यजमानस्योत्तरां वेदिमालभ्य दक्षिणस्या आलम्भः । प्रतिप्रस्थाता स्ववेदिसमीप एवोपविशति ।

अध्वर्युरेव गार्हपत्यं गत्वा ऽदब्धाहुतिपर्य्यन्तं पत्नीसंयाजादि कृत्वा सव्येनावृत्य दक्षिणाग्नौ आहुतित्रयं जुहोति । पिष्टलेपहोमपक्षे पूर्वदिनस्थापितपिष्टलेपान्सर्वानद्यतनपिष्टलेपैः सहाध्वर्युरेव जुहोति, प्रतिप्रस्थातुरपराग्निहोमप्रतिषेधात् । इदं विश्वेभ्यो देवेभ्य इत्युच्चार्य्य त्यागः । ततो वेदयोक्तमोकादि समिष्टयजुरन्तम् । अध्वर्युरुत्थाय ध्रुवया त्रीणि समिष्टयजूंषि जुहोति देवा गातुविद इति प्रथमम्, इदं वाताय १ । यज्ञ यज्ञं गच्छेति द्वितीयम्, इदं, यज्ञाय २ एष ते यज्ञ इति तृतीयम्, इदं यज्ञपतये ३ । प्रतिप्रस्थाता त्रीणि समिष्टयजूंषि तूष्णीमेव जुहोति । ततोऽवभृथगमनार्थं चत्वालसमीप आगत्योरुं० हीति ( ८.२३. ) यजमानं वाचयति विधश्चिदिति ब्रूहीत्येवम् । यजमानः स्वरेण पठति । ततो वारुणीनिष्कासं जुहूं स्रुवमाज्यस्थालीं

**वभृथम् ॥ २८ ॥ तूष्णीमेत्याभ्यवेत्य मज्जयत्यवभृथेति ॥ २९ ॥ जायापती स्नातोऽमज्जन्तौ ॥ ३० ॥ अन्योन्यस्य**

समिधं श्रुतावदानं स्फ्यं बर्हिर्मुष्टिं परिधानार्थानि वस्त्राणि चादाय तूष्णीमेव नद्यादिस्थवहदुदके यत् स्थावरोदकं तत्प्रति यन्ति । नद्यादिस्थस्थावरोदकाभावे ऽन्यदुदकमभि प्रतिगमनम् । नात्र सामगानम् । अत्र स्रुक्स्रुवाज्यादि पूर्वसंस्कृतमेव ग्राह्यम्, अनपवृक्तत्वादिति हरिस्वामिनः । अवभृथस्यापूर्वत्वादेव संस्काराभाव इत्यपरे ।

तत्राध्वर्युर्बाहुगृहीतं यजमानं तूष्णीमेवोदकमध्ये प्रवेशयति । ततः स्वयमप्सु प्रविश्य हस्तगृहीताया एवाज्यस्थाल्याश्चतुर्गृहीतमाज्यं जुह्वां गृहीत्वाऽपः परिस्तीर्य समिधमाधाय तस्या उपर्यग्नेरनीकमित्यप्स्वाहुतिं ( ८. २६ ) जुहोति, इदमग्नये । पुनश्चतुर्गृहीतं गृहीत्वा ऽऽश्राव्य समिधो यजेत्याह । ततो यज यजेति बर्हिर्वर्जिताश्चतुरः प्रयाजान्यजति । समानयनाभावः ।

षडाहुतिपक्षे उत्तमप्रयाजत्यागे इदं वरुणाय देवेभ्य आज्यपेभ्य इति पञ्च ममेति । दशाहुतिपक्षश्चेदिदमग्नये सोमाय वरुणाय देवेभ्य आज्यपेभ्य इति । ततो जुह्वामाज्यस्थाल्या एवोपस्तीर्य वारुणीनिष्कापं द्विरवदाय वरुणायानुब्रूहीति प्रेष्यति । सकृदुपरिष्टादभिघार्यावदाने प्रत्यभिघार्याऽऽश्राव्य वरुणं यजेत्युक्त्वा वषट्कृते जुहोति, इदं वरुणाय । पुनर्जुह्वामुपस्तीर्य सर्वं निष्कापं जुह्वां प्रतिक्षिपन्नग्नीवरुणाभ्यामनुब्रूहीति प्रेष्यति । तत उपरिष्टाद् द्विरभिघार्याश्राव्याग्नीवरुणौ यजेत्युक्त्वा वषट्कृते जुहोति, इदमग्नीवरुणाभ्याम् ।

अयं षडाहुतिपक्षो वाजसनेयिनां नियमेन । इतरेषां तु यजमानेच्छया दशाहुतिपक्षोऽपि भवति । तत्र बर्हिर्वर्जिताश्चत्वारः प्रयाजाः । ततो द्वावाज्यभागौ प्रकृतिवद् ध्रुवायाः । तदर्थं ध्रुवाऽप्यत्र प्रयोज्या । ततो वरुणाग्नीवरुणयागौ । ततो द्वावनुयाजौ । तावपि विशेषानुपदेशात् प्रकृतिवदौपभृतेन । तदर्थमुपभृदपि प्रयोज्या । एवं दशाहुतयः ।

अत्र हरिस्वामिभाष्ये विशेष उक्तः । एतदङ्गिरसामयनमिति(१) एतद्दशाहुत्यात्मकमयनमङ्गिरसामङ्गिरसः पुत्रपौत्राणां मनुष्याणाम् । अत्रापि संस्कृतैरेवाज्यपुरोडाशमात्रैरपो गत्वा चतुर्गृहीत्वा जुह्वामुपभृति ध्रुवायाश्च क्रमेण प्रकृतिवत्त्रीणि चतुर्गृहीत्वा [ि]घ्रन्त एवाङ्गप्रधानसा-

---

(१) ४. ४. ९. २०.

**पृष्ठे धावतः ॥ ३१ ॥ अन्ये वाससी परिदधाते ॥ ३२ ॥ पूर्वे दद्यादभिक्रुतेभ्यो यस्मा इच्छेत् ॥ ३३ ॥ पृथगेत्याहवनीये समिदाधानं देवानाᳪ समिदसीति ॥ ३४ ॥ पत्नी च गार्हपत्ये तूष्णीम् ॥ ३५ ॥ धेनुर्दक्षिणाऽश्वः, षड् वा, दश वा ॥ ३६ ॥ ५ ॥**

---

धारणानग्निसंस्कारान्परिधिपरिवाजनसंमार्गानप्सु कुर्वन्तौ हस्तधृतैरेवाज्यहविर्भिश्चरेयुः ।

तत्रापि चेध्मसामिधेनीहोत्रार्षेयवरणानि न कुर्युः शाखान्तरे तदभावस्य स्पष्टत्वात् । श्रुत्यापि (७.४.५.१२.) नमेतया च समिधैतया चाहुत्या समिन्धे देवेभ्यो जुहवानीतीध्मसामिधेन्यर्थस्यान्यथा सिद्धत्वादिति । तेनास्मिन्पक्षे प्रकृतिवद् ध्रौवेणाज्यभागौ औपभृतेनानुयाजौ, प्रयाजप्रधानयागादिकं तूक्तप्रकारेण भवति । अनयोः पक्षयोः यजमानेच्छया एकं कञ्चन पक्षं कृत्वा निष्कासपात्रस्थालीमवभृथेति ( ३ । ४८ ) मन्त्रेणोदकमध्ये मज्जयति ।

ततः पत्नीयजमानौ अञ्जनमकुर्वन्तौ स्नानं कुर्वाते । अन्योन्यं पृष्ठशोधनं क्षालनं कुरुतः । ततोऽन्ये वाससी परिदधाते । पूर्वपरिहिते वाससी प्रक्षाल्य पञ्चानामृत्विजां मध्ये यस्मै दातुमिच्छति तस्मै दद्यात् । ततस्तूष्णीमेव प्रत्यागत्य चात्वालोत्करावन्तरेण प्रविश्याहवनीये देवानां समिदसीति ( ८. २७ ) मन्त्रेणैकां समिधमादधाति । पत्नी च तूष्णीं गार्हपत्ये समिधमादधाति ।

ततो बर्हिर्होम उभयोः । प्रणीताविमोकराज्यभागावध्वर्योरेव । पूर्णपात्रनिनयनं चाध्वर्योरेव । वेद्योरन्तराले प्राञ्चो विष्णुक्रमाः । "अन्तरा वेदेर्विष्णुक्रमा" इत्याथर्वणे दर्शनात् । एकस्या उत्तरस्या वेदेरस्यै प्रतिष्ठायै इत्यवेक्षणम् । औत्तरवेदिकाहवनीयस्यैव संज्योतिषेति (२. २५) केचित् । द्वयोरपि वेद्योर्द्वयोराहवनीयोरवेक्षणमिति युक्तम् । ब्राह्मणं तर्पयितवा इत्येव प्रैषः । एकस्यैव तर्पणम् । वचनं विनाऽऽरादुपकारकाङ्गस्य प्रतिप्रस्थातुरप्राप्तेः । औत्तरवेदिक एवाहवनीये उपस्थानमाहुतिर्वा समिदाधानं चेति । ततः पात्रिकं तर्पणम् । शतब्राह्मणसंकल्पः । ततो गार्हपत्याहवनीयौ समारोह्य स्वस्थानं गत्वा निर्मथ्य पुनरुद्धृत्य पौर्णमासेष्टिं कृत्वा पत्न्यादिकर्म वैश्वदेवादि नित्यं च कुर्यात् ।

इति पञ्चमस्य पञ्चमी कण्डिका ॥ ५ ॥

देवकृतकात्यायनपद्धतौ वरुणप्रघासाः ॥

**कार्त्तिक्याᳬ साकमेधा द्व्यहम् ॥ १ ॥ पूर्वेद्युः पूर्वाह्णेऽग्नयेऽनीकवते पुरोडाशः ॥ २ ॥ मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुः ॥ ३ ॥ समिष्टयजुरन्तं भवति ॥४॥ बर्हिरनुप्रहरणवर्जं वा ॥ ५ ॥ इध्मस्थाने शाकलपरिधि निधाय मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि ॥ ६ ॥**

---

अथ साकमेधा उच्यन्ते ।

ते च फाल्गुन्यामारम्भे कार्तिक्यां भवन्ति चैत्र्यामारम्भे मार्गशीर्ष्याम्, वैशाख्यामारम्भे पौष्याम् । तत्र पौर्णमास्यामृत्विग्वरणम् । गोत्र० शर्मन्नैष्टिकेन ऋषभदक्षिणेन साकमेधपर्वणाऽहं यक्ष्ये तत्र त्वं मे ब्रह्मा भवेत्यादिना ब्रह्महोत्रध्वर्य्वाग्नीध्राणां वरणम् । ततो गार्हपत्यात्समारोपार्थमाहवनीयमुद्धृत्यायं ते योनिरिति वरुणप्रघासवद् गार्हपत्याहवनीययोः समारोपः । तदवसानं देशान्तरे गमनं मन्थनं स्थापनम् । साकमेधार्थमित्यग्न्योर्विहरणम् । अस्मिन्पक्षे तस्मिन्नेव विहारे त्र्यम्बकान्तं सकलं पर्व कार्यम् । अग्न्यन्वाधानं तु प्रतीष्टि पृथगेव । पृथगेवोद्धरणमिति सम्प्रदायः । अत्र पूर्वाह्णे ऽग्नयेऽनीकवते पुरोडाशोऽष्टाकपाल उद्धरणादिकर्मापवर्गान्तः । अन्वाहार्यो दक्षिणा । तत्रानीकवदिष्ट्यर्थमित्युद्धरणे । साकमेधार्थसाधारणोद्धरणपक्षे प्रतीष्ट्युद्धरणाभावः । अनीकवदिष्ट्याऽहं यक्ष्य इति वरणे ।

पात्रासादनेऽष्टौ कपालानि, विंशतिरिध्मकाष्ठानि । अन्यत्सर्वं प्रकृतिवत् । ग्रहणे–अग्नयेऽनीकवते जुष्टम् । प्रोक्षणे अग्नये ऽनीकवते त्वा जुष्टम् । अग्निमनीकवन्तं गच्छ । समदर्शेन वज्रेणेत्यवबाधनम् । उत्तमप्रयाजे–इदमग्नये सोमायाग्नयेऽनीकवते देवेभ्य आज्यपेभ्य इति । प्रधानयागे अग्नयेऽनीकवतेऽनुब्रूहि अग्निमनीकवन्तं यज । प्राशित्रादि सर्वम् । व्यूहने अग्नयेऽनीकवत उज्जितिम् अग्निरनीकवांस्तमपनुदत्विति । शेषं कर्मापवर्गान्तं प्रकृतिवत् ।

इत्यनीकवदिष्टिः ।

प्रतीष्टिविहारपक्षे पुनरुद्धृत्य मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुः । सान्तपनीयेष्ट्यर्थमित्युद्धरणपक्षे । सान्तपनीयेष्ट्याऽहं यक्ष्य इति वरणे ।

पात्रासादने—कपालस्थाने चरुस्थाली, दक्षिणा अन्वाहार्यः, नोपवेषः, विंशतिरिध्मकाष्ठानि, श्रुतावदानम् मेक्षणम् , पात्र्याः अभावः, शेषं प्रकृतिवत् । ग्रहणे–मरुद्भ्यः सान्तपनेभ्यो जुष्टम् । प्रोक्षणे मरुतः

**सान्नाय्यवत् ॥ ७ ॥ तूष्णीं वा ॥ ८ ॥ एकचोदनाच ॥ ९ ॥ अपयित्वाऽभिघार्योद्वास्य शरावयोरुद्धरति पात्र्योर्वा ॥ १० ॥**

सान्तपनेभ्यस्त्वा जुष्टम् । मरुतः सान्तपनान् गच्छ । सप्तदशेन वज्रेणेत्यवबाधने । उत्तमप्रयाजे इदमग्नये सोमाय मरुद्भ्यः सान्तपनेभ्यो देवेभ्य इत्यादि । मध्यन्दिने प्रधानयागः । मरुद्भ्यः सान्तपनेभ्यो ऽनुब्रूहि, मरुतः सान्तपनान्यज, इदं मरुद्भ्यः सान्तपनेभ्यः । ततः स्विष्टकृदादि । चतुर्द्धाकरणानामभावः ।

व्यूहने—मरुतां सान्तपनानामुज्जितिम् । मरुतः सान्तपनास्तमपनुदन्त्विति । प्रस्तरहोमे इदमग्नये सोमाय मरुद्भ्यः सान्तपनेभ्यो देवेभ्य इत्यादि । समिष्टयजुरन्तं कर्म्म स्थाप्यते । बर्हिर्होमादि कर्मापवर्गान्तं श्वोभूते दर्विहोमानन्तरमेव भवति नेदानीम् । अथवा बर्हिर्होमो ब्राह्मणतर्पणप्रैषो ब्राह्मणतर्पणं नमःकृतायेति चेति पदार्थचतुष्कवर्जमन्यत्सर्वं कार्यम् । बर्हिर्होममात्रवर्जमन्यत्सर्वं कर्मापवर्गान्तं समापनीयमिति कर्कः । तत्राद्य एव पक्षो युक्त इति हरिस्वामिभिरतिप्रबलयुक्तिभिर्दृढीकृतमस्तीति स एव पक्षोऽस्माभिराद्रियते ।

इति सान्तपनीया समिष्टयजुरन्ता ।

ततः सायंकाले प्रागग्निहोत्रहोमाद् गृहमेधीयेष्टिः । तत्र मरुद्भ्यो गृहमेधिभ्यश्चरुर्भवति । तत्र पूर्वमिध्मस्थाने प्रणीतानां पश्चादनियतसंख्यानां यज्ञियवृक्षशकलानां परिधीनां च निधानम् । नाग्न्यन्वाधानं पशुपुरोडाशवत्तन्त्रमध्यपातात् । आहवनीय एवाग्न्यन्वाधानमित्यन्ये । शाखां तूष्णीं छित्वा तया यावत्सर्वं गवां वत्सानामपाकरणं तूष्णीम् । अमन्त्रकं ब्रह्मण उपवेशनम् आसनस्य संस्कृतत्वात् । न व्रतग्रहणमविसृष्टत्वात् । परिस्तरणाभावः ।

पात्रासादने-शूर्पाग्निहोत्रहवणी, स्थालीकृष्णाजिनम् , उलूखलमुसलम् , पात्रीधान्यं, पवित्रच्छेदनानि पवित्रे, स्थाली आज्यश्च, वेदश्च, दोहनपवित्रम् , एकमिध्मकाष्ठम् , प्रस्तरमात्रं बर्हिः, स्रुवो जुहूः, मेक्षणम् , द्वे शरावे पात्र्यौ वा योक्त्रम् , यूनकुशाः, परिधयः , कुशास्तृतं पीठम् , इडापात्री । स्फ्योपहितपात्रीकरणादि । ग्रहणे मरुद्भ्यो जुष्टम् । पयोबाहुल्यापेक्षया बहूनां व्रीहीणां ग्रहणम् ।

प्रोक्षणे मरुद्भ्यो गृहमेधिभ्यस्त्वा जुष्टम् । कुक्कुटाहननवर्जितं कृष्णाजिनादानादि कणनिधानान्तं कण्डनम् । आज्यनिर्वापवेदबन्धौ । ईक्षणान्ते चरुस्थालीमादाय तस्यां दोहनपवित्रं निधाय तत्रैव पवि-

**आसेचने मध्ये कृत्वा सर्पिरासिञ्चत्याज्यार्थम् ॥ ११ ॥ यावदुक्तमतः ॥ १२ ॥ स्तरणयजुषा वेदिमभिमृश्य**

त्रवति चरुपात्रे यावत्स्वं गा दोहयित्वा तण्डुलान्प्रक्षाल्य पवित्रवति चरुपात्रे पयोमध्ये संवापः । घर्मोऽसीत्यधिश्रयणम् । पर्यग्निकरणम् । उदकस्पर्शः । देवस्त्वेति श्रपणम् । नाभेरित्यालम्भः । स्फ्यमुद्यम्य प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः० संमृड्ढीत्यादि प्रैषः । न स्फ्यादक्षप्रहारः । न पाण्योरवनेजनम् । अपरेण प्रणीताना स्फ्येध्मबर्हिषां सादनम् । स्रुवजुहूमेक्षणसंमार्गः । शरावयोः पात्र्योर्वा संमार्गः । संमार्जनापासनम् । पत्नीसन्नहनाद्याज्यावेक्षणान्तम् । इध्मवेद्योः प्रोक्षणम् । बर्हिः प्रतिगृह्य वेद्यां निधाय ब्रह्मन्बर्हिः प्रोक्षिष्यामि । बर्हिरसि स्रुचे त्वा जुष्टमिति प्रस्तरमात्रबर्हिषः प्रोक्षणम् । मूलाग्रसेकः । प्रणीतासु पवित्रनिधानम् ।

बर्हिर्विस्रंस्य तूष्णीं प्रस्तरग्रहणम् । ब्रह्मणे समर्पणम् । सन्नहनं विस्रंस्य दक्षिणस्यां वेदिश्रोणौ निधायान्यैर्बर्हिभिरवच्छादयति । ततो गार्हपत्यसमीपे गत्वा शरावयोः पात्र्योर्वा स्थापनम् । चरुमभिघार्योदगुद्वास्य प्राणदानम् । मरुतो गृहमेधिनो गच्छेति, प्राकृतं च विकृता- ( १. ५. ४. )विति न्यायात् । ततः शरावयोः पात्र्योर्वा समीपे चरोरुद्धरणम् । उद्धृतयोर्मध्ये गर्तं कृत्वा तत्राज्यस्थालस्थाज्यस्य विसर्ज्यासेकः । तत ओदनौ स्रुक्त्रयं चादाय वेदिसमीपे आगत्य बर्हिर्वेदि ओदनादेः स्थापनम् ।

तूष्णीं स्तृताया वेदेरभिमर्शनम् । परिस्तरणादानम् । तत्रानोल्मुकोदूहनाभावः । परिधिपरिधानं समन्त्रकम् । परिधिमुपस्पृश्य समिन्निरसनम् । सूर्यस्त्वेति ( २. ५. ) जपः । समिदाधानम् । अथ धृत्यौदनयोरासादनम् प्रियाभ्यां धामभ्यां प्रियं सद आसीदतमिति । प्रियेण धाम्नेत्येवमनूहितेनैवेत्यपरे ।

ततः स्तृताया एव वेदेः तृणं आदाय विधृत्योः स्तरणं सवितुरिति ( २.५. ) । प्रस्तरस्तरणम् । अभिन्यासः । प्रतिगृह्य सव्यांगुल्ये प्रस्तरे असि जुहूर्नाम्नेति ( २.६. ) स्फ्योपग्रहेण जुह्वा आसादनम् । सर्वालम्भे पूर्वमादनस्थयोराज्ययोरालम्भः, ततो दक्षिणोदनस्य । आत्मालम्भोदकालम्भौ ।

होतृषदनस्थापनम् । एहि होतरित्यामन्त्रणम् । समन्त्रकं होतृवरणम् होतुरप्रवृक्तत्वात् । होतुरामन्त्रणवरणे न भवत इति केचित् ।

तूष्णीं वा कृतत्वात्परिधिपरिधानम् ॥ १३ ॥
शकलान्याधाय मध्यादुद्धृतावासादयति ॥ १४ ॥
स्रुक्स्रुवं च सम्मार्ष्ट्यनुद्वास्य वा सम्मार्जनम् ॥ १५ ॥
आज्यभागाभ्यां चरत्याग्नेयं दक्षिणात् सौम्यमुत्तरात् ॥ १६ ॥
गृहमेधिस्विष्टकृतौ चाज्यभागवत्समावदानौ ॥ १७ ॥
अप्रत्यभिघारणं च ॥ १८ ॥ अनुद्धृत्य वा सहितमाज्यमधिश्रयति ॥ १९ ॥ उद्वास्योभयमासादयति ॥ २० ॥ न

होतर्यासनं संस्कृत्योपविष्टे सत्यध्वर्युः स्रुवं स्रुचं चाददान एवाग्नयेऽनुब्रूहीत्याह । ततो दक्षिणादोदनाच्चतुर्गृहीतमाज्यं जुह्वामवदायातिक्रम्याश्राव्याग्निं यजेत्युक्त्वा वषट्कृते जुहोति । ततः सोमायानुब्रूहीत्युक्त्वोत्तरौदनस्थादाज्याच्चतुर्जुह्वां गृहीत्वाऽतिक्रम्याश्राव्य सोमं यजेत्युक्त्वा वषट्कृते जुहोति । ततो मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहीत्युक्त्वा दक्षिणौदनस्थादाज्याज्जुह्वामुपस्तीर्य तत एव मध्यात्पूर्वार्द्धाच्चावदाय तत एव सकृदुपर्यभिघार्यातिक्रम्याश्राव्य मरुतो गृहमेधिनो यजेत्युक्त्वा वषट्कृते जुहोति इदं मरुद्भ्यो गृहमेधिभ्यः ।

ततोऽग्नये स्विष्टकृतेऽनुब्रूहीत्युक्त्वा उत्तरौदनस्थादाज्यादुपस्तीर्य उत्तरस्यौदनस्य द्विरवदाय तत्स्थादेवाज्यादुपरि सकृदभिघार्यातिक्रम्याश्राव्याग्निं स्विष्टकृतं यजेत्युक्त्वा वषट्कृते जुहोति इदमग्नये स्विष्टकृते । उदकस्पर्शः ।

एत्य जुह्वा आसादनम् । न सञ्चराभ्युदयम् । न प्राशित्रावदानम् । इडावदानं पञ्चत्तस्य च । ब्रह्मयजमानयोश्चेति न इवाभाति । ततश्च पवित्रप्रतिपत्त्यन्ते भागपरिहारः दक्षिणभागान्ते भागावेक्षणं भागप्राशनं च क्रियते । दक्षिणादोदनादिडापात्र्यामुपस्तारः । तत एव दक्षिणतो मध्याच्चावदानम् । तत एव द्विरभिघारः । नात्र चतुर्द्धाकरणभागादि । इडासमर्पणादि मयीदं जपान्तम् । उपहूय पूर्वं मार्जनम् । तत इडाभक्षणमृत्विजामेव न यजमानस्य । तत उपनीतानां यजमानगृह्याणामृत्विजां च नियमेनौदनप्राशनम् । बहुश्चेदोदनस्तदाऽन्येषामपि ब्राह्मणानां प्राशनम् ।

ततः सशेषां स्थालीमपिधाय दर्विहोमार्थं सुगुप्तदेशे निदधाति । ततः पवित्रप्रतिपत्तिः । नाग्निसम्मार्गः । मरुतां गृहमेधिनामुज्जितिमिति जुह्वा एव व्यूहनम् । अभ्युक्ष्य परिव्यञ्जनम् । आश्राव्य सूक्तवाकप्रैषः ।

**प्राशित्रमिडान्तं भवति ॥२१॥ पूर्वे मार्जनमुपहूय ॥२२॥ प्राश्नन्ति युक्ताः ॥ २३ ॥ यजमानगृह्या हविरुच्छिष्टाशा ऋत्विजो ब्राह्मणाश्चान्ये बहुश्चेत् ॥ २४ ॥ अरिक्ताᳪ स्थाली निदधाति ॥२५॥ सान्तपनीयाᳪ सᳪस्था·**

---

प्रस्तरग्रहणम् । मध्यमूलयोरपि जुह्वामेवाञ्जनम् । नीचैर्हरणम् । तृणग्रहणं प्रस्तरहोमः । अग्नये सोमाय मरुद्भ्यो गृहमेधिभ्योऽग्नये होत्रायेति त्यागः । अनुप्रहरेति प्रैषः । तृणप्रक्षेपः । आत्मालम्भः । उदकालम्भः । संवदस्वेत्यादेरभाव· ।

परिधिप्रक्षेपः । संस्रवाहुतिः । धुरि निधानमेकस्था एव । घृताच्य· धुसि धुर्यौ पाहि सुम्नाऽसि सुम्ने मा धेहीति विशेषः । न वेद्यालम्भः । वेदयोक्त्रविमोकः । आवेदेः स्तरणम् । अन्यैरवच्छादनबर्हिर्होमः । राक्षसभागः । एवं पिशीलकपक्षे बर्हिरादिसर्वोत्कर्षपक्षेच गृहमेधीयाक्ता ।

अथ स्थालीपक्षे विशेष उच्यते—

इध्मस्थाने शकलपरिधिनिधानादि चरोरुद्वासनान्तं पूर्ववत् । अत्राहवनीयश्रापि ण आहवनीये प्रथममेवाज्याधिश्रयणम् । उद्वास्य स्थालीस्थस्यैवौदनस्य प्राणदानं नोद्धृत्य । ततश्चरुस्थालीमाज्यस्थालीं स्रुक्स्रुवं चादाय वेदिसमीपे आगत्य तूष्णीं वेदिमभिमृश्य समित्प्रस्तरादानपरिधिपरिधानसुयस्वेतिजपान्ते शकलान्याधायावृत्य चरुस्थालीमाज्यस्थालीं स्रुवं चासाद्य स्तृताया एव वेदेर्हे तृणे आदाय विधृत्योः स्तरणं प्रस्तरस्तरणमभिन्यासः पूर्ववत्। जुह्वा आसादनम् । आज्यचर्वोरालम्भः । आत्मालम्भादि होतुरुपवेशनान्तं पूर्ववत् ।

स्थाल्या एव चतुर्गृहीत्वाऽऽज्यभागौ । गृहमेधियागे स्थाल्या एव जुह्वामुपस्तारः । चरोर्मध्यात्पूर्वार्द्धाच्चावदानम् । स्थाल्या एवोपर्यभिघारः । क्षताभ्यङ्गः । गृहमेधियागः । स्विष्टकृति स्थाल्या एवाभिघारः । उत्तरार्द्धात्सकृदवदानम् । द्विरभिघारः । न क्षताभ्यङ्गः । स्विष्टकृद्यागः । इडाभक्षणानन्तरं मार्जनम् । चतुर्द्धाकरणानामभावः । षडवत्तब्रह्मयजमानभागभागपरिहारभागावेक्षणभागप्राशनानि पूर्ववद् भवन्तीति । अरिक्ताया अपिधाय निधानम् । अन्यत्सर्वं पूर्ववत् ।

पदार्थचतुष्टयपरिशेषपक्षे व्रतग्रहणम् । सर्वार्थपक्ष प्रणीताप्रणयनं विमोचनं भवति व्रतविसर्गश्च । अन्यत्सर्वं सर्वोत्कर्षपक्षवत् तन्त्रमध्यपाताविशेषात् ।

**प्य ॥ २६ ॥ प्रातर्वा शेषभावात् ॥ २७ ॥ मातृभिर्वत्सा-न्सꣳसृज्य निवान्या वत्सं बध्नाति ॥ २८ ॥ यवाग्वा-ऽग्निहोत्रहोमः ॥ २९ ॥ प्रातर्हुत्वाऽहुत्वा वा स्थाल्या द-र्व्याऽऽदत्ते पूर्णा दर्वीति ॥ ३० ॥ ऋषभमाह्वयितवै ब्रू-यात् ॥ ३१ ॥ रुते जुहोति ॥ ३२ ॥ अभ्याहरति ब्रह्मा जुहुधीत्याह॥३३॥देहि म इति जुहोत्यृषभो दक्षिणा॥३४॥६॥**

बर्हिर्होममात्रपरिशेषपक्षे च सान्तपनीयायाः समाप्तत्वेन तन्त्रमध्य-पाताभावादग्न्यन्वाधानब्रह्मवरणसमन्त्रकासनसंस्कारोपवेशनव्रतग्रहण-सर्वार्थप्रणीताप्रणयनव्रतग्रहणान्वाहार्यपचनाहवनीयकल्पनोपवाजनसं-मार्गाद्यग्निसंस्कारहोत्रामन्त्रणवरणदक्षिणादानसंमार्गप्रणीताविमोकव्रत-विसर्गा भवन्ति ।

इति गृहमेधीया ॥

रात्रौ यवाग्वा सायं प्रातरग्निहोत्रहोमः । वत्सानां स्वस्वमातृभिः सं-योगः । निवान्यावत्सस्य पृथग्बन्धनम् । तस्याः पित्र्येष्टौ मन्थार्थदुग्धा-र्थत्वात् । या स्वयं मृतवत्सा परकीयेण वत्सेन दुह्यते सा निवान्येत्यु-च्यते । प्रातरहुतेऽग्निहोत्रे हुते वा दर्विहोमः । तत्र ब्रह्मणस्तूष्णीमासन-संस्कारः । दक्षिणतो ब्रह्मयजमानयोरुपवेशनम् । वैकङ्कतदर्व्याः संमार्ग-प्रतपने । आहवनीयं परिस्तीर्य समिधमाधाय स्थाल्याः सकाशाद्दर्व्या ओदनं गृह्णाति पूर्णा दर्वीति (३.४८) । ऋषभमाह्वयितवा इति यजमानपु-रुषं प्रति प्रैषः । स प्रेषित ऋषभेण शब्दं कारयति । ऋषभेण शब्दे कृते जुहोति ।ऋषभे शब्दमकुर्वति ब्रह्मा जुहुधि इत्याह । ततो यद् द्रव्यं गृहीतं तद्देहि म इति (३.३६) मन्त्रेण आहवनीये जुहोति । इदमिन्द्राय । स एव ऋषभो दक्षिणा ब्रह्माध्वर्युभ्याम् । अस्य दर्विहोमस्य समृध्यर्थमृषभं दक्षिणां ब्रह्मणेऽध्वर्यवे चाहं सम्प्रददे ।

तदेवमयं दर्विहोमो होममात्र एव भवति सान्तपनीयतन्त्रान्तःपा-तात् । "परतन्त्रोत्पत्तयो जुहोतिमात्रा" इत्युक्तत्वात् ६. १०. २९ । बर्हि-र्होममात्रोत्कर्मपक्षे तु सर्वजुहोतिधर्मयुक्तोऽयं दर्विहोमो भवति त-न्त्रान्तःपाताभावात् । अतः परं सान्तपनीयासमाप्तिः । बर्हिर्होमादिनमः कृतायेत्यन्तं सर्वं पदार्थचतुष्टयं वा । बर्हिर्होममात्रं वा कर्कमते । अहुतं चेदुद्धृत्याग्निहोत्रहोमः प्रतीष्ट्युद्धरणपक्षे ।

इति सान्तपनीया ।

इति पञ्चमस्य षष्ठीकण्डिका ॥ ६ ॥

**मरुद्भ्यः क्रीडिभ्यः सप्तकपालः ॥ १ ॥ अदित्यै चरु-रन्यत्रापि ॥ २ ॥ समानबर्हिषी वा कालकर्मैकत्वात् ॥३॥ महाहविरुदवसाय निर्मथ्य ॥ ४ ॥ पूर्वेणुर्वा ॥ ५ ॥ नित्ये-**

---

अथ क्रैडिनीया द्विदेवत्येष्टिरुच्यते। तत्र मरुद्भ्यः क्रीडिभ्यः सप्तकपालः, अदित्यै चरुः । इमे हविषी समानतन्त्रे भवतः । प्रतीप्युद्धरणपक्षे क्रैडिन्यादित्येष्ट्यर्थमित्युद्धरणे । क्रैडिन्यादित्येष्टिभ्यामहं यक्ष्ये इति वरणे । पात्रासादने सप्तकपालानि, एका चरुस्थाली, दक्षिणाऽन्वाहार्यः, शृतावदानान्तरं मेक्षणम् , विंशतिरिध्मकाष्ठानि । पुरोडाशपात्र्येका, अन्यत्सर्वं प्रकृतिवत् ।

ग्रहणे मरुद्भ्यः क्रीडिभ्यो जुष्टम , अदित्यै जुष्टम् । प्रोक्षणे मरुद्भ्यः क्रीडिभ्यस्त्वा जुष्टम् , अदित्यै त्वा जुष्टम् । नानाबीजपक्षे तद्धर्मा उक्ताः । एकबीजपक्षे कणान्ते विभज्यालम्भः इदं मरुतां क्रीडिनाम्, इदमदित्याः । प्राणदाने—मरुतः क्रीडिनो गच्छ, अदितिं गच्छ ।

सप्तदशेन वज्रेणेत्यवबाधने । उत्तमप्रयाजे इदमग्नये सोमाय मरुद्भ्यः क्रीडिभ्योऽदित्यै देवेभ्य इत्यादि । प्रधानयागे मरुद्भ्यः क्रीडिभ्योऽनुब्रूहि मरुतः क्रीडिनो यज इदं मरुद्भ्यः क्रीडिभ्यः । अदित्या अनुब्रूहि अदितिं यज, इदमदित्यै । मेक्षणेन चरोरवदानम् । स्विष्टकृदादिपुरोडाशस्य प्राशित्रेडाव्यतिरिक्तं न भवति । चरोस्तु सर्वं भवत्येव ।

व्यूहने मरुतां क्रीडिनामदित्या उज्जितिम् , मरुतः क्रीडिनोऽदितिस्तमपनुदन्तु । प्रस्तरहोमे इदमग्नये सोमाय मरुद्भ्यः क्रीडिभ्योऽदित्यै देवेभ्य इति । अन्यत्कर्मापवर्गान्तं प्रकृतिवत् । इति क्रैडिन्यादित्येष्टी ।

अथ महाहविरुच्यते तत्राष्टौ हवींषि भवन्ति । आग्नेयोऽष्टाकपालः । पुरोडाशः, सौम्यश्चरुः, सावित्रो द्वादशकपालोऽष्टाकपालोवा उपांशु देवतः, सरस्वत्यै चरुः, पूष्णे चरुः, ऐन्द्राग्नो द्वादशकपालः, माहेन्द्रश्चरुः वैश्वकर्मण एककपाल उपांशुदेवतः । तत्र पूर्वमहतवस्त्रपरिधानम् । प्राचीनप्रवणेऽग्नीनां नयनम् । प्रतीप्युद्धरणपक्षे गार्हपत्यस्यैव नयनम् । आहवनीयदक्षिणाग्न्योरुद्धरणम् । तत्र महाहविरर्थं गार्हपत्यादिति संकल्पः । अग्न्यन्वाधानम । व्रतग्रहणं वा । चतुरासनम् । ब्रह्मवरणम् । महाहविषाऽहं यक्ष्ये तत्र भूपत इति । अत्रवा व्रतग्रहणम् । ततः षट्कासादनाद्युपयमन्युपनिवपनान्तं वरुणप्रघासवत् । एकस्फ्ययेति प्रैषोऽग्नीधं प्रति । एकोत्तरा वेदिर्न दक्षिणा । एकस्यैवाग्नेः प्रणयनम् । तत्राग्नये प्रह्रियमा-

भ्योऽधिकान्यैन्द्राग्नो, माहेन्द्रश्चरु, वैश्वकर्मण एककपा-

---

णायेति प्रेषः । ततो बर्हिरासनम् । प्रणीताप्रणयनम् । पूर्वमकृतश्चेत्प्रणी-
ताप्रणयनात्पूर्वं व्रतग्रहणम् ।

पात्रासादनेऽग्निहोत्रहवणी, स्फ्यः, पवित्राणि सन्त्येव, अन्यदासा-
द्यते—शूर्पं कपालानि त्रयस्त्रिंशदेकोनत्रिंशद्वा । चरुस्थाल्यश्चतस्रः,
शम्याकृष्णाजिनम्, उलूखलमुसलम् दृषदुपलम्, पात्रीधान्यम्,
धृष्टिः संयवनोदकम्, स्थाल्याज्यम्, वेदश्च दक्षिणार्थं ऋषभः, अग्निः,
विंशतिरिध्मकाष्ठानि, कुशप्रस्तरोपसन्नद्धं त्रेधा बर्हिः, स्रुवो जुहूः, उपभृ-
त्पृषदाज्योपभृच्च, ध्रुवा । संमार्गार्हाणि यानि चेत्यत्र । द्वे प्राशित्रहरणे,
शृतावदानं मेक्षणम्, पुरोडाशपात्र्यश्चतस्रः, योक्त्रं यूनकुशाश्च, पक्षे
परिधयस्त्रयः, पृषदाज्यार्थं दधि, मन्थनचतुष्टयम्, कुशास्तृतं पीठम्,
इडापात्री षडवत्तं च, अन्तर्धानकटः, पूर्णपात्रम्, पक्षे कर्मापवर्गा स
मित्, वपनपक्षे क्षुरचतुष्टयं च ।

ततः स्फ्योपहितपात्रीकरणम् । पात्रान्तरे प्रोक्षणीः कृत्वा शूर्पाग्निहो-
त्रहवण्योरादानादि । ग्रहणे अग्नये जुष्टम्, सोमाय जुष्टम्, सवित्रे जु०,
सरस्वत्यै जुष्टम्, पूष्णे जु०, इन्द्राग्निभ्यां जु०, महेन्द्राय जु०, विश्वकर्मणे
जु०, नानाबीजपक्षे तद्धर्मा वैश्वदेवपर्वणयुक्ताः । प्रोक्षण्यः संस्कृता एव ।
हविः प्रोक्षणे—अग्नये त्वा जुष्टम्, सोमाय त्वा जुष्टम्, सवित्रे
त्वा जुष्टम्, सरस्वत्यै त्वा जुष्टम्, पूष्णे त्वा जुष्टम्, इन्द्राग्निभ्यां त्वा
जुष्टम्, महेन्द्राय त्वा जुष्टम्, विश्वकर्मणे त्वा जुष्टम् । एकबीजपक्षे
कण्डान्ते विभज्यालम्भः इदमग्नेः सवितुः पूष्ण इन्द्राग्न्योर्विश्वकर्मणश्च ।
इदꣳ० सोमस्य सरस्वत्या महेन्द्रस्य च ।

कपालोपधाने आग्नेयस्याष्टौ कपालानि । सावित्रस्याष्टौ द्वादश वा ।
ऐन्द्राग्नस्य द्वादश । विश्वकर्मण एकम् । तत्र तपसा तप्यस्वेत्यभ्यूहनम् ।
ईक्षणं पिष्टानां तण्डुलानां च । ततः पूष्णे पिष्टानि पृथक्कृत्यालम्भः ।
इदमग्नेः सवितुरिन्द्राग्न्योर्विश्वकर्मणश्च । इदं पूष्णः । ततश्चरूणां तण्डु-
लान्विभज्य प्रत्येकमालम्भः । इदं सोमस्य, इदं सरस्वत्याः, इदं महेन्द्र-
स्य, संयवनानन्तरं विभज्य पुरोडाशानामालम्भः । इदमग्नेः, इदं सवितुः,
इदमिन्द्राग्न्योः, इदं विश्वकर्मणः । सपृषदाज्यं वरुणप्रघासवदाज्यग्रह-
णम् । प्राणदाने—अग्निं गच्छ, सोमं गच्छ, सवितारं गच्छ, सरस्वतीं
गच्छ, पूषणं गच्छ, इन्द्राग्नी गच्छ । महेन्द्रं गच्छ, विश्वकर्माणं
गच्छेति । प्राणदानानन्तरं घृतेनैककपालान्ताच्छादनम् । हवींष्यासाद्या-

**लः ॥ ६ ॥ उत्तरवेद्याग्निप्रणयनमन्थनपृषदाज्यं च वरुणप्रघासवत् ॥ ७ ॥ ऋषभो दक्षिणा ॥८॥ ॥७॥**

**पितृयज्ञ उपांशु चरणम् ॥१॥ पुरस्तादुपचारः॥२॥**

---

लभ्यात्मालम्भोदकालम्भौ कृत्वाऽग्निमन्थनं शकलादानादिहोमान्तं वैश्वदेववत् ।

ततो होतृषदनस्थोपनहातुरामन्त्रणादि । अवबाधने सप्तदशेन वज्रेणेति । नव प्रयाजा वैश्वदेववत् । त्यागास्तत्रैवोक्ताः । उत्तमे प्रयाजे इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्ण इन्द्राग्निभ्यां महेन्द्राय विश्वकर्मणे देवेभ्य इत्यादि । तत आज्यभागौ ।

प्रधानयागे—अग्नयेऽनुब्रूहि अग्निं यज । सोमायानुब्रूहि सोमं यज । सवित्रे उपांशु अनु० सवितारं यज । सरस्वत्या अनु० सरस्वतीं यज । पूष्णेऽनु० पूषणं यज । इन्द्राग्निभ्यामनुब्रूहि इन्द्राग्नी यज । महेन्द्रायाऽनुब्रूहि महेन्द्रं यज । विश्वकर्मणे उपांशु अनुब्रूहि । जुह्वामुपस्तीर्य सर्वमवदाय द्विरभिघार्यातिक्रम्याश्राव्य विश्वकर्माणं यज । सर्वहोमः । अपर्यावर्त्तनं च । इदं विश्वकर्मणे ।

ततः स्विष्टकृदादि । ऐन्द्राग्नस्य चतुर्द्धाकरणभागवडवसाभावः । अन्येषां सर्वं भवति । दक्षिणालम्भे ऋषभोऽसीति । अनुयाजा नव पृषदाज्येन । त्यागा वैश्वदेवपर्वणयुक्ताः। ऊहने-अग्नेः सोमस्य सवितुः सरस्वत्याः पूष्ण इन्द्राग्न्योर्महेन्द्रस्य विश्वकर्मण उज्जितिमनु० अग्निः सोमः सविता सरस्वती पूषेन्द्राग्नी महेन्द्रो विश्वकर्मा तमपनुदन्त्विवति। उपांशुदेवतानामुपांशूच्चारणमन्येषामुच्चैः । प्रस्तरहोमे इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्ण इन्द्राग्निभ्यां महेन्द्राय विश्वकर्मणे देवेभ्य इत्यादि । त्रीणि समिष्टयजूंषि । उक्तादन्यत्सर्वमत्र वरुणप्रघासवत् कर्मापवर्गान्तम् । इति महाहविः ।

सप्तमी कण्डिका ॥ ७ ॥

---

अथ पित्र्येष्टिरुच्यते । सा चापराह्णे भवति । तत्र त्रीणि हवींषि भवन्ति । पितृभ्यः सोमवद्भ्यः षट्कपालः पुरोडाशः, सोमाय वा पितृमते, इति प्रथमहविषि देवताविकल्पः । पितृभ्यो बर्हिषद्भ्यो धानाः । पितृभ्योऽग्निष्वात्तेभ्यो मन्थः । अपत्नीकः । पत्नीकर्तृकपदार्थवर्जितोऽयं पितृयज्ञो भवतीत्यर्थः ।

**ब्रह्मयजमानयोश्च ॥३॥ पूर्ववद्वा ॥४॥ अपत्नीकः ॥५॥ दक्षिणाग्निराहवनीयवत् ॥ ६ ॥ पूर्वेणाहवनीयं प्रणीताः**

दक्षिणाग्निरत्राहवनीयवद् भवति । सर्वमाहवनीयकार्यं दक्षिणाग्नौ कर्त्तव्यम् । तत्र पूर्वं सर्वेषामृत्विग्यजमानानामपसव्यकरणम् । प्रतीष्ट्युद्धरणपक्षे प्राचीनावीती पञ्चभूसंस्कारान्कृत्वा दक्षिणाग्निमुद्धरति पितृयज्ञार्थं गार्हपत्यादिति दक्षिणामुखः । ततो यज्ञोपवीती प्राङ्मुख आहवनीयमुद्धरति । अध्वर्युर्यजमानो वा यः पिण्डदानं करिष्यन् भवति तस्य नीविकरणम् ।

दक्षिणाग्नौ दक्षिणामुखस्याग्न्यन्वाधानं नान्यत्र । पद्मासनोपकल्पनम् । आहवनीयस्य पुरस्ताद् ब्रह्मवरणम् । प्राङ्मुखो यजमानो दक्षिणामुखो ब्रह्मा पितृयज्ञेनाहं यक्ष्ये तत्र भूपत इति । ततो ब्रह्मा उत्थाय दक्षिणेनाहवनीयमागत्य दक्षिणाग्नेः पुरस्तात्प्रत्यङ्मुखो दक्षिणाग्न्यभिमुखः समन्त्रकं दक्षिणाग्रमासनं संस्कृत्योपविशति । उत्तरेण यजमानः । अथवा ब्रह्म वरणस्थानादुत्थायाहवनीयं दक्षिणेन गत्वा दक्षिणाग्निमुत्तरेण दक्षिणेन वा गत्वा दक्षिणाग्नेः पश्चात्प्राङ्मुख उपविशति । तत उत्तरतो यजमानः प्राङ्मुख एव । एवं ब्रह्मयजमानयोरुपवेशनस्थानविकल्पः । दक्षिणाग्नेः पुरस्तात्पश्चाद्वा । यदा पुरस्तादुपविशतः तदा वक्ष्यमाणेषु कालेषु पुनःपुनर्विपर्यासं कुरुतः । यदा चादौ पश्चादुपविशतस्तदा इष्टिसमाप्तिपर्यन्तं तत्रैवोपविशतो न वक्ष्यमाणं विपर्यासं कुरुतः ।

ततो व्रतग्रहणम् । ततो गार्हपत्यदक्षिणाग्नी अन्तरेण गत्वा दक्षिणाभिमुखस्तिष्ठन् दक्षिणाग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपत इदमहमिति वा । ततः स्वासन उपविशति ।

ततोऽध्वर्युश्चमसमुदकेन पूरयित्वा गार्हपत्यस्य पुरस्ताद्दक्षिणाग्रं निधाय दक्षिणामुख आलभते भूतस्त्वेति । ब्रह्मजप इत्यादि (२. ३. १) । अत्र सर्वमपसव्येन दक्षिणाभिमुखेनोपांशु च कर्तव्यम् ।

पूर्वेणाहवनीयं प्रणीताः परिहृत्य दक्षिणाग्नेः पुरस्ताद्दक्षिणाग्रं चमसं निदधाति । अत्राहवनीयात्पूर्वेण प्रणीतादिनयनं गार्हपत्याहवनीययोरव्यवायार्थम् । एवं यत्किञ्चिदत्रार्थववत्स्फ्यतृणाग्निस्रुक्स्रुवाज्यादि दक्षिणाग्निं प्रति नीयते तत्सर्वमाहवनीयं पूर्वेणैव नेयम् । अत्र दक्षिणा दिक् प्राची, प्रतीची दक्षिणा, उत्तरा प्रतीची, प्राची उदीचीत्येवं दिशां विपर्यासो ज्ञेयः । तेनात्र दक्षिणां दिशं प्राचीं विचिन्त्य तत आरभ्य प्रदक्षिणं प्राक्संस्थं परिस्तरणं कर्तव्यम् । दक्षिणत उत्तरतश्च प्रागग्राणि तृणानि ।

परिहरति ॥ ७ ॥ अर्थवच्च ॥ ८ ॥ पितृभ्यः सोमवद्भ्यः षट्कपालः ॥ ९ ॥ सोमाय वा पितृमते ॥१०॥ पितृभ्यो बर्हिषद्भ्यो धानाः ॥११॥ पितृभ्योऽग्निष्वात्तेभ्यो मन्थः

---

पूर्वापरयोर्दक्षिणाग्राणि । यच्चात्र प्राक्संस्थं दक्षिणाग्रमित्येवमाद्युच्यते तत्र प्राकृता दिशो ज्ञेयाः, न विपर्यस्ताः । एवमेकस्यैव दक्षिणाग्नेः परिस्तरणं नेतरयोः ।

ततः पात्रासादनं गार्हपत्यदक्षिणाग्न्योरुत्तरतः प्राक्संस्थं दक्षिणाग्राणामासादनम् । शूर्पाग्निहोत्रहवणि, स्फ्यः, भर्जनसतमानि षट्कपालानि । शम्याकृष्णाजिनम्, उलूखलमुसलम्, दृषदुपलम्, पात्रीधान्यम्, यवाः, पवित्रार्थो धृष्टिः, संयवनोदकम्, संयवनार्थं निवान्यापयश्च । तां पूर्वं दुग्ध्वा तत्पय आसाद्यते । स्थालीमाज्यं च, वेदश्च, दक्षिणार्थोऽन्वाहार्यः, उदकूतृणमग्निः, इध्मकाष्ठान्यष्टादशैव, बर्हिः स्रुवो जुहूः, उपभृद्ध्रुवा, गोकर्णाकारं शृतावदानम्, पुरोडाशपात्र्यसितश्च ॥ एकैकशो हवींष्यासादयती"त्यापस्तम्बवचनात् । परिधयस्त्रयः कुशास्तीर्णं पीठम्, उदपात्रम्, एकशलाकापक्षे प्राशित्रहरणे इडापात्री च ।

ततो गार्हपत्यस्य पश्चाद्दक्षिणाग्रां सहविष्कां पात्रीं निधाय दक्षिणाग्रं स्फ्यमधः प्रेरयेत् । ततः शूर्पाग्निहोत्रहवयोरादानम् । गार्हपत्ये प्रतपनम् । उदकालम्भः । गमनम् । गार्हपत्यस्य पश्चाद्दक्षिणामुख उपविश्य पात्रीबिले धूरसीत्यादि जपति । तत्रोहः—पितॄणामसि वह्नितमं पितृहुतममिति । हविष ईक्षणम् । अपद्रव्यनिरसनम् । आलम्भनम् ।

ग्रहणे—पितृभ्यः सोमवद्भ्योजुष्टं गृह्णामि, सोमाय पितृमते जुष्टं गृह्णामीति वा । अस्मिन्पक्षे एतत्सर्वमपसव्येन कर्तव्यमिति शाङ्खायनः ( ३. १६. ११-१३ ) । प्राचीनावीत्येता देवता यजति पितृमन्तं परिहाप्येति । पितृभ्यो बर्हिषद्भ्यो जुष्टम् । पितृभ्यो ऽग्निष्वात्तेभ्यो जुष्टम् । पितृतीर्थेनाग्निहोत्रहवण्यां प्रक्षेपः । ग्रहणं प्रकृतिवत्त्रिर्मन्त्रेण चतुर्थं तूष्णीमिति । शेषाभिमर्शनम् । दक्षिणाया ईक्षणम् । उत्थानम् । उत्तरतो गत्वा गार्हपत्यदक्षिणाग्न्योरुत्तरतो हविषामादनं पृथिव्यास्त्वेति । उभयोरत्र अपणत्वात् ।

प्रोक्षणयुदिङ्गने यज्ञपतिं देवपितृयुधमिति । प्रोक्षणे-पितृभ्यः सोमवद्भ्यस्त्वा जुष्टम् । सोमाय वा पितृमते त्वेति वा । पितृभ्यो बर्हिषद्भ्यस्त्वा जुष्टम् । पितृभ्यो ऽग्निष्वात्तेभ्यस्त्वा जुष्टम् । दैव्याय पित्र्याय कर्मणे शुन्धध्वन्देवपितृयज्यायै इति ( १. १३ ) पात्रप्रोक्षणे ऊहः । प्रति

॥१२॥ चतुर्वा ग्रहणम् ॥१३॥ गार्हपत्यस्य पुरस्तादवहननपेषणे ॥१४॥ दक्षिणार्द्धे कपालोपधानम् ॥१५॥ धानाभर्जनं दक्षिणाग्नौ ॥ १६ ॥ श्रपणपेषणाविपर्यासेऽपि धर्माः ॥१७॥ अभिमृश्यार्धाः पिष्ट्वा निवान्यादुग्धे स-

---

पात्रप्रोक्षणपक्षे तु यानि केवलप्रधानार्थानि पात्राणि तेषु पित्र्याय कर्मणे शुन्धध्वं पितृयज्याय। इति मन्त्रः। वज्राज्यस्थालीवेदवेदितृणाग्निस्रुवजुहूपद्ध्रुवा इध्मबर्हिः परिधय आज्यं होतृषदनमित्येतेषु दैव्याय पित्र्याय। शेषेषु पित्र्यायेति। आहवनीयं पूर्वेण हृत्वा ऽसञ्चरे प्रोक्षणीर्निदधाति।

ततः कृष्णाजिनादानम्। अवधूननम्। अपां स्पर्शः। दक्षिणाग्ने रुत्तरतो गार्हपत्यस्य पुरस्तादुदग्ग्रीवस्य कृष्णाजिनस्यास्तरणम्। सव्याशून्ये उलूखलनिधानम्। हविरावपने अग्नेस्तनूरसि वाचो विसर्जनं पितृवीतये त्वा गृह्णामीति ( १. १५ )। बृहद् ग्रावेति ( १. १५ ) मुसलादानम्। स इदमित्यवधानमन्त्रे ऊहः स इदं पितृभ्यो हविरिति (१.१५)।

अध्वर्युरुत्थाय दक्षिणामुखोऽवहननं कुर्वन् हविष्कृदाह्वानं करोति। अग्नीत् कुक्कुटाहननं कृत्वा दक्षिणामुखस्तिष्ठन्नवहन्ति। शूर्पादानादि सकृत्फलीकरणान्तम्। एकबीजपक्षे विभज्यालम्भः। इदं पितॄणां बर्हिषदां पितॄणामग्निष्वात्तानां च। ( १. २० ) अध्वर्योः पुनः कृष्णाजिनादानादि पेषणारम्भः। तत्र धान्यमसि धिनुहि पितॄनिति (१. २०) विशेषः।

अग्नीधो दक्षिणाभिमुखोपविष्टस्य कपालोपधानम्। उपवेषमादायाङ्गाराणामुत्तरतः करणम्। आ पितृयज्ञं वहेत्यङ्गारस्याहरणम् (१. १६)। गार्हपत्यस्य दक्षिणार्द्धे कपालोपधानम्। ध्रुवमसीति ( १. १७ ) मध्यमम्, उत्तरतो द्वितीयम्, दक्षिणतस्तृतीयम्, मध्यमस्य पश्चाच्चतुर्थम्, तस्मादुत्तरतः पञ्चमम्, मध्यमात्पूर्वं षष्ठम्, ततो दक्षिणाग्नौ कर्परोपधानं प्रथमकपालधर्मेण। तत्राङ्गाराणां प्राक्करणाभावः। स्वस्थानस्थानामङ्गाराणामुपर्येव कर्परोपधानम्। अग्ने ब्रह्मेत्यङ्गारस्य ( १. १८ ) कर्परस्योपरि निधानम्। अभ्यूहनाभावः कर्परे। उदकोपसर्जनीनां गार्हपत्येऽधिश्रयणम्, निवान्यादुग्धस्य दक्षिणाग्नौ। यजमानस्याज्यनिर्वापः।

वेदबन्धे ऊहः देवपितृभ्यो वेदोऽभवदिति ( २. २ । )। अध्वर्युर्गार्हपत्यस्य पुरस्तादुदग्ग्रीवं कृष्णाजिनमास्तीर्य तत्र प्रोहणान्ते पेषणं कृत्वा पिष्टानामीक्षणं करोति। ततः पात्र्यां संवापं कृत्वा केवलां पात्रीं गृहीत्वा पूर्वेणाहवनीयं गत्वा वेदिमध्ये उपविशति, गार्हपत्यस्योत्तरतो वा।

**कृन्मथित एकशलाकया मन्थः ॥१८॥ अग्रहणं मन्थस्य ततोऽर्धाः पिंषन्तीति श्रुतेः ॥१९॥ ग्रहणं वा चोदितत्वात् ॥ २० ॥ दक्षिणेन दक्षिणाग्निं परिवृतमुदग्द्वारं, तन्मध्ये वेदिं करोत्यवान्तरदिक्स्रक्तिमाप्त्यान्ते ॥२१॥**

---

अग्नीत् स्फ्यं गृहीत्वोपसर्जनीः प्रागुद्वास्यानीय निनयति। अध्वर्योः प्रतिग्रहणादि। आज्यस्य पुरोडाशस्य च गार्हपत्ये ऽधिश्रयणम्। धानार्थानां यवानां दक्षिणाग्नौ कर्परे। तत्र घर्मा स्थ विश्वायुष ( १. २२ ) इत्यूहः।

ततो गार्हपत्यादङ्गारमादाय तेनैवाज्यपुरोडाशयोर्दक्षिणाग्न्यधिश्रितधानानामुपर्यग्निकरणम्। गार्हपत्येऽङ्गारस्य प्रतिप्रक्षेपः। उदकालम्भः। पुरोडाशश्रयणम्। देवस्वेति दक्षिणाग्न्यादीप्तानां तृणानां कर्परस्याधस्तात्प्रेरणम् देवो वः सविता श्रपयत्विति। मा भेरिति ( १२३ ) पुरोडाशस्यालम्भः। मा भैष्ट मा संविग्ध्वमिति धानानाम्। ततो धानानामुद्वासनम्। विभज्यालम्भः। इदं पितॄणां बर्हिषदाम्। इदं पितॄणामग्निष्वात्तानाम्।

ततो धान्यमसि धिनुहि पितॄ ( १. २० ) नित्यग्निष्वात्तानां भागं दृषदोप्य तस्य पेषणं प्रोहणान्तम्। पिष्टानामीक्षणम्। धानानां सपवित्रपात्र्यां संवापः पिष्टानाम्। ततोऽग्नीन्निवान्यादुग्धं प्रागुद्वास्य तत्रैवोपविष्टस्याध्वर्योर्हस्ते पवित्रयोरुपरि निनयति । प्रतिग्रहमन्त्रे ऊहः। सम्पय ओषधीभिः समोषधयो रसेन। सर्ठ० रेवज्जगतीभिः पृच्यतां ँ संमधुमन्मधुमतीभिः पृच्यतामिति।

ततः ( १. २१ ) एकशलाकया सकृदप्रदक्षिणं मन्थनं जनयत्यै त्वेति (१. २२) मन्त्रेणेति जीर्णः सम्प्रदायः। मन्थ आडूवालिताः सक्तवः। सकृदुपमथितः सकृदाडूवालितः। अतः पूर्णपात्रादौ पूर्वं दुग्धं निनीय तन्मध्ये धानापिष्टं प्रक्षिप्यैकशलाकया सकृदाडूवालनं क्रियत इति रहस्यम्। एवंरूपमेवैतद्धविः। अतो विहितं संयवनं कृत्वा पुरोडाशरूपः क्रियत इति न युक्तम्। अतः पूर्वं गर्तवति पात्रेऽग्नीधो निवान्यादुग्धनिनयम्। पवित्राभ्यां प्रतिग्रहणम्। ततः पिष्टानां तत्र संवापः। ततो जनयत्यै त्वेति ( १. २२ ) शलाकयाऽऽडूवालनमिति क्रमो वचनात्। ततः पाण्यङ्गलिप्रक्षालनम्। अतमेरुरिति ( १. २३ )। पुरोडाशस्याभिवासनम्। गार्हपत्यादभितपनम्। आहवनीयं पूर्वेण दक्षिणत आरभ्योदक्संस्थं निनयनम्।

**दक्षिणाग्निं मध्येऽस्याः करोति ॥२२॥ प्रणीताऽनुहरणं ब्रह्मयजमानौ चानुगच्छतः ॥ २३ ॥ स्फ्यादानादि करोति ॥२४यज्ञोपवीत्याज्यग्रहणे ॥२५॥ द्विर्वोपभृति ॥ २६ ॥ प्रागग्रन्थि बर्हिः ॥ २७ ॥ विस्रंसस्य यूनं पाग्रे गृहीत्वा त्रि स्तृणन्नग्निं पर्येति ॥२८॥ प्रस्तरमात्रं शिष्ट्वा तावत्प्रतिपर्येति ॥२९॥ तं स्तृणात्यविधृतिम् ॥३०॥ प्राक्सं**

---

तत आहवनीयं पूर्वेण गत्वा दक्षिणेन दक्षिणाग्निमर्थात्परिमाणमुरुग्द्वारं चतुष्कोणं परिवृतं कृत्वा तन्मध्ये दर्शपौर्णमासिकीं वेदिं कुर्यात्। तत्र प्रकृतिवद्वेदिमानम्। वेदिपरिसमूहनम्।

उत्करकरणम्। ततो वेदिमध्ये दक्षिणाग्निखरं कृत्वा तत्र सकृत्परिसमूहनादीन् पञ्च संस्कारान् कृत्वा कर्परादिनोपर्यधिश्रितकर्परसहितमेव दक्षिणाग्निमानीय मध्ये स्थापयेत्। प्रणीतानामनुहरणं कृत्वा दक्षिणाग्नेः पुरस्तात्स्थापनम्। ब्रह्मयजमानयोश्चानुगमनम्।

ततो वेदिमध्ये स्थापिते दक्षिणाग्नावन्वाहार्याधिश्रयणम्। ततः सतृणवज्रादानम्। तत्रोहः—आददेऽध्वरकृतं देवपितृभ्य इति (१. २४)। ततो वेद्यां प्रागग्रस्य तृणस्य निधानम्। प्रहरणादि पृथिवि देवपितृयजनीति (१. २५)। अपाररुं पृथिव्यै देवपितृयजनादित्यूहः (१. २६) सतृणपुरीषस्योत्करे करणान्तम्।

पूर्वपरिग्रहः। तत्र सुगा वो देवाः पितरः सदनानि सन्त्वस्यामित्यूहः। लेखाकरणमध्वर्योः। हरणसंमर्शने अग्नीदेव करोति नाध्वर्युः। खननम्। उत्तरपरिग्रहः। दक्षिणत आरभ्योदक्संस्थमनुमार्जनम्। प्रोक्षणीप्रैषः। तत्र पत्नीं संनह्येति न भवति। स्फ्योदकहरणम्। पाण्योरवनेजनम्। अपरेण प्रणीतानामध्वर्योः स्फ्यासादनम्। इध्माबर्हिषोर्दक्षिणाग्न्योरग्नीधः सादनम्। तत्रापि पश्चादिध्मं पूर्वं बर्हिः। स्रुवादीनां संमार्गः। संमार्जनानां प्रासनम्।

आज्योद्वासनम्। आहवनीयं पूर्वेणानीयाध्वर्योरग्रे निधानम्। अदब्धेनेत्यध्वर्युराज्यमवेक्षते। आज्यसंस्कारस्यानिषेधात्। तत्र सुहृद्देवपितृभ्य इत्यूहः कार्यः। ततोऽग्नीद्वेद्यामाज्यमासादयति प्रोक्षणीनामुत्तरतः। तत आज्योत्पवनम्। प्रोक्षण्युत्पवनम्। आज्यावेक्षणम्।

अध्वर्युः सव्यं कृत्वाऽऽज्यानि गृह्णाति। चतुर्जुह्वामुपभृत्यष्टकृत्वो द्विर्वा। चतुर्ध्रुवायाम्। तत्रैव मन्त्रस्योहः प्रियं देवपितॄणामनाधृष्टं देवपि

स्थं हविरासादनम् ॥ ३१ ॥ सामिधेनीप्रैषाद्याऽऽज्यभा-
गाभ्यां यज्ञोपवीतिनः सर्वे ॥३२ ॥ पश्चात्परीतो ब्रह्मय-
जमानौ पुरस्तादग्नीत् ॥३३॥ आश्राव्य सीद होतरित्ये-

---

तृयजनमसीति (१. २१), श्रौवाज्यस्य देवपित्रर्थत्वात्। ततोऽध्वर्युरप-
सव्यं कृत्वेध्मवेदिप्रोक्षणं करोति। बर्हिषः प्रतिग्रहणम्। दक्षिणाग्रं प्राग्ग्र-
न्थिमर्धमासाद्य प्रोक्षति। मूलाग्रसेकः। प्रणीतासु पवित्रकरणम्।

ततो बर्हिर्विस्रंस्य सन्नहनं विस्रंस्योभयमग्रे गृहीत्वोत्तरापरकोणा-
दारभ्य प्रदक्षिणं त्रिः परितः स्तृणन्नग्निं पर्येति। स्वासस्थां देवपितृभ्य
इत्यूहः (२. २)। सकृदेवात्र मन्त्रः। सकृदेव सर्वं बर्हिरादाय सान्तत्येन
स्तरणात्। विच्छिद्य पुनरादाय स्तरणे हि द्रव्यभेदान्मन्त्रावृत्तिरुक्ता,
नात्र तथा। तस्मात्सकृदेव मन्त्रेण स्तरणं द्विस्तूष्णीम्। अत एवाह
सम्प्रदायकारः सकृन्मन्त्र इति। अत्र स्तरणं कुर्वता सन्नहनं दक्षिणश्रोणि-
देशे प्राकृते स्थाने स्तरणीयम्। एवमप्रदक्षिणं त्रिः परिस्तीर्य प्रस्तरमात्रं
बर्हिः शिष्ट्वा त्रिरेव प्रतिपर्येति। ततः सकृदितरथावृत्तिः।

तत इध्मात्समिधमादायाहवनीयकल्पनम्। उल्मुकोदूहनम्। परि-
धिपरिधानम्। मित्रावरुणौ त्वा पुरस्तात्परिधत्तामित्यूहः ( २. ३ ) स्पृ
श्यास्पृश्ययोराधानम्। सूर्यस्त्वा दक्षिणतः पात्वितीक्षमाणजपे (२. ५)
ऊहः। सम्प्रदायपद्धतौ मित्रावरुणौ त्वा सूर्य्यस्त्वेत्यनयोरूहो नास्ति।
कर्कभाष्ये तु लिखितोऽस्ति। आवृत्त्य विधृत्योः स्तरणं विनैव दक्षि-
णाग्रस्य प्रस्तरस्य स्तरणम्।

ततो जुह्वा आसादनम्। ततः पूर्वामुपभृतं, ततः पूर्वां ध्रुवाम्। तत
उत्थायाज्यस्थालीं स्रुवं चादाय पूर्वेणाहवनीयं गार्हपत्यसमीपे गत्वा पुरो-
डाशविभस्मीकरणादि कपालोद्वासनान्ते विशेषः। यस्ते प्राणः पशु० ष्टः
पितॄणां विष्ठाम० इत्यूहः ( २. ८. १४ )। पितॄन्सोमवतो गच्छ। सोमं
पितृमन्तं गच्छेति वा। पितॄन्बर्हिषदो गच्छ। पितॄनग्निष्वात्तान् गच्छेति।

ततः कपालाञ्जनम्। आहवनीयं पूर्वेण गत्वा कर्पराञ्जनम्। प्रत्या-
गत्य कपालान्युद्वास्य तथैव गत्वा कर्परोद्वासनम्। हविरादि सर्वं प्रयो-
जनवत्पूर्वेणाहवनीयं नयेत। तत आज्यस्थालीपुरोडाशादीनामासा-
दनं प्राक्संस्थम्। सर्वेषामालम्भः। आत्मालम्भः। उदकालम्भः।

उत्तरेण वेदिं होतृषदनस्थापनम्। एहि होतरित्यामन्त्रणम्। ततः
सर्वेषां सव्यकरणम्। यदि पुरा ब्रह्मयजमानौ पुरस्तादुपविष्टौ भवत
स्तर्हि तत उत्थाय वेदिं दक्षिणेन गत्वा पश्चात्प्राङ्मुखावुपविशतः। अग्नी

च ब्रूयात् ॥१४॥ अपबर्हिषः प्रयाजा अनुयाजाश्च ॥१५॥ असमानयनं वा बर्हिःसंयोगात् ॥१६॥८॥

प्रत्यगतीत्य जुहोति ॥१॥ हविर्भिश्चरिष्यन्तः प्रतिविपर्यन्ति ॥२॥ सर्वेभ्योऽवद्यति यथापूर्वं ; सोमवद्भ्यो

---

त्पश्चिमपार्श्वाद्दक्षिणपार्श्वेनागत्य पुरस्तात्तिष्ठति ।

ततोऽग्नये समिध्यमानायानुब्रूहीति ( ३. १. १. ) प्रैषः । यजमानस्य सन्तन्वन्निति प्रैषः ( ३. १. ६ ) । इदमहं तृतीयेनेत्यववाधनम् (३.१.२) । पञ्चदशानामिध्मकाष्ठानां समं त्रिधा विभक्तानां प्रतिप्रणवं प्रक्षेपः । एकस्यानुयाजार्थं परिशेषणम् । वेदेनाग्नेरुपवाजनम ।

पूर्वाघारः । अग्निसंमार्गप्रैषः । अग्निसंमार्गः । अञ्जलिकरणम् । उत्तराघारः । तत्रास्कन्नमद्य देवपितृभ्य आज्यं० संभ्रियासम् ( २. ८ ), देवपितृभ्य इन्द्र आज्येन हविषा भूत् स्वाहेत्यूहः (२.८) । पत्य ध्रुवासमञ्जनम् । स्रुचोर्निधानम् । इध्मसन्नहनान्यादायाश्राव्य सीद होतरित्येव प्रैषः । न होतृवरणम् ।

स्रुगादापने पठिते जुहूपभृतावादाय प्रत्यगतिक्रम्याश्राव्य समिधो यजेत्याह । बर्हिर्वर्जिताश्चत्वारः प्रयाजाः । त्यागा अनुमन्त्रणानि च पूर्ववत् । चत्वारो ममेत्यनुमन्त्रणस्याप्यभावः । उत्तमे प्रयाजे अष्टगृहीतपक्षे समानयनम् । द्विर्गृहीतपक्षे जौहवशेषेणैव । तत्र इदमग्नये सोमाय पितृभ्यः सोमवद्भ्यः पितृभ्यो बर्हिषद्भ्यः पितृभ्योऽग्निष्वात्तेभ्यो देवेभ्य आज्यपेभ्यः, पञ्च मम न तस्येत्यादि ।

तत आज्यभागौ । आज्यभागानन्तरं सर्वे अपसव्यं कुर्वन्ति । यदि ब्रह्मयजमानौ पुरस्तादागत्य पश्चादुपविष्टौ भवतस्तर्हि तथैव प्रत्यागत्य पुरस्तात्प्रत्यङ्मुखावुपविशतः । अग्नीद्दक्षिणपार्श्वेन गत्वा वेदेः पश्चात्प्राङ्मुखस्तिष्ठति । यदि च प्रथमत एव पश्चादुपविष्टौ तर्हि तत्रैव तिष्ठतः । अग्नीदपि पुरस्तादेव तिष्ठति ।

इति पञ्चमस्य अष्टमी कण्डिका ॥ ८ ॥

---

ततोऽध्वर्युः पितृभ्यः सोमवद्भ्योऽनुब्रूहीत्याह । ततो जुह्वामुपस्तीर्य गोकर्णाकारेण शृतावदानेन पुरोडाशधानामन्थेभ्यः क्रमेण मध्यादेकैकमवदानं गृहीत्वा सहैव जुह्वां प्रक्षिप्योपरिष्टाद् द्विरभिघारयति । ततः सर्वहविःष्ववदानक्रमेण प्रत्यभिघारणं कृत्वा तत एवोत्थायानतिक्रम्याश्राव-

मध्यात्सकृत्सकृत्सहावद्धाति ॥ ३ ॥ द्विरभिघारण-मनतिक्रमणं च ॥ ४ ॥ सोमाय वा पितृमते ॥ ५ ॥ एवं ब-र्हिषद्भ्य उत्तरतो धाना-मन्थ-पुरोडाशानाम् ॥ ६ ॥ अ-ग्निष्वात्तेभ्यो दक्षिणतो मन्थ-पुरोडाश-धानानाम् ॥७॥ पुरस्तादग्नये कव्यवाहनाय यथापूर्वꣳ स स्विष्टकृत् ॥८॥ ओꣳस्वधेत्यस्तु स्वधेति वा ऽऽश्रुतप्रत्याश्रुते, स्वधा नम इति वषट्कारः ॥ ९ ॥ मन्थमुपहूय होताऽध्वर्युर्ब्रह्माऽग्नी-द्वघ्राय निदधाति ॥ १० ॥ प्राशित्रमवदायेडां वा सर्वे प्राश्नन्ति वा ॥११॥ वेदिं त्रिः परिषिञ्चत्युदपात्रेणाध्व-

---

येत्यस्य स्थाने ॐस्वा३धा इत्याह । अस्तु स्वा ३धा इत्यग्नीत्प्रत्या-श्रावयति ।

ततः पितॄन् सोमवतो यजेत्यध्वर्युराह । स्वा३धा नम इति होत्रा वषट्कृते दक्षिणामुखो बहिर्वेदि स्थित एव जुहोति । इदं पितृभ्यः सोमवद्भ्यो न मम । उपस्तरणमवधानं प्रत्यभिघारणं होमश्च सर्वं पितृतीर्थेन कर्तव्यम् ।

अथवा सोमाय पितृमतेऽनुब्रूहि । सोमं पितृमन्तं यजेति विकल्पः । सव्येन यागः । तत उपविश्य पितृभ्यो बर्हिषद्भ्योऽनुब्रूहीत्याह । जुह्वा-मुपस्तारः । धानामन्थपुरोडाशानामुत्तर(?)प्रदेशात्क्रमेणैकैकमवदानम-वदाय सहैवावद्धाति । ततो द्विरभिघारः । अवदानक्रमेण प्रत्यभिघारः । नातिक्रमणम् ।

तत एवोपोत्थाय ॐ ३ꣳस्वा३धा । अस्तु स्वा३धा । पितॄन् बर्हिषदो यज । वषट्कृते पितृतीर्थेन जुहोति । इदं पितृभ्यो बर्हिषद्भ्यः ।

तत उपविश्य पितृभ्योऽग्निष्वात्तेभ्योऽनुब्रूहि । जुह्वामुपस्तीर्य मन्थ-पुरोडाशधानानां दक्षिणदेशादेकैकमवदानं क्रमेणावदाय सहैव स्रुच्यव-धाय द्विरभिघार्यावदानक्रमेण हवींषि प्रत्यभिघार्य नातिक्रामति । तत ए-वोत्थाय ॐ ३ꣳस्वा३धा, अस्तु स्वा३धा, पितॄनग्निष्वात्तान्यजेत्याह । वषट्कृते पितृतीर्थेन होमः । इदं पितृभ्योऽग्निष्वात्तेभ्यः ।

ततोऽग्नये कव्यवाहनायानुब्रूहि । जुह्वामुपस्तीर्य पुरोडाशधानानाम-न्थानां पूर्वस्मात्प्रदेशात्क्रमेणैकैकमवदानं श्रुतावदानेनावदाय सहैव स्रुच्यवद्धाति । ततो द्विरभिघारयति । न हविषां प्रत्यभिघारः । तत एवोपोत्थाय ॐ३ꣳस्वा३धा । अस्तु स्वा३धा । अग्निं कव्यवाहनं यज ।

**र्युर्यजमानो वा ॥ १२ ॥ स्रक्तिषु पित्र्यवनेजनं परिषिच्य परिषिच्य पूर्ववदुत्तरापरस्यां प्रथमम् ॥ १३ ॥ सव्ये समवदाय सर्वेभ्यो यथाऽवनिक्तं पिण्डान्ददात्यसावेतत्त**

वषट्कृते पितृतीर्थेन पूर्वार्द्धे इतराहुतिभिरसंसृजन् जुहोति ।

ततः स्रुचोर्निधानम् । सञ्चराभ्युक्षणम् । ततो मन्थैकदेशं होतुर्हस्ते समर्पयति । होता चेडोपहूतेत्यादि तस्मिन्नुपहूत इत्यन्तं पठित्वा तं मन्थमवघ्रायाध्वर्यवे प्रयच्छति । अध्वर्युस्तमवघ्राय ब्रह्मणे प्रयच्छति । ब्रह्मा तमवघ्रायाग्नीधे प्रयच्छति । अग्नीत्तमवघ्रायोत्तरे प्रक्षिपति । एतावदेव कुर्वन्ति । न प्राशित्रेडाषडवत्तभागानिति । अथवा प्राशित्रादि सर्वमवदाय भक्षणकालेऽवघ्राणमात्रं कुर्वन्ति न भक्षणम् । अथवा दर्शपूर्णमासवत् प्राशित्रमिडां चावद्यन्ति भक्षयन्ति चेति पक्षत्रयम् ।

ततो मार्जनमवघ्राणपक्षेऽपि । पवित्रयोः प्रस्तरे करणम् । अन्वाहार्यमभिघार्योद्वास्यान्तरा ब्रह्मयजमानौ हृत्वा वेद्यां निधायालभते । ततोऽपसव्येनैव दानम् । अस्य पितृयज्ञस्य समृद्ध्यर्थमन्वाहार्यं दक्षिणां ब्रह्मणे इत्यादि ।

ततोऽध्वर्युयजमानयोर्मध्ये येन पूर्वं नीवीकरणं कृतं भवति स इदानीमुदपात्रमादाय वेदेरुत्तरापरश्रोणेरारभ्याप्रदक्षिणं परिषिच्योपविश्योत्तरापरश्रोणौ यजमानस्य पितरमवनेजयति । अमुकसगोत्र यजमानपितरमुकशर्म्मन्नवनेनिक्ष्वेति ।

ततः प्रदक्षिणमितरथाऽऽवृत्तिं कृत्वा पुनर्दक्षिणापरकोणादारभ्योदपात्रेणाप्रदक्षिणं वेदिं परिषिच्य दक्षिणापरकोणे यजमानस्य पितामहमवनेजयति । अमुकसगोत्र यजमानपितामहामुकशर्म्मन्नवनेनिक्ष्वेति ।

ततः प्रदक्षिणमितरथाऽऽवृत्तिं कृत्वा पुनः पूर्वदक्षिणकोणादारभ्याप्रदक्षिणमुदपात्रेण वेदिं परिषिच्य पूर्वदक्षिणकोणे यजमानप्रपितामहमवनेजयति, अमुकसगोत्र यजमानप्रपितामहामुकशर्म्मन्नवनेनिक्ष्वेति । ततः प्रदक्षिणमितरथाऽऽवृत्तिः ।

ततः पुरोडाशस्यावदानमात्रं गृहीत्वा सव्ये पाणौ कृत्वा पुनर्धानानामवदानमात्रं गृहीत्वा सव्ये पाणौ कृत्वा ततो मन्थस्यावदानमात्रं गृहीत्वा सव्ये पाणौ कृत्वा मिश्रीकृत्य पिण्डत्रयं बध्नीयात् ।

तत उत्तरापरस्यां स्रक्तौ यजमानस्य पित्रे पिण्डं ददाति दक्षिणामुख उपविष्टः । अमुकसगोत्र यजमानपितः अमुकशर्म्मन्नेतत्तेऽ इति । इदममुगोत्राय पित्रेऽमुकशर्म्मणे ।

इति ॥१४॥ उत्तरपूर्वस्यां पाणी निमृष्टेऽत्र पितर इति ॥ १५ ॥ यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोऽन्नमीमद-न्तेत्याहवनीयमुपतिष्ठन्ते द्वाभ्याम् ॥१६॥ मनो न्वाह्वा-मह इति गार्हपत्यं तिसृभिः ॥ १७ ॥ प्राचीनावीती प्रविश्यामीमदन्तेति दाता जपति ॥१८॥ अवनेज्य पूर्व-वत्प्रदक्षिणम् ॥१९॥ नीवीं विस्रंस्य नमो व इत्यञ्जलिं करोति षड् वा नमस्कारान् ॥२०॥गृहान्नः पितरो दत्तेति

---

ततो दक्षिणापरस्रक्तौ यजमानपितामहस्य पिण्डदानम् । अमुकस-गोत्र यजमानपितामहामुकशर्मन्नेतत्त, इति । इदं प्रपितामहायामुक-शर्म्मणे ।

ततः पूर्वदक्षिणस्रक्तौ यजमानप्रपितामहाय पिण्डदानम्। अमुकसगो-त्र यजमानप्रपितामहामुकशर्मन्नेतत्तऽ इति। इदं प्रपितामहायामुकशर्मणे। तत उत्तरपूर्वकोणे पाणी निमार्ष्टि । अत्र पितर इति मन्त्रेण ( ३. ३१ ) । ततः सर्वे सयजमाना ऋत्विजः सव्यं कृत्वोत्तरद्वारेण परिवृतमध्यान्नि-[redacted] पश्चादवलोकनमकुर्वन्त आहवनीयं पूर्वेण गत्वोत्तरत आहवनीय-समीपे आगत्याक्षन्नमीमदन्त इति द्वाभ्यामृग्भ्यामाहवनीयमुपतिष्ठन्ते ।

साकमेधार्थोद्धरणपक्षे मध्यमाहवनीयस्यैवोपस्थानम् । तस्यैव सर्व-साधारणत्वात् । औत्तरवेदिकस्य महाहविरर्थमेव प्रणीतत्वेनापवृक्त-त्वात् । ततो गार्हपत्यं प्रतिपरेत्य मनो न्वाह्वामह इति तिसृभिः सर्वे ऋ-त्विजः सयजमाना गार्हपत्यमुपतिष्ठन्ते । ततः सर्वेऽपसव्यं कृत्वा परिवृतं प्रविशन्ति । ततोऽध्वर्युर्वा यजमानो वा यः पिण्डदाता सोऽमीमदन्तेति जपति ।

तत उदपात्रं गृहीत्वोत्तरापरश्रोणेरारभ्य प्रदक्षिणं वेदिं परिषिच्यो-त्तरापरश्रोणिपिण्डे पितरं पूर्ववदवनेजयति । ततोऽप्रदक्षिणमितरथा वृत्तिः । ततो दक्षिणापरकोणादारभ्य प्रदक्षिणं परिषिच्य पितामहं पूर्व-वदवनेजयति । ततोऽप्रदक्षिणमितरथावृत्तिः । ततः पूर्वदक्षिणकोणादा-रभ्य प्रदक्षिणं वेदिं परिषिच्य प्रपितामहमवनेज्याप्रदक्षिणमितरथावृत्तिं कृत्वा नीविं विस्रंस्य नमो व इति प्रतिमन्त्रं षडञ्जलीन्कुर्यात् । तत्र मन्त्र-विभागः । नमो वः पितरो रसायेत्येकः । शोषायेति द्वितीयः । जीवायेति तृतीयः । स्वधाया इत्यन्तश्चतुर्थः । घोरायेति पञ्चमः । नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो व इत्येव मन्त्रः षष्ठः । ततो गृहान्नः

**च ॥२१॥ आमन्त्रणादि प्राक् स्रुग्व्यूहनात्प्रयाजवत् ॥२२॥ यज्ञोपवीतिविपर्ययम् ॥२३॥ न प्रस्तरमादत्ते ॥२४॥ अनुप्रहरेत्युक्ते न किञ्चनानुप्रहरति ॥२५॥ तूष्णीमात्मानꣳ संस्पृशति ॥२६॥ उपस्पृश्य परिधीन्नानुप्रहरति ॥२७॥ शंय्वन्तं भवति ॥२८॥ बर्हिःपरिध्यग्नौ प्रास्यति ॥२९॥ हविरुच्छिष्टं च ॥३०॥ अप्सु प्राश्यं वा ॥३१॥९॥**

---

पितर इति देष्मेत्यन्तं जपति । जीवत्पितृकस्य महापितृयज्ञे पितुः पित्रादिभ्य एव पिण्डदानं भवति ।

"उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्सदा सुत" इति स्मृतेः ।

ततः सर्वं सव्यं कुर्वन्ति । ततो यदि ब्रह्मयजमानौ हविःप्रचारकाले पुरस्तादागत्योपविष्टौ भवतस्तदेदानीमुत्थाय वेदिं दक्षिणेन गत्वा पश्चात्प्राङ्मुखावुपविशतः । नो चेत्तत्र स्थितावेव । अग्नीत्पश्चिमपार्श्वाद्दक्षिणेनागत्य पूर्वपार्श्वे तिष्ठति ।

तत उल्मुके समस्य समिधमादाय ब्रह्मन्प्रस्थास्यामीत्याह । बर्हिर्वर्जितौ द्वावनुयाजौ । देवान्यजेति प्रैषः । धारानुयाजहोमः । ततः स्रुचौ स्वस्थाने सादयति । ततोऽपसव्यं कृत्वा समाप्तिपर्यन्तं कर्म कुर्वन्ति ।

व्यूहने-त्पितॄणां सोमवतां पितॄणां बर्हिषदां पितॄणामग्निष्वात्तानामुज्जितिम् । पितरः सोमवन्तः पितरो बर्हिषदः पितरोऽग्निष्वात्तास्तमपनुदन्त्विति विशेषः । पक्षे सोमस्य पितृमतः सोमः पितृमानिति सोमवतः स्थाने । जुहूमभ्युद्य तया परिध्यञ्जनम् । आलभ्याश्राव्य सूक्तवाकप्रैषः । न प्रस्तरप्रहरणम् । सूक्तकान्तेऽग्नीदनुप्रहरेत्याह । अध्वर्युः किमपि नानुप्रहरति प्रस्तरतृणादिकम् । तूष्णीमात्मालम्भः । उदकालम्भः ।

ततः सम्वदस्वेत्यादि शम्योर्ब्रूहीत्यन्तम् । परिधिप्रहरणकाले परिधीनामुपस्पर्शनमेव, न प्रहरणम् । ततः संस्रवाहुतिः । धुरि निधानम् । वेद्यालम्भः । पिष्टलेपहोमपक्षे तद्धोमः । आज्यहोमपक्षे त्वभाव एव । होतुर्वेदविमोकः । आवेदे स्तरणम् । न समिष्टयजुर्होमः । बर्हिषस्तूष्णीं परिधीनां चाग्नौ प्रक्षेपः । प्रणीताविमोकः । राक्षसभागः । व्रतविसर्गः । हविरुच्छिष्टानां ध्रौवस्य चाग्नौ प्रक्षेप उदके वा, प्राशनं वा । ततः सर्वेषां सव्यकरणमुदकोपस्पर्शनं च । इति महापितृयज्ञः ।

इति पञ्चमस्य नवमी कण्डिका ॥ ९ ॥

त्रैयम्बकान्निर्वपति रौद्रानेककपालान् यावन्तो यजमानगृह्या एकाधिकान् ॥१॥ चतुरो वा ॥२॥ उदङ्मुखः सर्वम् ॥३॥ देशांश्च ॥४॥ जुहोतयोऽवषट्कारान् ॥५॥ अक्तान्वा ॥६॥ पात्र्यां कृत्वा दाक्षिणाग्न्युल्मुकमादाय

---

अथ त्रैयम्बका जुहोतय उच्यन्ते। तत्र प्रतीष्टिविहारपक्षे एकस्यैव दक्षिणाग्नेरुद्धरणम्। साधारणविहारपक्षे च यः पित्र्यायां वेदिमध्ये प्रणीतः स एवानीय स्वस्थाने स्थापनीयः। अत्रोदीची प्राचीवत्। प्राची दक्षिणा, दक्षिणा प्रतीची, प्रतीच्युत्तरेत्येवं दिग्विपर्ययः। अत्र सर्वं कर्मोदङ्मुखेन कर्तव्यम्।

अत्र मतद्वयम्। दर्विहोमा दर्शपूर्णमासधर्मका इति कात्यायनः। अपूर्वा इति जैमिनिः। तत्र दर्शपूर्णमासधर्मा दर्विहोमा इति पक्षाश्रयणे त्रैयम्बकेषु शतरुद्रियादिवदग्न्यन्वाधानाद् कर्मापवर्गान्तं सर्वं तूष्णीं भवति। यथा कर्कमतानुसारिणः कुर्वन्ति। अपूर्वपक्षे यावदुक्तमेव भवति नाधिकम्। तदा चाध्वर्युरेक एव सर्वं करोति। यथाश्रुतमिति हरिस्वामिनः।

तत्र ब्रह्मयजमानौ दक्षिणाग्नेः पुरस्तात्प्रत्यङ्मुखावुपविशतः। उत्तरो ब्रह्मा गार्हपत्यस्य दक्षिणतः प्रत्यक्संस्थान्युदगग्राणि पात्राणि, दक्षिणो यजमानः। ततोऽध्वर्युर्गार्हपत्यस्य दक्षिणतः प्रत्यक्संस्थमुदगग्राणि पात्राण्युपकल्पयति–शूर्पाग्निहोत्रहवण्यौ, स्फ्यः, प्रजासंख्यया एकाधिकानि कपालानि, शम्या कृष्णाजिनम्, उलूखलमुसलम्, दृषदुपलम्, पात्रीधान्यं, व्रीहयो यवा वा, पवित्रार्थे धृष्टिः, संयवनोदकम, मध्यमपलाशपत्रम्। शृतावदानम्, महापात्री, दण्डशिक्यादि।

ततो गार्हपत्यस्य पश्चादुदगग्रां पात्रीं निधायोदगग्रं स्फ्यं तस्याधः प्रेरयित्वा शूर्पाग्निहोत्रहवण्यादानम्। प्रतपनम्। पात्रीसमीपे गमनम्। पात्रीबिलालम्भः। हविष ईक्षणम्। अपद्रव्यनिरसनम्। अपद्रव्याभावे हविषोऽभिमर्शनं वा। हविष आलम्भनम्।

प्रजासंख्यात एकाधिकानां चतुर्मुष्टिकानां ग्रहणम्। द्विप्रजाप्रजैकप्रजानां चत्वारि चतुर्मुष्टिकानि। शेषाभिमर्शनम्। उत्तरत ईक्षणम्। उत्थानं, गार्हपत्यं दक्षिणेन हविरासादनम्। पवित्रकरणम्। प्रोक्षणीसंस्कारः। ब्रह्माणमीक्षणादिसङ्केतेन पृष्ट्वा तथैवानुज्ञातो हविः प्रोक्षति यावद्ग्रहणम्। पात्रप्रोक्षणम्। असञ्चरे प्रोक्षणीनां निधानम्।

## चतुष्पथे पलाशपत्रमध्यमेन होमः ॥७॥ सर्वेषामवदानं

कृष्णाजिनादानम्। अवधूननम्। गार्हपत्यमपरेण दक्षिणग्रीवस्यास्तरणम्। सव्याशून्ये उलूखलनिधानम्। हविरावपनम्। मुसलादानम्। मुसलावधानम्। उत्तराभिमुखस्तिष्ठन्नवहन्ति। अग्नीदप्युदङ् तिष्ठन्नेवावघातं करोति। शूर्पादानम्। हविरुद्वपनं, निष्पवनं, विवेचनम्। पुनः कृष्णाजिनादानादि। गार्हपत्यस्य पश्चात्पुनः कण्डनम्। उद्वपनम्। पुनर्निष्पवनम्। तुषनिरसनम्। पात्र्यामावापः, त्रिःफलीकरणम्। कणनिधानम्।

पूर्ववद्दक्षिणग्रीवं कृष्णाजिनमास्तीर्य सव्याशून्ये उदगग्रां दृषदमुपधाय शम्यामधः प्रत्यगग्रां प्रेरयित्वोपर्युपलामुपधाय हविरावापं कृत्वा पेषणं प्रोहणान्तम्। अग्नीदुपवेषमादाय गार्हपत्यस्य पश्चादुदङ्मुख उपविश्य गार्हपत्यस्योत्तरार्द्धे प्रत्यक्संस्थानि कपालानि प्रथमकपालधर्मेणोपदधाति प्रतिपुरोडाशमेकैकम्। तत्राङ्गाराणां दक्षिणत उदूहनम्, उत्तरतः कपालोपधानस्य विधानात्। कपालानामङ्गारैरभ्यूहनम्। उपसर्जन्यधिश्रयणम्।

अध्वर्योः पिष्टानामीक्षणम्। पात्र्यां संवापः। उपसर्जनीनिनयनादि संयवनान्तम्। यावद्गृहीतं पुरोडाशकरणम्। विभज्यालम्भः। अधिश्रयणाद्यभिवासनान्तम्। आज्योदकनिनयनम्। पलाशपत्रशृतावदानमहापात्रीणां संमार्गः। पुरोडाशानां विकल्पेन प्राणदानम्। ततः पात्रीं स्थापयित्वा तस्यामेकस्यामेव सर्वान्पुरोडाशानुद्वास्य कपालान्युद्वासयेत्।

ततो दक्षिणाग्नेरुल्मुकमादाय पात्रीशृतावदानपलाशपत्रनलिकाऽऽसनदण्डशिक्याद्युपयुक्तं सर्वमादाय ब्रह्मयजमानाग्नीदध्वर्यवः सपत्नीका उदीच्यां दिशि चतुष्पथे गत्वा तत्र परिसमूहनादि कृत्वा तमानीतमुल्मुकमुदङ्मुख उपसमादधाति। तस्य पुरस्तात्प्रत्यङ्मुखौ ब्रह्मयजमानौ पूर्ववदुपविशतः। तयोरुत्तरतो ब्रह्मा दक्षिणो यजमानः।

ततोऽध्वर्युरग्निं परिस्तीर्य समिधमाधाय पलाशपत्रे सर्वेषां पुरोडाशानामतिरिक्तवर्जितानामुत्तरार्द्धात्सकृत्सकृदवदाय प्राणदानं कृतं चेद्‌द्वोपस्ताराभिघारावपि कृत्वा तस्मिन्नग्नौ जुहोति। एष ते रुद्र भागः सह स्वस्नेति। इदं रुद्राय।

अक्तेषु मिश्रणमिति (११)। अञ्जनं प्राणदानम्। तद्धि प्राक् विकल्पेन विहितम्। अक्तान्वेति (८)। तत्राक्तेषु कृतप्राणदानेषु पुरोडाशेषु मिश्रणमुपस्तारप्रत्युपस्ताररूपं सर्वं कुर्यात्। "स आज्यस्योपस्तीर्य

सकृत्सकृदतिरिक्तवर्जम् ॥८॥ अक्तेषु मिश्रणम् ॥९॥ एष त इति जुहोति ॥१०॥ अतिरिक्तमाखूत्कर उपाकिरत्येष त इति ॥११॥ आगम्यावरुद्र मदीमहीति जपन्ति ॥१२॥ अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाघ्नानास्त्र्यम्बक-मिति ॥१३॥ देववच्च ॥१४॥ एतेनैव दक्षिणानाघ्नानाः ॥१५॥ कुमार्यश्चोत्तरेणोभयत्र पतिकामा भगकामा वा ॥१६॥ रौद्रान्यजमानोऽञ्जलिनोदस्यत्यगोः प्रापणम् ॥१७॥ प्रतिगृह्णात्येनानशक्य उपस्पर्शनम् ॥१८॥ मूतयोः कृत्वा वेणुयष्ट्यां कुपे वाऽऽसज्योभयतः स्थाणुवृक्षवंशवल्मीकानामन्यतमास्मिन्नुत्क्षेपणवदासजत्येतत्त इति

---

त्युपस्तारामिघारौ प्रकृत्य "सैषाऽऽज्येन मिश्राऽऽहुतिर्हूयते" इति श्रुतेर्मिश्रणशब्देनोपस्तारामिघारावुच्येते ।

ततोऽतिरिक्तं पुरोडाशमुत्तरस्यां दिशि गत्वा आखूत्करे करोति । आखुभिरुत्कीर्णे पांसुराशौ प्रवेशयति । अन्तर्हितं करोतीत्यर्थः । एष ते रुद्र भाग० आखुस्ते पशुरिति । सर्वेऽपि तत्र गच्छन्ति ।

ततः प्रत्यागम्यावरुद्रमदीमहीति सर्वे जपन्ति ( ३. ५८ ) । ततः सर्वे दक्षिणपाणिना सव्यानूरून् कुट्टयन्तः सर्वेऽग्निमप्रदक्षिणं त्र्यम्बकमिति त्रिः परियन्ति । सकृन्मन्त्रः, वारद्वयं तूष्णीम् । ततोऽनेनैव मन्त्रेण प्रदक्षिणं हस्तेनैव दक्षिणानूरून् कुट्टयन्तोऽग्निं त्रिः परियन्ति । नात्रापसव्यकरणमविहितत्वात् ।

यजमानकुमार्यश्चोत्तरेण त्र्यम्बकमिति मन्त्रेण पतिवेदनमित्यनेनोभयविधमपि परिगमनं सहैव कुर्वन्ति पतिकामाः सौभाग्यकामा वा । वचनात्कुमार्या अपि मन्त्रपाठः ।

ततो रौद्रान्पुरोडाशान्यजमानोऽञ्जलौ कृत्वा ऊर्ध्वांस्तथा उत्क्षिपति यथोर्ध्वमुखोऽपि गौर्न प्राप्नोति । तान् क्षितानधस्तात्पततो यजमानः पुनरञ्जलिना प्रतिगृह्णाति । पततो धारयतीत्यर्थः । यदा ग्रहीतुं न शक्नोति तदा यावन्तो भूमौ पतितास्तावतामुपस्पर्शनं करोति ।

ततः पुरोडाशान्समं विभज्य शिक्ययोः कृत्वा ते च शिक्ये वंशयष्ट्यां कुपे यज्ञियवृक्षदण्डे वंशपात्रद्वययुक्ते (वेणुनिर्मितभाजनद्वययुक्तो दण्डविशेषो वीवधापरपर्यायः कुप इति भावः इति माधवाचार्यः )

॥१९॥ कृत्तिवासा इति ॥ २० ॥ अनपेक्षमेत्योपस्पृशन्त्यपः ॥ २१ ॥ १० ॥

शुनासीरीयमतः ॥१॥ यदेच्छेत् ॥२॥ पौर्णमासध-

---

श उभयतो बध्वोत्तरस्यां दिशि गत्वा वृक्षे वा स्थाणौ वा वंशे वा वल्मीके वा एतत्त इति मन्त्रेण ( ३. ६१ ) ताञ्छुकयद्वयं तथोच्चमवलगयति यथा गौरूर्ध्वमुखोऽपि न प्राप्नुयात् । कृत्तिवासा इत्यनेन (३. ६१) निश्चलीकरोति । तत्रापि सर्वं आयान्ति ।

ततः सर्वे प्रदक्षिणमावृत्य पश्चादवलोकनमकुर्वन्तो गृहं प्रत्यागत्य पादप्रक्षालनादि कृत्वा ऽऽचम्याप उपस्पृशन्ति । ततः पाक्षिकं यथोक्तं वपनम् । शतब्राह्मणभोजनसंकल्पः । साकमेधार्थं साधारणोद्धरणपक्षे गार्हपत्यमध्यमाहवनीयौ समारोप्य गृहान् गत्वा मथित्वा पौर्णमासेष्टि पक्षादि कृत्वा वैश्वदेवादिनित्यं कृत्वा भोजनादि कुर्यात् ।

दैवात्सायंकालादर्वाग्यदि पर्वसमाप्तिर्न भवति तदाऽग्निहोत्रहोमः पौर्णमासेष्ट्यनन्तरमेव कर्तव्यः क्रमानुग्रहात् । प्रतीष्ठिविहारपक्षे गार्हपत्य एव समारोप उद्धृत्य वा । तदानीमुद्धृत्यस्यानपवृक्तस्याहवनीयस्याभावात् । केचिन्महाहविराहवनीयोपस्थानान्तं कृत्वा प्राग्व्रतविसर्गात्तस्मिन्नेव विहारे पित्र्यां त्र्यंबकांश्च कृत्वा प्रतिपदि कर्मापवर्गान्तं कुर्वन्ति ।

अस्मिन्पक्षे पित्र्यायां त्र्यम्बकेषु च ब्रह्मवरणं व्रतविसर्गश्च न भवति, महाहविर्मध्य एवान्तर्भावात् । शाङ्खायनभाष्यकारस्य ( ३. १७) याज्ञिकानां चायमेव पक्षोऽभिमतः । इति साकमेधाः ।

इति पञ्चमस्य दशमी कण्डिका ॥१०॥

---

अथ शुनासीरीयसंज्ञं चतुर्थं पर्व प्रदर्श्यते । तच्चातुर्मास्यानामुत्सर्गपक्षे साकमेधसमनन्तरं तत्कालमेव भवति । शाखान्तरात् द्व्यहे त्र्यहे चतुरहे वा । अथवा मार्गशीर्ष्यां पौष्यां माघ्यां फाल्गुन्यां वा यदा इच्छा भवति । तथा चापस्तम्बः—"ततो द्व्यहे त्र्यहे चतुरहेऽर्धमासे मासि चतुर्षु वा मासेषु शुनासीर्येण यजेते"ति । मानवे—"शुनासीर्यं चतुर्षु मासेषु सद्यश्चतुरहे वा मासि वा वैश्वदेवेन व्याख्यातमि"ति । काठके—"शुनासीर्यं चतुर्थ्यां मासि चतुर्षु वा मासेषु शुनासीर्येण यजेते"ति ।

तत्राष्टौ हवींषि भवन्ति । आग्नेयो ऽष्टाकपालः, सौम्यश्चरुः, सा-

**र्मा बर्हिर्वर्जम् ॥ ३ ॥ नित्येभ्योऽधिकानि शुनासीराभ्यां द्वादशकपाल इन्द्राय वा शुनासीराय ॥ ४ ॥ वायव्यं प**

---

वित्रो द्वादशकपालो ऽष्टाकपालो वा, सारस्वतश्चरुः, पौष्णश्चरुः, शुनासीराभ्यां द्वादशकपालः, वायव्यं पयो यवागूर्वा, सौर्य एककपाल इति। तत्र पूर्वमहतवस्त्रपरिधानं दम्पत्योः। प्राचीनप्रवणे वितानसाधनम्।

ऋत्विग्वरणम्। अश्ववड्गवसीरदक्षिणेन वा अश्वौष्ट्रारद्वयदक्षिणेन वा सीरगवदक्षिणेन वा औष्ट्रारगवदक्षिणेन वा शुनासीरीयपर्वणा ऽहं यक्ष्य इति चतुर्णां वरणम्। शुनासीरीयपर्वार्थमित्याहवनीयदक्षिणाग्न्योरुद्धरणम्। अग्न्यन्वाधानम्।

वायव्यपयःपक्षे शाखाच्छेदः, परिवासनम्, उपवेषकरणम्, पवित्रबन्धनम्। वत्सापाकरणम्, वायवे भागमिति गोः स्पर्शने विशेषः। उपगूहनम्। षड्डासनोपकल्पनम्, ब्रह्मवरणम्, शुनासीरीयपर्वणाऽहं यक्ष्य इति।

पात्रासादने—शूर्पाग्निहोत्रहवणी, स्फ्यः कपालानि त्रयस्त्रिंशत्, एकोनत्रिंशद्वा। स्थाल्यग्निसूः, शम्याकृष्णाजिनम्, उलूखलमुसलम्, दृषदुपलम्, पात्रीधान्यम्, पवित्रार्थौ धृष्टिः, संयवनोदकम्, स्थाली आज्यञ्च, वेदश्च, दोहनचतुष्टयम्, दक्षिणार्थं षड्भिरनडुद्भिर्युक्तं सीरं हलम्, औष्ट्रौ वोढारौ महान्तौ बलीवर्दौ, सौर्यस्य श्वेतोऽश्वः, तदभावेऽश्वेता गौः, उदकतुम्बिभिः, विंशतिकाष्ठ इध्मः, कुशप्रस्वः प्रस्तरोपसन्नद्धं त्रेधा बर्हिः, स्रुवा जुहूः, उपभृद् ध्रुवा, समार्गार्हाणि यानि च, तत्र शृतावदानमेक्षणं, पुरोडाशपात्र्यश्चतस्र इति विशेषः योक्त्रं यूनकुशाश्च, परिधयः पीठम्, इडापात्री षडवत्तम्, अन्तर्द्धानकटः पूर्णपात्रम्, पक्षे कर्मापवर्गा समिच्च।

वपनाभावः। मन्थनं विकल्पेन। "न मथन्त्यग्निम्" ( २. ६. ३. ३. ) "तेषां वै चतुर्थमग्निं मन्थन्ती"ति ( ११. ५. २. ८. ) विहितप्रतिषिद्धत्वात्। तत्रामन्थनपक्षे सर्वं पौर्णमासवत्। मन्थनपक्षे वैश्वदेववन्नवप्रयाजादि सर्वमिति बह्वृचब्राह्मणे श्रूयते तत्सूत्रे च। तथा च ब्राह्मणे—"यद्वैश्वदेवस्य तन्त्रं तत्तन्त्रं यद्यु न मथ्यते पौर्णमासमेव तन्त्रं भवती"ति ( ५. ११. ३ )। सूत्रे च—"(१)समानमन्यद्वैश्वदेवेन पौर्णमासं त्वमथ्यमान" इति। आश्वलायनः—"समाना वैश्वदेव्ये"ति।

(१) शाङ्खायनः ३. १८. १२. १३.।

यः ॥५॥ लौकिकम् ॥६॥ प्रतिधुक्श्रुतेः ॥७॥ नाविरोधात् ॥८॥ प्रकृतिदर्शनाच्च ॥९॥ यावगूर्वा ॥१०॥ सौर्य एकक-

---

स्फ्योपहितपात्रीकरणादि । ग्रहणे विशेषः—अग्नये जुष्टं गृह्णामि, सोमाय, सवित्रे, सरस्वत्यै, पूष्णे, शुनासीराभ्यां जुष्टम् । यवागूपक्षे वायवे जुष्टम्, सूर्याय जुष्टम्, प्रोक्षणे अग्नये त्वा जुष्टमित्यादि । कणान्ते विभज्यालम्भः । इदमग्नेः सवितुः पूष्णः शुनासीरयोः सूर्यस्य च । इदं सोमस्य सरस्वत्याश्च । यवागूपक्षे वायोश्च ।

यथोक्तं कपालोपधानम् । एककपाले तप्यस्वेत्यभ्यूहनम् । ईक्षणान्ते पौष्णस्य विभज्यालम्भः इदमग्नेः सवितुः शुनासीरयोः सूर्यस्य च, इदं पूष्णः। चर्वोर्विभज्यालम्भः इदठं० सोमस्य, इद सरस्वत्याः। यवागू-पक्षे इदं वायोः । संयवनानन्तरं पुरोडाशानां विभज्यालम्भः इदमग्नेः, इदं सवितुः, इदठं० शुनासीरयोः । इदठं० सूर्यस्य ।

प्राणदाने—अग्निं गच्छ । सोमम्, सवितारम्, सरस्वतीम्, पूषणम्, शुनासीरौ गच्छ । यवागूपक्षे वायुं गच्छ, सूर्यं गच्छ, एक कपालस्याज्येनान्ताच्छादनम् । इदमहं सतदृशेन वज्रेणेत्यवबाधनम् । पञ्चप्रयाजा अमन्थनपक्षे ।

उत्तमे प्रयाजे इदमग्नये सोमाय सवित्रे सरस्वत्यै पूष्णे शुनासीराभ्यां वायवे सूर्याय देवेभ्य इत्यादि । तत आज्यभागौ ।

प्रधानयागे—अग्नयेऽनु० अग्निं यज, सोमायानु० सोमं यज, सवित्रे उपांशु अनु० सवितारं यज, सरस्वत्या अनु० सरस्वतीं यज, पूष्णेऽ ऽनु० पूषणं यज, शुनासीराभ्यामनु० शुनासीरौ यज ।

वायोः पयोहविःपक्षे इदानीमेव दोहः, उपसृष्टाप्रैषः, स्थाल्या दानम्, अधिश्रयणाभावः, पवित्रस्य स्थाल्यां निधानम्, षड्गवदोहः, परिक्षालनोदकासेकः, न श्रपणम्, वायुं गच्छेति प्राणदानम्, आसा-दनं वेद्याम्, आलम्भः, वायवे उपांशु अनुब्रूहि, वायुम् उपांशु यज इदं वायवे, यवागूपक्षेऽप्येवमेव यागः, सूर्याय उपांशु अनुब्रूहि, तत्र जुह्वामुप स्तीर्य कृत्स्नमेककपालमवधाय द्विरभिघार्यातिक्रम्याश्राव्य सूर्यं उ-पांशु यज इदं सूर्याय ।

ततः स्विष्टकृदादि प्राशित्रादि सर्वं सर्वेषाम् । शुनासीर्यस्य पयसश्च भाग इडवत्तचतुर्धाकरणानामभावः । समस्य मार्जनम् । दक्षिणालम्भे-सीराश्वमसीति वा सीरगवमसीति वा औष्ट्रारगवमसीति वा । अस्येष्टि-कशुनासीरीयपर्वणः समृद्ध्यर्थं षड्भिरनडुद्भिर्युक्तं सीरं श्वेतमश्वं च

पालः ॥ ११ ॥ सीरꣳ षड्योगं दक्षिणा ॥१२॥ ओष्टारौ वा ॥१३॥ श्वेतोऽश्वः सौर्यस्य॥१४॥ अभावे गौः ॥१५॥ संवत्सरेप्सौः फाल्गुन्युदृष्टे शुनासीरीयेणेष्ट्वा सोमेन

---

दक्षिणाम्, अथवा ओष्टारौ अश्वं दक्षिणाम्, अश्वाभावे तस्य स्थाने श्वेतमिनि प्रयोगः। ब्राह्मणा इदं वः सीराश्वं प्रतिगृह्णीत, सीरगवं वा, ओष्टाराश्वम्, ओष्टारगवं वति।

अमन्थनपक्षे त्रयोऽनुयाजाः। व्यूहने-अग्नेः सोमस्य सवितुः सरस्वत्याः पूष्णः शुनासीरयोः, वायोः, सूर्यस्योज्जिति०। आग्निः, सोमः, सविता, सरस्वती, पूषा, शुनासीरौ वायुः सूर्यः तमपनुदन्तु। अत्रोपांशुदेवतानामुच्चारणमुपांशु कर्तव्यम् अन्यासामुच्चैः।

प्रस्तरहोमे इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्णे शुनासीराभ्यां वायवे सूर्याय देवेभ्य इत्यादि। परिधिभिः सहोपवेषहोमः। एकं समिष्टयजुः। कर्मापवर्गान्ते वपनाभावः। अन्ते शत ब्राह्मणभोजनम्।

इति शुनासीरीयम्।

---

अथ यो यजमानः चातुर्मास्यैः संवत्सरं व्याप्तुमिच्छति तस्य फाल्गुनशुक्लप्रतिपदि शुनासीरीयम्। तत आगामिन्यां पौर्णमास्यामग्निष्टोमः कार्यः, अग्नीषोमीयः पशुर्वा आग्नेयी इष्टिर्वा।

एतच्च फाल्गुन्यां चातुर्मास्यारम्भपक्षे। चैत्र्यामारम्भे चैत्रशुक्ल प्रतिपदि शुनासीरीयं वैशाख्यां सोमादि। एतत्सोमादिकमुत्सर्गपक्ष एव।

अथ चातुर्मास्यानामावृत्तिपक्षे विशेष उच्यते। आवृत्तिपक्षे फाल्गुन्यां पौर्णमास्यां शुनासीरीयं कृत्वा प्रातर्वैश्वदेवं पर्व कुर्यात्। चैत्र्यादावप्यारम्भे एवमेव ज्ञेयम्। एवं प्रतिवर्षं यावज्जीवं कर्त्तव्यम्। आवृत्तिपक्षे इष्टिपशुसोमानामभावः।

इति श्री त्रिरर्मिचित्संम्राट्स्थपतिमहायाज्ञिक श्रीप्रजापतिसुत देवकृत कात्यायन पद्धतौ ऐष्टिकानि प्रतिपर्वं चातुर्मास्यानि।

---

अथ पशुसहितानि चातुर्मास्यान्यभिधीयन्ते। तेषु चातुर्मास्य हविर्यागाः पशुयागश्चोभयं प्रधानमेव तथापि महत्त्वात्पशोस्तन्त्रं भवति। तत्र यत्कर्म पशुना न विरुध्यते तच्चातुर्मास्यानां भवति। यथाऽऽहवनीयपरिधानादि। विरोधे तु पाशुकमेव। एकादश प्रयाजानुयाजादि।

तत्र वरणे विशेषः। सपशुना वैश्वदेवपर्वणा चातुर्मास्येन पशुद- क्षिणेनाहं यक्ष्य इति ब्रह्महोत्रध्वर्युमैत्रावरुणप्रतिप्रस्थात्राग्नीध्राणां वरणम्। ततः परिसमूहनादिपूर्वकमाहवनीयदक्षिणाग्न्योरुद्धरणम्। सपशुवै- श्वदेवपर्वार्थमिति। अग्न्यन्वाधानम्। चतुरासनम्। ब्रह्मवरणम्। प्रथमजगवपशुदक्षिणेन सपशुवैश्वदेवपर्वणाहं यक्ष्ये तत्र भूपते०। व्रतग्रहणम्। ततो यूपाहुत्यादिकर्मापवर्गान्तं निरूढपशुवत्कर्तव्यम्।

वैश्वदेवः पशुः सद्यो द्व्यहकालीनो वा। संमार्गान्ते समार्जनस्था- पनम्। नियोजने विश्वेभ्यो देवेभ्यो जुष्टं नियुनज्मि। प्रोक्षणे विश्वे- भ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि। विश्वान्देवान्गच्छेति वपाप्राणदाने।

विश्वेभ्यो देवेभ्यश्छागस्य वपायै मेदसोऽनुब्रूहि, विश्वेभ्यो देवेभ्य- श्छागस्य वपां मेदः प्रेष्य। वैश्वदेवहविषां निर्वापः। तत्र वपामार्जनान्ते शाखाच्छेदनादि वैश्वदेवपयस्यार्थं वत्सापाकरणं शाखोपगूहनान्तम्। मानवे दर्शनात्। पशुपुरोडाशमनु पात्रासादने—

शूर्पं कपालानि एकचत्वारिंशत् द्वाचत्वारिंशद्वा चरुस्थाल्य- स्तिस्रः, कृष्णाजिनम्, उलूखलमुसलम्, पात्रीधान्यम्, शाखो- पवेषः, संयवनोदकम्, दोहनचतुष्टयम्, दक्षिणार्थः प्रथमजो गौः शृतावदानम्, मेक्षणम्, वाजिनभाण्डम्, पुरोडाशपात्र्यः पञ्च। एतावदासाद्य पात्रान्तरे प्रोक्षणीरुन्नीय शूर्पाग्निहोत्रहवण्योरादानादि।

ग्रहणे पूर्वं पशुपुरोडाशस्य ग्रहणम्। विश्वेभ्यो देवेभ्यो जुष्टं गृह्णामि। तत आग्नेयादीनां वैश्वदेवपर्वहविषां द्यावापृथिवीयान्तानां ग्रहणं सादनान्तम्। ततः पात्रान्तरात्प्रोक्षणीरादाय यथागृहीतं प्रोक्षणम्।

कृष्णाजिनादानादिकण्डनं कणान्तम्। सर्वत्र विभज्यालम्भे अग्ने- रिति पदात् पूर्वं विश्वेषां देवानामिति पदप्रयोगः। अन्यदैष्टिकवत्। प्रो- हणान्ते पयस्यार्थमुपसृष्टादि परिक्षालनान्तो दोहः।

कपालोपधाने वैश्वदेवस्य द्वादश कपालानि, अन्येषामैष्टिकवत्। तप्ते पयसि दधिप्रक्षेपः। तत्रस्थाभिघारमदत्वा वाजिननिषेकः। आ- ज्यान्ते पूर्वस्थापितवेदमूलाग्रैः शृतावदानमेक्षणवाजिनपात्रपुरोडाश पात्रीणां संमार्गः। ततः संमार्जनापासनम्। प्राणदानं पूर्वं पशुपुरोडाश स्य विश्वान्देवान् गच्छेति। तत आग्नेयादीनां वाजिनान्तानाम्। उत्करे वाजिनासादनम्।

पशौ विकल्पादकृतं चेदिह नियोगतो मन्थनम्। पशुपुरोडाशयागे विश्वेभ्यो देवेभ्यः पुरोडाशस्यानुब्रूहि। विश्वेभ्यो देवेभ्यः पुरोडाशं प्रेष्य। अत्र स्विष्टकृदर्थं पशुपुरोडाशस्योपभृति नावद्येम्। तत आ-

ग्नेयादीनां द्यावापृथिवीयान्तानां पूर्ववत्प्रचारः ।

ततोऽग्नये स्विष्टकृतेऽनुब्रूहीत्युक्त्वोपस्तीर्य पशुपुरोडाशादीनां सर्वेषामुत्तरार्द्धादेकप्रत्यवायमवदाय द्विरभिघार्यातिक्रम्याश्राव्याग्नि ँ स्विष्टकृतं यजेति प्रैषः । यजप्रैषः स्विष्टकृत् । ततः प्राशित्रादि सर्वम् । सर्वेषां पशुपुरोडाशमारुतपयस्यानां भागषडवत्तचतुर्द्धाकरणानामभावः । पशुपुरोडाशेडान्ते समस्य मार्जनम् ।

ततो दक्षिणादानम् । पशुप्रथमजगवमसीति विशेषः । अस्य स पशुवैश्वदेवपर्वणः समृध्यर्थं पशुप्रथमजगवं (१)दक्षिणां ब्रह्मण इत्यादि । ब्राह्मणा इदं वः पशुप्रथमजगवं प्रति गृह्णीतेति । द्यौस्त्वा ददात्विति प्रतिग्रहमन्त्रः ।

मानवे—विशेषः "पशुमद्भिश्चातुर्मास्यैर्यजन्ति तेषां व्रतं कालं दक्षिणं यथाहविर्दक्षियानामिध्माबर्हिः पौर्णमासीनिवर्तनं च । तस्य तस्य पुरस्तात्पाशुकया चान्वारम्भणीये"ति । अत एवाह सम्प्रदायकारः—'पाशुकेडान्ते पूर्वदक्षिणे"ति । तेन केवला पूर्वदक्षिणैव युक्ता । शाङ्खायनस्तूभयदक्षिणामुक्तवान् ( १४. १०. २२-२३ ) ।

ततः पशुविशसनादि । पशुयागे विश्वेभ्यो देवेभ्यश्छागस्य हविषोऽनुब्रूहि । विश्वेभ्यो देवेभ्यश्छागस्य हविः प्रेष्येति । एकादशानुयाजाः प्रैष्यप्रैषाश्च । बर्हिस्त्रेधा । पुष्पितानां काशानां प्रस्तरः । समिष्टयजूंषि त्रीण्येव । व्यूहने विश्वेषां देवानां वनस्पतेरुज्जितिम्, विश्वे देवा वनस्पतिस्तमपनुदन्त्विति ।

पशुदेवतावनस्पतिसंकीर्तनमात्रम् । प्रासङ्गिकानामावाहनादिषु कीर्त्तनाभावः । स्रुच्यव्यूहनस्याप्यभाव एव । सूक्तावाकान्ते शम्योर्वाकान्ते वा वाजिनयागः, मानवे दर्शनात् । सह शाखया प्रस्तरानुप्रहरणम् । परिधिभिः सहोपवेषहोमः । हृदयशूलान्ते वपनम् । अन्यत्सर्वं निरूढवत् । इति सपशुवैश्वदेवपर्व ।

अथ सपशुवरुणप्रघासा उच्यन्ते । तत्र सपशुवरुणप्रघासार्थमित्याहवनीयदक्षिणाग्न्योरुद्धरणम् । अग्न्यन्वाधानम् । अत्र वा व्रतग्रहणम् । ततो ब्रह्मवरणम् । सपशुवरुणप्रघासपर्वणाहं यक्ष्ये तत्र भूपत इति । व्रतग्रहणमत्र वा । तत एष्टिकवदध्वर्युप्रतिप्रस्थात्रोर्यथास्वं करम्भपात्रमेषमेषीकरणम् । ततो यूपाहुत्यादि स्वरुनिष्पत्यन्तम् । ततः षड्ढोताराहुतिः । ततो वेदिमानाद्युत्तरवेदिछादनान्तमध्वर्योः । वेदि-

( १ ) 'मजं गां च' इति पाठान्तरम् ।

**पशुनेष्ट्या वा यजेत पौर्णमास्याम् ॥ १६ ॥ आवृत्तिरनीजानस्य ॥ १७ ॥ फाल्गुन्युपवमथे शुनासीरीयं प्रातर्वैश्वदेवम् ॥१८॥ सपशुपु पशुतन्त्रं प्राधान्यात् ॥१९॥ पू-**

मानादिस्मिम्मर्शनान्ते खरे समभूसंस्कारान्तं प्रतिप्रस्थातुः ।

ततः श्वोभूते उभयोरग्न्याधानम् । पञ्चगृहीतग्रहणाद्युपयमन्युपनिवपनान्तमुभयोः । अथवा वेदिमानादि उपयमन्युपनिवपनान्तं सर्वं श्वोभूत एव कर्तव्यम्, पशोर्वरुणप्रघासानां च विकल्पेन सद्यःकालत्वविधानात् । पैष्टिकवदूहाः । हरिस्वामिमते ऊहाभावः ।

ततः प्रणीताप्रणयनम् । अकृतं चेद् व्रतग्रहणम् । मध्यमाहवनीयवर्जमध्वर्योः परिस्तरणम् । प्रतिप्रस्थातुः स्वाग्नेः ।

अध्वर्योः पात्रासादनम् । शम्यादृषदुपलम्, स्थाली आज्यं च, वेदश्च, दक्षिणार्थः, अभ्रिः, इध्मचतुष्टयम् । बर्हिश्चतुष्टयम्, स्रुवपञ्चकम्, उखापञ्चकम् । मन्थनचतुष्टयम् । प्राशित्रहरणे, षडवत्तम्, योक्त्रम्, यूनकुशाः कुशास्तीर्णं पीठम्, इडापात्री, अन्तर्धानकटः, पूर्णपात्रम्, क्षुरचतुष्टयं च ।

प्रतिप्रस्थातुरपि कृतानुकरत्वात्तत्र कतिपयपात्राणामासादनम् । स्थाली आज्यं च, वेदश्च, अभ्रिः, इध्मा बर्हिः, स्रुवो जुहूः । करम्भपात्रहोमार्थं शूर्पम्, उपभृद् ध्रुवा च, करम्भपात्री च, यूनकुशाः, पालाशास्त्रयः परिधयः, एतावदासादनीयम् । तत उभयोरपि पात्रप्रोक्षणादि । ततः प्रोक्षण्यः संस्कृता एव । पात्रप्रोक्षणम् । असञ्चरे निधानम् ।

कुक्कुटाहननादि आत्मालम्भान्तमध्वर्योर्निरूढवत् । पात्रसंमार्जनान्ते संमार्जनानां रक्षणम् । प्रतिप्रस्थातुर्ध्रुवासादनानन्तरमाज्यस्थालीं स्रुवं करम्भपात्रीं चादाय गार्हपत्यसमीपे गत्वा तस्योत्तरत आज्यस्थालीं करम्भपात्रीं च निधायोपस्तीर्य करम्भपात्राणि तत्रोत्तानानि निधाय प्रत्येकं तूष्णीं प्राणदानं कृत्वा स्ववेदावेव वाऽऽज्यस्थालीमासाद्य करम्भपात्राणि चासाद्याज्यस्थाल्याज्यालम्भं कृत्वा तूष्णीं करम्भपात्राणां ततो जौहवादेश्चालम्भं कृत्वाऽऽत्मालम्भोदकालम्भं च करोति ।

ततोऽभ्रिमादाय यूपावटपरिलेखनाद्यग्निमन्थनान्तम् । अत्र वारुणः पशुः । तस्योपाकरणम् । नियोजने वरुणाय जुष्टं नियुनज्मि । प्रोक्षणे वरुणाय त्वा जुष्टम् । प्रोक्षणाद्यग्निसंमार्गप्रैषान्तम् ।

ततोऽकृतेऽग्निसंमार्गे केन चरसीति प्रश्नादि । पत्न्याः प्रत्यानयन-

**वैगुवैश्वदेवे पाशुकम् ॥ २० ॥ मध्यो वा ॥२१॥ वैश्वदेवः पशुः ॥२२॥ पशुपुरोडाशमनु हवींᳬषि निर्वपति ॥२३॥ तेषाᳬं स्विष्टकृद् भूयस्त्वात्॥२४॥यथोक्तमविरुद्धम्॥२५॥ हृदयशूलान्ते वपनम् ॥२६॥ वरुणप्रघासेषु वारुणः ॥२७॥ महाहविषि माहेन्द्रः ॥२८॥ शुनासीरीयां चतुर्थः ॥२९॥**

---

पर्यन्तः करम्भपात्रहोमः । तत उभयत्राग्निसंमार्गादि । होतृवरणानन्तरं पुनराश्राव्य यजमानवरणम्, अग्निर्हं दैवीनामिति । दण्डप्रदानम् । एकादश प्रयाजाः प्रैष्यप्रैषाः । प्रतिप्रस्थाता नवमदशमयोः प्रयाजयोर्नानु जुहोति । तस्य पशोरभावेन तयोरप्राप्तेः । अष्टावेव प्रयाजानिष्ट्वा तिष्ठति । अध्वर्युणा सह स्रुचौ सादयति । उभयोः स्वाहाकृतियागःद्याज्यभागान्तम् ।

अथवा पशोराज्यभागयोर्विकल्पात्प्रतिप्रस्थातुराज्यभागानन्तरं पाणौ स्रुग्धारणविधानाच्च पशुपरोडाश एव यजप्रैषावाज्यभागौ कर्त्तव्यौ नेह । अध्वर्योर्वपायागो मार्जनान्तः । तत्र वरुणाय छागस्य वपायै मेदसोऽनुब्रूहि, वरुणाय छागस्य वपां मेदः प्रेष्येति विशेषः । इदं वरुणाय।

वपामार्जनान्ते पशुपुरोडाशो वारुणोऽष्टाकपालः । तमनु वरुणप्रघासहविषां निर्वापः तत्र पूर्वमुभयोः शाखाछेदादि । ऐष्टिकवद्वारुणीमारुत्योः पयस्ययोरर्थं वत्सापाकरणादि शाखोपगूहनान्तम् । "हुतायां वपायां चात्वाले मार्जयित्वा वारुण्यै वत्सानपाकरोती"ति मानवे दर्शनात् । ततो यजमान वाचं यच्छेति प्रैषः ।

ततोऽध्वर्योः पात्रासादनम्-शूर्पम् कपालान्येकचत्वारशत्, सप्तत्रिंशद्वा, स्थाल्यस्तिस्रः, उलूखलमुसलम्, पात्रीधान्यम्, शाखोपवेषः, संयवनोदकम्, दोहनचतुष्टयम्, दक्षिणार्थे धेनुः शृतावदानम्, वाजिनभाण्डम्, पञ्च पुरोडाशपात्र्यः, शमीपलाशमिश्राणि करीराणि, पक्षे कर्मापवर्गा समित् । प्रतिप्रस्थातुः पात्रासादनम्—दोहनचतुष्टयम्, शृतावदानम्, वाजिनभाण्डम्, शमीपलाशमिश्राणि करीराणि ।

ततोऽध्वर्योः पात्रान्तरे प्रोक्षणीरुन्नीय शूर्पाग्निहोत्रहवण्योरादानादि । गृहणे पूर्वं पशुपुरोडाशस्य गृहणम् । वरुणाय जुष्टं गृहणामीति, तत आग्नेयादीनामैष्टिकवत् । पात्रान्तरात्प्रोक्षणीः स्रुचि कृत्वा वरुणाय त्वा जुष्टमिति पशुपुरोडाशं प्रोक्ष्याग्नेयादीनां प्रोक्षणम् । ततः पात्राणां प्रोक्षणमुभयोः ।

ततः कृष्णाजिनादानादि। विभज्यालम्भे सर्वत्रेदं वरुणस्याग्ने रित्येवमग्नेः पूर्वं वरुणपदोच्चारणम्। कपालोपधाने अष्टौ कपालानि वारुणस्य, अन्येषामैष्टिकवत्। प्रोहणान्ते उभयोरुपसृष्टादि परिक्षालनान्तौ दोहौ। ततश्चक्षुषे त्वेतीक्षणादि उभयोरात आलम्भोदकालम्भनान्तम्। आज्यान्ते स्थापितैर्वेदाग्रमूलैः भृताग्रदानमेक्षणवाजिनपात्रद्वयपुरोडाशपात्रीणां संमार्गः। पशावकृतं चेदिह नियमेनाग्निमन्थनम्।

तत एतर्ठ० होतृमैत्रावरुणावित्यादि। अत्रोभयोर्जुहूपभृतोरादानादि यज्ञप्रैषयोराज्यभागयोर्यागौ। ततः स्रुक्पाणिरास्ते प्रतिप्रस्थाता। ततोऽध्वर्युर्जुह्वामुपस्तीर्य पुरोडाशस्यावद्यन्नाह वरुणाय पुरोडाशस्यानुब्रूहीति। ततः सकृदभिघारः नोपभृति स्विष्टकृदर्थमवदानम्। अतिक्रम्य वरुणाय पुरोडाशं प्रेष्येति प्रैषः। तत आग्नेयादीनां कायान्तानामैष्टिकवद्यागः।

प्रतिप्रस्थातुरपि तद्वन्मारुतीयागः। ततोऽध्वर्युरग्नये स्विष्टकृतेऽनुब्रूहीत्युक्त्वा जुह्वामेवोपस्तीर्य पशुपुरोडाशादीनां सर्वहविषामुत्तरार्द्धादवदाय द्विरभिघार्यातिक्रम्योभयोरपि ऐष्टिकवत्स्विष्टकृद्यागः। प्रतिप्रस्थाताऽप्यत्रैष्टिकवत्स्विष्टकृदर्थमवदाय तथैव जुहोति।

ततः प्राशित्रादिसर्वमैष्टिकवत्। वारुणस्य चतुर्द्धाकरणादि सर्वं भवति। उपहूय मार्जनम्। तत इडाभक्षः। भागपरिहारः ततो दक्षिणादानम्, धेनुरसीति विशेषः सपशुवरुणप्रघासपर्वणः समृद्ध्यर्थं धेनुं दक्षिणामिति।

ततः पशुविशसनादि। वरुणं गच्छेति प्राणदाने। वरुणाय छागस्य हविषोऽनुब्रूहि वरुणाय छागस्य हविः प्रेष्य। व्यूहने वरुणस्य वनस्पतेरुज्जितिम्। वरुणो वनस्पतिस्तमपनुदताम्। अन्यहविर्देवतानामत्र सङ्कीर्त्तनं भवति, आवाहनादाविव।

अध्वर्योरेकादशानुयाजाः प्रतिप्रस्थातुर्नवैव। तस्य नराशंसादूर्ध्वं नवमदशमौ न भवतः अतस्तयोर्हूयमानयोस्तत्रैव तिष्ठति किमपि न करोति, पुनरेकादशे हुतेऽध्वर्युमनुजुहोति। एवं तस्य नवानुयाजा भवन्ति। धारानुयाज उभयोः।

समिष्टयजुरन्ते उरुर्ठ० हीति वावचनाद्यवभृथः समिदाधानान्तः। तत उभयोर्बर्हिर्होमः। ततः शूलावभृथः समिदाधानान्तः। ततो वपनम्। ततः प्रणीताविमोकाद्याहवनीयोपस्थानान्तम्। इह वा शूलावभृथो, वपनं, ततो व्रतविसर्गः। वैष्णव्याहुतिः। ततो भागप्राशनादि कर्मापवर्गान्तम्। शतसङ्कल्पः। समारोप्य प्रवेशनम्। ततः पौर्णमासम्॥

इति सपशुवरुणप्रघासाः॥

अथ सपशुसाकमेधा उच्यन्ते। तत्र सपशुसाकमेधपर्वणाऽहं यक्ष्य इति वरणे। समारोपादि कौडिन्यादित्येष्ट्यन्तमैष्टिकवत्। महाहविषि माहेन्द्रः पशुः। अष्टकपालो माहेन्द्रः पशुपुरोडाशः। तत्र पाशुकवैश्वदेववत्सर्वम्। नियोजने महेन्द्राय जुष्टं नियुनज्मि। महेन्द्राय छागस्य वपायै, महेन्द्राय छागस्य वपां मेदः।

पशुपुरोडाशमनु आग्नेयादि वैश्वकर्मणपर्यन्तानां महाहविर्हविषां निर्वापः। तत्र महेन्द्राय जुष्टम्। तत आग्नेयादीनि। विभज्यालम्भे इदं महेन्द्रस्याग्नेरित्येवं सर्वत्राग्निपदात्पूर्वं महेन्द्रपदम्। महेन्द्राय पुरोडाशस्यानु०। महेन्द्राय पुरोडाशं प्रेष्य। ऋषभो दक्षिणा। तस्य पशुपुरोडाशपात्रासादन आसादनम्। इडान्ते दानम्। पशुयागे महेन्द्राय छागस्य हविषोऽनु० महेन्द्राय छागस्य हविः प्रेष्य। व्यूहने-महेन्द्रस्य वनस्पतेरुज्जितिम्, महेन्द्रो वनस्पतिस्तमपनुदताम्। अग्न्यादीनामत्र न कीर्तनम्। कर्मापवर्गान्तं निरूढवत्। अत्रापि हृदयशूलान्त एव वपनम्। ततो यथोक्तं पित्र्या। ततस्त्रैयम्बका उदकोपस्पर्शनान्ताः। शतसङ्कल्पः। समारोप्य प्रवेशनम्। ततः पौर्णमासेष्ट्यादि॥

इति सपशुसाकमेधाः।

अथ सपशुशुनासीरीयम्। सपशुशुनासीरीयेण पर्वणाऽहमिति वरणे। दक्षिणाकीर्त्तनमैष्टिकवत्। अत्र शुनासीराभ्यां पशुः। तत्र शुनासीराभ्यां जुष्टम०। शुनासीराभ्यां छागस्य वपायै मेदसोऽनु०।शुनासीराभ्यां छागस्य वपां मेदः प्रेष्य। पशुपुरोडाशादिमनु आग्नेयादि सौर्यान्तानां शुनासीरीयहविषां निर्वापः।

तत्र पूर्वं शाखाच्छेदादि,वायव्यपयोऽर्थं वत्सापाकरणाद्युपगूहनान्तम्। ततो यजमान वाचं यच्छेति प्रैषः। ततः पात्रासादनादि। अत्र शुनासीरीयदक्षिणाया आसादनम्। ग्रहणे शुनासीराभ्यां जुष्टमितिपशु पुरोडाशग्रहणम्। तत आग्नेयादीनां विभज्यालम्भे इदं शुनासीरयोरग्नेरित्येवं सर्वत्राग्निपदात्पूर्वं प्रयोज्यम्।

प्रधानयागे शुनासीराभ्यां पुरोडाशस्यानुब्रूहि। शुनासीराभ्यां पुरोडाशं प्रेष्य। प्रचारकाले एव वायवे दोहं कृत्वा यागः। यजप्रैषे हविषां स्विष्टकृत्। पशुपुरोडाशे अन्ते दक्षिणादानमैष्टिकवत्।

पशुयागे शुनासीराभ्यां छागस्य हविषोऽनु०छागस्य हविःप्रेष्य। व्यूहने शुनासीरयोर्वनस्पतेरुज्जितिम्। शुनासीरौ वनस्पतिस्तमपनुदन्त्विति। अत्र हृदयशूलान्ते वपनाभावः। यथाप्राप्तस्यैव वपनस्य कालान्तरविधानात्। न चात्र प्राप्तिरस्यैष्टिके। अन्यत्सर्वं सपशुवैश्वदेववत्॥

इति सपशुशुनासीरीयम्॥

पुरस्ताद्वा पर्वणः, पर्वणोऽन्ते वा ॥ ३० ॥ ११ ॥

अथवा सर्वेषु पर्वसु पर्वसु पर्वारम्भात्प्रागेव स्वः स्वः पशुः पृथक् तन्त्रः कर्तव्यः । तत्रापि पर्वदक्षिणैवेति सम्प्रदायकारः । पशोरपि चातुर्मास्यपर्वशब्देनैवाभिधानात् पशुसमाप्त्यनन्तरं पर्व । अस्मिन्पक्षे साकमेधेषु महाहविषः प्राक् पशुः । अथवा सर्वपर्वणामन्ते पृथक्तन्त्रः स्वः स्वः पशुर्भवति । अस्मिन्पक्षे महाहविषोऽनन्तरं पित्र्येष्टेः प्राक् पशुः । (अथवा सर्वपर्वणामन्ते ) अत्रापि पर्वदक्षिणैव । अस्य पशोर्हविर्गयज्ञविधत्वा न्निरूढपशुवत्सर्वम् ॥

इति पाशुकानि चातुर्मास्यानि ॥

कठानां पञ्चाहिकानि पठ्यन्ते । तत्र फाल्गुनशुक्लैकादश्यां वैश्वदेवं पर्व । तस्मिन्नेवाहनि वरुणप्रघासार्थमुद्धृत्य करम्भपात्रकरणादुत्तरवेदिच्छादनान्तम् । द्वादश्यां वरुणप्रघासाः । त्रयोदश्यामनीकवत्यादि गृहमेधीयान्तम् । चतुर्दश्यां दर्विहोमादिसाकमेधसमाप्तिः । पौर्णमास्यां शुनासीरीयमिति । एवं पाशुकान्यपि पञ्चाहिकानि भवन्ति । कठानां च प्रतिपद आरभ्य क्रियन्त इति पठ्यते ।

इति पञ्चाहिकानि ।

अथैकाहिकान्यैष्टिकानि चातुर्मास्यानि लिख्यन्ते । तत्र पञ्चानामृत्विजां वरणम् । गोत्र० शर्मन् प्रथमजगवधेन्वृषभोष्टाराश्वदक्षिणैरैकाहिकैरैष्टिकैश्चातुर्मास्यैरहं यक्ष्य इति । अत्र महत्वाद्वारुणप्रघासिकं तन्त्रं भवति ।

अहतवस्त्रपरिधानम् । समारोपः । उद्वसानम् । मन्थनम् । गार्हपत्यस्थापनम् । ऐकाहिकैष्टिकचातुर्मास्यार्थमिध्युद्धरणम् ।

अग्न्यन्वाधानं सर्वेषु । समन्त्रकं चातुस्यार्थं ब्रह्मवरणम्, गोत्र० शर्मन्नैकाहिकैरैष्टिकैश्चातुर्मास्यैरहं यक्ष्य इति । ततोऽध्वर्युप्रतिप्रस्थात्रो र्यथास्वं करम्भपात्रमेषमेषीकरणम् ।

तत इध्मस्थाने शकलपरिधिनिधानम् । उभयोः शाखाच्छेदादि पवित्रबन्धनान्तम् । उपवेषकरणमध्वर्योरेव । ततोऽध्वर्योर्वैश्वदेवपयस्यार्थं वत्सापाकरणम्, विश्वेभ्यो देवेभ्यो भागम् । ततो वारुणपयस्यार्थं वरुणाय भागम् । ततः प्रतिप्रस्थातुर्मारुत्यर्थम् मरुद्भ्यो भागमिति ।

ततोऽध्वर्योर्गृहमेधिचरुश्रपणार्थंदुग्धार्थं त्रयाणां वत्सानां यथास्वं वा तूष्णीमपाकरणम् । ततो वायव्यपयोऽर्थं वत्सापाकरणं वायवे भागमिति । उभयोः शाखोपगूहनम् । ततो व्रतग्रहणमत्रवा । ततः षट्कासादनादि । उभयोरुपवमन्युपनिवपनान्तम् ।

द्व्यहपक्षे पूर्वेद्युरुत्तरवेदिच्छादनान्तं कृत्वा प्रातरग्निप्रणयनादि कर्तव्यम् । अकृतं चेदत्र व्रतग्रहणं कृत्वा प्रणीताप्रणयनम् । मध्यमवर्जमध्वर्योः परिस्तरणम् । प्रतिप्रस्थातुः स्वाग्नेः ।

अध्वर्योः पात्रासादनम् । शूर्पं कपालानि सप्ततिः षट्षष्टिर्वा, चरुस्थाल्यः सप्त, शम्याकृष्णाजिनम्, उलूखलमुसलम् दृषदुपलम्, पात्रीधान्यम् शाखोपवेषः, संयवनोदकं बहु, स्थाल्याज्यं च, वेदश्च, दोहनचतुष्टयम्, तत्र तिस्रः स्थाल्यः, दक्षिणार्थं प्रथमजगवधेन्वृषभोऽष्टाराश्वाः, अग्निः । विंशतिरिध्मकाष्ठानि, कुशप्रसूप्रस्तरोपसन्नद्धं त्रेधा बर्हिः, स्रुवो जुहूः, उपभृत्पृषदाज्योपभृच्च, ध्रुवा प्राशित्रहरणे, श्रृतावदानमेक्षणे, वाजिनपात्रद्वयम्, एकादश पुरोडाशपात्र्यः, योक्त्रं यूनकुशाश्च, परिधयः, पृषदाज्यार्थं दधिपयस्यार्थं च शमीपलाशमिश्राणि करीराणि, मन्थनचतुष्टयम्, पीठं कुशास्तीर्णम्, इडापात्री षडवत्तम्, अन्तर्धानकटः, पूर्णपात्रम्, पक्षे कर्मापवर्गा समित्, वपनपक्षाङ्गीकारे क्षुरचतुष्टयम् ।

प्रतिप्रस्थातुः पात्रासादनम् । स्थाली आज्यं वेदश्च, दोहनचतुष्टयम्, अग्निः, इध्मो विंशतिकाष्ठकः, प्राकृतं बर्हिः, स्रुवो जुहूः, शूर्पमुपभृद्ध्रुवा, श्रृतावदानम्, करम्भपात्री, वाजिनपात्रम्, यूनकुशाः, परिधयः, शमीपत्राणि करीराणि च ।

ततोऽध्वर्योर्गार्हपत्यस्य पश्चात्प्रागग्रां धान्यपात्रीं निधायाधस्तात्स्फ्यस्य प्रेरणम् । पात्रान्तरे प्रोक्षणीरुन्नीय शूर्पाग्निहोत्रहवण्योरादानादिग्रहणं सादनान्तम् । नानाबीजपक्षे तद्धर्मा वैश्वदेवपर्वणयुक्ताः ।

ग्रहणे विशेषः अग्नये जुष्टम् पुरो०, सोमाय जुष्टम् चरुः, सवित्रे जुष्टम् पुरो०, सरस्वत्यै जुष्टम् चरुः, पूष्णे जुष्टम् पौष्णश्चरुः, मरुद्भ्यः स्वतवोभ्यो जुष्टम् पुरोडाशः, द्यावापृथिवीभ्यां जुष्टम् पुरो०, काय जुष्टम् पुरो०, मरुद्भ्यः सान्तपनेभ्यो जुष्टम् चरुः, मरुद्भ्यो गृहमेधिभ्यो जुष्टम् चरुः, मरुद्भ्यः क्रीडिभ्यो जुष्टम् पुरो०, अदित्यै जुष्टम् चरुः, महेन्द्राय जुष्टम् चरुः, विश्वकर्मणे जुष्टम् पुरो, शुनासीराभ्यां जुष्टं पुरो०, वायोर्यवागूपक्षे वायवे जुष्टम्, सूर्याय जुष्टम्' पुरोडाशः ।

अत्रैकादश पुरोडाशाः, सप्त चरवः, द्वे पयस्ये, एकं पयो यवागूर्वा, एवमेकविंशतिर्हवींषि अध्वर्योर्भवन्ति, प्रतिप्रस्थातुश्च मारुती पयस्या एकं हविर्भवतीति । प्रोक्षणे त्वा जुष्टमिति ग्रहणमन्त्रे विशेषः । एकबीजपक्षे कणान्ते विभज्यालम्भः । इदमग्नेः सवितुः पूष्णो मरुतां स्वतवसां द्यावापृथिव्योरिन्द्राग्न्योः कस्याग्नेरनीकवतो मरुतां क्रीडिनां विश्वकर्मणः शुनासीरयोः सूर्यस्य च, इदं सोमस्य सरस्वत्या मरुतां सा-

न्तपनानां मरुतां गृहमेधिनामदित्या महेन्द्रस्य च। यवागूपक्षे वायो श्चेत्यधिकं पदम् ।

क्रमेण कपालोपधानम् । अन्तराऽन्तरा चरुस्थानकरणं च । एककपालेषु तप्यस्वेत्यभ्यूहनमन्त्रः । प्रोहणान्ते चाध्वर्योर्वैश्वदेवपयस्यार्थं दोहः । ततो वारुणपयस्यार्थं द्वितीयः ततः । प्रतिप्रस्थातुर्मारुत्यर्थं दोहः । ईक्षणं तण्डुलानां पिष्टानां च । तदन्ते पूष्णः पिष्टं पृथक्कृत्यालम्भः ।

तत्र पूषपदवर्जं पूर्ववन्निर्देशः । इदं पूष्ण इति पूषपिष्टानाम् । ततश्चरूणां तण्डुलान् विभज्यालम्भः। इदं सोमस्य, इदं सरस्वत्याः, इदं मरुतां सान्तपनानाम्, इदं मरुतां गृहमेधिनाम्, इदमदित्याः, इदं महेन्द्रस्य। यवागूपक्षे इदं वायोरिति च । ततः पात्र्यां पिष्टानां संवापः ।

चरूणां स्थालीषु क्रमेणावापः । त्रिः प्रक्षालनम् । सान्तापनसंवापानन्तरं गृहमेधिचरुस्थाल्यां शाखापवित्रं निधाय तत्रैव तिस्रो गा दोहयित्वा गृहमेधितण्डुलानुदकेन त्रिः प्रक्षाल्य दुग्धमध्ये संवपति । पवित्रवति संदोह्य तं चरुं श्रपयति । "चरुर्ह्येव स यत्र क्व च तण्डुलानावपन्ती"ति ( २. ५. ३. ४ ) श्रुतेः । ततः प्राकृतम् ।

पुरोडाशानां विभज्यालम्भः-इदमग्नेः, इदं सवितुः, इदं मरुतां स्वतवसाम् अथवा मरुताम्, इदं द्यावापृथिव्योः, इदमिन्द्राग्न्योः. इदं कस्य इदमग्नेरनीकवतः, इदं मरुतां क्रीडिनाम्, इदं विश्वकर्मणः, इदं शुनासीरयोः, इदं सूर्यस्य। ततो यथाक्रममधिश्रयणम्। गृहमेधिचरोरपि घर्मोऽसी त्यधिश्रयणं पर्यग्निकरणं च भवति पयसः श्रपणार्थत्वात् । अग्नीधः क्रमेणाज्यद्वयाधिश्रयणम् । पयोवर्जं पर्यग्निकरणमध्वर्योः । प्रतिप्रस्थातुः स्वाज्यस्य श्रपणम् । तप्तेषु पयःसु दधिक्षेपो यथास्वम् । शृतालम्भः । अभिवासनन् । अध्वर्योर्मेषसम्बन्धिपात्र्यङ्गुलिप्रक्षालनम् । उदकेन सहाप्त्योदकदानम् । करम्भमेषीपात्र्यङ्गुलिप्रक्षालनं प्रतिप्रस्थाताऽध्वर्युमनुनिनयति ।

ततः खननाद्युभयोः । पात्रसम्मार्गेऽध्वर्युपात्राणां पूर्वं संमार्गस्तत इतरस्य । स्रुचौ जुह्वौ शूर्पम् उपभृतौ पृषदाज्योपभृत् ध्रुवे प्राशित्रहरणे शृतावदानमेक्षणे । प्रतिप्रस्थातुः शृतावदानम्, वाजिन पात्राणि, करम्भपात्री, पुरोडाशपात्र्यश्चेति ।

संमार्जनापासनम् । पत्नीसंनहनादि वरुणप्रघासवत्सर्वम् । प्राणदाने विशेषः पूर्वं प्रतिप्रस्थातुः करम्भपात्राणां प्राणदानम्, ततोऽध्वर्योराग्नेयादीनाम् अग्निं गच्छ, सोमं गच्छ, सवितारं गच्छ, सरस्वतीं

गच्छ, पूषणं गच्छ, मरुतः स्वतवसो गच्छ, विश्वान्देवान् गच्छ, द्यावापृथिव्यौ गच्छ, इन्द्राग्नी गच्छ, वरुणं गच्छेति मेषे, मरुतो गच्छेति प्रतिप्रस्थाता मारुतीमक्त्वा मेषीमनक्ति मरुतो गच्छेति। कं गच्छ, अग्निमनीकवन्तं गच्छ, मरुतः सान्तपनान् गच्छ, मरुतो गृहमेधिनो गच्छ मरुतः क्रीडिनो गच्छ, अदितिं गच्छ, विश्वकर्माणं गच्छ, शुनासीरौ गच्छ, यवागूपक्षे वायुं गच्छ, सूर्यं गच्छ, वाजिनो गच्छेति द्वयोः पृथक् प्रतिप्रस्थातुरपि वाजिनो गच्छेति ।

कपालाञ्जनम् । उद्वासनम् । आज्यस्थालीपूर्वकमासादनादि । प्रतिप्रस्थातुराज्यस्थाल्यनन्तरं स्ववेदौ करम्भपात्र्यासादनम् । अध्वर्योः सान्तपनीयं चरुमासाद्य गृहमेधिचरुं गार्हपत्यसमीपात्स्वयमेवानीय तूष्णीं वेदिमभिमृश्याहवनीये शकलान्याधाय चरुमासादयति ।

ततः ऐडिन्याद्यासादनादि आत्मालम्भोदकालम्भान्तम् । ततोऽग्निमन्थनम् । होतृषदनस्थापनादि संमार्गप्रैषान्ते करम्भपात्रहोमः ततः संमार्गाद्याज्यभागान्तमुभयोः । मरुतां गृहमेधिनामत्रावाहनोत्तमप्रयाजस्विष्टकृन्निगदेषु कीर्त्तनाभावः। सूक्तवाकव्यूहनयोस्तु भवति ।

ततः प्रतिप्रस्थाता हस्ते स्रुचौ गृहीत्वोपविशति। अध्वर्योराग्नेयादिहविःप्रचारः । तत्र प्रैषाः अग्नयेऽनु०, अग्निं यज, सोमायानु०, सोमं यज, सवित्रे ऽनु०सवितारम्, पूष्णेऽ नु० पूषणम्, मरुद्भ्यः स्वतवद्भ्योऽनु०। मरुतः स्वतवसो यज, विश्वेभ्यो देवेभ्योऽनु० विश्वान्देवान्यज, द्यावापृथिवीभ्यामनु० द्यावापृथिव्यौ यज । इन्द्राग्निभ्यामनु० इन्द्राग्नी यज, मेषमेष्योर्विपर्यासः। वरुणायानु०वरुणं यज मरुद्भ्यो ऽनु० मरुतो यज, कायानु०, कं यज, अग्नयेऽनीकवतेऽनु०, अग्निमनीकवन्तं यज, मरुद्भ्यः सान्तपनेभ्योऽनु०, मरुतः सान्तपनान्यज, मरुद्भ्यो गृहमेधिभ्योऽनु२ मरुतो गृहमेधिनो यज ।

गृहमेधियागे स्थाल्या एवोपस्तराभिघारौ न ध्रुवायाः । मरुद्भ्यः क्रीडभ्योऽनु० मरुतः क्रीडिनो यज, अदित्या अनु०अदितिं यज, महेन्द्रायानु० महेन्द्रं यज, विश्वकर्मणेऽनु० विश्वकर्माणं यज, शुनासीराभ्यामनु ब्रूहि शुनासीरौ यज । पयःपक्षे इदानीमेव दोहः । प्राणदानासादनालम्भाः । वायवेऽनु० वायुं यज । सूर्यायानु० सूर्यं यज ।

तत उभयोः स्विष्टकृदादि सर्वं वरुणप्रघासवद् भागपरिहारान्तम्।गृहमेधिचरोर्न प्राशित्रावदानम् । वारुणीपयस्यावदानानन्तरं प्रतिप्रस्थात्रे समर्पणम् । मारुतीपयस्यावदानानन्तरमनीकवदादीनामिडान्तमवदानम् । इडामुपहूय पूर्वं मार्जनम् । ततो भक्षणम् ।

दक्षिणालम्भे प्रथमजगवधेन्वृषभोष्ट्राऽश्वमसीति विशेषः। अमा-पामैकाहिकानामैष्टिकानां चातुर्मास्यानां समृद्ध्यर्थं प्रथमजं गां धेनुमृष-भमोष्ट्रारौ अश्वं च दक्षिणां ब्रह्मणे इत्यादि। ब्राह्मणा इदं वः प्रथमजगव-धेन्वृषभोष्ट्राराश्वं प्रतिगृह्णीतेति।

उदगुद्वासनं हविःशेषाणां, गृहमेधिचरुशेषप्राशनं यथोक्तम्। वारु-णीपयस्याशेषस्यावभृथार्थं सुगुप्ते देशे स्थापनम्। ततो गृहमेधिचरु-शेषाद्दर्विहोमो यथोक्तः। ततोऽपराह्णे यथोक्ता पित्र्या। तत्र ब्रह्मवरणव्र-तग्रहणयोरभाव इति विशेषः। ततश्चैयम्बका यथोक्ता उदकोपस्पर्शना-न्ताः। तत उल्मुकसमासाद्युभयोः कर्मापवर्गान्तं वरुणप्रघासवत्।

व्यूहने–अग्नेः सोमस्य सवितुः सरस्वत्याः पूष्णो मरुतां स्वतवसां वि-श्वेषां देवानां द्यावापृथिव्योरिन्द्राग्न्योर्वरुणस्य कस्याग्नेरनीकवतो मरुतां सान्तपनानां मरुतां गृहमेधिनां मरुतां क्रीडिनामदित्या महेन्द्रस्य विश्व-कर्मणः शुनासीरयोर्वायोः सूर्यस्योज्जितिम्। अग्निः सोमः सविता सर-स्वती पूषा मरुतः स्वतवसो विश्वेदेवा द्यावापृथिव्यौ इन्द्राग्नी वरुणः कोऽग्निरनीकवान्मरुतः सान्तपना मरुतो गृहमेधिनो मरुतः क्रीडिनोऽदिति महेन्द्रो विश्वकर्मा सुनासीरौ वायुः सूर्यस्तमपनुदन्त्विति। अत्रोपांशुदे-वतानामुपांशूच्चारणमन्येषामुच्चैः। मरुतामुज्जितिम्। मरुतस्तमपनु-दन्त्विति। प्रतिप्रस्थातुर्व्यूहनम्।

सूक्तवाकान्ते वा वाजिनयागः। समिष्टयजुरन्तेऽवभृथः। ततः प्रत्ये-त्य समिदाधानम्। ततो बर्हिर्होमादि नमः कृतायेत्यन्तं वरुणप्रघास-वत्समापनीयम्। अन्ते चत्वारि शतानि ब्राह्मणान्भोजयेत्।

इत्यैष्टिकान्यैहिकानि चातुर्मास्यानि।

अथ पाशुकान्यैकाहिकानि चातुर्मास्यानि लिख्यन्ते॥

तत्र समारोपादि कर्मापवार्गान्तं पाशुकवरुणप्रघासवत्। विशेषः प्रथमजगवधेन्वृषभोष्ट्राराश्वदक्षिणैः सपशुभिरैकाहिकैश्चातुर्मास्यैरहं यक्ष्य इति वरणे। ब्रह्महोत्रध्वर्यु मैत्रावरुणप्रतिप्रस्थात्राग्नीध्राणां वरणम्। अहतवासःपरिधानम्। समारोपः। उदवसानं मन्थनम्। सपश्वैकाहिक-चातुर्मास्यार्थमित्युद्धरणम्। सर्वेषु समन्त्रकमग्न्यन्वाधानम्। ब्रह्मवरण-म्, व्रतग्रहणम्। करम्भपात्रमेषमेषीकरणं यथोक्तम्। यूपाहुत्यादि षड्-होतारादुत्यन्तम्, वेदिमानाद्युभयोः। संमर्शनान्ते चात्वालमानाद्युभयो रुपयमत्युपनिवपनान्तम्।

सद्यो द्व्यहं वा पशुर्भवति। तत्र द्व्यहपक्षे उत्तरवेदिछादनान्तं पूर्वेद्युः। प्रातरग्निप्रणयनाद्युपयममन्युपनिवपनान्तम्। ततः प्रणीताप्रणयनादि।

प्रागकृतं चेदत्र व्रतग्रहणम् । अध्वर्योः प्रतिप्रस्थातुश्च पाशुकवरुणप्रघासवत्पात्रासदनादि वपामार्जनान्तम् । विशेषः ऐन्द्राग्नः पशुस्तत्रेन्द्राग्निभ्यां जुष्टमित्यादिनिरूढवत्प्रयोगः । समार्गप्रैषानन्तरं करम्भपात्रहोमः । वपामार्जनान्ते पशुपुरोडाशऐन्द्राग्नो द्वादशकपालः । तमनु सर्वेषां चातुर्मास्यहविषां निर्वापः ।

तत्र पूर्वनिध्मस्थाने शकलपरिधिनिधानम् । उभयोः शाखाच्छेदनादि ऐष्टिकवद्वत्सापाकरणं शाखोपगूहनान्तम् । ततो यजमान वाचं यच्छेति प्रैषः । ततः पात्राणामासादनम् । शूर्पं द्व्यशीतिरष्टासप्ततिर्वा कपालानि, स्थाल्यः सप्त, उलूखलमुसलम्, पात्रीधान्यम्, शाखोपवेषः, संयवनोदकम्, दोहनचतुष्टयम्, तत्र स्थाल्यस्तिस्रः, शृतावदानमेक्षणम्, वाजिनभाण्डद्वयम्, द्वादश पुरोडाशपात्र्यः, शमीपत्रकरीराणि, कर्मापवर्गा चेति । प्रतिप्रस्थातुः पात्रासादनम् । दोहनचतुष्टयम्, शृतावदानम्, वाजिनभाण्डम्, शमीपत्रकरीराणि ।

ततो हविर्ग्रहणादि । इन्द्राग्निभ्यां जुष्टमिति पुरोडाशग्रहणम् । तत आग्नेयादि सौर्यान्तानाम् । आज्यान्ते वाजिनपात्रे पुरोडाशपात्रीशृतावदानमेक्षणसम्मार्गः । सम्मार्जनापासनम् । विभसमीकरणाद्यात्मालम्भनान्तम् । पशावकृतं चेदिह नियोगतो मन्थनम् । पत्न्यै० होतृमैत्रावरुणाविति प्रैषः । स्रुचावादायोभयोर्यजप्रैषावाज्यभागौ । ततः प्रतिप्रस्थाता स्रुक्पाणिरास्ते । अध्वर्योः पूर्वं पशुपुरोडाशयागः ।

तत आग्नेयादिभिः सौर्यान्तैः । ततो यजप्रैषः सगुणः स्विष्टकृद्यागः । प्राशित्रादिभागपरिहरणान्तम् । ऐष्टिकवद्दक्षिणादानम् । प्रथमजगवधेन्वृषभोऽष्टाराश्वमसीति । सपश्वैकाहिकानां चातुर्मास्यानां समृद्ध्यर्थमिति च । शाङ्खायनमते पशुदक्षिणाऽपि भवति । ततो दर्विहोमः ।

ततः पशुविसशनादि त्रिःप्रभावयतादित्यन्तम् । ततः पित्र्या । ततस्त्रैयम्बका उदकोपस्पर्शनान्ताः । ततो जुह्वां पृषदाज्यमादायोपविश्य पृच्छतीत्यादि धारानुयाजान्तम् । व्यूहने–इन्द्राग्न्योर्वनस्पतेरुज्जितिम् । इन्द्राग्नी वनस्पतिस्तमनुदन्त्विति । आग्नेयादीनामावाहनादिष्विव व्यूहनेऽपिसङ्कीर्त्तनाभावः ।

सहशाखया प्रस्तरानुप्रहरणम् परिधिभिः सहोपवेषहोमः । हृदयशूलावभृथसमिदाधानान्ते वपनम् । पाशुकवरुणप्रघासवत्सर्वं कर्मापवर्गान्तम् । चत्वारि शतानि ब्राह्मणा भोज्याः ।

इत्यैष्टिकाकानि पाशुकानि चातुर्मास्यानि ।



८० (१) पाणिनिव्याकरणे वादरत्नम्। न्यायव्याकरणाचार्य मीमांसक शिरोमणि पं० सूर्यनारायणशुक्लेन विरचितम्। ( तत्र च न्यास परिष्कारपरिशिष्ट भेदेन प्रकरण त्रयम् यत्र पञ्चन्यून सार्धशतसूत्रेषु १४९ महताटोपेन न्यासाविचारिताः तत्र प्रथमं प्रकरणं मुद्रितं प्रथमो भागः। [ व्या० वि १० ] रु० १—८

८० (२) पाणिनीव्याकरणे वादरत्नम्। द्वितीयोभागः रु० १—४

८१ गणितकौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितगणित-संग्रहपुस्तकम्। [ गणितविभागे १ ] रु० ०—६

८२ छन्दः कौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितछन्द-संग्रहपुस्तकम्। [ छन्दोविभागे ३ ] रु० ०—६

८३ योगदर्शनम्। महर्षिप्रवरपतञ्जलिप्रणीतम्। तत्र ( १ ) भोजवृत्तिः, [ २ ] भावा-गणेशवृत्तिः, [३] नागोजीभट्टवृत्तिः, [४] मणिप्रभा, [५] योगचन्द्रिका, [६] योगसुधाकराख्य टीका षट्कसमेतम्। सटिप्पण। [ योग० विभागे १ ] रु० २—०

८४ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम्। म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा परीक्षोपयोगि सुधाऽऽख्यव्याख्या सहितः। १ से ४ सर्गः मूल्यम् रु० १-४-० तथा १ से ५ सर्गः रु० १—८ तथा ६ से १० सर्गः। रु० १—८

८५ योगदर्शनम्। पं० श्रीबलदेवमिश्रकृत योगसूत्रप्रदीपिकाख्यव्याख्यया सहितम्। सटिप्पण। [ योग वि० २ ] १—०

८६ काव्यमीमांसा। राजशेखरविरचिता। साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्ते कृत काव्यमीमांसा—चन्द्रिका टीका सहित [ १ से ५ अध्याय ] प्रथमो-भागः। [ काव्यविभाग १३ ] रु० ०—८

८७ नागानन्दनाटकम्। श्रीहर्षदेवप्रणीतम्। काशीविश्वविद्यालयाध्यापकेन एम० ए० साहित्याचार्य पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्यया समलङ्कृत्य वृहत् भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम्। [ नाटक विभागे १ ] रु० १—४

८८ मेघदूतकाव्यम्। महाकवि श्रीकालीदास विरचितम्। मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य पं० श्री नारायण-शास्त्री खिस्तेकृत भावप्रबोधिनीव्याख्या टिप्पण्या च सहितम्। [ काव्य०४ ] रु० १—८

८९ जागदीशीव्यधिकरणम्। न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम्। ( न्यायविभागे २ ) रु० २—०

९० काव्यकल्पलतावृत्तिः। श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता। ( अलङ्कारविभागे ४ ) रु० १—४

९१ वैयाकरणसिद्धान्तचन्द्रिका। श्रीरामाश्रमप्रणीता। श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता। पं० श्रीनवकिशोरशास्त्रिणा-निर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया लिङ्गानुशासनप्रक्रियया उणादिकोषेण च सहिता। (व्या० वि० ११) पूर्वार्द्धम्। रु० २—८ उत्तरार्द्धं। रु० २-८

९२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शास्त्रिणा संशोधितम्। साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम्।(पुराणेतिहास वि०१) रु० ५—०

९३ आपस्तम्बधर्मसूत्रम्। श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम्। ( कर्मकाण्डविभागे ७ ) रु० ४—०

९४ अवच्छेदकत्वनिरुक्तिः। श्रीजगदीशतर्कालङ्कारकृताः। न्यायाचार्य श्रीशिवदत्त-मिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितः। ( न्याय वि० १३) रु० १—४

९५ संस्कारदीपकः । म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीयविरचितः। संपूर्णः।
( कर्मकाण्ड वि० ८ ) रु० ८—०
९६ वर्षकृत्यदीपकः । कालनिर्णयव्रतोद्यापनसहितः। म० म० पं० नित्यानन्दपन्त-पर्वतीय विरचितः। ( कर्मकाण्ड वि० ९ ) रु० ३—८
९७ श्रौतसूत्रम्। श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम्। (कर्म० वि० १०) रु० २—०
९८ नलचम्पूः अथवा दमयन्तीकथा । महाकविश्रीत्रिविक्रमभट्टविरचिता। विषमपद-प्रकाशाख्यव्याख्यया सहिता । भावबोधिनी टिप्पणी सहिता। (का० वि०१५) रु०१–४
९९ श्रीब्रह्मसूत्रम् । श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभा-ख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येण च सनाथीकृतम्। ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—०
१०० वाग्वल्लभः। सर्वथाऽपि नवीनोऽपूर्वः प्रौढः परमोपयोगितया नियतमुपादेयतमश्छ-न्दोनिबन्धः, श्रीमता देवज्ञाग्रेसरेणागममार्मिकेण कविपुङ्गवेन दुःखभञ्जनविदुषा विरचितः, तत्सुतेन बहुशास्त्रपारगेण कविचक्रवर्तिना महामहोपाध्यायेन देवीप्रसाद पण्डितप्रवरेण कृतया वरवर्णिन्या टीकयोपस्कृतः। ( छन्दः शास्त्र वि० ४) रु० २—८
१०१ सिद्धान्तलक्षणम्। श्रीजगदीशतर्कालङ्कारकृतम्। न्यायाचार्य श्रीशिवदत्तमिश्र-विरचित गंगाख्यव्याख्या टिप्पणी सहितम्। (न्याय विभागे ४) ) रु० १—८
१०२ वेदभाष्यभूमिकासंग्रहः । ( सायणाचार्यविरचितानां स्ववेदभाष्यभूमिकानां संग्रहः ) । [ वेद० वि० ५ ] रु० २–८
१०३ माधवीयधातुवृत्तिः। श्रीमत्सायणाचार्यविरचिता। ( व्या० वि० १२) रु० ५—०
१०४ बौधायनधर्मसूत्रम्। श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम्। [कर्म०वि० ११] रु० ४—०
१०५ ताण्ड्यमहाब्राह्मणम् । सायणाचार्यविरचितभाष्यसहितम् । ( प्रथमोभागः ) ( वेद वि० ६ ) रु० ५—०
१०६ न्यायमञ्जरी। जयन्तभट्टकृता। न्याय-व्याकरणाचार्येण पं० सूर्यनारायणशास्त्रिणा कृतया टिप्पण्या समेता। द्वितीयोभागः। [ न्या० वि० १५ ] रु० ३—०
१०७ शारदातिलकम्। श्रीमद्राघवभट्टकृतपदार्थादर्शटीकासहितम्।
( तन्त्रशा० वि० १ ) रु० ५—०
१०८ मन्त्रार्थदीपिका। म० म० श्रीशत्रुघ्नविरचिता। ( वेद० वि० ७ ) रु० २—०
१०९ शब्दशक्तिप्रकाशिका । श्रीमज्जगदीशतर्कालङ्कारविनिर्मिता । श्रीकृष्णकान्त-विद्यावागीशकृतया कृष्णकान्तीटीकया श्रीमद्रामभद्रसिद्धान्तवागीशविरचितया रामभद्रीटीकया च समलङ्कृता। न्यायाचार्य काव्यतीर्थ पं० ढुण्ढिराजशास्त्रि-कृतया छात्रोपयुक्तया विषमस्थलटिप्पण्या मूलकारिकार्थेन च सहिता।
(न्या वि० १६) रु० ४—८
११० योगदर्शनम् ( पातञ्जलदर्शनम् ) भगवत्पतञ्जलिरचितं, राघवानन्दसरस्वतीकृत-"पातञ्जलरहस्याख्य"टिप्पनीयुक्तया द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रवि-रचितया "तत्त्ववैशारद्या"व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित"योगवार्त्तिक"-समुद्भासितेन मधुपुरीयकापिलमठस्थस्वामिहरिहरानन्दारण्यकृतभास्वतीवृत्त्या सहितेन भगवच्छ्रीकृष्णद्वैपायनव्यासदेवोपज्ञ-"सांख्यप्रवचन" भाष्येणोद्द्योति-तम्, प्रदेशविशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य्य-दार्शनिकसार्वभौम-साहित्य-दर्शनाद्याचार्य-तर्करत्न-न्यायरत्न-गोस्वामिदामोदरशास्त्रिणा विहितया टिप्पन्या "पातञ्जलप्रभा"नामिकया भूमिकया च संवलितम्, एतदीयसंशोधनसम्पादन-कर्मीकृतं च। ( योगशास्त्रविभागे ३ ) रु० ५—०

March, April, May. 1935.

THE
# CHOWKHAMBÂ SANSKRIT SERIES
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO'S. 447, 448, 449.

श्रीमन्महर्षिकात्यायनप्रणीतं

# श्रौतसूत्रम्

देवयाज्ञिकपद्धतिसहितम् ।

काशीविश्वविद्यालयाध्यापकेन
वेदाचार्य श्रीविद्याधरशर्मणा
संशोधितम् ।

# KĀTYĀYANA SRAUTA SŪTRA

WITH

DEVAYĀJÑIKA PADDHATI

*Edited by*

VEDĀCHĀRYA
PANDIT SRĪ VIDYĀDHARA S'ARMĀ
Professor, Benares Hindu University.

FASCICULAS III–V–३ से ५.

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE.
*Benares City.*
1936

श्रीः



आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः ४४७-४४८-४४९.

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

मित्रविन्दा श्री-राष्ट्र-मित्रायुष्कामस्य ॥१॥ दश-हविः ॥२॥ आग्नेयः, सौम्यश्चरु, र्वारुणो दशकपालश्चरुर्वा यावो, मैत्रश्चरुरैन्द्र एकादशकपालो, बार्हस्पत्यश्चरुः, सावित्रो द्वादशकपालोऽष्टाकपालो वा, पौष्णश्चरुः, सार

सांवत्सरिकचातुर्मास्यकरणाशक्तौ सत्यां यदा सर्वाणि पर्वाण्युत्कृष्य शुनासीरीयकाले फाल्गुन्यां चैत्र्यां वा वसन्ते वा तदा पौर्णमास्यां कार्याणि । यदा तेषां चापकृष्य सर्वाणि क्रियन्ते तदाऽपि प्रतिपद्येव कार्याणीति ज्ञेयम् ।

इति पञ्चमस्यैकादशी कण्डिका ॥ ११ ॥

अथ मित्रविन्दा इष्टिरुच्यते । सा च श्रीकामराज्यकाममित्रकामायुःकामानां भवति । तत्र दश हवींषि भवन्ति । आग्नेयोऽष्टाकपालः, सौम्यश्चरुः, वारुणो दशकपालः, यवमयश्चरुर्वा, अथवा व्रीहिमयश्चरुः मैत्रश्चरुः, ऐन्द्र एकादशकपालः, बार्हस्पत्यश्चरुः, सावित्रो द्वादशकपालोऽष्टाकपालो वा, पौष्णश्चरुः, सारस्वतश्चरुः त्वाष्ट्रो दशकपालः इत्येतानि दश हवींष्युपांशु भवन्ति । तत्रोद्धरणे मित्रविन्दार्थमिति। मित्रविन्दयाऽहं यक्ष्य इति वरणे ।

पात्रासादने शूर्पाग्निहोत्रहवणिः स्फ्यः कपालान्येकपञ्चाशत्सप्तत्रिंशद्वा, वारुणचरुपक्षे दशभिरूनानि, चरुस्थाल्यः पञ्च षड् वा । शम्या कृष्णाजिनमित्यादि । दक्षिणा दश गावः सहस्रं वा । अष्टादशेध्मकाष्ठानि । श्रृतावदानानन्तरं मेक्षणम् । पात्र्यः पञ्च चतस्रो वा । शेषं प्रकृतिवत् । नानाबीजधर्मा उक्ताः ।

ग्रहणे अग्नये जुष्टम् , सोमाय वरुणाय मित्राय इन्द्राय बृहस्पतये सवित्रे पूष्णे सरस्वत्यै त्वष्ट्रे जुष्टमिति । प्रोक्षणे त्वा जुष्टमिति । एकबीजपक्षे कण्डान्ते विभज्यालम्भः । इदमग्नेर्वरुणस्येन्द्रस्य सवितुः पूष्णस्त्वष्टुश्च । इदं सोमस्य मित्रस्य बृहस्पतेः सरस्वत्याश्च । यथोक्तमग्नौधः कपालोपधानम् । दशकपाले चत्वार्युपधाय षट् समं विभज्य त्रीणि दक्षिणतस्त्रीणि, चोत्तरत इति । पिष्टानां तण्डुलानां चेक्षणम् । ईक्षणान्ते पूष्णो विभागः । इदमग्नेर्वरुणस्येन्द्रस्य सवितुस्त्वष्टुश्च । इदं पूष्णः । चरूणां तण्डुलान्विभज्यालम्भः । इदं सोमस्य, इदं बृहस्पतेः, इदं सरस्वत्याः । वारुणचरुपक्षे तस्यापि चरुमध्ये कीर्त्तनम् । पुनः संयवनान्ते पुरोडाशानां प्राणदानम् । अग्निं गच्छ, सोमम् , वरुणम् , मित्रम् ,

स्वतश्चरु, स्त्वाष्ट्रो दशकपाल एकं प्रदानम् ॥ ३ ॥ समस्यानुवाचनम् ॥४॥ यजेति च ॥ ५ ॥ प्रैषाश्च ॥६॥ उत्तरे निगमा यथेष्टं जोषणाश्रुतेः ॥७॥ अनुलोमा वा चोदनागुणत्वात् ॥८॥ पञ्चदश सामिधेन्यः ॥९॥ पुष्टिमन्तावाज्यभागौ-अग्निना रयिमश्नवत् पोषमेव दिवे दिवे। यशसं वीरवत्तमम् ॥ गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः । सुमित्रः सोम नो भवेति ॥ १० ॥ हविषोऽनुवाक्या-अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः सहस्री । पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैरिति ॥११॥ याज्या-त्वष्टा रूपाणि ददती सरस्वती पूषा भगं सविता मे ददातु । बृहस्पतिर्दददिन्द्रो बलं मे मित्रः क्षत्रं वरुणः सोमो अग्निरिति ॥ १२ ॥

---

इन्द्रम् , बृहस्पतिम् , सवितारम् , पूषणम्, सरस्वतीम्, त्वष्टारं गच्छ । पञ्चदशेन वज्रेणेत्यवबाधनम् ।

उत्तमप्रयाजे—इदमग्नये सोमाय वरुणाय मित्रायेन्द्राय बृहस्पतये सवित्रे पूष्णे सरस्वत्यै त्वष्ट्रे देवेभ्य इत्यादि । तत आज्यभागौ । प्रधानयागे-अग्नये सोमाय वरुणाय मित्राय इन्द्राय बृहस्पतये सवित्रे पूष्णे सरस्वत्यै त्वष्ट्रे अनुब्रूहि । जुह्वामुपस्तारः। क्रमेण सर्वेषां मध्यात्पूर्वार्द्धाच्चावदानम्। अभिघारः । प्रत्यभिघारः अतिक्रम्याश्राव्य अग्निं सोमं वरुणं मित्रम् इन्द्रं बृहस्पतिं सवितारं पूषणं सरस्वतीं त्वष्टारम् उपांशु यजति प्रथमेन ।

इति पञ्चमस्य द्वादशी कण्डिका ॥ १२ ॥

तत उपविश्याज्यस्थाल्याः स्रुवेण गृहीत्वाऽग्निरन्नाद इत्यादिभिर्दशभिर्मन्त्रैः स्रुवाहुतीर्जुहोति । इदमग्नय इत्यादयः प्रधानदेवताभ्यस्त्यागाः । ततः स्विष्टकृदादि । प्राशित्रादि सर्वं सर्वेषाम् । दक्षिणालम्भे दशगवमसि सहस्रगवमसीति वा । अस्या मित्रविन्दायाः समृद्ध्यर्थं दश गा दक्षिणा ब्रह्मणे इत्यादि । व्यूहने-अग्नेः सोमस्य वरुणस्य मित्रस्येन्द्रस्य बृहस्पतेः सवितुः पूष्णः सरस्वत्यास्त्वष्टुरुज्जितिम् । अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता पूषा सरस्वती त्वष्टा तमपनुदन्तु । प्रस्तरहोमे-इदमग्नये सोमाय वरुणाय मित्रायेन्द्राय बृहस्पतये सवित्रे

हुत्वा स्थाल्याः स्रुवेणोपजुहोत्यग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहा, सोमो राजा राजपती राज्यमस्मिन्यज्ञे मयि दधातु स्वाहा, वरुणः सम्राट् सम्राट्पतिः साम्राज्यमस्मिन्यज्ञे मयि दधातु स्वाहा, मित्रः क्षत्रं क्षत्रपतिः क्षत्रमस्मिन्यज्ञे मयि दधातु स्वाहा, इन्द्रो बलं बलपतिर्बलमस्मिन्यज्ञे मयि दधातु स्वाहा, बृहस्पतिर्ब्रह्म ब्रह्मपतिर्ब्रह्मवर्चसमस्मिन्यज्ञे मयि दधातु स्वाहा, सविता राष्ट्रं राष्ट्रपती राष्ट्रमस्मिन्यज्ञे मयि दधातु स्वाहा, पूषा भगं भगपतिर्भगमस्मिन्यज्ञे मयि दधातु स्वाहा, सरस्वती पुष्टिं पुष्टिपतिः पुष्टिमस्मिन्यज्ञे मयि दधातु स्वाहा, त्वष्टा रूपाणाᳪं रूपकृद्रूपपती रूपेण पशूनस्मिन्यज्ञे मयि दधातु स्वाहेति ॥१॥ विराजौ संयाज्ये ॥२॥ सहस्रवत्यौ वा—नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु । द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् ॥ उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः । शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातम इति ॥३॥ दश (गावो) दक्षिणा सहस्रं वा ॥४॥१३॥ इति पञ्चमोऽध्यायः ॥ ५ ॥

---

पूष्णे सरस्वत्यै त्वष्ट्रे देवेभ्य इत्यादि । शेषं प्रकृतिवत् । इयं मित्रविन्दा चान्द्रायणप्रत्याम्नायत्वेनापि स्मृतिषु विहिताऽस्ति ॥

इति मित्रविन्दा समाप्ता ॥

अथास्य हौत्रं लिख्यते । कं प्रपद्येत्यादि । पञ्चदश सामिधेन्यः। आवाहने आज्यभागानन्तरम् अग्निं ।सोमम् वरुणम् मित्रमिन्द्रं बृहस्पतिं सवितारं पूषणम् सरस्वतीं त्वष्टारम् उपांशु, आवहेत्युच्चैः । उत्तमे प्रयाजे ये ३ यजामहे स्वाहाऽग्निᳪं स्वाहा सोमᳪं स्वाहा अग्निᳪं स्वाहा सोमं वरुणं मित्रमिन्द्रं बृहस्पतिं सवितारं पूषणम् सरस्वतीं त्वष्टारम् उपांशु स्वाहा देवेभ्य इत्यादि ।

पुष्टिमन्तावाज्यभागौ ।अग्नयेऽनुब्रूहि । अग्निना रयिमश्नव० त्तमो३म् । ये३यजामहेऽग्निं जुषाण इति। सोमायानु० गयस्फानो अमीवहा० भवो३म् ।

# षष्ठोऽध्यायः ।

पशिबज्या संवत्सरे संवत्सरे प्रावृषि ॥१॥ आवृत्ति-मुखयोर्वा ॥२॥ गृहेषु ॥३॥ यूपाहुतिं जुहोति चतुर्गृहीतं स्रुवेण वोरु विष्णविति ॥४॥ आज्यशेषमादाय

---

येऽ३हे सोमं जुषाण इति । प्रधानयागे पुरोऽनुवाक्या-अग्निः सोमो वरुणो मि०यज्ञोऽ३म् । येऽ३हे त्वष्टा रूपाणि ददती० अग्निर्वौऽ३षट् । याज्यावदादेशो यथा सम्प्रेषितं वेति शाङ्खायनः (३-७-९-१०) । तेनानुक्रमेणापि देवतादेशनं भवति निगमेषु पुरोऽनुवाक्यावत् । प्रेद्धो अग्न इति विराजौ स्विष्टकृतः। सहस्रवत्यौ वा । नू नो रास्वेति पुरोऽनुवाक्या । येऽ३यजामहेऽग्निं स्विष्टकृतमयाडग्निरग्नेः प्रियाधामान्ययाट् सोमस्य० न्ययाट् प्रियाधामा० ग्नेः सोमस्य वरुणस्य मित्रस्येन्द्रस्य बृहस्पतेः सवितुः पूष्णः सरस्वत्यास्त्वष्टुः उपांशु प्रियाधामान्ययाड् देवानामित्यादि । सूक्तवाके । आज्यभागानन्तरम्-अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता सरस्वती त्वष्टा उपांशु हविरजुषन्तावीवृधन्त महो ज्यायोऽक्रत । देवा आज्यपा इत्यादि॥

इति पञ्चमस्य त्रयोदशी कण्डिका ।। १३ ॥

इति श्रीत्रिरग्निचित् सम्राट् स्थपतियाज्ञिक श्रीप्रजापति याज्ञिक देवकृत कात्यायन सूत्रपद्धतौ पञ्चमोऽध्यायः समाप्तः ।

इति कातीये श्रौतसूत्रे पञ्चमोऽध्यायः ।

---

अथ निरूढपशुबन्धस्य पद्धतिर्लिख्यते । स च इन्द्राग्नीदेवतो वा सूर्यदेवतो वा प्रजापतिदेवतो वा प्रतिवर्षं वर्षास्वृतौ श्रावणादिचतुर्णां पर्वणां मध्ये अन्यतरस्मिन् भवति । अथवा दक्षिणायनदिने उत्तरायणदिने । अस्मिन्पक्षे एकस्मिन्वर्षे पशुद्वयं भवति ।

तत्र प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं कृत्वा अन्वारम्भणीया च । पशोः सान्नाय्यविकारत्वादनुदिते प्रारम्भः । तत्र पूर्वमृत्विग्वरणम् । पशुदक्षिणेन वा धेनुदक्षिणेन वा वरदक्षिणेन वा । गोत्र शर्मन् ऐन्द्राग्नेन निरूढपशुना सौर्येण वा प्राजापत्येनेति वा । दक्षिणा-देवता-विकल्पाः । पक्षत्रयाणां प्रयोगे विकल्पः । ब्रह्मा होताऽध्वर्युः मैत्रावरुणः प्रतिप्रस्थाता आग्नीध्रश्च एतेषां षण्णामृत्विजां क्रमेण वरणम् । ततस्तान् यथासम्भवमर्चयेत् ।

सतक्षा गच्छति यूपम् ॥५॥ अभिमृशत्यत्यन्यानिति ॥६॥ प्राङ् तिष्ठन्नभिमन्त्रयते वा ॥७॥ पालाशं बहुलपर्णमशुष्काग्रमूर्ध्वशकलशाखं मध्याग्रोपनतमव्रणम् ॥८॥ अभावे खादिरबिल्वरौहितकान् ॥९॥ खदिराभावे सोम इतरान् ॥१०॥ स्रुवेणोपस्पृशति विष्णवे त्वेति ॥११॥ ओषध इति कुशतरुणं तिरस्कृत्य स्वधित इति परशुना प्रहरति ॥१२॥ प्रथमशकलं निदधाति ॥१३॥ अनक्षस्तम्भं वृश्चति ॥१४॥ एकजम् ॥१५॥ द्यां मालेखीरिति पतन्तमभिमन्त्रयते ॥१६॥ न दक्षिणा पतेत् ॥१७॥ अयं हि त्वेति शोभनम् ॥१८॥ अभिमन्त्रणशेषो वाऽविशेषोपदे-

---

ततोऽध्वर्युः पञ्चभूसंस्कारपूर्वकमाहवनीयदक्षिणाग्न्योरुद्धरणं करोति । तत्र निरूढपश्वर्थं गार्हपत्यादिति प्रयोगः । अग्न्यन्वाधानम् । चतुरासनम् ब्रह्मवरणम् । ऐन्द्राग्नेन निरूढपशुनाऽहं यक्ष्ये तत्र भूपत इति व्रतग्रहणम् ।

ततो यूपाहुत्यर्थमाज्यसंस्कारः निरुप्याज्यं गार्हपत्येऽधिश्रयति पूर्वं दर्भैः स्रुवस्य सम्मार्गः । ततो जुह्वाः संमार्गः । उद्वासनम् । साग्राभ्यां दर्भाभ्यामाज्यस्योत्पवनम् । आज्यस्यावेक्षणम् । जुह्वां चतुर्गृहीतं गृहीत्वा समिधमादायाहवनीयं प्रति गत्वा समीपे उपविश्याहवनीयं परिस्तीर्योत्थाय प्रागग्रामुदगग्रां वा समिधमाधायोपविश्योरु विष्णविति जुहोति । इदं विष्णवे । अथवा स्रुवेणैव जुहोति, न स्रुचा । तस्मिन् पक्षे स्रुवस्यैव समार्गः ।

तत आज्यशेषं स्थालीस्थमादाय स्रुक्स्रुवं चादाय तक्ष्णा सूत्रधारेण सहितो यूपं प्रति गच्छति । ब्रह्मयजमानौ दक्षिणत उपविशेताम् । ब्रह्मणा तूष्णीमासनसंस्कारः ।

तत्र यूपस्य लक्षणमुच्यते । पालाशं बहुलपर्णयुक्तमशुष्काग्रमूर्ध्वशकलशाखं मध्येऽग्रे च वक्रमव्रणमेकजम् । एवंविधस्य यूपस्य पश्चात्प्राङ्मुख उपविश्य यूपमभिमृश्य जपति अत्यन्याँ अगानिति । अथवा पश्चात्प्राङ्मुखस्तिष्ठन्यूपमभिमन्त्रयेत् अत्यन्यानित्येव मन्त्रेण । ततो यूपच्छेदनप्रदेशं साज्येन स्रुवेणोस्पृशति विष्णवे त्वेति । छेदनप्रदेशं सर्वतोऽङ्क्तयतीत्यर्थः । तत ओषध इति कुशतरुणमन्तर्धाय

शात् ॥१९॥ अतस्त्वमित्याव्रश्चने जुहोति ॥२०॥ यूपे वा तत्संस्कारात् ॥२१॥ स्थाणौ श्रुतेश्च ॥२२॥ परिवास्याच्छेदनं पुनः ॥२३॥ त्र्यरत्निश्चतुररत्निर्वा ॥२४॥ एकारत्निप्रभृतीनेके ॥२५॥ अष्टाश्रिं करोत्युपरवर्जम् ॥२६॥ अग्राच्चषालं पृथमात्रमष्टाश्रि मध्यसंगृहीतम् ॥२७॥ ऊर्ध्वमग्रं प्रतिमुञ्चति द्व्यङ्गुलं त्र्यङ्गुलं वा तदूर्मातिक्रान्तं यूपस्य ॥२८॥ पञ्चारत्निः पञ्चदशपर्यन्तः सोमे दशसप्तचतुर्दशवर्जमपरिमितो वा ॥२९॥ सप्तदश वाजपेये ॥३०॥ एकविंशतिरश्वमेधे ॥३१॥ यथाकामथं स्थविमा ॥३२॥ वेदिं करिष्यन् षड्ढोतारं पञ्चगृहीतं मनसाऽनुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा "द्यौष्पृष्ठमन्तरिक्षमात्माऽङ्गैर्यज्ञं पृथिवीथं शरीरैर्वाचस्पतेऽच्छिद्रया वाचाऽच्छिद्रया जु-

---

स्वधित इति परशुना प्रहरति स्रुवेणाङ्कितप्रदेशे। प्रथमशकलमादाय सुगुप्ते स्थापयति। अग्रे यूपावटमध्ये प्रक्षेपार्थं तथाविधं यूपस्य च्छेदनं कर्त्तव्यं यथाऽवशिष्टः स्थाणुरनसो गच्छतो ऽक्षं न स्तभ्नाति।

ततश्छिन्नप्रायं यूपं हस्तेन प्रेरयित्वा प्राच्यामुदीच्यां वा पातयेत्, न दक्षिणस्यां दिशि। ततो द्यां मा लेखीरिति मन्त्रेण पतन्तं यूपमध्वर्युरभिमन्त्रयते। ततस्तूष्णीं पर्णशाखादिपातनेन यूपशोधनम्। ततः स्थाणुं परिस्तीर्य जुह्वा सकृद्गृहीतमाज्यं गृहीत्वा अतस्त्वमिति स्थाणौ जुहोति। इदं वनस्पतये। तत्राज्यं स्रुवं च यूपाहुत्यर्थं संस्कृतमेव। आज्यं न पुनः संस्करणीयम्। यूपाहुत्यां स्रुवेण होमपक्षे जुह्वा अत्र संमार्गः कर्त्तव्यः।

ततो मूलाद्यूपं चतुररत्निप्रमाणं त्र्यरत्निप्रमाणं पञ्चारत्निप्रमाणं वा मित्वा ऽवशिष्टमग्रं छिन्द्यात्। अतः पुनश्छेदनं न कार्यम्। ततो यूपं मूले पञ्चमांशं त्यक्त्वा तक्षा यूपं तक्षणेनाष्टकोणं करोति।

ततो ऽवशिष्टतो यूपाग्राच्चषालं पृथमात्रमष्टकोणं मध्यसंगृहीतमूर्ध्वखातं कृत्वा यूपस्याग्रे तथा प्रमुञ्चति यथा चषालादूर्ध्वं द्व्यङ्गुलं त्र्यङ्गुलं वा यूपस्याग्रं परिशिष्यते। ततो यूपस्य मूलात्प्रादेशमात्रः खड्गाकारः स्वरुः कार्यः। एतदष्टाश्रीकरणादि सर्वं तक्ष्णा कर्तव्यम्।

ततः पश्चादागत्य पुनराज्यं संस्कृत्य पञ्चगृहीतं गृहीत्वा परिस्तीर्य

हा दिवि देवताभ्यः होत्रामैरयन्त्स्वाहेति ॥३१॥१॥

वेदिं करोति ॥१॥ वरुणप्रघासवत्स्फ्याद्याऽऽग्निनिधा-
नात् ॥२॥ एकमिध्मेन प्रणयति ॥ ३ ॥ व्रतोपायन-प्रणी-

समिधमाधायाहवनीये द्यौष्पृष्ठमिति मन्त्रं मनसोच्चार्य जुहोति । इदं वाचस्पतये ।

इति पशुसूत्रस्य प्रथमा कण्डिका ॥ १ ॥

---

ततो ब्रह्मयजमानौ उत्तरवेदेर्दक्षिणतो बहिर्वेदि उपविशतः । ततो यजमान वाचं यच्छेति प्रैषः । ततः अपणस्य पश्चादुत्तरतो वा षण्णां पात्राणामासादनम् । अग्निहोत्रहवणि स्फ्यः पवित्रच्छेदनानि पवित्रे, अन्तर्धानतृणं द्वात्रिंशदङ्गुला शम्या वारणी च । ततो वाग्यतः पवित्रे छित्वा प्रोक्षणीः संस्कृत्य वज्रान्तर्धानतृणशम्यानां प्रोक्षणं करोति ।

ततो गार्हपत्यस्याग्रे प्रोक्षणीनां निधानम् । ततः स्फ्यादानादि । चतुररत्निः पश्चात्तिर्यक् । षडरत्निर्मध्ये प्राची । त्र्यरत्निः पुरस्तात्तिर्यक् । तेषां त्रयाणां मध्ये शङ्कुः । ततो वेदिं दक्षिणत उत्तरतःस्वमध्यसंगृहीतां कृत्वा अग्निमभितोऽसौ कुर्यात् ।

अत्र वेदिसाधनोपायभूतः श्लोकः—

"नवारत्निमिता रज्जुर्ल्लक्षिता षट्स्वतःपरम् ।
अर्द्धेऽर्द्धे त्रिषु पाशः स्यात्पशुवेदेः प्रसाधनम्" ॥

प्रकारान्तरं च—

"त्र्यरत्नौ लक्षणं कुर्यादर्द्धे सार्द्धेऽन्तरे तथा ।
अर्द्धे ऽरत्नौ ततः सार्द्धे वेदिः सा पाशुकी मता" ॥

अत्र संग्रहसाधनादि दर्शपूर्णमासवेदिवत् । एवं वेदिं मित्वा वेदिपरिसमूहनम् । उत्करकरणम् । सतृणवज्रादानादि सतृणपुरीषस्योत्करप्रक्षेपान्ते पूर्वपरिग्रहः । वेद्यां त्रिरुल्लेखनम् । हरणप्रैषः । हरणं संमर्शनम् ।

संमर्शनान्तरमध्वर्युः शम्यां स्फ्यं चादायोत्करस्य पुरस्तादन्तराले गमनागमनार्थं सञ्चरमार्गं परित्यज्य वेद्यन्ते चात्वालं मिमीते । तत्र पूर्वं पश्चादुदगग्रां शम्यां निधाय स्फ्येनान्तर्लिखति तप्तायनीति । ततः शम्यान्तरालं मुक्त्वा पुरस्तादुदगग्रां शम्यां निधाय वित्तायनीति स्फ्येनान्तर्लिखति । ततो दक्षिणतो वेदिसंलग्नां प्राचीं शम्यां निधाय स्फ्येनान्तर्लेखां करोति अवतान्मा नाथितादिति । तत उत्तरतः प्रागग्रां शम्यां नि-

ता-ऽऽज्यभाग-भागावदान-पूर्णपात्र-विष्णुक्रमान्कुर्याद्ध-विर्यज्ञाविधे ॥४॥ परिस्तरणपात्रसꣳसादनप्रोक्षणाज्यनिर्व-पणाधिश्रयणानि कृत्वोत्तरपरिग्रहादि करोत्याऽऽज्या-सादनात् ॥ ५ ॥ सप्तृषदाज्यमाज्यग्रहणम् ॥ ६ ॥ बर्हिषि प्लक्षशाखा स्तृणाति ॥७॥ देवस्य त्वेत्यभ्रिमादाय यूपाव टं परिलिखतीदमहमित्याहवनीयस्य पुरस्तादन्तर्वेद्यर्ध-म् ॥८॥ उपरसम्मितं खनति ॥९॥ प्राचः पाꣳसूनुद्वपति ॥१०॥ तदग्रेण यूपं प्राञ्चं निदधाति ॥११॥ कुशमुष्टिमुप-

---

धाय स्फ्येनान्तर्लिखति अवतान्मा व्यथितादिति मन्त्रेण । एवं शम्या प्रमाणं चतुष्कोणं चात्वालं परिलिख्य यजमाने ऽन्वारब्धे विदेदग्निरिति चात्वाले स्फ्येन प्रहरति । प्रहरणानन्तरमेव विसर्गः। ततः प्रहारेणोत्खा-तं पुरीषं हस्तेन स्फ्येन वाऽग्ने अङ्गिर इति वेदेः पूर्वार्द्धं प्रतिहृत्य पूर्वार्द्धे नि-खातशङ्कुसन्निधाने वेदिमध्ये तत्पुरीषं योऽस्यामिति मन्त्रेण निवपति । अग्नीत् निहितं पुरीषमुत्करवदभिन्यस्यति । एवमेव प्रहरणाभिन्यासान्तं वारत्रयं कर्त्तव्यम् । पुरीषनिर्वापे मन्त्रे विशेषः । यो द्वितीयस्यामिति द्वितीयपुरीषनिर्वापे, यस्तृतीयस्यामिति तृतीयपुरीषनिर्वापे ।

ततः स्फ्येनाभ्र्या वा चात्वालं खात्वोत्तरवेदिनिष्पत्तिपर्याप्तं पुरीष-मनु त्वेति हृत्वा तेन पुरीषेणोत्तरवेदिं निष्पादयति सिꣳहासीति मन्त्रेण कल्पस्वेत्यन्तेन द्वात्रिंशदङ्गुलशम्याप्रमाणां चतुरस्रां पूर्वार्द्धशङ्कोः प-श्चात्पदमात्रमधिकं वा परिशिष्य । ततः प्रत्यगुपदेशा“त्पदमात्रे भूयसि वा द्वात्रिंशदङ्गुलामुत्तरवेदिं चतुःस्रक्तिं कुर्यात्” इति कठसूत्रे दर्श-नात् । “अपरेण यूपावटं संचरमवशिष्योत्तरवेदिं निर्वपेदि”त्यापस्तम्बः ।

तत उत्तरवेदिमध्ये नाभिं प्रादेशमात्रीं चतुरस्रां करोति । ततः सिꣳ-हासीति शुन्धस्वेत्यन्तेनोत्तरवेदिमद्भिः प्रोक्षति । ततः सिꣳहासीति शुम्भस्वेत्यन्तेनोत्तरवेदेरुपरि सिकताः प्रकिरति । तत उदुम्बरशाखाभिः प्लक्षशाखाभिर्वा उत्तरवेदिं छादयति । दर्भैश्छादयति वा न वस्त्रैः ।

ततोऽष्टाविंशतिकाष्ठस्येध्मस्य त्रियूनबद्धस्याहवनीयेऽधिश्रयणम् । उ-पयमनीनां चोपकल्पनम् । कर्परे सिकता वा मृत्तिका वा उपयमन्य इत्युच्यन्ते । ताश्च प्रदीप्तस्येध्मस्योर्ध्वमुद्यम्य तस्याधस्तात् कर्परादि-स्था ध्रियन्ते तापनिवारणार्थम् । आज्यसंस्कारः । जुह्वां पञ्चगृही-तग्रहणं, देवदारुपरिधीनामुपकल्पनम् ।

ततः पञ्चगृहीतमाज्यमुद्यम्य क्वचित्पात्रे स्थिता लौकिकाः प्रोक्षणीश्चोद्यम्य प्रदीप्तमिध्मं चोद्यम्योपयमनीभिरद्भिः कर्परस्थाभिरधस्ताद् वारयित्वा ऽध्वर्युरग्नये प्रह्रियमाणायानुब्रूहीति वदति । तत एकस्फ्ययाऽनूदेहीति प्रतिप्रस्थातारं प्रेष्यति । होत्रा प्रदेवं देव्येत्यस्यामृचि त्रिरुक्तायां सत्याम् अग्निमुत्तरवेदिं प्रति हरति वेदेरुत्तरमार्गेण, कठसूत्रात् । ततः प्रतिप्रस्थाताऽऽहवनीयादारभ्य वेदिमध्ये स्फ्येन लेखां करोति उत्तरवेदिं यावत् दक्षिणश्रोणिं यावद्वा ।

ततो ऽध्वर्युरग्निमन्यस्मै प्रदाय प्रोक्षणीरादायोत्तरवेदेर्दक्षिणतो वेदिमध्ये उदङ्मुखस्तिष्ठन् प्रतिदिशमुत्तरवेदिं प्रोक्षति हस्तेनैव लौकिकप्रोक्षणीभिः । इन्द्रघोष इति पुरस्तात् । प्रचेता इति पश्चात् । मनोजवास्त्वा इति दक्षिणतः । विश्वकर्मेत्युत्तरतः । इदमहमिति उत्तरवेदेर्दक्षिणांससंलग्नं प्रोक्षणीशेषं बहिर्वेदि भूमौ निनयति । अभिचरन्निदमहं तमं वारमुमभिनिःसृजामीत्येवंविधेन मन्त्रेण प्रोक्षणीशेषं निनयति । अमुमित्यस्थाने शत्रोर्द्वितीयान्तनामग्रहणम् । अभिचारपक्षे एवोदकस्पर्शनं नान्यत्र ।

तत उत्तरत उपविश्य नाभ्या श्रोण्यंसेषु पञ्चगृहीतं जुहोति अध्वर्युः हिरण्यं यत्र क्वचन स्थितं पश्यन् नाभिं परिस्तीर्य सिंहयसि स्वाहेत्यादिभिः पञ्चभिर्मन्त्रैः प्रतिमन्त्रम् । तत्र क्रमः । पूर्वं दक्षिणेंऽसे सिंहयसि स्वाहेति । इदꣳ सिंह्यै । सिंह्यस्यादित्यवनिः स्वाहेति उत्तरश्रोण्याम् । इदं सिंह्यै आदित्यवन्यै । सिंह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहेति दक्षिणश्रोण्याम् । सिंह्यै ब्रह्मवन्यै क्षत्रवन्यै । सिंह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहेति उत्तरेंऽसे जुहोति । सिंह्यै सुप्रजावन्यै रायस्पोषवन्यै ।

ततो मध्ये जुहोति सिंह्यस्यावह देवान्यजमानायेति इदं सिंह्यै । ततो भूतेभ्यस्त्वेति होमार्थं नीचीकृतां स्रुचमूर्ध्वां करोति । ततो देवदारुवृक्षोत्थैः प्रादेशमात्रैः त्रिभिः परिधिभिः नाभिं परिदधाति ध्रुवोऽसि पृथिवीमिति मध्यमं पश्चादुदगग्रम् । ध्रुवक्षिदसीति दक्षिणं प्रागग्रम् । अच्युतक्षिदसीति उत्तरं प्रागग्रम् ।

ततोऽग्नेः पुरीषमसीति नाभ्यामुपरि गुग्गुलुरोहितजं पुष्पं मेषशिरोरोमाणि च सहैव निदधाति । शीर्षलोम्नामभावेऽन्यानि मेषशरीरसम्बन्धिरोमाणि गृहीत्वा निधेयानि । तेषु सम्भारेषु उपरीष्माग्निं दधाति । तस्याग्नेरुत्तरतः उत्तरवेदेरुपर्येवाग्निसमीपे उपयमनीरुपनिवपति ।

ततो द्विरासनम् । प्रणीताप्रणयनम् । अकृतं चेत्ततः प्राग्व्रतग्रहणम् । मध्यमवर्जं परिस्तरणम् । पात्रासादनम् । तत्र स्फ्याग्निहोत्रहवणि, पवित्राणि सन्त्येव । शम्या दृषदुपलम् आज्यस्थाली आज्यं च, वेदश्च दक्षिणार्थः पशुर्धेनुर्वरो वा । अभ्रिः । इध्मचतुष्टयं स्रुवः, स्रुक्पञ्चकम् प्राशित्रहरणे । पात्रेजनीसप्तकम् । यूपाष्टकम् । उखापञ्चकम् । मन्थनचतुष्टयम् । इडापात्री, षडवत्तम् । अन्तर्धानकटः पूर्णपात्रम् । तत्र इध्मचतुष्टयम् । विंशतिरिध्मकाष्ठानि । अरत्निमात्र्यौ वपाश्रपण्यौ कार्ष्मर्यौ । तयोरेका विशाखा अविशाखा द्वितीया । अरत्निमात्रं वारणं हृदयशूलम् । प्लक्षशाखाश्चेति । बर्हिश्चतुष्टयम् । कार्ष्मर्यमयास्त्रयः परिधयः, काशमयः प्रस्तरः । काशमूलमग्रे विधृत्यौ अरत्निमात्रे । बर्हिश्चेति । स्रुक्पञ्चके । जुहूद्वयम् । उपभृद्द्वयं ध्रुवाश्चेति ।

पात्रेजननीसप्तके कलशः आपः षड्हिरण्यशकलानि । पृषदाज्यार्थं दधि । उपाकरणतृणं, मैत्रावरुणदण्डः । तस्य वेष्टनम् । यूपाष्टकः— यूपः चषालम् प्रथमशकलम् यूपवेष्टनम् आपः यवाः कुशमुष्टिः यूपाञ्जनार्थमाज्यं चेति । उखापञ्चके उखा असिः स्वरुः रशने एका द्विव्यामा द्विगुणा अपरा त्रिव्यामा त्रिगुणा चेति । मन्थनचतुष्टये-द्वे अरणी द्वे दर्भतृणे शकलं चेति ।

पूर्वसंस्कृता एव प्रोक्षणीरादाय देव्यायेति पात्रप्रोक्षणम् । असञ्चरे प्रोक्षणीनिधानम् । कुक्कुटाहननम् । आज्यनिर्वापवेदबन्धौ यजमान एव करोति । आज्याधिश्रयणमग्नीध्र एव । अध्वर्योः पर्यग्निकरणम् । उदकोपस्पर्शनम् ! ततो वेदिखननम् । उत्तरपरिग्रहः । दक्षिणतः पुरीषोद्वहनम् । अनुमार्जनम् । अग्नीधः प्रोक्षणीधारणम् । ततः स्फ्योद्यमनम् अध्वर्योः प्रोक्षणीप्रैषः स्फ्योदक्प्रहारः । पाण्योः प्रक्षालनम् । अपरेण प्रणीताः स्फ्यासादनम् ।

अग्नीद्वेदिमध्ये प्रोक्षणीरासाद्य प्रणीतानां पश्चात्प्रागग्रमिध्ममासाद्य तस्योत्तरतो बर्हिः प्रागग्रमेवासादयति । ततः पात्रसंमार्गः । पूर्वं स्रुवस्य । ततः स्रुवधर्मैश्चासिसंमार्गः । तैरेव मन्त्रैः प्रथमं प्रतपनम् । संमार्गः । प्रतपनमिति । ततो जुह्वाः । तूष्णीं वसाहोमहवन्याः । तत उपभृतः । ततः पृषदाज्योपभृत उपभृद्वत् । ततो ध्रुवायाः । तूष्णीं प्राशित्रहरणयोः । संमार्जनानां पशुपुरोडाशार्थपात्र्यादिसंमार्गार्थं च रक्षणम् नोपासनम् ।

ततः पत्नीसन्नहनम् । आज्योद्वासनम् । पत्न्याज्यावेक्षणम् । वेदिमध्ये आसादनम् । आज्योत्पवनम् । आज्यावेक्षणम् । ईक्षणान्ते वेद्यां पात्र्यां स्थाल्यन्तरे दध्यानिच्य तत्र स्थालीस्थमाज्यं निनयेत् । दधन्या-

**रि तस्मिन् ॥१२॥ प्रथमशकलं च ॥१३॥ अग्रमुत्तरेण चषालम् ॥१४॥ यवोऽसीत्यप्सु यवानोप्य प्रोक्षत्यग्रमध्यमूलानि "दिवे त्वेति प्रतिमन्त्रम् ॥१५॥ प्रोक्षामीति सर्वत्र साकाङ्क्षत्वात् ॥१६॥ अवटे शेषमासिञ्चति "शुन्धन्तामिति ॥१७॥ बर्हींषि प्राञ्च्युदञ्चि च प्रास्यति "पितृषदनमसीति ॥१८॥ प्रथमशकलं चाग्रेणीरसीति ॥ १९ ॥**

---

उपमानीयेत्याद्युक्तमवचनात् । ततः पृषदाज्यसंयोजनम् ।

ततो जुह्वामुपभृदिव चतुर्गृहीतं गृहीत्वा पृषदाज्योपभृति ज्योतिरसीति पञ्चगृहीतं पृषदाज्यं गृह्णीयात् । मन्त्रस्तु सकृत्त्रिर्वा ।

ततो ध्रुवायां चतुर्गृहीतग्रहणम् । इध्मं विस्रंस्यान्यत्परिध्यादित्रिकं पराकृत्य केवलस्येध्मस्य प्रोक्षणम् । बर्हिः प्रतिगृह्य वेद्यामासाद्य तस्य प्रोक्षणम् । अशेषो मूलावसेकः । बर्हिर्विस्रंसनम् । आश्वबालप्रस्तरस्य ग्रहणम् । ब्रह्मणे समर्पणम् । सन्नहनविस्रंसनम् । दक्षिणवेदिश्रोणौ निधानम् । अन्यैरवच्छादनम् । वेदिस्तरणं । त्रिवृत्पञ्चवृत्सप्तवृद्वा । ततः प्लक्षशाखास्तरणं दक्षिणभागे तूष्णीमेव ।

ततः समित्प्रस्तरादानम् । आहवनीयकल्पनम् । उल्मुकोदूहनम् । कार्ष्मर्यपरिधिपरिधानादि । पैतुद्रव्यविधृत्योः स्तरणम् । आश्वबालप्रस्तरस्तरणम् । अभिन्यासः । पूर्वं तूष्णीमसेरासादनम् ततो जुह्वाः । ततो वज्रोपग्रहेण तूष्णीं वसाहोमहवन्याः । तत उपभृतः ।

ततः पृषदाज्योपभृतो घृताच्यस्युपभृदित्यनेनैवासादनम् । ततो ध्रुवायाः । ततः आज्यस्थाल्याः । ततः पृषदाज्यस्थाल्याः । ततः आज्यस्थालीस्थमाज्यमालभ्यासादनक्रमेण जुह्वादिस्थमाज्यमालभते । तत आत्मालम्भः उदकालम्भः ।

ततो वेदेः पूर्वभागे गत्वा देवस्य त्वेत्यभ्रिं गृहीत्वेदमहमिति यूपावटं परिलिखति । आहवनीयस्य पुरस्ताद्वेदिमध्येऽर्द्धमर्द्धं बहिर्वेदि । यूपपञ्चमांशप्रमाणं निम्नमवटं खनति । उदको० । प्राच्यां पांसूद्वापः ।

तदग्रेण यूपं प्राञ्चं निदधाति । ततोऽप्सु यवोऽसीति मन्त्रेण यवानावपति । ततो दिवे त्वा प्रोक्षामीति यूपस्याग्रं प्रोक्षति । अन्तरिक्षाय त्वा प्रोक्षामीति यूपस्य मध्यं, पृथिव्यै त्वा प्रोक्षामीति यूपस्य मूलम् ।

प्रोक्षणीशेषं सर्वं यूपावटे निनयति शुन्धन्तामिति । उदकालम्भः ।
पितृषदनमसीति प्रागग्राण्युदगग्राणि बर्हींष्यवटे प्रक्षिपति । उदकालम्भः ।

स्रुवेणावटे जुहोति तूष्णीम् ॥ २० ॥ पुरस्तात्परिक्रम्याध्वर्युर्यजमानो वा यूपमनक्त्युदङ्ङुपविश्य ॥२१॥२॥

यूपायाज्यमानायानुवाचयति ॥ १ ॥ देवस्त्वेत्यनक्ति ॥२॥ चषालमुभयतः ॥३॥ अक्तं प्रतिमुञ्चति "सुपिप्पलाभ्य" इति ॥ ४ ॥ सोपरमग्निष्ठादेशमक्त्वा परिव्ययणदेशꣳ समन्तं परिमृश्याध्वर्युर्नाविसृजेदापरिव्ययणात् ॥५॥ उच्छ्रीयमाणायानुवाचयति ॥६॥ "द्यामग्रेणे"त्युच्छ्रयति ॥७॥ "या त" इति मिनोत्यग्निष्ठा सम्प्रत्याहवनीयम् ॥८॥ "ब्रह्मवनि त्वे"ति पाꣳसुभिः पर्यूहति॥९॥ "ब्रह्म दृꣳहे"ति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यूषति ॥१०॥ समं

---

ततोऽग्रेणीरसीति प्रथमशकलमवटे प्रक्षिपति । तत आज्यस्थाल्याः स्रुवेणाज्यं गृहीत्वाऽवटं परिस्तीर्यावटमध्ये तूष्णीं जुहोति । इदं प्रजापतये ।

तत उत्थाय पुरस्तात्परिक्रमय यूपस्य दक्षिणत उदङ्मुख उपविश्याध्वर्युर्यजमानो वा लौकिकेनाज्येन यूपमनक्ति ।

इति षष्ठस्य द्वितीया कण्डिका ॥ २ ॥

---

ततो यूपायाज्यमानायानुब्रूहीति होतारं प्रेष्यति । ततो वेदं सव्येन गृहीत्वा देवस्त्वेति मन्त्रेणोपरदेशवर्जितं सर्वं यूपमनक्ति सर्वतः । तत श्चषालमन्तर्बहिश्चानेनैव मन्त्रेणानक्ति । मन्त्रावृत्तिः ।

ततोऽक्तं चषालं यूपस्याग्रे प्रतिमुञ्चति सुपिप्पलाभ्य इति । ततो यूपस्याग्निष्ठादेशं सोपरं पुनरनक्ति देवस्त्वेति । ततः परिव्ययणदेशे यूपं सर्वतो गृहीत्वाऽध्वर्युः परिव्ययणपर्यन्तं न विमुञ्चेत् । तत उच्छ्रीयमाणायानुब्रूहीति होतारं प्रेष्यति ।

ततो द्यामग्रेणेति यूपमूर्ध्वं करोति । या त इति यूपावटमध्ये यूपमूलं प्रक्षिपति । यः पुनरक्तोऽग्निष्ठादेशः स आहवनीयाभिमुखः कार्यः ।

ततः सव्येन हस्तेन यूपं गृहीत्वा दक्षिणेनावटं पांसुभिः पूरयति ब्रह्मवनि त्वेति ।

ततो मैत्रावरुणदण्डेनावटं सर्वतस्त्रिः पर्यूषति ब्रह्म दृꣳहेति सकृन्मन्त्रः । द्विस्तूष्णीम् । ततः समंभूमिं कृत्वा तत्रोदकमासिञ्चति । ततो

भूमिं कृत्वाऽद्भिरुपसिच्य "विष्णोः कर्माणीति वाचयति यूपमन्वारब्धम् ॥११॥ "तद्विष्णोरिति चषालमीक्षमाणम् ॥१२॥ परिवीयमाणायानुवाचयति त्रिगुणा त्रिव्यामा कौशी रशना तया नाभिमात्रे त्रिवृतं परिव्ययति "परिवीरसीति ॥१३॥ संसृज्यान्यतरस्यामन्तं प्रवेशयति ॥ १४ ॥ यूपशकलमस्यामवगूहत्युत्तरेणाग्निष्ठां "दिवः सूनुरसीति ॥१५॥ बहुषु यथास्वम् ॥१६॥ "उपावीरसीति तृणमादाय तेन पशुमुपस्पृशत्युपदेवानिति

---

यूपमन्वारभस्वेति प्रैषः ।

ततो यूपं कृतान्वारम्भं यजमानं विष्णोः कर्माणीति वाचयति सखेति ब्रूहीत्येवम् । ततो यजमानो विष्णोः कर्माणीति मन्त्रं स्वरेण पठति । ततश्चषालं विलोकयन्तं यजमानं तद्विष्णोरिति वाचयति चक्षुराततमिति ब्रूहीत्येवम् । ततो यजमानस्तद्विष्णोरिति मन्त्रं सस्वरेण पठति ।

ततः परिवीयमाणायानुब्रूहीति होतारं प्रेष्यति । ततस्त्रिगुणया त्रिव्यामया दर्भमय्या रशनया मध्यमभागे यूपं त्रिगुणं परिव्ययति परिवीरसीति ।

ततो रशनां यूपे बध्वा अन्योन्यरशनाप्रान्तौ संसृज्यान्यतरस्यां सिक्थि अन्यतरस्यामन्तं प्रवेशयति । अग्रमध्ये मूलं मूलमध्ये वाऽग्रमिति । ततोऽग्निष्ठादेशमुत्तरेण रशनायूपान्तराले मध्ये मुखं स्वरुमवगूहति दिवः सूनुरसीति ।

तत उपावीरसीति पात्रेजनीमध्ये आसादितं तृणमादाय तेन तृणेनोपदेवानिति छागं पशुं स्पृशति आलभते ।

ततोऽग्निमन्थनम् । तत्राग्नेर्जनित्रमसीति शकलादानम् । तत्तूष्णीं वेद्यामुदगग्रं निदधाति । ततो वृषणौ स्थ इति शकलस्योपरि कुशतरुणे प्रागग्रे निदधाति ।

तत उर्वश्यसीत्यधरारणिमुदगग्रां तयोस्तृणयोरुपरि निदधाति । तत आयुरसीति प्रमन्थाग्रेणाज्यं स्पृष्ट्वा अधरारणिं तीर्थस्योपरि निदधाति । ततः केन चिद्यन्त्रं धारयित्वा अग्नये मथ्यमानायानुब्रूहीति होतारं संबोध्य गायत्रेण त्वेति प्रतिमन्त्रं प्रदक्षिणं त्रिर्मन्थति ।

ततः प्रदक्षिणाप्रदक्षिणमग्निजन्मपर्यन्तं मन्थति । अग्नौ जाते जातायानुब्रूहीति होतारं प्रेषयति । तत आयतं० इस्तेनेति होत्रोच्यमानेऽरणी-

॥१७॥ छागं मन्त्राम्नानात् ॥१८॥ पञ्चदमव्यङ्गम् ॥१९॥ यथामन्त्रवर्णं प्रोक्षण ॥२०॥ नाचोदितत्वात् ॥२१॥ अग्निं मन्थत्याहोमात्करोति ॥२२॥ उपाकरणमन्थने वा ॥२३॥ त्रिगुणरशनया द्विव्यामया कौश्या पाशं कृत्वाऽन्तरा शृङ्गमभिदक्षिणं बध्नात्यृतस्य त्वेति ॥२४॥ "देवस्य त्वेति यूपे ॥२५॥ ऐन्द्राग्नः सौर्यः प्राजापत्यो वा यमिच्छेत् ॥२६॥ अद्भ्यस्त्वेति पशुं प्रोक्षणीभिः प्रोक्षति ॥२७॥ अपां पेरुरित्यास्य उपगृह्णाति ॥२८॥ आपो देवीरित्यधस्तादुपोक्षति ॥२९॥३॥

इध्मप्रैषादि करोत्याप्रयाजेभ्यः॥१॥उत्तराघारमाघार्य पशुं पूर्वः समनक्ति ललाटांसश्रोणिषु सन्त इति प्रतिमन्त्रम् ॥२॥ प्रवृत्य होतारमाश्राव्याहाग्निर्ह दैवीनां

हस्ते कृत्वा प्रह्रियमाणायेति होतारं प्रेष्यति । ततो भवतं न इति मथितमग्निमाहवनीये प्रक्षिप्य समिधमाधाय स्थाल्याः स्रुवेणाज्यं गृहीत्वा प्रक्षिप्तस्याग्नेरुपरि अग्नावग्निरिति जुहोति । इदमग्निभ्याम् । उपाकरणमन्थनयोः संयुक्तयोर्विकल्पः ।

ततो त्रिगुणरशनया द्विव्यामया दर्भमय्या रशनया नागपाशं कृत्वा पशोर्दक्षिणशृङ्गसंमुखं पाशं प्रमुच्य शृङ्गयोर्मध्ये बध्नाति ऋतस्य त्वेति । एवं मस्तके पशुं बध्वा देवस्य त्वेति यूपे बध्नाति । तत्रेन्द्राग्निभ्यां जुष्टं नियुनज्मीति ऐन्द्राग्नपशुपक्षे । सूर्याय जुष्टमिति सौर्यपक्षे । एवं सर्वत्र ज्ञेयम् ।

ततः प्रजापतये जुष्टमिति प्राजापत्यपक्षे । ततो ब्रह्मन् हविः प्रोक्षिष्यमीति प्रैषः । ततो ब्रह्मा प्रोक्ष यज्ञमिति पठित्वा ॐप्रोक्षेत्यनुज्ञातोऽनुजानाति । ततोऽद्भ्यस्त्वौषधीभ्य इति संस्कृताभिः प्रोक्षणीभिः पशुं प्रोक्षति । इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति । ततोऽपां पेरुरिति प्रोक्षणीभिः पशोर्मुखे उदुगृह्णाति । तत आपो देवीरिति पशुमधस्तादुदरनाभिदेशे उत्प्रोक्षति ।

इति षष्ठस्य तृतीया कण्डिका ॥ ३ ॥

---

ततोऽकृतश्चेदत्र व्रतग्रहणं कर्तव्यम् । ततो होतृवदनकरणम् । एहि होतरिति होतुरामन्त्रणम् । अग्नये समिध्यमानायेति प्रैषः । सन्तन्वन्निति

विशां पुर एताऽयं यजमानो मनुष्याणाᳪं सुन्वन्निति सु-
त्ये तयोरस्थूरि गार्हपत्ये दीदयच्छत्ᳪं हिमा द्वा यू रा-
धाᳪंसीत्सम्पृञ्चानावसम्पृञ्चानौ तन्व इति ॥३॥ मैत्राव-
रुणाय दण्डं प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्र-
शिषा प्रयच्छामीत्यौदुम्बरं यजमानमुखमात्रम् ॥ ४ ॥
दीक्षितदण्डᳪं सोमे ॥५॥ क्रीते वा ॥६॥ एकादश प्रया-
जा अनुयाजाश्च ॥७॥ समैत्रावरुणे प्रेष्येत्याह यजस्थाने
वषमे ॥८॥ दशेष्ट्वा प्रयाजानाह शासमाहरेति ॥९॥

---

प्रैषः । इदमहं सप्तदशेन वज्रेणेत्ययबाधनम् । प्रतिप्रणवमिध्माधानम् । एकस्याः परिशेषणम् । आहवनीयोपवाजनम् । पूर्वाघारः । सप्रैषोऽग्निसंमार्गः । अञ्जलिकरणम् । उत्तराघारमाघार्य स्रुचौ असंस्पर्शयन्नेव पशुसमीप आगत्योपविश्य जुह्वा सन्ते प्राण इति पशुललाटे समनक्ति । ततः समङ्गानीति दक्षिणोत्तरांसयोरनक्ति । उभयत्र मन्त्रावृत्तिः ।

ततः संयज्ञपतिरिति दक्षिणोत्तरश्रोण्योरनक्ति मन्त्रावृत्तिः । ततः स्रुक्समीपे प्रत्यागत्य संज्योतिषेति ध्रुवासमञ्जनम् । स्रुचोर्निधानम् । होतृवरणम् । पुनराश्राव्याग्निर्ह दैवीनामिति यजमानवरणं तन्न इत्यन्तेन । ततोऽध्वर्युस्तत्रैवोपविश्य मित्रावरुणयोस्त्वेति मन्त्रेण मैत्रावरुणायौदुम्बरं दण्डं यजमानमुखमात्रं समर्पयति ।

ततः संमृष्टौ उपविशतः । ततोऽग्निर्होतेत्युक्ते स्रुचावादायातिक्रम्याश्राव्याह समिधः प्रेष्येति मैत्रावरुणं प्रति प्रैषः । एकादश प्रयाजाः । द्वितीयप्रभृति प्रेष्य प्रेष्येति प्रैषः । चतुर्थसप्तमदशमेषु समानयनम् । तत्र चतुर्षु प्राकृतास्त्यागा अनुमन्त्रणानि च । पञ्चमे इदं द्वाभ्यः पञ्च मम न तस्येत्यनुमन्त्रणम् । एतदेवानुमन्त्रणं सर्वेषाम् । षष्ठे इदमुषासानक्ताभ्याम् । सप्तमे इदं दैव्याभ्यां होतृभ्याम् । अष्टमे इदं तिसृभ्यो देवीभ्यः। नवमे इदं त्वष्ट्रे । दशमे इदं वनस्पतये पञ्च मम० ।

दश प्रयाजानिष्ट्वा शासहस्तं शमितारं प्रत्याह शासमाहरेति । शासः असिः कट्टारिका उभयपार्श्वे तीक्ष्णा सामर्थ्यात् । न खड्ग इति हरिस्वामी । ततस्तेन हृतमसिमादाय स्वयं च स्वरुमादाय तावुभौ जुह्वग्रेऽक्त्वा घृतेनाक्ताविति पशोर्ललाटे स्वर्वसिभ्यामुपस्पृशति । ततः स्वरुं रशनायूपान्तरालेऽवगुह्य शमित्रेऽसिं प्रयच्छन्नेषा ते प्रज्ञाताऽश्रिरस्त्विति शमितारं ब्रवीति ।

स्वरुमादायाक्त्वोभौ जुह्वग्रे ताभ्यां पशोर्ललाटमुपस्पृशति "घृतेनाक्ताविति ॥१०॥ स्वरुमवगुह्यासिं प्रयच्छत्याहैषा ते प्रज्ञाताऽश्रिरस्त्विति ॥११॥ सादयित्वा स्रुचौ चात्वालमुत्तरेण शामित्रायोल्लिखति ॥१२॥४॥

पर्यग्नयेऽनुवाचयति ॥१॥ आहवनीयोल्मुकमादायाग्नीत्त्रिः समन्तं पर्येति पश्वाज्यशामित्रदेशयूपचात्वालाहवनीयान् ॥२॥ आज्यपशुशामित्रान्वा ॥३॥ प्रतिप्रास्योल्मुकं तावत्प्रतिपर्येति ॥४॥ पुनरादायोदङ् प्रतिपद्यते ॥५॥ पशुश्चान्वङ् ॥६॥ प्रतिप्रस्थाताऽन्वारभत एनं

ततः स्रुचौ सादयित्वा चात्वालस्योत्तरतः शामित्रार्थं पञ्चभूसंस्कारान् कृत्वा पुनरुल्लेखनमेवाधिकं करोति ।

इति षष्ठस्य चतुर्थी कण्डिका ॥ ४ ॥

---

ततः पर्यग्नयेऽनुब्रूहीति मैत्रावरुणं प्रेष्यति । ततोऽग्नीदाहवनीयादुल्मुकं गृहीत्वा पश्वाज्यशामित्रदेशयूपचात्वालाहवनीयान्परितस्त्रिः पर्येति । तत उल्मुकं प्रास्य त्रिरेव प्रतिपर्येति । अन्ते इतरथावृत्तिः । ततः शमिता पशुं स्तम्बे बध्वा चात्वालोत्करावन्तरेण नयति । अग्नीत्तमेवोल्मुकमादाय पशोरग्रतो याति । प्रतिप्रस्थाता वपाश्रपणीभ्यां पशुमन्वारभते अध्वर्युः प्रतिप्रस्थातारमन्वारभते अध्वर्युं यजमानोऽन्वारभते ।

ततोऽध्वर्युः स्तृणाया एव वेदेस्तृणे आदाय आश्राव्योपप्रेष्य होतर्हव्या देवेभ्य इति मैत्रावरुणं प्रत्याह । ततो रेवति यजमान इति यजमानं वाचयति । अध्वर्युः शामित्रं नातिक्रामति । ततोऽग्नीद्धस्तादग्निमादाय शामित्रे स्थापयति । मथित्वैके ।

ततः शामित्रस्य पश्चात् उत्करे गृहीतयोर्वेदितृणयोर्मध्यादेकं तृणं प्रागग्रमुपास्यति वर्षो वर्षीयसीति । ततः शमिता तस्य तृणस्योपरि पशुं प्राक्शिरसं प्रत्यक्शिरसं वोदक्पादं पातयित्वा मुखग्रहणेन श्वासरोधं कृत्वा मारयति । ग्रीवामोटनेन वा तथा मारयेत यथा मार्यमाणः शब्दं न करोति ।

ततोऽध्वर्युः प्रतिप्रस्थाता ऽग्नीच्चाहवनीयमभ्यावृत्योपविशन्ति । ततोऽध्वर्युः संज्ञपयान्वगन्निति शमितारं प्रत्याह । ततो वसाहोमहवन्यां

वपाश्रपणीभ्यां कार्ष्मर्य्यमयीभ्यां विशाखाऽविशाखाभ्याम् ॥७॥ तमध्वर्युर्यजमानोऽध्वर्युम् ॥८॥ वेदितृणे अध्वर्युरादायाश्राव्याहोपप्रेष्य होतर्हव्या देवेभ्य इति॥९॥ "रेवति यजमान" इति वाचयति ॥१०॥ शामित्रं नातीयात् ॥११॥ शामित्रेऽग्निं निदधाति ॥१२॥ निर्मन्थ्यमेके ॥१३॥ पश्चात्तृणमुपास्यति "वर्षो वर्षीयसीति ॥१४॥ तस्मिन्नेनं निघ्नन्ति प्रत्यक्शिरसमुदक्पादम्॥ १५ ॥ प्राक्शिरसं वा ॥१६॥ संगृह्य मुखं तमयन्त्यवाश्यमानम् ॥१७॥ वेष्केण वा ॥१८॥ पश्चाहवनीयमावृत्यासते ॥१९॥ संज्ञपयान्वगन्नित्येव ब्रूयात् ॥२०॥ "स्वाहा देवेभ्य" इति जुहोति ॥२१॥ संज्ञप्तः पशुरिति प्रोक्ते शेनां नु मुहूर्त्तमित्याहासोमे ॥२२॥ "देवेभ्यः स्वाहेति जुहोति ॥२३॥ न वैते जुहुयात् ॥२४॥ वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति "माऽहिर्भूरिति ॥ २५ ॥ प्रतिप्रस्थातः पत्नीमुदानयेत्याह नेष्टरिति सोमे ॥२६॥५॥

पान्नेजनहस्तां वाचयति नयन्नमस्त आतानेति॥१॥ पशोः प्राणाञ्छुन्धति पत्नी ॥२॥ मुखं नासिके चक्षुषी

---

सकृद्गृहीतमाज्यं गृहीत्वा समित्पूर्वकमाहवनीये जुहोति स्वाहा देवेभ्य इति । इदं देवेभ्यः । ततो मृते पशौ शमिता संज्ञप्तः पशुरिति प्राह । ततोऽध्वर्युः शेनां नु मुहूर्तमिति ब्रूयात् । पुनर्वसाहोमहवन्यामेव स्थाल्याः सकृदाज्यं गृहीत्वा समिधं विनैव देवेभ्यः स्वाहेति जुहोति । इदं देवेभ्यः । अनयोराहुत्योः परिपशव्ये इति संज्ञा । अनयोरत्र विकल्पेन होमः । ततो वपाश्रपणीभ्यां पशुबन्धनोपयुक्तां द्विगुणरशनां चात्वाले प्रक्षिपति माऽहिर्भूरिति । ततः प्रतिप्रस्थातः पत्नीमुदानयेति प्रैषः ॥

इति षष्ठस्य पञ्चमी कण्डिका ॥ ५ ॥

---

ततः प्रतिप्रस्थाता पान्नेजनहस्तां पत्नीं गार्हपत्यस्य समीपात् पशुं प्रति नयन्नमस्त आतानेति वाचयति । ततः पत्नी पशुसमीपे उदङ्मुखी उप-

कर्णौ नाभिं मेढ्रं पायुं पादान्त्संहृत्य "वाचं ते शुन्धामीति प्रतिमन्त्रम् ॥३॥ मनस्त इति शिरः ॥४॥ "यत्ते क्रूरमित्यङ्गानि ॥५॥ "शमहोभ्य" इति पश्चात्पशोर्निषिञ्चतः ॥६॥ उत्तानं पशुं कृत्वाऽग्रेण नाभिं तृणं निदधात्योषध" इति ॥७॥ "स्वधित" इति प्रज्ञातयाऽभिनिधाय च्छित्वाऽग्रं सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन "रक्षसामिति ॥८॥ "निरस्तमित्यपास्यति ॥९॥ इदमहमित्याभितिष्ठति यजमानः ॥१०॥ वपाश्रपण्यौ प्रोर्णोति घृतेन द्यावापृथिवी" इति ॥११॥ परिवास्य चात्वालेऽवामिच्य शामित्रे प्रतपति ॥१२॥ शामित्रैकदेशमाहवनीये प्रास्यत्यग्नीत् ॥१३॥ तृणाग्रं चाध्वर्युर्वाग्यो वेरति ॥१४॥ उत्तरतस्तिष्ठन्प्रतप्य वपा-

---

विश्य पशोः प्राणानद्भिः शोधयति । वाचं त इति मुखम् । प्राणं त इति नासिके मन्त्रावृत्तिः । चक्षुस्त इत्यक्षिणी मन्त्रावृत्तिः । श्रोत्रं त इति कर्णौ मन्त्रावृत्तिः । नाभिं त इति नाभिम् । मेढ्रं त इति शिश्नम् । पायुं त इत्यपानम् । सर्वाण्यङ्गान्येकत्र कृत्वा चरित्रांस्त इति प्रोक्षति ।

ततः पान्नेजनशेषेणाध्वर्युयजमानौ सह पशोरङ्गान्यनुषिञ्चतः । मनस्त इति पशोर्मस्तकम् । वाक्त इति जिह्वाम् । प्राणस्त इति नासिके मन्त्रावृत्तिः । चक्षुस्त इति चक्षुषी मन्त्रावृत्तिः । श्रोत्रन्त इति कर्णौ मन्त्रावृत्तिः । यत्ते क्रूरमिति सर्वाङ्गानि । शमहोभ्य इति पशोः पुच्छदेशे सर्वं निनयतः ।

ततः पशुमुत्तानं कृत्वाऽध्वर्युर्नाभेरग्रे आत्ततृणमध्ये यदेकमवशिष्टं तदत्र प्रागग्रं निदधाति ओषध इति । ततः स्वधित इति प्रज्ञातया द्वयोर्धारयोर्मध्ये इयमक्तेति कृतचिह्नया घृताक्तया असिधारया अभिनिधानं कृत्वा तूष्णीं च्छित्वा तृणाग्रं सव्ये पाणौ कृत्वा दक्षिणेन पाणिना मूलं द्विगुणीकृत्योभयतो रुधिरेणानक्ति रक्षसां भाग इति । निरस्त इत्युत्करे तृणं प्रक्षिपति । उदकोप० ।

ततो यजमान इदमहमिति मन्त्रान्ते तस्य तृणस्योपरि तिष्ठति । ततोऽध्वर्युः पशोरुदराद्वपामुत्खिद्य द्यौ स्थः पृथिवी स्थ इत्यूहितेन मन्त्रेण वपाश्रपण्यावादाय यजमाने वपाश्रपण्यामन्वारब्धे तया वपया

**मन्तरा यूपाग्नी हृत्वा दक्षिणतः प्रतिप्रस्थाता श्रपयति परीत्य ॥१५॥ वपाꣳ स्रुवेणाभिघारयत्यग्निराज्यस्येति ॥१६॥ स्तोकेभ्योऽनुवाचयति । शृतायाꣳ शृता प्रचरेत्याह प्रतिप्रस्थाता । स्वाहाकृतिभ्य इति प्रेष्यति ॥१७॥ हुत्वा वपामभिघारयति पृषदाज्यं, ध्रुवां प्रथममाज्यभागौ चेत् ॥१८॥ अत्राज्यभागौ कुर्वन् ॥१९॥ वपया चरिष्यन्नुपस्तीर्य हिरण्यशकलमवधाय वपामवद्यन्नाहेन्द्राग्निभ्यां**

---

वपाश्रपण्याचाच्छादयति घृतेनेति । ततो वपां छित्त्वा प्रतिप्रस्थात्रे प्रयच्छति ।

ततः प्रतिप्रस्थाता वपां चात्वाले प्रक्षाल्य शामित्रे प्रतप्य चात्वालोत्करावन्तरेणाहवनीयसमीपे आगत्योत्तरतस्तिष्ठति । अग्नीच्छामित्रादेवोल्मुकं गृहीत्वा चात्वालोत्करावन्तरेणागत्याहवनीये प्रास्यति । ततोऽध्वर्युरपि चात्वालोत्करावन्तरेणागत्य सव्यहस्ते कृतं तृणाग्रमाहवनीये प्रक्षिपति वायो वेरिति मन्त्रेण । ततः प्रतिप्रस्थातोत्तरतस्तिष्ठन्नाहवनीये वपां प्रतप्यान्तरा यूपाग्नी हृत्वा परीत्योत्तरवेदेर्दक्षिणत आसीनो वपामाहवनीयस्योपरि धारयित्वा श्रपयति ।

ततोऽध्वर्युः स्रुवेणाज्यं गृहीत्वा वपाया उपरि जुहोति अग्निराज्यस्येति । इदमग्नय इति त्यागः । ततोऽध्वर्युरेव स्तोकेभ्योऽनुब्रूहीति मैत्रावरुणं प्रेष्यति । स्तोकानुवाचने समाप्ते शृतायां वपायां शृता प्रचरेति प्रतिप्रस्थाताऽध्वर्युं प्रत्याह । ततोऽध्वर्युर्वपायां तत्रस्थाभिघारं करोति ।

ततः प्रतिप्रस्थाताऽन्तरा यूपाग्नी वपां प्रत्याहृत्याहवनीयादुत्तरतो निदधाति । ततोऽध्वर्युर्यस्ते प्राण इति इन्द्राग्नी गच्छेति प्राणदानं करोति । ततो वपां प्रियेण धाम्नेत्यासाद्य ध्रुवा असदन्नित्यालभते । आपस्तम्बसूत्रे वपां दक्षिणत एव नीत्वा दक्षिणवेदिश्रोण्यां बर्हिषि प्लक्षशाखायां वपाया आसादनमुक्तम् । कठसूत्रे तदुदग्रेषु दर्भेषु । ततो होता पुनः स्रुगादापने पठिते अध्वर्युर्जुहूपभृतावादायातिक्रम्याश्राव्याह स्वाहाकृतिभ्यः प्रेष्येति उत्तमप्रयाजं प्रेष्यति । इदं स्वाहाकृतिभ्यः । पञ्च ममेत्यनुमन्त्रणम् । प्रत्येत्य प्रयाजशेषेण पूर्वं ध्रुवामभिघारयति तत आज्यस्थालीं ततो वपां ततः पृषदाज्यस्थालीम् ततः पृषदाज्योपभृतम् ।

तत आज्यभागौ प्रैषप्रैषौ । अग्नयेऽनुब्रूहीति मैत्रावरुणं प्रेष्यति । अ-

**छागस्य वपायै मेदसोऽनुब्रूहीति ॥२०॥ हिरण्यमवधाय द्विरभिघारणं सोमे ॥२१॥ आश्राव्याहेन्द्राग्निभ्यां छागस्य वपां मेदः प्रेष्येति ॥२२॥ प्रस्थितामिति च प्रसुते ॥२३॥ हुत्वा वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितरां "स्वाहाकृते" इति ॥२४॥ चात्वाले मार्जयन्ते सपत्नीका इदमापः प्रवहतेति ॥२५॥ ६ ॥**

---

ग्नये प्रेष्यति च । इदमग्नये । सोमायानुब्रूहि । सोमाय प्रेष्य । इदं सोमाय ।

ततो जुह्वामुपस्तीर्य हिरण्यशकलमवधाय वपामवद्यन्मैत्रावरुणं प्रत्याह । (१)इन्द्राग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति । वपां स्रुच्यवधाय पुनरुपरि हिरण्यशकलमवधायोपरिष्टात्सकृदभिघार्योत्थायातिक्रम्याश्राव्येन्द्राग्निभ्यां छागस्य वपां मेदः प्रेष्येति मैत्रावरुणं प्रत्याह । होत्रा वषट्कृते समिद्धे जुहोति इदमिन्द्राग्निभ्याम् ।

ततो वपाश्रपण्योर्मध्ये विशाखां प्रत्यगग्रां कृत्वा उत्तरतस्तिष्ठन्नाहवनीये प्रक्षिपति ( आपस्तम्बात् ) स्वाहाकृते ऊर्ध्वनभसमिति मन्त्रेण । ततः स्रुचौ स्वस्थाने आसादयति ।

ततो ब्रह्मादिक्रमेण सर्वे यजमानाः सपत्नीकाश्चात्वाले मार्जयन्ते इदमाप इत्यनेन । वचनात्पत्न्या अपि मन्त्रः, क्वचित्तूष्णीमिति यत्तात् । हिरण्यशकलस्यात्यन्ताभावे द्विर्द्विरुपस्ताराभिघारौ कार्याविस्याश्वलायनब्राह्मणे ।

इति षष्ठस्य षष्ठी कण्डिका ॥ ६ ॥

---

ततः पशुपुरोडाशनिर्वापः । तत्र पूर्वं यजमान वाचं यच्छेति प्रैषः । पात्रासादनं शूर्पं कपालानि द्वादश सौर्यं, प्राजापत्यपक्षे ऽष्टौ, कृष्णाजिनम् , उलूखलमुसलम् , पात्री धान्यं , धृष्टिः संयवनोदकम् , शृतावदानम् , पुरोडाशपात्री , कर्मापवर्गो समिद्वा । ततः पात्रान्तरे प्रोक्षणीरुत्नीय शूर्पाग्निहोत्रहवण्योरादानादि ग्रहणं सादनान्तम् । इन्द्राग्निभ्यां जुष्टम् । पात्रान्तरे स्थिताः प्रोक्षणीः स्रुचि निनीय ब्रह्माणं पृष्ट्वा इन्द्राग्निभ्यां त्वा जुष्टमिति हविः प्रोक्ष्य पात्राणि प्रोक्षति । निःशेषकरणम् ।

ततः कृष्णाजिनादानाद्याप्त्योदकनिनयनान्तम् । कुक्कुटाहननवेदवन्धाज्यनिर्वाप तदधिश्रयणानामभावः । ततः शृतावदानपुरोडाशपात्र्योः

( १ ) ध्रुवाया उपस्तीर्य इति भाष्ये । असिना वपामवदायेति भाष्यम् ।

विशास्ति पशुमन्त्रः ॥१॥ ऋत्विजां वैको ऽप्रक्लृप्तत्वाच्छामित्रे ॥२॥ उपगादर्शनाच्च ॥३॥ विकर्षी त्वन्यः शूद्रसंयोगात् ॥ ४ ॥ अङ्गान्यवद्यत्यभञ्जन् ॥ ५ ॥ हृदयं जिह्वां क्रोडं सव्यसक्थिपूर्वनडकं पार्श्वे यकृद् वृक्कौ

---

सम्मार्गः सम्मार्जनतृणापासनं च । ततः पुरोडाशविभस्मीकरणाद्यालम्भनान्तम् । प्राणदाने इन्द्राग्नी गच्छेति विशेषः । एतर्हि० होतृमैत्रावरुणावित्यामन्त्रणम् शांख्यायनसूत्रात् ।

ततो जुहूपभृतावादाय जुह्वामुपभृति चोपस्तीर्य पुरोडाशमवद्यन्मैत्रावरुणं प्रत्याह । इन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीति । ततो द्विरवदायोपरि सकृदभिघार्यं अवदानयोः प्रत्यभिघारः । तत उत्तरार्द्धादुपभृति स्विष्टकृदर्थमवदानम् । ततो द्विरभिघारः । उत्थायातिक्रम्याश्राव्य मैत्रावरुणं प्रेष्यति । इन्द्राग्निभ्यां पुरोडाशं प्रेष्येति । इदमिन्द्राग्निभ्याम् । ततः उपभृति यदवत्तं तज्जुह्वां समानीयाग्नये ऽनुब्रूहीति । अग्नये प्रेष्येति मैत्रावरुणं प्रेष्य वषट्कृते उत्तरतो जुहोति । इदमग्नये । एवं निगुणः स्विष्टकृद्यागः कर्तव्यः । उदकोप० । एत्य स्रुचोरासादनम् । नात्र सञ्चराभ्युक्षणम् । चतुर्धाकरणभागवर्जम् । सौर्यप्राजापत्यपक्षे भागपरिहरणान्तं सौर्यम् । मैत्रावरुणोऽप्यत्रेडां भक्षयति ।

ततो दक्षिणादानम् । तत्र पशुरसीति वा वरोऽसीति वाऽऽलम्भने विशेष ऊर्गसीत्यस्य स्थाने । अस्य पशोः समृद्ध्यर्थं पशुं दक्षिणां धेनुवरं वा ब्रह्मणे होत्रे ऽध्वर्यवे मैत्रावरुणाय प्रतिप्रस्थात्रे ऽग्नीधे च समविभागेनाहं सम्प्रददे । ब्रह्मन्यस्ते भाग इत्यादि । ब्राह्मणा अयं पशुः प्रतिगृह्णीत ।

ततो ऽनक्तया ऽसिधारया पशुविकर्तनं शमितुरेव नाध्वर्योः । हृदयादिमांसान्यवखण्डयन् स्वधितिना पशुशरीराद् ग्रहणम् । हृदयमाम्रफलाकारं मांसम् । जिह्वा प्रसिद्धा । क्रोडं वक्षभुजयोरन्तरालमित्यर्थः । सव्यसक्थिपूर्वनडकमिति सव्यबाहोः पूर्वनडकं प्रथमा नलिका अंससन्निकृष्टा । पार्श्वे वामदक्षिणे त्रयोदशास्थिसम्बद्धे । कृष्णकालेयं पित्ताधाररूपं यकृत् । वृक्कौ पक्काम्रफलतुल्यौ कुक्षौ वर्त्तमानौ गोलकौ महदाम्रफलतुल्यौ । गुदमामांशशकलं रज्जुसदृशम् । दक्षिणा श्रोणिः दक्षिणस्य पश्चात्पादस्योपरि वर्त्तमानो मांसलः प्रदेशः कटिशब्दवाच्यः । एतान्येकादश जौहवानि जुहूसम्बन्धीनि प्रधानयागसाधनानीत्यर्थः । ततो

गुदमध्यं दक्षिणा श्रोणिरिति जौहवानि ॥६॥ दक्षिणसक्थिपूर्वनडकं गुदतृतीयाणिष्ठं सव्या च श्रोणिरित्यौपभृतानि ॥७॥ वर्षिष्ठमुपयड्भ्यः ॥८॥ अवदानकाले प्रभागः ॥९॥ वनिष्ठुजाघनी चावद्यति ॥१०॥ क्लोमप्लीहाध्यूध्नीपुरीततं चेच्छन् ॥११॥ उदरमेदोऽवशिष्टं गुदे प्रास्यति कृशश्चेत् ॥१२॥ ऊवध्यमवधाय तस्मिंल्लोहित; "रक्षसामिति" ॥१३॥ शूले हृदयं प्रवृह्य शामित्रे श्रपयति ॥१४॥ पशुं चोखायाम् ॥१५॥ पशुदेवतायै पुरोडाश एकादशकपालः ॥१६॥ अग्नीषोमीयो वा विशेषोपदेशात् ॥ १७ ॥ अत्रैव हविष्कृदाह्वानमिज्यैकत्वात् ॥१८॥ अवद्यन्नाहेन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीति ॥१९॥ उपभृति चावद्यति स्विष्टकृद्वत् ॥२०॥ इन्द्राग्निभ्यां पुरोडाशमिति प्रेष्यति ॥२१॥ हुत्वा समानीयाग्नये प्रदाय ॥२२॥ सगुणस्थाने ऽगुणः ॥२३॥ सर्वाविकार एकत्वात् ॥२४॥ यथाऽऽम्नातं वा वचिभेदात् ॥२५॥ इडामवद्यत्याक्रियाऽन्यस्य समानार्थत्वात् ॥२६॥ न चोदनाभेदात्

---

दक्षिणसक्थिपूर्वनडकं दक्षिणबाहोः प्रथमा नलिका। गुदतृतीयाणिष्ठं गुदस्य सूक्ष्मः तृतीयो भागः। सव्या श्रोणिः सव्यस्य पश्चात्पादस्योपरि मांसलः प्रदेशः कटिशब्दवाच्यः। एतानि त्रीण्युपभृत्सम्बन्धीनि स्विष्टकृद्यागसाधनानि। गुदस्य वर्षिष्ठो भाग उपयड्ढोमार्थः। गुदस्य विभाग इदानीं न कार्यः। जुह्वामवदानकाले त्रिधा विभज्यते। ततो वनिष्ठुः स्थूलान्त्रम्। जाघनी पशोः पुच्छम्। क्लोमं गलनाडिका। प्लीहं शुक्तिकाकारं मांसम्। अध्यूध्नी शतपुटः। पुरीततं हृदयस्य प्रच्छादकं मांसम्। एतानि क्लोमादीनि विकल्पेन गृह्णाति।

यदि पशुः कृशो भवति तदा यदवशिष्टमुदरमेदो वपाग्रहणकाले स्त्यानघृतसदृशं श्वेतं मांसं तद् गुदे आन्त्रमध्ये ऽवगूहेत। एवं हृदयादीनां ग्रहणं कर्त्तव्यम। ततः शामित्रस्य पश्चादुत्करादुत्तरतो गर्त्तं खानयित्वा तस्मिन् गर्त्तमध्ये पशोः पुरीषं तृष्णीमवधाय तस्योपरि

॥२७॥ कालगुणभेदाच्च ॥ २८ ॥ पशुर्दक्षिणा धेनुर्वरो वा मार्जिते ॥ २९ ॥ ७ ॥

शमितारꣳ० शास्ति त्रिः प्रच्यावयतात्त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुतान्यत्त्वा पृच्छाच्छृतꣳ हविः शमिताः३रिति शृतमित्येव ब्रूतान्न शृतं भगवो न शृतꣳ हीति ॥१॥ त्रिः प्रच्युते हृदयं प्रवृह्योत्तमं करोति ॥२॥ शूलं चाभूमौ ॥३॥ जुह्वा पृषदाज्यस्यादायोपनिष्क्रम्य पृच्छति शृतꣳ० हविः शमिता३ ऽरिति त्रिरभिक्रामम् ॥४॥ प्रोक्ते तद्देरक्षसामिति लोहितं प्रक्षिपति । इदं रक्षोभ्य इति त्यागः । उदकोप० ।

ततो घौरसीति शूलमादाय यजमाने ऽन्वारब्धे शूले हृदयं प्रतृद्यानन्वारब्धः शामित्रे श्रपयति । शामित्रेऽग्नौ ताप्यमानेनैव । ततो घौरसीत्युखामादाय मातरिश्वन इति शामित्रेऽग्नौ अधिश्रयति । ततो यजमानेनान्वारब्धायामुखायां हृदयादीनि मांसानि क्रमेण प्रक्षिपति । ततो ऽन्वारब्धे उदकं प्रक्षिपति ।

इति षष्ठस्य सप्तमी कण्डिका ॥ ७ ॥

ततः शमितारं शास्ति शिक्षयति । त्रिः प्रच्यावयतादित्यादिना न शृतं हीत्यन्तेन । ततस्त्रिः प्रच्युते पशोस्त्रिरुत्कलिते शमिता हृदयं शूलान्निकाश्योखोपरि स्थापयित्वा शूलमध्वर्यवे प्रयच्छति । अध्वर्युः शूलं भूमेर्व्यतिरिक्ते प्रदेशे स्थापयति ।

ततो मांसेषु शृतेषु अध्वर्युर्जुह्वां पञ्चगृहीतशेषं पृषदाज्यं हृदयाभिघारणयोग्यं गृहीत्वा चात्वालोत्करावन्तरेण निष्क्रम्य पृच्छति । शृतꣳ० हविः शमितारिति त्रिरभिक्रम्य शृतमिति प्रोक्ते शमित्रा तद्द देवाना मित्युपांश्वध्वर्युराह ।

ततः पुनः शमितारं प्रति निष्क्रम्य तथैव पृच्छति । पुनः शृतमिति प्रत्युक्ते तद्द् देवानामित्युपांशूक्तः पुनरपि शमितारमभिक्रम्य तथैव पृच्छति । शृतमिति प्रत्युक्ते तद्देवानामित्युपांशध्वर्युराह ।

ततस्तेन पृषदाज्येनाध्वर्युः सर्वमांसानामुपरि स्थापितं हृदयं सं ते मन इत्यभिघार्य तेनैव पृषदाज्येनावशिष्टेन सर्वपश्ववदानान्युखास्थितान्यभिघारयति । अथवा हृदयव्यतिरिक्तं सर्वमाज्यस्थाल्याः स्रुवेणाज्यं गृहीत्वा

**वानामित्याहोपांशु ॥५॥ "सन्ते मन" इति हृदयम-भिघार्य्य सर्वम् ॥६॥ पञ्चवसी वपावद् धृत्वा दक्षिणतः प्रतिप्रस्थाता वेद्यां प्लक्षशाखास्ववद्यति ॥७॥ जुहूपभृतो-रुपस्तृणीते वसाहोमहवन्यां पात्र्यां च मनोतायै हवि-षोऽवदीयमानस्यानुब्रूहीत्युक्ते स्रुचोरवद्यति यथोक्तं द्वि र्द्विः ॥८॥ अशेषे गुदतृतीये ॥९॥ वपावद्धिरण्यम् ॥१०॥**

तेनाभिघारयति । उभयमप्येतत्समूलमत इच्छयाऽनुष्ठानम् । तत उखामुदगुद्वास्य मांसानि निष्काश्य वंशपात्र्यादौ कस्मिंश्चिद्विपुले पात्रे उदक्संस्थानि स्थापयति हृदयादिक्रमेण ।

ततो वसां निष्काश्य पात्रान्तरे कृत्वा स्थापयति । ततः स्थाल्याज्येन हृदयादीनामेकादशसंख्यानां प्रत्येकं प्राणदानम्, इन्द्राग्नी गच्छेति मन्त्रेण । वसायास्तूष्णीम् । ततः पशुमांसानि असिं चादाय चात्वालोत्करावन्तरेण गत्वा यूपाग्न्योरन्तरालेन मांसानि हृत्वा स्वयं सह हविष्कृत्वा स्तथैव गत्वा स्रुग्भ्यो दक्षिणप्रदेशे वेद्यां बर्हिषि हृदयादीनि प्रत्येकं प्रियेण धाम्नेति सादयति । जाघनीं च मन्त्रेण ।

ततो वसायास्तूष्णीं सादनम् । ततो जौहवानामेव प्रत्येकं जाघन्याश्च ध्रुवा असदन्नित्यालम्भनम् । वसायास्तूष्णीम् । अङ्गभागावदानानां बर्हिषि स्थापनमात्रमेव नासादनालम्भौ । नात्मालम्भः कृतत्वात् ।

ततो जुह्वामुपभृति वसाहोमहवन्यां प्राशित्रहरणे इडापात्र्यां चोपस्तीर्य जुह्वामुपभृति च हिरण्यावधानम् । ततो मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति प्रैषो मैत्रावरुणं प्रति ।

ततः प्रतिप्रस्थाता स्तृतानां प्लक्षशाखानामुपरि मांसान्यवखण्डयति । हृदयादीनां जौहवानां प्रत्येकं मध्यात्पूर्वार्द्धाच्च द्विर्द्विरवदायाध्वर्यो र्हस्ते समर्पयति । अध्वर्युर्जुह्वामवदधाति । गुदस्यावदानकाले विषमं त्रेधा विभागः कर्त्तव्यः । प्रथमः स्थूलो महान् भागः । उपयड्ढोमार्थः । द्वितीयो मध्यमो नातिस्थूलो नातिकृशः । स जुह्वां द्विधा कृत्वाऽवदेयः । तृतीयः स्थूलोऽपि अणिष्ठोऽतिकृशः । अङ्गेषु स्विष्टकृदवदानेषु स्थाप्यः ।

एवं जुह्वामवदाय तत उपभृति दक्षिणसक्थिगुदतृतीयसव्यश्रोणीनां द्विर्द्विरवदानम् । गुदतृतीययोर्निःशेषयोरेवावदानम् । जुहूपभृतोः क्रमेण हिरण्यशकलावधानम् । ततो जुह्वां सकृदभिघारः । उपभृत्यपि सकृदेवाभिघारः । पञ्चावत्तिनां सर्वावदानेभ्यस्त्रिस्त्रिरवदानम् । मध्यात्पूर्वा-

"रेडसीति वसां गृहीत्वा द्विरभिघार्य "प्रयुतमिति पार्श्वेन संसृजत्यसिना वा ॥११॥ शेषमिडापात्र्यामासिच्य क्रोडमनस्थीनि च प्रास्यति श्रोणिवर्जम् ॥१२॥ जाघनीगुदन्निधायाहेन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीति ॥१३॥ आश्राव्याहेन्द्राग्निभ्यां छागस्य हविः प्रेष्येति ॥१४॥ प्रस्थितामिति च प्रसुते ॥१५॥ अर्धर्चान्तरे याज्यायै वसैकदेशं जुहोति घृतं घृतपावान इति ॥१६॥ दैवतं हुत्वा

---

त्रींस्पश्चाच्च त्रिर्जमदग्नीनां पश्चात्तृतीयमिति वचनात् उपस्तरणवृद्धया अभिघारणवृद्धया वा पञ्चावत्तत्वं सम्पादनीयमिति शास्त्रदीपिकायाम् ।

ततो रेडसीति वसाहोमहवन्यां यथाकथञ्चिद्वसां गृहीत्वा उपरि द्विरभिघार्य पार्श्वेनासिना वा वसां घृतञ्च मिश्रयति प्रयुतमिति । ततो जौहवेभ्यो हृदयादिभ्यः प्राशित्रावदानम् । तत्रस्थाभिघारः । ततो वसाशेषमिडापात्र्यामासिच्य तत्र हृदयं जिह्वां क्रोडं यकृद् वृक्कौ एतानि समग्राण्येव प्रक्षिपति । "तद् हृदयं प्रास्यती"त्येवं समग्राणामेव प्रासनश्रवणात्, वनिष्ठोरुपलक्षणार्थत्वात् । शाखान्तराच्चेच्छेषाण्यवदानान्यपि सर्वाण्यडापात्र्यां निधेयानि । वनिष्ठुव्यतिरिक्तानां द्विर्द्विरवदानं वा कार्यं शाखान्तरेण । इडामवद्यतीति श्रवणात् । उपरिष्टाद् द्विरभिघारः ।

ततो जाघनीं पत्नीसंयाजार्थं गुदं उपयड्ढोमार्थं क्वचित्सुगुप्ते देशे निधाय ऐन्द्रः प्राण इति अवशिष्टानि मांसानि अवमृशति अनपघ्नन् । त्वगादिपशुशरीरं तदभिमृशति इति हरिस्वामिनः । एषैव मांसानां प्रतिपत्तिः ।

ततस्तत्रोपविष्ट एवेन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीति मैत्रावरुणं प्रेष्यति । तत उत्थायातिक्रम्याश्राव्येन्द्राग्निभ्यां छागस्य हविः प्रेष्येति मैत्रावरुणं प्रेष्यति ।

ततो याज्याया अर्द्धर्चान्ते प्रतिप्रस्थातोत्तरत उपविश्य वसैकदेशं जुहोति घृतं घृतपावान इति मन्त्रेण । इदमन्तरिक्षाय । ततोऽध्वर्युर्जुह्वा वषट्कृते जुह्ववदानानि जुहोति, इदमिन्द्राग्निभ्याम् ।

ततः प्रदक्षिणमावृत्य जुह्वा पृषदाज्यस्थाल्याः पृषदाज्यं गृह्णन् वनस्पतये ऽनुब्रूहीति मैत्रावरुणं प्रेष्यति । इतरथावृत्तिः । आश्राव्य वनस्पतये प्रेष्येति मैत्रावरुणं प्रेष्यति । इदं वनस्पतय इत्युक्ते उत्तरतो जुहोति । वनस्पतिः स्विष्टकृद्विकार इति मध्यमस्वरेण प्रैषानुच्चारणम् ।

**प्रदक्षिणमेत्य जुह्वा पृषदाज्यस्योपघ्नन्नाह वनस्पतये-ऽनुब्रूहीति ॥ १७ ॥ आश्राव्याह वनस्पतये प्रेष्येति ॥१८॥ हुत्वा समानीय सौविष्टकृतम् ॥१९॥ प्रत्येत्य वा दिशो व्याघारयति वसाशेषेण वाजिनवत् ॥ २० ॥ सर्वं जुहोति ॥ २१ ॥ ८ ॥**

**"ऐन्द्रः प्राण" इति पशुꣳ सम्मृशति ॥ १ ॥ अव-दाय वेडां प्राक् प्रदानात् ॥ २ ॥ इडामादधाति ॥ ३ ॥ उपहूतायां वनिष्ठुमग्नीधे ॥ ४ ॥ अध्यूध्नीꣳ होत्रे ॥ ५ ॥ अवान्तरेडा वा ॥ ६ ॥ मार्जिते प्रेष्यत्यग्नीदौपयजान-**

---

तत उपभृतोऽवदानानि जुह्वामानयमानोऽग्नये स्विष्टकृते ऽनुब्रूहीति मैत्रावरुणं प्रेष्यति । तत आश्राव्याग्नये स्विष्टकृते प्रेष्यति । इदमग्नये स्विष्टकृते । उत्तरार्द्धे होमः । उदकस्पर्शः । ततः स्रुचौ सव्ये कृत्वोप-विश्य उत्तरतो वसाहोमहवन्या वसाशेषेण दिशो व्याघारयति दिशः स्वाहा, अग्नेः पूर्वभागे, इदं दिग्भ्यः । प्रदिशः स्वाहा, दक्षिणतः, इदं प्र-दिग्भ्यः । आदिशः स्वाहा, पश्चात् , इदमादिग्भ्यः । विदिशः स्वाहा, उत्तरतः, इदं विदिग्भ्यः । उद्दिशः स्वाहा, मध्ये, इदमुद्दिग्भ्यः । दिग्भ्यः स्वाहा, पुनः पूर्वार्द्धे, सर्वस्य वसाशेषस्य होमः । ततः प्रत्यागत्य स्व-स्थाने स्रुचोः सादनम् ।

इति षष्ठस्य अष्टमी कण्डिका ॥ ८ ॥

---

अत्र वा ऐन्द्रः प्राण इति पशुसंमर्शनम् । सञ्चराभ्युक्षणम् । प्राशि-त्रसमर्पणम् । उदकोऽप० । इडासमर्पणम् । दक्षिणातिक्रमणम् । इडां प्र-तिगृह्य पर्वाञ्जनम् । अवान्तरेडाऽवदानम् । पुनरिडासमर्पणम् । भाग-समर्पणं यजमानः करोति । क्लोमं ब्रह्मणे, अध्यूध्नीं होत्रे । पुरीततम-ध्वर्यवे, वनिष्ठुमग्नीधे, प्लीहं यजमानाय अध्वर्युः समर्पयति । तत इडाभक्षः । क्लोमादीनां च यथास्वम् । मैत्रावरुणप्रतिप्रस्थातारौ इडां भक्षयतः । ततः सर्वेषां ब्रह्मादिक्रमेण मार्जनम् । पवित्रप्रतिपत्तिः ।

तत उल्मुके समस्यानुयाजार्थं परिशेषितमिध्मकाष्ठमादाय अग्नीदौ-पयजानङ्गारानाहरेत्यग्नीधं प्रेष्यति । तत उपयष्टरुपसीदेति प्रतिप्रस्थाता-रम् , ततो ब्रह्मन् प्रस्थास्यामीति ब्रह्माणम्, ततः समिधमाधायाग्निमग्नी-न्संमृड्ढीत्यग्नीधम् ।

ङ्गारानाहरो, पयष्टरुपसीद, ब्रह्मन्प्रस्थास्यामि, समिधमाधायाग्निमग्नीत्सम्मृड्ढीति ॥ ७ ॥ शामित्रादङ्गारानाहृत्य वेदिश्रोण्यां निवपत्युत्तरस्याम् ॥ ८ ॥ आग्नीध्रीयाद्वा सोमे होतृधिष्ण्य ॥९॥ प्रतिप्रस्थातोपजयति गुदतृतीयस्य प्रच्छेदमनुयाजेषु "समुद्रं गच्छेति प्रतिमन्त्रम् ॥ १० ॥ प्रतिवषट्कारं हुत्वा "मनो म" इति मु-

---

ततोऽग्नीत् पूर्वं शामित्राद् बहूनङ्गारान् ज्वलत आहृत्योत्तरस्यां वेदिश्रोण्यां परिसमूहनादिसंस्कृतायां निवपति ।

ततः समिधमाधायाग्निं संमार्ष्टि । प्रतिप्रस्थाता गुदमादाय श्रोणिसमीपे उपयड्ढोमार्थमुपविशति । ततोऽनुयाजेषु हूयमानेषु गुदखण्डमेकादशधा छित्वा छित्वा प्रतिवषट्कारमेकैकं हस्तेन जुहोति समुद्रं गच्छेति प्रतिमन्त्रम् । तेषामनुयाजत्यागानन्तरं त्यागाः । इदं समुद्राय । इदमन्तरिक्षाय । इदं देवाय सवित्रे । इदं मित्रावरुणाभ्याम् । इदमहोरात्राभ्याम् । इदं छन्दोभ्यः । इदं द्यावापृथिवीभ्याम् । इदं यज्ञाय । इदं सोमाय । इदं दिव्याय नभसे । इदमग्नये वैश्वानराय । ततो मनो म इति मुखं विमृष्टे उपस्पृशतीत्यर्थः ।

अध्वर्युः पृषदाज्योपभृतः पृषदाज्यं समानीय जुहूपृषदाज्योपभृतावादायातिक्रम्याश्राव्य देवेभ्यः प्रेष्येति मैत्रावरुणं प्रे[ष्य]ति । एकादशानुयाजाः । चतुर्थसप्तमदशमेषु समानयनम् । प्रथमेऽनुयाजे इदं देवाय बर्हिषे । द्वितीये इदं देवीभ्यो द्वार्भ्यः । तृतीये इदं देवीभ्यामुषासानक्ताभ्याम् । चतुर्थे इदं देवीभ्यां जाष्ट्रीभ्याम् । पञ्चमे इदं देवीभ्यामूर्जाहुतीभ्याम् । षष्ठे इदं देवीभ्यां दैव्याभ्यां होतृभ्याम् । सप्तमे इदं देवीभ्यस्तिसृभ्यस्तिसृभ्यो देवीभ्यः । अष्टमे इदं देवाय नराशंसाय । नवमे इदं देवाय वनस्पतये । दशमे इदं देवाय बर्हिषे । एकादशे इदं देवायाग्नये स्विष्टकृते ।

प्रथमस्य वह्नेः पूर्वभागे होमः । द्विप्रभृतीनां नराशंसपर्यन्तानामेकस्मिन्स्थाने मध्ये होमः । ततस्त्रयाणामेकत्र पश्चाद्भागे होमः । तत उपस्पृश्योत्तरत उपविश्य समानीय देवेभ्यः स्वाहेति प्राचीमाहुतिं जुहोति ।

यूपोत्पाटनम् । ततो दिवं ते धूम इति जुह्वा स्वरुं जुहोति । इदं स्वरवे इति त्यागः । ततः स्रुचावासाद्याज्योपभृत उपरि पृषदाज्योपभृतं

**स्रोपस्पर्शनम् ॥ ११ ॥ अनुयाजान्ते स्वरुं जुहोति "दिवं ते धूम" इति ॥१२॥ पशुदेवतावनस्पतिभ्याᳪं स्रुग्व्यूहनम् ॥१३॥ जाघन्या पत्नीसंयाजनम् ॥ १४ ॥ उत्तानाया देवानां पत्नीभ्योऽवद्यति ॥ १५ ॥ इडां च ॥१६॥ परिवर्याग्नये गृहपतयेऽग्नीधे च ॥१७॥ आज्येन पूर्वे ॥१८॥ सर्वा वा जाघन्याऽविशेषात् ॥ १९ ॥ ९ ॥**

---

निधाय वसाहोमहवनीं जुह्वोरुपरि निधाय च व्यूहति । इन्द्राग्न्योर्वनस्पतेरुज्जितिमिति जुह्वाः । इन्द्राग्नी वनस्पतिस्तमपनुदन्त्विति उपभृतः । ततो जुह्वावुपभृतौ चाभ्युदय परिध्यञ्जनम् । सूक्तवाकाय सूक्ता प्रेष्येति मैत्रावरुणं प्रति सूक्तवाकप्रैषः ।

ततः प्रस्तरादानादि धुरिनिधानान्ते विशेषः । प्रस्तरमध्यस्योपभृद्दुद्ध्याञ्जनं, सर्वाभिः स्रुग्भिः संस्रवहोमः । घृताच्य स्थ धुर्यो पात सुम्ना स्थ सुम्ने मा धत्तेत्यूहः । ततो वेद्यालम्भः ।

ततो वज्रं होता, स्रुगसी अध्वर्युः, जाघनीमग्नीदादाय पत्नीसंयाजार्थं गार्हपत्यं गच्छन्ति । तत्र सोमयागे त्वष्टृयागे च जाघन्या उपरिभागादेव चतुश्चतुरवदेयम् । तृतीययागे उत्तानाया जाघन्या अन्तःप्रदेशाच्चतुरवदेयम् । इडाऽपि तत एवावदेया । पुनर्जाघनीं पर्यावर्त्यं अधोमुखीं तत्रोपरिभागादेव गृहपतियागार्थं षडवत्तार्थं चावदेयम् । पत्नीसंयाजेषु नोपस्ताराभिघारौ । जाघन्या एवावदानचतुष्टयस्य प्रतियागं ग्रहणम् ।

तत उत्तानाया इडां पञ्चावत्तां कृत्वा समर्प्य प्रतिगृह्य पञ्चावत्तामेवावान्तरेडां समर्पयेत् । नात्र पर्वाञ्जनम् इडाज्यत एव तस्य विधानात्, इडायाश्चाज्याभावात् । अन्वारम्भः । भक्षः । मार्जनम् । नादब्धाहुतिः । न शंयोर्वाकः । अदब्धाहुत्यभावेऽपि शंयोर्वाको भवतीति याज्ञिकाः । सव्येनावृत्य दक्षिणाग्निहोमः । तत्रेदमिन्द्राग्निभ्यामिति तृतीयस्य त्यागः । ततो वेद्योक्त्रविमोकः । आवेदेः स्तरणम् ।

त्रीणि समिष्टयजूᳪंषि ध्रौवाज्येन ध्रुवयैव विग्राहं जुहोति । देवा गातुविद इति प्रथमम्, इदं वाताय । यज्ञ यज्ञमिति द्वितीयम् , इदं यज्ञाय । एष ते यज्ञो यज्ञपत इति तृतीयम्, इदं यज्ञपतये । अथवा यां आवह इत्यादिभिस्त्रीणि समिष्टयजूंषि जुहोति । अत्र इदमग्नय इति द्वौ त्यागौ । तृतीयः प्रकृतिवत् ।

इति षष्ठस्य नवमी कण्डिका ॥ ९ ॥

बर्हिर्हुत्वाऽपो गच्छन्ति हृदयशूलमादाय ॥१॥ आहवनीयं वोपस्थाय व्रतादीनि चेत् ॥ २ ॥ अभ्यवेत्य शुष्कार्द्रसन्धौ हृदयशूलमुपगूहति "शुगसि तमभिशोच योऽस्मान्द्वेष्टि यं च वयं द्विष्मो, माऽपो मौषधीरिति च ॥३॥ ग्लायन्नुदपात्रं निषिच्य पूर्वेण यूपं यथोक्तमुपगूहति ॥ ४ ॥ "धाम्नो धाम्नः" "सुमित्रिया न" इत्युपस्पृशन्त्यपः ॥ ५ ॥ उपगूहनशेषो वा पूर्वः ॥६॥ अभिमन्त्रणं वोत्तरेण ॥७॥ न सोमेऽनूबन्ध्यावर्जम् ॥८॥ वरुणप्रघासवत्समिदाधानम् ॥ ९ ॥ व्रतं विसृज्यापराग्नीनां पूर्वे चतुर्गृहीतं यूपाहुतिवत् ॥१०॥ स विहारोऽतः ॥११॥ समा-

---

ततो बर्हिर्होमः। ततो हृदयशूलमादाय तडागादिस्थमुदकं प्रति सर्वे गच्छन्ति। तत्र गत्वाऽध्वर्युरभ्यवेत्यापः प्रविश्य शुष्कार्द्रसन्धौ शुगसि तमिति मन्त्रेण मुञ्चेत्यन्तेन हृदयशूलमुपगूहति भूमौ प्रवेशयतीत्यर्थः। ततः सर्वे सुमित्रिया न इत्यभिमन्त्रयन्ते उपस्पृशन्ति वा। तडागादिगमने ग्लानिश्चेत् यूपात्पूर्वदेशे उदपात्रं निनीय तत्र शुष्कार्द्रसन्धौ शूलमुपगूहेत्। तासामेवापामभिमन्त्रणमुपस्पर्शनं वा।

ततो यजमानः प्रत्यागत्य तीर्थेन गत्वा देवानां समिदसीति आहवनीये समिधमादधाति। पत्नी च गार्हपत्ये तूष्णीं समिधमादधाति। ततः प्रणीताविमोकः। राक्षसभागः। पूर्णपात्रनिनयनाद्याहवनीयोपस्थानान्तम्। अत्रेदा शूलादानादि समिदाधानान्तः शूलावभृथः।

तत उत्तरवेदेः पश्चात् स्थित्वा व्रतं विसृजेत्। ततो ब्रह्मयजमानौ मध्यमाहवनीयसमीप उपविशतः। ततोऽध्वर्युराज्यं संस्कृत्य चतुर्गृहीतं गृहीत्वा समिधमादाय गत्वा मध्यमाहवनीयं परिस्तीर्य समिधमाधायोरु विष्णविति जुहोति, इदं विष्णवे ।

ततो यजमानोऽध्वर्यवे यस्य दाने शक्तिर्भवति तद् द्रव्यमिच्छाप्रमाणं ददाति। अस्याहुतेः समृद्ध्यर्थमिदं द्रव्यं दक्षिणामध्वर्यो तुभ्यमहं सम्प्रददे। नित्यधारणपक्षे मध्यमाहवनीयदक्षिणाग्न्योर्धारणम्। इतरो लौकिकः। अथवा मध्यमाहवनीयं समारोप्य निर्मथ्य तत्रैतामाहुतिं जुहुयात्। होमान्ते स लौकिकः।

ततः प्राजापत्यपक्षे सौर्यपक्षे च ब्रह्मयजमानयोर्भागप्राशनम्। ततो

रूढनिर्मथिते वा ॥१२॥ यथोत्साहं दद्यादस्याम् ॥ १३ ॥ अग्निं प्रणीय सदोहविर्द्धानाग्नीध्रहोतृधिष्ण्यान्यथोक्तं गृहीत्वाऽऽज्यान्याग्नीध्रप्रणयनमग्नीषोमीयदर्शनात्॥१४॥ न सोमार्थत्वात् ॥१५॥ प्रसङ्गाद्दर्शनम् ॥१६॥ दर्विहोमाः पौर्णमासधर्मा जुहोत्यविशेषात्॥१७॥जुहूदर्शनाच्च॥१८॥ तूष्णीमनर्थलुप्ताः ॥१९॥ एकाग्नयः ॥२०॥ अप्रयाजा अननुयाजा असामिधेनीकाः ॥२१॥ अनिगदाः ॥ २२ ॥ प्रतिनिगद्य होमाः ॥२३॥ स्वाहाकारप्रदानाः ॥२४॥ परतन्त्रोत्पत्तयो जुहोतिमात्राः ॥ २५ ॥ पाकयज्ञेष्ववत्तस्यासर्वहोमः ॥२६॥ हुत्वा शेषप्राशनम् ॥ २७ ॥ अग्निहोत्रे तदस्य पाकयज्ञस्येवेति श्रुतेः ॥२८॥ अग्नीषोमीयात्पशुषु ॥२९॥ शाखानियोजनम् ॥३०॥ वपाᳬ हुत्वा त्रीणि पञ्च

---

ब्राह्मणतर्पणप्रैषः । एकस्य तर्पणम् । ततो ब्रह्मा नमः कृतायेति होमसमिदाधानोपस्थानानामन्यतमं करोति । ततो जलमध्ये सुप्रोक्षितादि कृत्वा शतब्राह्मणभोजनसंकल्पं यजमानः करोति । अस्य निरूढपशोः समृद्ध्यर्थं यथासम्पन्नेनान्नेन तृप्तिपर्यन्तेन भोजनपर्याप्तेन शतं ब्राह्मणानहं भोजयामि इति ।

सौर्यपशुपक्षे पशुपुरोडाशोऽष्टाकपालः प्राजापत्यपशुपक्षे च । प्राजापत्य उपांशु । अन्यत्प्रैषादिकमूह्यम् । ऐन्द्राग्नादीनामाद्विविकल्प इति केचित् । नेत्यपरे ।

इति श्री याज्ञिकदेवकृतायां कात्यायनसूत्रपद्धतौ निरूढपशुबन्धः । अथ सूत्रक्रमोक्ता दर्विहोमाणां धर्मा लिख्यन्ते ।

---

दर्विहोमेषु शतरुद्रियादिषु तूष्णीं पौर्णमासधर्मा भवन्ति । तत्र चैकस्मिन्नेवाग्नौ आहवनीये तत्स्थानापन्ने परिश्रिदादौ वा होमो न गार्हपत्ये दक्षिणाग्नौ वा । हविःश्रपणप्रतपनादयः संस्कारास्तु गार्हपत्ये कर्तव्याः। तत्र प्रयाजानामनुयाजानामिध्मकाष्ठानां स्विष्टकृदिडाप्रस्तरहोमानां चाभावः । उत्तराधाराज्यभागसंस्रवबर्हिरादयो होमाश्चतुर्थ्यन्तं देवतापदमुच्चार्य स्वाहाकारेण कर्तव्याः । एवमग्न्यन्वाधानादारभ्य कर्मापवर्गान्तं मन्त्ररहितं सर्वं कर्म तेषु भवति प्रतिषिद्धवर्जम् ।

**सर्वाणि वाऽवद्याति ॥ ३१ ॥ सर्वाभावे शेषात्स्विष्टकृतः ॥३२॥ स्थालीपाकेन सह प्रदानम् ॥ ३३ ॥ पूर्णपात्रो दक्षिणो वरो वा वरो वा ॥ ३४ ॥ १० ॥**

---

ये दर्विहोमाः परतन्त्र उक्ताः यथा वाजपेये वाजप्रसवीयहोमः, साकमेधे पूर्णादर्विहोमः सान्तपनीयातन्त्रमध्यपतितः, पक्षे सौत्रामण्यां त्रिपशुषु पयोहोमादयस्ते होममात्रा भवन्ति । तेष्वग्न्यन्वाधानाद्यारादुपकारकमङ्गजातं न भवति । सन्निपत्योपकारकं तु द्रव्यसंस्कारादि भवत्येव । यथा वाजपेये वाजप्रसवीयहोमे ओषधीनामामादनप्रोक्षणादि, पयसश्च वत्सापाकरणादि इति जुहोतिधर्माः ।

अथ पाकयज्ञेषु स्मार्तेषु पक्षादिश्रवणाकर्मादिषु स्रुवादौ होमार्थमवत्तस्य घृतचर्वादेः सर्वस्य होमो न कर्तव्यः । किन्तु किञ्चिदवशिष्य प्रत्याहुति पात्रान्तरे स्थापनीयम् । ततस्तत्रोपदिष्टान् सर्वान् होमान् कृत्वा अनन्तरमेव तस्य हुतशेषस्य प्रत्याहुति पात्रान्तरे स्थापितस्य होमकर्त्रा प्राशनं कर्तव्यम् । निरूढपशुषु अग्नीषोमीयात् पशोः सकाशाद्धर्मा भवन्ति । अन्येषां पितृभूत्यादीनां भाष्यकाराणां मते सवनीयानूबन्ध्यनिरूढेषु त्रिष्वेव पशुष्वग्नीषोमीयधर्माः । इतरेषु चातुर्मास्यादिपशुव्यतिरिक्तेषु निरूढधर्मा इति ।

अथ प्रसङ्गात् स्मार्तपशुषु केचित् धर्मा उच्यन्ते । यूपस्थाने पशुनियोजनं शाखायां भवति । वपाहोमानन्तरं हृदयादीनि त्रीण्येवावदानानि पशोर्गृह्णाति न सर्वाणि । अथवा हृदयादीनि पञ्चैव गृह्णाति । अनयोः पक्षयोः शेषादेवावदाय स्विष्टकृद्धोमः कर्तव्यः । अथवा सर्वाण्यपि पश्ववदानानि गृह्णाति । अवदानैः सहैव पशुपुरोडाशस्थाने स्थालीपाकं श्रपयित्वा तेन सह पश्वावदानानां प्रदानं भवति ।

सर्वेषु स्मार्तेषु पाकयज्ञेषु पूर्णपात्रो दक्षिणा भवति वरो वा । पूर्णपात्रलक्षणमाह कात्यायनः—

"यावता बहुभोक्तुस्तु तृप्तिः पूर्णेन विद्यते ।
नावराद्ध्यर्मतः कुर्यात्पूर्णपात्रमिति स्थितिः" इति ।

वरशब्देन यस्मै दीयते। तदभिलषितं यद्यजमानेन दातुं शक्यते धान्यहिरण्यवस्त्रगवादिकं तदभिधीयते । भर्तृयज्ञाचार्यास्तु दर्विहोमाः स्मार्ताः पाकयज्ञाः पक्षादिप्रभृतय इति स्वभाष्ये व्याख्यातवन्तः । अतश्च तेषां मते स्मार्तेषु पाकयज्ञेषु देवतोद्देशेन हविर्ग्रहणम् , इध्मावेदिप्रोक्षणं बर्हिः प्रोक्षणं स्तरणादिकञ्च दर्शपूर्णमासधर्मत्वेन तत्क्रियमाणं समूलं भ-

## अथ सप्तमोऽध्यायः ।

## इतः परं पञ्चाध्याय्या सोमयागनिरूपणम् ।

दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेतेति श्रुतेः ॥१॥ सोमेन वोपक्लृप्तसोमः ॥२॥ आधानस्य सोमप्राधान्यात्॥३॥ नाविशेषात् ॥ ४ ॥ वसन्तेऽग्निष्टोमः ॥५॥ ऐन्द्राग्नं पुनरु·

---

धति । स्रुचा होमश्च प्राप्नोति । अन्यदपि वेदिमानपूर्णपात्रादिकमधिकं प्राप्नोति यत्पाकयज्ञेषु कथमपि न भवतीति । अतएव विदुः—जैमिनिमते सर्वाः शतरुद्रियजुहोतयोऽपूर्वा एव भवन्ति न दर्शपूर्णमासधर्मकाः ॥ १० ॥

इति षष्ठस्य दशमी कण्डिका ॥ १० ॥

इति श्रीत्रिरग्निचित्सम्राट् स्थपतिमहायाज्ञिकश्रीप्रजापति सुतयाज्ञिक श्री देवकृतायां कात्यायनसूत्रपद्धतौ षष्ठोऽध्यायः समाप्तः ।

---

अथाग्निष्टोमस्य पद्धतिर्लिख्यते । स्वकाले कृताधानस्य पूर्वं दर्शपूर्णमासाभ्यां यागः । तदनन्तरं विकृतिभूता इष्टिपशुसोमयागा भवन्ति न ततः प्राक् । अग्निहोत्रहोमस्तु प्रागपि दर्शपूर्णमासाभ्यां भवत्येव, यजतेरेव निषेधात । अग्निहोत्राङ्गभूता नैमित्तिक्य इष्टयश्च भवन्ति ।

सोमयागार्थं संभृतधान्यघृतदक्षिणादिसम्भारस्य सोमयागचिकीर्षया सोमयागसन्निधौ कृताधानस्य सोमयागादूर्ध्वमेवाग्निहोत्रदर्शपूर्णमासादयो भवन्ति, न ततः पूर्वम् । पवमानाद्या इष्टयो दौर्ब्राह्मण्यनिरासार्थमैन्द्राग्नः पशुश्च सोमात्पूर्वमपि भवति, तदर्थत्वात् ।

अग्निष्टोमादनन्तरं पुनर्दर्शपूर्णमासावनुष्ठायैवान्ये यागाः कर्तव्या न ततः पूर्वम् ।।स्वकाले कृताधानस्याग्निष्टोमो वसन्त एव भवति । सोमाधानपक्षेऽग्निष्टोमस्य ऋतुनक्षत्रादिनियमो न भवति ।

यस्य यजमानस्य पित्रा पितामहेन वोभाभ्यां सोमयागः कृतो न भवति तस्य नैमित्तिको दौर्ब्राह्मण्यनिरासार्थमैन्द्राग्नः पशुर्भवति । स च आरम्भात्पूर्वस्मिन्पर्वणि पुण्याहे वा कर्तव्यः । तत्रोद्धरणादिकर्मापवर्गान्तं निरूढपशुवत्सर्वं भवति । कर्कमते त्वग्नीषोमीयवत् । पशुश्च पुनरुत्सृष्टछागो भवति । तत्रेन्द्राग्निभ्यां जुष्टमित्याद्यपि सर्वं निरूढे ऐन्द्राग्ने प्रदर्शितमेव ।

त्सृष्टमालभ्य त्रिपुरुषासोमपीथिनः ॥ ६ ॥ षोडशर्त्विजो ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृपोतृप्रतिहर्त्रच्छावाकनेष्ट्रग्नीत्सुब्रह्मण्यग्रावस्तुदुन्नेतॄन्वृणीते ॥७॥ चतुरो वाऽऽद्यांस्तत्पुरुषा इतरे यथावेदम्

ततो यजमानो मातृपूजामाभ्युदयिकं श्राद्धं च कृत्वा षोडशर्त्विजो वृणीते । तत्र ब्रह्मादीन् षोडशर्त्विजः प्राङ्मुखानुपवेश्य स्वयमुदङ्मुख इष्टदेवतां प्रणम्य पूर्वं दैवानृत्विजो वृणीते मन्त्रोच्चारणमात्रेण । तद्यथा— अग्निर्मे होता, आदित्यो मेऽध्वर्युः, चन्द्रमा मे ब्रह्मा, पर्जन्यो म उद्गाता, आपो मे होत्राशंसिनः, रश्मयो मे चमसाध्वर्यवः इति मन्त्राः । "महर्त्विग्व्यतिरिक्ता ब्राह्मणाच्छंस्याद्या द्वादशर्त्विजो होत्राशंसिन इत्युच्यन्त" इति मानवे ।

ततो मानुषानृत्विजो वृणीते । तत्रैवमाचारः । सव्ये स्फ्यं गृहीत्वा साक्षतेन दक्षिणहस्ताग्रेण दक्षिणर्त्विग्जान्वालभ्य वरणं करोति । अमुकगोत्र शर्मन् हिरण्यशतगवदक्षिणेन वासोऽश्वदक्षिणेन च रथन्तरपृष्ठेन चतुष्टोमेनाग्निष्टोमसंस्थेन ज्योतिष्टोमेनाहं यक्ष्ये । तत्र मे त्वं ब्रह्मा भवेति ब्रह्माणं वृणीते । भवामीति ब्रह्मा प्रत्याह । तत उद्गाता भव, होता भव, अध्वर्युर्भव, ब्राह्मणाच्छंसी भव, प्रस्तोता भव, मैत्रावरुणो भव, प्रतिप्रस्थाता भव, पोता भव, प्रतिहर्ता भव, अच्छावाको भव, नेष्टा भव, अग्नीद्भव, सुब्रह्मण्यो भव, ग्रावस्तुद् भव, उन्नेता भवेति ।

एवमेतान् षोडशर्त्विजो वृत्वा तान्प्रति यजमानः साधु भवन्त आसतामर्चयिष्यामो भवत इति ब्रूयात् । ततस्तान्मधुपर्केणार्चयित्वा पुण्याहं दीर्घमायुरस्त्वित्यादिदक्षिणासंकल्पः । दक्षिणाः पान्त्वित्यादि पुण्याहवाचनम् । ततो यजमानाय सोमसमर्पणम् । यजमानस्य तिलकादिमाङ्गल्यकरणम् । आशीर्वादाः ।

तत आचम्य यजमानो दैवर्त्विग्भ्यो मानुषेभ्यश्च देवयजनं प्रार्थयते । अग्निर्मे होता स मे देवयजनं ददातु इत्युपांशु, होतर्देवयजनं मे देहीत्युच्चैः । एवं सर्वत्र ज्ञेयम् । आदित्यो मेऽध्वर्युः स मे देवयजनं ददातु, अध्वर्यो देवयजनं मे देहि । चन्द्रमा मे ब्रह्मा स मे देवयजनं ददातु, ब्रह्मन्देवयजनं मे देहि । पर्जन्यो म उद्गाता स मे देवयजनं ददातु, उद्गातर्देवयजनं मे देहि । आपो मे होत्राशंसिनस्ते मे देवयजनं ददतु, होत्राशंसिनो देवयजनं मे दत्त । रश्मयो मे चमसाध्वर्यवस्ते मे देवयजनं ददतु, चमसाध्वर्यवो देवयजनं मे दत्त । दत्तमिति

॥८॥ ब्राह्मणाच्छंस्यग्नीत्पोतारो ब्रह्मणः ॥ ९ ॥ देवयजनं जोषयन्ते ॥१०॥ उच्चतमꣳ सममविभ्रंशि ॥ ११ ॥ अभितो देवयजनमात्रदेशं पुरस्ताद्वर्जम् ॥१२॥ प्राक्प्रवणमुदग्वा यत्किञ्चानूचानर्त्विजः ॥१३॥ उद्धृतौषधिमूलेऽपरेऽन्ते विमितं कुर्वन्ति ॥ १४ ॥ प्राग्वꣳशम् ॥१५॥ पुरस्तादुच्चम् ॥ १६ ॥ प्रतिदिग्द्वारम् ॥ १७ ॥ उदग्वर्जं वा

---

सर्वेषां होत्रादीनां प्रतिवचनम् । महर्त्विग्व्यतिरिक्ता ब्राह्मणाच्छंस्यादयो द्वादशर्त्विजो होत्राशंसिन इत्युच्यन्ते ।

एवं गृहे एवर्त्विजो वृत्वा तेभ्यो देवयजनं प्रार्थयित्वा यजमान ऋत्विक्सहितो देवयजननिर्द्धारणार्थं याति। तत्र गत्वा यत् पार्श्ववर्त्तिप्रदेशेभ्योऽतिशयेनोच्चं समं च वृष्टयुदकेन च न तुद्यति प्राक्प्रवणमुदक्प्रवणं वा भवति, यत्र पूर्ववर्जं परितस्तिसृष्वपि दिक्षु देवयजनपर्याप्तः प्रदेशो भवति, तदेवंविधं देवयजनं यागार्थं विलोक्य निर्द्धारयन्ति । इदं साधु सर्वलक्षणोपेतं देवयजनम् अत्रैव यागः क्रियत इति ।

अथवा यदि देवयजनमुक्तलक्षणोपेतं न लभ्यते तदा यस्य यजमानस्य ऋत्विजोऽनूचाना भवन्ति तस्य देवयजनं यादृशं लभ्यते तादृशमनेवं लक्षणमपि भवति । एते ऋत्विजोऽनूचानाः श्रुतशास्त्रादिकमन्येभ्य उपदेष्टुं समर्था भवन्ति त एव कर्तव्या नान्यत इति तात्पर्यम् ।

ततो देवयजनादोषधिमूलान्युद्धृत्य तस्योद्धृतौषधिमूलस्य परिसमूहनादिसंस्कृतस्य देवयजनस्य पश्चाद्भागे दशारत्नि द्वादशरत्नि वा समचतुरस्रं विमितं कुर्वन्ति । तत्र वंशो मध्यबलः प्रागायतः प्रागग्रश्च कर्त्तव्यः। पूर्वस्यां दिश्युच्चं कर्तव्यम् । उच्चाः स्थूणाः पूर्वस्यां दिशि निखातव्याः। तस्य पूर्वदक्षिणपश्चिमासु द्विहस्तविस्ताराणि द्वाराणि कार्याणि । अथवा एवंविधा शाला च दीर्घचतुरस्रा भवति । तदुक्तम्—

"विंशत्यरत्निः शाला स्यात्तदर्द्धेन तु विस्तृता ।
विमितं चतुरस्रं स्याद्दशारत्निप्रमाणत" इति ।
द्वादशारत्निमानत इति वा चतुर्थपादपाठः ।

ततो विमितादुत्तरस्यां दिशि समीप एवार्थपरिमाणं समचतुरस्रं प्राग्द्वारं यजमानस्याप्सुदीक्षार्थं परिवृतं करोति । तत एवंविधमेव द्वितीयं परिवृतं विमितादपरस्यां दिशि पत्नीदीक्षार्थं कार्यम् ।

एवं देवयजनस्य पश्चाद्भागे परिवृतद्वयसहितं विमितं शालां वा

॥१८॥ शालां वा ॥१९॥ परिवृते चोत्तरापरे ॥ २० ॥ दीक्षाप्रभृति शुक्लपक्षे पञ्चमीᳬं सप्तमीं वा प्रसुतः ॥२१॥ कालातिक्रमे नियताक्रिया प्राप्तकालत्वात् ॥२२॥ न समत्वात् ॥२३॥ द्वादश दीक्षा अपरिमिता वा ॥ २४ ॥ पुण्याहे दीक्षा क्रयः प्रसव उत्थानम् ॥ २५ ॥ प्रक्रमोत्थाने विरोधे ॥ २६ ॥ न वाऽचोदितत्वात् ॥ २७ ॥ दीक्षासु यूपच्छेदनं यूपाहुतिं प्राग्घुत्वा यूपान्ते वाऽग्निं मथित्वा दीक्षितस्याग्निहोमप्रतिषेधश्रुतेः ॥ २८ ॥ उत्क्रयणकाले वोभयᳬं होमच्छेदने सन्निधेः ॥२९॥ समारोह्याग्नी शालास्तम्भं पूर्वार्धं गृहीत्वाऽरणिपाणिराहेदमगन्मेति॥३०॥

शालायाᳬं राजानं निदधात्याहृतश्चेत् ॥१॥ प्राक्क्रयादन्नमुपहरन्त्यस्मै हविष्यममाᳬंसम् ॥२॥ अग्निं वि-

---

निष्पाद्य गृहमागत्य पूर्णाहुत्यर्थमाहवनीयमुद्धृत्याज्यसंस्कारपूर्वं चतुर्गृहीतं गृहीत्वा स्रुवेण वा परिस्तरणसमिदाधानपूर्वकमुरु विष्णविति पूर्णाहुतिमाहवनीये जुहोति । आज्यशेषस्य सुगुप्ते स्थापनम् ।

ततो भूसंस्कारान् कृत्वा समारोपार्थमाहवनीयमुद्धृत्य गार्हपत्याहवनीयौ अयं ते योनिरित्यरण्योः समारोप्य शकटे अरणी सर्वं यज्ञसम्भारं च निधाय माङ्गल्यशान्तिपाठादि कुर्वन् देवयजनं गच्छेत् । सोमाधानपक्षेऽग्निधारणसद्भावे पूर्णाहुत्यर्थमाहवनीयोद्धरणं न कार्यं तत्रैव पूर्णाहुतिर्होतव्या । समारोपोऽपि नित्यधृतानामेव कर्तव्यः ।

देवयजनं प्राप्य पादौ प्रक्षाल्याचम्य यजमानोऽरणी हस्ते कृत्वा सोमं चादाय पूर्वद्वारेण शालां प्रविश्यारणिहस्त एव पूर्वद्वारे निखातं महान्तं शालास्तम्भं दक्षिणहस्ताग्रेण स्पृष्ट्वा इदमगन्मेति मन्त्रं पठति ।

इति सप्तमस्य प्रथमा कण्डिका ॥ १ ॥

---

ततः सोमस्य शालामध्ये क्वचिदुच्चस्थाने स्थापनम् । ततोऽध्वर्युर्गार्हपत्यखरे पञ्च भूसंस्कारान् कृत्वा गार्हपत्यं मथित्वा तत्र स्थापयति । ततो गार्हपत्याधानवदष्टप्रक्रमादिमितं देशमन्तराले मुक्त्वा आहवनीयखरं, वितृतीये दक्षिणाग्निखरं च कृत्वोभयत्र भूसंस्कारान् कृत्वाऽग्निष्टोमसंस्थज्योतिष्टोमार्थमिति सङ्कल्प्याहवनीयदक्षिणाग्न्योर्विहरणं कुर्यात् ।

हृत्य सप्तसु प्रक्रमेष्वर्द्धव्यामे च साग्निचित्ये ॥३॥ अपराह्णेऽश्नातीष्टमुपपन्नं वा, न वा ॥४॥ क्रत्वर्थमपदिश्यान्यस्मा उत्तरे परिवृत उदकुम्भवत्यप्सु दीक्षा ॥५॥ नापित उपतिष्ठति नखानि निकृन्तत्यङ्गुष्ठप्रभृतीनि दक्षिणहस्तस्य प्रथमम् ॥६॥ दक्षिणं गोदानं वितार्योनत्तीमा आप इति ॥७॥ यूपवत्कुशतरुणम् ॥८॥ क्षुरेण

---

ततः सोमाय मांसवर्जितं हविष्यान्नमुपढौकयेत् इदमन्नं सोमाय न ममेति यजमान एव । एतत्पूर्वाह्णे कर्म ।

ततोऽपराह्णे यजमानः सपत्नीको यत् धान्यपायसापूपमोदकमण्डकशाकादि भोक्तुमिष्टं भवति धेन्वनडुन्मांसवर्जितं तदश्नाति । अथवा यत्सम्पद्यते तदेवाश्नाति । अथवा यद्यशनेच्छा न भवति तदा नाश्नीयात् । ततो यजमानो यागार्थं द्रव्यं कस्य चिद्धस्ते समर्प्य तस्योपदेशं शिक्षां करोति क्रत्वर्थं मे गोपाय यथाकालं० सम्पादयेति ।

ततोऽप्सुदीक्षा । तत्रोत्तरे परिवृते उदकपूर्णस्यैकस्य कुम्भस्य स्थापनम् । नापितश्च सन्निधान उदूर्ध्वस्तिष्ठति । ततस्तस्मिन्परिवृते यजमानं पूर्वाभिमुखमुपवेश्य स्वयमुदङ्मुखो यजमानस्य दक्षिणहस्तस्याङ्गुष्ठादारभ्य नखानि छिनत्ति । ततः सव्यहस्तस्य दक्षिणं गोदानं शिरसो दक्षिणं प्रदेशम् "इमा आप" इत्युदपात्रोदकेनार्द्रं करोति । ततः शलाकादिकङ्कतादिना कतिपयान् केशान् पृथक् कृत्वा ओषधे त्रायस्वेत्येकं दर्भतृणमन्तर्द्धाय स्वधित इति क्षुरं दर्भतृणस्योपरि निदधाति ।

ततस्तूष्णीं सतृणान् केशांश्छित्त्वोदपात्रमध्ये प्रक्षिपति । ततः शिरस उत्तरप्रदेशमुदपात्रोदकेन तूष्णीमार्द्रं कृत्वा शलाकादिना केशान्पृथक् कृत्वा तूष्णीं तृणं प्रागग्रमन्तर्द्धाय तूष्णीमेव क्षुरं तस्योपरि निधाय तूष्णीं सतृणान् केशांश्छित्त्वा छिन्नान् केशानुदपात्रे प्रक्षिपति । "प्रागग्रं दर्भमन्तर्द्धाय"इत्यापस्तम्बः । ततो नापिताय क्षुरं समर्पयति । तेन क्षुरेण नापितो यजमानस्य केशानां मस्तकोद्भवानां श्मश्रूणां मुखरोम्णां भ्रूवत्तूरोमवर्जितानां च वपनं करोति कक्षोपस्थशिखावर्जम् ।

आपस्तम्बः—"उत्तरेण वर्हिः प्राग्वंशे परिश्रिते यजमानः केशश्मश्रु वापयत उपकक्षावग्रेऽथ श्मश्रूण्यथ केशानपि वा श्मश्रूण्युपकक्षावथ केशानि"ति ।

मानवे—"न कक्षाविति तथा लोहितमनभिगमयन्नौदुम्बरेण दन्तान् धावेते"ति ।

चाभिनिधाय ॥९॥ छित्त्वा ॥१०॥ उदपात्रे प्रास्यति ॥११॥ एवमुत्तरं तूष्णीम् ॥१२॥ नापिताय क्षुरं प्रयच्छति॥१३॥ तेन केशश्मश्रु वपति॥१४॥ आपो अस्मानिति स्नात्वोदिदाभ्य इत्युत्क्रामत्युत्तरपूर्वार्द्धम् ॥ १५ ॥ क्षौमं वस्ते निष्पेष्टवै ब्रूयादहतम् ॥ १६ ॥ चेदद्भिरभ्युक्ष्य ॥ १७ ॥ स्नातवस्यं वाऽमौत्रधौतं विचिक्नितकेशं प्रसारितदशं दीक्षातपसोरिति ॥ १८ ॥ न नीविं कुरुते ॥ १९ ॥ एवं प्रतिप्रस्थाताऽपरस्मिन् परिवृते पत्नीं तूष्णीम् ॥ २० ॥ वपनं वा ॥ २१ ॥ धेन्वनडुहयोर्नाश्नीयात् ॥ २२ ॥ पुरुषधर्मो वाऽसम्भवात् ॥ २३ ॥ अप्सलभोजनं वा

ततः स्थावरा अपो गत्वा यजमानो नापितस्पर्शनिमित्तं स्नात्वाऽऽचम्य तास्वेवाप्स्वापो अस्मानिति मन्त्रेण स्नानं करोति। ततो जलमध्य एव तत्समीपे आचम्योत्थायोदिदाभ्य इति मन्त्रेण जलमध्यात्प्रागुदीचीं दिशं प्रति उत्क्रामति निःसरति। नात्रोदकुम्भोदकेन स्नानम् अविहितत्वात। मन्त्रलिङ्गशाखान्तरविरोधात। तत्स्थापनं त्वद्वृष्टार्थं सोमक्रयादकुम्भवत्।

ततो यजमानः क्षौममहतं वासः परिधत्ते। तत्पूर्वमप्रक्षालितं चेत्तदा निष्पष्टवा इत्यध्वर्युः प्रतिप्रस्थातारं यजमानपुरुषं वा प्रेष्यति। ततः प्रतिप्रस्थाता पाणिभ्यां वस्त्रं गाढं घर्षयित्वा प्रक्षालयति। ततोऽद्भिरभ्युक्ष्य यजमानः परिधत्ते। यदि पूर्वमेव प्रक्षालितं तदा अभ्युक्षणमात्रं कृत्वा परिधत्ते। अथवा अनहतमपि यत्प्रत्यहस्नानानन्तरं परिधानार्थं भवति तदेव परिधत्ते। एतत्त्रिविधमपि वस्त्रमरजकधौतं निष्काशितकेशं विरलीकृतदशं दीक्षातपसोरिति मन्त्रेण नाविरहितं परिधत्ते। "एकमेव वास उत्तरीयमि"ति हरिस्वामिनः। "समाचारपरिप्राप्तमुत्तरीयं च धारयती"ति सम्प्रदायः।

एवमेव प्रतिप्रस्थाता पश्चिमे परिवृते तूष्णीं पत्नीं दीक्षयति। वपनस्य विकल्पः। वपनपक्षे नखनिकृन्तनादि वस्त्रपरिधानान्तं सर्वं मन्त्ररहितं यजमानवद्भवति। वपनाभावे च पूर्वं हस्तयोर्नखनिकृन्तनं ततः पादयोः। ततः स्थावरोदकेन स्नानम् आचमनम उत्तरपूर्वार्द्धे उत्क्रमणम्। यजमानो यादृशं वस्त्रं परिधत्ते तादृश्यैव पत्न्या अपि परिधानमुत्तरीयधारणं च।

॥२४॥ प्रयाथाग्नावैष्णव एकादशकपालः ॥ २५ ॥ आदित्येभ्यो वा चरुः ॥२६॥ प्राक्समिष्टयजुषः करोति॥२७॥ समिष्टयजुर्वर्जं वा ॥२८॥ उपांशु चरन्ति प्रागग्नीषोमीयात्

---

ततोऽध्वर्युर्बाहुगृहीतं यजमानं पूर्वद्वारेण शालायां प्रवेशयति । प्रतिप्रस्थाता चापरेण द्वारेण बाहुगृहीतां पत्नीं शालायां प्रवेशयति । ततस्तौ स्वस्वस्थाने उपविशतः ।

तत्राग्नावैष्णव एकादशकपालोऽवश्यं भवति । आदित्येभ्यश्चरुर्द्वितीयं हविर्विकल्पेन । तत्र त्रिष्वग्न्यन्वाधानम् । चतुरासनोपकल्पनम् । ब्रह्मवरणवृतजपाभावः । ब्रह्मा समन्त्रकमासनं संस्कृत्योपविशति । व्रतग्रहणं, प्रणीताप्रणयनं, त्रयाणां परिस्तरणम् । पात्रासादने—शूर्पाग्निहोत्रहवणि, स्फ्यः कपालानि एकादश, चरुस्थाली वा, शम्यादिनिर्विशेषो दक्षिणाभावः । विंशतिरिध्मकाष्ठानि, एका पुरोडाशपात्री, पूर्णपात्रकर्मापवर्गयोरभावः । चरुपक्षे मेक्षणं चासाद्यते ।

ग्रहणेऽग्नाविष्णुभ्यां जुष्टम् । द्वितीयश्चरुश्चेत् आदित्येभ्यो जुष्टम् । एवं पक्षे सर्वत्र ज्ञेयम् ।

प्रोक्षणे त्वा जुष्टम् । एकबीजपक्षे कणान्ते, पक्षे विभज्यालम्भः । इदमादित्यानाम् । प्राणदाने अग्नाविष्णू गच्छ । पक्षे आदित्यान् गच्छ । अवबाधे सप्तदशेन वज्रेण । उत्तमप्रयाजे इदमग्नये सोमायाग्नाविष्णुभ्यामादित्येभ्यो वा देवेभ्य आज्यपेभ्यः ।

अत्र दीक्षणीयाप्रभृत्यग्नीषोमीयात्प्राक् सर्वैः कर्मभिरुपांशु चरन्ति । तत्रापि महावीरसम्भरणं प्रवर्ग्यचरणमग्नीषोमीयः पशुश्च शाखान्तरादुच्चैः सर्वपक्षेषु । अथवा दीक्षणीयां वागन्तेनात्युच्चैः कुर्यात्, तदपेक्षया नीचैस्तरां प्रायणीयां, तदपेक्षया नीचैस्तरामातिथ्याम् । उपांशूपसदः कार्या इति, तत उपांशुपक्षे सर्वं प्रैषादिकर्माण्युपांशु अन्यदुच्चैः सर्वम् । अग्नाविष्णुभ्यामनुब्रूहि, अग्नाविष्णू यज । इदमग्नाविष्णुभ्याम् । आदित्येभ्योऽनुब्रूहि आदित्यान्यज इदमादित्येभ्यः । ततः स्विष्टकृदादिपुरोडाशस्य प्राशित्रेडाव्यतिरिक्तं किमपि न भवति । चरुपक्षे तस्यापि न भवति ।

व्यूहने अग्नाविष्णवोरुज्जितिम् । अग्नाविष्णू तमपनुदतामिति । पक्षे अग्नाविष्णवोरादित्यानामुज्जितिम् । अग्नाविष्णू आदित्यास्तमपनुदन्त्विति । प्रस्तरहोमे इदमग्नये सोमायाग्नाविष्णुभ्यां देवेभ्य आज्यपेभ्यः । पक्षे आदित्येभ्य इत्यधिकम् । पिष्टलेपाहुतौ इदं विश्वेभ्यो देवेभ्य इति सर्वं पक्षे । दक्षिणाग्निहोमानन्तरं वेद्योक्त्रविमोकः ।

॥२९॥ वागन्तेन वा दीक्षणायां नीचैस्तरां नीचैस्तरामितरे ॥३०॥ उपांशुवमदः ॥३१॥ शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते कुशेषु नवनीतेन शीर्ष्णोऽध्यनुलोमꣳ सपादको महीनां पयोऽसीति ॥३२॥ वृत्रस्येत्यक्ष्यावनक्ति त्रैककुदाञ्जनेन ॥३३॥ अभावे ऽन्यत् ॥३४॥ द्विर्दक्षिणं त्रिरुत्तर पराक् ॥३५॥ सकृत्सकृन्मन्त्रः ॥३६॥ शरेषीकया साग्रया ॥३७॥ ॥ २ ॥

कुशपवित्रैश्चित्पतिर्मेति पावयति सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति सर्वत्र द्विरूर्ध्वं नाभ्युन्मृज्य प्रदक्षिणꣳ सकृदवाङ् ॥१॥ एकेन त्रिभिः सप्तभिर्वा ॥२॥ एक-

---

ततोऽध्वर्युः शालायाः पुरस्तात्कुशान् स्तृणाति । ततो यजमानस्तेषु कुशेषु पूर्वाभिमुखस्तिष्ठति । पत्नी च दक्षिणतः । ततोऽध्वर्युर्यजमानाय नवनीतं समर्पयति, पत्न्यै प्रतिप्रस्थाता ।

ततो यजमानो महीनां पयोऽसीति शिरस आरभ्य पादपर्यन्तं सर्वं शरीरमनुलोममनक्ति तेनाध्वर्युः समर्पितेन नवनीतेनाग्रतः पृष्ठश्च । पृष्ठादौ यत्राभ्यञ्जनं कर्तुं न शक्नोति तत्राध्वर्युस्तमभ्यनक्ति ।

नासिकासंलग्नकोणादारभ्य पराक्—

ततो यजमान एव साग्रया सतूलया शरेषीकया सौवीराञ्जनेन वृत्रस्येति दक्षिणं चक्षुर्द्विरनक्ति, नासिकासंलग्नकोणादारभ्य पराक् नत्वावृत्या, एकवारं मन्त्रेण द्वितीयं तूष्णीम् । एवमेवोत्तरं चक्षुस्त्रिवारमनक्ति सकृन्मन्त्रेण द्विस्तूष्णीम् । सौवीराञ्जनाभावेऽन्येन कज्जलादिनाऽनक्ति ॥

इति सप्तमस्य द्वितीया कण्डिका ॥ २ ॥

---

ततोऽध्वर्युः सप्तभिः सप्तभिः साग्रैः कुशतृणैश्चित्पतिर्मेति प्रतिमन्त्रं यजमानं पावयति । तत्राच्छिद्रेणेति त्रिष्वपि मन्त्रेष्वनुषञ्जनीयम् । वारद्वयं नाभेरुपरि प्रदक्षिणमुन्मार्जनं करोति, तत्र चित्पतिर्मेति प्रथमं वाक्पतिर्मेति द्वितीयम् । ततः एकवारं सप्तभिः पवित्रैर्नाभेरधस्तात्प्रदक्षिणमवमार्ष्टि देवो मेति मन्त्रेण । अथवा एकेनैव दर्भतृणेन वारत्रयं पावयति । अथवा त्रिभिर्दर्भतृणैः । अथवा सप्तभिः । अत्र त्रिष्वपि पक्षेषु ता एव पवित्रव्यक्तयो भवन्ति । प्रथमपक्षे तु प्रतिपावनमन्यान्येव सप्त सप्त पवित्राणीति भेदः ।

**शतेन वा राजसूये ॥३॥ आ वो देवास इति वाचयति॥४॥ स्वाहा यज्ञमित्यङ्गुली अचते नानाहस्तयोः॥५॥एवꣳ शेषं प्रतिमन्त्रम् ॥६॥ उत्तमेन मुष्टी कृत्वा स्वाहेत्युक्त्वा वाग्यतः ॥७॥ अङ्गुष्ठौ तत्सहितं चोत्सृजति ॥८॥ वाग्यतं प्रवेशयत्याहवनीयगार्हपत्यावन्तरेण ॥ ९ ॥ सोऽस्य सञ्चर आ प्रसवात् ॥ १० ॥ एवं प्रतिप्रस्थाताऽपरस्मिन् परिवृते पत्नीमभ्यञ्जनादि तूष्णीम् ॥ ११ ॥ अपरेण वा प्रवेशयति ॥ १२ ॥ औदुग्रभणानि जुहो-**

---

ततोऽध्वर्युरा वो देवास इत्यमुं मन्त्रं यजमानं वाचयति आवो देवासो० यज्ञियासो हवामह इति ब्रूहि इत्येव अध्वर्युराह । ततो यजमानः स्वरेण आ वो देवास इति पठति । एवं सर्ववाचनेषु ।

ततो यजमानः स्वाहा यज्ञमिति मन्त्रेण द्वयोरपि हस्तयोः कनिष्ठिके सङ्कोचयति । ततः स्वाहोरोरिति द्वयोरनामिके सङ्कोचयति । ततः स्वाहा द्यावापृथिवीभ्यामिति द्वयोर्मध्यमे संकोचयति । ततः स्वाहा वातादिति मुष्टी करोति । ततः स्वाहेत्युक्त्वा वाग्यमनं करोति । द्वावङ्गुष्ठौ द्वे प्रदेशिन्यौ चोत्सृजति सहैव । अवशिष्टमङ्गुलित्रयं द्वयोरपि हस्तयोर्मुष्टिरूपमेव तिष्ठति विसर्गं यावत् ।

ततः कृतवाग्यमं यजमानमध्वर्युर्हस्ते गृहीत्वा पूर्वद्वारेण शालां प्रवेश्य गार्हपत्याहवनीययोरन्तरालेन प्रवेशयति । अस्य यजमानस्यावभृथं यावदेष एव गमनार्थं सञ्चरः । एवं प्रतिप्रस्थाता यजमानेन सहैव पत्न्या नवनीतेनाभ्यञ्जनादि प्रवेशनान्तं कर्म तूष्णीं कारयति । अपरेण शालाद्वारेण प्रवेशयतीति विशेषः । तत औदुग्रभणहोमः—

तत्राहवनीयसमीपे उपविश्य समिधमाधायाध्वर्युः स्थाल्याः सकाशादाज्यं गृहीत्वा स्रुवेण जुहोति आकूत्यै प्रयुज इति प्रथमम् इदमाकूत्यै प्रयुजेऽग्नये। मेधायै मनस इति द्वितीयम् । इदं मेधायै मनसेऽग्नये। ततो दीक्षायै तपस इति स्वरेण जपत्युपविष्ट एव न जुहोति । ततः सरस्वत्यै पूष्ण इति तृतीयं जुहोति इदं सरस्वत्यै पूष्णोऽग्नये । आपो देवीर्बृहतीरिति चतुर्थीं स्रुवेण जुहोति । इदमब्भ्यो द्यावापृथिव्यन्तरिक्षबृहस्पतिभ्य इति त्यागः । इदमद्भ्यो द्यावापृथिवीभ्यामन्तरिक्षाय बृहस्पतय इति वा, मन्त्रलिङ्गेन भिन्नविभक्त्यन्तानामेव देवतात्वेनावगमात् ।

ति स्थाल्याः स्रुवेणाकूय्या इति प्रतिमन्त्रम् ॥ १३ ॥ तृतीयं जपस्येव ॥ १४ ॥ पञ्चमं जुह्वां ध्रौवमासिच्य द्विश्च स्थाल्याः स्रुवेण तृतीयᳬं स्रुवमाभिपूरयति वि-श्वो देवस्येति ॥१५॥ एतामेव वा पूर्णां जुहुयात् ॥१६॥ आहवनीयं दक्षिणेन कृष्णाजिने माᳬंससᳬंहिते स्यूतान्ते तदूर्मसु पश्चादासञ्जनवती निदधाति ॥१७॥ एकं चेत्पश्चा-त्पादद्विगुणम् ॥१८॥ दक्षिणं जान्वाच्यापाहते पश्चादेनयोः ॥१९॥ शुक्लकृष्णसन्धिमालभत ऋक्सामयोरिति ॥२०॥ द-क्षिणजानुनाऽऽरोहति शर्मासीति तेनास्तेऽपरेऽन्ते ॥२१॥ मेखलां बध्नीते वेणिं त्रिवृतᳬं शाणमुञ्जमिश्रामन्तरां वासस

---

पञ्चमहोमे ध्रौवमाज्यं सकलमेकवारमेव जुह्वामासिच्य स्थाल्याः सकाशात् स्रुवेण द्विरासिच्य ततो जुह्वा उपर्युत्तानां स्रुचं निधाय स्था-लीत आज्यं निनीय स्रुवमेव पूरयति न तु जुहूम् ।

ततस्तं पूर्णस्रुवं जुह्वां निनीय विश्वो देवस्येति जुहोति, इदं विश्वदेव-सवितृमित्रबृहस्पतिपूषभ्यः । इदं विश्वेभ्यो देवेभ्यः सवित्रे मित्राय बृह-स्पतये पूष्णे चेति वा । अथवा इदं सवित्रे इत्येतावानेव त्यागः । "सा-वित्रीमनुष्टुभमि"त्युक्तेः । अथवा स्रुवस्य पूरणं न कार्यं किन्तु स्रुवपूर-णकाले जुहूं घृतेन पूरयित्वा इयमेवैकाहुतिर्होतव्या न पूर्वाणि चत्वार्यौ-दुम्भणानि । "ता वै यद्येकां जुहुयात् पूर्णां जुहुयादि"ति श्रुतेः । ततः औदुम्भणान्ते दीक्षणीयाशेषसमाप्तिः । बर्हिर्होमः । प्रणीताविमोकः । राक्षसभागः ।

तत आहवनीयस्य दक्षिणतः समीपे द्वे कृष्णाजिने अलोमकप्रदेशसंलग्ने पश्चाच्छिद्रेषु नियमेन परस्परं स्यूतान्ते अवलम्बनरज्जुयुक्ते प्राग्ग्रीवे-स्थापयति । यद्येकं कृष्णाजिनं भवति न द्वितीयं तदा तस्यैव पाश्चात्यो दक्षिणपादो द्विगुणः कार्यः । न कृष्णाजिनस्य चतुर्थोऽशः ।

ततो यजमानः कृष्णाजिनयोः पश्चाद् दक्षिणं जानु भूमौ पातयित्वा प्राङ्मुख उपविशति । ततः स एव कृष्णाजिनयोः शुक्लकृष्णरोम्णां सन्धि मर्यादामालभत ऋक्सामयोरिति । ततो दक्षिणेन जानुना कृष्णाजिने आरो-हति शर्माऽसीति । तेनैव जानुना कृष्णाजिनस्यापरभागे उपविशति न मध्ये।

ततो यजमानो वेण्याकारां त्रिवृद्ग्रन्थितां शाणमयीं मुञ्जेनाल्पेन

ऊर्गसीति ॥२२॥ नीविं कुरुते सोमस्य नीविरिति ॥२३॥ शिरः प्रोर्णुते विष्णोः शर्म्मेति॥२४॥ कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीते ॥२५॥ तया कण्डूयनम् ॥२६॥ उपस्पृशत्येनया दक्षिणस्या भ्रुव उपरीन्द्रस्य योनिरिति ॥२७॥ भूमौ चोल्लिखति सुसस्या इति ॥२८॥३॥

मुखसम्मितमौदुम्बरं दण्डं प्रयच्छति ॥१॥ उच्छ्रयस्वेत्येनमुच्छ्रयति ॥२॥ तं दक्षिणत उपधत्ते ॥३॥ अत्र वा मुष्टिकरणवाग्यमने ॥४॥ एवं प्रतिप्रस्थाता पत्नीं तूष्णीं

---

मिश्रितां मेखलां परिहितवस्त्रमध्ये कटौ बध्नाति ऊर्गसीति मन्त्रेण । ततः सोमस्य नीविरसीति नीविं कुरुते । ततो विष्णोः शर्म्मेत्युत्तरीयेण शिरः प्रोर्णुते। "उष्णीषेण प्रदक्षिणं शिरो वेष्टयत इति वाजसनेयकमि"त्यापस्तम्बः ।

"उत्तरान्तेन प्रोर्णुत" इति मनुः । अत उष्णीषेण प्रदक्षिणं शिरो वेष्टनीयम् ।

ततो यजमान उत्तरीयदशायां ग्रन्थित्रययुक्तां पञ्चग्रन्थियुक्तां वा प्रादेशमात्रीं कृष्णविषाणामुत्तानां बध्नाति । यदा च शरीरे कण्डूरुत्पद्यते तदा तया कण्डूयनं कार्यं न नखैः काष्ठादिभिर्वा ।

ततो यजमानो दक्षिणस्या भ्रुव उपरि सन्निकृष्टं कृष्णविषाणया स्वं ललाटमुपस्पृशति इन्द्रस्य योनिरिति । कृष्णविषाणया भूमौ प्राक्संस्थामेव रेखां करोति सुसस्या इति । "बहिर्वेदि प्राचीमुद्धन्तो"ति मनुः ।

इति सप्तमस्य तृतीया कण्डिका ॥ ३ ॥

---

ततोऽध्वर्युर्यजमानमुखमात्रमौदुम्बरं दण्डं तिर्यञ्चं यजमानाय समर्पयति । ततो यजमान उच्छ्रयस्वेति दण्डमूर्द्ध्वं करोति । ततस्तं दक्षिणस्कन्धे अवष्टभ्नाति । यदा अर्थान्तरवशेन तस्य निधानं क्रियते तदा दक्षिणपार्श्वं कर्त्तव्यं नान्यत्र । अस्मिन् काले वा स्वाहा यज्ञमिति मुष्टिकरणं वाग्यमनं च कर्तव्यं न पूर्वोक्तकाले ।

प्रतिप्रस्थाता यजमानदीक्षासमकालमेव पत्नीं मन्त्रवर्जं दीक्षयति । तत्र यदि पत्न्याः कृष्णाजिनस्तरणादि क्रियते तदा दण्डप्रदानान्तं कर्तव्यम् । अथ यदि मेखलाबन्धनाद्येव क्रियते तदोल्लेखनपर्यन्तं कारयति । कृष्णविषाणास्थाने कण्डूयनार्थं पत्न्या वस्त्रदशायां पृथमुखो यज्ञिय-

युगपन्मेखलादि ॥५॥ योक्त्रेण वा ॥६॥ जालं वा शिरसि त्रिपर्यायम् ॥७॥ पृथुमुखो यज्ञियवृक्षशङ्कुः कण्डूयने । ओल्लेखनात्करोति मेखलादि चेत् ॥८॥ कृष्णाजिनादि चेद्दण्डान्तम् ॥९॥ अन्यो दीक्षितोऽयं ब्राह्मण इत्याह त्रिरुच्चैः ॥१०॥ ब्राह्मण इत्येव वैश्यराजन्ययोरपि श्रुतेः ॥११॥ आऽस्तमयाद्वाचं यच्छति ॥१२॥ अस्तमिते दीक्षित वाचं विसृजस्व पत्नि वाचं विसृजस्वेति त्रिराह ॥१३॥ अग्निमभ्यावृत्य व्रतं कृणुतेति वाग्विसर्जनं त्रिरुक्त्वाऽग्निर्ब्रह्मेति च भकृत् ॥१४॥ भूर्भुवः स्वरिति वा ॥ १५ ॥ अत ऊर्ध्वमामुष्टिविसर्गादनस्तमितेऽनुदिते च त्रिराह दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति ॥१६॥ यथोक्तं विसर्जनम् ॥१७॥ व्रतदुघे दोहयति ॥१८॥ तत्-

---

वृक्षस्यौदुम्बरपलाशादेः प्रादेशमात्रः शङ्कुर्बन्धनीयः, उल्लेखनं कण्डूयनं च तेनैव कर्तव्यम् । उष्णीषस्थाने त्रिपर्यायं जालं वा भवति मेखलास्थाने योक्त्रं वा ।

तच्च वासस उपरि दर्शपूर्णमासवद् बन्धनीयम् । तथा चापस्तम्बः "अत्र दर्शपूर्णमासवत्पत्नीं सन्नह्यती"ति ।

ततः प्रतिप्रस्थाता शालायाः पूर्वप्रदेशेऽवस्थितो दीक्षितोऽयं ब्राह्मण इति त्रिरुच्चैर्ब्रवीति । क्षत्रियवैश्ययोरपि दीक्षितोऽयं ब्राह्मण इत्येव प्रैषो न तु दीक्षितोऽयं क्षत्रियो वैश्य इति च । अत्र मानव विशेषः—

"अग्रेण प्राग्वंशं दीक्षितमन्वारब्धमावेदयती"ति । अस्तमयपर्यन्तं दीक्षितो वाग्यत एव शालायामेवास्ते । असोमाधानिनो दीक्षितोऽयमित्येतस्मात्प्रागस्तमयेऽग्निहोत्रकाले आगते सायंप्रातर्होमस्तन्त्रेण कर्तव्यः । सायंहोममात्रं कुर्यात् न प्रातर्होममिति याज्ञिकाः । इष्टेरनन्तरमेव होमादिनिषेध इति मीमांसकाः ।

ततोऽस्तमिते सूर्ये अध्वर्युर्दीक्षित वाचं विसृजस्वेति त्रिरुक्त्वा ततः पत्नि वाचं विसृजस्वेति ब्रूयात् ।

ततो यजमानः कृष्णाजिनोपविष्टः पूर्वाभिमुखः सन्नग्निमभ्यावृत्योत्तराभिमुखो भूत्वा व्रतं कृणुतेति व्रतकरणप्रैषं त्रिरुक्त्वा अग्निर्ब्रह्मेत्यनेन

क्षीरव्रती भवतः ॥१९॥ प्रथमे व्रते व्रीहियवयोरन्यतरमावपत्युभावेके ॥२०॥ तदुव्रतमदोहे ॥२१॥ सर्वौषधं सर्वसुरभि चैके ॥२२॥ गार्हपत्ये दीक्षितस्य श्रपणं दक्षिणाग्नौ पत्न्याः ॥२३॥ यवागू राजन्यस्यामिक्षा वैश्यस्य ॥२४॥ व्रतं प्रयच्छत्यनुत्सिक्तमपररात्रे सायं दोहमपराह्णे प्रातर्दोहम् ॥२५॥ दैवीं धियमिति व्रतायोपस्पर्शनꣳ स्वासने ॥२६॥ ये देवा इति व्रतयत्यमृन्मये ॥२७॥ पत्नी लौहे ॥२८॥ इवात्राः पीता इति नाभिमालभते ॥२९॥ मेक्ष्यन्कृष्णविषाणया लोष्टं किञ्चिद्वाऽऽदत्त इयं त इति ॥३०॥ अपो मुञ्चामीति मेहति ॥३१॥ पृथिव्या सम्भवेत्यात्तं निदधाति ॥३२॥ अग्ने त्वमित्युक्त्वा स्वपित्यधः प्राङ् दक्षिणतः ॥३३॥ अग्निमभ्यावृत्तं विबुद्धम-

सकृत्पठितेन वाग्विसर्गं कुर्यात् । अथवा भूर्भुवः स्वरित्यनेन वाग्विसर्गं करोति नाग्निर्ब्रह्मेत्यनेन ।

ततोऽध्वर्युर्व्रतदुघे गावौ दोहयति व्रतदुघे धुक्ष्वेति प्रैषेण । तयोर्व्रतदुघयोर्दुग्धेन पत्नीयजमानौ व्रतं कुरुतः । प्रथमव्रतमध्ये व्रीहियवयोरुभयोरन्यतरस्यौदनापूपादिना व्रतं कुर्यात् । एके सर्वधान्यस्य ग्राम्यारण्यस्य कोद्रवादिव्यतिरिक्तस्य भक्षणार्हतामापादितस्य प्रथमे व्रते प्रक्षेपं कुर्वन्ति । व्रतदुघयोः पृथक्पृथग्दोहनं कृत्वा दीक्षितव्रतस्य गार्हपत्ये श्रपणं कर्तव्यं दक्षिणाग्नौ पत्नीव्रतस्य, व्रतस्थाल्योर्नामादिचिह्नमविपर्यासार्थं कार्यम् । दीक्षामध्ये चतुस्तनं दोहनम् । व्रतदुग्धयोरपि विपर्यासो न कार्यः ।

आपस्तम्बः—"यदि व्रतधुगल्पं दुहीताथाभ्यां दुह्याद्यद्यन्या न स्यादद्भिः संसृज्य श्रपयेद्यदि पयो न स्यादप्स्वेव यवागूं श्रपयेद्यदि पयो न स्यादप्स्वेव यवागूं श्रपयित्वा व्रतयेदप्यन्ततः पिप्पलानि, न त्वेव न व्रतयेदग्निहोत्रस्याविच्छेदाय यदि दधीयादेतदेवास्मै दधि कुर्युर्यद्युन्नीयाद्धाना अस्मा अन्वावपेयुः सक्तूनस्मा अन्वावपेयुर्घृतमस्मा अन्वावपेयुरग्निहोत्रहविषामेवैकं व्रतयेन्मांसवर्जं सोऽयं दैक्षो वादो भवति" । क्षत्रियस्य यवागूर्व्रतं भवति सा च लौकिकाग्निश्रृता सिद्धैव ग्राह्या, वैश्यस्य पयसा व्रतं भवति तदपि लौकिकाग्निसिद्धमेव ग्राह्यम् ।

स्वप्स्यन्तम् ॥ ३४ ॥ ४ ॥

पुनर्मन इति वाचयति ॥१॥ त्वमग्न इत्याह कृत्वा ऽव्रत्यं वा व्याहृत्य ॥२॥ लब्धमालम्भ्य वाचयति रास्वे-

ततो यजमानो रात्रौ अग्ने त्वं० सुजागृहीति मन्त्रं पठित्वा आहवनीयस्य दक्षिणतो भूमौ वस्त्रादिकमास्तीर्य प्राक्शिराः शयीत नोत्तानो नाधोमुखो नाग्नेरपर्यावर्त्तेतेति । मनुः—"दक्षिणत आहवनीयस्योदङ्मुखोऽपर्यावर्त्तमानः प्राक्शिराः शयीते"ति । पत्र गार्हपत्यदक्षिणतः पत्नी शेते । रात्रौ शिक्ये पलाशदर्भाद्यास्तृते पीठकादौ व्रतार्थदुग्धयोः स्थापनमपिधानं च कृत्वा यत्नेन रक्षणं कार्यम् ।

ततोऽपररात्रे यजमान उत्थाय गण्डूषाचमनादिकं करोति । पत्नी च । न दन्तधावनसन्ध्यादिकम् । ततोऽध्वर्युर्मृन्मये कांस्यपात्रे चमसादौ यजमानदुग्धमासिच्य यजमानसञ्चरेणैव यजमानाय समर्पयति । "दीक्षितसञ्चरेण निर्हृत्य कांस्ये चमसे वा व्रतं प्रयच्छती"ति मनुः ।

ततो यजमानः कृष्णाजिन एवोपविष्टो दैवीं धियमिति हस्तौ प्रक्षालयति व्रतकरणार्थम् । आचामतीति केचित् । ततो ये देवा इति तत्पयः पिबति । तत आचम्य स्वात्राः पीता इति नाभिमालते । प्रतिप्रस्थाता ताम्रपात्रे पत्न्याः स्वस्थानोपविष्टाया व्रतं ददाति । हस्तप्रक्षालनं वा आचमनं वा । पयोभक्षणं नाभ्यालम्भनं च तूष्णीं करोति ।

आपस्तम्बः—"दक्षिणेनाहवनीयं परिश्रिते व्रतयति नैनमदीक्षिता व्रतयन्तं पश्यन्ती"ति । यदि यजमानो मूत्रं पुरीषं वा करिष्यन् भवति तदा दण्डकृष्णाजिने निधाय यस्मिन्प्रदेशे मूत्रं पुरीषं वा करिष्यन्भवति तस्माद् भूमिप्रदेशात् कृष्णविषाणया करणभूतया लोष्टमन्यद्वाऽश्मकाष्ठादिकमियं ते यज्ञिया तनूरित्यादत्ते । ततोऽपो मुञ्चामीति मन्त्रेण मूत्रं पुरीषं वा करोति मन्त्रान्ते । ततः स्मृतिशुद्धो भूत्वा आचम्य पृथिव्या संभवेति मन्त्रेण गृहीतं लोष्टादिकं तत्रैव प्रतिक्षिपति । व्रतकरणानन्तरमपि स्वापेच्छायां तूष्णीमेव स्वपिति ।

इति सप्तमस्य चतुर्थी कण्डिका ॥ ४ ॥

---

ततोऽरुणोदयवेलायां प्रबुद्धं यजमानं पुनरस्वप्स्यन्तमग्निसम्मुखमध्वर्युः पुनर्मन इति मन्त्रं वाचयति । ततोऽनुदिते दीक्षित वाचं यच्छेति 'त्रिरुक्त्वा पत्नि वाचं यच्छेति' त्रिरध्वर्युराह ।

तत उभयोः सूर्योदयं यावद्वाग्यमनम् । उदिते दीक्षित वाचं विसृज-

**यदिति ॥३॥ अशक्येऽभिमन्त्रणम् ॥४॥ शूद्रसम्प्रवेशभाषाप्रत्युत्थानाभिवादनोदकावायवर्षाणि वर्जयेत्प्रागवभृथात् ॥५॥ परिह्वालं वदति ॥६॥ विचक्षण-**

स्वेति त्रिरुक्त्वा पत्नि वाचं विसृजस्वेति त्रिराह। ततो यजमानोऽग्निमभ्यावृत्य व्रतं कृणुतेति त्रिवारं व्रतकरणप्रैषं दत्वाऽग्निर्ब्रह्मेति सकृत्पठितेन वाग्विसर्गं करोति।

तत एकदीक्षापक्षे प्रातः प्रथमोपसदि त्रिस्तनं व्रतदुग्धे धुक्ष्वेति प्रैषः, एकस्तनमिति वा। तथैव दुग्ध्वा पूर्ववच्छ्रयणं स्थापनं च। दीक्षाणां च विकल्पा बहवः। एका दीक्षा तिस्रो वा द्वादश वा अपरिमिता वेति। तत्र यावन्ति दीक्षाहानि तेषु चतुःस्तनमेव व्रतमुपसदि प्रथमायां, त्रिस्तन स्तनं वा द्वितीयायां, द्विःस्तनं तृतीयायामेकस्तनं त्रिस्तनं वेति।

यदि यजमानः कस्मैचित् कुप्यति अवत्यं वा शूद्रसम्भाषणानृत प्राकृतादि भाषणं कुरुते तदा प्रायश्चित्तार्थं त्वमग्ने व्रतपा असीति मन्त्रं पठेत्। अत्र शाखान्तरे च द्वादशाहं दीक्षितो भृतिं चिन्वीतेति दीक्षितस्य भृतियाचनं विहितमस्ति। यदि यजमानाय कश्चिद्धिरण्य गोवस्त्रादि ददाति तदा तदालभ्य गामालभस्व हिरण्यमालभस्व वस्त्रमालभस्वेति प्रैषेण तस्यालम्भं कारयित्वा रास्वेयदित्यमुं मन्त्रं यजमानं वाचयत्यध्वर्युः। यदि देशकालादिविप्रकर्षेण दीयमानस्य ग्रामान्तरस्थितत्वेन भूमिगवादेरालम्भः कर्तुं न शक्यते तदा रास्वेयदित्यनेन तद्देशस्थस्यैव तस्याभिमन्त्रणं यजमानः करोति।

अथ दीक्षितस्यावभृथपर्यन्तं नियमा उच्यन्ते–दीक्षितः शूद्रेषु न प्रविशेत्, शूद्रैः सह सम्भाषणं न कुर्यात्, अथवा शालामध्ये शूद्रस्य प्रवेशो वारणीयः। यदि शूद्रेण सम्भाषणेनावश्यं कार्यं भवति तदा त्रैवर्णिकमन्तरा कृत्वा तेन कारयितव्यं न तु साक्षात्। प्रत्युत्थानार्हस्यापि वृद्धगुर्वादेः प्रत्युत्थानं न कार्यम्, अभिवादनं च। उदकमध्ये प्रवेशनं न कार्यम्। वृष्ट्युदकधारासंयोगो वर्ज्यः, कोमलं वदेत् न परुषम्। संस्कृतां वाचं वदेत्। अन्नदानपरां सत्यां वाचं वदेत्।

मनुः—"न प्रत्यक्षनाम्नाऽऽचक्षीत चनसितेत्यर्हतासम्भाषमाणा ब्रूयाद्विचक्षणेतीतरैरि"ति, तथा लोम्नः कृष्णाजिनस्य शयनमासनमाच्छादने चे"ति, तथा "प्रतिषिद्धं निष्ठीवनं हसनमववर्षणं दन्तावित्प्रावरणममेध्यदर्शनमपाङ्गाहनं हामानृतं चेति नक्तं मूत्रपुरीषे कुर्याद्यदि दिवा छायायां यदि हसेदपिधाय मुखमि"ति।

**चनासितवर्ती वाचम् ॥७॥ शालासनास्वप्नौ सन्धिवेलयोः॥८॥ वेद्यां सुत्यासु॥९॥ अप्रायश्चित्तमपराधे॥१०॥**

---

आश्वलायनः—( १२।८ )

"अथ सत्रिधर्मा दीक्षणादि पित्र्याणां दैवानां च धर्माणां प्राकृतानां निवृत्तिः सर्वशश्च वर्जयेयुर्ग्राम्यचर्याः सरणं विवृतस्मयनं स्त्र्यभिहास मनार्याभिभाषणमनृतं क्रोधमपाम्प्रगाहणमभिवर्षणमारोहणं च वृक्षस्य नावो वा रथस्य वा दीक्षिताभिवादनं दीक्षितस्यौपसदमुभौ सुन्वन्तौ समसिद्धान्ताः पूर्वारम्भिणमभितप्ततरं वा सर्वसाम्ये यथा वान्तौ येनृगीतवादित्रानन्यांश्चाव्रत्योपचारान्न चैनान्यहिर्वेदि सतोऽभ्याश्रावयेयुरि"ति । सायङ्काले शालायामेवोपवेशनं कर्तव्यं न त्वितस्ततो गमनम् । प्रातः सन्ध्याकाले च स्वापो न कार्यः । उत्थायोपवेष्टव्यम् । अस्यासनास्वप्नस्यापराधे यद्यपि प्रायश्चित्तं किमपि नास्ति तथाप्ययं नियमोऽवश्यं पालनीयः । अथवाऽस्य नियमस्यातिक्रमे अनेकयजमानके परस्परमुपह्वप्रार्थनं कार्यं दीक्षिता उपह्वयध्वमित्येवम् ।

अग्निष्टोमादावेकयजमानके एवंनियमातिक्रमे पत्न्या उपह्वप्रार्थनं प्रायश्चित्तं पत्न्युपह्वयस्वेति। सा चोपहूत इति प्रसौति । तथा दन्तधावन नित्यस्नानाग्निहोत्रावसथ्यहोमवैश्वदेवतर्पणसन्ध्योपासन यजनदानादिकं किमपि न करोति । तत्र दीक्षामध्ये एवंनियम युक्त आस्ते ।

तत्राग्निष्टोमे बहवो दीक्षापक्षाः तद्यथा एका दीक्षा तिस्रो दीक्षा चतस्रो द्वादश वा अपरिमिता वेति ।

अत्र कठसूत्रम्—"पुण्याहे दीक्षा पर्वणि सुत्या अमावास्यायां वा संस्थिते दीक्षा पुण्याहे सुत्ये"ति ।

मानवे च—"अमावास्यायां दीक्षते यथा वा पर्वणि सुत्या स्यादि"ति ।

लाट्यायनः—"उदगयने पूर्णपक्षे पुण्याहसन्निपाते यज्ञकालाऽनादेशे प्रथमायां पूर्वं पक्षस्य दीक्षेत दृष्ट्वा वा नक्षत्रयोगं तेषामेका दीक्षाऽनादेशे तिस्रश्चतस्रो ऽपरिमिता वा तिस्र उपसद" इति।

आपस्तम्बः—"एका दीक्षा तिस्र उपसदः पञ्चमीं प्रसुतस्तिस्रो वा दीक्षास्तिस्र उपसदः सप्तमीं प्रसूतश्चतस्रो वा दीक्षास्तिस्र उपसदोऽष्टमीं प्रसूतोऽमावास्यां दीक्षा यजनीये वा पौर्णमास्यां यजनीये वा सुत्यमहरेनं वा विपरीतमि"ति ।

अतो दीक्षासु यूपच्छेदनं दीक्षासु महावीरसम्भरणं दीक्षासु वनीवाहनमित्येवमादि यद्दीक्षामध्ये विहितं कर्म तदेकदीक्षापक्षे प्रथमदिन एव

इतरेतरस्मिन्वोपहवमिच्छेरन् ॥ ११ ॥ पत्न्यामेकदीक्षी ॥१२॥ दीक्षान्ते प्रायणीयमदित्यै चरुं निर्वपति ॥ १३ ॥ आज्यभागाविष्ट्वाऽऽज्येन देवताश्चतस्रो यजति पथ्याᳫं स्वस्तिमग्निᳫं सोमᳫं सवितारं च ॥१४॥ चरुमेक्षणबर्हिर्निदधात्युदयनीयायै ॥१५॥ सलेपं चरुं प्रमृष्टं मेक्षणम् ॥१६॥ प्रक्षालयति वा चरुम् ॥१७॥ अनुप्रहरतीतरे॥१८॥ त एवर्त्विजः ॥ १९ ॥ विप्रेतेष्वन्येऽपि ॥ २० ॥ शंय्वन्तं भवति ॥२१॥ अन्तवचने पूर्वं प्राप्तेः ॥२२॥ अविशेषश्रु-

भवति वाग्विसर्गानन्तरमादित्योदयात्प्राक् यस्मिन्कस्मिन्नहनि कर्तव्यम् । अत एकदीक्षा पक्षे दीक्षितोऽयमिति प्रैषसमनन्तरं महावीरसम्भरणं च कार्यं नो चेद्वाग्विसर्गानन्तरं रात्रावपि कार्यम् ।

तत्र यूपच्छेदने विशेषः—आज्यशेषमादाय यूपं प्रति गमनम् । खादिरो यूपः पञ्चारत्निप्रभृति पञ्चदशारत्निपर्यन्तो दशसप्तचतुर्दशारत्निवर्जितः समः न निरूढवन्मध्याग्रोपनतः । अभिमन्त्रणादि स्वरुनिष्पत्त्यन्तं कर्तव्यम् ।

अथवा इदानीमेवाज्यं गार्हपत्ये संस्कृत्याज्यमरणी चादाय यूपसमीपे गत्वा यूपसमीपेऽग्निं मथित्वा तत्र यूपाहुतिं हुत्वा यूपाभिमन्त्रणादि स्वरुनिष्पत्त्यन्तं कुर्यात् । होमान्ते स मथितोऽग्निर्लौकिको भवति । प्रथमयज्ञेऽपि श्रोत्रियस्य विकल्पेन प्रवर्ग्यो भवति तेनात्रैव महावीरसम्भरणम् प्युच्यते ।

दीक्षितस्तु महावीरे पिन्वनरौहिणकपालानां निष्पादनं करोति । तत्र ब्रह्मयजमानौ दक्षिणत उपविशतः ।

ततोऽन्तःपात्ये वक्ष्यमाणान् सम्भारान् प्राक्संस्थानुदक्संस्थान्वा निदधाति । मृदं मृत्पिण्डं वल्मीकवपां वराहविहतं शूकरोत्खातमृत्तिकां, पूतीकान् रोहितपुष्पाणि अजादुग्धं गवेधुकान् एतानि प्राक्संस्थान्युदक्संस्थानि वा स्थापयित्वा एतेषामुत्तरतः कृष्णाजिनं प्राग्ग्रीवमुत्तरलोम निदधाति औदुम्बरीं वैकङ्कतीं वा अरत्निमात्रीमभ्रिमुत्तरे निदधाति।

ततोऽध्वर्युर्देवस्य त्वेत्यभ्रिमादाय सव्ये पाणौ निधाय दक्षिणेन हस्तेन तामभ्रिमालभ्य युञ्जते मन इति संहितास्वरेण जपति । ततो देवी द्यावापृथिवी इति मन्त्रेण मृत्पिण्डं परिगृह्णाति । तत्र दक्षिणहस्तेनाभ्रिसहितेन दक्षिणपार्श्वं पिण्डं परिगृह्णाति । उत्तरपार्श्वं केवलेन सव्यह-

स्तेनैव। एवमुभाभ्यां हस्ताभ्यां मन्त्रेण पिण्डं परिगृह्योत्तरतः पूर्वमेव स्थापिते कृष्णाजिने तं पिण्डं निदधाति।

ततोऽनेनैव प्रकारेणोभाभ्यां हस्ताभ्यां देव्यो वम्र्य इति वल्मीकवपामादाय कृष्णाजिने निदधाति। तत एवमेव इयत्यग्र इति वराहविहितमादाय तत्रैव निदधाति। एवमेवेन्द्रस्यौज स्थेति पूतीकानादाय तत्रैव निदधाति। एवमेव मखायेति पयःस्थालीमग्निसहितामेवादाय तत्रैव निदधाति। ततस्तूष्णीं गवेधुका एकेनैव हस्तेनादाय कृष्णाजिने निदधाति।

ततः कृष्णाजिने सम्भृतान् सर्वान्मृत्पिण्डादिसम्भारान् मखायेति सकृदेव सर्वानभिमृशति। ततोऽध्वर्युस्तस्मात् प्रदेशादुत्तरस्यां दिशि चतुरस्रमर्थात्परिमाणं प्राग्द्वारं परिवृतं कृत्वा तन्मध्ये सप्त संस्कारान् कृत्वा सिकता उपकिरति।

अथवा अत्र करणोपदेशाभावादप्रयुद्धीक्षार्थंनिष्पादिते एव संस्कारान्सिकतोपकिरणं च करोति।

तत आगत्याध्वर्युप्रतिप्रस्थातृनेष्टुन्नेतारः कृष्णाजिनं परिगृह्य ब्रह्मयजमानाऽध्वर्यवः प्रैतु ब्रह्मणस्पतिरिति जपन्तः परिवृतं प्रति गच्छन्ति। ततः कृष्णाजिनं स्थाने च निदधाति।

ततोऽजाक्षीरं गवेधुकाश्चान्यत्र निधाय वल्मीकवपावराहविहृत पूतीकैः सह मृत्पिण्डं संसृजति मखायेति प्रैत्विति कण्डिकापठितेन द्वितीयेन।

ततो मृत्पिण्डेन सह सम्भारान् संसृज्य तस्मान्मृत्पिण्डात् महावीरकरणार्थं तूष्णीं मृदमादाय प्रैतुसम्बन्धिना तृतीयेन मखायेत्यनेन महावीरं करोति। कीदृशं प्रादेशमात्रमूर्ध्वमासेचनवन्तम् गर्तवन्तम् मेखलावन्तं मध्यसंगृहीतं, मेखलाया ऊर्ध्वमपि त्र्यङ्गुलम्।

एवंविधं निष्पाद्य मखस्य शिरोऽसीत्यनेन महावीरकरणार्थं मृदादानं कुर्वन्ति उखाकरणे यथा। तदा तूष्णीं निष्ठिताभिमर्शनम्। अनेनैव प्रकारेणापरौ द्वौ महावीरौ करोति। तृतीयस्याभिमर्शने मखस्य शिरोऽसि मखाय त्वा मखस्य त्वा शीर्ष्णे इत्येतावत्पर्यन्तं मन्त्र इति विशेषः।

ततः स्रुक्पुष्कराकारे द्वे पिन्वने करोति तूष्णीम्। ततो वर्तुले द्वे रौहिणकपाले पाणितलमात्रे तूष्णीं करोति। ततोऽवशिष्टां मृदमुपशयासंज्ञां कञ्चन सगुप्ते प्रदेशे स्थापयति। ततो महावीरान् गवेधुकाभिः श्लक्ष्णयति घर्षणेन सुकुमारान् करोति मखायेति त्रिभिर्मन्त्रैः प्रतिमन्त्रम्। एते त्रयोऽपि मखस्येत्यस्यान्ते पठिताः। ततस्तूष्णीं पिन्वने रौहिणकपाले

च गवेधुकाभिः श्लक्ष्णयति ।

ततो दक्षिणाग्नेरग्निमानीय तत्राश्वशकृत्प्रक्षेपं कृत्वा तदुत्पन्नेन धूमेन महावीरान् क्रमेणोपरि धूपयति अश्वस्येति त्रिभिः प्रतिमन्त्रम् । अथवा धूमायमानं सकृदेव हस्ते गृहीत्वा भूमिस्थानेव महावीरान्सर्वतः परिवर्तनेन धूपयति । ततस्तूष्णीं पिन्वने रौहिणकपाले च धूपयति ।

ततः कृष्णाजिनमपसार्य चतुरस्रं श्वभ्रं खात्वा तत्र दर्भादिकं अपणमास्तीर्य निष्पादनक्रमेण महावीरानधोमुखानवदधाति मखाय त्वेति त्रिभिरश्वस्य त्वेति तस्यान्ते पठितैः । ततस्तूष्णीं पिन्वने रौहिणकपाले चाव दधाति । ततः अपणेनावच्छाद्य पूर्वाह्णेनैव दक्षिणाग्न्यग्निना दीपयति ।

अथवा महावीराणामादीपने मखायेति त्रयो मन्त्राः, सूत्रे प्रदहने विधानात्, श्रुतौ ( श० १४।१।२।२१ ) चाऽवधाने विहिता इति पूर्वं तत्र प्रदर्शिताः ।

अथवा तत्कालमेवाग्निं मथित्वा तत्कालमथितेनाग्निना महावीरादीनां धूपनं अपणाअपणमपसार्योत्सादनानि कृत्वा ऋजवे त्वेति प्रतिमन्त्रं महावीरानुद्धरति । तूष्णीं पिन्वने रौहिणकपाले चोद्धरति । एतेषां प्रदहनोद्धरणे दिवैव कर्तव्ये न रात्रौ ।

ततो महावीरान्मखायेति प्रतिमन्त्रमजादुग्धेनावसिञ्चति । एते मन्त्रा ऋजवे त्वेत्यत्र कण्डिकायां पठिताः । ततस्तूष्णीं पिन्वने रौहिणकपाले चाजादुग्धेनावसिञ्चति । ततो महावीरादीनामसञ्चरे निधानं महता प्रयत्नेन रक्षणं च कार्यम्, भेदे प्रायश्चित्तस्य बहुत्वात् ।

इति षड्विंशाध्याये प्रथमा कण्डिका ॥ १ ॥

इति महावीरसम्भरणम् ।

---

अथ प्रायणीयेष्टिः ।

तत्राग्न्यन्वाधानब्रह्मवरणव्रतग्रहणदक्षिणादानव्रतविसर्गाणामभावः । चतुरासनम्, ब्रह्मोपवेशनम्, प्रणीताप्रणयनम्, आहवनीयस्यैव परिस्तरणम् । पात्रासादने दशगणः । कपालस्थाने चरुस्थाली । अर्थवन्ति । उपवेषान्तर्द्धानकटपूर्णपात्रकर्मापवर्गाणामभावः । शेषं प्रकृतिवदासाद्यते। अष्टादशकाष्ठ इध्मः, शृतावदानस्थाने मेक्षणम् । स्फ्योपहितपात्रीकरणादि । ग्रहणे अदित्यै जुष्टम् । प्रोक्षणे अदित्यै त्वा जुष्टम्, प्राणदाने अदिति गच्छ । चरुधर्मा अन्वारम्भणीयेष्ट्यायुक्ताः । पञ्चदशेन वज्रणेत्यवबाधने । उत्तमप्रयाजे —इदमग्नये सोमाय पथ्यायै स्वस्तये सोमाय सवित्रेऽदित्यै देवेभ्य इत्यादि ।

तेः ॥२३॥ उत्तरं वा प्रकृत्यनुग्रहानुयाजप्रतिषेधाभ्याम् ॥२४॥ ग्रहणाद्‌प्रवृत्तिः ॥२५॥ मन्त्वराश्रुतेश्च ॥२६॥ नित्यानुवादोऽनुयाजप्रतिषेधः ॥ २७ ॥५॥

उपरवदेशे प्रतिप्रस्थाता रोहिते चर्मण्यानडुहे सो-

---

तत आज्यभागौ । तत उपांशुयाजवदाज्येन चत्वारो यागा ध्रुवाया आज्यं चतुरवत्तमवदायावदाय कर्त्तव्याः । अग्नीषोमीयात्प्रागुपांशु चरणपक्षे सर्वमुपांशु भवति । मन्द्रं प्रायणीयायामित्येतस्मिन्पक्षे प्रधानयागदेवतापदमात्रमुपांशु, अन्यत्सर्वं मन्द्रस्वरेण ।

पथ्यायै स्वस्तयेऽनुब्रूहि, पथ्यां स्वस्ति यज । इदं पथ्यायै स्वस्तये । अग्रे होमः । अग्नयेऽनुब्रूहि अग्निं यज, इदमग्नये पूर्वार्द्धे होमः । सोमायाऽनुब्रूहि सोमं यज, इदं सोमाय दक्षिणस्यां होमः । सवित्रेऽनुब्रूहि सवितारं यज इदं सवित्रे प्रतीच्यां होमः । ततश्चरुणाऽदितियागः । मन्द्रं प्रायणीयायामितिपक्षे केवलमदितिपदमुपांशु, अस्यैव यागस्य प्रायणीयाशब्दवाच्यत्वेनात्र प्रधानत्वात् । पथ्यास्वस्त्यादिपदं तु मन्त्रस्वरेणैव प्रयोज्यम् , आज्यभागवदङ्गयागत्वात् , अङ्गत्वेऽप्युपांशुयाजविकारत्वात् । व्यूहने कीर्तनं भवत्येव । अदित्या अनुब्रूहि अदितिं यज इदमदित्यै मध्ये होमः । ततः स्विष्टकृदादि प्राशित्रादि सर्वम् ।

व्यूहने पथ्यायाः स्वस्तेरग्नेः सोमस्य सवितुरदित्या उज्जितिम् । पथ्या स्वस्तिरग्निः सोमः सविताऽदितिस्तमपनुदन्त्विति । प्रस्तरहोमे इदमग्नये सोमाय पथ्यायै स्वस्तयेऽग्नये सोमाय सवित्रेऽदित्यै देवेभ्य आज्यपेभ्योऽग्नये होत्रायेति । शंय्वन्तं कर्म भवति न ततः ऊर्द्धम् , अतः पत्नीसंयाजादिकर्मापवर्गान्तस्यार्थकर्ममात्रस्यात्राभावः । वेद्यालम्भस्त्वत्र भवति, शंयोर्वाकसहभावात "स यत्र शंयोराह तदभिमृशतीति" ।

ततो वेदयोक्त्रविमोकः । चरुस्थालीमेक्षणबर्हिषामुदयनीयार्थं निधानम् , तत्र चरुस्थाली लेपसहिता, मेक्षणं च प्रमृष्टम् । अथवा चरुस्थालीं प्रक्षाल्योदयनीयार्थं स्थापयति मेक्षणबर्हिषोस्त्वग्नावनुप्रहरणं करोति । तत्र स्वकाले बर्हिषो मेक्षणस्य कर्म समाप्स्यन्ते, आगन्तुकत्वात् ।

इति सप्तमस्य पञ्चमी कण्डिका ॥ ५ ॥

---

ततः प्रतिप्रस्थाता शालायाः सोममादायोपरवदेशे उपरवाणां स्थाने रक्ते आनडुहे चर्मणि प्राग्ग्रीवे उत्तरलोम्नि निर्वपति । सोमविक्रयी तं सोमं पर्वशोऽवखण्डयति । स तु कुत्सितकर्मकारी त्रैवर्णिकः कश्चित् शूद्रो

मं निवपति ॥१॥ विक्रय्येनं विचिनोति कौत्सः शूद्रो वा ॥२॥ ब्राह्मण उपास्ते ॥३॥ उदकुम्भश्च पुरस्तात् ॥४॥ शालाद्वाराण्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति ॥ ५ ॥ बर्हिस्तृणेन हिरण्यं बध्वाऽवदधात्येषा त इति ॥६॥ जूरसीति जुहोति ॥७॥ शुक्रमसीति हिरण्यमुद्धृत्य वेद्यां तृणं निदधाति ॥८॥ सूत्रबद्धं हिरण्यं कुरुते ॥९॥ चतुर्गृहीतं गृहीत्वाऽन्वारभस्व यजमानेत्याह ॥१०॥ अपावृतद्वारे निष्क्रामतः ॥११॥ दक्षिणेन द्वारं सोमक्रयणी तिष्ठत्यलक्षिताऽव्यङ्गाऽप्रवीताऽरज्जुबद्धा बभ्रूः पिङ्गला पिङ्गलाभावेऽरुणाऽरुणाभावे रोहिण्यश्येताक्षी ॥१२॥ चि-

वा । ब्रह्मणश्च प्रायणीये व्यासक्तत्वात् ब्रह्मपुरुषो ब्राह्मणाच्छंसी तत्र सन्निधौ दक्षिणत उपविशति । उपरवदेशस्य पुरस्तादक उदकुम्भश्च स्थाप्यते ।

ततोऽध्वर्युः शालाद्वाराण्यपिधाय ध्रौवमाज्यं चतुर्वारं जुह्वां निनयति । ततो वेदिस्तृतबर्हिषस्तृणेन हिरण्यं बध्वा जुह्वा घृतमध्य एषा त इत्यवदधाति । ततो जूरसीति मन्त्रेण तदाज्यमाहवनीये समित्पूर्वकं जुहोति इदं वाचे, इदं जुव इति वा ।

ततः शुक्रमसीत्यनेन जुह्वा हिरण्यमुद्धृत्य येन तृणेन हिरण्यं बद्धमासीत्तत्तृणं वेद्यां बर्हिर्मध्ये निदधाति । ततो हिरण्यं सूत्रे बध्नात्यध्वर्युः । सूत्रेण हिरण्यबन्धनानन्तरं प्रायणीयाशेषसमाप्तिः । बर्हिर्होमः पक्षे, पक्षेवेद्यामुद्धृत्यान्यत्र स्थापनं, प्रणीताविमोकः, राक्षसभागः, भागावेक्षणं, भागप्राशनं, बर्हिर्होमपक्षे मेक्षणस्याहवनीये प्रक्षेपः, चरुस्थाल्याः प्रक्षालनं, बर्हिस्थापनपक्षे मेक्षणस्य प्रमार्जनं कृत्वा स्थापनम् । चरुस्थाली च सलेपैव स्थापनीया । एतत्त्रयमुदयनीयेष्ट्यर्थं यत्नेन रक्षणीयम् ।

ततो गार्हपत्ये आज्यं संस्कृत्य पुनश्चतुर्गृहीतं गृहीत्वाऽन्वारभस्व यजमानेति यजमानं प्रत्याह । ततः शालाया द्वाराणामुद्घाटनम् । ततोऽध्वर्युयजमानौ शालायाः पूर्वद्वारेण निष्क्रामतः ।

द्वाराद्दक्षिणस्यां दिशि सोमक्रयणी एकवर्णा वत्सतरी तिष्ठति । कीदृशी अलक्षिता अनङ्किता, अव्यङ्गा अनङ्गहीना, अप्रवीता ऋषभेणाभुक्ता, अबद्धेवारज्जुबद्धा, बभ्रूः पिङ्गला बभ्रुवर्णा पिङ्गाक्षी, तस्या अभावे अरुणाऽव्यक्तरागा, तदभावे रोहिणी, अश्येताक्षी, शरीरेण रक्ता अरक्ताक्षी,

**दसीत्येनामभिमन्त्रयते ॥१३॥ उदीचीन्नीयमानामनुगच्छतो वस्व्यसीति ॥१४॥ षट् पदान्यतीत्य सप्तमं पर्युपविशन्ति ॥१५॥ हिरण्यमग्निर्नाभिघायाभिजुहोत्यदित्यास्त्वेति ॥१६॥ स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वेति ॥१७॥समुद्धृत्य पदꣳ स्थाल्यामावपत्यस्मे ते बन्धुरिति ॥१८॥ अपः स्थाने निषिच्य यजमानाय पदं प्रयच्छति "त्वे राय" इति॥१९॥ 'मे राय' इति यजमानः प्रतिगृह्णाति ॥२०॥ मा वयमित्यध्वर्युरात्मानं सꣳस्पृशति**

---

एवंविधां सोमक्रयणीमध्वर्युयजमानौ सन्निधावागच्छतः। तत्राऽध्वर्युस्तामभिमन्त्रयते चिदसीत्यादि पुनरेहीत्यन्तेन।

ततः प्रतिप्रस्थात्रादिना उदीचीं दिशं प्रति नीयमानां सोमक्रयणीमध्वर्युयजमानौ वस्व्यसीत्यनुगच्छतः। सोमक्रयण्या दक्षिणपूर्वपादस्यैकस्य षट् पदान्यतिक्रम्य सप्तमं पर्युपविशन्ति। "षट् पदान्यनुनिष्क्रामति दक्षिणपूर्वपादस्य"ति मानवे।

पर्युपवेशनं चैवं, दक्षिणतो ब्रह्मयजमानौ, पश्चादध्वर्युः, उत्तरतः प्रतिप्रस्थाता नेष्टा च, दक्षिणापरस्यां पत्नीति। ब्रह्मा च जूरसीत्यस्यां हिरण्यवत्यामाहुतायां सर्वेभ्यो दक्षिणत एव दक्षिणादिगाश्रित इत एवानुगच्छति क्रयं यावत्। अपूर्वेषु कर्मेषु क्रियमाणेषु वाग्यतश्च भवेत्। अत्र तूष्णीं ब्रह्मण आसनसंस्कारः।

ततोऽध्वर्युः सप्तमे सोमक्रयणीपदे हिरण्यं निधाय यत्सूत्रं बद्धं वर्तते तत् परिस्तीर्य शालायां यच्चतुर्गृहीतमाज्यं गृहीतं हस्तधृतं तज्जुहोति अदित्यास्त्वेति। इदमदित्यै। इदमाज्यायेति। वा। अदित्याज्यमित्युक्तत्वात्। अन्वारम्भश्च होमान्तः।

ततः स्फ्येन तत् पदं त्रिः परिलिखति तत्रास्मे रमस्वेति सकृन्मन्त्रेण द्विस्तूष्णीं, पूर्वपरिलिखितस्योपर्युपरि लिखति। ततो हिरण्यं हस्ते गृहीत्वा स्फ्येन पदमुल्लिख्य स्थाल्यामावपत्यस्मे ते बन्धुरिति। ततः पदस्थाने उदकं निनीयाध्वर्युर्यजमानाय पदं समर्पयति त्वे राय इति।

ततो यजमानो मे राय इति स्थालीस्थं पदं प्रतिगृह्णाति। ततोऽध्वर्युर्मा वयमित्यात्मानं हृदयप्रदेशं संस्पृशति। उदकोपस्पर्शनम्।

ततो यजमानसकाशात्पदं हृत्वाऽध्वर्युः पत्न्यै समर्पयति। ततो नेष्टा तोतो राय इति पत्नीं वाचयति। ततोऽध्वर्युः सोमक्रयण्या समीक्ष्यमाणां

॥२१॥ हृत्वा पत्न्यै पदं प्रयच्छति ॥२२॥ नेष्टा तीत इत्येनां वाचयति ॥२३॥ सोमक्रयण्या च समीक्ष्यमाणाᳬं समख्य इति ॥२४॥ प्रक्षाल्य पाणी हिरण्यं बध्नीते ऽनामिकायाम् ॥२५॥ आप्यायनाभिषवाᳬंश्वदाभ्येषु च २६॥

प्रेष्यति च सोमोपनहनमाहर सोमपर्याणहनमाहरोष्णीषमाहरेति ॥१॥ अत्र वा निवपनम् ॥२॥ शोभनᳬ सोमोपनहनम् ॥३॥ उष्णीषाभावे सोमपर्याणहनाद् द्व्यङ्गुलं त्र्यङ्गुलं वोष्णीषायावकृन्तति ॥४॥ अध्वर्युर्यजमानो वा सोमोपनहनᳬ हरत्यन्य इतरे ॥५॥ सोमं गच्छन्त्येष त इति वाचयति ॥ ६ ॥ प्राङुपविश्यास्माकोऽसीति सोममालभते ॥ ७ ॥ न विचिनोत्यतस्तृणकाष्ठापासनमेके॥ ८॥ सोमोपनहनं द्विगुणं चतुर्गुणं वा

पत्नीं वाचयति । तत्पदं कश्चित्स्रुगुप्ते यत्नेन स्थापयित्वा रक्षणीयं यथा न याति । ततोऽध्वर्युर्हस्तौ प्रक्षाल्यानामिकायां हिरण्यं बध्नीते ।

इति सप्तमस्य षष्ठी कण्डिका ॥ ६ ॥

---

ततो यजमानपुरुषं सोमोपनहनमाहर सोपर्याणहनमाहरोष्णीषमाहरेति प्रेष्यति । तत एवं प्रेषितो यजमानपुरुषो यदतिशयेन शोभनं वासो भवति तत्सोमोपनहनं सोमबन्धनार्थमाहरति, सोमपर्याणहनोष्णीषे च यथा सम्पन्ने आहरति ।

ततोऽध्वर्युर्यजमानो वा सोमोपनहनं क्रयदेशं प्रति हरति । अस्मिन्काले वोपरवदेशे सोमनिवपनादि पर्वशोऽवखण्डनान्तम् । प्रतिस्थाता च सोमपर्याणहनमुष्णीषं च क्रयदेशं प्रति हरति ।

ततो ब्रह्मयजमानाध्वर्युप्रतिप्रस्थात्रादयश्च सहैवोपरवदेशस्थं सोमं प्रति गच्छन्ति ।

ततो गमने प्रारब्ध एष ते गायत्रो भाग इति यजमानं वाचयति । ततः सोमसमीपे ब्रह्मयजमानौ दक्षिणत उपविशतः । अध्वर्युः प्राङ्मुख उपविश्यास्माकोऽसीति सोममालभते । यजमानस्यालम्भ इति हरिस्वामिनः ।

अत ऊर्ध्वं सोमविक्रयी सोमं न छिनत्ति । योऽवशिष्टस्तावांस्तद्रूप एवावतिष्ठते । एके सोममध्ये पतितानां निरसनं कुर्वन्ति नापरे ।

स्तृणाति प्राग्दशमुदग्वा ॥९॥ तस्मिन्त्सोमं मिमीते दशकृत्वोऽभित्यामिति ॥१०॥ सर्वाभिः प्रथमम् ॥११॥ अङ्गुष्ठप्रभृति चैकोत्सर्गम् ॥१२॥ द्विः कनिष्ठिकया ॥१३॥ एकोपचयं च ॥१४॥ अञ्जलिना दशमम् ॥१५॥ अन्यद्वाऽध्यावापश्रुतेः ॥१६॥ अन्तान्त्संगृह्योष्णीषेण बध्नाति प्रजाभ्यस्त्वेति ॥१७॥ अङ्गुल्या मध्ये विवृणोति प्रजास्त्वाऽनुप्राणन्त्विति ॥१८॥ तं विक्रयिणे प्रयच्छति ॥१९॥७॥

पञ्चकृत्वः सोमं पणते ॥१॥ स आह सोमविक्रयिन्क्रय्यस्ते सोमो राजा३ इति ॥२॥ क्रय्य इत्याह सोमविक्रयी ॥३॥ तं वै ते क्रीणानीति ॥४॥ क्रीणीहीत्याह सोमविक्रयी ॥५॥ कलया ते क्रीणानीति ॥६॥ भूयो वा

---

ततोऽध्वर्युः सोमोपनहनं द्विगुणं चतुर्गुणं वा चर्मण उपर्येव प्राग्दशमुदग्दशं वा स्तृणाति ।

ततः तस्मिन् सोमोपनहने अभि त्यमिति मन्त्रेण दशकृत्वः सोमं मिमीते । सर्वाभिः पञ्चभिरप्यङ्गुलिभिः प्रथमं मिमीते, ततोऽङ्गुष्ठमुत्सृज्य चतसृभिरङ्गुलिभिर्द्वितीयं मिमीते । ततस्तर्जनीमुत्सृज्य तिसृभिस्तृतीयवारं मिमीते । ततो मध्यमामुत्सृज्य द्वाभ्यामङ्गुलिभ्यां चतुर्थं मिमीते । ततोऽनामिकामुत्सृज्यैकया कनिष्ठिकया पञ्चमम् । ततः पुनरेकयैव कनिष्ठिकया षष्ठं, ततोऽनामिकया कनिष्ठिकया च सप्तमं, ततो मध्यमानामिकाकनिष्ठिकाभिरष्टमं, ततस्तर्जनीसहिताभिश्चतसृभिर्नवमं, ततः सर्वाभिर्दशमम् । दशकृत्वोऽपि मन्त्रावृत्तिर्भवति । ततोऽवशिष्टं सर्वं सोममञ्जलिना गृहीत्वा सोमस्योपर्यध्यावपति ।

ततः सर्वतः सोमोपनहनस्यान्तान्संगृह्योष्णीषेण बध्नाति प्रजाभ्यस्त्वेति । ततोऽङ्गुल्या मध्ये विवरं करोति । ततस्तं सोमं सोमविक्रयिणे प्रयच्छति ।

इति सप्तमस्य सप्तमी कण्डिका ॥ ७ ॥

---

ततोऽध्वर्युः पञ्चकृत्वः सोमं पणते, कलाशफादिभिः पञ्चवारं सोमविक्रयिणः सकाशात् याचत इत्यर्थः । तत्र पूर्वं सोमविक्रयिन् क्रय्यस्ते सोमो राजा इति सोमविक्रयिणमध्वर्युः पृच्छति । ततः सोमविक्रयी क्रय्य

अतः सोमो राजाऽर्हतीत्याह सोमविक्रयी ॥ ७ ॥ भूय एवातः सोमो राजाऽर्हति महाँस्त्वेव गोर्महिमेत्यध्वर्युर्गौर्वै प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनमिति ॥८॥ भूय एवेत्यतः प्रभृति चतुरावर्त्तयति ॥९॥ एकैकेनान्ते पणते शफेन, पदा, ऽर्द्धेन, गवा ॥१०॥ ते क्रीणामीत्यन्ततः ॥११॥ प्रश्नान्ते प्रश्नान्ते ॥१२॥ क्रीतः सोमो राजेत्यन्ते वयाँसि प्रब्रूहीत्याह सोमविक्रयी ॥१३॥ स आह चन्द्रं ते वस्त्रं ते च्छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्या इति ॥१४॥ शुक्रं त्वेति हिरण्यमालम्भ्य वाचयति ॥१५॥ सग्मे त इति सोमविक्रयिणं हिरण्येनाभिकम्पयति ॥१६॥ अस्मे त इति यजमानसंहितं निदधाति ॥१७॥ सोमविक्रय्येतदादत्ते ॥१८॥ अजां प्रत्यङ्मुखीमालम्भ्य वाचयति

---

इति प्रत्याह । ततोऽध्वर्युस्तं वै ते क्रीणानीति सोमविक्रयिणं पृच्छति ।

ततः स क्रीणीहीति प्रत्याह । ततोऽध्वर्युः कलया ते क्रीणानीति सोमविक्रयिणं याचते । ततः सोमविक्रयी भूयो वा अतः सोमो राजार्हतीति प्रत्याह । ततोऽध्वर्युः भूय एवात इत्यारभ्य तस्यै वाजिनमित्यन्तं पठित्वा ततः शफेन ते क्रीणानीति सोमविक्रयिणः सोमं प्रार्थयते । ततः सोमविक्रयी पुनर्भूयो वा अत इति प्रत्याह । पुनरप्यध्वर्युर्भूय एवात इति तस्यै वाजिनमित्यन्तमुक्त्वा पदा ते क्रीणानीति सोमविक्रयिणं सोमं याचते । ततः स भूयो वा अत इत्येव प्रत्याह । पुनरप्यध्वर्युर्भूय एवात इति वाजिनमित्यन्तमुक्त्वाऽर्द्धेन ते क्रीणानीति सोमविक्रयिणं याचते । ततः स भूयो वा अत इत्येवं प्रत्याह । पुनर्भूय एवात इति वाजिनमित्यन्तमुक्त्वा गवा ते क्रीणानीति सोमविक्रयिणं प्रति कथयति ।

ततः सोमविक्रयी क्रीतः सोमो राजा वयांसि प्रब्रूहीत्यध्वर्युं प्रत्याह । ततोऽध्वर्युश्चन्द्रं ते वस्त्रं त इत्यादि सोमविक्रयिणं प्रत्याह । ततोऽध्वर्युर्हिरण्यमालभस्वेति यजमानं प्रत्याह। ततो यजमानो हिरण्यमालभते।

ततोऽन्वारब्धहिरण्यं शुक्रं त्वेत्यमुं मन्त्रं वाचयति। ततः सग्मे त इत्यनेन सोमविक्रयिणं हिरण्यसन्दर्शनेन प्रलोभयति । ततोऽस्मे त इति हिरण्यं

तपसस्तनूरिति ॥१९॥ सव्येनाजां प्रयच्छन्मित्रो न इति दक्षिणेन सोममादायागत उत्तिष्ठति वा ॥२०॥ दीक्षितोरौ दक्षिणे प्रत्युह्य वासो निदधातीन्द्रस्योरुमिति ॥२१॥ स्वान भ्राजेति जपति सोमविक्रयिणमीक्षमाणः ॥२२॥ अपोर्णुते दीक्षितः शिरः ॥२३॥ पत्नी च ॥२४॥ हिरण्यं सहसाऽऽच्छिद्य पृषता वरत्राकाण्डेनाऽऽहन्ति वा ॥२५॥८॥

गृहीतसोमं परिमाऽग्न इति वाचयति ॥१॥ उत्तरं

---

यजमानसन्निधाने निदधाति । ततः सोमविक्रयी तदा यजमानसन्निधौ मुक्तं हिरण्यं गृह्णाति ।

ततोऽजां पुरस्तात्प्रत्यङ्मुखीमवस्थाप्याजामालभस्वेति तद्यजमानं प्रत्याह । ततो यजमानोऽजामालभते । ततोऽजायाः कृतालम्भं यजमानं तपसस्तनूरिति वाचयति ।

ततः सव्येन हस्तेनाजां सोमविक्रयिणे समर्पयन् दक्षिणेन हस्तेन मित्रो न एहीति सोममादत्ते । ततः सोममादायागतेऽध्वर्यौ यजमान उत्तिष्ठति न वा ।

ततोऽध्वर्युर्यजमानस्य दक्षिण ऊरौ वासः प्रत्युह्येन्द्रस्योरुमिति सोमं निदधाति । ततो यजमानः सोमविक्रयिणं विलोभयन् स्वान भ्राजेति स्वरेण जपति । श्रुतौ तु "सोमक्रयणाननुदिशती"ति पठ्यते । सोमः क्रीयते यैर्गोहिरण्यादिभिर्दशद्रव्यैस्तान् सोमविक्रयिणे निवेदयतीत्यर्थः ।

ततो यजमान उष्णीषं विस्रंस्य शिर उद्घाटयति । पत्नी चोष्णीषं जालं वा विस्रंस्य शिर उद्घाटयति । ततः सोमविक्रयिणः सकाशाद्धिरण्यं बलाद् गृहीत्वा सोमविक्रयिणं विचित्रेण वंशदण्डेन कुट्टयति न वा ।

ततोऽध्वर्युर्दीक्षितदण्डं मैत्रावरुणाय समर्पयति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामीति । अथवाऽग्नीषोमीय एव यजमानवरणानन्तरं दण्डदानं नेदानीम् ।

इति सप्तमस्य अष्टमी कण्डिका ॥ ८ ॥

---

ततो यजमानो हस्तेन सोमपोटलिकां गृह्णाति । ततोऽध्वर्युर्गृहीतसोमं यजमानं परिमाऽग्न इति वाचयति । ततो यजमानः शिरसि पाणिमन्तर्धाय तस्य पाणेरुपरि सोमं कृत्वोदायुषेत्युत्तिष्ठति ।

च ॥२॥ उदायुषेत्युत्थानꣳ शीर्ष्णि सोमं कृत्वा पाणिमन्तर्द्धाय ॥३॥ प्रतिपन्थामित्यनोऽभ्येति दक्षिणतस्तिष्ठच्छन्नꣳ समङ्गि धौतं प्रउगाच्चोद्धते फलके ॥४॥ कृष्णाजिनमस्मिन्नास्तृणात्यदित्यास्त्वगिति ॥५॥ तस्मिन्त्सोमं निदधात्यदित्यै सद इति ॥ ६ ॥ अस्तभ्नाद् द्यामिति सोममालभ्य वाचयति ॥ ७ ॥ वनेषु व्यन्तरिक्षमिति सोमपर्याणहनेन परितत्य कृष्णाजिनं पुरस्तादासजति सूर्यस्य चक्षुरित्यासनयोरन्यतरत् ॥८॥ एकं चेद् ग्रीवा अवकृत्य ॥९॥ अनड्वाहौ युनक्त्युस्रावेतमिति युगपत्तद्वचनत्वात् ॥१०॥ भेदे मन्त्रावृत्तिः सान्निपाति-

---

ततो यजमानः प्रति पन्थामित्यनेन तद्दक्षिणतः स्थापितमनः शकटं प्रति गच्छति तद्यानः सोमक्रयार्थमागच्छद्भिः सहानेयम । तथा च मनुः—

"सच्छादिरकेणानसा राजानमच्छ यन्ती"ति ।

आनीय च सोमक्रयदेशस्य दक्षिणतः प्राङीपं छायार्थमुपरि कलआदिना छादितं युगशम्यायोक्त्रोपस्तम्भनादिसर्वाङ्गोपेतं स्थाप्यते, तस्य चानसः प्रयुगात् वेटकोपवेशनस्थानाद् द्वे फलके उद्धृत्य निष्काश्यते ।

ततोऽध्वर्युरस्मिन् शकटे कृष्णाजिनं प्राग्ग्रीवमुत्तरलोमास्तृणात्यदित्यास्त्वगिति । ततस्तस्मिन् कृष्णाजिने अदित्यै सद आसीदेति सोमं निदधाति । ततः सोममालभस्वेति यजमानं प्रत्याह ।

ततो यजमानः सोममालभते । तत आलब्धसोमं यजमानं अस्तभ्नाद् द्यामित्यमुं मन्त्रं वाचयति । ततोऽध्वर्युर्वनेषु वीति सोमपर्याणहनेन पटकुटीस्थानीयेन सोमं परितत्य समन्ताद्वेष्टयित्वा यजमानस्यासनकृष्णाजिनयोर्मध्ये अन्यतरत् कृष्णाजिनं सूर्यस्य चक्षुरिति मन्त्रेण शकटस्य पुरस्ताद्भागे वंशादिकमारोप्य तस्मिन्नासजति अवलगयति । यदि यजमानस्यासनार्थमेकमेव कृष्णाजिनं भवति तदा तस्य कृष्णाजिनस्य ग्रीवां छित्वा तथैव पुरस्तादेव लगयति ।

तत उस्रावेतमिति दक्षिणमनड्वाहमनसि युनक्ति । ततोऽनेनैव मन्त्रेणोत्तरं युनक्ति । ततः सुब्रह्मण्यो यस्मात् प्रदेशादनसः फलके उद्धृते तस्मिन् प्रदेशे शकटस्येषयोरन्तराले भूमावेव तिष्ठन्पलाशशाखयाऽनड्वा

त्वात् ॥११॥ ईषान्तरे भूमिष्ठः सुब्रह्मण्यः पलाशशाखया प्राजति ॥१२॥ पश्चात्परीत्यापालम्बं गृहीत्वा सोमाय क्रीतायानुवाचयति पर्युह्यमाणायेति वा ॥१३॥ दीक्षितश्चान्वारभते ॥१४॥ त्रिरुक्तायां प्राङ् यात्वा दक्षिणाऽऽवृत्त्य शालां गच्छन्ति॥१५॥भद्रो म इति वाचयति॥१६॥ सुब्रह्मण्यां चाह्वयति सुब्रह्मण्यो३ँ सुब्रह्मण्यो३मिति त्रिरुक्त्वा सकृन्निगदं यावदहे सुत्या भवति तथाऽऽह॥१७॥ शालां पूर्वेण प्रतिप्रस्थाताऽग्नीषोमीयं पशुमादाय तिष्ठ-

हौ गमनाय प्रेरयति । ब्रह्मा च सोमक्रयानन्तरं प्राङतिक्रम्य पूर्वेण शकटं परिक्रम्यापरेण वा परिक्रम्य शकटस्य दक्षिणपार्श्वसन्निहित एवानुगच्छति शालायां सोमनिधानं यावत् ।

ततोऽध्वर्युः शकटं पूर्वेण प्रदक्षिणं परीत्य पश्चाद्गत्वा अपालम्बं गृहीत्वा सोमाय क्रीतायानुब्रूहीति होतारं प्रेष्यति, सोमाय पर्युह्यमाणायानुब्रूहीति वा । अपालम्बशब्देन पश्चादाबद्धा रज्जुरुच्यते यया अवतरेऽनः प्रवर्त्तमानं विधार्यत इति कर्कः ।

पश्चाद्भागे बद्धं लम्बायमानं काष्ठमेवापालम्बशब्देनोच्यते येनोर्ध्वप्रदेशमारोहतः शकटस्य स्तम्भनेन पर्यावर्तनं वार्यत इति हरिस्वामिनो याज्ञिकाश्च ।

ततो दीक्षितः सोममन्वारभते प्रैषदानसमकालमेव । ततो होत्रा प्रथमायामृचि त्रिः पठितायां होत्रध्वर्युयजमानादयः शकटमनुगच्छन्ति । प्रथमं प्राच्यां दिशि किञ्चित् गत्वा प्रदक्षिणमावृत्य तथैव शकटं पुरस्कृत्य पश्चिमाभिमुखाः शालायां प्रति गच्छन्ति । शालायां प्रति गमने प्रारब्धेऽध्वर्युर्भद्रो मेऽसीति यजमानं वाचयति ।

ततोऽध्वर्युः शालां प्रति गच्छन् स्वयमेवात्र सुब्रह्मण्यामाह्वयति । सुब्रह्मण्य एव सुब्रह्मण्यामाह्वयति इति हरिस्वामिनः ।

तत्र सुब्रह्मण्यो३ँ सुब्रह्मण्योमित्यभ्यस्तं त्रिः पठित्वा इन्द्र आगच्छेत्यादि सकृत्पठति गोतम ब्रुवाणेत्यस्यान्ते त्र्यहे सुत्यामागच्छ मघवन्नित्यादि आगच्छेत्यन्तं पठति । शाखान्तरीयत्वान्निगदो लिख्यते । सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्यो मिन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने । गौरावस्कन्दिन्नहल्यायै

ति कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गम् ॥१८॥ नमो मित्रस्येत्येनमालभ्य वाचयति ॥१९॥ चरति पशौ वाचनमेव ॥ २० ॥ आहवनीयाच्चोल्मुकमाहृत्यैके ॥ २१ ॥ समीपेऽन उपस्थाप्योत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनामिति॥२२॥ शम्ये चोद्बृहति "वरुणस्य स्कम्भसर्जनी स्थ" इति ॥२३॥ औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीमूतामाहरन्तिचत्वारः॥२४॥अभिमृशत्येनां वरुणस्य ऋतसदन्यसीति ॥२५॥ कृष्णाजिनमस्यामास्तृणाति "वरुणस्य ऋतसदनमसीति ॥२६॥ तस्मिन्सोमं निदधाति "वरुणस्य ऋतसदनमासीदेति ॥२७॥ शालां प्रवेशयन्ति दीक्षितसञ्चरेण ॥२८॥ या त इति वाचयति ॥२९॥ आहवनीयं दक्षिणेन स्थापयन्ति ॥३०॥ उदपात्रमुपनि-

---

जार कौशिक ब्राह्मण गौतम ब्रुवाण ऽयहे सुत्यामागच्छ मघवन्देवा ब्रह्माण आगच्छतागच्छत ।

ततः शालायाः पुरस्तात्प्रतिप्रस्थाताऽग्नीषोमीयं पशुमानीय शकटसमीपे तिष्ठति कर्णगृहीतम् । कीदृशं पशुं कृष्णसारङ्गं कृष्णवर्णं वर्णान्तरमिश्रितम् । कृष्णवर्णाभावे लोहितसारङ्गं लोहितवर्णं वर्णान्तर मिश्रितम् । ततोऽध्वर्युरग्नीषोमीयं पशुमालभस्वेति यजमानं प्रत्याह । ततो यजमानोऽग्नीषोमीयं पशुमालभते ।

ततः कृतपश्वालम्भं यजमानमध्वर्युर्नमो मित्रस्येति वाचयति । पशौ वने चरति इदानीमसन्निहिते सति केवलं नमो मित्रस्यैतद्वाचनमेव कार्यम् । केचिदाहवनीयादुल्मुकमग्नीषोमीयपशुसमीपे आहृत्य पशुमालभ्य च वाचनं कार्यमित्याहुः ।

ततः शालायाः पुरस्तात्समीपे प्राग्गीषमुदक्कूबरं वा ऽनः स्थापयित्वोत्तम्भनेनानस ईषाग्रभागे उपस्तम्भनेन धारणं करोति वरुणस्योत्तम्भनमिति । ततः शम्ये उद्धरति वरुणस्य स्कम्भसर्जनी स्थ इति । ततोऽध्वर्युप्रतिप्रस्थातृनेष्ट्रुन्नेतारश्च आसन्दीं शकटसमीपे आहृत्योत्तरतः स्थापयन्ति ।

ततोऽध्वर्युर्वरुणस्य ऋतसदन्यसीत्यासन्दीमभिमृशति । ततो वरुणस्य ऋतसदनमसीदेत्यासन्द्यां प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तृणाति । ततो वरुणस्य ऋतसदनमासीदेति कृष्णाजिने सोमं निदधाति ।

नयन्त्येके उदपात्रमुपनिनयन्त्येके ॥ ३१ ॥ ९ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

## अथाष्टमोऽध्यायः ।

आतिथ्यं निर्वपति वैष्णवं नवकपालम् ॥१॥ पत्न्यन्वारब्धस्तूर्णमेकाविमुक्ते वा निर्वपदग्नेस्तनूरिति पञ्चकृत्वः प्रतिमन्त्रम् ॥ २ ॥ सावित्रानिवृत्तिः श्रुतिविरोधाभ्याम् ॥३॥ अग्न्यन्वाधानव्रतोपायनारण्यभोजनदानब्रह्मवरणादीनि दीक्षणीयाप्रभृति प्रागुदवसानीयायाः सोमे कृतत्वात् ॥४॥ पत्नीसन्नहनं च सयोक्त्रायाः ॥५॥ यज-

ततश्चत्वारोऽध्वर्य्वादयः सोमासन्दीमुत्थाप्य पूर्वद्वारेण शालां प्रवेश्य दीक्षितसञ्चरेण हृत्वाऽऽहवनीयस्य दक्षिणतः स्थापयन्ति ।

शालाप्रवेशकाल एव या ते धामानीति यजमानं वाचयति । तत आहवनीयस्य दक्षिणतः सोमसहितामासन्दीं स्थापयन्ति । केचित्स्थापिते सोमे तत्समीपे उदपात्रनिनयनं कुर्वन्ति ।

इति सप्तमस्य नवमी कण्डिका ॥ ९ ॥

अथातिथ्येष्टिः ।

तत्र वैष्णवो नवकपालः पुरोडाशो भवति । अत्रातित्वरया पदार्थाः कार्याः । चतुरासनं, ब्रह्मोपवेशनं, प्रणीताप्रणयनं, आहवनीयस्यैव परिस्तरणम् । पात्रासादनं-शूर्पाग्निहोत्रहवणी, स्फ्यः कपालानि नव, शम्याकृष्णाजिनम्, उलूखलमुसलम् , दृषदुपलम् , पात्रीधान्यम् , पवित्रच्छेदनानि पवित्रे, धृष्टिः संयवनोदकम् , मदन्तीपात्रद्वयं मृन्मयम् , एकं यजमानस्य अपरं पत्न्याः, स्थाली आज्यं च, वेदश्च उद्कतृणमग्निः, एकोनविंशतिरिध्मकाष्ठानि कार्ष्मर्यमयाः परिधयः, आश्ववालः प्रस्तर ऐक्षव्यौ विधृतीः, बर्हिश्चेति बर्हिश्चतुष्टयम् , स्रुवो जुहूः उपभृत ध्रुवा, प्राशित्रहरणे, शृतावदानं, पात्री, इडापात्री, षडवत्तं च, पत्ने योक्त्रं, यूनकुशाः, मन्थनचतुष्टयं, पीठं कुशास्तीर्णं, व्रतपात्रं, हिरण्यं, द्वे समिधो, सुब्रह्मण्यार्धपात्रं च ।

ततः स्फ्योपहितपात्रीकरणादि । अहृणे पत्न्यध्वर्योरन्वारम्भं करोति ।

मानभागश्च भक्षप्रतिषेधात् ॥६॥ न कर्मगुणत्वात् ॥७॥ उपसर्जनीराधिश्रयति मदन्तीश्च व्रतवत् ॥८॥ आ मुष्टिविसर्गादुदकार्थस्ततः ॥९॥ कार्ष्मर्यमयाः परिधय आश्ववालः प्रस्तर ऐक्षव्यौ विधृती बर्हिश्च ॥१०॥ एतदेवाग्नीषोमीयोपसत्स्वपि चतुष्टयम् ॥११॥ आसाद्याग्निमन्थनमाहोमात्करोति ॥१२॥ इडान्तं भवति ॥१३॥ ध्रौवं व्र·

---

तत्र विशेषः पञ्चकृत्वो ग्रहणम् । देवस्य० सवितुः प्र० भ्यां अग्नेस्तनूरसि विष्णवे त्वा जुगृह्णामि । अत्र प्राकृतमन्त्रे त्वाशब्दस्य निवृत्तिः । एवं प्रथमं ग्रहणम् । देवस्य त्वा सवितुः, प्र० भ्यां सोमस्य तनूरसि विष्णवे त्वा गृह्णामीति द्वितीयम्, देवस्य० सवितुः प्र० भ्यां अतिथेरातिथ्यमसि विष्णवे त्वा जुष्टं गृह्णामीति तृतीयम्, ततः श्येनाय त्वा सोमभृते विष्णवे त्वेति चतुर्थम्, अग्नये त्वा रायस्पोषदे विष्णवे त्वेति पञ्चमम् । चतुर्थपञ्चमग्रहणयोर्देवस्य त्वेति मन्त्रस्य जुष्टं गृह्णामीत्यस्य वाऽभावः । ततो भूताय त्वेति शेषाभिमर्शनादि । अथवा शालासमीपे शकटं स्थापयित्वा एकस्मिन्बलीवर्दे विमुक्ते अपरस्मिन् अविमुक्ते एवाध्वर्युः शालां प्रविश्य शीघ्रं चतुरासनादिहविर्ग्रहणं सादनान्तं कृत्वा हविःकृता वाचं विसृज्य वोत्तरममनड्वाहं विमुच्यासन्द्याहरणाभिमर्शनादि प्रपादनान्तं कुर्यात् ।

ततः पवित्रच्छेदनादि कण्डनादि वा कर्तव्यम् । उभयथा शाखान्तरे दर्शनात् । प्रोक्षणे विष्णवे त्वा जुष्टमिति । नवकपालेषु चतुर्थकपालोपधानानन्तरमवशिष्टानि पञ्च विभज्य त्रीणि दक्षिणतो द्वे उत्तरतः । उपसर्जन्यधिश्रयणानन्तरं अध्वर्युर्यजमानमदन्तीर्गार्हपत्येऽधिश्रयति, पत्नी मदन्तीश्च दक्षिणाग्नावधिश्रयति । मदन्तीशब्देन क्रत्वर्था आप उच्यन्ते ।

अत आरभ्य मुष्टिविसर्गपर्यन्तं यत्किञ्चिदुदककार्यं प्रणीताप्रणयनप्रोक्षणोदकोपस्पर्शनाचमनादिकं तत्सर्वं मदन्त्युदकेनैव कार्यम् ।

आज्यग्रहणे तिसृष्वपि स्रुक्षु चतुर्गृहीतान्येव गृह्यन्ते । आहवनीयकल्पनानन्तरमुल्मुकोद्वहनाभावः । प्राणदाने विष्णुं गच्छ । हवींष्यासाद्यालम्भात्मालम्भोदकालम्भौ शकलादानादि होमान्तमग्निमन्थनं वैश्वदेव पर्ववत् ।

ततो होतृषदनकरणादिना ऽनुयाजसमित्परिशेषणम् । सप्तदशेन वज्रेणेत्यपबाधनम् । इदमग्नये सोमाय विष्णवे देवेभ्य इत्यादि उत्तमप्रयाजत्यागे । तत आज्यभागौ ।

तप्रदाने गृह्णात्यापतय इति ॥१४॥ छिद्भिः स्थाल्याः स्रुवेण तनूनप्त्रे शाक्वरायेति, शक्मन ओजिष्ठायेति ॥ १५ ॥ गृह्णामीति सर्वत्र साकाङ्क्षत्वात् ॥१६॥ पूर्वशेषौ वोत्तरौ ॥१७॥ प्रतिपुरुषं च ग्रहणमाज्यानि गृह्णाना इति श्रुतेः ॥१८॥ तानूनप्त्रमेतत् ॥१९॥ दक्षिणस्यां वेदिश्रोणौ निधायावमृशन्त्यृत्विजो यजमानश्चानाधृष्टमिति॥२०॥ अद्रोहस्तेभ्यो न सतानूनप्त्रिणे द्रोग्धव्यामिति श्रुतेः॥२१॥१॥

पल्यङ्ग्य निदधात्यपिधायामृन्मयेन ॥ १ ॥ अपराह्णे व्रतमिश्रं दीक्षिताय प्रयच्छयाति ॥२॥ बहुषु गृहपतये॥३॥ अग्ने व्रतपा इत्याहवनीये समिधमाधाय मदन्तीरुपस्पृ-

---

ततो वैष्णवो यागः—विष्णवेऽनुब्रूहि विष्णुं यज । अत्रापि मन्दतरमातिथ्यायामति पक्षे देवतापदमात्रमुपांशु । प्रागग्नीषोमीयादुपांशुपक्षे सर्वमुपांशु भवति । ततः स्विष्टकृदादि प्राशित्रादि सर्वम् । पवित्रप्रतिपत्त्यन्ते यजमानस्य व्रतपात्रं वेदौ निधाय तस्मिन्ब्रह्मादिक्रमेण सर्वं ऋत्विज आपतये त्वेति मन्त्रेण सकृद् ध्रौवमाज्यं स्वल्पं स्वल्पं गृहीत्वा पुनः स्थाल्याः सकाशात् छिद्भिः स्रुवेण तूष्णीं गृह्णन्ति । ततो यजमानोऽप्येवमेव गृह्णाति ।

ततस्तद् घृतपात्रमाज्यसहितं दक्षिणस्यां वेदिश्रोणौ निधाय सर्वं ऋत्विजो यजमानसहिताः सहैव सहिरण्यं तद्घृतभाजनस्थमाज्यं समवमृशन्त्यनाधृष्टमसीति मन्त्रेण । ततो यैः सह तानूनप्त्रमाज्यं स्पृष्टं तेभ्यः द्रोहोऽपकारो न कार्यः कदाचिदपि ।

ततोऽध्वर्युस्तद् घृतभाजनस्थमाज्यं किञ्चित्कम्पयित्वा अमृन्मयेन पात्रेणापिधाय सुगुप्ते देशे निदधाति । ततो यजमानोऽग्ने व्रतपा इत्याहवनीये समिधमाधाय मदन्तीरुपस्पृश्य गाढतरं मुष्टिमेखलं कुरुते । पत्नी च गार्हपत्ये तूष्णीं समिधमादाय स्वमदन्तीरुपस्पृश्य गाढतरं मुष्टिमेखलं कुरुते ।

ततो ब्रह्मोद्गातृहोत्रध्वर्य्वाग्नीध्रा यजमानषष्ठा अनामिकायां हिरण्यं बध्वाऽप उपस्पृश्य मदन्तीरुपस्पृश्याहवनीयं पूर्वेण गत्वा अंशु०शुरंशु० इति सोममाप्याययन्ति । विस्रंस्यालम्भनमित्यर्थः । ततः प्रत्यागत्येष्टा राय इति मन्त्रेणोत्तानहस्ता दक्षिणोत्ताना वा प्रस्तरे पाणी निदधति ब्रह्मा-

स्य गाढतरं मुष्टिमेखलं कुरुते ॥४॥ पत्नी च गार्हपत्ये तूष्णीम् ॥५॥ मदन्तीरुपस्पृश्य यजमानषष्ठाः सोममाप्याययन्त्यर्ठ०शुरर्ठ०शुरिति ॥६॥ आज्यमालभ्योपस्पृशेदपः सोममालिप्स्यमान, स्तथा विपर्यस्य, प्रत्येत्य प्रस्तरे निह्नुवत उत्तानहस्ता दक्षिणोत्ताना वेष्ठा राय इति ॥७॥ व्यूहनपरिध्यञ्जने कृत्वैके ॥८॥ समुल्लुप्य प्रस्तरमक्त्वा परिधींश्चादायाहाग्नीन्मदन्त्यापा इति ॥९॥ मदन्तीत्यग्नी

---

द्विक्रमेण । ब्रह्मयजमानौ दक्षिणतः स्थितावेव सोमालम्भनिह्नवौ न कुरुतः किन्तु यथास्वं सञ्चरमागत्याहवनीयं पूर्वेण परीत्य सोमाप्यायनं कृत्वा तथैव प्रत्यागत्य प्रस्तरे निह्नवं कृत्वा ततो यथागतं गत्वा स्वस्थाने उपविशतः ।

ब्रह्मयजमानभागयोः परिहरणम् , अग्निसम्मार्गप्रैषः, अग्निसम्मार्गः व्यूहनं विष्णोरुक्रमिति, विष्णुस्तमपनुदत्विति । जुहूमभ्युद्य परिध्यञ्जनम् । इह वा तानूनप्त्रादिनिह्नवान्तम् । न सूक्तवाकप्रैषः प्रस्तरहोमाभावात् । कर्कमते तु भवति ।

ततः सञ्ज्ञानाथामिति प्रस्तरादानं, व्यन्तु वय इत्यञ्जनं, ततः परिधीनां विधृत्योश्चादानं, ततोऽग्नीन्मदन्त्यापा इत्येवमग्नीधं प्रति प्रैषः, मदन्तीति प्रत्याहाग्नीत् । ततो मरुतामिति नीचैर्हरणं, ततस्ताभिरेहीति ब्रुवन्परिधिविधृतिसहितं प्रस्तरमाहवनीयस्योपरिष्टात्समीपेनैवातिहृत्याग्नीध्रेणाहृताभिर्मदन्तीभिरभ्युदयाग्नीधे प्रस्तरं परिधिविधृतिसहितं निधानाय रक्षणार्थं समर्पयतीति ।

ततश्चक्षुष्पा इत्यात्मानमालभते । तत उदकोपस्पर्शनम् । संस्रवाहुतिः । धुरिनिधानम् । वेद्यालम्भोऽत्र न भवति समिष्टयजुर्होमबर्हिर्होमयोरभावात् । वेदविमोकः, पत्नी योक्त्रस्य च । बर्हिर्वेदौ स्तृतमेव तिष्ठति । प्रणीताविमोकः, राक्षसभागः, भागावेक्षणं भागप्राशनमिति । ततः सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति सुब्रह्मण्यां प्रेष्यति । सुब्रह्मण्यश्चान्तःपात्यस्य पुरस्ताद्वेदिमध्ये प्राङ् तिष्ठन्सुब्रह्मण्याह्वानं करोति । पत्नीयजमानौ च सुब्रह्मण्यमन्वारभेते । इत्यातिथ्येष्टिः ।

---

अथ प्रवर्ग्यचरणम् ।

प्रथमयज्ञे प्रवर्ग्यो न भवति, श्रोत्रियस्य विकल्पेन भवति, तेन सोऽत्र-

लिख्यते। तत्र पूर्वं त्रयाणां शालाद्वाराणामपिधानम्। पत्न्या प्रवर्ग्यस्य दर्शनं न कर्त्तव्यमवैदिकैः शूद्रादिभिश्च। अत्र यावदुक्तं तावदेव भवति नान्यत्प्रकृतितः किञ्चित्।

ततो ब्रह्मयजमानहोत्रध्वर्यु प्रतिप्रस्थातृ प्रस्तोत्राग्नीध्रा ऋचं वाचमित्यध्यायं शान्त्यर्थं पठन्ति। द्विरासनम्। ब्रह्मणो दक्षिणाग्निमपरेण वोपवेशनमाहवनीयं दक्षिणेन वा। आहवनीयस्य परिस्तरणं केचित् कुर्वन्ति।

ततो गार्हपत्यस्य पुरस्तात्प्रागग्रानुदक्संस्थान्बहून्कुशानास्तीर्य तेषु कुशेषु दक्षिणत आरभ्योदक्संस्थानि घर्मपात्राणि क्रमेणासादयति। तथाहि-उपयमनीं, महावीरं, परीशासौ, पिन्वने, रौहिणकपाले, रौहिणहवन्यौ, खचात्नुत्कीर्णौ, स्थूणामयूखं, धृष्टी, शतमाने, मुञ्जप्रलवान्, विकङ्कतशकलान्विंशतिं प्रादेशमात्रान्, स्रुचं, मुञ्जवेदं, धवित्राणि, परिधींश्च, रज्जुसन्दानम्, आसन्दीं, कृष्णाजिनम्, अभ्रि, सिकताः खरार्थाः त्रिषु महत्सु शरावेषु पृथगासाद्यन्ते।

अर्थवच्च-अग्निहोत्रहवणी, वज्रः, पवित्रच्छेदनानि, पवित्रे, आज्यस्थाली, बह्वाज्यं, शूर्पं, पात्री, पिष्टं, संयवनोदकं, होतृषदनं, मौञ्जः कूर्चः, उदुम्बरसमित्, कृष्णाजिने, इतरौ महावीरौ च, अभ्र्युपशये च। एतान्युपयमन्यादीनि पात्राण्यौदुम्बराणि भवन्ति। यत्किञ्चिद्रज्जुजातं तन्मुञ्जमयं त्रिगुणं च भवति।

ततोऽध्वर्योः पवित्रे स्थ इति पवित्रच्छेदनम्। ततोऽग्निहोत्रहवण्यां मदन्तीः कृत्वा सवितुर्व इत्युत्पवनम्, सव्ये हस्ते कृत्वा दक्षिणेनोदिङ्गनं देवीराप इति, प्रोक्षिता स्थेति तासां प्रोक्षणम्।

एवं प्रोक्षणीः संस्कृत्योद्यम्योत्थाय ब्रह्मन्प्रचरिष्याम इति ब्रह्माणं प्रत्याह, होतरभिष्टुहीति होतारं, प्रस्तोतः सामानि गायेति प्रस्तोतारम्। ततो ब्रह्मणा प्रचरेत्यनुज्ञातोऽध्वर्युरुपविश्यैकमेव महावीरं यमाय त्वा प्रोक्षामि मखाय त्वा प्रोक्षामि सूर्यस्य त्वा तपसे प्रोक्षामीति। एवं त्रिः प्रोक्षितो भवति। तूष्णीं परिघर्म्यस्यासादितपात्रजातस्य प्रोक्षणम्।

पात्रप्रोक्षणानन्तरमेव प्रतिप्रस्थाता स्थूणामयूखं शालायाः पूर्वद्वारेण निष्काश्य शालाया दक्षिणतस्तन्निखनति। तत्र निखातं स्थूणामयूखं गार्हपत्यसन्निधावुपविष्टो होता पश्यति। दक्षिणतः स्थूणां गोबन्धनार्थं निखनति। स्थूणाया उत्तरतोऽजाबन्धनार्थं मयूखं निखनति।

ततः शालायामागत्य गार्हपत्यस्योत्तरतोऽरत्निमात्रमेकं खरं निवपति। तत्र पञ्चभूसंस्कारान् कृत्वा एकशरावस्थाः सिकता निवपति। तत

आहवनीयस्योत्तरतो द्वितीयं खरं निवपति, तत्रोग्निख्याभ्युदयेति कृत्वा द्वितीयशरावस्थाः सिकता निवपति ।

तत आहवनीयस्य दक्षिणतो भित्तिसन्निधौ तृतीयमुच्छिष्टखरम् एव मेव संस्कारद्वयं कृत्वा तृतीयशरावस्थाः सिकता निवपति ।

तत आहवनीयं पूर्वेण आसन्दीं पर्याहृत्याहवनीयस्य दक्षिणतः सोमासन्द्या उत्तरतः प्राचीमासादयति, आहवनीयसोमासन्द्योरन्तराले इत्यर्थः । सा चासन्दी स्कन्धमात्रदीर्घपादा अरत्निमात्राङ्गी बालवजरज्वा व्युता भवति ।

ततस्तस्यामासन्द्यां कृष्णाजिनमास्तीर्य तस्मिन्कृष्णाजिने अग्निमुपशयमितरौ महावीरौ च निदधाति। एतत्सर्वं वस्त्रादिना अवच्छादयेद्वा न वा।

अध्वर्युः पात्रप्रोक्षणानन्तरमेव पूर्णाहुतिवदाज्यं संस्कृत्य होत्रा अञ्जन्तीत्युच्यमाने स्रुवेणाज्यमादाय देवस्त्वेति महावीरमनक्ति ।

ततो रजतशतमानं गार्हपत्यस्योत्तरतो न्युप्ते खरे पृथिव्याः सꣳस्पृशस्पाहीत्यवगूहति सिकतामध्येऽधः प्रवेशयतीत्यर्थः । रत्तिकाशतेन शतमानम् ।

इति षड्विंशस्य अध्यायस्य द्वितीया कण्डिका ॥ २ ॥

---

ततः शुक्रं गायेति प्रस्तोतारं प्रेष्यति । पत्नी शिरः प्रोर्णुते उष्णीषेणान्तिसहितं वेष्टयति । ततो होत्रा सꣳसीदस्वेति पठ्यमानेऽध्वर्युर्मुञ्जप्रलवान् द्विगुणानादीप्य प्रतिदिशं खरे करोति ।

तत आज्यं संस्कृत्य महावीरे निनीय ततोऽर्चिरसीति मन्त्रेण तेषु तमाज्यपूर्णं महावीरं निदधाति । ततो महावीरस्योपरि समीपे प्रादेशं धारयन्तं यजमानमनाधृष्टेति वाचयति ।

अथवा पुरस्तादारभ्य प्रतिदिशं धारयन्तं यथालिङ्गमनाधृष्टा इत्यादि पञ्च मन्त्रान् वाचयति । ततो विश्वाभ्य इति मन्त्रेण महावीरं दक्षिणेन भूमावुत्तानं पाणिं यजमानो निदधाति ।

ततो यजमान एव महावीरस्योत्तरतो भूमौ प्रादेशं निदधाति मनोरश्वाऽसीति । ततोऽध्वर्युः महावीरं धृष्टिभ्यां भस्मना परिकीर्य्य धृष्टिभ्यामेव गार्हपत्याङ्गारैश्च परिकीर्णं करोति ।

ततस्तस्यां [illegible] महावीरं परिवेष्टयति । तत्र प्रथमं द्वौ शकलौ प्रागग्रौ परितः [illegible] अङ्गाराणामुपरि निदधाति एकं महावीरस्य [illegible] स्वाहा मरुद्भिः परिश्रीयस्वेति मन्त्रेण सहैव द्वौ निदधाति। ततः एकादश तूष्णीं, तत्र द्वावुदगग्रौ एकं महावीरस्य

पुरस्तात्, अपरं पश्चात्, ततो द्वौ प्रागग्रौ कुर्वन्, ततो द्वावुदगग्रौ पुनर्द्वौ प्रागग्रौ एवं द्वादश त्रयोदश वा शकलान् प्रागग्रान्।

ततः सुवर्णशतमानेन महावीरमपिदधाति दिवः संस्पृश इति मन्त्रेण। रत्तिकाशेन शतमानम्।

इति षड्विंशे प्रवर्ग्याध्याये तृतीया कण्डिका ॥ ३ ॥

ततश्चन्द्रं गायेति प्रैषः। ततः कृष्णाजिनखण्डैर्दृढदण्डसंयुक्तैर्व्यजनाकारैस्त्रिभिः परितः परिकीर्णानङ्गारान् शकलासन्नुदितानुपवाजयति मधु मधु मध्विति मन्त्रेण। ततः उपवाजनानन्तरं त्रयाणां धवित्राणां मध्ये एकं धवित्रं प्रतिप्रस्थात्रे समर्पयति, द्वितीयमाग्नीध्रे, तृतीयं स्वहस्त एव धारयति।

ततश्चन्द्रसामसमाप्तौ छन्दोगप्रश्नात्पूर्वं धर्मस्य तन्वौ गायेति प्रैषः। ततोऽध्वर्युप्रतिप्रस्थात्राग्नीध्रा अङ्गारान्धवित्रैर्धून्वन्तो वाजयन्तस्त्रिः प्रदक्षिणं परियन्ति। तत उपस्पृश्य धवित्राणामवस्थापनं कुर्वन्ति, स्वयं च पूर्वपूर्वापेक्षया बहिस्तिष्ठन्ति।

ततः पुनरप्यङ्गारान्वाजयन्तः प्रदक्षिणं त्रिः परियन्ति। नात्रापसव्यकरणम्, अविहितत्वात्, अप्रदक्षिणपरिगमनमात्रस्य श्रुतत्वात् "अथापसलवि त्रिर्धून्वन्ती"ति। अथवाऽन्तरं धवित्रपरिक्रमणं रुचितो घर्म इत्यतः परं कार्यम्।

ततः शालायां महावीरं प्रासायां सुवर्णशतमानं क्वचिन्निधाय सुगुप्ते देशे स्थापयित्वा स्रुवेणाज्येन महावीरं प्रतिप्रणवं परिषिञ्चेत्, होत्रा पठ्यमानस्य सूक्तस्य प्रणवे प्रणवे इत्यर्थः।

ततः प्रतिप्रस्थाता रौहिणौ करोति, तत्र स्फ्यापहितपात्रीकरणं, पात्रान्तरे प्रोक्षणीरुन्नीय शूर्पाग्निहोत्रहवण्योरादानं, प्रपतनं, बिलालम्भः, पिष्टेक्षणम्, अपद्रव्यनिरसनं, तदभावे हविषोऽभिमर्शनमेव, पुनः पिष्टानामालम्भनं, चतुर्मुष्टिकद्वयस्य ग्रहणं, सर्वाभिमर्शनं, प्राङ्प्रोक्षणम्, उत्थानम्, उत्तरतो गमनं, अपणस्य पश्चादासादनं, प्रोक्षणीः स्रुचि कृत्वा ब्रह्माणं समीक्ष्य रौहिणयोः प्रोक्षणं, पत्न्या अवहननम्, तत उपवेषमादायाङ्गाराणां प्राचः करणं, प्रथमकपालधर्मेण दक्षिणोत्तरयो रौहिणकपालयोरुपधानम्, अभ्यूहनम्, उपसर्जन्यधिश्रयणं, ततः पिष्टानां प्रोक्षणं, सपवित्रायां पात्र्यां संवापः, उपसर्जनीनामस्य निनयनं, पवित्राभ्यां प्रतिग्रहणं, संयवनं, विभज्यालम्भनम्, अधिश्रयणं, प्रथनम्, अङ्गार-

भिमर्शनम् । एवं द्वितीयस्य । पात्र्यङ्गुलिप्रक्षालनं, पर्यग्निकरणं, श्रपणं, आलम्भः, अभिवासनम्, अभितप्य पात्र्यङ्गुलिप्रक्षालनं, निनयनं, यजमानस्य त्यागः ।

तत इडाद्यावापृथिवी पूर्वचित्तय इत्यस्मिन्मन्त्रे होत्रा पठ्यमाने प्रतिप्रस्थाता आहवनीयं परितः उदुम्बरान्परिधीन्परिदधाति मध्यमदक्षिणोत्तरान् तूष्णीमेव ।

तदेवाज्यादुपस्तारः, तत्रस्थाभिघारः, उद्वासनं, प्राणदानं, कपालयोरञ्जनम् , उद्वासनम् ।

तत उत्थाय रौहिणहवन्यावादायाहवनीयाद्दक्षिणोत्तरावासादयति । एवमन्तं प्रतिप्रस्थातुस्तूष्णीं कर्म ।

ततो होत्राऽग्नस्वतामश्विनेत्युच्यमानेऽध्वर्युरुपोत्तिष्ठन् रुचितो घर्म इत्याह । प्रागकृतं चेदुत्तरं देववत्परिक्रमणं तद्यत्र कर्त्तव्यम् ।

ततो यजमानसहिताः षडृत्विजो गर्भो देवानामित्यादि नमस्ते अस्तु मा मा हिंᳫसीरित्यन्तेन सार्द्धेन कण्डिकापट्केन घर्ममुपतिष्ठन्ते । "षडुपतिष्ठन्ते" इति शतपथे । प्रस्तोतुरनुक्तत्वात् षड्ग्रहणं सयजमानाः सर्वर्त्विज उपतिष्ठन्ते इत्येवमपरे ।

ततोऽध्वर्युः पत्न्याः शिरस उद्घाटनं करोति । ततः पत्नीं महावीरमीक्षमाणं त्वष्टृमन्त इत्यमुं मन्त्रं वाचयति । ततः साम्नो निधने प्रस्तोत्रा गीयमाने अहः केतुनेति मन्त्रेण दक्षिणरौहिणमाहवनीये जुहोति इदमह्न इति त्यागः इदं घर्मायेति वा । अहः केतुना यजुषो घर्मदेवत्यं इत्युक्तत्वात् ।

इति षड्विंशे प्रवर्ग्याध्याये चतुर्थी कण्डिका ॥ ४ ॥

---

ततोऽध्वर्युर्देवस्य त्वेति मन्त्रेण रज्जुसन्दानं गृह्णाति । ततः पिन्वनमादत्ते । प्रतिप्रस्थाताऽपि तूष्णीं रज्जुसन्दानं पिन्वनं वाऽऽदत्ते ।

ततोऽध्वर्युरपरेण गार्हपत्यं दोहनार्थं गच्छन्सन् इड एहि अदित एहि सरस्वत्येहीति गामाह्वयति । ततोऽमुकि एहीत्येवं गोर्व्यावहारिकनाम्ना त्रिरुच्चैराह्वयति । प्रतिप्रस्थाताऽप्यध्वर्युमनुगच्छति । ततो धेनुं गायेति प्रैषः ।

ततो दक्षिणेन द्वारेण निष्क्रम्य गोः समीपे गत्वा अदित्यै रास्नेति गां पाशेन प्रतिमुच्य ततः स्थूणायां बध्नाति । ततः पूषाऽसीति वत्समुत्सृजति ।

ततो गोरपरपादौ सन्दानेन बद्ध्वा घर्माय दीष्वेति वत्सं स्तन्यं पिबन्तमपनयति । ततोऽश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि । ततोऽथपर्या-

एतं दुग्ध्वा स्वाहेन्द्रवदिति विप्रुषो दोहनकाले पिन्वने इतस्ततः पतितान्विन्दूनभिमन्त्रयते ।

ततो यस्ते स्तन इति स्तनमालभते । एवमेव प्रतिप्रस्थाता अजामयूखे बद्ध्वा तूष्णीं दोग्धि । तत्राजां पाशेन प्रतिमुच्य स्थूणायां बद्ध्वा बर्करमुत्सृज्य सन्दाय बर्करमुन्नीय पिन्वने यावदर्थं दोहयित्वा स्तनावालभते ।

केचिदजाया बर्करं सन्दानं च नेच्छन्ति, तदयुक्तम्, एवंशब्देन सर्वस्यातिदेशात्, शाखान्तरे बर्करस्य साक्षाच्छ्रुतत्वाच्च ।

ततः पयो गायेति प्रैषः । तत इति॰ ब्रह्मणस्पत इति होत्रोच्यमाने गोः समीपादुत्तिष्ठति । ततः उपद्रव पयसेति होत्रोच्यमाने उर्वन्तरिक्षमिति गोः समीपात् शालां प्रति गच्छति ।

आस्तम्बः--"यदि घर्मदुग्दोहकाले नागच्छेदन्यां दुग्ध्वा प्रवृज्य तां सुत्यायां ब्राह्मणाय दद्याद्यमनभ्यागमिष्यन्स्यादि"ति । ततो यथागतं प्रत्यागत्य दुग्धं क्वचित्सुगुप्ते निधाय कस्य चिद्धस्ते वा समर्प्य वाऽध्वर्युर्गायत्रं छन्दोऽसीति प्रतिमन्त्रं परीशासौ सन्दंशाकारौ आदत्ते ।

ततो वसिष्ठशफौ गायेति प्रैषः । ततस्ताभ्यां परीशासाभ्यां सन्दंशाभ्यां मृद्दिग्धाभ्यान्द्यावापृथिवीभ्यां त्वेति महावीरं परिगृह्णाति ।

ततो महावीरं परीशासाभ्यामूर्ध्वमुत्पाटयत्यध्वर्युः । विरोधात् प्रतिप्रस्थाता मुञ्जवेदेनाधस्तादुपमृज्य तल्लग्नं सिकताभस्मादिकं पातयित्वोपयमन्याऽधस्तादुपगृह्णाति अन्तरिक्षेणेति ।

ततः शालादाहभयादपरेण द्वारेण शालाया बहिर्निःसृत्य दूरे गत्वा कस्मिंश्चिद्विपुले आसने पात्रे महावीरं निधाय परितो लघुपाषाणैरवष्टभ्नाति ।

ततोऽजापयसा महावीरमवसिच्य शान्ते जाते इन्द्राश्विनेति गोः पयो मध्ये निनयति । ततो यथागतं शालायां गार्हपत्यसमीपमागत्य खरस्योपरि महावीरं धारयित्वा प्रैतु ब्रह्मणस्पतिरिति होत्रा पठ्यमानेऽध्वर्युराहवनीयं प्रति घर्महस्त एव गच्छन् समुद्राय त्वेति वातनामानि स्वरेण जपति पितृमते स्वाहेत्यन्तानि ।

इति षड्विंशे प्रवर्ग्याध्याये पञ्चमी कण्डिका ॥ ५ ॥

---

ततः स्वाहा घर्मायेत्यनेनोपयमन्या स्रुचा घर्ममध्ये घृतमासिञ्चति यद्यजापयोऽवसेककाले घर्मान्निःसृत्य बहिःपात्रे पतितं भवति । ततः स्वाहा घर्म पित्र इति जपति । ततोऽतिक्रम्याश्राव्य घर्मस्य यजेति होतारं प्रत्याह ।

ततो विश्वा आशा इति मन्त्रेण वषट्कृते जुहोति इदमश्विभ्याम् । ततो दिवि धा इति मन्त्रेण घर्मं त्रिरूर्ध्वं कम्पयति सकृन्मन्त्रेण द्विस्तूष्णीम् । ततोऽनुवषट्कारे कृते स्वाहाऽग्नय इति पुनर्जुहोति इदमग्नये ।

ततो ब्रह्मा अश्विना घर्ममिति हुतशेषं घर्मपात्रस्थमभिमन्त्रयते अपातामित्यनेन । यजमानोऽपि पात्रस्थमेवाभि मन्त्रयते ।

ततोऽध्वर्युः पिन्वमानमितस्ततः पात्रमध्ये उच्छलन्तं घर्ममिषे पिन्वस्वेत्यभिमन्त्रयते । ततो घर्मोऽसि इवर्मेत्युत्तरपूर्वार्द्धं प्रत्युत्क्रामति । ततोऽमेन्यस्म इति घर्ममाहवनीयादुत्तरे खरं निदधाति ।

ततो घर्ममध्ये शकलानि न्यज्यन्यज्य नितरामक्त्वा अक्त्वा तैर्विकङ्कतशकलैर्घर्मस्थमाज्यमाहवनीये जुहोति । स्वाहा पूष्णे शरस इति प्रति मन्त्रं हुत्वा हुत्वा प्रतिहोमं शकलं प्रथमपरिधौ निदधाति इदं पूष्णे शरसे इति । ग्रावभ्य इति द्वितीये । इदं प्रतिरवेभ्य इति तृतीये । चतुर्थं शकलं घर्मे अक्त्वा अहुतमेवादीचीं दिशमीक्षमाणोऽपसव्यं कृत्वा दक्षिण प्रदेशे वेदिमध्ये बर्हिष्युपगूहति इदं पितृभ्य ऊर्ध्वबर्हिर्भ्यो घर्मपावभ्य इति । अपसव्येन त्यागः ।

ततोऽपामुपस्पर्शनमुभयोः । इदं द्यावापृथिवीभ्यामिति पञ्चमे, इदं विश्वेभ्यो देवेभ्य इति षष्ठे । सप्तमं शकलं सर्वलेपाक्तं दक्षिणेक्षमाण उत्तरतोऽवस्थिताय प्रतिप्रस्थात्रे समर्पयति इदं रुद्राय रुद्रहूतय इति त्यागः । ततोऽपां स्पर्शनम् ।

ततः प्रतिप्रस्थाता तमध्वर्युणा समर्पितं शकलं शालाया उत्तरत उदगग्रं निरस्यति । ततः स्वाहा संज्योतिषेति मन्त्रेणोपयमन्यां घर्म्यमासिञ्चति । ततः समाप्ते निधने प्रस्तोत्रोच्यमानेऽध्वर्युरह्नः केतुनेति मन्त्रेणोत्तरं रौहिणं जुहोति इदं घर्मायेत्येव त्यागः ।

ततः परिधौ स्थापितानि पञ्च शकलान्याहवनीये प्रक्षिपति । तत उपयमनीस्थघर्मस्याग्निहोत्रावृता होमं करोति—तत्र कूर्चनिधानं समिदाधानं प्रदीप्तायां पूर्वाहुतिहोमः समन्त्रकः इदं सूर्याय । कूर्चं निधानं न गार्हपत्यावेक्षणं पूर्वाहुतेरुत्तरतो द्वितीयाहुतिहोमस्तूष्णीम् इदं प्रजापतये । द्विःप्रकम्प्य कूर्चे निधानम् उपमार्जनं च । समन्त्रकः पूर्वाहुति होम इति सर्वसूत्रेषु ।

ततो वाजिनवदुपहवपूर्वकं होत्रध्वर्युब्रह्मप्रस्तोतृप्रतिप्रस्थात्रग्नीधयजमानानां क्रमेण मधु हुतमित्यनेन मन्त्रेण भक्षणं, यजमानस्य प्रथमं पश्चाच्च वा भक्षणम् ।

तत उपयमनीमुच्छिष्टखरे प्रक्षाल्य निदधाति अथवा परिधौ निहि-

त् ॥१०॥ ताभिरेहीनि सुब्रह्मण्यध्याहवनीयᳪ हुत्वाऽभ्यु-क्ष्याग्नीधे प्रयच्छति निधानाय ॥११॥ सुब्रह्मण्याश्च प्रेष्यति सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति ॥१२॥ प्रवर्ग्योपसदा-वतः ॥१३॥ उपसदेव वाऽप्रवर्ग्ये ॥१४॥ प्रणीताद्युपसत् ॥१५॥ हविष्कृतमाहूयानाहननमपेषणे तीक्ष्णार्थत्वात् ॥१६॥ स्याद्वा धर्ममात्रत्वात् ॥१७॥ श्रुतेश्च ॥१८॥ परिस्तरणपात्रसᳪसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि कृत्वा स्फ्यादि करोति ॥१९॥ बर्हिषः प्रच्छेदᳪ हरति ॥२०॥ मदन्तीरिति वा प्रेष्यति ॥२१॥ मात्रावदिध्माबर्हिः ॥२२॥

---

तासां शकलानामस्मिन्काले आहवनीये प्रहरणम् । ततः सᳪसाद्यमानायानुब्रूहीति होतारं प्रेष्यति सᳪसाद्यमानेभ्योऽनुब्रूहीति वा ।

ततोऽत्र सूयवसाद्भगवतीत्युच्यमाने केचित् धेनवे तृणोदके प्रयच्छन्ति ।

ततो घर्मपात्रजातमासन्द्यां करोति तत्राभीममिति महावीरस्यासन्द्यां निधाने मन्त्रः । इतराणि पात्राणि सर्वाणि तूष्णीमासन्द्यां निदधाति । ततः सर्वेषामृचं वाचमिति शान्तिकरणं द्वाराणामुद्घाटनम् ।

आपस्तम्बः—"यत्र क्वच विप्रकान्ते प्रवर्ग्य आदित्योऽस्तमियात् कृतान्तादेव विरमेच्छ्वोभूते शेषं समाप्नुयादि"ति । ( १५. २. १३ ) तथा "यदि घर्मेण प्रचरत्स्वादित्योऽस्तमियादपरस्यां द्वारि दर्भेण हिरण्यं प्रबध्योद्वयं तमसस्परीत्युपस्थायो दुत्थं चित्रमिति द्वाभ्यां गार्हपत्ये हुत्वाऽप्रवृज्य श्वोभूते "वयः सुपर्णा इत्यादित्यमुपतिष्ठन्त" इति (१५.१८. १२.)॥

इति पद्विवाल्य प्रवर्ग्याध्यायस्य षष्ठी कण्डिका ॥ ६ ॥

---

अथोपसदिष्टिः—तत्र चतुरासनं ब्रह्मोपवेशनं प्रणीताप्रणयनम्, आहवनीयस्यैव परिस्तरणं, पात्रासादनम्, अग्निहोत्रहवणी, वज्रः, शम्या-दृषदुपलं, पवित्रच्छेदनानि पवित्रे, स्थाली, आज्यं च, वेदश्च, वेदितृणं, एकादशेध्मकाष्ठानि, एकवृत्स्तरणपर्याप्तं बर्हिः, स्रुवो जुहूः उपभृत्, योक्त्रं, यूनः, कुशाश्च, आतिथ्याप्रस्तरविधृती, परिधयः, कुशास्तीर्णं पीठम् । ततः पवित्रच्छेदनं, प्रोक्षणीसंस्कारः, पात्रप्रोक्षणम्, असश्चरे प्रोक्षणीनां निधानम्, कुक्कुटाहननम्, आज्यनिर्वापो वेदबन्धः, अग्नीध एवाज्याधिश्रयणम्, अध्वर्योः पर्यग्निकरणम् ।

**स्रुवतृतीयाः स्रुचः सम्मार्ष्टि ॥२३॥ अष्टगृहीतं जुह्वां चतुरुपभृति यथाप्रकृति वा ॥२४॥ एकवृत्स्तरणम् ॥२५॥ आज्यस्थाली ध्रुवार्थे ॥२६॥ स्रुवाघारमाघार्य सम्मृष्टऽ आश्राव्य सीद होतरित्येव ब्रूयात् ॥२७॥ प्रसूतोऽतिक्रामन्नग्नयेऽनुवाचयति ॥२८॥ अर्द्धं हुत्वा सोमाय विष्णवे**

ततो वेदिसमीपे गत्वा सतृणवज्रादानम् । सव्ये कृत्वा दक्षिणेनालभ्य जपः, स्तृतायामेव वेद्यां तृणनिधानं, स्तम्बयजुर्हरणे स्तृतस्यातिथ्याबर्हिषः खण्डं प्रछिद्य प्रच्छिन्नद्योत्करे प्रहरति ।

पूर्वपरिग्रहः, उत्तरपरिग्रहः, अग्नीधः प्रोक्षणीर्धारणम्, अध्वर्योः स्फ्यमुद्यम्य प्रोक्षणीप्रैषः, स्रुचौ सम्मृड्ढीति विशेषः, प्रोक्षणीर्मेदन्तीरासादयेति वा प्रैषः । न स्फ्योदकप्रहारः, न पाण्योरवनेजनम्, अपरेण प्रणीतानां स्फ्येध्मबर्हिषां सादनं, ततः स्रुवजुहूपभृतां सम्मार्गः, संमार्जनानामपासनम्, पत्नीसन्नहनम्, आज्योद्वासनम्, पत्न्या अवेक्षणम्, वेद्यामासादनम्, आज्योत्पवनं प्रोक्षण्युत्पवनम्, आज्यावेक्षणम्, जुह्वां तूष्णीमष्टग्रहीतग्रहणम, उपभृति चतुर्गृहीतग्रहणम्, अथवा जुह्वां चतुर्गृहीतमुपभृत्यष्टगृहीतं प्रकृतिवत्तूष्णीमेव ।

तत इध्मप्रोक्षणं बर्हिः प्रोक्षणं, बर्हिः प्रतिगृह्य वेद्यां निधानम्, बर्हिः प्रोक्षणम्, तत्र स्रुग्भ्यामिति विशेषः । मूलावसेकः, प्रणीतासु पवित्रकरणम्, बर्हिर्विस्रंसनम्, आतिथ्याप्रस्तरस्य ग्रहणं, ब्रह्मणे समर्पणं, ततः सन्नहनविस्रंसनम्, दक्षिणस्यां श्रोणौ निधानम्, अन्यैरवच्छादनम्, एकवृदित्येकधातु एकवारमित्यर्थः । तेन एकेनव मन्त्रेण पश्चाद्भागे सर्वं स्तृणीयादित्यर्थः ।

तत इध्मात्समिध आदानं प्रस्तरस्य च । आहवनीयकल्पनं, नोल्मुकोदूहनं, परिधिपरिधानं, स्पृश्यास्पृश्ययोराधानम्, आहवनीयेक्षणम्, आवृत्य विधृत्योः स्तरणं प्रस्तरस्य च । अभिनिधानं, जुहूपभृतोरासादनम्, आज्यस्थाल्याश्च, सर्वालम्भः, आत्मालम्भः, उदकालम्भः, एहि होतरित्यामन्त्रणम्, होतृषदनस्थापनम्, सामिधेनीप्रैषः, सन्तन्वन्निति प्रैषः ।

इदमहं नवमेनेत्यवबाधनं, नवानामिध्मकाष्ठानां प्रतिप्रणवं प्रक्षेपः। आहवनीयोपवाजनं पूर्वाघारः अग्निसममार्गप्रैषः अग्निसंमार्गः,आश्राव्य सीद होतरित्येतावदेव ब्रूयात् नाग्निर्देव इत्यादि ।

ततो होता होतृषदन उपविश्य प्रयाजाभावेऽपि वचनात्स्रुगादापनं

समानीय ॥२९॥ सादयित्वा स्रुचौ सोमाप्यायनाद्या सुब्रह्मण्याप्रैषात् ॥३०॥ अकृत्वा प्रस्तरमुपसदं जुहोति स्रुवेण या तऽ इत्ययःशयामन्वारब्धे ॥३१॥ द्विरेकया चरति सु·

भवति। ततोऽध्वर्युर्जुहूपभृतावादायातिक्रामन् होमार्थं गच्छन्सन्नग्नयेऽनुब्रूहीति होतारं प्रेष्यति। आश्राव्याग्निं यजेति। जुह्वामष्टगृहीतपक्षे अर्धस्याग्नेः पूर्वार्द्धे होमः, इदमग्नये।

ततः सोमायानुब्रूहि, सोमं यज, द्वितीयस्यार्द्धस्य मध्ये होमः, इदं सोमाय। तत उपभृदाज्यस्य समानयनं कुर्वन्विष्णवेऽनुब्रूहीत्याह, विष्णुं यज, पश्चाद्भागे होमः।

उपभृत्यष्टगृहीतपक्षे प्रथमं जुहूस्थं चतुर्गृहीतमग्नये हुत्वा उपभृतोऽर्द्धं समानीय सोमाय हुत्वा पुनः समानयनं कुर्वन्विष्णवेऽनुवाचनं कुर्यात्।

ततः स्रुचौ सादयित्वा सोमाप्यायनादि सुब्रह्मण्याप्रैषान्तमातिथ्यावत्। ब्रह्मोद्गातृहोत्रध्वर्य्वग्नीध्रयजमाना अनामिकायां हिरण्यं बद्ध्वा मदन्तीरुपस्पृश्याहवनीयं पूर्वेण गत्वा सोमस्यालम्भं कुर्वन्ति अं॰शुरं॰शुष्ट इति।

ततस्तथैव प्रत्यागत्य प्रस्तरे उत्तानहस्ता दक्षिणोत्ताना वेष्टा राय इति पाणी निदधति। ततः पवित्रप्रतिपत्तिः, अग्निसंमार्गप्रैषः, अग्निसंमार्गः। व्यूहने-अग्नेः सोमस्य विष्णोरुज्जितिम्, अग्निः सोमो विष्णुस्तमपनुदन्त्विति। अभ्युदय परिध्यञ्जनं, न सूक्तवाकप्रैषः प्रस्तरहोमाभावात्। कर्कमते तु भवति।

प्रस्तरादानम्, अग्रस्य जुह्वामञ्जनम्, मध्यस्योपभृति, मूलस्याज्यस्थाल्याम्। ततः स्रुवेणाज्यं गृहीत्वा यजमानेऽन्वारब्धे या ते अग्नेऽयः शयेति जुहोति। इदमग्नये अयःशयायै तन्वै। इदमग्नये इति वा "या ते अग्नेऽयाशया" रजाशया हराशया ... "योनी"ति वचनात्।

ततः परिधिविधृत्योरादानम्, 'अग्नीन्मदन्त्यापा' इति प्रैषः। मदन्तीति प्रत्याहाग्नीत्। ततो मरुतामिति नीचैर्हरणम्, ततस्ताभिरेहीति ब्रुवतोऽध्यध्याहरणम्। अग्नीधा आहृतेन मदन्त्युदकेन प्रस्तरस्याभ्युक्षणं, ततोऽग्नीधे निधानार्थं समर्पणं प्रस्तरस्य।

ततश्चक्षुष्पा इत्यात्मालम्भः उदकालम्भः, संस्रवाहुतिः, उत्तरांसे स्रुचोर्निधानं घृताची इति। वेद्यालम्भाभावः। वेदविमोकः, पत्नीवृद्धिहोमः, प्रणीताविमोकः, सुब्रह्मण्याप्रैषः, तदाह्वानम्।

अपराह्णे तानूनप्त्रघृतमध्ये यजमानस्य दुग्धं निनीय यजमानाय व्रतं

साय्ं सुपूर्वाह्णे च ॥३२॥ एवमितरे अन्वहं रजःशयाꣳ हरिशयां च ॥३३॥ एकाहस्त्युपसत्को द्वादश वा ॥३४॥२॥

त्रिस्तनं प्रथमायां दोहयति ॥१॥ एकापचयेनोत्तरयोः ॥२॥ विपर्यस्य वाऽनग्निचित्ये ॥३॥ एवं प्रवृद्धौ समं विभजेत् ॥४॥ स्वस्थानविवृद्धिः ॥५॥ औपवसथ्यात्पूर्वं-

---

देयम्। ततः प्रवर्ग्यः शान्त्यादिशान्त्यन्तः। तत्र विशेषः—रात्रिः केतुनेति रौहिहोमः, इदं रात्र्यै इदं घर्मायेति वा। अग्निहोत्रावृता होमे इदमग्नय इति।

तत उपसत्–तत्र या ते अग्नेऽयः शयेत्युपसदाहुतिः। ततोऽनस्तमिते वाग्यमनप्रैषः। अस्तमिते वाग्विसर्गप्रैषः, व्रतकरणप्रैषः, वाग्विसर्गः।

इत्यष्टमाध्यायस्य द्वितीया कण्डिका ॥ २ ॥

---

त्रिस्तनं व्रतदुघे धुक्ष्वेति प्रैषः एकस्तनमिति वा। प्रथमायामुपसदि त्रिस्तनमेकस्तनं वा। व्रतकरणम्। गावौ दुग्ध्वा गार्हपत्ये दीक्षितव्रतस्य श्रपणं दक्षिणाग्नौ पत्न्याः। रात्रौ यत्नेन रक्षणम्। मेहनस्वपने पूर्ववत्। अपरात्रे व्रतकरणं च पूर्ववत्। प्रातर्विबुद्धवाचनम्। अनुदिते वाग्बन्धप्रैषः, वाग्यमनम्, उदिते वाग्विसर्गप्रैषः, व्रतकरणप्रैषः, वाग्विसर्गः, द्विस्तनं व्रतदुघे धुक्ष्वेति प्रैषः, द्विस्तनं दोहयित्वा श्रपणं पूर्ववत् पूर्वाध। प्रवर्ग्यः शान्त्यादिशान्त्यन्तः। तत्राहःकेतुनेति रौहिणहोमः। इदं सूर्यायेत्यग्निहोत्रावृता होमे त्यागः।

तत उपसत्—तत्र रजःशयेत्युपसदाहुतिः, इदमग्नये रजःशयायै तन्वै। इदमग्नय इति त्यागः। ततो वेदिमानम्–तत्र शालायाः पूर्वद्वारमध्यात् त्रीन्प्रक्रमान्द्विपदान्प्राच्यां प्रक्रम्य शङ्कुनिखननम्। तस्य शङ्कोरन्तःपात्यसंज्ञेति कर्कादयः। तस्य शालाशङ्कोरन्तरालदेशस्यान्तःपात्यसंज्ञेति हरिस्वामिनः।

ततो ब्रह्मयजमानौ उत्तरवेदेर्दक्षिणतो बहिर्वेदि संस्पृष्टावुपविशतः। एवमग्नीषोमप्रणयनादर्वागत्रैवोपवेशनं ब्रह्मणः। अथवा यत्र यत्र कर्म कुर्वन्ति तत्र तत्र गत्वा सन्निधौ दक्षिणत उपविशति। ब्रह्मणः समन्त्रक आसनसंस्कारः।

ततो यजमान वाचं यच्छेति प्रैषः। शालाद्वार्यस्योत्तरतः षट्कासादनम्–अग्निहोत्रहवणी, वज्रः, परिच्छेदनानि पवित्रे, अन्तर्धानतृणं श-

ऽहनि पौर्वाह्णिक्यः प्रचर्य वेदिं मिमीते ॥ ६ ॥ पूर्वार्ध्यात्स्तम्भात्पुरस्तात्त्रिषु प्रक्रमेषु शङ्कुं निहन्ति सोऽन्तःपात्यः ॥७॥ तस्मात्पुरस्तात्षट्त्रिंशति ॥८॥ दक्षिणोत्तरौ च पञ्चदशसु पञ्चदशसु ॥९॥ अर्द्धमसदशेषु वा ॥१०॥ पूर्वार्ध्याच्च द्वादशसु द्वादशसु ॥११॥ पृष्ठ्यामायम्य स्फ्यादि करोति खादिरेणाऽऽच्छादनात् ॥१२॥ उपरवदेशात्स्तम्बयजुर्हरति ॥१३॥ उत्तरांऽसात्पश्चाद्ध्यर्द्धे पदे चात्वालम् ॥ १४ ॥ यथोक्तं वा ॥ १५ ॥ प्रागनुपसदं समस्य पौर्वा-

---

ह्या च । तत पवित्रच्छेदनं, मदन्त्युदकमग्निहोत्रहवण्यां कृत्वा प्रोक्षणीसंस्कारः । वज्रान्तर्द्धानतृणशम्यानां प्रोक्षणम् ।

पदद्वयस्यापैकः प्रक्रमः । एवंविधप्रक्रमपरिमाणं काष्ठादि गृहीत्वा मध्यमशङ्कोरारभ्य दक्षिणस्यां दिशि पञ्चदशसु प्रक्रमेषु शङ्कुं निखनति सा वेदेर्दक्षिणा श्रोणिः । पुनस्तस्यां मध्यमशङ्कोरुत्तरस्यां दिशि पञ्चदश प्रक्रमान्प्रक्रम्य शङ्कुं निखनति सा वेदेरुत्तरा श्रोणिः ।

पुनस्तस्मान्मध्यमशङ्कोः प्राच्यां षट्त्रिंशत्प्रक्रमान् प्रक्रम्य शङ्कुं निखनति स वेदेः पूर्वार्द्धः यूपावटस्थानं च । ततस्तस्माच्छङ्कोर्दक्षिणस्यां दिशि द्वादश प्रक्रमान्प्रक्रम्य शङ्कुः स वेदेर्दक्षिणोंऽसः । पुनरपि तस्मात्पूर्वार्द्धशङ्कोरुत्तरतो द्वादशसु प्रक्रमेषु शङ्कुः स वेदेरुत्तरोंऽसः । एवं वेदिं मित्वा श्रोणेरारभ्य दक्षिणपार्श्वं दक्षिणांसान्तं यावत् स्फ्येन रेखा कार्या । एवमुत्तरश्रोणेरारभ्योत्तरांसपर्यन्तं च । "सर्वतः स्फ्येन परितनोति मध्ये पृष्ठ्या" इति सूत्रान्तरे ।

अत्र वेदिसाधनोपायभूतः श्लोकः—

'पञ्चदशमथैकविंशं त्रिकमपरं परतस्त्रिकञ्चापि ।
द्वादशसु पाश उत्तमः सोमे रज्जुप्रसारणमेतत्' इति ॥

ततो वेदिपरिसमूहनम्, उत्तरदेशे चात्वालादपरस्यां दिशि रथान्तराले उत्करकरणम् । "चात्वालाद् द्वादशसु प्रक्रमेषु प्रत्यगुत्करः ॥ इति मानवे । परिशिष्टे च—

"चात्वालादुत्करं कुर्यादपरेण रथान्तरम् ।
उत्करादुत्तरं कुर्यादूवध्यस्य रथान्तरम् ॥
ऊवध्यात्पूर्वतः कुर्याच्छामित्रस्य रथान्तरमि"ति ।

ततोऽन्तःपात्यादारभ्य पूर्वार्द्धे शङ्कुं यावत्पृष्ठ्यासंज्ञं वरण्डकं कुर्यात् ।

तत उपरवदेशे उपविश्य सतृणवज्रादानं, सव्ये करणं, दक्षिणेनालभ्य जपः, उपरवदेशे तृणनिधानादि सतृणपुरीषप्रक्षेपान्तम् । ततोऽन्तःपात्ये उपविश्य पूर्वपरिग्रहप्रैषः, पूर्वपरिग्रहः, यूपावटावधि दक्षिणत उत्तरतश्च परिग्रहणम्, उपरवदेश एव त्रिरुल्लेखनम्, ततोऽग्नीधो हरणं संमर्शनं च ।

ततः संमर्शनान्ते शम्यां स्फ्यं चादायाध्वर्योर्वेदेरुत्तरांसात्पदत्रयपरिमाणेषु त्रिषु प्रक्रमेषु प्रतीच्यां दिशि चात्वालमानं, तत्र शम्यानिधानाद्युत्तरवेदिच्छादनान्तं पशुवत् । उदुम्बरशाखाभिः प्लक्षशाखाभिर्वोत्तरवेदिश्छन्ना वसतीति ।

अत्रापस्तम्बः—"अपरेण यूपावटं सञ्चरमवशिष्य वेद्यामुत्तरवेदिं दशपदां सोमे करोती"ति । एवमन्येष्वपि सूत्रेषु युगमात्री यजमानदशपदप्रमाणा वोत्तवेदिः । षडशीत्यङ्गुलै र्युगम् । सा च "यावत्प्रमाणेत्यादि चतुरस्रसाधनोपायेन साधनीया ( का०शु० ३।२ ) ।

ततोऽपराह्णे द्विस्तनं व्रतकरणम् । ततः प्रवर्ग्यः शान्त्यादिशान्त्यन्तः । तत्र रात्रिः केतुनेति रौहिणहोमः । अग्निहोत्रावृता होमेऽग्निर्देवता । तत उपसत् । तत्र रजःशयेत्युपसदाहुतिः ।

अनस्तमिते वाग्बन्धप्रैषः । वाग्यमनम्, अस्तमिते वाग्विसर्गप्रैषः, वाग्विसर्जनं, ततो द्विस्तनं व्रतदुघे धुक्ष्वेति प्रैषः । ततो व्रतयोर्यथोक्तं श्रपणं, रात्रौ मेहनस्वपने पूर्ववत् ।

अपररात्रे यथोक्तं व्रतकरणं, प्रातर्विबुद्धवाचनम्, अनुदिते वाग्बन्धप्रैषः, वाग्यमनम्, उदिते वाग्विसर्गप्रैषः, व्रतकरणप्रैषः, वाग्विसर्जनम्, एकस्तनं त्रिस्तनं वा व्रतदुघे धुक्ष्वेति प्रैषः । यदि प्रथमायां त्रिस्तनं व्रतदुग्धं तर्ह्येकस्तनं, यदि च तत्र एकस्तनं तर्हि त्रिस्तनं दुग्ध्वा यथोक्तं श्रपणम् । ततः प्रवर्ग्यः, तत्राहःकेतुनेति रौहिणहोमः । इदं सूर्यायेत्यग्निहोत्रावृता होमे त्यागः ।

तत उपसत्–तत्र या ते अग्ने हरिशयेत्युपसदाहुतिः, इदमग्नये हरिशयायै तन्वै, इदमग्नय इति वा । तदर्द्धव्रतप्रदानं पत्नीयजमानाभ्याम् । तत एतदानीमेव द्वितीयः प्रवर्ग्यः—तत्र रात्रिः केतुनेति रौहिणहोमः ।

अग्निहोत्रावृता होमे इदमग्नये इति त्यागः । तत उपसदिष्टिः, तत्र हरिशयेत्युपसदाहुतिः । ततः प्रवर्ग्यकरणपक्षे उपसत्समाप्त्यन्ते प्रवर्ग्योत्सादनं भवति तत् षड्विंशाध्यायान्ते पठितं सदिह लिख्यते—

तत्रान्तःपात्यसमीपे वेदिमध्ये उपयमन्यादि सर्वं परिघर्म्यं निदधा-

ति । ततः शालाया दक्षिणेन द्वारेणोच्छिष्टखरं निर्हृत्य दक्षिणतो विप्रकृष्टं निदधाति । ततो ब्रह्मयजमानौ शालाद्वार्यं दक्षिणेनोपविशतः ।

ततोऽध्वर्युराज्यं संस्कृत्य चतुर्गृहीतं गृहीत्वा आहवनीयसमीपे आगच्छति । तिसृभिः शालाकाभिरेकः शालाकः । एवं विधान् त्रीन् शालाकानादायाग्नीध्रस्तेषां त्रयाणां मध्ये एकमाहवनीये प्रदीप्याहवनीयस्योपरि मुखमात्रे धारयति । अध्वर्युस्तिष्ठन् स्रुचि चतुर्गृहीतस्य तृतीयांशं या ते घर्म दिव्या शुगिति जुहोति । इदं घर्मस्य दिव्यायै शुचे इति त्यागः, इदं घर्मायेति वा । "या ते घर्म" इति कात्यायनवचनात् ।

तत आग्नीध्रो द्वितीयं शालाकमाहवनीये प्रदीप्य नाभिदघ्ने धारयति। ततोऽध्वर्युस्तिष्ठन्नेव या ते घर्मान्तरिक्ष इति तस्मिन् शालाके चतुर्गृहीतस्य द्वितीयभागं जुहोति, इदं 'घर्मस्यान्तरिक्ष्यै शुचे, इदं घर्मायेति वा ।

तत आग्नीध्रस्तृतीयशालाकमादीप्य जानुदघ्ने धारयति । अध्वर्युराग्नीध्रहस्तात्तृतीयं शालाकमादायाहवनीये प्रास्योपविश्य चतुर्गृहीतशेषं या ते घर्म पृथिव्यामिति जुहोति । इदं घर्मस्य पार्थिव्यै शुचे, इदं घर्मायेति वा।

ततः पत्नीं पुरस्कृत्य सर्वे शालायाः पूर्वद्वारेण बहिर्निष्क्रामन्ति । क्षत्रस्य त्वेत्यध्वर्योर्निष्क्रमणे मन्त्रः । ततोऽन्तःपात्ये आगत्य साम गायेति प्रस्तोतारं प्रेष्यति । सर्वे निधनं पठन्ति । ततः सामसमाप्तौ सर्वे सम्भारमादायोत्तरवेदिं प्रति सर्वे गच्छन्ति । अर्द्धमार्गे तत्सर्वं निधाय पुनः सप्रैषं सामगानं, सर्वेषां निधनपाठः ।

तत उत्तरवेदिसमीपे गत्वा पुनरपि सप्रैषं सामगानं, निधनं सर्वेषाम् । तत उपविश्य प्रवृञ्जनीयस्य महावीरस्य नाभेः पुरस्तान्नाभिसंलग्नस्यैव निधानं चतुःस्रक्तिरिति मन्त्रेण ।

ततः पूर्वं द्वितीयं महावीरं निदधाति, ततः पूर्वं तृतीयम् । अयमेव निधानमन्त्रः, तृतीयमहावीरात्पूर्वं तूष्णीमुपशयां निदधाति । परिशासावभितो निदधाति एकं दक्षिणतः द्वितीयमुत्तरतः । ततो बहिःप्रदेशे अभितो रौहिणहवन्यौ स्रुचौ अवकृष्टे निदधाति ।

तत उत्तरस्यां रौहिणहवन्यामुत्तरतोऽभ्रिं निदधाति । दक्षिणरौहिणहवन्या दक्षिणतो घर्मासन्दीं निदधाति । अभ्रेरुत्तरतः कृष्णाजिनं निदधाति, सर्वतो धवित्राणि, एकमासन्द्यां दक्षिणतः, द्वितीयं पश्चात्, तृतीयं कृष्णाजिनस्योत्तरतः ।

ततः परिधीनपि दक्षिणपश्चिमोत्तरतो धवित्रेभ्यो बाह्यतो निदधाति । ततो रज्जुसन्दानं वेदमुपयमन्यां निधायाऽऽसादितानां पात्राणां पश्चात्तामुपयमनीं प्रागग्रामासादयति ।

र्ह्विषा प्रचर्याद्व्रतं प्रयच्छति ॥ १६ ॥ सर्वं वाऽग्नौ ॥ १७ ॥ उभाभ्यां चरिते प्रवर्ग्यमुत्सादयति यथोक्तं कुर्याच्चेत् ॥ १८ ॥ अग्निं प्रणयत्यौपवसथ्यनिर्वपनात्कृत्वा हविर्धाने स्थापयति पृष्ठ्यामुभयतो धुर्यस्त्वन्तरे प्रक्षालिते प्राची उभयतः शालामावर्त्य वर्षीयो दक्षिणम् ॥ १९ ॥ तयोश्छादिरध्यस्यति ॥ २० ॥ भित्ति वाऽभावे ) २१ ॥ अन्यत्रापि ॥ २२ ॥ रराट्यां पुरस्तादासजत्यैषीकीम् ॥ २३ ॥

---

तत उपयमन्यां दण्डमभितो दक्षिणोत्तरे पिन्वने सादयति । ततः पिन्वनयोः पश्चात्स्थूणामयूखं प्रागग्रं सादयति, स्थूणां दक्षिणतो मयूखमुत्तरः । तयोः पश्चाद्रौहिणकपाले दक्षिणोत्तरे आसादयति । तयोः पश्चाद् धृष्टी आसादयति ।

ततः सर्वपात्रमध्ये अन्यत्स्रुवकूर्चादि निदधाति । ततः प्रचरणीयौ खरौ सर्वपात्राणामुत्तरतः पूर्वापरौ निदधाति पूर्ववत् । ततो मार्जालीयधिष्ण्यास्थानस्य दक्षिणतो वेदेर्बहिरुच्छिष्टखरं निदधाति ।

ततो गर्त्तवन्ति घर्मपात्राणि घर्मं तत्त इति मन्त्रेण दुग्धेन पूरयति । तानि च सप्त–महावीरत्रयं पिन्वने उपयमनी स्रुचश्चेति । तत्रासेचनवतां पूरणं कुर्वता अर्द्धं भूयो वा पयोऽवशेषणीयं तस्य स्थापनं कार्यम्, अपराह्णे यजमानाय व्रतमिश्रस्य दानार्थम् ।

ततो वार्षाहरं साम गायेति प्रैषः । प्रस्तोतुस्तस्य गानम् । ततोऽध्वर्युरुदपात्रं गृहीत्वा अचिक्रददिति मन्त्रेण उत्तरवेदिमीशानकोणादारभ्य त्रिवारं परिषिञ्चति तत्र सकृन्मन्त्रेण द्विस्तूष्णीम् । तत इडाहोत्रियं साम गायेति प्रैषः तद्गानम् । तत्रापि सर्वे निधनमुपयन्ति ।

ततः सर्वेषां ब्रह्मादीनां पत्नीयजमानयोश्च क्रमेण चात्वाले मार्जनं सुमित्रिया न इति मन्त्रेण । पत्न्या अपि मन्त्रपाठः ।

ततो यजमान उद्वयमित्यनेन मन्त्रेणैशानीं दिशं प्रति गच्छति । पश्चादनवलोकनमकुर्वन्तः शालां प्रत्यागच्छन्ति सर्वे । ततो यजमान एधोऽसीति मन्त्रेण समिधं हस्तेनादत्ते ।

ततः समिदसीति मन्त्रेणाहवनीये तां समिधमादधाति । पत्नी च तूष्णीं गार्हपत्ये समिधमादधाति । ततो यजमानः स्वस्थान उपविश्य प्रवृञ्जनीयौ सुवर्णरजतशतमानौ ब्रह्मणे ददाति, घर्मदुघामध्वर्यवे ददाति,

उच्छ्रायीभ्यां परिवार्य छदिः पश्चाच्च ॥२४॥ चतुर्गृहीतं शालाद्वार्ये जुहोति युञ्जत इति ॥२५॥ स गार्हपत्योऽतः ॥२६॥ अपरं दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाभिजुहोतीदं विष्णुरिति ॥२७॥ दक्षिणया द्वाराऽऽनीता पत्नी पाणिभ्याᳫं शेषं प्रतिगृह्याक्षधुरावनक्ति प० राग्देवश्रुताविति युगपत्तद्वचनत्वात् ॥२८॥ भेदे मन्त्रावृत्तिः सान्निपातिकत्वात् ॥२९॥ स्रुक्कुम्भाल्यौ प्रतिगृह्य

---

यजमानव्रतदुघां होत्रे ददाति, पत्नीव्रतदुघामुद्गातृभ्यो ददाति । ततोऽग्नीधेऽजां ददाति ।

इति प्रवर्ग्योत्सादनम् ।

अथाग्निप्रणयनमुपयमन्युपनिवपनान्तं पशुवत् । "महावेदिमुत्तरेण प्रदीतस्येध्मस्योत्तरवेदिं प्रति हरणम्" इति कठसूत्रात् । ततो हविर्द्धानयोरुत्करेप्रक्षालनं, तत उत्तरवेदेः पुरस्तादुभयोर्निधानम् । तयोर्मध्ये महद्धविर्द्धानमध्वर्युर्गृहीत्वा वेदिं दक्षिणेन नीत्वा शालाया दक्षिणतो नयति । प्रतिप्रस्थाता च द्वितीयं हविर्द्धानमादाय वेदिमुत्तरेण नीत्वा शालाया उत्तरतो नयति । शालायाः पश्चादुभौ शकटयोर्मुखं संस्पर्शयत इत्याचारः ।

ततोऽध्वर्युः स्वकीयं हविर्द्धानं शालां दक्षिणेनैव प्रत्यानयति । प्रतिप्रस्थाता शालामुत्तरेण स्वकीयं हविर्द्धानं नयति । ततोऽध्वर्युप्रतिप्रस्थातारौ द्वे अपि हविर्द्धाने वेदिमध्ये शालाया अग्रे पृष्ठ्यामुभयतः प्रागग्रेऽरत्निद्वयान्तराले स्थापयतः ।

अध्वर्युः पृष्ठ्यातोऽरत्निमात्रे दक्षिणतो दक्षिणं हविर्द्धानं स्थापयति । अन्यश्च पृष्ठ्याया उत्तरतोऽरत्निमात्रे उत्तरं हविर्द्धानं स्थापयति । ततस्तयोर्हविर्द्धानयोरुपर्युदगग्रमेकं छदिर्मध्ये निदधाति । छदिषोऽभावे भित्तिं वा । छदिस्तृणमयः कटः । वंशमयः कलञ्जो भित्तिः ।

छदिर्हविर्धानस्योपरि छादनार्थम् । तच्च दशारत्निदीर्घं त्रिभागाधिकारत्नित्रयविस्तारं भवति ।

ततः शरेषीकानिर्मितां ररराट्यां ललाटपट्टिकां हविर्धानयोः पुरस्तादासञ्जयति अवलगयति । ततो द्वाभ्यामुच्छ्रायीभ्यां हविर्धानयोः परिवारणं करोति । उच्छ्रीयेते इत्युच्छ्राय्यौ पार्श्वकटकौ । तौ चाष्टादशारत्निप्रमाणौ ।

**प्रतिप्रस्थातोत्तरस्यैरावती इति पूर्ववत् ॥३०॥ पत्नी चापरेणाग्नीन्परीत्योत्तरस्यानक्ति पूर्ववत् ॥ ३१ ॥ ॥३॥**

**हविर्द्धानाभ्यां प्रवर्त्यमानाभ्यामनुवाचयति ॥ १ ॥ त्रिरुक्तायामुद्गृह्णेव वर्त्तनम् ॥२॥ प्राची प्रेतमिति वाचयति ॥३॥ स्वं गोष्ठमिति च स्वर्जति ॥४॥ पश्चादुत्तरवेदे-**

ततः पूर्वोक्तप्रमाणमेव द्वितीयं छदिः पूर्वनिहितस्य छदिषः पश्चादुदगग्रं हविर्धानयोरुपरि निदधाति। एवमेव तृतीयं पुरस्तादुदगग्रं निदधाति।

एवं हविर्धानमण्डपनिष्पादनसामग्रीं शकटयोरुपरि स्थापयित्वा शालायामागच्छति। ब्रह्मयजमानौ शालाद्वार्यं दक्षिणेनोपविशतः । तूष्णीमासनसंस्कारः ।

ततोऽध्वर्युर्गार्हपत्ये पूर्णाहुतिवदाज्यं संस्कृत्य शालाद्वार्यं परिस्तीर्य समिधमाधाय चतुर्गृहीतं शालाद्वार्ये जुहोति युञ्जत इति । इदं सवित्रे । अत ऊर्ध्वं गार्हपत्यकार्यं शालाद्वार्य एव कर्त्तव्यम् । ततः शालाद्वार्य एवाज्यं पूर्णाहुतिवत्संस्कृत्य पुनश्चतुर्गृहीतं गृहीत्वा पत्नि निष्क्रमस्वेति प्रेष्यति । ततो ब्रह्मयजमानाध्वर्यवः पूर्वद्वारेण निष्क्रम्य दक्षिणहविर्द्धान समीपे आगत्योपविशन्ति। पत्नी च दक्षिणेन द्वारेण निष्क्रम्य तत्रागच्छति ।

ततोऽध्वर्युर्दक्षिणस्य हविर्द्धानस्य दक्षिणे वर्त्मनि दक्षिणचक्रस्य मार्गे हिरण्यं निधाय परिस्तीर्येदं विष्णुरिति तच्चतुर्गृहीतमाज्यं जुहोति । इदं विष्णवे । ततः संस्रवं पत्न्या दक्षिणहस्ते निनयति । पत्नी चानेन संस्रवेण हविर्द्धानस्य दक्षिणमक्षधुरं परागनभ्यावृत्तं देवश्रुतावित्यनक्ति । एवमनेनैव मन्त्रेणोत्तरमक्षधुरमनक्ति ।

ततोऽध्वर्युराज्यस्थालीं स्रुक्स्रुवं च प्रतिप्रस्थात्रे समर्पयति । पत्नीं बाहुगृहीतां दक्षिणेन द्वारेण शालायां प्रवेश्य गार्हपत्यमपरेण नीत्वोत्तरेण विहारं पूर्वद्वारेण निःसार्योत्तरस्य हविर्द्धानस्य दक्षिणे चक्रमार्गे हिरण्यं निधाय परिस्तीर्येरावती इति चतुर्गृहीतं जुहोति । इदं विष्णवे ।

ततः पत्न्या हस्ते संस्रवं निनयति । पत्नी च देवश्रुतावित्युत्तरस्यानसो दक्षिणमक्षधुरमनभ्यावृत्तमनक्ति । एवमेवोत्तरम् ।

इत्यष्टमाध्यायस्य तृतीया कण्डिका ॥ ३ ॥

---

ततोऽध्वर्युः "हविर्द्धानप्रवर्त्तनायामन्त्रित" इति शाङ्खायनसूत्रादेहि होतरिति होतारमामन्त्र्य होतरि समीपे आगते सति हविर्द्धानाभ्यां प्रवर्त्य-

स्त्रिषु प्रक्रमेषु मत्या वा नभ्यस्थे अभिमन्त्रयते ऽत्र र-
मेथामिति ॥५॥ उत्तरेण परिक्रम्य दक्षिणमुपस्तभ्ना-
ति विष्णोर्नुकमिति ॥६॥ दक्षिणात स्थूणामुपनिहन्ति
विष्णवे त्वेति ॥७॥ दिवो वेत्युत्तरं प्रतिप्रस्थाता ॥८॥
उत्तरत स्थूणां पूर्ववत् ॥९॥ उभे वा दक्षिणतः ॥१०॥
इतरतस्ततः ॥११॥ यदु च मानुष इति श्रुतेः ॥१२॥ प्र-
तद्विष्णुरिति वाचयति मध्यमं छदिरालभ्य ॥१३॥ उत्तरे
च ॥१४॥ विष्णो ररराटमिति रराट्याम ॥१५॥ विष्णोः

---

मानाभ्यामनुब्रूहीति होतारमाह ।

ततः प्रथमायामृचि त्रिरुक्तायां हविर्द्धानयोरुत्पाटयेव प्रवर्तनं कुर्वन्ति । केचित्पुरुषा धुरि हविर्द्धाने गृहीत्वा अग्रतो नयन्ति ! केचित्पश्चाद् भूमिसंलग्ने पक्षेोद्गृह्णन्ति ।

ततो यजमानं प्राची प्रेतमिति मन्त्रं वाचयति । चक्रघर्षणेन हविर्द्धानयोरक्षः खर्जति चेत् तदा स्वं गोष्ठमिति प्रायश्चित्तार्थं वाचयति । कालाहुतिश्च हूयते वरुणाय स्वाहेति औत्तरवेदिकाहवनीये । वाचनं च ।

तत उत्तरवेदेः पश्चात्त्रिषु प्रक्रमेषु हविर्द्धानयोः स्थापनम्, इच्छापरिमिते प्रदेशे वा नातिसमीपे नातिदूरे । ततो हविर्द्धानयोश्चक्रमध्यफलकाधारे स्थापनम् ।

ततोऽध्वर्युरत्र रमेथामिति द्वे अपि हविर्द्धाने युगपत् अभिमन्त्रयते । ततो द्वे अप्यनसी उत्तरेण परिक्रम्याध्वर्युर्दक्षिणं हविर्द्धानमुपस्तम्भनेनोपस्तभ्नाति विष्णोर्नुकमिति मन्त्रेण ।

तत उत्थाय समचतुरस्रं हविर्द्धानं साधयित्वा प्रथमं तस्य हविर्धानस्याग्नेयकोणे स्थूणां निखनति विष्णवे त्वेति मन्त्रेण । ततः प्रतिप्रस्थातोत्तरं हविर्द्धानमुपस्तभ्नाति दिवो वेति ।

ततोऽध्वर्युर्हविर्द्धानस्यैशानकोणे द्वितीयां स्थूणां निखनति विष्णवे त्वेति । अथवा उभे प्रथमं हविर्द्धानस्य दक्षिणभाग एव निखनति एकामाग्नेयकोणे द्वितीयां नैर्ऋतकोणे ।

तत इतरभागे उभयोर्वायव्यैशानकोणयोस्तूष्णीं स्थूणाद्वयं निखनति । यदि पूर्वं आग्नेयैशानयोर्निखाते तदा नैर्ऋतवायव्ययोर्द्वे स्थूणे तूष्णीं निखनति ।

**इनप्त्रे स्थ इत्युच्छ्राय्यौ ॥ १६ ॥ उदगग्राणि छदींषि पश्चाच्छुरुतः ॥१७॥ द्वार्याः परिषीव्यति लस्पूजनिप्रतिहृतया रज्ज्वा विष्णोः स्यूरसीति ॥१८॥ विष्णोर्ध्रुवोऽसीति ग्रन्थिं करोति ॥१९॥ उपक्रान्ते प्रमुञ्चति ॥२०॥ प्रा-**

ततश्चतुर्षु कोणेषु निखातस्थूणाचतुष्टयादन्यदपि लोकसिद्धं दशारत्निपरिमितं हविर्द्धाननिष्पादने यत्प्राप्नोति तदपि करोति अधिकस्थूणानिखननम् , उपरिष्टाद्वलकवंशादिस्थापनं च ।
पूर्वस्यां दिश्यरत्निद्वयविस्तारं द्वारं कुर्यात्, अपरस्यां च द्वितीयम् । द्वारयोर्मध्ये पृष्ठ्या कार्या । पृष्ठ्यां दक्षिणेनारत्निमात्रे दक्षिणां द्वारस्थूणां निखनति । ततो द्वितीयां पृष्ठ्यामुत्तरेणारत्निमात्रे । एवमपरे द्वारेऽपि द्वारस्थूणयोः पृष्ठ्यामभितो निखननम् ।

उपरि मध्यवलः प्रागग्रः कार्यः । अन्येऽपि लोकसिद्धा वंशवलकादयः प्रागग्रा वा उदगग्रा वा यथासंभवं कार्याः रज्जु-वृक्षत्वक्तृणादिना परस्परं बन्धनीयाश्च ।

एवं हविर्द्धानं काष्ठैर्यावन्निष्पाद्यते तावन्निष्पाद्य तत उपरितश्छादयति, तच्च पूर्वोक्तप्रकारेण नो क्रमेण । पूर्वमेकं छदिरुदगग्रं हविर्द्धानस्योपरि मध्ये निधाय पुरस्ताद्रराट्यां ललाटपट्टिकां पूर्वद्वारस्योपर्यवलगयति बध्नाति ।

ततः पूर्वद्वारस्य दक्षिणद्वार्याया आरभ्यापरस्य दक्षिणां द्वार्यां यावदुच्छ्राय्या हविर्द्धानस्य दक्षिणपार्श्वं परिश्रयणं वेष्टनम् आवरणं करोति।

ततोऽपरद्वारस्योत्तरद्वार्याया आरभ्य पूर्वद्वारस्योत्तरद्वार्यं यावद् द्वितीययोच्छ्राय्या हविर्द्धानोत्तरपार्श्वस्य परिश्रयणमावरणं करोति ।

ततो हविर्द्धानस्योपरि पूर्वच्छदिषः पश्चादुदगग्रं द्वितीयं छदिर्निदधाति । ततः पूर्वस्थापितच्छदिषः पुरस्तात्तृतीयं छदिरुदगग्रं निदधाति । एवं हविर्द्धानं परित उपरिष्टाच्च प्रच्छाद्य ततो यजमानं प्रति मध्यमं छदिरालभस्वेति प्रेष्यति। ततो यजमानो मध्यमं छदिरालभते। अध्वर्युः प्रतद्विष्णुरिति यजमानं वाचयति। ततो रराट्यामालभस्वेति यजमानं प्रत्याह ।

ततो यजमानो रराट्यामालभते। तत्र कृतान्वारम्भं यजमानं विष्णो रराटमसीति वाचयति । तत उच्छ्राय्यावालभस्वेति यजमानं प्रत्याह । ततो यजमानः पूर्वद्वारे स्थित्वा द्वे अप्युच्छ्राय्यावालभते । ततो विष्णोः श्नप्त्रे स्थ इति यजमानं वाचयति । ततोऽध्वर्युः पूर्वद्वारस्य दक्षिणस्थूणां मूल-

स्वङ्गशङ्ग हविर्द्धानम् ॥२१॥ निष्ठाप्य वैष्णवमसीत्यालभते ॥२२॥ भोजनभक्षणे चास्मिन्न कुर्युः ॥२३॥ अद्वारेण सदोहविर्द्धाने प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा इति ॥२४॥ पृष्ठ्यामुभयतो द्वार्ये ॥२५॥ दक्षिणस्याऽमोऽधः प्रउगं खनत्युपरवान् ॥ २६ ॥ ४ ॥

अभ्र्यादि करोत्यवटवदापरिलेखनात् ॥१॥ चतुरः ॥२॥ अक्ष्णया न्याघारणवत् ॥३॥ उत्तरापरं वा प्रथ-

---

तोऽग्रपर्यन्तमुच्छ्राय्याः प्रान्तेन सह परि सीव्यति परिषीवणेनोच्छ्रायीं स्थूणया सह बध्नातीत्यर्थः ।

तच्चैवम्-पूर्वं काष्ठसूच्या मूलच्छिद्रे मुञ्जरज्जुं त्रिवृतां प्रोतयित्वा तां काष्ठसूचिमुच्छ्राय्यां प्रवेश्य तन्मूलप्रोतया रज्ज्वा विष्णोः स्यूरसीति मन्त्रेण सीव्यति उच्छ्रायीप्रान्तं स्थूणां च संयोजयतीत्यर्थः । एवं परिषीवणस्य प्रारम्भं कृत्वा विष्णोर्ध्रुवोऽसीति मन्त्रेण सूचिप्रोतरज्जुमूले ग्रन्थिं बध्नाति । एवं रज्जुमूले ग्रन्थिं कृत्वा तां रज्जुस्थूणामूले प्रदक्षिणमावेष्ट्य वेष्टितरज्जुस्थूणान्तरालेनाधः सूचिं प्रवेश्योर्ध्वां निष्काशयेत् । एवं पुनः पुनरुच्छ्रायीप्रान्ते रज्जुं प्रवेश्य स्थूणाग्रपर्यन्तं प्रदक्षिणं स्थूणामुच्छ्रायीप्रान्तेन परिषीव्यान्ते स्थूणया सरज्जुं बद्ध्वा मूलग्रन्थिविस्रंसनं कुर्यात् । एवं सर्वस्थूणानां प्रदक्षिणं परिषीवणं कार्यम् । पूर्वद्वारस्योत्तरस्यां स्थूणायां परिसमाप्तिः । एवं परिपूर्णं हविर्द्धानं निष्पाद्य वैष्णवमसि विष्णवे त्वेत्येतावता मन्त्रेण तदभिमृशति । अत ऊर्ध्वं रागप्राप्तमन्नादेर्भोजनं हविःशेषस्य सोमादेर्भक्षणं च हविर्द्धानमध्ये न कर्तव्यम् । हविर्द्धानमध्ये सोमे अप्सु च प्रवेशितेषु अद्वारेण प्रेक्षमाणं प्रति मा प्रेक्षथा इति ब्रूयात् । सदसि चैवं स्तोत्रशस्त्रकाले ।

इति हविर्द्धाननिष्पादनम् ।

इति अष्टमस्य चतुर्थी कण्डिका ॥ ४ ॥

---

अथोपरवखननविधिः-दक्षिणस्य हविर्द्धानस्य यत्प्रउगं तस्याधो भूमौ उपरवान् खनति । तत्र च हविर्द्धानं मध्यापच्छेदेन चतुर्द्धा विभज्य दक्षिणपूर्वचतुष्कमध्ये प्रादेशद्वयपरिमाणं चतुरस्रं साधयित्वा तस्य कोणेषूपरवान् परस्परं प्रादेशमात्रान्तरान्परिलिखति ।

मम् ॥४॥ सम्यग्वा ॥५॥ उत्तरपूर्वं त्वन्त्यम् ॥६॥ प्रादेशमात्रांस्तदन्तरान् ॥७॥ बृहन्नसीति यथापरिलिखितं खनति ॥८॥ इदमहमित्युत्किरति यथाखातं प्रतिमन्त्रम् ॥९॥ उत्कृत्याङ्किरामीति पश्चात्सर्वेभ्यः ॥१०॥ बाहुमात्रान् ॥११॥ अक्ष्णया संभिन्द्यादशक्तौ सम्यक् ॥१२॥ स्वराडित्यवमर्शयति यथाखातं प्रतिमन्त्रम् ॥१३॥ अध्वर्युयजमानौ सम्मृशेते पूर्वदक्षिणेऽध्वर्युरपरोत्तरे यजमानः ॥१४॥ अध्वर्युः पृच्छति यजमान किमत्रेति ॥१५॥

---

तत्र पूर्वमभ्र्यादानं देवस्य त्वा सं० आददे नार्यसीत्यन्तेन। ततो दक्षिणपूर्वमुपरवं पूर्वं परिलिखति इदमहं० रक्षसामिति मन्त्रेण। तत्त उत्तरापरं परिलिखति। ततो दक्षिणापरम्। तत उत्तरपूर्वम्। इदमहमिति सर्वेषां प्रत्येकं मन्त्रः। अथवा प्रथममुत्तरापरं, ततो दक्षिणपूर्वं, ततो दक्षिणापरं, तत उत्तरपूर्वमिति परिलेखनक्रमः।

अथवा दक्षिणपूर्वादारभ्य प्रदक्षिणमुपरवखननम्। सर्वपक्षेषु उत्तरपूर्वमुपरवमन्ते एव परिलिखेत्।

ततः परिलेखनानन्तरं यथापरिलिखितं परिलेखनक्रमेण बृहन्नसीत्यनेन वैष्णवीमित्यन्तेन खनति। सर्वेषामयमेव खननमन्त्रः। तत इदमहं त मित्यादिभिश्चतुर्भिर्मन्त्रैः प्रतिमन्त्रं खननक्रमेणोपरवेभ्यः पांसून् निष्काश्य पुरस्तादुत्तरतो वा प्रक्षिपति।

ततः पुनः पुनस्तूष्णीमेव खात्वा तूष्णीमेव पुनः, पांसुनिष्काशनं यावद्बाहुप्रमाणं खननं पुनः संपद्यते। अन्ते यत्पांसूत्क्षेपणं तत सर्वेभ्य उपरवेभ्य उत्कृत्यामित्यनेन कर्तव्यम्। प्राच्यामुदीच्यां वा एतत्पर्यन्तं सर्वत्र खननक्रम एव न प्रदक्षिणक्रमः। "पश्चात्सर्वेभ्य" इति सूत्रे पश्चादित्यस्यान्ते इत्यर्थः। कुतः—"उत्कृत्यां किरामीत्यन्तत उद्वपतो"ति श्रुतेस्तत इत्यस्यान्ते इत्यर्थ इति हरस्वामिनः।

एवं बाहुमात्रान् खात्वा अक्ष्णया विदूध्वा तेषां परस्परं संभेदं कुर्यात्। पूर्वदक्षिणस्योत्तरापरेण। दक्षिणापरस्योत्तरपूर्वेणेति। अक्ष्णया भेदनाशक्तौ सम्यक् समतयैव संभेदनं कुर्यात्। तत्र दक्षिणपूर्वस्यापरदक्षिणेन सह, तस्योत्तरापरेण, तस्योत्तरपूर्वेण, तस्य पूर्वदक्षिणेनेति। पूर्वयोर्न संभेदनमिति कर्कः।

भद्रमित्याह ( यजमानः ) ॥१६॥ तन्नौ सहेत्यध्वर्युरुपा- ंशु ॥१७॥ पुनर्दक्षिणापरेऽध्वर्युः पूर्वोत्तरे यजमानो यजमानः पृच्छत्यध्वर्यो किमत्रेति भद्रमिति प्रोक्ते तन्न इति यजमानः ॥१८॥ प्रोक्षत्येनान् रक्षोहण इति ॥१९॥ भेदे मन्त्रावृत्तिः सान्निपातित्वात् ॥२०॥ अवनयनावस्तरणे चावटवद्रक्षोहणो रक्षोहण इति ॥२१॥ तन्नूनुपरि कुशान्कृत्वाऽधिषवणे फलके द्व्यङ्गुलान्तरे प्रक्षालिते प्राची अरत्निमात्रे सन्तृणे वोपदधाति पर्यूहति च र-

तत उपरवानवमृशस्वेति यजमानं प्रति प्रैषोऽध्वर्योः । ततो यजमानः स्वराडसीति प्रतिमन्त्रं खननक्रमेणोपरवाणामवमर्शनं करोति । निम्नोच्चत्वपरिहारार्थं खातस्य स्वबाहुप्रमाणतासंमतिविश्वासार्थं च मध्ये तलपर्यन्तं सर्वतः स्पृशतीत्यर्थः ।

ततोऽध्वर्युयजमानौ हस्तावुपरवयोः प्रवेश्य संभेदमार्गेण परस्परं हस्तस्पर्शनं कुरुतः । तत्राध्वर्युराग्नेयकोणोपरवे हस्तं प्रवेशयति । वायव्यकोणोपरवे च यजमानो हस्तं प्रवेशयति । एवं हस्तौ प्रवेश्य परस्परं स्पृष्ट्वा अध्वर्युर्यजमानं पृच्छति यजमान किमत्रेति, भद्रमिति प्रत्याह यजमानः ।

ततोऽध्वर्युरुपांशु तन्नौ सहेत्येवं ब्रूयात् । तत उत्थाय नैर्ऋत्यकोणोपरवेऽध्वर्युर्हस्तं प्रवेशयति । पूर्वोत्तरे यजमान ईशानकोणोपरवे हस्तं प्रवेशयति ।

ततः संभेदमार्गेण परस्परं स्पृष्ट्वा यजमानोऽध्वर्युं पृच्छति अध्वर्यो किमत्रेति । ततो भद्रमित्यध्वर्युः प्रत्याह । ततो यजमानस्तन्न इत्युपांशु पठति ।

ततो लौकिकोदकेन पूर्वदक्षिणादुपरवादारभ्य प्रदक्षिणमुपरवान्प्रोक्षति रक्षोहणो वो बलगहनः प्रोक्षामि वैष्णवानिति । प्रत्युपरवं मन्त्रावृत्तिः ।

ततो रक्षोहणो वोऽवनयामीत्यनेन प्रदक्षिणं सर्वपूदकशेषावनयनं करोति । ततो बर्हींषि प्रागग्राण्युदगग्राणि चोपरवाणां मध्ये प्रदक्षिणमवस्तृणाति रक्षोहणो वोऽवस्तृणामीति । मन्त्रावृत्तिः ।

तत उपरवाणामुपरि सूक्ष्मान् कुशान् बहूनास्तीर्य तेषामुपर्यधिषवणफलके वारणे प्रादेशमात्रविपुले अरत्निमात्रदीर्घे द्व्यङ्गुलान्तरे

रक्षोहणौ रक्षोहणाविति ॥२२॥ तयोश्चर्माधिषवणं परिकृत्तꣳ सर्वरोहितं निदधाति वैष्णवमसीति ॥२३॥ तस्मिन् ग्रावाणः पञ्च वैष्णवा स्थेति ॥२४॥ खरं पुरस्तात्करोत्युद्धतावोक्षितं सिकतोपकीर्णं चतुरश्रम् ॥२५॥ अन्तःपात्यात्षट् प्रक्रमान्प्राङ् यात्वा दक्षिणा समं महान्तं तत्रौदुम्बरीं मिनोति यजमानमात्रीम् ॥२६॥ यूपवच्छेते ॥२७॥ अभ्र्यादि करोत्याऽवस्तरणात् ॥२८॥ उद्दिवमित्युच्छ्रयति ॥२९॥ द्युतान इति मिनोति ॥३०॥ पर्यू-

---

परस्परं सन्तृण्णे वा कीलकैः सन्धिते वा प्रक्षालिते प्रागग्रे उपदधाति—रक्षोहणौ वां वलगहनाऽ उपदधामि वैष्णवीति मन्त्रेण ।

ततश्चात्वालादाहृतैः पांसुभिरधिषवणफलके पर्यूहति परितो मध्ये च भूमिं पूरयित्वा दृढं करोतीत्यर्थः । तच्च रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी इति मन्त्रेण ।

ततस्तयोः फलकयोरुपर्यधिषवणं चर्म परि समन्तात् कर्त्तनेन वर्तुलत्वमापादितं सर्वरक्तं वैष्णवमसीति मन्त्रेण निदधाति ।

ततस्तस्मिन् चर्मणि पञ्च ग्रावाणो निदधाति वैष्णवा स्थेति मन्त्रेण ।

तत उपरवाणां पुरस्तादरत्निप्रमाणं चतुरस्रं करोति । तत्र उल्लिख्याभ्युक्षेति संस्कारद्वयं कृत्वा सिकता उपकिरति । इत्युपरवखननम् ।

अथ सदसः करणमुच्यते । तत्रान्तःपात्यात् षट् प्रक्रमान् प्राच्यां पृष्ठ्याया उपरि गत्वा ततो दक्षिणस्यां दिशि महान्तं समं पदं प्रक्रम्य तत्रौदुम्बरीमुदुम्बरवृक्षजातां सकर्णां सदसो मध्यस्थूणां निखनति । सदसो दक्षिणार्द्धस्य मध्ये औदुम्बरी भवति । तत्र इदमस्य त्वेत्यभ्रयादानम् । इदमहमित्यवटपरिलेखनम् । उदकालम्भः । औदुम्बरीपञ्चमांशसंमितं खननम् । प्राच्यां पांसूद्वापः । अवटस्य पुरस्तात्प्रागग्राया औदुम्बर्या निधानम् । तस्या उपरि कुशमुष्टिनिधानम् ।

ततो यवोऽसीत्यवटे यवावपनम् । ततस्ताभिः सयवाभिरद्भिर्दिवे त्वा प्रोक्षामीत्यौदुम्बर्यग्रस्य प्रोक्षणम् । अन्तरिक्षाय त्वा प्रोक्षामीति तन्मध्यस्य प्रोक्षणम् । पृथिव्यै त्वा प्रोक्षामीति तन्मूलस्य प्रोक्षणम् । ततः शुन्धन्तामित्युदकशेषस्यावटे निनयनम् । उदकालम्भः ।

पितॄणां सदनमसीति प्रागुदगग्रबर्हिषामवटे स्तरणम् । उदकालम्भः ।

हृणाद्यापमचनात्कृत्वा ध्रुवाऽसीति वाचयत्यौदुम्बरीमा-लभ्य "प्रजया भूयादिति" पशुभिरिति वा ॥३१॥ स्रु-वेण विशाखे जुहोति घृतेन द्यावापृथिवी इति भूमिप्राप्ते स्वाहा करोति सर्वत्र मन्त्रवत्सु जुहोत्युपदेशात् ॥३२॥ अनाम्नातप्रतिषेधाच्च ॥ ३३ ॥ ५ ॥

नाभिदघ्नं सदः ॥ १ ॥ मन्या वा ॥ २ ॥ उदग्वंशम् ॥ ३ ॥ अष्टादशारत्न्येकविंशतिश्चतुर्विंशतिर्वा ॥ ४ ॥

ततः इदिवमित्यौदुम्बरीमध्वर्युर्मन्त्रयति । उद्गाताऽध्वर्युणा सहोच्छ्रयणं करोति । ततोऽध्वर्युद्गाता इत्यौदुम्बरीमूलदेशमभागमवटमध्ये प्रवेशयति ।

ततो ब्रह्मवनि श्येति पांसुभिरवटं पूरयति। ततो ब्रह्म दृंहेति मैत्रावरुणदण्डेन सर्वतः पांसुभिः परिपिदृयति खातं पुरीषमवटमध्ये प्रवेशयतीत्यर्थः । सकृन्मन्त्रेण त्रिस्तूष्णीम् । ततः समभूमिं कृत्वा अद्भिरुपसिच्य औदुम्बरीमालभस्वेति यजमानं प्रेष्यति । यजमान औदुम्बरीमालभते । ततोऽध्वर्युः कृतालम्भं यजमानं ध्रुवाऽसि ध्रुवोऽयमिति वाचयति । अत्र मन्त्रे अस्मिन्नायतने प्रजया भूयादिति पठितव्यम् , अस्मिन्नायतने पशुभिर्भूयादिति वा । तत आज्यसंस्कारः । स्रुवस्यैव संमार्गः । औदुम्बर्याः परिस्तरणम् । (१)ततः स्रुवेणाज्यं गृहीत्वौदुम्बर्या अग्रे कर्णयोरन्तराले जुहोति भूमिपर्यन्तं स्रावयति घृतेन द्यावापृथिवी इति मन्त्रेण । होमस्थानात् स्रुते भूमिं प्राप्ते स्वाहेति वदति । इदं द्यावापृथिवीभ्याम् ।

मनुः—"अन्तराले कर्णौ हिरण्यं निधाय घृतेनाभिजुहोति आमूलादवस्रावयती"ति

तथा—"औदुम्बरी वर्षिष्ठा स्थूणानां हसीयस्योऽन्या" इति च । सर्वत्र मन्त्रवत्सु होमे अनाम्नातोऽपि स्वाहाकारः कर्त्तव्यः ॥ ५ ॥

इत्यष्टमस्य पञ्चमी कण्डिका ॥ ५ ॥

अथ सदोमानम् । तच्च उद्गायनमष्टादशारत्निदीर्घं नवारत्नि तिर्यक् ; अथवा एकविंशत्यरत्नि दीर्घं तदर्धं तिर्यक् नवारत्नि वा । सर्वप-

( १ ) अत्र चात्वविष्टम्य होमासम्भवात्सामर्थ्यात्तिष्ठता होतव्यमिति पुच्छकाण्डाद्दक्षिणेऽस्थनीत्यत्र देवः ।

नव तिर्यगप्यायामो वा ॥ ५ ॥ औदुम्बरीं मध्ये पृष्ठ्यामेकं ॥ ६ ॥ इन्द्रस्य च्छदिरिति मध्यमं च्छदिरारोपयापरपूर्वे च ॥ ७ ॥ त्रित्रयौ चोत्तरतः ॥ ८ ॥ परि-

---

देपूदगायामस्य मध्ये पृष्ठ्या कार्या । अर्द्धं पृष्ठ्याया दक्षिणतोऽर्द्धमुत्तरतः । प्रागायामस्य मध्ये औदुम्बरी । अष्टादशारत्निपक्षे सदसः साधनश्लोकः—

"मध्यके लक्षणं कुर्यात् त्रीणि कुर्यात्त्रिषु त्रिषु ।
उत्तमो नवकः पाशः सदसो मानमुच्यते" इति ।

मध्यतस्त उदग्वंशः कार्यः । पूर्वस्यां दिशि द्वारं कार्यम् । अपरस्यां च पृष्ठ्यामुभयतो द्वार्ये हविर्द्धानवत् । कोणेषु स्थूणानिखननम्। लोकत पदार्थान् यावत्प्राप्नोति वल्कवंशनिधानबन्धनादि तत्सर्वं कृत्वा नवभिश्छदिर्भिरुपर्याच्छादनं कुर्यात् ।

छदींषि सदसो दीर्घप्रमाणतृतीयभागेन दीर्घाणि विस्तारतृतीयेन च विस्तृतानि भवन्ति । तानि च त्रीणि पूर्वापरान्युदगग्राणि सदसो दक्षिणभागे । एवमेव त्रीणि मध्यमभागे, एवमेव त्रीण्युत्तरभागे। तत्र मन्त्रः-इन्द्रस्य छदिरिति मन्त्रेण प्रथमं दक्षिणभागे मध्यमं छदिरुदगग्रमारोप्य तस्य पश्चादेवमेव द्वितीयमारोपयेत् । मध्यमस्य पुरस्तादेवमेव तृतीयम् । अनेनैव क्रमेण मध्यप्रदेशे उत्तरप्रदेशे च त्रीणि त्रीणि छदींष्यारोपयेत् । प्रतिछदि मन्त्रावृत्तिः । शाखान्तरे यज्ञविशेषे छदिषां संख्याविशेषः-

आपस्तम्बः—"नवाग्निष्टोमे, पञ्चदशोक्थ्ये, षोडश षोडशिनि, सप्तदश वाजपेयेऽतिरात्रे चैकविंशतिः सत्राहीनानामि"ति । मानवे-"नव छदींष्यग्निष्टोमे उदक् तूलानि पञ्चदशोक्थ्ये, सप्तदशातिरात्रे, एकविंशतिः सत्राहीनयोः, एकादश षोडशिनि वाजपेये चेति ।

ततः षड्भिः परिवारकैः सदसः परिवारणम् । ईशानकोणादारभ्य पूर्वद्वारोत्तरस्थूणां यावत्पूर्वपार्श्वे प्रथमं, पूर्वद्वारदक्षिणस्थूणात आरभ्याग्नेयकोणान्तं पूर्वपार्श्वे द्वितीयम्, आग्नेयकोणादारभ्य दक्षिणपार्श्वे नैर्ऋतकोणान्तं तृतीयं, नैर्ऋतकोणादारभ्यापरदक्षिणस्थूणापर्यन्तं पश्चिमपार्श्वे चतुर्थं, अपरद्वारे स्थूणात आरभ्य वायव्यकोणान्तं पश्चिमपार्श्वे पञ्चमं, वायव्यकोणादारभ्येशानकोणान्तमुत्तरपार्श्वे षष्ठमिति । एवं षड्भिः परिवारणं परि त्वेति । प्रत्येकं मन्त्रावृत्तिः ।

ततो हविर्द्धानवच्चतस्रो द्वार्याः परिवारकप्रोतैः सह परिषीव्यति । तत्र विशेषः-द्वार्याः परिवारकेण सह परिषीवणे इन्द्रस्य स्पूरसीति

**स्वेति परिषार्य परिषविणग्रन्थ्यभिमर्शनान्यैन्द्रैः ॥९॥ हविर्द्धानापरान्तमुत्तरेणाग्नीध्रमगन्यगारद्वारमन्तर्वेद्यर्द्धं भूयः सर्वं वा ॥१०॥ निष्ठ्य वैश्वदेवमसीत्यालभते ॥११॥ धिष्ण्यान्निवपत्युद्धतावोक्षिते पुरीषान्निवपति स्फ्येनान्वारब्ध उदङ्ङुपविश्य विभूरसीति प्रतिमन्त्रम् ॥१२॥ आग्नीध्रीयं पूर्वम् ॥१३॥ सिकताश्चोपरि ॥१४॥ रौद्रेणे-**

---

मन्त्रः। रज्जुमूले ग्रन्थिकरणमिन्द्रस्य ध्रुवोऽसीति। ततो निष्पन्नं सद ऐन्द्रमसीत्यभिमृशति। इति सदोनिष्पत्तिः।

अथाग्नीध्रनिष्पादनमुच्यते—तच्च हविर्द्धानगृहस्यापरभागमुत्तरेण भवति। हविर्द्धानं च दशारत्निदीर्घं, तस्य पूर्वो विभागः पञ्चारत्निः, अपरोऽपि पञ्चारत्निः, अतस्तं पञ्चारत्निपरिमितमपरभागमुत्तरेण पञ्चारत्निप्रमाणमेव समचतुरस्रं दक्षिणपूर्वद्वारमाग्नीध्रं साधयेत्। तथा-कर्त्तव्यं यथा हविर्द्धानाग्नीध्रयोरपरान्तौ समौ भवतः। इदमेव चाग्नीध्रस्य स्थानम्, कुतः-"तामुत्तरेण हविर्द्धाने दक्षिणेनाग्नीध्रमि"ति ज्ञापकात्। हविर्द्धानाग्नीध्रान्तरे द्रोणकलशमेनामाघ्रापयती"ति सूत्रकारप्रस्थानाच्च। तदाग्नीध्रमर्द्धं वेदिमध्ये, अर्द्धं बहिर्वेदि। अथवा बहु वेदिमध्ये अल्पं बहिः।

अथवा सर्वमपि वेदिमध्ये एव कर्त्तव्यम्। अतएव ज्ञापकान्महावेद्यां संग्रहो न भवतः, तयोर्हि कृतयोराग्नीध्रस्य सर्वस्यान्तर्वेदिकरणपक्षाश्रयणहविर्द्धानाग्नीध्रीययोरन्तरागमनविधानानि बाध्यन्ते। आपस्तम्बवचनाच्च—

"वेदिं करोति दर्शपूर्णमासवत्सन्नमनवर्जमि"ति। सन्नमनं च मध्यसंगृहीतकरणं प्रकृतावुक्तं "मध्ये सन्नतरा भवती"ति। एवमाग्नीध्रं परिपूर्णं तूष्णीमेव निष्पाद्य वैश्वदेवमसीत्यालभते। इत्याग्नीध्रकरणम्।

अथ धिष्ण्यनिर्वाप उच्यते। आग्नीध्रस्य मध्ये आग्नीध्रीयं धिष्ण्यमष्टादशाङ्गुलं समचतुरस्रं कुर्यात्। तत्र उदङ्मुखः पञ्च भूसंस्कारान् कृत्वोल्लिख्याभ्युदयेति संस्कारद्वयमधिकं कृत्वा यजमानेऽन्वारब्धे स्फ्येन चात्वालादाहृतं पुरीषं संस्कृतायां भूमौ निवपति विभूरसीति। ततस्तेन चतुरस्रमष्टादशाङ्गुलं धिष्ण्यं भवेत्।

ततो रौद्रेणानीकेनेति सिकताः प्रकिरति। ततः सदसि षड् धिष्ण्या न्निवपति। तत्र धिष्ण्यस्थानं, तद्विधायकः श्लोकः—

"सदो मध्यमरेखायां तत्रोदीची निरामया।

ति सर्वत्र ॥१५॥ षट् सदसि ॥१६॥ प्रत्यङ्मुखो द्वारमपरेण होतुः ॥ १७ ॥ दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य ॥१८॥ होतृधिष्ण्यमुत्तरेण चतुरः समान्तरान्ब्राह्मणाच्छꣳसिपोतृनेष्ट्रच्छावाकानाम ॥ १९ ॥ आग्नीध्राद्दक्षिणꣳ सम्प्रति वेद्यन्ते दक्षिणामुखो मार्जालीयम ॥२०॥ सदोद्वारं पूर्वेण तिष्ठन्ननुदिशत्याहवनीयबहिष्पवमानदेशचात्वालशामित्रोदुम्बरिब्रह्मासनशालाद्वार्यप्राजाहितान्त्सम्राडसीति प्रतिमन्त्रम् ॥२१॥ उत्करꣳ "समूह्योऽसि

---

तस्याः प्राञ्चं पदं त्यक्त्वा ततो धिष्ण्यानि कारयेत्" इति ।

तत्र पूर्वद्वारमपरेण पृष्ठ्याया उत्तरतः संलग्नमेव होतृधिष्ण्यम्, औदुम्बर्या आग्नेय्यां मैत्रावरुणधिष्ण्यम्, होतृधिष्ण्यमुत्तरेण ब्राह्मणाच्छंसिधिष्ण्यम्, तदुत्तरेण नेष्टृधिष्ण्यम्, तदुत्तरेण पोतृधिष्ण्यम् तस्योत्तरतोऽच्छावाकधिष्ण्यम । सर्वेषां धिष्ण्यानामष्टादशाङ्गुलानि प्रमाणम्, अन्तरालं चाष्टादशाङ्गुलं भवति ।

एवं सर्वेषां धिष्ण्यानां स्थानानि साधयित्वा क्रमेण निवापं कुर्यात् । तत्र प्रत्यङ्मुखो होतृधिष्ण्ये सप्त संस्कारान् कृत्वा पुरीषं निवपति वह्निरसीति स्फयेनान्वारब्धे, रौद्रेणेति सिकता निवपति ।

ततो मैत्रावरुणादीनां धिष्ण्येषु पञ्चसु सर्वमाग्नीध्रीयवदुदङ्मुखः सिकतोपनिवपनान्तं करोति । पुरीषनिवापमन्त्रमात्रे विशेषः । श्वात्रोऽसीति मैत्रावरुणस्य, तुथोऽसीति ब्राह्मणाच्छंसिनः, उशिगसीति पोतुः, अङ्घारिरिति नेष्टुः अवस्यूरित्यच्छावाकस्य ।

एवं सदसि षण्णां धिष्ण्यानां निवापं कृत्वा आग्नीध्रीयधिष्ण्याद्दक्षिणं संप्रति आर्जवेन वेद्यन्ते वेदिमध्ये मार्जालीयधिष्ण्यं साधयेत् । वेदिप्रान्त धिष्ण्यान्तरं किंचिदर्धाङ्गुलमन्तरालं रक्षणीयम् न तु प्रान्त एव धिष्ण्यकरणम् ।

तत्र सप्त संस्काराः । दक्षिणाभिमुखो यजमानान्वारब्धः शुन्ध्यूरसीति स्फयेन पुरीषं निवपति । रौद्रेणेति सिकताश्च प्रकिरति । सर्वधिष्ण्येष्वन्वारम्भः । सर्वधिष्ण्येषु पुरीषनिवापः । केचित्सर्वधिष्ण्येषु सप्त संस्कारान् सिकतानिवापं च प्राङ्मुखाः कुर्वन्ति ।

ततः सदोद्वारं पूर्वेण तिष्ठन्नध्वर्युः संम्राडसि कृशानुरिति प्रतिमन्त्रमाहवनीयादीनीक्षते । संम्राडसीत्याहवनीयं, परिषद्य इति चात्वालस्य दक्षिणतो

**विश्ववेदा ऊनातिरिक्तस्य प्रतिष्ठेति ॥ २२ ॥ परिस्तरणपात्रसꣳसादनप्रोक्षणाज्यनिर्वपणानि कृत्वोत्तरपरिग्र-**

वेदिमध्ये बहिष्पवमानदेशम्, नभोऽसीति चात्वालम्, मृडोऽसीति शामित्रम्, ऋतयामेत्यौदुम्बरीम् । समुद्रोऽसीति प्रशास्तृधिष्ण्यं नैर्ऋत्यां वर्तमानं, ब्रह्मासनं तत्रैव स्थितः पश्चिमाभिमुखो भूत्वा । अजोऽसीति शालाद्वार्यं, ततोऽहिरसीति प्राजहितम् । ततः प्राङ्मुखो भूत्वा समूह्योऽसीत्यनेनोत्करमीक्षते ।

अथाग्नीषोमीयस्य पशोः प्रारम्भः । द्विरासनं, ब्रह्मयजमानयोरुत्तरवेदिं दक्षिणेन बहिर्वेदि स्पृष्टयोरुपवेशनं, ब्रह्मणः समन्त्रक आसनसंस्कारः । यजमान वाचं यच्छेति प्रैषः । प्राजहितवर्जं परिस्तरणम् । शालाद्वार्यस्य पश्चादुत्तरतो वा पात्रासादनम्—

अग्निहोत्रहवणी वज्रः, शम्या दृषदुपलं, पवित्रच्छेदनानि पवित्रे, स्थाली आज्यं च । वेदश्च अभ्रिः । इध्मचतुष्टयं, आतिथ्यासंबन्धि बर्हिः वेदिमध्यादुद्धृत्य सन्नहनेन बद्ध्वा उपकल्प्यते । शकटं बर्हिश्च, स्रुवः, स्रुक्पञ्चकं, पान्नेजनीसप्तकं, यूपाष्टकं, उखापञ्चकं, मन्थनचतुष्टयं, प्राशित्रहरणे, पात्री, षडवत्तं, योक्त्रं, यूनकुशाः कुशास्तृतपीठम् । अन्तर्द्धानकटः, सर्वाणि सोमपात्राणि च ग्रावाणोऽप्यधिषवणादानीयोपकल्प्यन्ते ।

ततो वाग्यतः पवित्रे छेदयित्वा प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्यासंचरे निदधाति । कुक्कुटाहननं, आज्यनिर्वापः वेदबन्धः । ततोऽभ्रिमादाय महावेदेः खननं, उत्तरपरिग्रहः, अन्तःपात्यसंलग्नवेदिपश्चिमान्ते अनुमार्जनम् । स्वसूत्रे शाखाच्छेदन-वत्सापाकरणादिकालस्यानुक्तत्वात् सूत्रान्तरोक्तकालेषु कर्तव्यम् ।

तच्च प्रातः प्रथमोपसदानन्तरं वा उपसत्समासानन्तरं वा उत्तरपरिग्रहानन्तरं वा । बर्हिः प्रोक्षणात्प्रागाग्नीध्रेण शाखाच्छेदनानुमार्जने कृत्वा सवनत्रयार्थदध्यर्थं त्रयाणां षड्वर्गाणां क्रमेणोपाकरणं कर्त्तव्यम् । तत्रेन्द्राय सरस्वतिवते भागमिति गोः शाखयोपस्पर्शने विशेषः ।

प्रातः सवनदध्यर्थवत्सापाकरणानन्तरं च सप्रवर्ग्ये दधिघर्मार्थं वत्सापाकरणम् , तत उपवेषकरणं, शाखोपगूहनमिति । ततोऽग्नीदन्तःपात्यसन्निधौ वेदिमध्ये समीप एव प्रोक्षणीर्धारयति ।

ततोऽध्वर्युः स्फ्यमुद्यम्य प्रोक्षणीरासादयेध्मं बर्हिरुपसादयेति खण्डप्रैषं ददाति । अत्र न स्फ्योदकप्रहारः, पाण्योः प्रक्षालनम् ।

ततोऽग्नीत्प्रोक्षणीरन्तःपात्यदेशे आसाद्येध्ममातिथ्याबर्हिः शकटब-

**ह्यादि करोति ॥२३॥ अन्तः पात्यसहितम् ॥ २४॥ बर्हिरन्तं प्रेष्यति । तत्र सर्वमासादयति ॥२५॥ अत्रैव प्रोक्षणम् ॥२६॥ इध्मं निधायाग्नीषोमीयाय वेदे स्तरणमग्रहणं प्रस्तरस्यापराह्णे ॥२७॥ अर्द्धव्रते प्रत्ते प्रविश्य प्रणयनीयाधानम् ॥२८॥ आज्याधिश्रयणस्रुक्सम्मार्जनोद्वासनावे·**

---

र्हिश्चासादयति अन्तःपात्य एव ।

अत्राह पितृभूतिः । "ग्रावद्रोणकलशादिकं सौमिकमिध्मावर्हिश्चतुष्टयादि पाशुकं च सर्वमप्यत्रासादयति सर्वशब्दात्" । ततोऽध्वर्युः प्रोक्षणीरनुत्पूयैवान्तःपात्यदेशसमीप एव वेदिरसीति वेदिं प्रोक्षति ।

तत इध्मं वर्हिश्चतुष्टयं चाग्नीषोमीयार्थं निधाय ब्रह्मन्बर्हिः प्रोक्षिष्यामीति पृष्ट्वा शकटबर्हिषः प्रोक्षणं करोति । तत्र पयस्यापक्षे बर्हिरसि स्रुग्भ्यां त्वेति । अनूबन्ध्यपक्षे वर्हिरसि त्वा जुष्टमिति विशेषः ।

अदित्यै व्युन्दनामित्यल्पेनोदकेन मूलान्युपसिञ्चति, बहुतरमवशेषयति ।

ततोऽपराह्णे बर्हिर्विस्रंसनं, न प्रस्तरग्रहण, सन्नहनविस्रंसनाद्यवच्छादनान्तम् । ततो वेद्यां पतितं तृणादिकमुत्करे प्रक्षिप्योत्तरवेदिखरोपरवधिष्ण्यवर्जं सर्वां वेदिमुपपत्या त्रिवृदयुग्धातु स्तृणीयात् । पूर्वत आरभ्य स्तीर्यमाणस्याग्रैः पूर्वस्तृतस्य मूलानि प्रच्छादयन्प्रत्यगपवर्गं स्तृणीयात् ।

ततो यजमानायार्द्धव्रतप्रदानम् । सप्रवर्ग्यश्चेत्प्रवर्ग्योत्सादनशेषं पूर्वं व्रतभाजन आसिच्य तस्मिन्नर्द्धव्रतमासिच्य यजमानाय प्रयच्छेत । साग्निचित्ये व्रतं पूर्वं सर्वं समर्पितं चेत्केवलस्यापि प्रवर्ग्योत्सादनशेषस्यात्र प्रदानं कार्यम् । पत्न्याश्चार्द्धव्रतप्रदानम् ।

ततोऽध्वर्युः शालां प्रविश्य शालाद्वार्ये आग्नीध्रीयाग्नेः प्रणयनार्थं शालाद्वार्य इध्माधानं कुर्यात् । तत्र ब्रह्मयजमानयोर्दक्षिणत उपवेशनम् । ब्रह्मा च स्वासनादुत्थाय पूर्वेणोत्तरवेदिमाग्नीध्रीयमुत्तरेण शालाद्वार्यं पूर्वेणागत्य शालाद्वार्यस्य दक्षिणत उपविशति । तत इध्माधिश्रयणम्, तत उपयमनीनामुपकल्पनम् ।

तत आग्नीध्र एव शालाद्वार्य एवाज्याधिश्रयणं, पर्यग्निकरणम्, उद्कालम्भः । ततस्रुमादायान्तःपात्ये गत्वा स्रुचः संमृड्ढि पत्नीॅं सन्नह्याज्येनोदेहीत्यवशिष्टप्रैषः । स्फ्योदकप्रहारः ।

ततो निरूढपशुवच्छालाद्वार्ये पात्रसम्मार्गः । सम्मार्जनानां यत्नेन

क्षणानि कृत्वा शालाद्वार्यमपरेणाग्नेते यजमान उपस्थे सोमं कृत्वा ॥२९॥ शालाद्वार्यमपरेण सोमक्रयणीपदं परिकिरति ॥३०॥ चतुर्द्धैक आहवनीयस्योपयमनीष्वा-ग्नीध्रीयस्याक्षोपाञ्जने च ॥३१॥ आज्यप्रोक्षणीरन्तःपा-त्यदेश उत्पूय पशुवाज्यग्रहणम् ॥३२॥ धारयन्त्याज्यानि ॥३३॥ अपिव्रताश्चान्वारभन्ते यजमानम् ॥३४॥ वास-सा छादयत्येनान् ॥३५॥ चरत्सु नाद्रियेत ॥३६॥६॥

प्रदीप्तमिध्मं "त्वꣳ सोमेति प्रचरण्याऽभिजुहोति ॥१॥ जुषाणो अप्तुरिति द्वितीयाम् ॥२॥ अग्नये प्रह्रियमाणा-यानुवाचयति, सोमाय प्रणीयमानायेति वा ॥३॥ आह-वनीयं गच्छन्त्यादाय ग्रावद्रोणकलशसोमपात्राणीध्म

---

रक्षणम् । ततः पत्नीसन्नहनम्, आज्योद्वासनं, पत्न्या अवेक्षणम्, तत आज्यमादायानीय अन्तःपात्ये प्रोक्षणीनां पश्चात्सादनम् ।

ततो यजमान उत्सङ्गे सोमं निधाय शालाद्वार्यमपरेणोपविशति । ततोऽध्वर्युः सोमक्रमणीपदं चतुर्द्धा विभज्य एकं भागमाहवनीयप्रणयन काले उपयमनीषु प्रक्षिपेत; द्वितीयेन भागेनाक्षधुरामञ्जनं कुर्यात्, तृतीयं भागमाग्नीध्रीयस्योपयमनीषु प्रक्षिपेत् । चतुर्थं भागमत्रावसरे शाला-द्वार्यमपरेण परि किरेदिति ।

ततोऽन्तःपात्यदेशे आज्योत्पवनं, प्रोक्षणयुत्पवनं, आज्यावेक्षणं, ईक्ष-णान्ते नानाज्यकरणम् । ततः पृषदाज्यसंयोजनं, पशुवदाज्यग्रहणं, आज्यानां धारणं, यजमानस्य पुत्रपौत्रभ्रात्रादयश्चापिव्रता अविभक्तधना यजमानमन्वारभन्ते तेषां सयजमानानामेकेन वाससाऽऽच्छादनं, इतस्तत श्चरत्स्वपिव्रतेष्वन्वारम्भस्यानादरः ।

इत्यष्टमस्य षष्ठी कण्डिका ॥ ६ ॥

---

ततः प्रदीप्तस्येध्मस्योपरि त्वꣳ० सोमेति प्रचरण्या पालाश्या स्रु-चाऽऽज्यस्थाल्याः सकृद्गृहीतमाज्यं जुहोति, इदं सोमाय । ततः सकृ-द्गृहीतेनैव जुषाणो ऽप्तुरिति द्वितीयामाहुतिं जुहोति' इदमप्सवे ।

तत इध्ममुद्यम्योपयमनीभिरुपयम्य च होतारं प्रत्यग्नये प्रह्रियमाणाया

चतुष्टयं च सन्नद्धं, वपाश्रपण्यौ, रशने, शकलवृषणमर्णी च ॥४॥ अग्ने नयेति वाचयति ॥५॥ उत्तरेण सदो हृत्वाऽऽग्नीध्रेऽग्निं निदधाति ॥६॥ ग्रावद्रोणकलशसोमपात्राणि च ॥७॥ अयन्न इति जुहोत्यस्मिन् ॥८॥ उत्तरेण परिक्रम्याहवनीयस्योत्तरतो निदधात्यन्यदाज्यसोमवर्जम् ॥९॥ धिष्ण्याऽव्यवायोऽध्वर्योः ॥१०॥ इध्मप्रोक्षणादि करोति ॥११॥ खरोत्तरार्द्धे एकवृत्स्तरणं पश्चाद्वोत्तरवेदेः ॥१२॥ आऽऽहवनीयेक्षणात्कृत्वोरु विष्णाविति

---

नुब्रूहीति प्रैषः। सोमाय प्रणीयमानायानुब्रूहीति वा। ततः पञ्च ग्राव्णः, द्रोणकलशं, सर्वाणि पात्राणि, इध्मबर्हिश्चतुष्टयं च सन्नहनेन बद्धं, वपाश्रपण्यौ द्विगुणत्रिगुणे द्वे रशने, मन्थनचतुष्टयं च, एतान्यादाय सर्वे आहवनीयं प्रत्यध्वर्युमनु गच्छन्ति ब्रह्मा च।

गमने प्रारब्धेऽग्ने नयेति यजमानं वाचयति। सद उत्तरेणैतत्सर्वं हृत्वा आग्नीध्रे दक्षिणद्वारेण प्रविश्य धिष्ण्यस्योपरीध्माग्निं स्थापयति। निधानात्पूर्वं ब्रह्मयजमानौ दक्षिणत उपविशतः। ब्रह्मा चाग्नीध्रमुत्तरेण गत्वा पूर्वद्वारेण प्रविश्य धिष्ण्यस्य दक्षिणत आस्ते। ब्रह्मणस्तूष्णीमासनसंस्कारः। अध्वर्युः प्रचरण्यामाज्यस्थाल्याः सकृद्गृहीतमाज्यं गृहीत्वा आग्नीध्रीये अ ' न इति जुहोति, इदग्नय इत्येतावानेव त्यागः।

होमानन्तरं ग्रावद्रोणकलशसोमपात्राणि गृहीतानि तान्येवाग्नीध्रमध्ये निदधाति। सोमासन्द्या अपीदानीमेवाग्नीध्रे निधानं मानवे उक्तम्। ततः शेषमिध्मादिकमादायाग्नीध्रीयमुत्तरेण गत्वा पूर्वद्वारेण निष्क्रम्य गत्वा आज्यसोमवर्जितं सर्वमाहवनीयस्योत्तरतो निदधाति। ब्रह्मा च पूर्वेणाहवनीयं गत्वा दक्षिणतो बहिर्वेद्युपविशति।

ततः प्रोक्षणीरादायेध्मप्रोक्षणं, खरोत्तरार्द्धप्रोक्षणं वेदिरसीति। उत्तरवेदिपश्चाद्भागस्य वा। बर्हिःप्रोक्षणं, सशेषे मूलावसेकः, प्रोक्षणीनामाहवनीयस्योत्तरतो निधानं, बर्हिर्विस्रंसस्य पुरस्ताद्ग्रन्थ्याप्रस्तरग्रहणं, ब्रह्मणे प्रदानं, सन्नहनविस्रंसनं, स्तीर्यमाणप्रदेशस्य श्रोणौ निधानं, अन्यैरवच्छादनं, एकवृद्बर्हिस्तरणं, एकधातु एकवारमेवेत्यर्थः।

ततः स्तृतस्य दक्षिणभागे प्लक्षशाखास्तरणम्। ततः समित्प्रस्तरादानादि द्वितीयसमिदाधानानन्तरमाज्यस्थाल्या प्रचरण्यां सकृदाज्यं

जुहोति ॥१३॥ पुरस्ताद्वा समिधावाधायेति श्रुतेः ॥१४॥ आसाद्याज्यानि दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन्त्सोमं निदधाति देव सवितरिति ॥१५॥ एतत्त्वमिति विसृज्योपतिष्ठते ॥१६॥ स्वाहा निरिति निष्क्रम्याग्ने व्रतपा इत्याहवनीये समिधमाधाय मदन्तीरुपस्पृश्याङ्गुलीर्विसृजते ॥१७॥ पत्नी च गार्हपत्ये तूष्णीं मदन्तीरुपस्पृश्य ॥१८॥ चात्वाले मदन्तीः कृत्वा ॥१९॥ नामग्रहणभोजने अस्यातः कुर्वन्ति ॥२०॥ व्रत्यनिवृत्तिः ॥२१॥ हविःशेषभक्षः ॥२२॥ अग्नीषोमीयोऽतः पशुः ॥२३॥ तद्देवत्यः पशुपुरोडाशः ॥२४॥७॥

---

गृहीत्वोरु विष्णवित्याहवनीये जुहोति, इदं विष्णवे ।

ततः सूर्यस्त्वेति जपः । प्रदक्षिणमावृत्य विधृत्योः स्तरणाद्यात्मालम्भनान्तं पशुवत् । ततः पाणी प्रक्षाल्य यजमानहस्तात्सोममादाय हविर्द्धानस्योपस्थे प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य यजमाने सोमे कृतान्वारम्भे कृष्णाजिनस्योपरि देव सवितरिति सोममासादयति ।

ततो यजमानोऽन्वारम्भं मुक्त्वा एतत्त्वमिति सोममुपतिष्ठते । ततो यजमानः स्वाहा निर्वरुणस्येति मन्त्रेण हविर्द्धानान्निष्क्रम्याग्ने व्रतपा इत्यनेनाहवनीये समिधमाधाय मदन्तीरुपस्पृश्याङ्गुलीर्विसृजते । पत्नी च तूष्णीं गार्हपत्ये समिधमाधाय स्वमदन्तीरुपस्पृश्याङ्गुलिविसर्गं कुरुते ।

ततोऽध्वर्युर्मदन्तीश्चात्वाले निनयति। अत ऊर्ध्वं यजमानस्य नामग्रहणं तस्याऽन्नभोजनं कर्त्तव्यम् न ततः प्राक् । अत ऊर्ध्वं पयोव्रतस्याभावः । श्वः सवनीयपुरोडाशादिशेषस्याशनं यजमानस्य, नाद्य । "यजमानोऽग्रेण हविर्द्धानेऽपरेण स्रुग्दण्डं दक्षिणाऽतिक्रम्य परो ब्रह्मण उपविशत्येष सञ्चर" इति मानवे ॥ ७ ॥

अष्टमस्य सप्तमी कण्डिका ॥ ७ ॥

अभ्य्यादि करोति ॥१॥ दक्षिणेन हविर्द्धानं परिव- डाᳪं हरति ॥२॥ गुदतृतीयं च ॥३॥ मार्जालीयं दक्षिणेन जाघनीम् ॥४॥ प्रत्याहृत्य वा सोमाहवनीययोरव्य- वायात् ॥५॥ यूपैकादशिनी वेद्व्यर्थाक्षमात्राण्यन्तराणि ॥६॥ पूर्वार्द्धे वा समं विभज्य ॥७॥ पक्षसम्मिता वाऽ- रत्नौ ॥८॥ यूपाहुत्यश्रयादानयवावपनानि सकृत् ॥९॥ भेदनान्यहसान्निपातित्वात् ॥१०॥ मध्यमं परिलिख्योत्तरं दाक्षिणं वा व्यत्यासमितरान् ॥११॥ आऽवटहोमात्क- रोति ॥१२॥ अञ्जनाद्याचषालेक्षणात्कृत्वैकैकस्य ॥१३॥ सर्वो वा दक्षिणोत्तराणामवगूहनान्तमालम्भनासम्भवात् ॥१४॥ परिवीय मध्यममवगूहनान्तम् ॥१५॥ अग्निष्ठे चैषाᳪं रशनाः परिवेष्ट्य वासयति ॥१६॥ अभ्यञ्जनप्र- भृति करोति ॥१७॥ यथाखातमुच्छ्रयति ॥१८॥ वर्षिष्ठो दक्षिणोऽनुपूर्वा इतरे ॥१९॥ तीव्रसुत्यग्निष्ठः प्राची च ॥२०॥ यथायूपं वेदिवर्द्धनम् ॥२१॥ वर्षिष्ठाद्दक्षिणं वितष्टं द्वादशं निदधात्येष त इति ॥२२॥ प्रोक्षणाद्याऽवगूहना- त्करोत्यनर्थलुप्तम् ॥२३॥ अनुच्छ्रित्य वोत्तरम् ॥२४॥ यथोच्छ्रितः सवनीयानालभत एकतृणेनोपाकृत्याग्नेय- सारस्वतसौम्यपौष्णबार्हस्पत्यवैश्वदेवैन्द्रमारुतैन्द्राग्न- सावित्रवारुणान् ॥२५॥ एकयूपे पश्वेकादशिन्यामाग्नेयं नियुज्य तस्मिंस्तस्मिन्नितरानुदीचः ॥ २६ ॥ आग्नेयः प्र-

---

अथाभ्र्यादानादियूपखननं स्वर्वगूहनान्तम्। उपाकरणमन्थनयोर्य- द्यपि विकल्पोऽस्ति तथापि करणपक्षः श्रेयान्। शतपक्षेऽकरणपक्षं निन्दि- त्वा करणविधानात्, अनुदितहोमवत्। अत उपाकरणमन्थने कृत्वा द्विगुणरशनया ऋतस्य त्वेति पशुं बद्ध्वा यूपे नियुनक्ति देवस्य त्वेति।

तत्राग्नीषोमाभ्यां जुष्टं नियुनज्मीति। प्रोक्षणे त्वा जुष्टम्। आस्योपग्र- हणं, अधस्तादुपोक्षणम्। तत इध्मप्रैषादि मार्जनान्ते विशेषः। प्रागकृतं

थमो गच्छत्यन्वारब्धोऽनुपूर्व्या इतरे ॥ २७ दक्षिणं च निघ्नन्त्येनमुत्तरमुत्तरमितरान् ॥ २८ ॥ समानमुपप्रेष्यपरिपशव्ये संज्ञपयान्वगन्प्रोक्षण्युल्मुकासिशामित्रान्तर्द्धानप्रच्छेदस्तोकसम्प्रैषशामित्रनुशासनसंवादवनस्पतिस्विष्टकृदिडादिरभ्याघारणं समासिच्य प्रभुत्वात् ॥२९॥ उखाशूलं वपाश्रपण्यौ च ॥३०॥ न वसासन्देहात् ॥३१॥ सौत्रामणीदर्शनाच्च ॥३२॥ नाविरोधात् ॥३३॥ पाकवैषम्यात्सौत्रामण्याम् ॥३४॥ मनोतावसाहोमौ कालभेदात् ॥३५॥ यूपैकादशिन्या वशावपामार्जनान्तं कृत्वा शालाद्वार्ये पत्नीयूपोच्छ्रयणं नाभिमात्रस्य ॥३६॥ परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि कृत्वा स्फ्यादि करोति ॥ ३७ ॥ ८ ॥

त्वाष्ट्रो बस्तः पर्यग्निकृतमुत्सृजन्ति ॥१॥ आज्येन संस्थापयन्तीति श्रुतेः ॥२॥ पशुपर्यग्निकरणाच्च ॥३॥ तदन्तं वा कर्मनामधेयात् ॥४॥ त्वष्टृवनस्पत्योश्च प्रयाजेष्विज्यादर्शनात् ॥५॥ अग्नीषोमीयस्य वपामार्जनान्ते

---

चेत्क्रीते सोमे दीक्षितदण्डस्य मैत्रावरुणाय प्रदानम् । शेतां नु मुहूर्त्तमित्यस्याभावः । नेष्टः पत्नीमुदानयेति प्रैषः । उत्तमप्रयाजं हुत्वा पूर्वं वपाया अभिघारः ।

ततो ध्रुवायाः, तत आज्यस्थाल्याः । ततः पृषदाज्यस्य । नात्राज्यभागौ । जुह्वामुपस्तीर्य हिरण्यमवधाय वपामवद्यन्नग्नीषोमाभ्यां छागस्य वपाय मेदसोऽनुब्रूहीत्याह ।

ततो वपां जुह्वामवधायोपरि हिरण्यमवधायोपरिष्टाद् द्विरभिघारयति । उत्थायातिक्रम्याश्राव्याग्नीषोमाभ्यां छागस्य वपां मेदः प्रेष्येति वक्ति । इदमग्नीषोमाभ्याम् । वपाश्रपण्योरनुप्रासनं, स्रुचोरासादनं, चात्वाले सर्वेषां मार्जनम् ।

इत्यष्टमस्याष्टमी कण्डिका ॥ ८ ॥

---

ततो वपामार्जनान्ते द्रुढं कलशमादाय चात्वालोत्करावन्तरेण नि-

**वसतीवरीग्रहणᳯ स्यन्दमानानामनस्तमिते ॥६॥ अस्तमितश्चेदग्निनाह्यात्पुरेजानश्चेत् ॥७॥ अनीजानोऽन्यस्यापि समीपावासितस्य पुरेजानस्य ॥८॥ उभयाभाव उल्कुषीᳯ हिरण्यं वोपर्युपरि धारयन्हविष्मतीरिति ॥९॥ अग्नेर्व इति निदधाति शालाद्वार्यमपरेण ॥१०॥ सुब्रह्मण्यां च प्रेष्यति पैतापुत्रीयाम् ॥११॥ आदित्याभ्यये**

---

ष्कस्य नद्यादिस्थाः स्यन्दमाना अपो गत्वा हविष्मतीरिति मन्त्रेण कलशेन ताः स्यन्दमाना अपो गृह्णीयादनस्तमिते सूर्ये ।

अस्तमयस्य संभावनायां वपायामहुतायामपि अनस्तमित एव वसतीवरीर्गृह्णाति, तदा च सुब्रह्मण्याह्वानं वपान्त एव भवति, वसतीवरीभिः संबन्धाऽभावात्, नेदानीमिति पितृभूतिः । एतदपि न कृतं सूर्यश्चास्तमितो यदा तदा वपामार्जनान्त एव स्वकीयान्मणिकाद् गृह्णीयात; यदि पूर्वं स यजमानः कृतसोमयागो भवति ।

अथ यजमानः सोमयाजी न चेत्तदा कृतसोमयागस्य सन्निकृष्टवासिनो मणिकाद्वसतीवरीर्गृह्णीयात् । अथ यदि कृतसोमयागः सन्निकृष्टवासी न चेत्तदा उल्कुषीं दीपिकां लौकिकाग्नौ प्रज्वाल्य तां ग्रहणकाले कलशस्योपरि धारयन्स्यन्दमानानां वसतीवरीर्गृह्णीयात् ।

अथवा हिरण्यं कलशस्योपर्युपरि धारयन्स्यन्दमानानां वसतीवरीर्गृह्णीयात् । ततः प्रत्यागत्य चात्वालोत्करावन्तरेण प्रविश्याग्नीध्रीयमुत्तरेण गत्वा शालायां शालाद्वार्यमपरेणाग्नेर्व इति सादयति ।

तत उत्करे प्रत्यागत्य सुब्रह्मण्यां प्रेष्यति । सुब्रह्मण्ये सुब्रह्मण्यामाह्वय पैतापुत्रीयामिति ।

तत उत्करे सुब्रह्मण्याह्वानम् । अपरे त्वाहुः—वपामार्जनान्ते पूर्वं सुब्रह्मण्याह्वानम् । कुतः ! सुब्रह्मण्यां च प्रेष्यतीति चकारेण वपामार्जनान्ते इत्यस्यानुकर्षणात् । सूत्रकारप्रस्थानाच्च अयं क्रमोऽवसीयते "वपान्ते सुब्रण्यानिवृत्तिरि"ति । शाखान्तरसूत्रेष्वप्येवमेवोक्तमस्ति । अतः पूर्वं सुब्रह्मण्ये सुब्रह्मण्यामाह्वय पैतापुत्रीयामिति उत्करदेशे सुब्रह्मण्याह्वानं तदनन्तरमध्वर्योर्वसतीवरिग्रहणमिति । अयं क्रमो युक्ततर इव दृश्यते ।

ततः पशुपुरोडाशनिर्वापः । तत्र पूर्वं छिरासनं, प्रणीताप्रणयनं, ततः पात्रासादनं—शूर्पं, कपालान्येकादश, कृष्णाजिनं, उलूखलमुसलम्, पात्रीधान्यम्, उपवेषः, संयवनोदकं, शृतावदानं, पुरोडाशपात्री एतान्यासाद्य

**ऽहुतायापि ॥१२॥ दक्षिणाग्निहोमान्तमग्नीषोमीयमस्तमिते सᳪंस्थाप्य व्युत्क्रामतेत्याह त्रिः ॥१३॥ शालाद्वार्यमपरेणास्ते पत्न्युत्तरवेदिमपरेण यजमान उपस्थे सोमं कृत्वा ॥१४॥ शालाद्वार्यमपरेण वसतीवरीः परि·**

---

पात्रान्तरे प्रोक्षणीरुत्सार्य शूर्पाग्निहोत्रहवण्योरादानादि ध्रुवा असद इत्यन्तं प्रकृतिवत् ।

ग्रहणे-अग्नीषोमाभ्यां जुष्टमित्यादि प्रकृतिवत् । नात्र कुक्कुटाहननं, नाज्यनिर्वापवेदबन्धौ । सर्वालम्भान्ते एतं होतृमैत्रावरुणाविति तावाहूयाज्यभागौ प्रकृतिवद्यजप्रैषौ कृत्वा जुह्वामुपस्तीर्येपभृति चोपस्तीर्य पुरोडाशस्यावद्यन्नग्नीषोमाभ्यां पुरोडाशस्यानुब्रूहीत्यनुवाचयति ।

ततोऽभिघार्य हविः प्रत्यभिघार्याोपभृति स्विष्टकृदर्थमवदाय द्विरभिघार्यातिक्रम्याश्राव्याग्नीषोमाभ्यां पुरोडाशं प्रेष्येति प्रशास्तारं प्रेष्यति । हुत्वा समानीय निर्गुणः स्विष्टकृद्यागः । नात्र संचराभ्युक्षणम् । प्राशित्रादि वा चतुर्द्धाकरणषडवत्तभागवर्जं मार्जनान्तं कार्यम् । पशुपुरोडाशेडायां मैत्रावरुणस्य भक्षः । पश्विडायां मैत्रावरुणस्य प्रतिप्रस्थातुश्च ।

ततः पशुविशसनादि दक्षिणाग्निहोमान्ते विशेषः-क्लोमादीनामग्रहणम् । अग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहि । अग्नीषोमाभ्यां छागस्य हविः प्रेष्येति प्रधानयागे प्रैषौ ।

यूपाग्न्योरन्तरालेनेडां प्रत्याहृत्योत्तरेणाहवनीयं हविर्द्धानं च सदसि नयनं,गुदतृतीयस्य चोपयड्ढोमार्थमनेनैव संचरेण सदसि नयनम् । जाघन्याश्चानेनैव मार्गेणाग्नीध्रीयमुत्तरेण च पत्नीसंयाजार्थं शालायां नयनम् ।

अध्वर्युः पत्नीसंयाजार्थमाग्नीध्रीयमुत्तरेण गत्वा शालाद्वार्यं पूर्वेण गत्वा तं दक्षिणेनोपविशति । शालाद्वार्ये पत्नीसंयाजा इडामार्जनान्ताः ।

ततोऽस्तमिते दक्षिणाग्निहोमः । वेदविमोकः पत्नेयोक्त्रस्य च । न समिष्टयजुः । एकवृद्द्विर्हिर्होमः । प्रणीताविमोकः । राक्षसभागः । "नेदिदं दीक्षितवसनं परिधाय पुरा यज्ञस्य सᳪंस्थाया अन्तं गच्छानि"ति श्रुतेः पशुपुरोडाशाङ्गभूतान्यपि समिष्टयजुःपूर्णपात्रादिकर्मापवर्गान्तान्यत्र न भवन्ति ।

ततो व्युत्क्रामतेति प्रैषः सर्वान्प्रति । ततः सर्वे देवयजनाद्बहिर्निःसरन्ति । पत्नी शालाद्वार्यस्य पश्चात्प्राङ्मुखी उपविशति । यजमानश्चो·

हरति ॥१५॥ दक्षिणेन निर्हृत्य दक्षिणस्यामुत्तरवेदिश्रोणौ निदधातीन्द्राग्न्योरिति ॥१६॥ आहृत्य स्थाने निदधाति ॥१७॥ कलशं पत्न्यालभते ॥१८॥उत्तरेण परिक्रम्योत्तरस्यां पूर्ववत् ॥१९॥ मित्रावरुणयोरिति वा ॥२०॥ विश्वेषां देवानामित्याग्नीध्रे ॥२१॥ सोमं चासन्द्याम्

---

त्तरवेदेः पश्चादुपविश्येोत्सङ्गे सोमं निदधाति हविर्धानमध्यात्स्वयमेवानीय ।

ततोऽध्वर्युर्वसतीवरीकलशं यत्नेनादाय प्राजहितमपरेण गत्वा दक्षिणेन शालाद्वारेण निर्हृत्य मार्जालीयं दक्षिणेन गत्वा दक्षिणस्यामुत्तरवेदिश्रोणौ कलशं निदधाति इन्द्राग्न्योरिति मन्त्रेण ।

ततः कलशमादाय यथेतं प्रत्यागत्य पत्न्या अग्रे शालाद्वार्यस्य पश्चात्पुनर्निदधाति । ततः पत्नी तं कलशमालभते । ततोऽध्वर्युः प्राजहितमपरेण गत्वा पुनः कलशमादाय पूर्वद्वारेण निःक्रम्याग्नीध्रीयमुत्तरेण गत्वोत्तरस्यामुत्तरवेदिश्रोणौ कलशं सादयति इन्द्राग्न्योरिति, मित्रावरुणयोरिति वा ।

ततः कलशमादाय विश्वेषां देवानामित्याग्नीध्रे सादयत्याग्नीध्रीयस्य पश्चात्, कर्कसूत्रात् । ततो यजमानात्सोममादायाग्नीध्रः पूर्वस्थापितायामासन्द्यां निदधाति तूष्णीमेव । दक्षिणतो रात्रावाग्नीध्रे सोमं रक्षति।

तत उत्करे सुब्रह्मण्ये सुब्रह्मण्यामाह्वय पैतापुत्रीयामिति सुब्रह्मण्यां प्रेष्यति । ततो पथोपाकृतं चत्वारो दोहा उपसृष्टादि परिक्षालनान्ताः क्रमेण सप्रवर्ग्ये । अप्रवर्ग्ये तु दधिघर्मवर्जितास्त्रयः ।

आतञ्चनमात्रे विशेषः । इन्द्रस्य सरस्वतिवतस्त्वा भागमिति सवनीयदोहानां त्रयाणाम् । इन्द्रस्य त्वा भागमिति दधिघर्मदोहस्य । तत एकस्य स्थाल्यामाशिरार्थं दुग्धमासिच्यातञ्चनीयम् ।

ततो दोहानां यत्नेन कचित्सुगुप्ते निधानं महता प्रयत्नेन रक्षणं कार्यम् । ततो मैत्रावरुणीपयस्यार्थमत्र वत्सापाकरणम् । तत्रेन्द्राय मित्रावरुणवते भागमिति गोरुपस्पर्शनमन्त्रे विशेषः ।

आपस्तम्बसूत्रे तु उत्तरपरिग्रहानन्तरमेव पयस्यार्थं वत्सापाकरणमुक्तम् । कर्कसूत्रे चात्रवोक्तम्—"वत्सानपाकृत्याग्नीध्रे यजमानो वसतो"ति । अत्र शाखाछेदनादिदोहनान्तं वत्सापाकरणान्तं सर्वमाग्नीध्रेण कर्त्तव्यम्,

॥२२॥ दीक्षितश्च तत्र ताᳬ रात्रिᳬसोमᳬ रक्षति ॥२३॥ सुब्रह्मण्यां च प्रेष्यति । परिवाप्यायै दोहनम् ॥२४॥ आवसथान्मर्दनालङ्करणदन्तप्रक्षालनान्यध्वर्योरदीक्षितस्याध्वर्योरदीक्षितस्य ॥२५॥

इत्यष्टमोऽध्यायः ।

## नवमोऽध्यायः ।

अपररात्र ऋत्विजः प्रबोधयन्ति ॥१॥ अप उपस्पृश्य शालाद्वार्ये परिस्तरणपात्रसᳬसादनप्रोक्षणाज्यानिर्वपणा

---

सवनीयानां निर्वापालङ्करणान्तस्याग्नीत्कर्तृकत्वविधानात् । शाखान्तरे प्रतिप्रस्थातुः सवनीयनिर्वापकर्तृत्वमुक्तमस्ति । वत्सापाकरणेऽपि वचनेन च कर्तृत्वमेवोक्तमस्ति ।

अत्र मानवे विशेषः—"सर्वाः स्रुचः सम्प्रगृह्णाति नक्तं पत्नीसंयाजान्तः सन्तिष्ठते पाशुबन्धकमिध्माबर्हिः सन्नह्यति यजमानस्य व्रतधुकामाशिरे दुहन्ति या पत्न्यास्तां मैत्रावरुण्यै पयस्यायै या प्रवर्ग्यस्य तां दधिघर्मायेऽति । तेन वत्सापाकरणं दधिघर्मार्थं पयस्यार्थं चैकैकस्य वत्सस्यापाकरणं नतु षण्णां षण्णाम् । यजमानव्रतदुघां च दोहयित्वाऽऽशिरो दधि कर्त्तव्यम् । प्रवर्ग्यगवी दधिघर्माय दोह्या । पत्नीव्रतदुघा च पयस्याया इति ।

ततः प्रातर्यूपपरिव्ययणार्थं रशनाया यूपे परिवेष्टय वासनम् । ततोऽध्वर्यो रात्रौ शयनार्यं गृहदानम् । मलापकर्षणसमर्थं स्नपनं चन्दनालङ्करणदन्तधावनदानम् । प्रातरुपयोक्ष्यमाणसकलवस्तूपकल्पनम् ।

इति श्रीत्रिरग्निचित्सम्राट्स्थपति महायाज्ञिक श्री प्रजापतिसुतदेवकृतायां कात्यायनसूत्रपद्धतावष्टमोऽध्यायः नवमी कण्डिका समाप्ताः ॥ ९ ॥

---

अथ सुत्याहस्य पद्धतिर्लिख्यते । तत्र रात्रेरपरभागे यजमानपुरुषाः सुप्तानृत्विजः प्रबोधयन्ति, सौत्यकर्मप्रारम्भार्थमुत्थापयन्तीत्यर्थः, ऋत्विजः प्रवुध्यध्वमित्येवं पुनः पुनरुच्चार्य ।

ततः सर्वे ऋत्विजो दन्तधावनं कृत्वा स्नात्वा धौतवस्त्राणि परि-

**धिश्रयणस्रुक्सम्मार्जनोद्वासनावेक्षणानि कृत्वाऽऽग्नीध्र- उत्पूय पशुवाज्यग्रहणम् ॥२॥ आज्यान्यादाय सोमं चा- र्थवचाहवनीय इध्मप्रोक्षणादि करोति ॥३॥ अग्नीषोमी- यवत्स्तरणम् ॥४॥ आऽऽज्यासादनात् कृत्वैषान्तरेणार्द्ध- सोममद्रिषु सम्मुखेषु निदधाति हृदे त्वेति ॥५॥ विश्वा-**

---

धायाचम्य तिलकादि कृत्वा पवित्रपाणयो ब्रह्मादिक्रमेण शालाद्वार्यसमीपे अप उपस्पृशन्ति । ततः स्वस्व कर्मणि प्रवर्त्तन्ते । तत्र द्विरासनम् । ब्रह्म- यजमानावतिप्रणीतं दक्षिणेनोपविशतः । अथवा पूर्वेणोत्तरवेदिमाग्नी- ध्रीयं चोत्तरेण शालाद्वार्यं पूर्वेणागत्य दक्षिणेन शालाद्वार्यमुपविशतः । ब्रह्मणः समन्त्रक आसनसंस्कारः,उपवेशनं च ।

ततो यजमान वाचं यच्छेति प्रैषः । प्राजहितवर्जं सर्वेषां परिस्तर णम् । ततः शालाद्वार्यमुत्तरेण पात्रासादनं तस्य पश्चाद्वा-अग्निहोत्रहवणी वज्रः,शम्या दृषदुपलं, पावत्रच्छेदनानि पवित्रे, स्थाली आज्यं च, वेदश्च दक्षिणा हिरण्याद्या । इध्मचतुष्टयं, बर्हिश्चतुष्टयं, स्रुवो जुहूः प्रचरणी वसाहोमहवन्यौ, उपभृद्द्वयं, ध्रुवा चेति । स्रुक्चतुष्टयम्, प्राशित्रहरणे, पान्नेजनीद्वयं, पृषदाज्यार्थं दधि, हिरण्यशकलानि, उपाकरणतृणं, उखापश्रकं, मन्थनचतुष्टयम्, योक्त्रं, यूनकुशाः, कृशास्तृतं होतृपीठम्, इडापात्री, अन्तर्द्धानकटः, षडवत्तं च ।

एतान्यासाद्य पवित्रकरणादिपात्रप्रोक्षणान्तम् । असञ्चरे अतिप्रणीत मुत्तरेण शालाद्वार्यस्य पुरस्ताद्वा प्रोक्षणीनां निधानम् । कुक्कुटाहननम्, आज्यनिर्वापो वेदबन्धः । अग्नीध एवाज्याधिश्रयणम् । अध्वर्योः पर्यग्नि करणं, उदकालम्भः, आग्नीध्रगृहे अग्नीद्वेदिमञ्च्य एव प्रोक्षणीर्द्धारयति ।

अध्वर्योः स्फ्यमुद्यम्य प्रोक्षणीप्रैषः, उत्करे स्फ्योदकप्रहारः,न पा- रायोः प्रक्षालनम्, अग्नीध एव प्रोक्षणीसादनम् । अन्तःपात्य एव स्फ्यासादनमिध्माबर्हिषोश्च । अग्नीधः पशुवत्पात्रसम्मार्गः । सम्मार्ज- नानां यत्नेन रक्षणम् । पत्नीसन्नहनम्, आज्योद्वासनं, पत्न्या अवेक्षणम् ।

ततः स्रुगाज्यपृषदाज्यस्थाल्याउयान्यादायाग्नीध्रमध्ये आज्यमुत्पय प्रोक्षणीश्चोत्पूयाज्यमवेक्ष्य नानाऽऽज्ये कृत्वा पृषदाज्यसंयोजनम् । पशुव- दाज्यग्रहणं, आज्यानां धारणम् । ततः आज्यान्यादायाग्नीध्रीयात्सोमं ग्रावादीनि च पूर्वदिननिहितानामाहवनीयसमीपे आज्यसोमवर्जितानां निधानम् ।

स्स्वामिति विसृज्योपतिष्ठते ॥६॥ एतेनाहरणं सोमा-र्थस्याभिषवे ॥७॥ नोद्धरणं ततो बहिर्द्धाभावात् ॥८॥ अभिषुतस्य चानवहरणं कृतत्वात् ॥९॥ प्राग्वाचं प्रवदि-तोः प्रातरनुवाकोपाकरणं देवेभ्यः प्रातर्यावभ्यो ऽनुब्रूही-ति समिधमादधत ॥१०॥ देवेभ्य इत्यके ॥११॥ सुब्रह्म-

---

तत इध्मप्रोक्षणाद्यात्मालम्भनान्तमग्नीषोमीयवत् । एकवृदेव स्तरणम् । उरु विष्णविति होमाभाव इति विशेषः । आत्मालम्भोदकालम्भान्ते पाणिप्रक्षालनम् । सोममादाय सयजमानो हविर्द्धानं प्रविश्य सोमपोटलकं विस्रंस्याधिषवणचर्मणि ग्राव्णः सम्मुखान्निधाय दक्षिणस्य हविर्द्धानस्येषान्तरेणार्द्धसोमं कुण्डलिकासहितं यजमाने सोमान्वारब्धे ग्राव्णामुपरि सोमोपनहनेनैव प्रक्षिपति इदं त्वेति मन्त्रेण । ततो यजमानो विसृज्य विभास्त्वामिति सोममुपतिष्ठते ।

ततो यजमानस्य शालाद्वार्यस्योदङ्मुखोपविष्टस्य लोकद्वारीयसामगानम् । तत एहि होतः प्रातरनुवाकायेति प्रैषः । हविर्द्धानपूर्वद्वारमध्ये पृष्ठ्याया उत्तरतो होतृषदनस्थापनम्, पूर्वस्यां द्वार्युपविशति शाङ्खायनसूत्रात् ।

तत्र होतर्युपविष्टे आहवनीये समिदाधानं कुर्वन्देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति प्रातरनुवाकोपाकरणं कुर्यात् । देवेभ्य इत्येतावत्केचिदिच्छन्ति । तत उत्करे गत्वा सुब्रह्मण्ये सुब्रह्मण्यामाह्वय पैतापुत्रीयामिति सुब्रह्मण्यां प्रेष्यति । ततः सुब्रह्मण्याह्वानम् । अध्वर्युर्जागरणं कुर्वन् प्रातरनुवाकं शृणोति समीपे उपविष्टः, स्वप्याद्वा ।

अग्नीधः सवनीयनिर्वापः । चतुरासनं, ब्रह्मोपवेशनं, प्रणीताप्रणयनं, परिस्तरणाभावः । शालाद्वार्यस्य पश्चादुत्तरतो वा पात्रासादनम्–शूर्पं कपालान्येकादश,कर्परं,कृष्णाजिनं, उलूखलमुसलं,पात्री धान्यं, शाखोपवेषः, संयवनोदकं,संयवनार्थं दधि च, शृतावदानं, वाजिनपात्रं, पञ्चबिला पात्री,दोहनचतुष्टयम् ।

ततः स्फ्योपहितपात्रीकरणम् । पात्रान्तरे प्रोक्षणीरुत्सार्य शूर्पाग्निहोत्रहवण्योरादानादि । ग्रहणे–इन्द्राय जुष्टं गृह्णामि । एकादशकपालार्थं व्रीहीणां यवानां वा ग्रहणम्, इन्द्राय हरिवते जुष्टम । धानार्थं यवानाम्, इन्द्राय पूषण्वते जुष्टम् । करम्भार्थं यवानां ग्रहणम् ।

ततः शेषाभिमर्शनादि । पात्रान्तरात्प्रोक्षणीः स्रुचि कृत्वा हविषां

पर्यां च प्रेष्यति ॥१२॥ प्रातरनुवाकं जाग्रदुपासीताध्वर्युः ॥१३॥ स्वप्याद्वा ॥१४॥ अग्नीदैन्द्रमेकादशकपालं निर्वपति, हरिभ्यां धानाः, पूष्णे करम्भं, सरस्वत्यै दधि, मित्रावरुणाभ्यां पयस्याम् ॥१५॥ इन्द्राय वा हरिपूषसरस्वतिमित्रावरुणवते धानादीनि यथासंख्यम् ॥१६॥१॥

---

प्रोक्षणम्—इन्द्राय त्वा जुष्टम् । नानाबीजपक्षे धर्मा उक्ताः ।

ततः कृष्णाजिनादानादिकणनिधानान्तम् ,तत्र विशेषः न कुक्कुटाहननम्, एकबीजपक्षे कणानां विभज्यालम्भः—इदमिन्द्रस्य, इदमिन्द्रस्य हरिवत इन्द्रस्य पूषण्वतश्च ।

ततः कृष्णाजिनादानादिपेषणम् । उपवेषादानादि । शालाद्वार्य एव कपालोपधानं,भर्जनोपधानं च प्रथमकपालधर्मेण । तत्राभ्यूहनाभावः । उपसर्जन्यधिश्रयणम् । प्रोहणान्ते पयस्यार्थमुपसृष्टादिपरिक्षालनान्तः पत्नीव्रतदुघाया एकस्या दोहः ।

ततः श्रपणादि पुरोडाशाधिश्रयणान्तम् । ततो यवानां कर्परेऽधिश्रयणं घर्मा स्थ विश्वायुष इति । उभयोः पर्यग्निकरणं, तप्ते पयसि दधि प्रक्षेपः, पुरोडाशस्य मा भेरित्यालम्भः । मा भैष्ट मा संविग्ध्वमिति धानानामालम्भः ।

ततो धाना उद्वास्य विभज्यालम्भः—इदमिन्द्रस्य हरिवतः, इन्द्रमिन्द्रस्य पूषण्वत इति । ततः पूषण्वद्भागस्य धान्यमसीति दृषदुपावापादिपेषणं प्रोहणान्तं, पिष्टानामीक्षणं धानानां च ।

ततः सपवित्रपात्र्यां पिष्टावापः । अग्नीद् दध्युपसर्जनीरानीय सपवित्रहस्तस्योपरि मन्त्रान्ते निनयति—सन्दध्योषधीभिः समोषधयो रसेन । सꣳ रेवज्जगतीभिः पृच्यताꣳ संमधुमन्मधुमतीभिः पृच्यतामिति दध्युपसर्जनीप्रतिग्रहणम् । ततः संयवनं, पुरोडाशाकारस्य करम्भस्य करणं, अन्यत्र क्वचित्स्थापनं, पात्र्यङ्गुलिप्रक्षालनम्, पुरोडाशस्यातमेरुरित्यभिवासनम् , अभितस्य पात्र्यङ्गुलिप्रक्षालनस्य निनयनम् ।

स्थापितः सम्मार्जनैः शृतावदानवाजिनपात्रपञ्चबिलापात्रीणां संमार्गः, सम्मार्जनानां पुनर्यत्नेन रक्षणं, न प्रासनम् । अत ऊर्ध्वं कर्म पुरोडाशाँ अलङ्कुर्विति प्रैषानन्तरं भविष्यति ; तावत्कालमग्नीत्तत्र यत्नेन रक्षणं करोति कारयति वा ।

इति नवमस्य प्रथमा कण्डिका ॥ १ ॥

उन्नेतुः पात्रयोजनम् ॥१॥ खरोत्तरपूर्वार्द्धे उपांश्वन्तर्यामयोः ॥२॥ दक्षिणमुपांशोः ॥३॥ तदपरेण द्विदेवत्यानि प्रत्यञ्चि ॥४॥ रास्नावमैन्द्रवायवम् ॥५॥ अजकावं मैत्रावरुणम् ॥६॥ औष्ठमाश्विनम् ॥७॥ दक्षिणपूर्वार्द्धे शुक्रामन्थिनोः ॥८॥ दक्षिणः शुक्रस्य ॥९॥ आग्रयणस्थाली मध्ये ॥१०॥ दक्षिणोक्थ्यस्थाली सपात्रा ॥११॥ तथाऽऽदित्यस्थाल्युत्तरा ॥१२॥ ऋतुपात्रे पूर्वे स्रुक्पुष्कराकृती उभयतोमुखे काष्मर्यमये आश्वत्थे वा ॥१३॥ ऊर्ध्वानीतराणि प्रादेशमात्राणि मध्यसङ्गृहीतानि ॥१४॥ आग्रयणादपरां परिप्लवाꣳ स्रुक्पुष्कराम् । अधोऽधोऽक्षं प्रत्य-

---

उन्नेतुः पात्रयोजनं, तत्र खरस्यैशानदिग्भागे उपांश्वन्तर्यामपात्रयोरासादनं करोति, तयोर्मध्ये उपांशुग्रहपात्रं दक्षिणतः, उत्तरतोऽन्तर्यामस्य । तत उपांशुपात्रस्य पश्चात् प्रत्यक्संस्थानि त्रीणि द्विदेवत्यपात्राण्यासादयति । तेषां त्रयाणां मध्ये चैन्द्रवायवपात्रं रास्नावं मेखलायुक्तं प्रथमं; द्वितीयं मैत्रावरुणपात्रमजकावमजागलस्तनाकारकाष्ठावयवयुक्तं पश्चात् ।

ततस्तृतीयमाश्विनपात्रमौष्ठ्यमोष्ठावयवयुक्तं ततः प्रत्यक् । ततः खरस्याग्नेयकोणे दक्षिणतः शुक्रपात्रमासादयति, तत उत्तरतो मन्थिपात्रम् । ततः खरस्य मध्ये आग्रयणस्थालीमासादयति, तस्या आग्रयणस्थाल्या दक्षिणत उक्थ्यस्थाली, तस्याः पुरस्तात् उक्थ्यपात्रं, आग्रयणस्थाल्या उत्तरत आदित्यस्थाली, तस्याः पुरस्तात् आदित्यपात्रम् । तथा च काठके—"दक्षिणश्रोण्यामुक्थ्यस्थालीं पूर्वमुक्थ्यपात्रमुत्तरस्यां श्रोण्यामादित्यस्थालीं पूर्वमादित्यपात्रमि"ति ।

तत आग्रयणस्थाल्याः पुरस्तात्काष्मर्य्यमये आश्वत्थमये वा स्रुक्पुष्कराकारे उभयतोमुखे मूलाग्रज्ञापकचिह्नयुक्ते द्वे ऋतुपात्रे आसादयति । स्थालीव्यतिरिक्तानि सर्वाणि पात्राणि प्रादेशमात्रोच्चानि मध्यसंगृहीतानि वैकङ्कतानि भवन्ति ।

तत आग्रयणस्थाल्याः पश्चात् स्रुक्पुष्कराकारां वारणीं परिप्लवां संभरणीतोऽन्यां निदधाति । एतानि पात्राणि खरे सादयित्वा द्रोणकलशं दक्षिणहविर्द्धानाक्षस्याधोमार्गेण समीपेनैव प्रागग्रं सन्तं प्रत्यञ्चं प्रेर्य भूमौ निधायाक्षस्योपरिष्टात्समीपेनैवान्यतरतोदशमरत्निमात्रं श्वेतवर्ण

**ऽन्ं द्रोणकलशमत्युह्योपर्युपर्यक्षं पवित्रमस्मिन्करोति ॥१५॥ शुक्लं जीर्वोर्णानाम् ॥१६॥ उभयतोदशं परिप्लवायाम् ॥१७॥ पूर्वेणोपस्तम्भनमुत्तरं ध्रुवस्थालीमनन्तर्हिते ॥१८॥ धुरि प्रचरणीम् ॥१९॥ पूर्वेणाक्षमुपरि पूतभृतम् ॥२०॥ परेणाधवनीयम् ॥२१॥ प्रागक्षाद्दशचमसानसंभृन्तानधः ॥२२॥ प्रत्यगेकधनानयुग्मानुदहरणांस्त्रि-**

---

जीर्वोर्णानिर्मितं पवित्रं कृत्वा द्रोणकलशस्योपरि निदधाति ।

तत एवंविधमेवोभयतोदशं द्वितीयं पवित्रं परिप्लवायां निदधाति । तत उत्तरस्य हविर्धानस्योपस्तंभनं पूर्वेण ध्रुवस्थालीमनन्तर्हिते देशे बर्हिस्तृणान्यपोह्य सादयति ।

ततस्तस्यैवानसो धुरि ईषाग्रयोरुपरि प्रागग्रामुदगग्रां वा प्रचरणीं पालाशीं स्रुचं सादयति । तत उत्तरस्यैवानसोऽक्षस्य पुरस्तादनस उपर्येव पूतभृत्संज्ञं मृन्मयं महाकलशं विस्तीर्णमुखमासादयति ।

ततस्तस्यैवोत्तरस्यानसोऽक्षस्य पश्चादनस उपर्येवाधवनीयसंज्ञं द्वितीयं मृन्मयं महाकलशं विपुलमुखं सादयति । ततोऽक्षात्प्राक् शकटस्याधस्ताद् भूमौ मूलाभिज्ञापकवृन्तयुक्तान्दश वैकङ्कतांश्चमसान् होतृचमसादिक्रमेण प्रागग्रानुदक्संस्थान् निदधाति ।

तेषां च लक्षणं परिशिष्टे—

"विकङ्कतमयाः श्लक्ष्णास्त्वग्बिलाश्चमसाः स्मृताः ।
चतुरङ्गुलखाताश्च तेषां दण्डेषु लक्षणम् ॥
होतुर्मण्डल एव स्याद् ब्रह्मणश्चतुरस्रकः ।
उद्गातॄणां च त्र्यस्रिः स्याद्याजमानः पृथुः स्मृतः ॥
प्रशास्तुरग्रतष्टः स्यादुत्तष्टो ब्रह्मशंसिनः ।
पोतुरग्रे विशाखी स्यान्नेष्टुः स्यान्निगृहीतकः ॥
अच्छावाकस्य रास्ना च आग्नीध्रस्य मयूषक" इति ।

निगमे च—"नैयग्रोधाश्चमसाश्चतुरस्राः प्रस्थोदकग्राहिणस्त्वग्बिला दण्डलक्षणा" इति ।

मानवे—"दश चमसान्नैयग्रोधान्रौहीतकान्वे"ति ।

काठके च—"नैयग्रोधाश्चमसा रौहितका वा सर्वाणि वा पर्णमयानी"ति । तत उत्तरहविर्धानाक्षस्य पश्चाद् भूमौ शकटस्याधस्तादेकधनसंज्ञकानुदकुम्भान् त्रिप्रभृति पञ्चदशपर्यन्तानयुग्मानुदक्संस्थान्निदधाति ।

प्रभृत्यापञ्चदशभ्यः ॥२३॥ अभूदुषा रुशत्पशुरित्युच्य-
माने ॥२४॥ ॥ २ ॥

चतुर्गृहीतं प्रचरण्या जुहोति शृणोत्वग्निरिति ॥१॥
अपरं गृहीत्वोदङ् गच्छन्नाहाप इष्य होतरिति ॥२॥ प्रेष्य-
ति च मैत्रावरुणस्य चमसाध्वर्यवेहि, नेष्टः पत्नीरुदानयै,
कधानिन एता, अग्नीचात्वाले वसतीवरीभिः प्रत्युपतिष्ठा-
सै होतृचमसेन चेति ॥३॥ अपां गत्वा देवीराप इत्यप्सु
जुहोति ॥४॥ कार्षिरसीति मैत्रावरुणचमसेनाज्यमपोह-
ति ॥५॥ समुद्रस्य त्वेति तेन गृह्णाति ॥६॥ एकधनांश्चो-

---

तत्र हरिस्वामिनो व्यवस्थामाहुः—"अग्निष्टोमे त्रय एकधनाः पञ्च वा, अत्यग्निष्टोमेऽपि तावन्त एव, उक्थ्ये पञ्च वा सप्त वा, षोडशिन्यां सप्त वा नव वा, वाजपेये नव वा एकादश वा, अतिरात्रे एकादश वा त्रयोदश वा, अप्तोर्यामे त्रयोदश वा पञ्चदश वे"ति ।

यद्येवं न कल्प्यते तर्हि सर्वे विकल्पाः प्रकृतावेव भवेयु, स्तथा-सत्ययुक्ता उदकवृद्धिरापद्यते, तस्माद्यथोक्तैव व्यवस्था युक्ता । एतत्पा-त्रयोजनं सवनीयनिर्वपणं च प्रातरनुवाकोपाकरणानन्तरं सहैव भवति ।

इति नवमस्य द्वितीया कण्डिका ॥२॥

---

ततः प्रातरनुवाकसमाप्तिवेलायामभूदुषा रुशत्पशुरिति अस्मिन्मन्त्रे होत्रा पठ्यमानेऽध्वर्युः प्रचरण्या चतुर्गृहीत्वा समिधमाहृत्य शृणो-त्वग्निरित्याहवनीये जुहोति, इदमग्न्यधिषवणग्रावदेवसवितृभ्यः ।

ततः प्रचरण्यामेव पुनश्चतुर्गृहीतं गृहीत्वा उदङ्गच्छन्नप इष्य होतरिति होतारं प्रेष्यति । तत उदङ्गच्छन्नेव मैत्रावरुणस्य चमसाध्वर्यवेहीति मैत्रावरुणसंबन्धिनं चमसाध्वर्युं प्रेष्यति । नेष्टः पत्नीरुदानयेति नेष्टारं, एकधनिन एतेत्युदकग्राहकानृत्विजः प्रेष्यति, अग्नीच्चात्वाले वसती वरीभिः प्रत्युपतिष्ठासै होतृचमसेन चेत्यग्नीधं प्रेष्यति ।

ततः सर्वे यथोपदिष्टं प्रैषार्थं कुर्वन्ति । अग्नीच्चात्वाले वसतीवरी-रानीय होतृचमसं वाऽनीय समीपे तिष्ठति । ततः सर्वे यथोपदिष्टं प्रेषिता एव चात्वालोत्करयोरन्तरेणैते सर्वे उदञ्चो निष्क्रम्य यस्यां दिश्युदकं

प्रयान्ति ॥७॥ पान्नेजनांश्च पत्न्यो द्वौ द्वौ ॥८॥ प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च सꣳस्पर्शयति समाप इति ॥९॥ इतरेतरास्मिन्व्यानयन्त्येके। मैत्रावरुणचमसे प्रथमम् ॥१०॥ होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छति निग्राभ्याः ॥११॥ होत्रा पृष्टः प्रत्याहोतेव नंनमुरिति ॥१२॥ प्रचरणीसꣳस्रवमग्निष्टोमे जुहोत्यभावे चतुर्गृहीतं यमग्न इति ॥१३॥ उक्थ्ये प्रथमं परिधिमालभते ॥१४॥ प्रविशत्येवान्यत्र ॥१५॥ ररात्यालम्भनं वा षोडशिनि ॥१६॥ छादिरातिरात्रे ॥१७॥ अतीत्य दक्षिणेन होतारं मैत्रावरुणचमसमाधवनीयेऽवनयति, वसतीवरीतृतीयं च "अग्निः प्रातःसवने पात्वस्मान्वैश्वानरो महीना विश्वशम्भुः। स नः पावको

---

भवति तडागादिस्थितं तस्यां गच्छन्ति। ब्रह्मयजमानौ पत्नी च। उदकं प्राप्य अप्सु परिस्तीर्य समीपे उपविश्य देवीरापो अपां नपादित्यप्सु चतुर्गृहीतं जुहोति, इदमध्वर्युः।

ततो मैत्रावरुणचमसेन हुतमाज्यं दूरे प्रेरयति कार्षिरसीति मन्त्रेण। ततः समुद्रस्य त्वाऽक्षित्या इति मैत्रावरुणचमसेनापो गृह्णाति।

तत एकधनिन एकधनैरनेनैव मन्त्रेणापो गृह्णन्ति। पत्नी च द्वौ पान्नेजनौ तूष्णीं पूरयति। अनेकपत्नीके प्रतिपत्नि द्वौ द्वौ पान्नेजनौ भवतः। एकैक उर्वासेकार्थः, अपरः पशुशोधनार्थः।

ततः सर्वे देवयजनं प्रत्यागच्छन्ति होतः पठ इति ब्रुवन्तः। अत्र मानवे विशेषः—"यत्र होतुः प्रातरनुवाकमनुब्रुवत उप शृणुयात्तदपोऽध्वर्युर्वहन्तीनां गृह्णीयाद्यदि दूरे स्युश्चात्वालान्ते गृह्णीयादि"ति।

ततः सर्वेषु चात्वालसमीपे आगतेषु अध्वर्युश्चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च परस्परं संस्पर्शयति समापोऽद्भिरिति। केचित्पूर्वं मैत्रावरुणचमसे वसतीवरीर्निनयन्ति।

ततो मैत्रावरुणचमसे वसतीवरीर्निनयति। ततो मैत्रावरुणचमसाद्वसतीवरीषूदकं निनयति। उभयत्र समाप इति मन्त्रः।

ततोऽध्वर्युर्होतृचमसे वसतीवरीर्निनीय यजमानाय समर्पयति,

द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्यामे"ति॥१८॥ ताव चैकधनानाम्॥१९॥एकधनस्थान'उभयशेषान्निधाय॥२०॥३॥

आधिषवणे पर्युपविशन्ति॥१॥उत्तरतोऽध्वर्युयजमानौ ॥२॥ पूर्वोऽध्वर्युः। अपरेण परीत्येतरे त्रयः ॥३॥ देवस्य त्वेत्याद्रिमादाय वाचं यच्छति प्राग्घिङ्कारात् ॥४॥ स उपांशुसवनः ॥५॥ निग्राभ्यासु वाचयत्युरस्येना निगृह्य निग्राभ्या स्थेति ॥६॥ उपांशुसवने सोमं मि-

---

तासामपां निग्राभ्या इति संज्ञा। तत उत्थायाहवनीयं प्रति गच्छन्ति। ततो होताऽध्वर्युं पृच्छति अध्वर्योऽवेरपा इति। अध्वर्युरुतेव नंनमुरिति प्रत्याह।

ततः प्रचरणीसंस्रवमग्निष्टोमसंस्थे क्रतौ आहवनीये समित्पूर्वकं जुहोति। संस्रवाभावे आज्यस्थाल्याश्चतुर्गृहीतं गृहीत्वा जुहोति यमग्ने पृत्सुवति, इदमग्नये।

ततो हविर्धानद्वार्युपविष्टं होतारं दक्षिणेनातिक्रम्य मैत्रावरुणचमसमाधवनीयेऽवनयति अग्निः प्रातः सवन इति।

ततो वसतीवरीणां तृतीयं भागमनेनैव मन्त्रेणाधवनीये आसिञ्चति। एकधनानामपि प्रत्येकं तृतीयं तृतीयं भागं ग्रहणक्रमेणाधवनीये आसिञ्चति अनेनैव मन्त्रेण। तत एकधनस्थाने वसतीवरीशेषमेकधनशेषं च निदधाति।

इति नवमस्य तृतीया कण्डिका ॥ ३ ॥

---

तत्राधिषवणचर्मण उत्तरतोऽध्वर्युयजमानौ उपविशतः। तयोर्मध्ये पूर्वोऽध्वर्युरपरो यजमानः। ब्रह्मा दक्षिणतः आस्ते। प्रतिप्रस्थातृनेष्टुन्नेतारश्चापरेण दक्षिणं हविर्धानं परीत्य दक्षिणतः प्रत्यक्संस्था उदङ्मुखा उपविशन्ति। अपरेण हविर्धानमुद्गातार उपविष्टा भवन्ति। तत्र प्रतिप्रस्थाता गच्छन्प्रतिहर्त्तारमन्तरेणोद्गातृप्रस्तोतृभ्यां बाहगच्छति। इतरौ च सर्वेषां पश्चाद् गच्छतः।

एवं सर्वे पर्युपविशन्ति। तत्र पूर्वमभिषवार्थवस्तूनामीषान्तरेणाहरणाम्। हिरण्यमनामिकायां बन्धनार्थमध्वर्य्वादयश्चत्वारोऽपि ईषान्तरेणाहरन्ति। तथा सर्वेऽपि स्वं स्वं ग्रावाणमीषान्तरेणाहरन्ति। अध्वर्युर्द्वितीयमुपांशुसवनं च।

मीत इन्द्राय त्वा वसुमते रुद्रवत इति पञ्चकृत्वः प्रतिमन्त्रम् ॥७॥ यत्त इति मितालम्भनम् ॥८॥ प्रतिप्रस्थाताऽंशूनषडादत्तेऽङ्गुल्यन्तरेषु द्वौ द्वौ कुरुते ॥९॥ श्वात्रा स्थेत्यासिञ्चति निग्राभ्याः ॥१०॥ प्रहरिष्यन्द्वेष्यं मनसा ध्यायेदमुष्मा अहं प्रहरामि न तुभ्यं सोमेति ॥११॥ अभावे तृणम् ॥१२॥ मा भेरिति प्रहरति

---

ततोऽध्वर्युर्निग्राभ्या होतृचमसस्था एवेषान्तरेण हरति । ततः प्रचरणी, ततो दशापवित्रमुभयतोदशमिति ।

ततोऽध्वर्योः पाणिप्रक्षालनं, अनामिकायां हिरण्यबन्धनम् , अध्वर्यो रेवाद्रयादानं देवस्य त्वेत्यनेन पयस्वन्तमित्यन्तेन । ततः प्राग्धिङ्कारादध्वर्योर्वाग्यमनं, तस्याद्रेरुपांशुसवन इति संज्ञा । ततो यजमानो होतृचमसं हृदयसंलग्नं धारयित्वा निग्राभ्यासु हस्तं निदधाति । अध्वर्युर्निग्राभ्यासु कृतान्वारम्भं यजमानं निग्राभ्या स्थेति वाचयति ।

तत उपांशुसवनेऽध्वर्युः पञ्चकृत्वः सोमं मिमीते। इन्द्राय त्वा वसुमतेऽरुद्रवत इति प्रथमं सोममुष्टिमुपांशु सवनस्योपरि प्रक्षिपति। इन्द्राय त्वाऽदित्यवत इति द्वितीयं, इन्द्राय त्वाऽभिमातिघ्न इति तृतीयं, श्येनाय त्वेति चतुर्थम्,अग्नये त्वेति पञ्चमम् । ततो मितं सोमं यत्ते सोम दिवीत्यालभते ।

ततोऽध्वर्युरभिमृष्टात्सोमात् मुष्टिमात्रं सोमं क्षुल्लकाभिषवार्थं पृथक् कृत्वा पात्रान्तरे स्थापयति । ततः षडंशून्प्रतिप्रस्थातुरङ्गुल्यन्तरे करणार्थं पृथक् करोति । तत एकं महांशुं कुण्डलिकात्वसंपादितं तृतीयसवनार्थं पृथक्कृत्य क्वचिन्निदधाति ।

ततो निग्राभ्याः क्षुल्लकाभिषवार्थं होतृचमसात्पात्रान्तरे कृत्वा क्वचिन्निदधाति, उपांशुसवनं च । एतावत् क्षुल्लकाभिषवार्थं पृथक्करोति । ततः प्रथमं महाभिषवस्य प्रारम्भः। तत्राऽध्वर्युणा पाणिप्रक्षालने हिरण्यबन्धने च कृते तत इतरेषां प्रतिप्रस्थातृनेष्टृन्नेतृणां पाणिप्रक्षालनं, हिरण्यबन्धनं, अध्वर्य्वादीनां सर्वेषामद्र्यादानं देवस्य त्वेत्यनेन पयस्वन्तमित्यनेन ।

ततोऽध्वर्युः श्वात्रा स्थेति सोमस्योपरि निग्राभ्या आसिञ्चति । ततो निग्राभ्याभिरार्द्रीकृतं सोमं चतुर्द्धा विभज्य सर्वेऽभिषुण्वन्ति । अभिषवं करिष्यन्तो वैरिणं मनसा चिन्तयेयुरमुष्यै अमुकायाहं प्रहरामि न तुभ्यं सोमेत्येवम् । यदि द्वेष्यः कश्चिन्न भवति तदा तृणं मनसा चिन्तयेयुः ।

॥१३॥ एवं त्रिरभिषुणोत्यासेचं निग्राभ्याः ॥१४॥ अष्ट-कृत्व एकादशकृत्वो द्वादशकृत्वः ॥१५॥ सर्वे पञ्चवर्गाः पशुकामस्य । अष्टवर्गा ब्रह्मवर्चसकामस्य ॥१६॥ प्रति-वर्गं निग्राभं वाचयति होतृचमसेऽल्पानꣳशूनवधाय प्रा-गपागिति ॥१७॥ अद्रिणा चतुर्थम् ॥१८॥ तूष्णीं वा ॥१९॥ उपांꣳशुं च गृह्णाति वाचस्पतये देवो देवेभ्यो मधुमतीरिति ॥२०॥ प्रतिप्रस्थातोपगृह्णाति पात्रम् ॥२१॥ आत्तानां च द्वौ द्वावन्तर्दधाति ग्रहणभेदात् ॥२२॥

---

तृणायाहं प्रहरामि न तुभ्य सोमेत्येवम् । मा भेर्मा समिति मन्त्रेण सर्वेऽधिषवणफलकाधारचर्मस्थसोमस्योपरि ग्राव्णा प्रहरन्ति । तत्रैवं मा भेर्मा संविक्था० सोम इति मन्त्रमुक्त्वा तृणायाहं प्रहरामि न तुभ्यं सोमेत्येवं मनसि चिन्तयित्वा सर्वे प्रहरणं कुर्वन्ति । पुनः पुनतूष्णीमेव याव॰द्भिः प्रहारै रसप्रच्युतिर्भवति तावत्प्रहरणम् ।

तत इत्थंलक्षणमेकपर्यायमभिषुत्य विरम्य इतस्ततः प्रक्षिप्तं सोममेकत्र कृत्वा पुञ्जीकुर्वन्ति । ततस्तूष्णीमेवापरिमितसंख्यं प्रहरन्ति । पुनर्वि·रम्य पुञ्जीकृत्य पुनरभिषुण्वन्ति । एवं विरम्य विरम्य पर्यायत्रयात्मकेऽभिषवे कृते सर्वं सोममाप्याययन्ति अꣳशुरꣳशुष्ट इति ।

ततोऽध्वर्युर्होतृचमसे त्रिप्रभृत्यल्पानंशूनवधाय प्रागपागु० ब्रवीमि त वच इति सप्रैषं यजमानं वाचयति संभरण्यामभिषुतं सोमं गृहीत्वाऽऽधव-नीयमध्ये प्रक्षिप्य तदुदकेन सह धर्षयित्वा तत आदाय संभरण्यैवाहृ-त्याधिषवणे प्रक्षिपति । एवमेकोऽभिषवस्त्रिपर्यायः समाप्तः । एवमेव द्वितीयोऽभिषवो निग्राभ्यासेचनाद्याधूयाहरणान्तः । एवमेव तृतीयोऽपि निग्राभ्यासेचनाद्याधूय प्रहरणान्तोऽभिषवः कार्यः ।

तृतीयेऽयं विशेषः-प्रागपागिति वाचनानन्तरं ग्रावाणं होतृचमसस्यो·परि निधाय चतुर्थं प्रागपागिति पुनर्वाचयति । ततः सरसानंशून् संभ·रण्येत्याद्याधूयाहरणान्तं करोति । एवं त्रयोऽप्यभिषवास्त्रिपर्यायाः स·माप्ताः । अयं महाभिषव उक्तः ।

अथ क्षुल्लकाभिषव उच्यते । तत्रैकोऽध्वर्युरेवाभिषुणोति न सर्वे । तत्र पूर्वं क्षुल्लकाभिषवार्थं पात्रान्तरे स्थापितं सोममधिषवणे प्रक्षिपति । निग्राभ्याश्च पात्रान्तराद्धोतृचमसेऽवनयति ।

मन्त्रलिङ्गाच्च ॥२३॥ षड् वा श्रुतिसामर्थ्यात् ॥२४॥ यस्त इत्यात्तान्त्सोमे निदधाति ॥२५॥ परिमृज्याऽऽसादनमुपाꣳश्वन्तर्यामयोः ॥२६॥ अभिचरन्त्सादयेदबिसृजन्नमुष्य त्वा प्राणꣳ सादयामीति । उदानमित्यन्तर्यामम् ॥२७॥ पाणिना चापिदधात्यमुष्य त्वा प्राणमपिदधा-

---

ततः प्रतिप्रस्थात्रर्थमवशेषितान् षडंशून्प्रतिप्रस्थाता गृहीत्वा सव्यहस्ताङ्गुल्यन्तरेषु द्वौ द्वौ असंश्लिष्टौ करोति । दक्षिणहस्तेनोपांशुपात्रं गृहीत्वा आस्ते । तथा च काठके "सोमस्य षडंशून्सव्ये पाणावतिसज्जति द्वौ द्वावसंश्लिष्टाविति"ति ।

ततोऽध्वर्युः श्वात्रा स्थेति मन्त्रेण निग्राभ्याः सोमस्योपर्यासिञ्चति । ततः पूर्वमन्त्रेण गृहीतमुपांशुसवनसंज्ञकं ग्रावाणमादाय मा भेरिति प्रहरति । पूर्ववत् तृणाभिध्यानम् । अत्राष्टकृत्वः प्रहरति, सकृन्मन्त्रः, सप्तकृत्वस्तूष्णीम्। ततोऽभिषुतात्सोमात् त्रीनंशून् होतृचमसेऽवधाय प्रागपागिति यजमानं वाचयति ।

ततस्तेषामंशूनामधिषवणे प्रातःप्रक्षेपः। ततः प्रतिप्रस्थाता दक्षिणहस्तधृतपात्रगर्तस्योपरि सव्यहस्ताङ्गुल्यन्तराले धृतान्षडंशून् धारयति । प्रतिग्रहणं च द्वयोर्द्वयोरेवान्तर्द्धानं, न षण्णां सह ।

ततोऽध्वर्युरुभयतोदशेन पवित्रेणाधिषवणस्थं सोममादाय प्रतिप्रस्थातृदक्षिणहस्तधृतग्रहपात्रमुखस्योपरि तेनैव सव्यहस्ताङ्गुल्यन्तरालेषु धृतानां षडंशूनामुपरि द्वाभ्यां हस्ताभ्यां पवित्रं निष्पीड्य षडङ्गुलिगालितं सोमरसं ग्रहपात्रमध्ये पातयति उपयामगृहीतोऽसि वाचस्पतये पवस्वेति मन्त्रेण । प्रतिप्रस्थाता तु तथैव तिष्ठति । अध्वर्युः पुनः श्वात्रा स्थेति निग्राभ्या आसिच्य मा भेरिति प्रहरति । एकादश कृत्वोऽभिषुणोति, सकृन्मन्त्रेण दशकृत्वस्तूष्णीम् ।

ततः पूर्ववदेव प्रागपागिति वाचनं, पूर्ववदेव ग्रहणं,तत्र मन्त्र उपयामगृहीतोऽसि देवेभ्य इति ।

ततः पुनर्मन्त्रेण निग्राभ्या आसिच्य द्वादशकृत्वोऽभिषुणोति, तत्र सकृन्मा भेरिति मन्त्रेण, एकादशकृत्वस्तूष्णीम् । ततः पूर्ववत्प्रागपागितिवाचनं, पूर्ववदद्रिं चमसेऽवधाय चतुर्थवाचनं, ततो ग्रहणं तथैव, तत्र मन्त्रे विशेषः—उपयामगृहीतोऽसि मधुमतीर्न इति ।

ततो गृहीतान्षडंशून्सोमे प्रतिप्रस्थातैव निदधाति । अत्रापस्तम्बे

मीति । उदानमित्यन्तर्याममम् ॥२८॥ स्वाहेत्युक्त्वोर्वन्तरिक्षमिति निष्क्रमणम् ॥२९॥ अन्वारभतेऽन्यस्मै प्रदाय होतृचमसम् ॥३०॥ वरं वृत्वा ददाति च ॥३१॥ स्वाकृत इति हुत्वा पात्रमुन्मार्ष्टि ॥३२॥ प्रथमे परिधा उत्तानं पाणिं प्रागुपमार्ष्टि देवेभ्यस्त्वेति ॥३३॥ वासउरोबाहुषु श्लिष्टमंशुमभिचरञ्जुहुयाद्देवांशविति ॥३४॥

विशेषः—"पवित्रमुपयामः सादनं च न विद्यते" इति । अञ्जलिना ग्रहणस्य मूलं भाष्ये विलोक्यम्। ततो ग्रहं गृहीत्वोभयतोदशेन पवित्रेण परिमार्जनं, सादनाभावः, अभिचरन्हस्तेनापिसृज्य सादयेदमुष्य त्वा प्राणं सादयामीति मन्त्रेण । अमुष्येति पदस्य स्थानेऽभिचर्यमाणस्य वैरिणो नामग्रहणम् , उदकालम्भश्च ।

ततोऽभिचरन्नेव हस्तेन ग्रहमपिदधाति-अमुष्य त्वा प्राणमपि दधामीति । अत्रापि शत्रुनामग्रहः पूर्ववत् ।

ततः स्वाहेत्युच्चार्य उर्वन्तरिक्षमन्वेमीति मन्त्रेण हविर्धानान्निष्क्रामति । यजमानो होतृचमसमन्यहस्तेऽर्पयित्वाऽध्वर्युमन्वारभते । ततो यजमानः पुत्रो मेऽस्तु, धनं मेऽस्तु, गौर्मेऽस्तु इत्येवं यत्स्वाभिलषितं तत्प्रार्थयित्वाऽध्वर्यवे वरं ददाति । अध्वर्योर्यदिष्टं यजमानेन च दातुं शक्यते तद् ददातीत्यर्थः । क्षिप्रेण इमं ग्रहं जुहवदितीदमेव यजमानस्य वरप्रार्थनं न प्रागुक्तप्रकारेणेति केचित् । इदं मे स्यादित्येवं ब्रवीतीति पितृभूतिः । तत्तु युक्ततरमिवाभाति ।

ततो यजमानान्वारब्ध एवाध्वर्युर्यजतिस्थानं गत्वा दक्षिणपरिधिसन्धिसमीपे ऋजुस्तिष्ठन्नग्नेर्दक्षिणभागे सशेषं ग्रहं जुहोति स्वाकृतोऽसि इति, इदं सूर्याय । काठके-"दक्षिणा परिक्रम्य दक्षिणार्द्धेऽग्नेर्ऋजुस्तिष्ठन् जुहोती"ति। मानवे च— "दक्षिणेन होतुर्गच्छत्युत्तरेणाभिप्रयम्य ग्रहं दक्षिणापरिधिसन्धि प्रत्यवस्थाय जुहोती"ति । ग्रहं हुत्वा पात्रमुन्मार्ष्टि । ततः प्रथमे परिधौ उत्तानं पाणिं प्रागुपमार्ष्टि उन्मार्जनेन सोमलिप्तं पाणिं परिधेरधस्तात्प्रवेश्य पश्चादाकर्षति तथा सति स्रुवस्य प्राक्संस्थमार्जनवद्धस्तस्य प्राक्संस्थमुपमार्जनं संपद्यते । अभिचरन्वासउरोबाहुषु श्लिष्टं सोमांशुं देवांशविति मन्त्रेण जुहुयात् ।

तत आग्रयणस्थाल्यामुपांशुग्रहशेषस्यैकदेशनिनयनम् । ततस्तृतीयसवनार्थमवशेषितं सोमांशुं कुण्डलिकामुपांशुपात्रे प्रास्यति तृतीयसवना-

आग्रयणस्थाल्याᳪं शेषैकदेशमासिच्याᳪंशुं प्रास्यति तृतीयसवनाय ॥३५॥ प्राणाय त्वेति पात्रसादनम् ॥३६॥ उपाᳪंशुसवनं पाणिना प्रमृज्योदञ्चं व्यानाय त्वेति सᳪंस्पृष्टम् ॥३७॥४॥

उपविष्टयोरभिषुण्वन्ति चत्वारः पर्युपवेशनसामर्थ्यात् ॥१॥ आप्यायनान्तोऽभिषवस्त्रिपर्यायः ॥२॥ मन्त्रात् ॥३॥ पर्यायादिषु निग्राभ्यासेचनम् ॥४॥ प्रथमे वा प्रभृत्वात्॥५॥निग्राभान्ते सरसानᳪंशून्त्सम्भरण्याऽऽधवनीये स्वधायावधूयाहरति ॥६॥ एवं द्विरपरम् ॥७॥ पूर्ववन्निग्राभ्याः ॥८॥ पूर्वे वोपाᳪंशुं गृहीत्वा गृहीत्वाऽऽप्यायनसम्भरणे कृतत्वात् ॥९॥ धर्ममात्रं पर्युपवेशनम् ॥ १० ॥ अभिषवविपर्यासो वाऽभिमृष्टादᳪंशूनपकृष्य निग्राभ्याश्चानुपूर्व्ययोगादनात्तस्य चाभिमानसामर्थ्यात् ॥११॥ ऋजीषभावाच्च ॥१२॥ प्रोह्य द्रोणकलशमृजीषमुखेष्वद्रिषु निदधत्युद्गातारः ॥१३। पवित्रं च वितन्वन्त्युदक् ॥१४॥ स्वयं वाऽकुर्वत्सु ॥१५॥ आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति। ताः पवित्रे यजमानः ॥१६॥

र्थम् । ततः प्राणाय त्वेति मन्त्रेणोपांशुपात्रस्य खरे स्वस्थाने सादनम् । तत उपांसुसवनं हस्तेन मार्जयित्वोपांशुपात्रस्योत्तरतस्तत्संस्पृष्टमेवोदङ्मुखमासादयति व्यानाय त्वेति मन्त्रेण । ततः सन्ध्यावन्दनाद्यावश्यकं सर्वे कुर्वन्ति, सूर्योदयं च प्रतीक्षन्ते । पत्नीयजमानयोर्मूत्रपुरीषादिकरणम् ।

इति नवमस्य चतुर्थी कण्डिका ॥ ४ ॥

---

तत उद्गातारो द्रोणकलशं प्रोह्याधोऽधोक्षं प्राञ्चमधिषवणस्योपरि प्रेर्याधिषवणस्योपरि चतुरो ग्राव्णः सम्मुखान् निधाय तेषामुपर्यृजीषमवस्थाप्योपरि द्रोणकलशं निदधति । अन्यतरतोदशं पवित्रं चोदग्दशं

ततो ग्रहग्रहणमाध्रुवान्माध्यन्दिने च पञ्च प्रथमान् ॥१७॥ शुक्रो द्रोणकलशे ॥१८॥ ततोऽन्येऽनादेशे ॥१९॥ पूतभृतश्चमसान् ॥२१॥ तृतीयसवने वैश्वदेवम् ॥२२॥ अनादिष्टांश्चेहोन्नयनश्रुतेः ॥२३॥ दशापवित्रेण परिमृज्य परिमृज्यैष ते योनिरिति ग्रहसादनम् ॥२४॥ नायोनिकेषु ॥२५॥ सर्वेष्विति वान्स्योऽविशेषोपदेशात् ॥२६॥ सावित्रर्तुग्रहप्रतिषेधाच्च ॥२७॥ प्रतिवषट्कारं हुत्वा वषट्कर्तुर्भक्षहरणम् ॥२८॥ यथास्वं चमसात् ॥२९॥ वषट्कर्तुर्वा पूर्वं श्रुतिसामर्थ्यात् ॥३०॥ उन्नेतोन्नयति समाख्यानात् ॥ ३१ ॥ ५ ॥

उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति ॥१॥ उपांशुवदाम्नातवर्जशेषासिचनवर्जम् ॥२॥ अपमार्ष्ट्यत्र

---

द्रोणकलशस्योपरि विस्तार्य धारयन्ति ।

ततः पवित्रस्योपरि मध्ये हिरण्यनिधानं, यद्युद्गातार एवं न कुर्वन्ति तदा द्रोणकलशप्रोहणादि स्वयमेवाध्वर्युः कुर्यात् । तत उन्नेता आधवनीयादुदञ्चनेन सोममादाय पवित्रस्योपरि यजमानधृतहोतृचमसस्थासु निग्राभ्यास्वासिञ्चति । ततो यजमानस्ता निग्राभ्याः पवित्रे सन्ततमासिञ्चति । तस्याः सन्ततधाराया ध्रुवपर्यन्ता ग्रहा ग्राह्याः ।

इति नवमस्य पञ्चमी कण्डिका ॥ ५ ॥

---

अत्र प्रथममुदिते सूर्ये अन्तर्यामग्रहं गृह्णाति उपयामगृहीतोऽस्यन्तर्यच्छेति प्रागुक्तायाः सन्ततधारया गृहीत्वा धारातः पृथक् कृत्वा सव्यहस्ते कृत्वा दक्षिणहस्तधृतेनोभयतोदशेन पवित्रेण परिमार्जनं, न सादनम् । अभिचरत उपांशुग्रहवत्सादनापिधानौ । मन्त्रमात्रे विशेषः । अमुष्य त्वोदानं सादयामि, अमुष्य त्वोदानमपिदधामीति च । यजमानो होतृचमसमन्यस्मै प्रदायाध्वर्युमन्वारभते । उत्तरेण होतुः स्वयं गत्वा ग्रहं होतारं दक्षिणेन नीत्वोत्तरपरिधिसन्धिसमीपे ऋजुरूर्ध्वस्तिष्ठन्नग्नेरुत्तरभागे जुहोति—ग्नाकृतोऽसीति । इदं सूर्याय । निःशेषहोमः । हुत्वा ग्रहपात्रमवाञ्चं मु-

क्षं द्रोणकलशमत्युह्योपर्युपर्यक्षं पवित्रमस्मिन्करोति ॥१५॥ शुक्लं जीवोर्णानाम् ॥१६॥ उभयतोदशं परिप्लवायाम् ॥१७॥ पूर्वेणोपस्तम्भनमुत्तरं ध्रुवस्थालीमनन्तर्हिते ॥१८॥ धुरि प्रचरणीम् ॥१९॥ पूर्वेणाक्षमुपरि पूतभृतम् ॥२०॥ परेणाधवनीयम् ॥२१॥ प्रागक्षाद्दश चमसानसंभृन्तानधः ॥२२॥ प्रत्यगेकधनानयुग्मानुदहरणांस्त्रि-

---

जीवोर्णानिर्मितं पवित्रं कृत्वा द्रोणकलशस्योपरि निदधाति ।

तत एवंविधमेवोभयतोदशं द्वितीयं पवित्रं परिप्लवायां निदधाति । तत उत्तरस्य हविर्धानस्योपस्तंभनं पूर्वेण ध्रुवस्थालीमनन्तर्हिते देशे बर्हिस्तृणान्यपोह्य सादयति ।

ततस्तस्यैवानसो धुरि ईषाग्रयोरुपरि प्रागग्रामुदगग्रां वा प्रचरणीं पालाशीं स्रुचं सादयति । तत उत्तरस्यैवानसोऽक्षस्य पुरस्तादनस उपर्येव पूतभृत्संज्ञं मृन्मयं महाकलशं विस्तीर्णमुखमासादयति ।

ततस्तस्यैवोत्तरस्यानसोऽक्षस्य पश्चादनस उपर्येवाधवनीयसंज्ञं द्वितीयं मृन्मयं महाकलशं विपुलमुखं सादयति। ततोऽक्षात्प्राक् शकटस्याधस्ताद् भूमौ मूलाभिज्ञापकवृन्तयुक्तान्दश वैकङ्कतांश्चमसान् होतृचमसादिक्रमेण प्रागग्रानुदक्संस्थान् निदधाति ।

तेषां च लक्षणं परिशिष्टे—

"विकङ्कतमयाः श्लक्ष्णास्त्वग्बिलाश्चमसाः स्मृताः ।
चतुरङ्गुलखाताश्च तेषां दण्डेषु लक्षणम् ॥
होतुर्मण्डल एव स्याद् ब्रह्मणश्चतुरस्रकः ।
उद्गातॄणां च त्र्यस्रिः स्याद्यजमानः पृथुः स्मृतः ॥
प्रशास्तुरवतष्टः स्यादुत्तष्टो ब्रह्मशंसिनः ।
पोतुरग्रे विशाखो स्यान्नेष्टुः स्यान्निगृहीतकः ॥
अच्छावाकस्य रास्ना च आग्नीध्रस्य मयूषक" इति ।

निगमे च—"नैयग्रोधाश्चमसाश्चतुरस्राः प्रस्थोदकग्राहिणस्त्वग्बिला दण्डलक्षणा" इति ।

मानवे—"दश चमसान्नैयग्रोधान्रौहीतकान्वे"ति ।

काठके च—"नैयग्रोधाश्चमसा रौहितका वा सर्वाणि वा पर्णमयानी" ति । तत उत्तरहविर्धानादक्षस्य पश्चाद् भूमौ शकटस्याधस्तादेकधनसंज्ञकानुदकुम्भान् त्रिप्रभृति पञ्चदशपर्यन्तानयुग्मानुदक्संस्थान्निदधाति ।

प्रभृत्यापञ्चदशभ्यः ॥२३॥ अभूदुषा रुशत्पशुरित्युच्यमाने ॥२४॥ ॥ २ ॥

चतुर्गृहीतं प्रचरण्या जुहोति शृणोत्वग्निरिति ॥१॥ अपरं गृहीत्वोदङ् गच्छन्नाहाप इष्य होतरिति ॥२॥ प्रेष्यति च मैत्रावरुणस्य चमसाध्वर्यवेहि, नेष्टः पत्नीरुदानय, एकधनिन एत, अग्नीधात्वाले वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन चेति ॥३॥ अपो गत्वा देवीराप इत्यप्सु जुहोति ॥४॥ कार्षिरसीति मैत्रावरुणचमसेनाज्यमपोहति ॥५॥ समुद्रस्य त्वेति तेन गृह्णाति ॥६॥ एकधनांश्चो-

---

तत्र हरिस्वामिनो व्यवस्थामाहुः—"अग्निष्टोमे त्रय एकधनाः पञ्च वा, अत्यग्निष्टोमेऽपि तावन्त एव, उक्थ्ये पञ्च वा सप्त वा, षोडशिन्यां सप्त वा नव वा, वाजपेये नव वा एकादश वा, अतिरात्रे एकादश वा त्रयोदश वा, अप्तोर्यामे त्रयोदश वा पञ्चदश वे"ति ।

यद्येवं न कल्प्यते तर्हि सर्वे विकल्पाः प्रकृतावेव भवेयु, स्तथा-सत्ययुक्ता उदकवृद्धिरापद्यते, तस्माद्यथोक्तैव व्यवस्था युक्ता । एतत्पा-त्रयोजनं सवनीयनिर्वपणं च प्रातरनुवाकोपाकरणानन्तरं सहैव भवति ।

इति नवमस्य द्वितीया कण्डिका ॥२॥

---

ततः प्रातरनुवाकसमाप्तिवेलायामभूदुषा रुशत्पशुरिति अस्मिन्मन्त्रे होत्रा पठ्यमानेऽध्वर्युः प्रचरण्या चतुर्गृहीत्वा समिधमाहृत्य शृणोत्वग्निरित्याहवनीये जुहोति, इदमग्न्यधिषवणग्रावदेवसवितृभ्यः ।

ततः प्रचरण्यामेव पुनश्चतुर्गृहीतं गृहीत्वा उदङ्गच्छन्नप इष्य होतरिति होतारं प्रेष्यति । तत उदङ्गच्छन्नेव मैत्रावरुणस्य चमसाध्वर्यवेहीति मैत्रावरुणसंबन्धिनं चमसाध्वर्युं प्रेष्यति । नेष्टः पत्नीरुदानयेति नेष्टारं, एकधनिन एतेत्युदकग्राहकानृत्विजः प्रेष्यति, अग्नीधात्वाले वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन चेत्यग्नीधं प्रेष्यति ।

ततः सर्वे यथोपदिष्टं प्रैषार्थान् कुर्वन्ति । अग्नीधश्चात्वाले वसतीवरीरानीय होतृचमसं वाऽनीय समीपे तिष्ठति । ततः सर्वे यथोपदिष्टं प्रेषिता एव चात्वालोत्करयोरन्तरेणैते सर्वे उदञ्चो निष्क्रम्य यस्यां दिश्युदकं

प्रयान्ति ॥७॥ पान्नेजनांश्च पत्न्यो द्वौ द्वौ ॥८॥ प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च सꣳस्प- र्शयति समाप इति ॥९॥ इतरेतरास्मिन्व्यानयन्त्येके । मैत्रावरुणचमसे प्रथमम् ॥१०॥ होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छति निग्राभ्याः ॥११॥ होत्रा पृष्टः प्रत्याहोतेव नंनमुरिति ॥१२॥ प्रचरणीसꣳस्रवम- ग्निष्टोमे जुहोत्यभावे चतुर्गृहीतं यमग्न इति ॥१३॥ उक्- थ्ये प्रथमं परिधिमालभते ॥१४॥ प्रविशत्येवान्यत्र ॥१५॥ ररास्यालम्भनं वा षोडशिनि ॥१६॥ छादिरातिरात्रे ॥१७॥ अतीत्य दक्षिणेन होतारं मैत्रावरुणचमसमाधवनी- येऽवनयति, वसतीवरीतृतीयं च "अग्निः प्रातःसवने पा- त्वस्मान्वैश्वानरो महीना विश्वशम्भुः । स नः पावको

---

भवति तडागादिस्थितं तस्यां गच्छन्ति । ब्रह्मयजमानौ पत्नी च । उदकं प्राप्य अप्सु परिस्तीर्य समीपे उपविश्य देवीरापो अपां नपादित्यप्सु चतुर्गृहीतं जुहोति, इदमध्वर्युः ।

ततो मैत्रावरुणचमसेन हुतमाज्यं दूरे प्रेरयति कार्षिरसीति मन्त्रेण । ततः समुद्रस्य त्वाऽक्षित्या इति मैत्रावरुणचमसेनापो गृह्णाति ।

तत एकधनिन एकधनैरनेनैव मन्त्रेणापो गृह्णन्ति । पत्नी च द्वौ पान्नेजनौ तूष्णीं पूरयति । अनेकपत्नीके प्रतिपत्नि द्वौ द्वौ पान्नेजनौ भवतः । एकैक उर्वासेकार्थः, अपरः पशुशोधनार्थः ।

ततः सर्वे देवयजनं प्रत्यागच्छन्ति होतः पठ इति ब्रुवन्तः । अत्र मानवे विशेषः–"यत्र होतुः प्रातरनुवाकमनुब्रुवत उप शृणुयात्तदपोऽध्वर्यु- र्वहन्तीनां गृह्णीयाद्यदि दूरे स्युश्चात्वालान्ते गृह्णीयादि"ति ।

ततः सर्वेषु चात्वालसमीपे आगतेषु अध्वर्युश्चात्वालस्योपरि मैत्राव- रुणचमसं वसतीवरीश्च परस्परं संस्पर्शयति समापोऽ अद्भिरिति । केचित्पू- र्वं मैत्रावरुणचमसे वसतीवरीर्निनयन्ति ।

ततो मैत्रावरुणचमसे वसतीवरीर्निनयति । ततो मैत्रावरुणचमसा- द्वसतीवरीषूदकं निनयति । उभयत्र समाप इति मन्त्रः ।

ततोऽध्वर्युर्होतृचमसे वसतीवरीर्निनीय यजमानाय समर्पयति,

द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्यामे"ति॥१८॥ ताव चैकधनानाम्॥१९॥एकधनस्थान'उभयशेषान्निधाय॥२०॥३॥

अधिषवणे पर्युपविशन्ति॥१॥उत्तरतोऽध्वर्युयजमानौ ॥२॥ पूर्वोऽध्वर्युः । अपरेण परीत्येतरे त्रयः ॥३॥ देवस्य त्वेत्यद्रिमादाय वाचं यच्छति प्राग्धिङ्कारात् ॥४॥ स उपांशुसवनः ॥५॥ निग्राभ्यास्थ वाचयत्युरस्येना निगृह्य निग्राभ्या स्थेति ॥६॥ उपांशुसवने सोमं मि-

तासामपां निग्राभ्या इति संज्ञा । तत उत्थायाहवनीयं प्रति गच्छन्ति । ततो होताऽध्वर्युं पृच्छति अध्वर्योऽवेरपा इति । अध्वर्युरुतेव नंनमुरिति प्रत्याह ।

ततः प्रचरणीसंस्रवमग्निष्टोमसंस्थे क्रतौ आहवनीये समित्पूर्वकं जुहोति । संस्रवाभावे आज्यस्थाल्याश्चतुर्गृहीतं गृहीत्वा जुहोति यमग्ने पृत्सु स्वति, इदमग्नये ।

ततो हविर्धानद्वार्युपविष्टं होतारं दक्षिणेनातिक्रम्य मैत्रावरुणचमसमाधवनीयेऽननयति अग्निः प्रातः सवन इति ।

ततो वसतीवरीणां तृतीयं भागमनेनैव मन्त्रेणाधवनीये आसिञ्चति । एकधनानामपि प्रत्येकं तृतीयं तृतीयं भागं ग्रहणक्रमेणाधवनीये आसिञ्चति अनेनैव मन्त्रेण । तत एकधनस्थाने वसतीवरीशेषमेकधनशेषं च निदधाति ।

इति नवमस्य तृतीया कण्डिका ॥ ३ ॥

---

तत्राधिषवणचर्मणि उत्तरतोऽध्वर्युयजमानौ उपविशतः । तयोर्मध्ये पूर्वोऽध्वर्युरपरो यजमानः । ब्रह्मा दक्षिणतः आस्ते । प्रतिप्रस्थातृनेष्टृन्नेतारश्चापरेण दक्षिणं हविर्धानं परीत्य दक्षिणतः प्रत्यक्संस्था उदङ्मुखा उपविशन्ति । अपरेण हविर्धानमुद्गातार उपविष्टा भवन्ति । तत्र प्रतिप्रस्थाता गच्छन्प्रतिहर्त्तारमन्तरेणोद्गातृप्रस्तोतृभ्यां बाहुर्गच्छति । इतरौ च सर्वेषां पश्चाद् गच्छतः ।

एवं सर्वे पर्युपविशन्ति । तत्र पूर्वमभिषवार्थवस्तूनामीषान्तरेणाहरणाम् । हिरण्यमनामिकायां बन्धनार्थमध्वर्य्वादयश्चत्वारोऽपि ईषान्तरेणाहरन्ति । तथा सर्वेऽपि स्वं स्वं ग्रावाणमीषान्तरेणाहरन्ति । अध्वर्युर्द्वितीयमुपांशुसवनं च ।

**मीत इन्द्राय त्वा वसुमते रुद्रवत इति पञ्चकृत्वः प्रतिमन्त्रम् ॥७॥ यत्त इति मितालम्भनम् ॥८॥ प्रतिप्रस्थाताऽंशूनषडादत्तेऽङ्गुल्यन्तरेषु द्वौ द्वौ कुरुते ॥९॥ श्वात्रा स्थेत्यासिञ्चति निग्राभ्याः ॥१०॥ प्रहरिष्यन्द्वेष्यं मनसा ध्यायेदमुष्मा अहं प्रहरामि न तुभ्यं सोमेति ॥११॥ अभावे तृणम् ॥१२॥ मा भेरिति प्रहरति**

ततोऽध्वर्युर्निग्राभ्या होतृचमसस्था एवेषान्तरेण हरति । ततः प्रचरणी, ततो दशापवित्रमुभयतोदशमिति ।

ततोऽध्वर्योः पाणिप्रक्षालनं, अनामिकायां हिरण्यबन्धनम् , अध्वर्यो रेवाद्रयादानं देवस्य त्वेत्यनेन पयस्वन्तमित्यन्तेन । ततः प्राग्घिङ्कारादध्वर्योर्वाग्यमनं, तस्याद्रेरुपांशुसवन इति संज्ञा । ततो यजमानो होतृचमसं हृदयसंलग्नं धारयित्वा निग्राभ्यासु हस्तं निदधाति । अध्वर्युर्निग्राभ्यासु कृतान्वारम्भं यजमानं निग्राभ्या स्थेति वाचयति ।

तत उपांशुसवनेऽध्वर्युः पञ्चकृत्वः सोमं मिमीते। इन्द्राय त्वा वसुमतेऽरुद्रवत इति प्रथमं सोममुष्टिमुपांशु सवनस्योपरि प्रक्षिपति। इन्द्राय त्वाऽदित्यवत इति द्वितीयं, इन्द्राय त्वाऽभिमातिघ्न इति तृतीयं, श्येनाय त्वेति चतुर्थम्,अग्नये त्वेति पञ्चमम् । ततो मितं सोमं यत्ते सोम दिवीत्यालभते ।

ततोऽध्वर्यु रभिमृष्टात्सोमात् मुष्टिमात्रं सोमं क्षुल्लकाभिषवार्थं पृथक् कृत्वा पात्रान्तरे स्थापयति । ततः षडंशून्प्रतिप्रस्थातुरङ्गुल्यन्तरेकरणार्थं पृथक् करोति । तत एकं महांशुं कुण्डलिकात्वसंपादितं तृतीयसवनार्थं पृथक्कृत्य क्वचिन्निदधाति ।

ततो निग्राभ्याः क्षुल्लकाभिषवार्थं होतृचमसात्पात्रान्तरे कृत्वा क्वचिन्निदधाति, उपांशुसवनं च । एतावत् क्षुल्लकाभिषवार्थं पृथक्करोति । ततः प्रथमं महाभिषवस्य प्रारम्भः। तत्राऽध्वर्यु णा पाणिप्रक्षालने हिरण्यबन्धने च कृते तत इतरेषां प्रतिप्रस्थातृनेष्टृन्नेतृणां पाणिप्रक्षालनं, हिरण्यबन्धनं, अध्वर्य्वादीनां सर्वेषामद्र्यादानं देवस्य त्वेत्यनेन पयस्वन्तमित्यनेन ।

ततोऽध्वर्युः श्वात्रा स्थेति सोमस्योपरि निग्राभ्या आसिञ्चति । ततो निग्राभ्याभिरार्द्रीकृतं सोमं चतुर्द्धा विभज्य सर्वेऽभिषुण्वन्ति । अभिषवं करिष्यन्तो वैरिणं मनसा चिन्तयेयुरमुष्यै अमुकायाहं प्रहरामि न तुभ्यं सोमेत्येवम् । यदि द्वेष्यः कश्चिन्न भवति तदा तृणं मनसा चिन्तयेयुः ।

॥१३॥ एवं त्रिरभिषुणोत्यासेचं निग्राभ्याः ॥१४॥ अष्ट-कृत्व एकादशकृत्वो द्वादशकृत्वः ॥१५॥ सर्वे पञ्चवर्गाः पशुकामस्य । अष्टवर्गा ब्रह्मवर्चसकामस्य ॥१६॥ प्रति-वर्गं निग्राभं वाचयति होतृचमसेऽल्पानंशूनवधाय प्रा-गपागिति ॥१७॥ अद्रिणा चतुर्थम् ॥१८॥ तूष्णीं वा ॥१९॥ उपांशुं च गृह्णाति वाचस्पतये देवो देवेभ्यो मधुमतीरिति ॥२०॥ प्रतिप्रस्थातोपगृह्णाति पात्रम् ॥२१॥ आत्तानां च द्वौ द्वावन्तर्दधाति ग्रहणभेदात् ॥२२॥

---

तृणायाहं प्रहरामि न तुभ्यं सोमेत्येवम् । मा भेर्मा समिति मन्त्रेण सर्वेऽधिषवणफलकाधारचर्मस्थसोमस्योपरि ग्राव्णा प्रहरन्ति । तत्रैवं मा भेर्मा संविक्थाः० सोम इति मन्त्रमुक्त्वा तृणायाहं प्रहरामि न तुभ्यं सोमेत्येवं मनसि चिन्तयित्वा सर्वे प्रहरणं कुर्वन्ति । पुनः पुनतूष्णीमेव याव-द्भिः प्रहारै रसप्रच्युतिर्भवति तावत्प्रहरणम् ।

तत इत्थंलक्षणमेकपर्यायमभिषुत्य विरम्य इतस्ततः प्रक्षिप्तं सोममेकत्र कृत्वा पुञ्जीकुर्वन्ति । ततस्तूष्णीमेवापरिमितसंख्यं प्रहरन्ति । पुनर्वि-रम्य पुञ्जीकृत्य पुनरभिषुणवन्ति । एवं विरम्य विरम्य पर्यायत्रयात्मकेऽभिषवे कृते सर्वं सोममाप्याययन्ति अंशुरंशुष्ट इति ।

ततोऽध्वर्युर्होतृचमसे त्रिप्रभृत्यल्पानंशूनवधाय प्रागपागु० ब्रवीमि ते वच इति सप्रैषं यजमानं वाचयति संभरण्यामभिषुतं सोमं गृहीत्वाऽऽधव-नीयमध्ये प्रक्षिप्य तदुदकेन सह घर्षयित्वा तत आदाय संभरण्यैवाहृ-त्याधिषवणे प्रक्षिपति । एवमेकोऽभिषवस्त्रिपर्यायः समाप्तः । एवमेव द्वितीयोऽभिषवो निग्राभ्यासेचनाद्याधूयाहरणान्तः । एवमेव तृतीयोऽपि निग्राभ्यासेचनाद्याधूय ग्रहरणान्तोऽभिषवः कार्यः ।

तृतीयेऽयं विशेषः-प्रागपागिति वाचनानन्तरं ग्रावाणं होतृचमसस्यो-परि निधाय चतुर्थं प्रागपागिति पुनर्वाचयति । ततः सरस्मानंशून् संभ-रण्येत्याद्याधूयाहरणान्तं करोति । एवं त्रयोऽप्यभिषवास्त्रिपर्यायाः स-माप्ताः । अयं महाभिषव उक्तः ।

अथ क्षुल्लकाभिषव उच्यते । तत्रैकोऽध्वर्युरेवाभिषुणोति न सर्वे । तत्र पूर्वं क्षुल्लकाभिषवार्थं पात्रान्तरे स्थापितं सोममधिषवणे प्रक्षिपति । निग्राभ्याश्च पात्रान्तराद्धोतृचमसेऽवनयति ।

मन्त्रलिङ्गाच्च ॥२३॥ षड् वा श्रुतिसामर्थ्यात् ॥२४॥ यत्त इत्यात्तान्त्सोमे निदधाति ॥२५॥ परिमृज्याऽऽसादनमुपाᳬंश्वन्तर्यामयोः ॥२६॥ अभिचरन्त्सादयेदाविष्ट्रजन्नमुष्य त्वा प्राणᳬ सादयामीति । उदानमित्यन्तर्यामम् ॥२७॥ पाणिना चापिदधात्यमुष्य त्वा प्राणमपिदधा-

---

ततः प्रतिप्रस्थात्रर्थमवशेषितान् षडंशून्प्रतिप्रस्थाता गृहीत्वा सव्यहस्ताङ्गुल्यन्तरेषु द्वौ द्वौ असंश्लिष्टौ करोति । दक्षिणहस्तेनोपांशुपात्रं गृहीत्वा आस्ते । तथा च काठके "सोमस्य षडंशून्सव्ये पाणावतिसजति द्वौ द्वावसंश्लिष्टाविग्गति ।

ततोऽध्वर्युः श्वात्रा स्थेति मन्त्रेण निग्राभ्याः सोमस्योपर्यासिञ्चति । ततः पूर्वमन्त्रेण गृहीतमुपांशुसवनसंज्ञकं ग्रावाणमादाय मा भेरिति प्रहरति । पूर्ववत् तृणाभिध्यानम् । अत्राष्टकृत्वः प्रहरति, सकृन्मन्त्रः, सप्तकृत्वस्तूष्णीम्। ततोऽभिषुतात्सोमात् त्रीनंशून् होतृचमसेऽवधाय प्रागपागिति यजमानं वाचयति ।

ततस्तेषामंशूनामधिषवणे प्रातप्रक्षेपः। ततः प्रतिप्रस्थाता दक्षिणहस्तधृतपात्रगर्तस्योपरि सव्यहस्ताङ्गुल्यन्तराले धृतान्षडंशून् धारयति । प्रतिग्रहणं च द्वयोर्द्वयोरेवान्तर्द्धानं, न षण्णां सह ।

ततोऽध्वर्युरुभयतोदशेन पवित्रेणाधिषवणस्थं सोममादाय प्रतिप्रस्थातृदक्षिणहस्तधृतग्रहपात्रमुखस्योपरि तेनैव सव्यहस्ताङ्गुल्यन्तरालेषु धृतानां षडंशूनामुपरि द्वाभ्यां हस्ताभ्यां पवित्रं निष्पीड्य षडङ्गुलिगालितं सोमरसं ग्रहपात्रमध्ये पातयति उपयामगृहीतोऽसि वाचस्पतये पवस्वेति मन्त्रेण । प्रतिस्थाता तु तथैव तिष्ठति । अध्वर्युः पुनः श्वात्रा स्थेति निग्राभ्या आसिच्य मा भेरिति प्रहरति । एकादश कृत्वोऽभिषुणोति, सकृन्मन्त्रेण दशकृत्वस्तूष्णीम् ।

ततः पूर्ववदेव प्रागपागिति वाचनं, पूर्ववदेव ग्रहणं,तत्र मन्त्र उपयामगृहीतोऽसि देवेभ्य इति ।

ततः पुनर्मन्त्रेण निग्राभ्या आसिच्य द्वादशकृत्वोऽभिषुणोति, तत्र सकृन्मा भेरिति मन्त्रेण, एकादशकृत्वतूष्णीम् । ततः पूर्ववत्प्रागपागितिवाचनं, पूर्ववदद्रिं चमसेऽवधाय चतुर्थवाचनं, ततो ग्रहणं तथैव, तत्र मन्त्रे विशेषः—उपयामगृहीतोऽसि मधुमतीर्न्न इति ।

ततो गृहीतान्षडंशून्सोमे प्रतिप्रस्थातैव निदधाति । अत्रापस्तम्बे

**मीति । उदानमित्यन्तर्यामम् ॥२८॥ स्वाहेत्युक्त्वोर्वन्तरिक्षमिति निष्क्रमणम् ॥२९॥ अन्वारभतेऽन्यस्मै प्रदाय होतृचमसम् ॥३०॥ वरं वृत्वा ददाति च ॥३१॥ स्वाकृत इति हुत्वा पात्रमुन्मार्ष्टि ॥३२॥ प्रथमे परिधा उत्तानं पाणिं प्रागुपमार्ष्टि देवेभ्यस्त्वेति ॥३३॥ वासउरोबाहुषु श्लिष्टमंशुमभिचरञ्जुहुयाद्देवांशविति ॥३४॥**

---

विशेषः—"पवित्रमुपयामः सादनं च न विद्यन्त" इति । अञ्जलिना ग्रहणस्य मूलं भाष्ये विलोक्यम्। ततो ग्रहं गृहीत्वोभयतोदशेन पवित्रेण परिमार्जनं, सादनाभावः, अभिचरन्हस्तेनापिदस्नृज्य सादयेदमुष्य त्वा प्राणं सादयामीति मन्त्रेण । अमुष्येति पदस्य स्थानेऽभिचर्यमाणस्य वैरिणो नामग्रहणम् , उदकालम्भश्च ।

ततोऽभिचरन्नेव हस्तेन ग्रहमपिदधाति–अमुष्य त्वा प्राणमपि दधामीति । अत्रापि शत्रुनामग्रहः पूर्ववत् ।

ततः स्वाहेत्युच्चार्य उर्वन्तरिक्षमन्वेमीति मन्त्रेण हविर्धानान्निष्क्रामति । यजमानो होतृचमसमन्यहस्तेऽर्पयित्वाऽध्वर्युमन्वारभते । ततो यजमानः पुत्रो मेऽस्तु, धनं मेऽस्तु, गौर्मेऽस्तु इत्येवं यत्स्वाभिलषितं तत्प्रार्थयित्वाऽध्वर्यवे वरं ददाति । अध्वर्योर्यदिष्टं यजमानेन च दातुं शक्यते तद् ददातीत्यर्थः । क्षिप्रेण इमं ग्रहं जुहवदितीदमेव यजमानस्य वरप्रार्थनं न प्रागुक्तप्रकारेणेति केचित् । इदं मे स्यादित्येवं ब्रवीतीति पितृभूतिः । तत्तु युक्ततरमिवाभाति ।

ततो यजमानान्वारब्ध एवाध्वर्युर्यजतिस्थानं गत्वा दक्षिणपरिधिसन्धिसमीपे ऋजुस्तिष्ठन्नग्नेर्दक्षिणभागे सशेषं ग्रहं जुहोति स्वाकृतोऽसि इति, इदं सूर्याय । काठके–"दक्षिणा परिक्रम्य दक्षिणार्द्धेऽग्नेर्ऋजुस्तिष्ठन् जुहोती"ति। मानवे च— "दक्षिणेन होतुर्गच्छत्युत्तरेणाभिप्रयम्य ग्रहं दक्षिणापरिधिसन्धि प्रत्यवस्थाय जुहोती"ति । ग्रहं हुत्वा पात्रमुन्मार्ष्टि । ततः प्रथमे परिधौ उत्तानं पाणिं प्रागुपमार्ष्टि उन्मार्जनेन सोमलिप्तं पाणिं परिधेरधस्तात्प्रवेश्य पश्चादाकर्षति तथा सति स्रुवस्य प्राक्संस्थमार्जनवद्धस्तस्य प्राक्संस्थमुपमार्जनं संपद्यते । अभिचरन्वासउरोबाहुषु श्लिष्टं सोमांशुं देवांशविति मन्त्रेण जुहुयात् ।

ततः आग्रयणस्थाल्यामुपांशुग्रहशेषस्यैकदेशनिनयनम् । ततस्तृतीयसवनार्थमवशेषितं सोमांशुं कुण्डलिकामुपांशुपात्रे प्रास्यति तृतीयसवना-

आग्रयणस्थाल्यांᳪ शेषैकदेशमासिच्यांᳪशुं प्रास्यति तृतीयसवनाय ॥३५॥ प्राणाय त्वेति पात्रसादनम् ॥३६॥ उपांᳪशुसवनं पाणिना प्रमृज्योदञ्चं व्यानाय त्वेति सᳪस्पृष्टम् ॥३७॥४॥

उपविष्टयोरभिषुण्वन्ति चत्वारः पर्युपवेशनसामर्थ्यात् ॥१॥ आप्याथनान्तोऽभिषवस्त्रिपर्यायः ॥२॥ मत्या ॥३॥ पर्यायादिषु निग्राभ्यासेचनम् ॥४॥ प्रथमे वा प्रभुत्वात्॥५॥निग्राभान्ते सरसानᳪ शून्त्सम्भरण्याऽऽधवनीये स्वधायावधूयाहरति ॥६॥ एवं द्विरपरम् ॥७॥ पूर्ववन्निग्राभ्याः ॥८॥ पूर्वे वोपांᳪशुं गृहीत्वा गृहीत्वाऽऽप्यायनसम्भरणे कृतत्वात् ॥९॥ धर्ममात्रं पर्युपवेशनम् ॥ १० ॥ अभिषवविपर्यासो वाऽभिमृष्टादᳪशूनपकृष्य निग्राभ्याश्चानुपूर्व्ययोगादनात्तस्य चाभिमानसामर्थ्यात् ॥११॥ ऋजीषभावाच्च ॥१२॥ प्रोह्य द्रोणकलशमृजीषमुखेष्वद्रिषु निदधत्युद्गातारः ॥१३। पवित्रं च वितन्वन्त्युदक् ॥१४॥ स्वयं वाऽकुर्वत्सु ॥१५॥ आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति। ताः पवित्रे यजमानः ॥१६॥

---

र्थम् । ततः प्राणाय त्वेति मन्त्रेणोपांशुपात्रस्य खरे स्वस्थाने सादनम् । तत उपांसुसवनं हस्तेन मार्जयित्वोपांशुपात्रस्योत्तरतस्तत्संस्पृष्टमेवोदङ्मुखमासादयति व्यानाय त्वेति मन्त्रेण । ततः सन्ध्यावन्दनाद्यावश्यकं सर्वे कुर्वन्ति, सूर्योदयं च प्रतीक्षन्ते । पत्नीयजमानयोर्मूत्रपुरीषादिकरणम् ।

इति नवमस्य चतुर्थी कण्डिका ॥ ४ ॥

---

तत उद्गातारो द्रोणकलशं प्रोह्याधोऽधोक्तं प्राञ्चमधिषवणस्योपरि प्रेर्याधिषवणस्योपरि चतुरो ग्राव्णः सम्मुखान् निधाय तेषामुपर्यृजीषमवस्थाप्योपरि द्रोणकलशं निदधति । अन्यतरतोदशं पवित्रं चोदग्दशं

ततो ग्रहग्रहणमाध्रुवान्माध्यन्दिने च पञ्च प्रथमान् ॥१७॥ शुक्रो द्रोणकलशे ॥१८॥ ततोऽन्येऽनादेशे ॥१९॥ पूतभृतश्चमसान् ॥२१॥ तृतीयसवने वैश्वदेवम् ॥२१॥ अनादिष्टांश्चेहोन्नयनश्रुतेः ॥२३॥ दशापवित्रेण परिमृज्य परिमृज्यैष ते योनिरिति ग्रहसादनम् ॥२४॥ नायोनिकेषु ॥२५॥ सर्वेष्विति वात्स्योऽविशेषोपदेशात् ॥२६॥ सावित्रर्तुग्रहप्रतिषेधाच्च ॥२७॥ प्रतिवषट्कारं हुत्वा वषट्कर्तुर्भक्षहरणम् ॥२८॥ यथास्वं चमसान् ॥२९॥ वषट्कर्तुर्वा पूर्वं श्रुतिसामर्थ्यात् ॥३०॥ उन्नतोन्नयति समाख्यानात् ॥ ३१ ॥ ५ ॥

उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति ॥१॥ उपांशुवदनाम्नातवर्शेषासेचनवर्जम् ॥२॥ अपमार्ष्ट्यत्र

---

द्रोणकलशस्योपरि विस्तार्य धारयन्ति ।

ततः पवित्रस्योपरि मध्ये हिरण्यनिधानं, यद्युद्गातार एवं न कुर्वन्ति तदा द्रोणकलशप्रोहणादि स्वयमेवाध्वर्युः कुर्यात् । तत उन्नेता आधवनीयादुदञ्चनेन सोममादाय पवित्रस्योपरि यजमानधृतहोतृचमसस्थासु निग्राभ्यास्वासिञ्चति । ततो यजमानस्ता निग्राभ्याः पवित्रे सन्ततमासिञ्चति । तस्याः सन्ततधाराया ध्रुवपर्यन्ता ग्रहा ग्राह्याः ।

इति नवमस्य पञ्चमी कण्डिका ॥ ५ ॥

---

अत्र प्रथममुदिते सूर्ये अन्तर्यामग्रहं गृह्णाति उपयामगृहीतोऽस्यन्तर्यच्छेति प्रागुक्तायाः सन्ततधारया गृहीत्वा धारातः पृथक् कृत्वा सव्यहस्ते कृत्वा दक्षिणहस्तधृतेनोभयतोदशेन पवित्रेण परिमार्जनं, न सादनम् । अभिचरत उपांशुग्रहवत्सादनापिधानौ । मन्त्रमात्रे विशेषः । अमुष्य त्वोदानं सादयामि, अमुष्य त्वोदानमपिदधामीति च । यजमानो होतृचमसमन्यस्मै प्रदायाध्वर्युमन्वारभते । उत्तरेण होतुः स्वयं गत्वा ग्रहं होतारं दक्षिणेन नीत्वोत्तरपरिधिसन्धिसमीपे ऋजुरूर्ध्वस्तिष्ठन्नग्नेरुत्तरभागे जुहोति—न्वाक्कृतोऽसीऽति । इदं सूर्याय । निःशेषहोमः । हुत्वा ग्रहपात्रमवाञ्चं मु-

॥३॥ प्रथमे च न्युब्जेन पाणिना प्रत्यक् ॥४॥ उपांशुसवनसंस्पृष्टस्योनादाय त्वेति पात्रसादनम् ॥५॥ ऐन्द्रवायवं गृह्णात्या वायोविति ॥६॥ अपगृह्य पुनरिन्द्रवायू इति ॥७॥ मैत्रावरुणमयं वामिति ॥८॥ पयसा श्रीणात्येनं कुशावन्तर्धाय राया वयमिति ॥९॥ एवꣳ सर्वत्र श्रयणेषु ॥१०॥ शुक्रं बैल्वेन वा तं प्रत्नथेति ॥११॥ अयं वेन इत्येके ॥१२॥ मन्थिनमयं वेन इति ॥१३॥ सक्तुभिः श्रीणात्येनं "मनो न येष्विति ॥१४॥ आग्रयणं द्वयो-

---

स्वादारभ्याधोऽवमार्ष्टि ।

ततः प्रथमपरिधौ न्युब्जहस्तं प्रत्यगुपमार्ष्टि। हस्तस्य प्राङ्नयनेनोपमार्जनं प्रत्यक्संस्थं सम्पद्यते। ततः प्रत्यागत्योदानाय त्वेति खरे स्वस्थाने उपांशुसवनसंस्पृष्टमन्तर्यामपात्रं सादयति। कठसूत्रे "त्वत्पमुपांशुमासादनादुत्तरार्द्धे होम" इति। मानवे च "उत्तरेण होतुर्गच्छति दक्षिणेनाभिप्रपद्य ग्रहमुत्तरं परिधिसन्धि प्रत्युज्जुस्तिष्ठन्नि"ति।

ततोऽध्वर्युरुपांशुपात्रस्य पश्चादासादितमैन्द्रवायवपात्रमादायावायो भूषेति मन्त्रेणैन्द्रवायवं गृह्णाति सन्ततधारया एव। वायवे त्वेति मन्त्रान्ते स्वल्पं गृहीत्वा पात्रं धारातो विच्छिद्य पुनर्मन्त्रान्ते गृह्णाति, इन्द्रवायू इति मन्त्रेण इन्द्रवायुभ्यां त्वेत्यन्तेन। सर्वत्र धाराया अधः पात्रं तथा धारणीयं यथा मन्त्रान्ते सोमग्रहणं सम्पद्यते। एवं वारद्वयं गृहीत्वा परिमृज्य स्वस्थाने सादयति, एष ते योनिः सजोषोभ्यां त्वेति।

ततो मैत्रावरुणपात्रमादायायं वां मित्रावरुणेति मन्त्रान्ते मैत्रावरुणं ग्रहं गृह्णाति। गृहीत्वा पात्रस्योपरि कुशौ निधाय राया वयमिति मन्त्रेण पयसा श्रीणाति ग्रहमध्ये पयोऽवनयतीत्यर्थः।

ततः परिमार्जनम्। तत एष ते योनिर्ऋतायुभ्यां त्वेति सादनं स्वस्थाने। ततः शुक्रपात्रमादाय तं प्रत्नथेति शुक्रं गृह्णाति। परिमार्जनम्। नात्रोदकोपस्पर्शनम्। एष ते योनिर्वीरतां पाहीति स्वस्थाने सादनम्। शुक्रपात्रं बैल्वं वा वैकङ्कतं वा भवति। अयं वेन इति वा शुक्रग्रहणे मन्त्रः।

ततो मन्थिनः पात्रमादायायं वेन इति मन्त्रेण मन्थिनं गृह्णाति। ततः कुशावन्तर्धाय मनो न येष्विति सक्तुभिः श्रीणाति। ततः परिमार्जनम्।

धारयोर्ये देवास इति ॥१५॥ दशापवित्रेणाग्रयणमुपगृह्य त्रिर्हिंकृत्य सोमः पवत इति सकृच्छेषम् ॥१६॥ प्रथमस्थानेन प्राग्देवतादेशात् ॥१७॥ प्रातःसवने चोच्चैःकर्माणि ॥१८॥ मध्यमेन माध्यन्दिने ॥१९॥ उत्तमेन तृतीयसवने ॥२०॥ उक्थ्यमुपयामगृहीत इति ॥२१॥ ध्रुवं "मूर्धानं दिव" इति ॥२२॥ आ होमादस्य सुन्वन्न मूत्रपुरीषे कुर्यात् ॥२३॥ वैश्वानरं च जानन् ॥२४॥ पूर्णान्

---

एष ते योनिः प्रजाः पाहीति शुक्रस्योत्तरतः सादयति । तत आग्रयणस्थालीमादाय तस्यां द्वाभ्यां धाराभ्यां ये देवास इति मन्त्रेणाग्रयणं गृह्णाति । एकां धारां यजमानो होतृचमसादासिञ्चति। द्वितीयामुन्नेता आधवनीयादुदञ्चनेन । एवं धाराद्वयमिति याज्ञिकाः कर्कश्च ।

आग्रयणस्थाल्यां य उपांशुग्रहशेषस्तत्पात्रान्तरे कृत्वा प्रतिप्रस्थाना आसिञ्चति । सा एका धारा । द्वितीया तु सन्ततधारैवेत्येवं कठमैत्रसूत्रयोरस्ति । तेनायं पक्षः समूलः । ग्रहणानन्तरं स्थालीमुखं पवित्रेण सर्वतो वेष्टयित्वाऽऽत्मसमीपे धारयित्वा हिं हिं इति त्रिरुच्चार्य सोमः पवत इति च त्रिरुक्त्वा शेषमस्मै ब्रह्मण इत्यादिकं सकृद् ब्रूयात् । अयं मन्त्रो-विश्वेभ्यस्त्वा देवतादेशात्प्राक् प्रथमस्थानेनोच्चारणीयः । देवतादेशनप्रभृत्युपांश्वेव देवेभ्य इति । प्रथमस्थानं चोपांशूच्चारणापेक्षया किंचिदुच्चैः ।

ततोऽध्वर्यावाग्विसर्गः। आग्रयणस्थाल्याः परिमार्जनम् । एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्यासादनं खरमध्ये । प्रातःसवने यान्युच्चैः कर्माणि प्रैषादीनि तानि सर्वाण्यपि प्रथमस्थानेनोच्चार्याणि । माध्यन्दिने सवने च यान्युच्चैर्यानि च नीचैस्तानि सर्वाणि मध्यस्वरेण । तृतीयसवने च तानि सर्वाण्युत्तमस्वरेण ।

तत उक्थ्यस्थालीमादायोपयामगृहीतोऽसीन्द्राय त्वेति उक्थ्यं गृह्णाति । परिमार्जनं, एष ते योनिरुक्थेभ्यस्त्वेत्यासादनम् ।

ततो ध्रुवस्थालीमादायापरेणोद्गातृणां हृत्वा मूर्धानं दिव इति मन्त्रेण ध्रुवं गृह्णाति । ततः परिमार्जनं, ततस्तथैव प्रतिपर्याहृत्य स्वस्थाने सादयति एष ते योनिर्वैश्वानराय त्वेति ।

ध्रुवस्याग्निमारुतशस्त्रान्ते होतृचमसे निनयनं कृत्वा होमः क्रियते, तत्पर्यन्तं यजमानो मूत्रपुरीषे न कुर्यात् । इच्छया वैश्वानरग्रहस्य ग्र-

**स्थालीग्रहानर्धपूर्णं द्रोणकलशं कृत्वा सर्वमासिञ्चति सुन्वन् ॥२५॥ अध्वर्युप्रतिप्रस्थातृप्रस्तोत्रुद्गातृप्रतिहर्तृसुन्वन्तः समन्वारब्धा निष्क्रामन्ति ॥२६॥ अध्वर्युः प्रथमो यथासंख्यमितरे ॥२७॥ हुत्वा वा समन्वारभेरन् ॥२८॥ यस्त इति विप्रुषाᳪं होमं जुहोति ॥२९॥ अध्वर्युर्वा ॥३०॥ वेदितृणे अध्वर्युरादत्ते । प्रह्वा उदञ्चो गच्छन्ति ॥३१॥ अन्यतरत्तृणं चात्वाले प्रास्यति देवानामिति ॥३२॥ उद्गातॄणां पुरस्तादितरत्तूष्णीम् ॥३३॥ जपत्सु "सोमः पवत" इति पवमानोपाकरणं प्रस्तोत्रे तृणे प्रयच्छन् ॥३४॥ सर्वेषु ॥३५॥ अतृणो वा ॥३६॥६॥**

---

हुणादिविधि जामन्वैश्वानरं गृह्णाति । स्थालीग्रहानाग्रयणाद्यान्पूर्णान् गृह्णीयात् ।

ततः सम्पातसोमेन द्रोणकलशमर्द्धपूर्णं कृत्वा यजमानो होतृचमसस्थं सर्वं सोमं द्रोणकलशे आसिञ्चति ।

ततोऽध्वर्योः पाणिप्रक्षालनम् । ततो हविर्द्धानमध्य एव निष्क्रमणायोत्थितमध्वर्युं प्रतिप्रस्थाताऽन्वारभते । प्रतिप्रस्थातारं प्रस्तोता, प्रस्तोतारमुद्गाता, उद्गातारं प्रतिहर्त्ता, प्रतिहर्त्तारं यजमानः । ब्रह्मा च विकल्पेन प्रतिहर्त्तारमन्वारभते । एवं समन्वारब्धा अध्वर्य्वादयो हविर्द्धानान्निष्क्रामन्ति ।

ततः प्रचरण्यामाज्यस्थाल्याः सकृदाज्यं गृहीत्वा समिदाधानपूर्वकं यस्ते द्रप्स इति मन्त्रेण सर्वे उक्तक्रमेण जुह्वति । यजमानोऽपि जुहोति, इदं सोमाय ।

अथवा अध्वर्युरेवैको जुहोति नान्ये । अथवा होमानन्तरमेव सर्वेषामन्वारम्भः, न पूर्वम् । अन्वारम्भपक्षे ब्रह्माऽपि जुहोति ।

ततोऽध्वर्युर्द्वे वेदितृणे आदत्ते । तत आसीना एवोदङ्मुखाश्चात्वालं प्रति सर्पन्ति ।

ततो गृहीतयोस्तृणयोर्मध्ये एकं तृणं देवानामिति चात्वाले प्रक्षिपति । तत उद्गातारश्चात्वालस्य दक्षिणतो वेदिमध्ये यथास्थानमुपविशन्ति । तत उद्गातॄणां पुरस्ताद् द्वितीयं तूष्णीं प्रक्षिपति । त उद्गातारः पुरस्ताज्जपादिकं कुर्वन्ति । ततो द्वे दर्भतृणे प्रस्तोत्रे समर्पयन् सोमः पवत इति

कुशमुष्टिं वा ॥१॥ प्रत्यङ्मुखा उपविशन्तः पुरस्ता-द्दक्षिणो यजमानः ॥२॥ स्तूयमान उन्नेताऽऽधवनीयं पवित्रमन्तर्धाय पूतभृत्यासिञ्चति ॥३॥ स्तोत्रान्ते प्रेष्यत्य-ग्नीदग्नीन्विहर, बर्हिः स्तृणीहि, पुरोडाशाँ३ अलङ्कुरु, प्रतिप्रस्थातः पशुनेहीति ॥४॥ यथान्युप्तं धिष्ण्येष्वाग्नीध्रा-दङ्गारान्निवपति ॥५॥ अनुपृष्ठ्यां बर्हिः स्तृणाति ॥६॥ आश्विनं गृह्णात्यन्वारब्धे वा गा वाग्निनि ॥ ७ ॥ ग्रहा-

मन्त्रेण पवमानोपाकरणं करोति ।

इति नवमस्य षष्ठी कण्डिका ॥ ६ ॥

अथवा कुशमुष्टिं प्रयच्छन्, तृणं विनैव वा, एवं पवमानोपाकरणं करोति । सर्वेषु पवमानेष्वेते त्रयोऽपि विकल्पा इति पितृभूतिः । सूत्रा-न्तरेष्वप्येवमेवास्ति । ब्रह्माऽपि दक्षिणत उपविशति । प्रस्तोत्रा ब्रह्मन् स्तोष्यामः प्रशास्तरित्युक्ते ब्रह्मा एतं ते देव सवितरिति तेन मानवेत्यन्तं पठित्वा स्तुत सवितुः प्रसव इति । एवं सर्वस्तोत्रेषूद्गातृवत्स्तोत्रार्थमनु-जानाति सर्वत्र देव सवितरेतद् बृहस्पते प्रेत्यनेन मन्त्रेण वा रश्मिना सत्या येत्यादिभिः प्रतिमन्त्रं वा क्रमेण प्रसौति ।

अध्वर्युः पवमानसमाप्तिं यावदुद्गातॄणां पुरस्तात्प्रत्यङ्मुख उपविशति तस्य दक्षिणतः प्रतिप्रस्थाता प्रत्यङ्मुख एव, तयोर्दक्षिणतो यजमानो-ऽपि तथैवोपविशति । तत उद्गातारः स्तुवन्ति । तत्र प्रथमप्रस्तावसमये यजमानः शतपथस्वरेणासतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मा-ऽमृतं गमयेत्येतानि त्रीणि यजूंषि सकृज्जपतीति शङ्करभाष्ये ।

उन्नेता च स्तूयमाने पवमाने पूतभृत उपरि पवित्रमन्तर्धाया-धवनीयस्थं सोममुदञ्चनेन गृहीत्वा गृहीत्वा आसिञ्चति पवमानसमाप्ति यावत् । स्तोत्रान्ते अध्वर्युरुत्तिष्ठन्प्रेष्यति अग्नीदग्नीन् विहर, बर्हिः स्तृणीहि, पुरोडाशाँ अलङ्कुर्वित्यत्यग्नीधम्, प्रतिस्थातः पशुनेहीति प्रतिप्रस्थातारम् ।

ततोऽग्नीदाग्नीध्रीयाग्नेरङ्गारानादाय होतृधिष्ण्यादिषु समप्तु धि-ष्ण्येषु निवापक्रमेण तूष्णीं निनयति ।

ततोऽन्तः पात्यादारभ्य पृष्ठ्याया उपर्युत्तरवेदिं यावत्प्राक्संस्थं बर्हिस्तूष्णीं स्तृणाति। ततः शालायां गत्वा पुरोडाशविभस्मीकरणं करो-

**नवेक्षयति यथागृहीतमवकाशान्वाचयन् "प्राणाय म इति प्रतिमन्त्रम् ॥ ८ ॥ उपाꣳशुसवनं द्वितीयम् ॥ ९ ॥ आश्विनꣳ० षष्ठम् । शुक्रामन्थिनौ युगपत् । पूतभृदाधवनीयौ च "विश्वाभ्यो म इति ॥१०॥ काऽसीति द्रोण**

ति । वाजिनपात्रस्थापनं, पञ्चबिलपात्र्याश्च । वाजिनपात्रे उपस्तारः । पञ्चबिलायां मध्ये पुरस्ताद्दक्षिणतश्च त्रिषु स्थानेषूपस्तारः । तत्रस्थाभिघारमदत्त्वा वा वाजिननिषेकः ।

ततः पुरोडाशादीनामभिघारः। उद्वासनं, पुरोडाशस्य, पञ्चबिलामध्ये स्थापनं, पुरस्ताद्धानानां, दक्षिणतः करम्भस्य, पश्चाद्दध्नः, उत्तरतः पयस्यायाः; वाजिनस्योत्तरतो भूमौ दधिपयस्ययोरुखास्थयोरेवासादनमिति कर्कः । एकपात्र्यामासाद्येति वचनान्मानवे प्रत्यक्षवचनाच्च । पात्र्यां निम्नौ गर्त्तौ कारयित्वा तत्र निनीयासादनामित्यपरे ।

ततः कपालानि संख्याय प्रापणदानं—इन्द्रं गच्छेति पुरोडाशे, इन्द्रं हरिवन्तं गच्छेति धानासु, इन्द्रं पूषण्वन्तं गच्छेति करम्भे, इन्द्रं स्वरस्वतिवन्तं गच्छेति दध्नि, इन्द्रं मित्रावरुणवन्तं गच्छेति पयस्यायां, वाजिनो गच्छेति ।

ततः कपालान्यक्त्वा कर्परं वाऽक्त्वाभयमुद्वासयति । प्रतिप्रस्थाता च सवनीयं पशुमानीयोत्तरवेदिसमीपे तिष्ठति । अध्वर्युः पुनर्हविर्द्धानं प्रविश्याश्विनपात्रमादाय द्रोणकलशात्पूतभृते वा यजमाने विकल्पे नान्वारब्धे या वां कशा इति मन्त्रेण परिप्लवया सोममादायाश्विनं ग्रहं गृह्णाति । परिमार्जनं, एष ते योनिर्माध्वीभ्यां त्वेति स्वस्थाने सादनम् ।

ततो ऽध्वर्युर्यजमानस्योपांश्वादीन् ग्रहान् दर्शयन्नवकाशसंज्ञकान्मन्त्रान्वाचयति । तत्रैवं प्रयोगः—अध्वर्युः प्राणाय मे वर्चोदा वर्चसे पवस्वेति ब्रुवन्नुपांशुमीक्षस्वेति यजमानं प्रत्याह । ततो यजमान उपांशुग्रहं विलोकयन् प्राणाय म इति मन्त्रं स्वरेण पठति । एवं वक्ष्यमाणेषु सर्वेषु ज्ञेयम् । ततो व्यानाय मे० स्वेति ब्रुवन्नुपांशुसवनमीक्षस्वेत्युपांशुसवनं दर्शयति । तत उदानाय मे०स्वेति ब्रुवन् शुक्रामन्थिनौ । ततः आत्मने मे व०स्वेति ब्रुवन्नाग्रयणमीक्षस्वेत्याग्रयणम् । तत आजसे मे० स्वेति ब्रुवन्नुक्थ्यमीक्षस्वेत्युक्थ्यम् । तत आयुषे मे व०स्वेति ब्रुवन् ध्रुवमीक्षस्वेति ध्रुवम् ।

ततो विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथामिति ब्रुवन्पू-

कलशम् ॥११॥ भूर्भुवः स्वरिति जपति ॥१२॥ ज्ञातप्रियानूचानानवकाशयेत ॥ १३ ॥ ७ ॥

ध्रुवगोपं कृत्वा परिव्ययणादि करोति रशनामुदुह्य पूर्वाम् ॥१॥ आग्नेयोऽग्निष्टोमे सवनीयः पशुरैन्द्राग्नश्चोक्थ्ये द्वितीयः ॥२॥ ऐन्द्रो वृष्णिः षोडशिनि तृतीयः, सरस्वत्यै चतुर्थोऽतिरात्रे मेषी वा ॥३॥ एतत्स्तोमायनम् ॥४॥ होतृनामग्रहणान्तं कृत्वेतरांश्चाश्राव्याश्राव्य प्रवृणीते यथालिङ्गम् ॥५॥ अश्विनाध्वर्यू आध्वर्यवात्

तभृदाधवनीयावीत्तस्वेति पूतभृदाधवनीयौ युगपद्दर्शयति । ततः कोऽसि कतमो० तीतृपामेति ब्रुवन् द्रोणकलशमीत्तस्वेति द्रोणकलशम् । ततो यजमानो भूर्भुवः स्वरिति जपति । एतद् ग्रहाणां दर्शनं वाचनं च ज्ञातस्य वंशपरंपरया शुद्धेन ज्ञातस्य तथा प्रियस्याध्वर्योरतिवल्लभस्य तथा अनुवाचनस्याध्ययनेनैव स्वयं ग्रहज्ञानवत एव कारयितव्यं न सर्वस्य ॥७॥

इति नवमस्य सप्तमी कण्डिका ॥ ७ ॥

ततो वस्त्रतृणादिना ध्रुवस्य गोपनं ढक्कनं कर्तव्यमिति कर्कः । "राजपुत्रो ध्रुवं गोपायती"ति मानवे । "तं प्रत्यङ्मुखो राजपुत्रो रक्षेदि"ति कठसूत्रे । "तं वै गोपायतीति" शतपथे । तेन ध्रुवगोपं कृत्वा ध्रुवस्य रक्षकं स्थापयित्वेत्ययमर्थो युक्तः ।

ततः पाणिप्रक्षालनम् । यूपसमीपे गत्वा परिव्ययणादि करोति । तत्राग्नीषोमीयदिने यया रशनया यूपस्य परिव्ययणं कृतमस्ति तां रशनामुदुह्य यूपमध्यादूर्ध्वां कृत्वा तस्याः स्थाने पुनः परिव्ययणं कर्त्तव्यम् । परिवीयमाणायेति प्रैषः । यथोक्तं परिव्ययणं स्वरुवगूहनं, पशोरुपाकरणं, शकलादानादि होमान्तमग्निमन्थनम् । उपाकरणमन्थनयोरत्र नियमः ।

ततो द्विगुणरशनया पशुबन्धनं, अग्नये जुष्टं नियुनज्मीत्यालम्भः । अग्नये त्वा जुष्टमिति ब्रह्मानुज्ञातस्य प्रोक्षणम् , आस्योपग्रहणम् , अधस्तादुपोक्षणम्, प्रोक्षण्या यत्नेन स्थापनम् । ततः सदसि होतृधिष्ण्यस्य पश्चाद्धोतृषदनस्थापनम् । एहि होतरित्यादिहोतृवरणान्तं पशुवत् । होतृवरणानन्तरं पुनराश्राव्य पुनर्होतारं वृणीते, इन्द्रं होत्रात् इति ।

ततोऽश्विनाऽध्वर्यू आध्वर्यवादित्यध्वर्युप्रतिप्रस्थात्रोर्वरणं स्वयमेवा

॥६॥ मित्रावरुणौ प्रशास्तारौ प्राशास्त्रात् ॥७॥ इन्द्रो ब्रह्मा ब्राह्मणादिति ब्राह्मणाच्छंसिनम् ॥८॥ मरुतः पोत्राद्, ग्नावो नेष्ट्राद्, अग्निराग्नीध्रात्, अग्निर्हं दैवीनामिति यजमानम् ॥९॥ यथाप्रवृतं प्रवृतहोमौ जुहति "जुष्टो वाचे भूयासं जुष्टो वाचस्पतये देवि वाग्यत्ते वाचो मधुमत्तमं जुष्टतमं तस्मिन्मा धाः स्वाहा सरस्वत्या इति ॥१०॥ पावका न इति द्वितीयाम् ॥११॥ वपा-

---

ध्वर्युणा कर्त्तव्यम् । मानवे ऽध्वर्योः स्वयमेवात्मनो वरणदर्शनात् ।

ततः पुनराश्राव्य मित्रावरुणौ प्राशास्त्रादित्यनेनैकस्य मैत्रावरुणस्य वरणं, नतु द्विवचनदर्शनाद् द्वितीयोऽच्छावाकः । तथाच मनुः—"मैत्रावरुणौ प्राशास्त्रादिति प्रशास्तारमिति । एवं काठकेऽपि । पुनराश्राव्य इन्द्रो ब्राह्मणादिति ब्राह्मणाच्छंसिनो वरणम् । पुनराश्राव्य मरुतः पोत्रादिति पोतुर्वरणम् । पुनराश्राव्य ग्नावो नेष्ट्रादिति नेष्टुर्वरणम् । पुनराश्राव्याग्निराग्नीध्रादित्याग्नीध्रस्य वरणम् । पुनराश्राव्याग्निर्हं दैवीनां विशां पुर एताऽयं सुन्वन्यजमानो मनुष्याणां तयोरित्यादिना यजमानस्य वरणम् । ततो होता अध्वर्य्वग्नीधोः संमर्शनं करोमि । संमृष्टावुपविशतः ।

ततः प्रवरणक्रमेण होत्रादयः प्रत्येकं प्रवृतहोमौ जुह्वति आहवनीये । तत्र पूर्वं होता जुहोति, ततोऽध्वर्युः समिधमाधायाज्यस्थाल्याः सकृदाज्यं गृहीत्वा प्रचरण्या जुष्टो वाच इति जुहोति, इदं वाचे वाचस्पतये सरस्वत्यै । ततः पुनः सकृदाज्यं गृहीत्वा पावका न इति द्वितीयामाहुतिं जुहोति, इदं सरस्वत्यै ।

ततः प्रतिप्रस्थाता एवमेव द्वे आहुती जुहोति । ततो मैत्रावरुणः, ततो ब्राह्मणाच्छंसी, ततः पोता, ततो नेष्टा अध्वर्युवत् । ततोऽग्नीदध्वर्युवदेव जुहोति । ततो यजमानोऽप्यध्वर्युवत् । ततः स्रुगादापनादि वपामार्जनान्तमग्नीषोमीयवत् ।

अत्र मानवे विशेषः—"आग्नीध्रे उपयसंमार्गपाणिराग्नीध्रः पश्चादासन्दीमारभ्योर्ध्वस्तिष्ठन्नस्तु श्रौषडिति प्रत्याश्रावयती"ति । न वपायामाज्यभागौ । अग्नये छागस्य वपायै मेदस इत्यनुवाचनम् । द्विरभिघारः । अग्नये छागस्य वपां मेदः प्रस्थितं प्रेष्येति प्रैषः । इदमग्नये । वपाश्रपण्योः प्रासनं, स्रुचोः सादनं, चात्वाले मार्जनं, वपामार्जनान्ते सर्वे ऋत्विजो नित्यभोजनं कुर्युः । तथाच काठके "मार्जयित्वा भुञ्जते यद्दीक्षिता भव-

मार्जनान्तं कृत्वा सयजमाना धिष्ण्यानुपतिष्ठन्ते वि-भूरसीति प्रतिमन्त्रम् ॥१२॥ उत्करान्तं कृत्वा वाग-सीति सदोऽभिमर्शनम् । ऋतस्य द्वाराविति द्वार्ये ॥१३॥ अभिमन्त्रणमुत्तरैः ॥१४॥ अध्वनामध्वपत इति सूर्यम् ॥१५॥ मित्रस्य मैत्यृत्विजः ॥१६॥ अग्नयः सगरा इति धिष्ण्यान् ॥१७॥ एतत्सर्पणम् ॥ १८ ॥ ८ ॥

सदोऽभिमर्शनादि चोत्तरयोः सवनयोः ॥१॥ पुरो-

---

न्ति" "एतस्यां वेलायामश्नीयुरि"ति छन्दोगसूत्राच्च ।

ततः सर्वेषामृत्विजां यजमानसहितानां सर्पणम् । पूर्वं धिष्ण्यानामु-पस्थानं विभूरसीत्याग्नीध्रीयस्य, वह्निरिति होतुः, श्वात्रोऽसीति मैत्रावरु-णस्य, तुथोऽसीति ब्राह्मणाच्छंसिनः, उशिगिति पोतुः, अङ्घारिरिति नेष्टुः, अवस्यूरित्यच्छावाकस्य, शुन्ध्यूरिति मार्जालीयस्य, संम्राडि-त्याहवनीयस्यातिप्रणीतस्य, परिषद्य इति बहिष्पवमानदेशस्य चात्वाला-द्दक्षिणतो वेदिमध्ये वर्त्तमानस्य । नभोऽसीति चात्वालस्य, मृष्टोऽसीति शामित्रस्य, ऋतधामेत्युदुम्बर्याः, समुद्रोऽसीति ब्रह्मासनस्य, अजोऽसीति शालाद्वार्यस्य, अहिरसीति प्राजहितस्य, समूह्योऽसि विश्ववेदा इत्यु-त्करस्य ।

एवमेतत्क्रमेणोपस्थाय सयजमाना ऋत्विजो वागसीति सदोऽभिमृ-शन्ति । तत ऋतस्य द्वाराविति प्राग्द्वारस्य स्थूणे अभिमृशन्ति । ततोऽध्वना-मध्वपत इति सर्वे सूर्यमभिमन्त्रयन्ते । मित्रस्य मैत्यृत्विजामभिमन्त्रणं य-जमान एव करोतीति कर्कः । सर्वेऽपीति पितृभूतिः । ततोऽग्नयः सगरा इति सर्वानाग्नीध्रीयादीन् धिष्ण्यानभिमन्त्रयते ।

इति नवमस्य अष्टमी कण्डिका ॥ ८ ॥

---

ततः सवनीयपुरोडाशप्रचारः । तत्राग्नीत्सवनीयानुत्तरवेदिसमीपे आनयति । आसादनमप्याग्नीध्र एव करोतीति हरिस्वामिनः । तस्याप्य-लङ्करणत्वादित्यभिप्रायः । अध्वर्युरित्यन्ये । प्रियेर्द्धामभिः प्रियᳪ᳭ सद आसीदतेत्यूहितेन मन्त्रेण पञ्चापि हवींष्येकपात्र्यामासादयति ।

ततो वाजिनमुत्करे। प्रत्येकमालम्भो वाजिनस्य च । मात्रात्मालम्भः। प्राक्कृतत्वात् । ततः स्रुचावादाय यजप्रैषावाज्यभागौ । अत्र मानवे अव-

डाशैश्चरति ॥२॥ एकं प्रदानम् ॥३॥ एकपात्र्यामासाद्य मध्ये पुरोडाशः पुरस्ताद्धानाः प्रतिदिशमितराणि यथासंख्यं प्रदक्षिणम् ॥४॥ प्रातः प्रातः सवस्येन्द्राय पुरोडाशानामनुवाचयति ॥५॥ आश्राव्याह प्रातः प्रातः सवस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति ॥६॥ एवं यथा-

---

दायानुवाचनमुक्तम् । कठसूत्रे च पुरोडाशादीनां पयस्यान्तानामवद्यन्प्रातः प्रातःसवस्येन्द्राय पुरोडाशानामनुब्रूहीत्यवदीयमानानामिति लौगाक्षिरिति । संप्रदायपद्धतावादावनुवाचनम्, ततोऽवदानमिति । अतो यथारुच्यनुष्ठानम् ।

अतो जुहूपभृतोरुपस्तारः । पुरोडाशानां पञ्चानां पूर्वमध्यादवदानानि गृह्णन् प्रातःसवस्येन्द्राय पुरोडाशानामनुब्रूहीत्यनुवाचयति । ततः पुरोडाशादीनां पञ्चानां पूर्वार्द्धादवदानानि सहैवावद्यति । सकृदभिघारः, ततोऽभ्यङ्गः, उपभृति स्विष्टकृदवदानम् । द्विरभिघारः । अवदाय वाऽनुवाचनम् । अवदीयमानेषु च अनयोः पक्षयोरेकैकस्य हविषो मध्यात्पूर्वार्द्धाच्चाऽऽदाय ततो द्वितीयस्यैवम् । ततस्तृतीयस्येत्यादि ।

तत उत्थायातिक्रम्याश्राव्य प्रातःसवस्येन्द्रपुरोडाशान्प्रस्थितान् प्रेष्येति प्रैषः । इदमिन्द्राय हरिवते पूषण्वते सरस्वतिवते मैत्रावरुणवते चेति त्यागः । इदमिन्द्रायेत्येतावानेव वा । तत उपभृतः समानीयाग्नयेऽनुब्रूहि । अग्नये प्रेष्येति निर्गुणः प्रेष्यप्रैषः । स्विष्टकृद्यागः । इदमग्नय इति त्यागः । उदकालम्भः । न सञ्चराभ्युक्षणम् । स्रुचोः सादनम् । प्राशित्रावदानम् । ब्रह्मणे समर्पणम् । अप उपस्पृश्येडायामवदानं द्विरवदानम् । पुरोडाशादीनां त्रयाणां षडवत्तावदानम् । तेषामेव ब्रह्मयजमानभागौ । चतुर्द्धाकरणाभावः । इडापात्र्यां पृथक् एकस्य पुरोडाशखण्डस्याच्छावाकाय समर्पणार्थं निधानम् । पुरोडाशपयस्याधानानामल्पमल्पं खण्डं द्विदेवत्ये प्रक्षेपार्थं तत्रैव निदधाति ।

तत इडापात्रीमादायोत्थाय हविर्द्धानमुत्तरेण सदसि गत्वा होतृधिष्ण्यस्योपरि निधाय सत्वरमागच्छति । ततः पाणिप्रक्षालनम् । यदा सदस उत्थायोत्तरवेदिं प्रति गम्यते ततो वा सदः प्रत्यागम्यते । तदा हविर्द्धानमुत्तरेणैव सदा सञ्चरः । यदा च सदस उत्थाय ग्रहणार्थमेव हविर्द्धाने गम्यते, गृहीत्वा वोपाकरणार्थं सदस्यागम्यते, तदा हविर्द्धानापरद्वारेणैव प्रवेशनं निष्क्रमणं च ।

सवनमनुवाचनप्रैषौ ॥७॥ उपभृति चावद्यति । पशुषु- पुरोडाशवत् ॥८॥ उभयं हुत्वा होतृधिष्ण्ये पुरोडाशा- न्निदधाति ॥९॥ निरवत्तां वेडाम् ॥१०॥ द्विदेवत्यैश्चरति ॥११॥ वायव इन्द्रवायुभ्यामनुवाचयति । प्रतिप्रस्था- तोऽऽदित्यपात्रेण द्रोणकलशादुपयामगृहीतोऽसीति गृ- हीत्वा गृहीत्वा द्विदेवत्यानन्नु जुहोत्युत्तरार्धे ॥१२॥ अ-

---

अत्र वेडां होतृधिष्ण्ये निधायोत्तरेण हविर्द्धानं गत्वा पूर्वद्वारेण ह- विर्द्धानं प्रविश्यैन्द्रवायवं ग्रहमादाय वायव इन्द्रवायुभ्यामनुब्रूहीति मै- त्रावरुणं प्रेष्यति । तत उत्थाय यजतिदेशं गत्वाऽऽश्राव्य वायव इन्द्रवा युभ्यां प्रेष्येति मैत्रावरुणं प्रेष्यति । अत्रैन्द्रवायवस्य द्वौ वषट्कारौ, तत्र प्रथमवषट्कारे स्वल्पं जुहोति, इदं वायवे । द्वितीयवषट्कारेऽपि स्वल्पं जुहोति, इदमिन्द्रवायुभ्याम् ।

अत्र प्रतिप्रस्थाताऽनुवाचनकाल एवादित्यपात्रेण द्रोणकलशादुपया- मगृहीतोऽसीत्येतावता मन्त्रेण परिप्लवया सोमं गृहीत्वा अनासाद्यैव निष्क्रम्योत्तरपरिधिसन्धिसमीपे तिष्ठन्नेवाग्नेरुत्तरार्द्धे द्विदेवत्यानन्नु जु- होति । अत्र द्वितीयवषट्कारमनु जुहोति । "स्विष्टकृते चैतां जुहोतीति" श्रुतेरत्र स्विष्टकृत इति त्याग इति हरिस्वामिनः ।

शाखान्तरे तु द्विदेवत्यपात्रेभ्य एव प्रतिप्रस्थातुरादित्यपात्रे ग्रहणं, वषट्कारद्वयेऽपि प्रतिप्रस्थातुर्होम इति, तदा प्रतिप्रस्थातृकर्तृकानुहोमा- नामपि द्विदेवत्यदेवताभ्य एव त्यागा भवन्ति । मानवेऽपि विशेषः-"स्रुचा चमसं वायव्यं वाऽऽदाय वाचं यच्छन्ना यजेति वचनादाग्नीध्रे स्फ्यसंमा- र्गपाणिराग्नीध्रः पश्चादासन्दीमारभ्योर्द्ध्वस्तिष्ठन्नस्तु षडिति प्रत्याश्रावयति प्रत्याश्रुते दक्षिणां परिधिसन्धिं प्रत्यवस्थाय जुहोत्यध्वर्युरुत्तरं प्रतिप्रस्था- ता मध्येऽग्नेराज्याहुतीः पुरोडाशाहुतीः पश्वाहुतीश्चाभितः सोमाहु- ती"रिति ।

प्रतिप्रस्थाता द्वितीयवषट्कारमनूत्तरार्द्धे स्वल्पं हुत्वा हविर्द्धानमध्ये प्रविश्यादित्यस्थाल्यां बहुलं शेषमासिञ्चत्यादित्येभ्यस्त्वेति । अध्वर्युर्ग्रहं हुत्वा त्वरमाण उत्तरेण हविर्द्धानं गत्वा होत्रे ग्रहं समर्प्य हविर्द्धानमुत्त- रेण प्रत्यागत्य पूर्वद्वारेण प्रविश्य मैत्रावरुणग्रहमादाय मित्रावरुणाभ्या- मनुब्रूहीति प्रेष्यति । तत उत्थायातिक्रम्याश्राव्य मित्रावरुणाभ्यां प्रेष्येत्या- ह । प्रतिप्रस्थाता च पूर्ववद् गृहीत्वा तथैवाल्पं हुत्वा शेषमादित्यस्था-

नुवषट्कृतेऽपि ॥१३॥ आश्रुतप्रत्याश्रुतप्रैषाश्च समत्वात् ॥१४॥ नानन्तर्यात् ॥१५॥ स्यादाविरोधात् ॥१६॥ शेषं शेषमादित्यस्थाल्यामासिञ्चत्यादित्येभ्यस्त्वेति ॥१७॥ समासिच्य तेनापिदधाति विष्ण उरु गायेति ॥१८॥ उन्नीयमानेभ्योऽनुवाचयति ॥१९॥ चमसेषून्नयति नवस्वपरेणोत्तरवेदिं निधाय ॥२०॥ शुक्रादुपस्तरणाभिघारणे ॥२१॥ होतृचमसे प्रथमम् ॥ २२ ॥ ९ ॥

---

ल्यामासिञ्चति । इदं मित्रावरुणाभ्यामिति ग्रहस्य त्यागः । अनुहोमश्च पूर्ववत् ।

ततोऽध्वर्युस्त्वरमाणो मैत्रावरुणं होत्रे समर्प्यागत्याश्विनमादायाश्विभ्यामनुब्रूहीत्युक्त्वाऽतिक्रम्याश्राव्याश्विभ्यां प्रेष्येत्युक्त्वा वषट्कृते जुहोति इदमश्विभ्यामिति । अनुहोमश्च पूर्ववत्प्रतिप्रस्थात्रा कर्त्तव्यः । द्विदेवत्यानामनुवषट्काराभावः । तदुक्तम्—

"ऋतुग्रहा द्विदेवत्या यश्च पात्नीवतो ग्रहः ।
आदित्यग्रहसावित्रा एते नानुवषट्कृता" इति ।

सर्वेषां शेषरक्षणम् । अत्र प्रतिप्रस्थाता होमानन्तरं प्रविश्य शेषमादित्यस्थाल्यामासिच्य तेनैवादित्यपात्रेणादित्यस्थालीमपिदधाति विष्ण उरुगायेति मन्त्रेण । अध्वर्युर्होत्रे आश्विनं समर्प्य उन्नीयमानेभ्योऽनुब्रूहीति मैत्रावरुणं प्रेष्यति । तत उन्नेताऽच्छावाकचमसवर्जितान् नव चमसान् होतृब्रह्मोद्गातृयजमानप्रशास्तृब्राह्मणाच्छंसिपोतृनेष्ट्राग्नीध्रसंबन्धिनः क्रमेणापरेणोत्तरवेदिं निधाय द्रोणकलशात्परिप्लवया सोममादाय तेन सोमेन परिप्लवयैव सर्वेषु चमसेषूपस्तृणाति ।

ततः पूतभृत उदञ्चनेन सोममादाय सर्वांश्चमसान्पूरयति । पुनर्द्रोणकलशात्सोमेनोपरि सर्वेष्वभिघारयति । एवमेकैकश्चमसस्त्रिरवत्तः संपद्यते । प्रथमं होतृचमसे, ततो ब्रह्मणः, तत उद्गातुः, ततो यजमानस्य, ततः प्रशास्तुः, ततो ब्रह्मशंसिनः, ततो नेष्टुः, ततोऽग्नीधः, एवं त्रिरवत्तं कृत्वा द्वितीयस्यावदानं, ततस्तृतीयस्येत्येवं सर्वेषां क्रमेण पदार्थानुसमयेन कर्त्तव्यं, त्रिरवत्तकरणमेकः पदार्थ इति ॥

इति नवमस्य नवमी कण्डिका ॥ ९ ॥

**शुक्रामन्थिभ्यां चरतः ॥१॥ शुक्रेणाध्वर्युर्मन्थिना प्रतिप्रस्थाता ॥२॥ प्रोक्षिताप्रोक्षितौ यूपशकलावादा-याऽपिधानं प्रोक्षिताभ्याम्, अपमार्जनमप्रोक्षिताभ्यामपमृष्टः शण्ड इत्यध्वर्युरपमृष्टो मर्क इति प्रतिप्रस्थाता ॥३॥ देवास्त्वेति निष्क्रामतो यथालिङ्गम् ॥४॥ अपरेणोत्तरवेदिमरत्नी सन्धायोत्तरवेदिश्रोण्योर्निधत्तो ऽविसृजन्तौ दक्षिणस्यामध्वर्युरुत्तरस्यां प्रतिप्रस्थाताऽनाधृष्टासीति ॥५॥ सुवीर इति दक्षिणं यूपदेशं गच्छत्यध्वर्युः सुप्रजा इति प्रतिप्रस्थातोत्तरम् ॥६॥ अपरेण**

ततोऽध्वर्युप्रतिप्रस्थातारौ सहैव शुक्रामन्थिभ्यां चरतः। तत्र शुक्रेणाध्वर्युः प्रचरति, मन्थिना प्रतिप्रस्थाता। तत्र प्रथमं द्वयोर्यूपशकलयोरुदकेन प्रोक्षणं कर्त्तव्यम्। द्वौ यूपशकलावप्रोक्षितावेव भवतः। ततोऽध्वर्युरेकं प्रोक्षितं यूपशकलमादत्ते द्वितीयमप्रोक्षितं च। प्रतिप्रस्थाताऽप्येकं प्रोक्षितं शकलं गृह्णाति, द्वितीयमप्रोक्षितं च। ततोऽध्वर्युः शुक्रग्रहमादत्ते। मन्थिनं प्रतिप्रस्थाताऽऽदत्ते। उभावपि प्रोक्षितशकलाभ्यां यथास्वं ग्रहयोरपिधानं कुरुतः। अध्वर्युरप्रोक्षितेन शुक्रमन्तर्याममवदपमार्ष्टि अपमृष्टः शण्ड इति। एवमेव प्रतिप्रस्थाता अपमृष्टो मर्क इति। उभयोरुदकस्पर्शः। "अपमृष्टः शण्डोऽपमृष्टो मर्क आभिचारिके" इत्युक्तत्वात्।

ततो देवास्त्वा शुक्रपा इत्यध्वर्युर्हविर्द्धानान्निष्क्रामति। देवास्त्वा मन्थिपा इति प्रतिप्रस्थाता निष्क्रामति। तत उत्तरवेदेः पश्चात् द्वावपि दक्षिणावरत्नी तूष्णीं परस्परं सन्धत्तः संयोजयत इत्यर्थः। तथा यत्नः कार्यो यथा ग्रहयोः स्कन्दनं न भवति।

ततोऽध्वर्युरुत्तरवेदेर्दक्षिणश्रोण्यां शुक्रं हस्तेनाविसृजन्नासादयति अनाधृष्टाऽसीति। प्रतिप्रस्थाता उत्तरश्रोणौ मन्थिनमासादयति अविमुञ्चन्ननाधृष्टाऽसीऽति।

ततोऽध्वर्युः सुवीरो वीरानिति मन्त्रेण दक्षिणं यूपदेशं गच्छति। प्रतिप्रस्थाता सुप्रजाः प्रजा इत्युत्तरं यूपदेशं गच्छति। ततो यूपमपरेण पूर्ववन्मन्त्रेणारत्नी संयोजयतः। सञ्जग्मानो दिवा०शुक्रः शुक्रशोचिषेत्यध्वर्युः। संजग्मानो०मन्थी मन्थिशोचिषेति प्रतिप्रस्थाता। यद्यग्नितापभयादपरेण यूपमरत्न्योः सन्धानं कर्त्तुं न शक्नुतस्तदा यूपस्य पुरस्तादेवारत्नी

यूपमरत्नी सन्धत्तः सञ्जग्मान इति यथालिङ्गम् ॥७॥ पूर्वेणाशक्तौ ॥८॥ अप्रोक्षितौ निरस्यतो निरस्तः शण्ड इत्यध्वर्युर्निरस्तो मर्क इति प्रतिप्रस्थाता ॥९॥ आहवनीये प्रोक्षितौ प्रास्यतः "शुक्रस्याधिष्ठानमित्यध्वर्युः "मन्थिन इति प्रतिप्रस्थाता ॥१०॥ अच्छिन्नस्येति जपित्वाऽऽश्राव्याह प्रातः सवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति ॥ ११ ॥ १० ॥

उभयतो यूपं प्रत्यङ्मुखौ जुहुतः । सा प्रथमेत्यध्व-

---

सन्धितः ।

ततोऽध्वर्युर्निरस्तः शण्ड इत्यप्रोक्षितं यूपशकलं निरस्यति । निरस्तो मर्क इतीतरो निरस्यति । उभयोरुदकालम्भः । "निरसने द्वे आभिचारिके" इत्युक्तेः ।

ततोऽप्रोक्षितयूपशकलमाहवनीयेऽध्वर्युःप्रक्षिपति शुक्रस्याधिष्ठानमसीति । प्रतिप्रस्थाता च मन्थिनोऽधिष्ठानमसीति प्रोक्षितमाहवनीये प्रक्षिपति । ततो यजमान एवाच्छिन्नस्येति जपति ।

अत्र नव चमसाध्वर्यव एकैकं चमसमादाय होमार्थं प्राङ्मुखास्तिष्ठन्ति । मनुः—"प्राञ्चश्चमसैश्चरन्तो" ति । काठके—"अनूच्यच्छन्ति चमसानाश्राव्याह प्रातः प्रातः सवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान् प्रस्थितान्प्रेष्येति मैत्रावरुणं प्रेष्यती"ति ।

इति नवमस्य दशमी कण्डिका ॥ १० ॥

---

यूपमभितः प्रत्यङ्मुखौ तिष्ठन्तौ जुहुतः। यूपस्य दक्षिणतोऽध्वर्युः,उत्तरतः प्रतिप्रस्थाता । तत्र होता वषट्कारे कृते सा प्रथमेति प्रथममध्वर्युः शुक्रं जुहोति स्वाहाकारेण । ततोऽनेनैव मन्त्रेण प्रतिप्रस्थाताऽध्वर्युहोमानन्तरं मन्थिनं जुहोति । प्रतिप्रस्थातृहोमानन्तरं चमसाध्वर्यवोऽपि स्वल्पं स्वल्पं जुह्वति । इदमिन्द्रायेति यजमानस्य अध्वर्युहोमकाल एव सर्वेषां सहैव त्यागः । अनुवषट्कारेऽप्येवमेव सर्वे जुह्वति ।

"अत्र मानवकटसूत्रयोर्विशेषः-"होतृब्रह्मोद्गातृयजमानचमसानां वषट्कारानुवषट्कारयोर्होम इतरेषां तु सकृदेव वषट्कारे होम इति । अनुवषट्कारे सर्वत्रोत्तरार्द्ध एव होमः । इदमग्नय इति त्यागश्च । उदकस्पर्शश्च ।

युः प्रथमम् ॥१॥ तमनु प्रतिप्रस्थाता ॥२॥ चमसाध्वर्यवश्च ॥३॥ प्रेष्यति च ॥४॥ प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातृणां प्रयजमानस्य यन्तु सदस्यानाᳬं होत्राणां चमसाध्वर्यव उपावर्त्तध्वᳬं शुक्रस्याभ्युन्नयध्वमिति॥५॥आगत्य प्रतिप्रस्थाता शेषᳬं शुक्रपात्रेऽवनयति ॥६॥ तᳬं स होतृचमसे ॥७॥ पश्चसून्नयन्ति ॥८॥ तानाश्राव्याश्राव्य प्रेष्यति नामग्राहं यज यजेति प्रशास्त्रादीन् ॥९॥ ब्रह्मन्यजेति ब्राह्मणाच्छᳬंसिनम् ॥१०॥ प्रथमं हुत्वोत्तमं वा तृम्पन्त्विति जपति ॥११॥ होतारं प्रत्यङ्ङुपसीदत्ययाडग्नीदिति ॥१२॥ द्विदेवत्यान् भक्षयति पूर्वः प्रथमचोदनाद्धोमाभिषवकारी भक्षयेदिति श्रुतेः ॥१३॥ होता वा वचन-मन्त्रवर्ण-कारणेभ्यः ॥१४ नाध्वर्युः समाभिव्याहा-

---

ततोऽध्वर्युस्तत्रैव स्थितश्चमसाध्वर्यून्प्रेष्यति। प्रैतु होतुश्चमस इति होतुश्चमसाध्वर्युं, प्रब्रह्मण इति ब्रह्मणः, प्रोद्गातृणामित्युद्गातृणां, प्र यजमानस्येति सुन्वतः। प्रयन्तु सदस्यानामिति सर्वेषामेवानुवादः। अत्रावसानं कृत्वा होत्राणां चमसाध्वर्यव उपावर्त्तध्वᳬं शुक्रस्याभ्युन्नयध्वमित्यवशिष्टं पश्च चमसाध्वर्यून्प्रति प्रैषोऽयम।

ततोऽध्वर्युप्रतिप्रस्थातारौ स्वस्वमार्गेणापरेणोत्तरवेदिमागच्छतः। आगत्य प्रतिप्रस्थाता मन्थिशेषं सर्वं शुक्रपात्रेऽवनयति। ततोऽध्वर्युर्मन्थिशेषसहितं शुक्रशेषं सर्वमपि होतृचमसेऽवनयति। ततश्चत्वारो होत्रादिचमसाध्वर्यवः स्वस्वचमसान्सदोमध्येऽवनयन्ति। प्रशास्त्रादिचमसाध्वर्यवश्चोत्तरवेदेः पश्चात् स्वं चमसं निधाय द्रोणकलशात्परिप्लवया सोममादाय हुतावशिष्टसोममध्ये एव स्वस्वचमसे क्रमेण पुनरभ्युन्नयन्ति।

ततोऽध्वर्युः प्रशास्तृचमसमादायाश्राव्य प्रशास्तर्यजेति प्रेष्यति, वषट्कारानुवषट्कारयोर्जुहोति। इदं मित्रावरुणाभ्यामिदमग्नय इति त्यागौ। अत्राध्वर्योस्तृम्पन्त्विति जपः। अन्तिमस्याग्नीध्रचमसस्य होमानन्तरं वा। तत उपस्पृश्य चमसाध्वर्यवे चमसं समर्पयेत्।

ततो ब्राह्मणाच्छंसिचमसमादायाश्राव्य ब्रह्मन्यजेति प्रेषः। वषट्कारानुवषट्कारयोर्होमः। शेषरक्षणं, इदमिन्द्राय, इदमग्नये। चमसप्रदा-

रात् ॥१५॥ मन्त्राणां चाविधानात् ॥१६॥ कारणस्य च-समत्वात् ॥१७॥ ऐन्द्रवायवं प्रतिगृह्णात्यैतु वसुः पुरुवसुरिति । होतृवद्भक्षणम् ॥१८॥ वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहेत्येवꣳ सर्वत्र सोमानां भक्षणम् ॥१९॥ वचनादन्यत् ॥२०॥ भक्षे हि मेति वा यथालिङ्गम् ॥२१॥ एवमितरौ प्रतिमन्त्रमैतु वसुर्विदद्वसुरैतु-वसुः संयद्वसुरिति ॥२२॥ शेषꣳ शेषꣳ होतृचमसेऽवन-

---

नम् । ततः पोतृचमसमादायाश्राव्य पोतर्यज । वषट्कारानुवषट्कारयोः सशेषहोमः, इदं मरुद्भ्यः, इदमग्नये । चमसस्थापनम् ।

ततो नेष्टुश्चमसमादायाश्राव्य नेष्टर्यजेति प्रैषः । वषट्कारानुवषट्कारयोर्होमः । इदं त्वष्ट्रे, इदमग्नये । चमसस्थापनम् । तत आग्नीध्रचमसमादायाश्राव्याग्नीध्रजेति प्रैषः । वषट्काराऽनुवषट्कारयोर्होमः । इदमग्नय इत्येक एवोभयत्र त्यागः । अत्र वा तृम्पन्त्विति जपति ।

ततोऽग्नीच्चमसहस्त एवाध्वर्युः सदो गत्वा अयाडग्नीदिति ब्रुवन् होतुः प्रत्यङ्मुख उपविशति ।

ततो द्विदेवत्यानैन्द्रवायवादीन् भक्षयति । अत्र भक्षणे द्वौ पक्षौ । वषट्कर्तुः पूर्वभक्षः, ततो होमकर्तुरिमिति मीमांसकाः । होमकर्तुः प्रथमं भक्षस्ततो वषट्कर्तुरिति कर्कसम्प्रदायकारयाज्ञिकादयः सर्वे । तेनात्र होमकर्तुः प्रथमभक्षपक्षः प्रदर्श्यते ।

तत्र पूर्वं होत्रा समर्पितमैन्द्रवायवमध्वर्युरैतु वसुः पुरुवसुरिति प्रतिगृह्णाति । ततो होतरुपह्वयस्वेति होतारं पृष्ट्वोपहूत इत्यनुज्ञात ऐन्द्रवायवं मुखस्य ढौकयित्वा वाग्देवी जुषाणेति मन्त्रेण स्वल्पं भक्षयति । होतृवदित्यतिदेशादेषु लेपमात्रमवघ्राणं वा । तथा च शाङ्खायनः-"लिम्पेदेव वाऽवजिघ्रेदत्र द्विदेवत्येषु चे'' ति । अत्र ऋतुयाजेषु द्विदेवत्येषु च भक्षकर्तृभिर्गलेपनं वा कार्यमवघ्राणं वेत्यर्थः ।

ततो हिन्व मे गात्राणीति मुखादीनि पादपर्यन्तानि सर्वाङ्गान्यालभते । ततो होतृचमसे स्वल्पं शेषमवनयति । ततो होत्रा शेषावनयनान्ते सकृदुक्षिते पुनरुपहवादिशेषावनयनान्तं पूर्ववत्करोति । ततः पुनर्होत्रा तथैव शेषावनयनान्ते कृतेऽध्वर्युः पुरोडाशमात्रां सूक्ष्मपुरोडाशखण्डमैन्द्रवायवे प्रास्यति ।

यति ॥२३॥ पुरोडाशमात्रामैन्द्रवायवे प्रास्यति पयस्यां मैत्रावरुण आश्विने धानाः ॥२४॥ तानि प्रतिप्रस्थाता दक्षिणस्य हविर्धानस्योत्तरे वर्त्मनि निदधाति ॥२५॥ इडामादधाति ॥२६॥ चमसांश्चोद्यच्छन्ति ॥ २७ ॥ ११ ॥

मार्जिते वाजिनेन चरन्ति सूक्तवाकशंयोर्वाकयोरन्यार्थत्वात् ॥१॥ यथोक्तं वाऽप्रसङ्गात् ॥२॥ होतृचमसेन सोमं भक्षयतः ॥३॥ हिन्व मे गात्राणि हरिवः शिवो मे

---

ततो भूमौ पात्रनिधानम् । केचिदेवं क्रममाहुः–ग्रहप्रतिग्रहः, उपहवः, ढौकनं, भक्षणं, गात्रालम्भनं, ततो होतुर्भक्षः । पुनरुपहूयाध्वर्योः पूर्वं भक्षः । ततो होत्रा भक्षिते उभयोर्द्भिः शेषावनयनान्तम् । ततः पुरोडाशखण्डप्रक्षेपस्ततो निधानमिति । सर्वसम्मतश्चायं क्रमः ।

ततो होत्रा समर्पितस्य मैत्रावरुणस्यैतु वसुविद्द्वसुरित्यादानम्, उपहवप्रार्थनं, मैत्रावरुणं चक्षुषोर्ढौकयित्वा वाग्देवीति भक्षः । हिन्व मे इति गात्रालम्भः । होतृचमसे शेषावनयनम् । ततो होतुर्भक्षणं शेषावनयनान्तम् । ततः पयस्यामात्रां मैत्रावरुणे प्रक्षिपेत् । ततो निधानम् । ततोऽध्वर्युर्होत्रा समर्पितमाश्विनमैतु वसुः संयद्वसुः इति प्रतिगृह्योपहूयाश्विनं शिरः पर्याहृत्यावेद्य भक्षणगात्रालम्भने करोति । ततो होत्रा शेषावनयनान्ते कृते धाना आश्विने प्रक्षिपति ।

ततः प्रतिप्रस्थाता ऐन्द्रवायवादीनादाय दक्षिणस्य हविर्धानस्योत्तरे वर्त्मनि निदधाति प्रत्यक्संस्थान् । तत इडां होत्रे प्रदायेत्यादि मयीदमिति जपानन्तरं चमसिन इडोपहवकाले स्वस्वचमसानुद्यच्छन्ति। उपहूते द्यावापृथिवी इत्युच्यमाने ऽग्नीध्रे षडवत्तसमर्पणम् , चतुर्द्धाकरणाभावः । होतुरवान्तरेडाभक्षणम । यजमानस्य सवनप्रार्थना छन्दोगोक्ता ॥

इति नवमस्य एकादशी कण्डिका ॥११॥

---

ततश्चमसानां भक्षणं, तत्र होतृचमसेऽध्वर्युः प्रतिप्रस्थातारं होतारं च पृष्ट्वा शुक्रग्रहशेषं भक्षयति । सर्वत्र सोमभक्षे वाग्देवीति भक्षणं, ततो हिन्व मे गात्राणीति गात्रालम्भनं च ।

ततः प्रतिप्रस्थाताऽध्वर्युं होतारं च पृष्ट्वा होतृचमसस्थं मन्थिग्रहशेषं भक्षयति ।

**समर्षीनुपतिष्ठस्वोर्ध्वं मे नाभेः सीद मा मेऽवाङ्नाभि-मति गा इति गात्राणि सᳪं स्पृशन्ते॥४॥ आप्यायस्वेति द्वाभ्यां चमसानालभन्ते ॥५॥ सोमं वा सिञ्चन्ति मन्त्र-**

---

ततो होताऽध्वर्युं प्रतिप्रस्थातारं च पृष्ट्वा शुक्रमन्थिस्वचमसानां त्रया-णां वषट्कारनिमित्तं तन्त्रेण भक्षणं करोति । ततः स्वचमसं निधाय ब्रह्माणं पृष्ट्वा वषट्कारनिमित्तं भक्षयतीति सर्वत्र योजनम् । ब्रह्मा च होतारं पृष्ट्वा समाख्यानिमित्तं भक्षयति । उद्गातारः स्वचमसमन्योऽन्यं पृष्ट्वा भक्षय-न्ति । तेषां चमसे वषट्कर्तुर्भक्षो न भवति । "तस्मादुद्गातृचमसं नान्यो भक्षये"दिति निषेधश्रवणात् ।

ततो होता यजमानचमसे सुन्वन्नुपह्वयस्वेति पृष्ट्वा वषट्कारनिमित्तं भक्षयतीति सर्वत्र योज्यम् । ततो यजमानो होतारं पृष्ट्वा होतुः सर्वत्र वषट्कारनिमित्तः, इतरेषां समाख्यानिमित्त इति ज्ञेयम् । ततो मैत्राव-रुणचमसे होता प्रशास्तारमध्वर्युं च पृष्ट्वा, प्रशास्ता होतारमध्वर्युं च पृष्ट्वा, ब्राह्मणाच्छंसिचमसे होता ब्राह्मणाच्छंसिनमध्वर्युं च पृष्ट्वा, ब्राह्म-णाच्छंसी होतारमध्वर्युं च पृष्ट्वा पोतृचमसे होता पोतारमध्वर्युं च पृष्ट्वा, अग्नीच्चमसे होता अग्नीधमध्वर्युं च पृष्ट्वा, अग्नीध्र होतारमध्वर्युं च पृष्ट्वा, ततो होता स्वकीयचमसेऽध्वर्युं प्रतिप्रस्थातारं च पृष्ट्वा समाख्यानिमित्तं भक्षयति । एवं सर्वचमसानां शुक्रामन्थिग्रहहोमनिमित्तं समाप्तम् ।

अथ प्रशास्त्रादिपञ्चचमसानां पुनरभ्युन्नीतहोमनिमित्तं भक्षणमुच्यते । तत्र प्रशा-स्त्रादिचमसेषु पूर्वं होमाभिषवनिमित्तमध्वर्योर्भक्षणं होतारं प्रशास्त्रादिकं च पृष्ट्वा, ततः प्रशास्त्रादीनां वषट्कारसमाख्यानिमित्तं तन्त्रेण भक्षणं क्रमेणैव होतारमध्वर्युं च पृष्ट्वा ।

तत्रैवं पूर्वं प्रशास्तृचमसेऽध्वर्युर्होतारं प्रशास्तारं च पृष्ट्वा भक्षयती-ति सर्वत्र ज्ञेयम् । प्रशास्ता होतारमध्वर्युं च पृष्ट्वा, ब्राह्मणाच्छंसिचमसे-ऽध्वर्युर्होतारं ब्राह्मणाच्छंसिनं च पृष्ट्वा, ब्राह्मणाच्छंसी च होतारमध्वर्युं च पृष्ट्वा, पोतृचमसेऽध्वर्युं होतारं पोतारं च पृष्ट्वा, पोता च होत्रध्वर्यू पृष्ट्वा, नेष्टृचमसेऽध्वर्युर्होतारं नेष्टारं च पृष्ट्वा, नेष्टा होत्रध्वर्यू पृष्ट्वा, अग्नीच्चमसेऽ ध्वर्युर्होतारमग्नीधं च पृष्ट्वा, आग्नीध्रो होत्रध्वर्यू पृष्ट्वा । सर्वे चमसा अस-र्वभक्षाः कार्याः ।

तत उन्नेता पूतभृतः सकाशादुञ्चनेन सोममादाय सदोमध्ये आग-च्छति । होत्रादयो नव चमसिनश्चैतेन सोमेनाप्यायस्व सं ते पयांसीति

**मन्त्रेणासम्भवात् ॥६॥ असर्वभक्षांस्तान् ॥७॥ दक्षिणस्य हविर्धानस्य पश्चादक्षं निदधाति चमसानधः ॥८॥ ते नाराशंसा आ वैश्वदेवात् ॥९॥ पुरोडाशशकलमादाय समुपहूताः स्म इत्युक्त्वोत्तिष्ठति ॥१०॥ अच्छावाकाये-**

---

ङ्क्षाभ्यां स्वस्वचमसानाप्याययन्ति, सोमनिनयनेन चमसस्थं सोमं बर्द्ध-यन्तीत्यर्थः ।

ततश्चमसाध्वर्यवस्तान्सर्वांश्चमसान्सदसो निर्हृत्य दक्षिणहविर्द्धानस्य पश्चाद् भूमौ क्रमेणोदक्संस्थान् हविर्द्धानमध्ये दक्षिणशकटपश्चाद्भागस्याधस्तान्निदधति । तेषां चमसानां नाराशंसा इति संज्ञा वैश्वदेवग्रहहोमान्तं यावत् ।

तदुक्तम्—

"मरुत्वतीये माहेन्द्रे ऐन्द्राग्नवैश्वदेवयोः ।
नाराशंसाः प्रकथ्यन्ते ग्रहेष्वेतेषु पञ्चस्वि"ति ॥

ततोऽध्वर्युरिडापात्रीमध्ये पृथक्स्थापितं पुरोडाशशकलं हस्तेनादाय समुपहूताः स्म इत्युच्चार्य उत्थाय सदसो बहिरुपविष्टस्याच्छावाकस्य समीपं आगत्याच्छावाकाय पुरोडाशशकलं समर्पयन् अच्छावाक वदस्व यत्ते वाद्यमित्यच्छावाकं प्रत्याह ।

ततोऽच्छावाकोऽच्छा वो अग्निमवस इत्यादि पठति । तत्रापि अस्मान् ब्राह्मणानित्येवं यदा पठति, तदा अध्वर्युर्होतारं प्रति वक्ति—उपहवमयं ब्राह्मण इच्छते तरं० होतरुपह्वयस्वेति । होत्रा उपहूत इत्युक्ते, अध्वर्युरुन्नीयमानायानुब्रूहीत्यच्छावाकं प्रेष्यति ।

ततोऽच्छावाकस्य चमसाऽध्वर्युरच्छावाकचमसमपरेणोत्तरवेदिं निधाय पुनरभ्युन्नयनं च, द्रोणकलशात्परिप्लवया सकृदेवोन्नयति । उभयतः शुक्रमच्छावाकचमसमुन्नयति । "उभयतः शुक्रमच्छावाकचमसमुन्नयती"ति मानवसूत्रे विशेषः । तत्पक्षाश्रयणे द्रोणकलशादुपस्तरणाभिघारणे । मध्यावदानं पूतभृत इत्येव भवति ।

अनुवाचनान्तेऽध्वर्युस्तं चमसमादायातिक्रम्याश्राव्याच्छावाक यजेत्याह । वषट्कारानुवषट्कारयोर्होमः । शेषरक्षणं, इदमिन्द्राग्निभ्यां, इदमग्नय इति त्यागौ । तृपन्त्विति जपः ।

ततोऽच्छावाकसमीपे उपविश्याच्छावाकोपह्वयस्वेति पृष्ट्वाऽध्वर्युर्होमाभिषवनिमित्तं भक्षयति । अच्छावाकोऽध्वर्युं पृष्ट्वा वषट्कारसमाख्या-

नत्प्रयच्छन्नाहाच्छावाक वदस्व यत्ते वाद्यमिति ॥११॥ उपो अस्मानिति ब्रुवति होतारमाहोपह्वमयं ब्राह्मण इच्छते तᳲ होतरुपह्वयस्वेति ॥१२॥ उपहूत उन्नीयमानाग्रानुवाचयति ॥१३॥ अच्छावाकचमसमुन्नयति होत्राचमसवत्सर्वम् ॥१४॥ आनिधानात्कृत्वा ॥१५॥ पूर्वश्चाग्नीध्रादतः ॥१६॥ आग्नीध्रे होवयज्ञर्त्विज इडां प्राश्नन्ति ॥१७॥ पत्नी चान्यच्छालायाम् ॥१८॥ उपविष्टेऽच्छावाके ॥१९॥१२॥

ऋतुग्रहैश्चरतो द्रोणकलशादुपयामगृहीतोऽसि मध-

---

निमित्तं तन्त्रेण भक्षयति । असर्वभक्षाप्यायनावच्छावाकः करोति ।

ततश्चमसाध्वर्युस्तं चमसं हविर्द्धाने नेष्टृचमसाग्नीध्रचमसयोर्मध्ये निदधाति । अत ऊर्ध्वमस्य चमसस्यैतदेव सर्वत्र स्थापनम् । ततो ब्रह्महोत्राध्वर्य्वाग्नीध्रमैत्रावरुणा आग्नीध्रगृहमध्ये इडां प्राश्नन्ति । अनतीत्षडवत्तं च । तत्र यजमानोऽपि पुरोडाशादिपञ्चहविःशेषं यथारुचि भक्षयति । पत्नी च पत्नीशालामध्ये स्मार्त्ताग्निपक्वमोदनाऽपूपादि हविष्यान्नमस्मिन्नेव काले ऽश्नाति ।

तत उत्तरवेदः पश्चात्समस्य मार्जनम् । न पवित्रप्रतिपत्तिः । भागपरिहारः । ततो वाजिनयागो भक्षान्तः । ततो दक्षिणाग्नौ केवलं पिष्टलेपाहुतिः । प्रणीताविमोकः, राक्षसभागः, भागावेक्षणं, भागप्राशनं, नात्र पृष्ठ्यावर्हिषोर्होमः, अविहितत्वादपूर्वत्वाच्च । तस्याः प्राकृतकार्यस्य तद्धर्मत्वाभावात् ।

इति नवमस्य द्वादशी कण्डिका ॥ १२ ॥

---

ततोऽच्छावाके सदस्युपविष्टे सत्यध्वर्युप्रतिप्रस्थातारावृतुग्रहैः प्रचरतः । तत्राध्वर्युर्ऋतुपात्रमादाय द्रोणकलशसमीपे उपविशति । प्रतिप्रस्थाताऽपि द्वितीयमृतुपात्रमादायाध्वर्योरुत्तर उपविशति । तत्र प्रथमौ ग्रहौ सहैव द्रोणकलशात्सोमृतुपात्रयोर्गृह्णीतः । उपयामगृहीतोऽसि मधवे त्वेत्यध्वर्युर्गृह्णाति । उप० माधवाय त्वेति प्रतिप्रस्थातोपगृह्णाति । प्रतिप्रस्थाता तत्रैव तिष्ठति । उभयोः परिमार्जनं, न सादनम् ।

षे त्वेति द्वादश प्रतिमन्त्रम् ॥१॥ अध्वर्योः पूर्वः पूर्वो मन्त्रः ॥२॥ उत्तर उत्तरः प्रतिप्रस्थातुः ॥३॥ युगपत्प्रथमौ गृह्णीत, उत्तमौ च, व्यत्यासं मध्ये, प्रचरणं च सर्वेषाम् ॥४॥ निष्क्रामत्येकः प्रविशतीतरः ॥५॥ उत्तर उत्तरः प्रतिप्रस्थाताऽपरकालत्वात् ॥६॥ उभयतोऽध्वर्युं पात्रेण परिगृह्णाति ॥७॥ सर्वहुताः प्रागुत्तमाभ्याम् ॥८॥ ऋतुनेति षट् प्रेष्यतः ॥९॥ ऋतुभिरिति चतुरः पा-

---

ततोऽध्वर्युरुत्थाय यजतिदेशं गत्वाऽऽश्राव्य ऋतुना प्रेष्येति मैत्राव-रुणं प्रेष्यति । आद्या दशर्तुग्रहाः सर्वहुताः कार्या असर्वहुता वा, ते-नात्र सर्वहुतपक्षे सर्वपूर्वशेषमध्ये एवोत्तरोत्तराणाम् । तथा च मनुः— 'शेषे पूर्वस्योत्तरं गृह्णीत" इति । ऋतुग्रहेष्वनुवषट्काराभावः । इदमि-न्द्रायेति प्रथमस्य त्यागः ।

ततोऽध्वर्युर्यदा हविर्द्धानं प्रविशति तदैव प्रतिप्रस्थाता निष्क्रामति । यदा च प्रतिप्रस्थाता हुत्वाऽऽगत्य हविर्द्धानं प्रविशति, तदाऽध्वर्युर्नि-ष्क्रामति । यथा प्रतिप्रस्थाताऽध्वर्युं प्रविशन्तं निष्क्रामन्तं च ऋतुपात्रेण परिगृह्णाति । ऋतुपात्रमध्वर्योर्द्दक्षिणतो नयति । स्वयमध्वर्योरुत्तरतो गच्छतीत्यर्थः ।

सर्वेषु द्रोणकलशाद् ग्रहणं, परिमार्जनं, सादनाभावश्च । व्यत्यासेन ग्रहणप्रवेशनिष्क्रमणहोमाश्च । एवं प्रतिप्रस्थाता निष्क्रम्याश्राव्य ऋतुना प्रेष्येत्याह । पोता यजेति । इदं मरुद्भ्यः । अध्वर्युः प्रविश्योपया० शुक्राय त्वेति द्रोणकलशादृतुपात्रे गृहीत्वा परिमृज्य निष्क्रम्याश्राव्य ऋ-तुना प्रेष्येति वक्ति । नेष्टा यजति । इदं त्वष्ट्रे । प्रतिप्रस्थाता प्रविश्य शुचये त्वेति गृहीत्वा ऋतुना प्रेष्येति वक्ति । अग्नीद्यजति । इदमग्नये । अध्वर्युः प्रविश्य नभसे त्वेति गृहीत्वाऽऽश्राव्य ऋतुना प्रेष्येति वक्ति । ब्राह्मणाच्छंसी यजति । इदमग्नये ।

प्रतिप्रस्थाता नभस्याय त्वेति गृहीत्वा ऋतुनेति प्रेष्यति । प्रशास्ता यजति । इदं मित्रावरुणाभ्याम् । एवं षण्णामृतुग्रहाणां पात्रयोरग्रेण होमः । अथाग्रं हस्ते गृहीत्वा चतुर्णां मूलेन ग्रहणं होमश्च । तत्राध्वर्युरि-षे त्वेति गृहीत्वा निष्क्रम्याश्राव्य ऋतुभिः प्रेष्येत्याह । पुनर्होता यजति । इदं देवाय द्रविणोदसे ।

**त्रमुखे विपर्यस्य ॥ १० ॥ षड्वदुत्तमौ ॥ ११ ॥ यजमानः प्रेषितो होतरेतद्यजेति ब्रूयात् ॥ १२ ॥ अध्वर्युश्च ॥ १३ ॥ त्रयोदशं गृह्णीयादिच्छन्नुपयामगृहीतोऽस्यꣳ हसस्पतये त्वेति ॥ १४ ॥ प्रतिप्रस्थातारमनु जुहोति ॥ १५ ॥ अन्यतरस्मिन्नच्छेषौ कृत्वा वशिनैन्द्राग्नं गृह्णाति प्रतिप्रस्थातेन्द्राग्नी इति ॥ १६ ॥ आहरति भक्षꣳ**

---

प्रतिप्रस्थातोर्जे त्वेति गृहीत्वाऽऽश्राव्य ऋतुभिः प्रेष्येत्याह। पोता पुनर्यजति । इदं देवाय द्रविणोदसे । अध्वर्युः सहसे त्वेति गृहीत्वाऽऽश्राव्य ऋतुभिः प्रेष्येत्याह । पुनर्नेष्टा यजति । इदं देवाय द्रविणोदसे । प्रतिप्रस्थाता सहस्यायेति गृहीत्वाऽऽश्राव्य ऋतुभिः प्रेष्येत्याह । अच्छावाको यजति । इदं देवाय द्रविणोदसे ।

एवं चतुर्भिरिति प्रैषो मूलेन होमश्च । ततोऽध्वर्युप्रतिप्रस्थातारौ पात्रमुखे विपर्यस्य सहैवोत्तमौ ग्रहौ प्रथमवद् गृह्णीतः । तपसे त्वेत्यध्वर्युः, तपस्यायेति प्रतिप्रस्थाता ।

ततोऽध्वर्युर्निष्क्रम्याश्राव्य ऋतुना प्रेष्येत्याह । तत्र प्रशास्ता अध्वर्यू यजतमित्याह । ततोऽध्वर्युप्रतिप्रस्थातारौ होतरेतद्यजेति होतारं प्रेष्यतः । ततो होतुस्तथायाज्यापाठः । अग्रेण होमः । शेषरक्षणं नियमेन । इदमश्विभ्याम् ।

ततः प्रतिस्थाता निष्क्रम्याश्राव्य ऋतुना प्रेष्येत्याह । तत्र प्रशास्ता गृहपते यजेत्याह। यजमानोऽपि होतरेतद्यजेत्याह । ततो होता यजति। अग्रेणासर्वहुतं जुहोति, इदमग्नये गृहपतये । अध्वर्युरिच्छया उपयामगृहीतोऽस्यꣳहसस्पतये त्वेति त्रयोदशमृतुग्रहं गृहीत्वा परिमृज्य प्रतिप्रस्थातारमनु जुहोति । त्यागस्तु द्वादशस्वेक एव, याज्याया एकत्वात् ।

ततोऽध्वर्युः प्रतिप्रस्थातुः पात्रे संस्रवमवनयति। प्रतिप्रस्थाता वा अध्वर्युपात्रे । ततोऽध्वर्युः संस्रवयुक्तं पात्रमादाय सदसि गच्छति । प्रतिप्रस्थाताऽतिरिक्तमृतुपात्रमादाय हविर्द्धानं प्रविश्य द्रोणकलशात्पूतभृतो वा इन्द्राग्नी आगतमिति मन्त्रेण ऋतुपात्रे ऐन्द्राग्नं ग्रहं गृह्णाति । परिमार्जनं, प्रदक्षिणावृत्तीतरथावृत्ती ।

तत ऐन्द्रस्याग्रयणस्थाल्याः पुरस्तात् खरे सादनम् , एष ते योनिरिन्द्राग्निभ्यां त्वेति । ततः प्रतिप्रस्थाताऽपि पूर्वद्वारेण हविर्द्धानान्निष्क्रम्य भक्षार्थं सदस्यागच्छति । ततोऽध्वर्युर्होतारं प्रतिप्रस्थातारं च पृष्ट्वा भक्षयति ।

होतृपोतृनेष्ट्रग्नीद्ब्राह्मणाच्छंसिप्रशास्तृभ्यः ॥१७॥

ततः प्रतिप्रस्थाताऽध्वर्युं होतारं च पृष्ट्वा भक्षयति। होता चाध्वर्युं प्रतिप्रस्थातारं च पृष्ट्वा। एतच्च पूर्वेषां दशानां सर्वहुतत्वपक्षे। सर्वेषामसर्वहुतत्वपक्षे विशेष उच्यते—

तत्र पूर्वमध्वर्युः सर्वान् होत्रादीन्निमित्तोत्पत्तिक्रमेण पृष्ट्वा तैरनुज्ञातो भक्षयति। होताऽध्वर्य्वादीन्सर्वान्निमित्तोत्पत्तिक्रमेण पृष्ट्वा भक्षयति। निमित्तोत्पत्तिक्रमश्च पूर्वं पूर्वं होमकर्त्तुः पश्चाद्वषट्कर्त्तुः। द्रव्यसाधारण्याच्च प्रतिभक्षं सर्वेभ्य उपहवप्रार्थनम्। भक्षणं च यस्मिन्नृतुयाजेन हुतं येन वषट्कृतं तत्तद्ग्रहहोमनिमित्तं तयोरेव।

तत्र प्रथमं होत्रा सहाध्वर्युः। ततः पोत्रा सह प्रतिप्रस्थाता। ततो नेष्ट्रा सहाध्वर्युः। ततोऽग्नीधा सह प्रतिप्रस्थाता। ततो ब्राह्मणाच्छंसिना सहाध्वर्युः। ततः प्रशास्त्रा सह प्रतिप्रस्थाता। ततः पात्रमुखं विपर्यस्य होत्रा सहाध्वर्युः। ततः पोत्रा सह प्रतिप्रस्थाता। ततो नेष्ट्रा सहाध्वर्युः। ततोऽच्छावाकेन सह प्रतिप्रस्थाता। पुनः पात्रमुखं विपर्यस्य होत्रा सहाध्वर्युः। पुनर्होत्रा सह प्रतिप्रस्थाता।

तत उपहवेऽयं क्रमः। अध्वर्युः प्रथमं पात्रं गृहीत्वा होतारं प्रतिप्रस्थातारं पोतारं नेष्टारं प्रतिप्रस्थातारमग्नीधं ब्राह्मणाच्छंसिनं प्रतिप्रस्थातारं प्रशास्तारं होतारं प्रतिप्रस्थातारं पोतारं नेष्टारं प्रतिप्रस्थातारमच्छावाकं होतारं प्रतिप्रस्थातारं होतारं चेत्येवमष्टादश पृष्ट्वा भक्षयति। एवं होताऽपि अध्वर्युं प्रतिप्रस्थातारं पोतारमध्वर्युं नेष्टारं प्रतिप्रस्थातारं चेत्येवमष्टादश पृष्ट्वा भक्षयति। एवं होताऽपि अध्वर्युं प्रतिप्रस्थातारं पोतारमध्वर्युं नेष्टारं प्रतिप्रस्थातारमग्नीधमध्वर्युं ब्राह्मणाच्छंसिनं प्रतिप्रस्थातारं प्रशास्तारमध्वर्युं प्रतिप्रस्थातारं पोतारमध्वर्युं नेष्टारं प्रतिप्रस्थातारमच्छावाकमध्वर्युं प्रतिप्रस्थातारं चेत्येवं विंशतिसंख्यान्पृष्ट्वा भक्षयति। एवमनेनैव क्रमेण सर्वेषां स्वस्वनामापरित्यागेनोपहवप्रार्थनमूहनीयम्।

अत्र द्वादशर्तुग्रहाः, तत्र द्वादश होमकर्त्तारः, द्वादश वषट्कर्त्तारश्च, एवं चतुर्विंशतिः। तेषां क्रमेण नामानि—अध्वर्युः, १ होता, २ प्रतिप्रस्थाता, ३ पोता, ४ अध्वर्युः, ५ नेष्टा, ६ प्रतिप्रस्थाता, ७ अग्नीत्, ८ अध्वर्युः, ९ ब्राह्मणाच्छंसी, १० प्रतिप्रस्थाता, ११ प्रशास्ता, १२ अध्वर्युः, १३ होता, १४ प्रतिप्रस्थाता, १५ पोता, १६ अध्वर्युः, १७ नेष्टा, १८ प्रतिप्रस्थाता, १९ अच्छावाकः, २० अध्वर्युः, २१ होता, २२ प्रतिप्रस्थाता, २३ होतेति २४।

विपर्यस्य पात्रः होतृपोतृनेष्टृच्छावाकानाम् ॥१८॥ या-

---

तत्र यो भक्षयति तेन स्वनामवर्जमन्येभ्य उपहवप्रार्थनं कर्त्तव्यम् । तेनाध्वर्युप्रतिप्रस्थात्रोरष्टादशैवोपहवाः, यतश्चतुर्विंशतिमध्ये तयोः षट् नामानि । एवमेव होतुर्विंशतिः, पोतुर्नेष्टुश्च द्वाविंशतिः, अग्नीद्ब्राह्मणाच्छंसिप्रशास्त्रच्छावाकानां त्रयोविंशतिरिति । ततश्चात्राभियुक्तप्रणीतः श्लोकः—

"होतुर्विंशतिराह्वाने पोतुर्नेष्टुर्द्विरुत्तरा ।
त्रिरुत्तरा चतुर्णां तु शेषे त्वष्टादश स्मृता" इति ।

द्विरुत्तरा द्वाविंशतिः । चतुर्णामग्नीद्ब्राह्मणाच्छंसिप्रशास्त्रच्छावाकानाम् । शेषे अध्वर्युप्रतिप्रस्थात्रोराह्वाने । अन्यत्सुगमम् । यदा च द्वादशाहे पृष्ठ्यस्य षष्ठेऽहनि "स्वयमृतुयाजेज्ये"ति वचनात् अध्वर्योर्यजमानस्य च स्वयं याज्यापाठस्तदा होतुस्त्रयोविंशतिरुपहवाः । एकादशे ग्रहे होतुः प्रतिप्रस्थात्रध्वर्य्वोर्वषट्कर्त्रोः प्रार्थनम्, अध्वर्योः स्थाने उन्नेतुस्तदा होमकर्तृत्वात् । तथाच काठके "यद्यध्वर्युर्यजेदुन्नेता ग्रहेण चरेदि"ति । द्वादशे च होतुः स्थाने यजमानस्येति विशेषः ।

यदा चाध्वर्युप्रतिप्रस्थात्रोरन्यतरस्यैव याज्यापाठो नोभयोस्तदा होतुर्द्वाविंशतिरुपहवाः । होमाभिषवकर्त्तुः प्रथमभक्षपक्षेऽयं क्रम उक्तः । यदा वषट्कर्त्तुः प्रथमभक्षस्तदा प्रथमं प्रथमं वषट्कर्त्तुर्नाम, पश्चात्पश्चाद्धोमकर्त्तुरिति विशेषः ।

उपहवसंख्या तु समाना । एवमृतुग्रहाणां भक्षणानन्तरमध्वर्युस्तदृतुपात्रं स्वयं सदसो निष्क्रम्य मार्जालीये प्रक्षाल्य खरे निदधाति ।

ततो होतुः पुरस्तात्पूर्वाभिमुख उपविशति । ततो होत्रा शोंसावेत्याहूतः प्रदक्षिणमावृत्य शस्यमाने शस्त्रे प्रणवे अवसाने चोथामोदैवेति प्रतिगृणाति । अथवा ओ३मित्येतावानेव सर्वत्र प्रतिगरः । शस्त्रस्या सर्वपक्षे ओ३मित्ययमेव नित्यं प्रतिगरः । अथवा ओथामो दैव वा गित्येवं प्रतिगरो भवति ।

अस्मिन्नपि पक्षे शस्त्रान्ते ओ३मित्येव । ततः शस्त्रान्ते ओ३मिति प्रतिगीर्य प्रदक्षिणावृत्तिमितरथावृतिं च कृत्वोत्थायोत्तरेण हविर्द्धानं गत्वा ऋतुपात्रे प्रतिप्रस्थातृग्रहीतमैन्द्राग्नं ग्रहमादत्ते ।

चमसाध्वर्यवश्च हविर्द्धानमध्ये एव दशापि चमसान् हस्ते कृत्वा तिष्ठन्ति । ततोऽध्वर्युर्निष्क्रम्यातिक्रम्याश्राव्याहोक्थशा यज सोमस्येति होतारं प्रेष्य वषट्कृते हुत्वोत्तरार्द्धेऽनुवषट्कृते च हुत्वा प्रदक्षिणावृत्तो-

वदुक्तः होतुर्यजमानयोगाद्वरणवत् ॥१९॥ कारणाद्वा होतृभक्षः ॥२०॥ अप्राप्तेर्वरणम् ॥२१॥ विपर्यस्य पात्रं होतुर्द्विर्भक्षणम्॥२२॥तावद्वा सर्वहुतत्वात्पूर्वेषाम् ॥२३॥ निहृत्य पात्रꣳ होतुः पुरस्तात्प्राङासते ॥२४॥ अभिहुतः शोꣳसावेत्यावृत्योथामोदैवेति प्रतिगृणाति प्रणवावसानयोः ॥२५॥ ओमिति वा ॥२६॥ शस्त्रान्ते नित्यम् ॥२७॥ वागन्तो वा पूर्वः ॥२८॥ ऐन्द्राग्नमादायाश्राव्याहोक्थशा यज सोमस्येति॥२९॥एष प्रैषः सशस्त्राणाम् ॥३०॥ नाराशꣳसानां च कम्पनः हूयमाने ॥३१॥ निहितेषु चेद्धोमः सशस्त्रस्य॥३२॥भक्षप्रभृत्यानिधानात्कृत्वा॥३३॥१३॥

---

तत्थावृत्तौ करोति । इदमिन्द्राग्निभ्यामिदमग्नय इति त्यागौ ।

ब्रह्मयजमानौ च सर्वत्र होमकाले आगत्याहवनीयं दक्षिणेन बहिर्वेद्युपविशतः । होमानन्तरं च भक्षणार्थं सदसि गत्वा स्वस्थाने उपविशतः । प्रशास्तृधिष्ण्यस्य दक्षिणेनैव सदा ब्रह्मणो गमने हविर्द्धानमार्जालीयान्तरालेन च ।

ग्रहे हूयमाने चमसाध्वर्यवः स्वहस्तस्थान् चमसान्वषट्कारेऽनुवषट्कारे च प्राञ्चं प्रेरणेन कम्पयन्ति । तथाच मनुः—"समाप्ते शस्त्रे ग्रहमादत्ते अध्वर्युश्चमसाध्वर्युश्चमसानाश्राव्योक्थशा यज सोमस्येति प्रेष्यति वषट्कारानुवषट्कृते जुहोति चमसाध्वर्यवो द्विश्चमसाननु प्राङ्नयन्ती"ति ।

ततोऽध्वर्युः सपात्रः पूर्वोत्तरेण हविर्द्धानं सदसि गत्वा होतारं पृष्ट्वाऽध्वर्युर्भक्षयति । होता चाध्वर्युं पृष्ट्वा भक्षयति । चमसाध्वर्यवश्च हविर्द्धानाच्चमसानादाय सदसि यथास्वं चमसिभ्यो होत्रादिभ्यः समर्पयन्ति । होत्रादयश्चमससाधारण्यादनुपहूयैवासर्वभक्षान्भक्षयित्वा पूर्ववच्चमसानाप्याययन्ति ।

ततश्चमसाध्वर्यवस्तान्पुनर्हविर्द्धानमध्ये तस्मिन्नेव स्थाने स्थापयन्ति । ततोऽध्वर्युस्तदनु पात्रं निहृत्य मार्जालीये प्रक्षाल्य खरे निदधाति ।

इति नवमस्य त्रयोदशी कण्डिका ॥ १३ ॥

**वैश्वदेवं गृह्णाति ॥१॥ शुक्रपात्रेण द्रोणकलशादन्वारब्धे वौमास इति ॥२॥ शुक्रं पूतभृत्यासिच्य द्रोणकलशे पवित्रंयोजनम् ॥३॥ पशुपुरोडाशप्रथमान्त्सवनीयान्निर्वपति पयस्यावर्जम् ॥४॥ स्तोत्रमुपाकरोति तृणाभ्यां ग्रहमुपस्पृश्योपावर्त्तध्वमिति ॥५॥ एवं धुर्येषु सर्वत्र ॥६॥**

ततोऽध्वर्युः शुक्रपात्रेण द्रोणकलशात्परिप्लवया सोममादाय ओमासश्चर्षणीधृत इति मन्त्रेण वैश्वदेवं ग्रहं गृह्णाति । यजमानो विकल्पेन ग्रहं गृह्णन्तमध्वर्युमन्वारभते । परिमार्जनं, प्रदक्षिणावृत्तीतरथावृत्तौ ।

ततः शुक्रस्थाने सादनम् । सोमे सस्तोत्रशस्त्रकग्रहणानन्तरं स्तोत्रोपाकरणं यावद् गृहीत्वा नापव्याहरेत् । उपावर्त्तध्वमित्येतद् व्यतिरिक्तं किमपि नोच्चरेदित्यर्थः । उपाकरणानन्तरमुद्गातारो नापव्याहरेयुः एषो त्तमेति प्रस्तोतृकर्तृकप्रैषं यावत् ।

एषोत्तमेति प्रैषं श्रुत्वा शस्त्रकर्त्ता नापव्याहरेद्वषट्कारपर्यन्तम् । अपव्याहरणे च सर्वेषां व्याहृतिजपः प्रायश्चित्तम् । ग्रहासादनानन्तरं द्रोणकलशस्थं सोमं पूतभृत्यासिच्य द्रोणकलशपवित्रयोः प्रातःसवनवत् योजनं कर्त्तव्यम् । अधोऽधोऽक्षं प्रत्यञ्चं द्रोणकलशमत्युह्योपर्यक्षं पवित्रमस्मिन् करोतीत्येवम् ।

ततस्तृणाभ्यां वैश्वदेवं ग्रहमुपस्पृश्य पुरस्ताज्जपसमाप्तौ सदः प्रविश्य प्रस्तोत्रे तृणे समर्पयन्नुपावर्त्तध्वमिति मन्त्रेण स्तोत्रमुपाकरोति । ब्रह्मा च स्तोत्रशस्त्रकाले प्रशास्तुर्दक्षिणत आस्ते । यजमानश्च स्तोत्रे स्तूयमाने उद्गातॄणां पुरस्तात् प्रत्यङ्मुख उपविशति । शस्त्रकाले शस्त्रकर्त्तुः पुरस्तात् । "सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्ये"ति श्रुतेः ।

तत उद्गातारः स्तुवन्ति, तदन्ते होता शस्त्रं शंसति । तत्राध्वर्युः होतुः पुरस्तात्प्राङुपविशति शोंसावेत्याहूतः । पशुपुरोडाशप्रथमान् सवनीयान्प्रातःसवनवद्देवता निर्वपति । पयस्याया अभाव इति विशेषः ।

तत्र चतुरासनं ब्रह्मोपवेशनं, प्रणीताप्रणयनम् । पात्रासादनं शूर्पं, पशुपुरोडाशस्याष्टाकपालानि, ऐन्द्राग्न्योरेकादश । एवमेकोनविंशतिः कपालानि । कर्परं च, कृष्णाजिनं, उलूखलमुसलं, पात्रीधान्यं, पुरोडाशार्था व्रीहयो यवा वा । धानाः, करम्भार्था यवाः । संयवनोदकं, दधि, शाखोपवेषस्त्वस्त्येव । शृतावदानम्, एका पुरोडाशपात्री, पञ्चबिला च ।

स्फ्योपहितपात्रीकरणं, शूर्पाग्निहोत्रहवण्योरादानादि । ग्रहणे— अग्नये जुष्टम् इति प्रथमं पशुपुरोडाशस्य । तत इन्द्राय जुष्टम् । इन्द्राय

**सर्वभक्षाश्चमसाः ॥७॥ मार्जालीये पात्रप्रक्षालनम् ॥८॥ उक्थ्यं विगृह्णाति त्रेधं देवेभ्यस्त्वेति सर्वेभ्यः ॥९॥ मि-**

हरिवते जुष्टम् । इन्द्राय पूषण्वते जुष्टमित्यादि प्रातःसवनवत्सर्वं पय-स्यावर्जम । एकवीजपत्ते कर्णान्ते विभज्यालम्भः । इदमग्नेरिन्द्रस्य । इदमिन्द्रस्य हरिवत इदमिन्द्रस्य पूषण्वतश्चेति ।

आज्यान्ते पूर्वस्थापितैः संमार्जनैः श्रुतावदानपुरोडाशपात्रीपश्रुबिलानां च संमार्गप्रतपने । संमार्जनानां यत्नेन रक्षणम् । ततोऽध्वर्योः पशुविशसनादि उखायामवदानप्रक्षेपान्तम् ।

ततः 'त्रिः प्रच्यावयतात्रिः प्रच्युतस्य हृदयमुत्तमं कुरुतादित्येतावान् खण्डः प्रैषः । वैश्वदेवशस्त्रान्ते अध्वर्युरोऽर्मिति शोर्योन्थाय प्रदक्षिणा-वृत्तीतरथावृत्ती कृत्वा वैश्वदेवं ग्रहमादत्ते । चमसाध्वर्यवश्चमसान् हस्ते कृत्वा तिष्ठन्ति ।

अध्वर्युरतिक्रम्याश्राव्योकथशा यज सोमस्येति होतारं प्रेष्य वषट्का-रानुवषट्कारयोर्हुत्वा प्रदक्षिणावृत्तो करोति । इदं विश्वेभ्यो देवेभ्यः, इदमग्नय इति त्यागौ । गृहे हूयमाने चमसाध्वर्यवः पूर्ववच्चमसान्स्वह-स्तस्थान्प्राङ्नयनेन त्रिः कम्पयन्ति ।

ततोऽध्वर्युर्ग्रहं सदसि यथास्वं समर्पयति । चमसिनश्चानुपहूयैव सर्वे स्वस्वचमसस्थं सोमं भक्षयन्ति । ततश्चमसाध्वर्यवश्चमसान्मार्जा-लीये धिष्ण्यसमीपे जलेन प्रक्षाल्य शुद्धान् कृत्वोत्तरवेदिमपरेणोदक्सं-स्थान्निदधति ।

अध्वर्युश्चमसग्रहपात्रं स्वयमेव मार्जालीये प्रक्षाल्य खरे स्वस्थाने स्थापयति । ततस्त्रय उक्थ्यविग्रहाः । तद्यथा—प्रथमेऽध्वर्युः कर्त्ता, उ-भयोः प्रतिप्रस्थाता । तत्र प्रथमे अध्वर्युरुक्थ्यपात्रमादायोक्थ्यस्थालीमु-पयाऽ० मित्रावरुणाभ्यां त्वेति मन्त्रेणोक्थ्यपात्रे तृतीयं भागं निनयति। ग्रहं परिमार्ष्टि । ततः प्रदक्षिणावृत्तीतरथावृत्ती । ततस्तूष्णीमुक्थ्यस्थाल्या उत्तरतः सादनम् । उन्नेता मैत्रावरुणचमसं प्रथममुत्तरवेदिमपरेण स्था-पयित्वा ततो होत्रादीनामग्नीध्पर्यन्तानां क्रमेण स्थापयति । ततः पूतभृतः सकाशादुदञ्चनेन सोममादाय तेषु क्रमेणोपनयति सकृत्सकृदेव । नोप-स्तारभिघारौ । ततोऽध्वर्युस्तृणाभ्यामुक्थ्यपात्रस्थं सोमं स्पृष्ट्वा पुर-स्ताज्जपान्ते सदसि गत्वा ते दर्भतृणे प्रस्तोत्रे प्रयच्छन्नुपावर्तध्वमिति स्तोत्रोपाकरणं करोति । एवं सर्वेषूक्थ्यविग्रहेषु विधिर्ज्ञेयः । तत उद्गातारः स्तुवन्ति । तदेते मित्रावरुणः शंसति । तत्राध्वर्युः पूर्वं पुर-

**त्रावरुणाभ्यां त्वेति वा प्रशास्त्रे ॥१०॥ तूष्णीᳪ सादनम्**

स्तात् प्राङुपविश्य शोंसावेत्याहूतः पर्यावृत्य पूर्ववत्प्रतिगृणाति । शस्त्रान्ते ३ ओमिति प्रतिगरः । प्रदक्षिणावृत्तिर्विपरीतावृत्तिश्च । ततः पूर्वद्वारेण हविर्द्धानं प्रविश्योक्थ्यपात्रमादत्ते । चमसाध्वर्यवश्च चमसान्हस्ते गृहीत्वोत्तरवेदिमपरेण प्राङ्मुखास्तिष्ठन्ति । अध्वर्युरतिक्रम्याश्राव्योक्थशा यज सोमानामिति मैत्रावरुणं प्रेष्य वषट्कारानुवषट्कारयोर्जुहोति । चमसाध्वर्युश्चाध्वर्युमनु वषट्कारानुवषट्कारयोश्चमसान् हुत्वा भक्षार्थं परिशेषयति । इदं, मित्रावरुणाभ्याम्, इदमग्नय इति त्यागौ । सर्वेषां होमानां सहैवाप्रदक्षिणावृत्तीतरथावृत्ती ।

ततोऽध्वर्युर्ग्रहशेषं मैत्रावरुणचमसे आसिच्य ग्रहपात्रमधस्तान्निधाय मैत्रावरुणचमसमादाय सदसि गच्छति । चमसाध्वर्यवोऽपि सर्वांश्चमसान्प्रशास्तुरग्रे स्थापयन्ति ।

ततोऽध्वर्युः प्रशास्तृचमसे प्रशास्तारं पृष्ट्वा भक्षयति ग्रहहोमनिमित्तम् । ततः प्रशास्ताऽध्वर्युं पृष्ट्वा स्वचमसे ग्रहचमसयोर्वषट्कारनिमित्तं तन्त्रेण भक्षयति । ततः स्वचमसं निधाय अष्टासु होत्रादिचमसेषु होत्रादीन्पृष्ट्वा वषट्कारनिमित्तं भक्षयति ।

ततो होत्रादय एकं प्रशास्तारं पृष्ट्वा स्वस्वचमसेषु समाख्यानिमित्तं निःशेषं भक्षयन्ति । प्रशास्ताऽपि स्वचमसेऽध्वर्युं पृष्ट्वा समाख्यानिमित्तं भक्षयति । ततश्चमसाध्वर्यवश्चमसान्मार्जालीये प्रक्षाल्योत्तरवेदेः पश्चात् ब्राह्मणाच्छंसिचमसपूर्वकं स्थापयन्ति । एवमेक उक्थ्यविग्रहः ।

अथ द्वितीय उच्यते। ततः प्रतिप्रस्थातोक्थ्यपात्रमादायोक्थ्यस्थालीं हस्तेनादायानहुतमर्द्धं सोमं तस्मिन्नेवोक्थ्यपात्रे निनयति इन्द्राय त्वा देवाव्यमिति मन्त्रेण । ततः स्थालीं तूष्णीं स्वस्थाने निधाय ग्रहं परिमार्ष्टि । ततः प्रदक्षिणावृत्तिः इतरथावृत्तिश्च । तूष्णीं ग्रहस्योक्थ्यस्थाल्याः सादनमुत्तरतः । उन्नेतुर्ब्राह्मणाच्छंसिचमसपूर्वकं पूतभृतश्चमसोन्नयनम् ।

ततः प्रतिप्रस्थाता दर्भतृणाभ्यां उक्थ्यपात्रे गृहीतं सोमं स्पृष्ट्वा पुरस्ताज्जपे कृते प्रस्तोत्रे तृणे प्रयच्छत्युपावर्त्तध्वमिति । तत उद्गातारः, स्तुवन्ति ।

ततो ब्राह्मणाच्छंसी शंसति । तत्र प्रतिप्रस्थातुरध्वर्युवत्प्रतिगरः । शस्त्रान्ते तु ओ३मिति प्रतिगीर्योत्थाय प्रदक्षिणावृत्तीतरथावृत्ती कृत्वोत्तरेण हविर्द्धानमागत्य पूर्वेण प्रविश्योक्थ्यपात्रमादत्ते । चमसाध्वर्यवश्चमसान् हस्ते कुर्वन्ति ।

**॥११॥ श्रोत्रमुपाकरोति ॥१२॥ उक्थशा यज सोमाना-मिति प्रैषो ऽनाराशंसेषु ॥१३॥ ग्रहस्य विग्रहस्तस्य प्रथ-**

ततः प्रतिप्रस्थाताऽतिक्रम्याश्राव्योक्थशा यज सोमानामिति ब्राह्मणाच्छंसिनं प्रेष्यन् वषट्कारानुवषट्कारयोर्जुहोति । तमनु चमसाध्वर्यवोऽपि चमसान् द्विर्जुह्वति । इदमिन्द्रायेदमग्नय इति त्यागौ ।

सर्वेषां ग्रहहोतुः प्रदक्षिणावृत्तोत्तरथावृत्ती । ग्रहशेषस्य ब्राह्मणाच्छंसिचमसे आसेकः । उक्थ्यपात्रस्य खरे निधानम् । ब्राह्मणाच्छंसी चमसं गृहीत्वा तत्समीपे आगच्छति ।

चमसाध्वर्यवोऽपि नव चमसांस्तस्याग्रे स्थापयन्ति । ततः प्रतिप्रस्थाता ब्राह्मणाच्छंसिनं पृष्ट्वा तच्चमसे होमाभिषवनिमित्तं ग्रहशेषं भक्षयति । स च प्रतिप्रस्थातारं पृष्ट्वा स्वचमसे ग्रहचमसयोर्वषट्कारनिमित्तं तन्त्रेण भक्षयति ।

ततो ब्राह्मणाच्छंसी होत्रादिचमसेषु होत्रादीन् पृष्ट्वा वषट्कारनिमित्तं भक्षयति । ते च होत्रादयो ब्राह्मणाच्छंसिनं पृष्ट्वा स्वस्वचमसे समाख्यानिमित्तं निःशेषं भक्षयन्ति ।

ततो ब्राह्मणाच्छंसी स्वचमसे प्रतिप्रस्थातारं पृष्ट्वा समाख्यानिमित्तं भक्षयति । सर्वभक्षांश्चमसांश्चमसाध्वर्यवो मार्जालीये प्रक्षाल्योत्तरवेदेः पश्चादच्छावाकचमसपूर्वकमुदक्संस्थान् स्थापयन्ति । इति द्वितीय उक्थ्यविग्रहः ।

ततोऽध्वर्युर्हविर्धानेऽच्छावाकविग्रहात्पूर्वं पञ्च ग्राव्णोऽधिषवणस्योपरि संमुखान् निधाय सोमोपनहनेनैव दक्षिणहविर्धानस्येषान्तरालेन ग्राव्णामुपरि सोमं प्रक्षिपति उपावहरति रथादवतारयतीत्यर्थः ।

ततो वसतीवरीणामर्द्धमाधवनीयेऽवनयति विश्वे देवा मरुत इति मन्त्रेण । सर्वेषामप्येकधनानामर्द्धमर्द्धमुदकमाधवनीयेऽवनयति । अयमेव मन्त्रः प्रत्येकं सर्वेषाम् ।

अथ तृतीयविग्रह उच्यते । ततः प्रतिप्रस्थातोक्थ्यपात्रमादायोक्थ्यस्थालीमुत्थाप्य तत्स्थं सर्वं सोममुक्थ्यपात्रे निनयति इन्द्राग्निभ्यां त्वेति । तत उक्थ्यस्थालीं तूष्णीं खरे निधाय ग्रहस्य परिमार्जनं, प्रदक्षिणतद्विपरीतावृत्ती । तूष्णीं सादनम् ।

अच्छावाकचमसपूर्वकमुन्नेतुः पूतभृतः सर्वस्य सोमस्य विभज्य दशसु चमसेषून्नयनम् । अथवा देवेभ्यस्त्वा देवाव्यमित्ययमेव त्रयाणामप्युक्थ्यविग्रहाणां ग्रहणमन्त्रः । पूर्ववदुपाकरणादि ।

अच्छावाकः शंसति । पूर्ववत्प्रतिप्रस्थातुः प्रतिगरादि । शस्त्रान्ते

मं चमसमुन्नयति ॥१४॥ ग्रहशेषं चास्मिन्नासिञ्चति ॥१५॥ एवं प्रतिप्रस्थातोत्तराभ्याम् ॥१६॥ इन्द्राय त्वेति ब्राह्मणाच्छꣳसिने ॥१७॥ इन्द्राग्निभ्यां त्वेत्यच्छावाकाय ॥१८॥ प्रागच्छावाकग्रहात्सोमोपावहरणम् ॥१९॥ वसतीवर्यं चासिञ्चत्याधवनीये "विश्वे देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जह्युः । आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाꣳ सुमतौ स्यामेति ॥२०॥ एकधनार्थं च ॥२१॥ चरिते सर्वैः प्रशास्तः प्रसुहीति ब्रूयात् ॥२२॥ प्रसुतानाꣳ सर्पणं प्रसुतानाꣳ सर्पणम् ॥ २३ ॥ १४ ॥

---

ओ३मिति प्रतिगरः । प्रदक्षिणेतरथावृत्ती । ग्रहादानं, चमसानां च । उक्थशा यज सोमानामिति प्रैषः । सर्वेषां प्रतिवषट्कारं होमः । इदमिन्द्राग्निभ्यामिदमग्नय इति त्यागौ । प्रदक्षिणेतरथावृत्ती । ग्रहशेषस्याच्छावाकचमसे आसेकः ।

अच्छावाकचमसहस्तः सदो गत्वाऽच्छावाकं पृष्ट्वा होमाभिषवनिमित्तं ग्रहशेषं भक्षयति । अच्छावाकः प्रतिप्रस्थातारं पृष्ट्वा स्वचमसवषट्कारनिमित्तं भक्षयति समाख्यानिमित्तम् । तेऽच्छावाकं पृष्ट्वा स्वस्वचमसे निःशेषं भक्षयन्ति । पुनरच्छावाकः स्वचमसे प्रतिप्रस्थातारं पृष्ट्वा समाख्यानिमित्तं भक्षयति ।

सर्वभक्षाश्चमसाः कार्याः । मार्जालीये तेषां प्रक्षालनम् । हविर्द्धानमध्ये उत्तरस्य हविर्द्धानस्याधस्तात्पूर्ववन्निधानम् । इति त्रय उक्थ्यविग्रहाः ।

ततोऽध्वर्युः स्फ्यमादाय प्रशास्तः प्रसुहीति प्रशास्तारमाह । ततः प्रशास्ता सर्पतेति सर्वानृत्विजोऽनुजानाति आवश्यकमूत्रपुरीषाद्यर्थम् । ते सदसो निष्क्रम्य चात्वालोत्करावन्तरेण निष्क्रम्य बहिर्वेदि दूरे मूत्रपुरीषाद्यावश्यकं कृत्वा पुनस्तेनैव मार्गेण प्रत्यागच्छन्ति । तथा च छन्दोगसूत्रम्—"सवनसंस्थासु प्रशास्त्रोक्ता यथेतमपरया द्वारा निष्क्रम्य पश्चिमेनाग्नीध्रीयं गत्वा बहिर्वेदि मूत्रं कुर्युरि"ति ।

अतः सवनसंस्थादन्यस्मिन्काले अन्तरा मूत्रपुरीषौ ऋत्विग्भिर्न्न कार्यौ । यजमानस्य तु निषेधः प्रागुक्त एव होमपर्यन्तम् ।

इति प्रातःसवनं समाप्तम् ।

इति श्रीसम्राट्स्थपतिमहायाज्ञिकश्रीप्रजापतिसुतयाज्ञिकश्रीदेवकृतायां कात्यायनसूत्रपद्धतौ नवमोऽध्यायः समाप्तः ॥९॥

# अथ दशमोऽध्यायः।

**सर्पणादि माध्यन्दिनम् ॥ १ ॥ होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छत्युष्णीषं ग्रावस्तुते ॥२॥ अद्र्यादानप्रभृति त्रिपर्यायानभिषवान्करोति ॥ ३ ॥ आत्तमभि मिमीते ॥ ४ ॥ उपांशुसवनस्यानिङ्गनश्रुतेः ॥ ५ ॥ इहा ३ इहा ३ इति प्रथमः पर्यायः ॥ ६ ॥ अविलम्बितो द्वितीयस्तूर्णस्तृतीयः ॥ ७ ॥ अविलम्बितस्थान उत्तमे बृहद् बृहदिति ॥८॥ अर्धं वाऽविशेषोपदेशात् ॥९॥**

---

अथ माध्यन्दिनसवनमुच्यते। तत्र पूर्वमाग्नीध्रीयस्य पश्चादुदङ्मुखोपविष्टस्य यजमानस्य लोकद्वारीयसामगानं, होमश्च। ततः सर्वे ऋत्विजः सयजमानाः प्रातःसवनवद्धिष्ण्योपस्थानादिधिष्ण्याभिमन्त्रणान्तं सर्पणं कुर्वन्ति। सदोऽभिमर्शनादि वा धिष्ण्याभिमन्त्रणान्तम्।

ततोऽध्वर्युर्होतृचमसे वसतीवरीः कृत्वा यजमानाय समर्पयति। सोमस्योष्णीषं ग्रावस्तुते समर्पयति। ततोऽध्वर्युयजमानप्रतिप्रस्थातृनेतारः प्रातःसवनवदधिषवणं परित उपविशन्ति। तत्र पूर्वमभिषवोपयोगिवस्तूनामीषान्तरेणाहरणम्। हिरण्यं स्वं स्वं ग्रावाणं च सर्वे ईषान्तरेणाहरन्ति। निग्राभ्यासंभरणीदशापवित्राण्यध्वर्युरीषान्तरेणाहरति।

ततोऽध्वर्योः पाणिप्रक्षालनं, हिरण्यबन्धनम्, अद्र्यादानं, वाग्यमनं, निग्राभ्यावाचनम्। ततोऽध्वर्युणा मन्त्रेण गृहीतस्य ग्राव्ण उपरि सोममानं, मितालम्भनम्, तत इतरेषां पाणिप्रक्षालनं, हिरण्यबन्धनं, अद्र्यादानं, सोमस्योपरि निग्राभ्यासेकः।

सोमं चतुर्द्धा विभज्य मा भेरिति प्रहृत्य तूर्णं मनसा ध्यायन्त इहा३ इहा३ इत्येवं त्रिमात्रेण प्रतिप्रहारमावृत्तेन मन्त्रेण सर्वेऽभिषुण्वन्ति।

एवं प्रथमपर्यायं कृत्वा विरम्य सोममुत्पुञ्ज्य पुनरिहा इति द्विमात्रेण द्वितीये पर्याये प्रतिप्रहारमभिषुण्वन्ति। एवं द्वितीयं पर्यायं कृत्वा विरम्य सोममुत्पुञ्ज्य पुनरिहा इत्येकमात्रेण तृतीये प्रतिप्रहारमभिषुण्वन्ति। एवं त्रिपर्यायमभिषुण्वन्ति। सर्वेषां सोमाप्यायनम्। अध्वर्योः प्रागपावाचनम्। सरसानंशून्सम्भरण्याऽऽधवनीयेऽवधायाधूयाहरति। एवमेकोऽभिषवस्त्रिपर्याय उक्तः। एवमेव द्वितीयो निग्राभ्यासेचनाद्या-

**शुक्रप्रभृति चतुर्णां ग्रहणम् ॥१०॥ आग्रयणꣳ स्वतृतीयाभ्यो धाराभ्यः ॥११॥ प्रागुक्थ्यान्मरुत्वतीयमृतुपात्रेणेन्द्रमरुत्व इति ॥१२॥ उत्तरमेके ॥१३॥ समन्वारब्धनिष्क्रमणादि करोत्याऽऽग्नीदग्नीनिति प्रैषात् ॥१४॥ सदसि-**

---

धूयाहरणान्तः ।

एवमेव तृतीयोऽभिषवः—तत्र विशेषः—अस्य तृतीयाभिषवस्य मध्यमे पर्याये बृहदिति मन्त्रेण प्रतिग्रहारमभिषवः । उत्तमे पर्याये पूर्वदिहा इत्यनेनैव । तत आप्यायनं, प्रागपावाचनम् । अध्वर्योरद्रिं होतृचमसेऽवधाय चतुर्थं प्रागपावाचनम् ।

ततः सर्वान् सरसान् सोमांशून् संभरण्याऽऽधवनीयेऽवधाय तदुदकेन सह निष्पीडयाहृत्याधिषवणे निदधाति । तत उद्गातारो द्रोणकलशप्रोहणम्, ऋजीषसुखेष्वद्रिषु निधानं, तदुपरि पवित्रवितननं च कुर्वन्ति । अकुर्वत्सु तेषु स्वयमध्वर्युरेव करोति ।

तत उन्नेतोदञ्चनेनाधवनीयात्सोममादाय यजमानहस्ते होतृचमसस्थासु निग्राभ्यासु आसिञ्चति । यजमानो निग्राभ्याः पवित्रे आसिञ्चति।

ततोऽध्वर्युरस्माद्धारासोमात्पञ्च प्रथमान् ग्रहान् गृह्णाति । तत्र पूर्वं प्रातःसवनवदेव शुक्रग्रहणं, नोदकालम्भः, परिमार्जनं, सादनम् । ततः पूर्ववदेव मन्थिनो ग्रहणं, नापां स्पर्शः । सक्तुभिः श्रयणं, सादनम् । ततस्तिसृभ्यो धाराभ्य आग्रयणग्रहणम्, तत्र एकं यजमानो निग्राभ्याणां धारामासिञ्चति । द्वितीयामुन्नेता आधवनीयादुदञ्चनेनासिञ्चति । प्रातःसवनगृहीतमाग्रयणं पात्रान्तरे कृत्वा प्रतिप्रस्थाता आसिञ्चति । सा तृतीया धारा । एवं तिस्रो धारा इति कर्काचार्या याज्ञिकाश्चाहुः ।

उपांशुपात्रस्थमुपांशुग्रहशेषं पात्रान्तरे कृत्वा नेष्टा आसिञ्चति सा एका धारा । द्वितीया प्रस्तुता सन्तता धारा । तृतीयाऽऽग्रयणस्येति जीर्णः सम्प्रदायो युक्तः, कठसूत्रे तथा दर्शनात् । ततो वाग्विसर्गः । दशापवित्रेणाग्रयणमुपगृह्य हिंकारादि परिमार्जनम् ।

तत ऋतुपात्रेणेन्द्र मरुत्व इति मरुत्वतीयस्य ग्रहणं, परिमार्जनं, एष त इति सादनम् । तत उक्थ्यस्थाल्यामुक्थ्यग्रहणम् । उक्थ्यादुत्तरं वा मरुत्वतीयग्रहणम् ।

ततोऽर्द्धपूर्णं द्रोणकलशं सन्ततधारया कृत्वा यजमानो होतृचमसस्थं सर्वं सोममासिञ्चति । पाणिप्रक्षालनम् । समन्वारब्धानां निष्क्रमणम् । विप्रुढ्ढोमं हुत्वा वा सर्वेषामन्वारम्भः । अध्वर्यो स्तृताया वेदेस्तृणद्ध-

**पवमानोपाकरणम् १५॥ अहर्गणे च सर्वत्र प्रायणीयोदयनीयवर्जम् ॥१६॥ पशुनेहीत्यपकृष्य दधि घर्माय दध्याहार दक्षिणा उपावर्त्तयेति प्रैषोपचयः ॥१७॥ सप्रवर्ग्ये दधिघर्मः ॥१८॥ उपविश्य सदसः पुरस्तात्सपवित्रायामग्निहोत्रहवण्यां ग्रहणं यथोक्तम् ॥१९॥ होतर्वदस्व यत्ते वाद्यमित्याह । वाद्यान्ते श्रात॰ हविरित्युत्तिष्ठन्नाह**

यादानं, प्रह्वाणामुदग्गमनं, चात्वाले तृणप्रासनम् ।

तत उत्तरेण हविर्द्धानं सदसि गमनं, तत उद्गातॄणां स्वस्थाने उपवेशनं, ततो द्वितीयस्य तृणस्य तेषां पुरस्तात्प्रक्षेपः । अध्वर्युप्रतिप्रस्थातृ यजमानानां प्रत्यङ्मुखानामुपवेशनम् । तत उद्गातृभिः पुरस्ताज्जपे कृते द्वाभ्यामेव दर्भतृणाभ्यां कुशमुष्ट्या वा तृणं विनैव च सोमः पवत इति पवमानोपाकरणम् ।

स्तूयमाने उन्नेतुः प्रातःसवनवदेव सोमपावनम् । प्रथम प्रस्तावसमये सकृदेवासतो मा सद्गमयेत्यादियजमानस्य जपस्तोत्रान्ते अध्वर्युरुत्तिष्ठन् प्रेष्यति । तत्राग्नीदग्नीन्विहर बर्हि स्तृणीहि पुरोडाशाँ अलङ्कुरु इत्यग्नीधं प्रति प्रैषः ।

प्रतिप्रस्थातर्दक्षिणामुपावर्तयेति प्रतिप्रस्थातारं प्रति प्रैषः ।

तत आग्नीध्रस्य सप्रवर्ग्यश्चेत्प्रतिप्रस्थातर्दधिघर्माय दध्याहर, दक्षिणामुपावर्त्तयेति विशेषः। आग्नीध्रादङ्गारानादाय होत्रादिधिष्ण्येऽग्निविहरणं, पृष्ठ्यायां बर्हिस्तरणं प्राक्संस्थं तूष्णीं, पुरोडाशविभस्मीकरणादिकपालोद्वासनान्तम् । सप्रवर्ग्ये दधिघर्मपूर्वकं प्राणदानं-इन्द्रं गच्छेति दधिघर्मस्य । ततोऽग्नि गच्छेति पशुपुरोडाशस्य, ततः सवनीयानाम्-इन्द्रं गच्छ, इन्द्रं हरिवन्तं गच्छ, इन्द्रं पूषण्वन्तं गच्छ, इन्द्रं सरस्वतिवन्त गच्छेति ।

प्रतिप्रस्थाता सदसोऽग्रे दधिघर्ममानयन्ति । केचिद्दधिघर्मस्याध्वर्योरेव प्राणदानमिच्छन्ति । तत उत्तरवेदिमपरेणासादनं, आलम्भः । ततः सदसः पुरस्तादानीय शाखापवित्रसहितायामग्निहोत्रहवण्यां यावती द्यावापृथिवी इति मन्त्रान्ते स्थालीतो निनयति । निनयनं कुर्वन्नेव होतर्वदस्व यत्ते वाद्यमिति होतारं प्रत्याह ।

ततो होतुर्वाद्यान्ते अध्वर्युरुत्तिष्ठन् श्रातं॰ हविरिति वदति । तत उत्तरेण हविर्द्धानं यजतिदेशं गत्वाऽऽश्राव्य दधिघर्मस्य यजेति होतारं

॥२०॥ दधिघर्मस्य यजेति प्रेष्यति ॥२१॥ हुतशेषं घर्मर्त्विजः सयजमानाः समुपहावं भक्षयन्ति यथोक्तम् ॥२२॥ प्राणभक्षं वाऽदीक्षिताः ॥ २३ ॥ पशुपुरोडाशेन प्रचर्य पुरोडाशादि करोत्या धिष्ण्यनिधानात् ॥२४॥ उन्नीयमानेभ्यश्चानुवाचनप्रभृत्या चमसनिधानात् ॥ २५ ॥१ ॥

---

प्रेष्य वषट्कारानुवषट्कारयोर्जुहोति, इदमिन्द्राय इदमग्नय इति त्यागौ ।

ततोऽग्निहोत्रहवणीस्थं शेषं यजमानसहिता घर्मर्त्विजस्तदुपहवपूर्वकं मयि त्यदिति मन्त्रेण क्रमेण भक्षयन्ति । प्राणभक्षं वा कुर्वन्ति दीक्षितव्यतिरिक्ताः । ततश्चात्वाले सर्वेऽपि मार्जनं कुर्युः, सुमित्रिया न इति ।

ततोऽध्वर्योः पुरोडाशप्रचारः । तत्र पशुपुरोडाशस्यासादनं,आलम्भः, स्रुचावादाय यजप्रैषावाज्यभागौ, पशुपुरोडाशयागे अवद्यतोऽनुवाचनं, अग्नये पुरोडाशस्यानुब्रूहीति । उपभृति च स्विष्टकृदवदानं, अग्नये पुरोडाशं प्रेष्येति प्रैषः इदमग्नये । निर्गुणः स्विष्टकृद्यागः, इदमग्नये । नात्र-सञ्चराभ्युक्षणम् ।

प्राशित्रेडाषडवत्तब्रह्मयजमानभागचतुर्द्धाकरणानि भवन्ति । अत्र यजमानस्यापीडाभक्षः मैत्रावरुणस्य च । एकेनैष्टिकपवित्रेण मार्जनं, न पवित्रप्रतिपत्तिः । भागसमर्पणम् । ततः सवनीयमासादनं, आलम्भः, स्रुचौ गृहीत्वा पुनर्यजप्रैषावाज्यभागौ ।

ततः सवनीयानां यागः । जुह्वामुपभृति वोपस्तारः । माध्यन्दिनस्य सवनस्येन्द्राय पुरोडाशानामनुब्रूहीत्यनुवाचनम् । अवद्यन्वा अवदीयमानेषु वा अवदाय वा । चतुर्णां द्विर्द्विरवदानम् । अभिघारः । सताभ्यङ्गः । उपभृति स्विष्टकृद्वदवदानं, द्विरभिघारः ।

आश्राव्य माध्यन्दिनस्य सवनस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति प्रैषः । इदमिन्द्राय हरिवते पूषण्वते सरस्वतिवते इति त्यागः । इदमिन्द्रायेति वा । ततः समानीय निर्गुणः स्विष्टकृद्यागः, इदमग्नये । प्राशित्रावदानं, ब्रह्मणे समर्पणं, अप उपस्पृश्येडावदानं, षडवत्तब्रह्मभागयजमानभागानां च । सदो गत्वा इडाया होतृधिष्ण्ये निधानम् ।

इति दशमस्य प्रथमा कण्डिका ॥ १ ॥

दशासूनयति ॥१॥ माध्यन्दिनस्य सवनस्य निष्केव-
वल्यस्य भागस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्र·

पाणिप्रक्षालनम् । उन्नीयमानेभ्योऽनुब्रूहीति मैत्रावरुणं प्रति प्रैषः । तत उन्नेता होत्रादिदशचमसानपरेणोत्तरवेदिं निधाय द्रोणकलशादुपस्तृणाति । पूतभृतो मध्ये उन्नयति । पुनः शुक्रादुपर्यभिघारयति । ततोऽध्वर्युप्रतिप्रस्थातारौ प्रातःसवनवदेव प्रोक्षिताप्रोक्षितशकलादानादि शुक्रामन्थिप्रचारं कुरुतः । तत्राच्छिन्नस्येति जपान्ते आश्राव्य माध्यन्दिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मन्थोवत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति विशेषः । मन्थोवत इत्यस्य स्थाने मधुश्चुत इति प्रयोगः । पूर्वमध्वर्योः सा प्रथमेति होमः । तमनु प्रतिप्रस्थाता । तमनु चमसाध्वर्यवः । इदमिन्द्रायेति त्यागः ।

ततोऽनवषट्कारेऽपि होमः । होत्रादिचतुर्णां चमसानामनुवषट्कारे होमः । न प्रशास्त्रादीनां षण्णाम् । इदमग्नये । तत्रैव प्रैतु होतुश्चमस इति प्रैषः । आगत्य प्रतिप्रस्थातुः शुक्रपात्रे मन्थिशेषावनयनम् । अध्वर्योः शुक्रपात्रस्थोभयशेषस्य होतृचमसेऽवनयनम् ।

ततश्चतुर्णां चमसानां प्रस्थापनं, मैत्रावरुणचमसादीनां षण्णां चमसाध्वर्यूणामेव द्रोणकलशादभ्युन्नयनम् । ततोऽध्वर्युर्मैत्रावरुणचमसमादाय प्रशास्तर्यजेत्युक्त्वा वषट्कारानुवषट्कारे जुहोति । सर्वहोमेषु शेषं परिशेषयति । इदमिन्द्रायेदमग्नय इति षण्णामपि चमसानां त्यागः । चमसप्रस्थापनम् । एवं सर्वेषु ज्ञेयम् । ब्रह्मन्यज, पोतर्यज, नेष्टर्यज, अच्छावाक यज, अग्नीध्रजेति विशेषः । मैत्रावरुणचमसानन्तरमग्नीच्चमसहोमानन्तरं वोपविश्य तम्पन्त्विति जपः । अयाडग्नीदिति ब्रुवतो होतुरग्रे उपवेशनम् । ततो होत्रे इडासमर्पणादि मयोदमिति जपान्तम् । चतुर्धाकरणाभावः । उपहूतं द्यावापृथिवी इति पठ्यमाने षडवत्तसमर्पणं, होतुरवान्तरेडाभक्षणम् । ततो यजमानस्य सवनप्रार्थना छन्दोगोक्ता ।

ततो होतृचमसे प्रातःसवनवदेवाध्वर्युप्रतिप्रस्थात्रोः शुक्रामन्थिशेषभक्षः । ततोऽध्वर्युं पृष्ट्वा होतुः शुक्रामन्थिचमसवषट्कारनिमित्तस्तन्त्रेण । ततो ब्रह्माद्यष्टचमसेषु समाख्यानिमित्तभक्षो होतारं पृष्ट्वा । पुनरभ्युन्नीतेषु होतुः पश्चादध्वर्युं च पृष्ट्वा । ततो होतुः स्वचमसे समाख्याभक्षोऽध्वर्युप्रतिप्रस्थातारौ पृष्ट्वा । एवं प्रस्थितयागनिमित्तो भक्षः समाप्तः ।

अथ पुनरभ्युन्नीतेषु पूर्वं होतृचमसिनौ पृष्ट्वाऽध्वर्योर्भक्षः । ततः प्रशास्त्रादीनां होत्रध्वर्यू पृष्ट्वा वषट्कारसमाख्यानिमित्तस्तन्त्रेण भक्षः पृथ-

स्थितान् प्रेष्येति ॥३॥ मन्थीवत इति वा मधुश्चुतस्थाने ॥४॥ इडां भक्षयित्वा शालाद्वार्ये दाक्षिणहोमो वासःप्रबद्धꣳ हिरण्यꣳ हवन्यामवधाय चतुर्गृहीतमुदु त्यमिति ॥४॥ चित्रं देवानामिति द्वितीयाम् ॥५॥ आग्नीध्रीयेऽग्ने नयेति ॥६॥ अयन्न इत्यपराम्श्वं चेद्युक्तं दद्यादयुक्तं वा ॥७॥ वासो हिरण्यं ददाति ॥८॥ सहिरण्यो यजमानः शालां पूर्वेण तिष्ठन्नभिमन्त्रयते दक्षिणा बहिर्वेदि तिष्ठन्तीर्दक्षिणतो "रूपेण व" इति ॥९॥ गवाꣳ शतं द्वादशं वाऽतिक्रामति ॥१०॥ मन्थौदनतिलमाषाश्च ॥११॥

---

त्वा। सर्वे चमसा असर्वभक्ताः कार्याः। ययास्वं चमसेष्वाप्यायनम्। दक्षिणहविर्धानादस्य पश्चाद्भूमौ दशचमसानामपि निधानम्। तत आग्नीध्रीये प्रशास्तृसहितानां ब्रह्मादीनामिडाभक्षणम्। यजमानस्य हविःशेषभक्षणं, नेडाभक्षः।

ततः समस्य मार्जनं, न पवित्रप्रतिपत्तिः। भागपरिहारः। ततः पिष्टलेपाहुतिः। प्रणीताविमोकः। राक्षसभागः। सवनीयस्यावेक्षणम्, तत्प्राशनं च। पशुपुरोडाशभागप्राशनं त्वनूबन्ध्यान्ते पयस्यान्ते वा भविष्यति। तावत्पर्यन्तं यत्नेन रक्षणं कार्यम्।

अथ दक्षिणादानं, तत्र शालायां गत्वा ब्रह्मयजमानौ शालाद्वार्यं दक्षिणेनोपविशतः। ततोऽध्वर्युराज्यस्थाल्याश्चतुर्गृहीतं प्रचरण्यां गृहीत्वा क्रतुदक्षिणात्वेन दातुमुपक्लृप्ते वस्त्रे तथाविधमेव हिरण्यं बद्ध्वा चतुर्गृहीतमध्ये स्रुच्यवधाय शालाद्वार्ये समित्पूर्वकमुदु त्यमिति मन्त्रेण चतुर्गृहीतमाज्यं जुहोति। इदं सूर्याय। पुनश्चतुर्गृहीतं गृहीत्वा तद्वदेव चित्रं देवानामिति द्वितीयामाहुतिं जुहोति, इदं सूर्याय।

ततः सर्वे आग्नीध्रीयं गच्छन्ति। तत्राध्वर्युः सकृद्गृहीतं गृहीत्वा वासःप्रबद्धं हिरण्यमवधायाग्ने नयेति समित्पूर्वकमाग्नीध्रीये जुहोति, इदमग्नये। एवमेवाऽयन्न इति द्वितीयाहुतिहोमः। इदमग्नय इत्येतावानेव त्यागः। चतुर्ष्वपि होमेषु वासःप्रबद्धं हिरण्यं हवन्यामवधायेत्येतद्भवतीति हरिस्वामिनः।

ततो यजमानस्तद्धिरण्यमादाय शालायाः पुरस्तात्तिष्ठन्वेदेर्दक्षिणतो बहिर्वेदि स्थिता दक्षिणा गा अभिमन्त्रयते रूपेण वो रूपमभ्यागामिति

अन्तरा शालासदसी दक्षिणेनाग्नीध्रं तीर्थेन ॥१२॥ सुब्रह्मण्यां च प्रेष्यति वा ॥१३॥ आऽऽग्नीध्रादनुगच्छति सुन्वन् ॥१४॥ प्रागनुवाचनाच्च ॥१५॥ सदो गच्छति "वि स्वरिति ॥१६॥ प्रेक्षते "यतस्व सदस्यैरिति सदस्यान् ॥१७॥ ब्राह्मणमच्छेत्याग्नीध्रगमनम् ॥१८॥ उपविश्य हिरण्यमस्मै दद्यात्यस्मद्राता इति ॥१९॥ आग्नेयाय चाग्नीध्रवत्सदसः

---

मन्त्रेण। ततो गवां शतस्य शालासदसोरन्तरालेन नयनम्। मन्थौदनतिलमाषाणां च। उत्तरेण सदसो नीत्वा दक्षिणेनाग्नीध्रीयं नीत्वा चात्वालोत्करावन्तरेण नीत्वा आग्नीध्रीयस्याग्रेः स्थापनम्। अस्मिन्नवसरे सुब्रह्मण्याप्रैषो वा। यजमानस्त्वाग्नीध्रपर्यन्तमेव दक्षिणा अनुगच्छति।

इतः प्रभृति मरुत्वतीयस्यानुवाचनात्प्राक् सर्वं याजमानं कर्म। ततो वि स्वः पश्येति सदसः प्रति गच्छति। यतस्व सदस्यैरिति सदसि स्थितान् पुरुषान् प्रेक्षते।

ततो ब्राह्मणमच्छेत्याग्नीध्रं प्रति गच्छेत्। आग्नीध्रे उपविश्य दक्षिणासंकल्पं करोति। तत्र अस्याग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य समृध्यर्थं हिरण्यं शतं गा वासोऽश्वं दक्षिणा ब्रह्मादिभ्य ऋत्विग्भ्यो यथाशास्त्रविभागेनाहं संप्रददे इति संकल्पः।

ततोऽस्मद्रातेति पठित्वा ऽग्नीद्धस्ते हिरण्यादिदक्षिणाचतुष्टयविभागस्य समर्पणं कुर्यात्। अग्नीद्दक्षिणादानान्ते यो विभागः स प्रतिगृह्यतां मन्थौदनतिलमाषाश्चेति। अग्नीध्राग्नये त्वेति हिरण्यं प्रतिगृह्णाति। रुद्राय त्वेति गाः, बृहस्पतये त्वेति वस्त्रं, यमाय त्वेत्यश्वम्। मन्थौदनतिलमाषाणां च कोऽदादिति प्रतिग्रहमन्त्रः। सर्वेषामृत्विजामेत एव विकल्पेन प्रतिग्रहमन्त्राः।

विकल्पेन तूष्णीमेव प्रतिग्रहणं सर्वेषाम्। पत्नी च मयाऽपि दत्ता इत्येवं यजमानदानानन्तरं सहैवानुमतिं करोति। मन्थौदनतिलमाषाणां दक्षिणात्वेन दानं पुरुषार्थत्वेन वेति मतद्वयम्। तत्र पुरुषार्थत्वपक्षे दानप्रकार उक्तः। दक्षिणात्वेन दानपक्षे तु संकल्पे अश्वं मन्थौदनतिलमाषांश्च दक्षिणा ब्रह्मादिभ्य इति विशेषः।

तदा च दानकाले मन्थौदनतिलमाषाश्चेति पृथङ् न वक्तव्यं, दक्षिणानां मध्ये ते तव यो विभाग इत्येतावतैव सिद्धेः। हरिस्वामिमते तु समुदितसंकल्पो न भवति, किन्तु प्रत्येकमेव यथाविभागं संकल्पः। शाखा-

पुरस्तादुपविष्टाय क आत्रेयं क आत्रेयमिति त्रिरुक्त्वा सकृच्छेषमहालेयमवालेयमकौद्रेयमशाभ्रेयमवामरथ्यमगौपवनमिति ॥२०॥ ऋत्विग्भ्यो दक्षिणा ददाति ॥२१॥ पृथक् शतानि पुरुषभेदात् ॥२२॥ प्रतिविभागो वा कर्मप्राधान्यात् ॥२३॥ यथारम्भं द्वादश द्वादशाद्येभ्यः, षट्षड् द्वितीयेभ्य, श्चतस्रश्चतस्रस्तृतीयेभ्य, स्तिस्रस्तिस्र इतरेभ्यः

---

न्तरीयदक्षिणादानं च गौश्चाश्वाजाश्चावयश्च व्रीहयश्च यवाश्च तिला माषाश्चेति ।

तद्यथा अमुकयज्ञस्य समृद्ध्यर्थं हिरण्यविभागं तिस्रो गाः, वासोऽश्वमन्यौदनतिलमाषाश्चाश्वतरादिविभागं चाग्नीत्तुभ्यमहं संप्रदद इति । एवं द्वादश गा षड्गाः, चतस्रो गाः, तिस्रो गा इति प्रयोगे विशेषः । अग्नीधे दानानन्तरं यजमानो ब्राह्मणमद्येत्यनेनैव मन्त्रेण सदसः पुरस्तादुपविष्टस्यात्रेयस्य समीपे आगत्योपविश्य क आत्रेयम् इति बहुकृत्व उच्चार्य्य महालेयमित्याद्यगोपवनमित्यन्तं सकृत्पठित्वा दक्षिणासम्बन्धिहिरण्यव्यतिरिक्तं हिरण्यमस्मद्राता इत्यनेन मन्त्रेणात्रेयाय दद्यात् । आत्रेय हिरण्यं तुभ्यमहं संप्रदद इति ।

ततः सदसि गत्वा ब्रह्मणः समीपे उपविश्य समुदितसंकल्पपक्षे ब्रह्मन् दक्षिणादानान्ते यो विभागः स प्रतिगृह्यताम् इति । प्रत्येकं विभागसंकल्पपक्षे तु अस्य यज्ञस्य समृद्ध्यर्थं हिरण्यविभागं द्वादश गाः, वासोऽश्वमन्यौदनतिलमाषाश्चाश्वतरगर्द्दभाजानि व्रीहयवतिलमाषविभागं च दक्षिणाः ब्रह्मन् तुभ्यमहं संप्रददे। मयाऽपि दत्ता इति पत्नी वक्ति । एवं सर्वत्रोह्यम् ।

तत उद्गात्रे द्वादश गाः । अस्मद्राता इत्ययं मन्त्रः सर्वेभ्य ऋत्विग्भ्यः सर्वदक्षिणादाने ज्ञेयो न हिरण्यमात्रदाने, बहुवचनान्तत्वान्मन्त्रलिङ्गाच्च। शाखान्तरेऽपि दक्षिणादानमात्रे विहितत्वाच्च । ततो होत्रे द्वादश गाः । ततो हविर्द्धाने गत्वा तत्रोपविष्टाभ्यामध्वर्युप्रतिप्रस्थातृभ्यां दद्यात् । तत्र समुदितसंकल्पपक्षे अध्वर्यू दक्षिणानां वां यौ भागौ तौ प्रतिगृह्येतामिति । प्रत्येकपक्षे अध्वर्यवे द्वादश गाः, प्रतिप्रस्थात्रे षड्गा इति ।

ततः पुनः सदसि प्रस्तोत्रे दानम् । षड् गाः । ततो मैत्रावरुणाय षड् गाः । ततो ब्राह्मणाच्छंसिने षड् गाः । ततः पोत्रे चतस्रो गाः । ततो नेष्ट्रे चतस्रो गाः । ततोऽच्छावाकाय चतस्रो गाः । तत उन्नेत्रे तिस्रो गाः । ततो ग्रावस्तुते तिस्रो गाः । ततः सुब्रह्मण्याय तिस्रो गाः । ततः

॥२४॥ ब्रह्मोद्गातृहोतृभ्यः ॥२५॥ अध्वर्युभ्यां च हविर्धान उपविष्टाभ्याम् ॥२६॥ अग्नये त्वेति हिरण्यं प्रतिगृह्णीतः ॥२७॥ रुद्राय त्वेति गां, बृहस्पतये त्वेति वासो, यमाय त्वेत्यश्वम् ॥२८॥ कोऽदादित्यन्यत् ॥२९॥ इच्छतो मन्त्रवचनम ॥३०॥ प्रत्येकं च प्रस्तोतृप्रशास्तृब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकोन्नेतृग्रावस्तुत्सुब्रह्मण्येभ्यः॥३१॥ प्रसृप्तेभ्यश्चान्यत् ॥३२॥ कण्वकश्यपयाचमानवर्जम् ॥३३॥ ज्ञातये चाश्रोत्रियाय ॥३४॥ न रजतं दद्याद् बर्हिषि "पुराऽस्य संवत्सराद् गृहे रुदन्ती"ति श्रुतेः ॥३५॥ पत्नी च ददाति ॥३६॥ सर्वेभ्यो दत्त्वा प्रतिहर्त्रे प-

---

प्रासर्पकोपगातृचमसाध्वर्युभ्योऽन्येभ्योऽपि देवयजनं प्रत्यागतेभ्यो दक्षिणाद्रव्यादन्यद्रव्यदानम् । ततः सर्वेभ्यो दानानन्तरं प्रतिहर्त्रे तिस्रो गाः। हिरण्यादिदक्षिणादानं षोडशभ्योऽपि भवति । तत्र हिरण्यस्य परिमाणं "हरिण्य परिमाणेऽन्यत्रापी"त्युक्तत्वाच्छतमानं रक्तिकाशतमित्येतद्भवतीति हरिस्वामिनः ।

ततो यजमानस्तद्धिरण्यमादाय शालायां गत्वा तस्य गोविभागवद्विभागः। आद्येभ्यो द्वादश द्वादश रक्तिकाः, द्वितीयेभ्यः षट् षट् , तृतीयेभ्यश्चतस्रश्चतस्रः, तिस्रस्तिस्र इतरेभ्य इति । वस्त्राश्वादिकस्यापि मूल्यं कृत्वा शतधा विभज्यमेव । द्वादश द्वादश भागा आद्येभ्यः षट् षड् द्वितीयेभ्य इत्यादिप्रकारेण विभागः ।

समुदितपक्षे तु सुगमम् । उद्गातर्दक्षिणादानान्ते यो० होतर्दक्षिणानान्ते० हविर्द्धानं गत्वा अध्वर्यू दक्षिणादानान्ते वां यौ विभागौ तौ प्रतिगृह्णेताम् । पुनः सदस्यागत्य प्रस्तोतर्दक्षिणादानान्ते० मैत्रावरुण दक्षिणादानान्ते०, ब्राह्मणाच्छंसिन् दक्षिणादानान्ते० पोतर्दक्षि० नेष्टर्दक्षिणा० अच्छावाक दक्षि० उन्नेतर्दक्षिणा० ग्रावस्तुद्दक्षि० सुब्रह्मण्य दक्षि० । सुब्रह्मण्य दक्षिणानामिति वा ।

ततः अस्य यज्ञस्य समृद्ध्यर्थं यथासम्पन्नं हिरण्यमुद्गातृभ्यः प्रासर्पकेभ्यश्चमसाध्वर्युभ्योऽन्येभ्योऽपि देवयजनमागतेभ्यो ब्राह्मणेभ्योऽहं संप्रददे । यो विभाग इत्यादि। ततः प्रतिहर्तर्दक्षिणानामिति। दक्षिणाग्रहणार्थं देवयजनमागतानां मध्ये कण्वकश्यपगोत्रेभ्योऽस्मभ्यं देहीति प्रार्थयद्भ्य-

श्रात् ॥३७॥ ॥२॥

इन्द्राय मरुत्वते ऽनुवाचयति ॥१॥ अदानमतः ॥२॥ ऋतुपात्रेण मरुत्वतीयग्रहणमुपयामगृहीतोऽसि मरुतां त्वौजस इति ॥३॥ अध्वर्युमनु जुहोति ॥४॥ सशस्त्रे त्वानुपूर्व्ययोगात् ॥५॥ तृतीयश्रुतेश्च ॥६॥ वशिना मरुत्वतीयग्रहणं मरुत्वन्तमिति ॥७॥ निहूते पात्रे होता शंसति ॥८॥ जनिष्ठा उग्र इत्येतस्यां मदामो दैवेति प्रतिगरः सकृत् ॥९॥ त-

---

श्च किमपि न देयम् । मुख्यदक्षिणालाभे प्रतिनिधित्वेनापि रजतं न देयम् । अन्येभ्योऽपि रजतं न देयम् ॥ २ ॥

इति दशमस्य द्वितीया कण्डिका ॥ २ ॥



प्रतिहर्तृदानानन्तरमेवाध्वर्युर्हविर्द्धानं प्रविश्य ऋतुपात्रगृहीतं मरुत्वतीयं ग्रहमादायेन्द्राय मरुत्वतेऽनु ब्रूहीति प्रशास्तारं प्रेष्यति । तत आश्राव्येन्द्राय मरुत्वते प्रेष्येत्युक्त्वा वषट्कारानुवषट्कारयोर्जुहोति । इदमिन्द्राय मरुत्वत इदमग्नय इति त्यागौ । नात्र चमसानां कम्पनं, अशस्त्रग्रहत्वात्, नापि भक्षणम् ।

ततोऽध्वर्युः पात्रं प्रतिप्रस्थातृहस्ते समर्प्य हविर्द्धानं प्रविश्य ऋतुपात्रे द्रोणकलशात्पूतभृतो वा परिप्लवया मरुत्वन्तमिति महामरुत्वतीयं गृहीत्वा परिमृज्य प्रदक्षिणेतरथावृत्ती कृत्वैष ते योनिरिति खरे आग्रयणस्य पुरस्तात्सादयति ।

ततः पूर्वद्वारेण निष्क्रम्य प्रतिप्रस्थातृहस्तादृतुपात्रमादाय सदसि होतारं पृष्ट्वाऽध्वर्युर्भक्षयति । होताऽध्वर्युं पृष्ट्वा भक्षयति । ततः पात्रं सदसो निष्काश्य मार्जालीये प्रक्षाल्य खरे स्थापयति स्वयमेव ।

ततो होतुः पुरस्तात्प्राङ्मुख उपविशति । तत अध्वर्यो शोंसावेत्याहूतः प्रतिगृणाति । प्रतिप्रस्थाता हविर्द्धानं गत्वा रिक्तेन ऋतुपात्रेण द्रोणकलशात्पूतभृतो वा मरुतां त्वौजस इति मन्त्रेण तृतीयं कुण्ठमरुत्वतीयं गृहीत्वा परिमृज्यैष ते योनिरिति खरे सादयति । हरिस्वामिमतेऽस्य सादनमन्त्रस्यानाम्नानात्सादनाभावः । तेन होमकाल एव गृहीत्वा असादयित्वैव होतव्यः ।

अत्र शस्त्रे जनिष्ठा उग्र इत्यस्यामृचि मदामो दैवेति सकृत्प्रतिगरः ।

त्स्थाने विकृतौ ॥१०॥ आ निधानात्कृत्वा माहेन्द्रं गृह्णाति वैश्वदेववन्महाँ इन्द्र इति ॥११॥ शुक्रं पूतभृत्यासिच्य पृष्ठमुपाकृत्य प्रेष्यत्यभिषोतारोऽभिषुणुतोलूखलानुद्वा-

---

अवसाने प्रणवे च । विकृतावपि एतस्या ऋचः स्थाने या अन्या शस्यते तस्यामपि सकृन्मदामो दैवेति प्रतिगरो भवति। शस्त्रान्तेऽध्वर्युरो३ मिति प्रतिगीर्योत्थाय प्रदक्षिणेतरथावृत्तो कृत्वा स्वगृहीतं मरुत्वतीयमादत्ते । प्रतिप्रस्थाताऽपि स्वगृहीतमादत्ते । चमसाध्वर्यवो हविर्द्धानमध्यस्था एव चमसान्हस्ते धारयन्ति । निष्क्रम्यातिक्रम्याश्राव्योक्थशा यज सोमस्येति प्रैषः । वषट्कारद्वये होम उभयोः, इदमिन्द्राय मरुत्वते, इदमग्नय इति त्यागौ ।

चमसाध्वर्यवोऽपि ह्विश्चमसानां प्राङ्नयनेन कम्पनं कुर्वन्ति । सदसि गत्वा होत्रध्वर्य्वोः परस्परमुपहूय भक्षणम् । प्रतिप्रस्थाता त्वनुपहूयैवैकाकी भक्षयतीति संप्रदायः । तस्यापि होत्रा सह भक्षणं युक्तमनुपहुतचमसानामिव ।

ततः पात्रयोर्निर्हृत्य प्रक्षाल्य स्थाने स्थापनम् । चमसिनश्चानुपहूयैव स्वस्वचमसे भक्षयित्वा सशेषेष्वेवाप्यायनं कुर्युः । ततश्चमसानां हविर्द्धानमध्ये निधानम् ।

ततोऽध्वर्युः शुक्रपात्रे द्रोणकलशात्परिप्लवया सोममादाय माहेन्द्रग्रहं गृह्णाति महाँ इन्द्रो नृवदिति । यजमानस्यात्र विकल्पेनाध्वर्योर्गृह्णतोऽन्वारम्भः । ततः परिमार्जनं, प्रदक्षिणेतरथावृत्ती, एष ते योनिरिति स्रुचः स्थाने सादनम् ।

ततो द्रोणकलशस्य पूतभृत्यासेकः । ततस्तृणाभ्यां माहेन्द्रं ग्रहमुपस्पृश्य पुरस्ताज्जपे कृते प्रस्तोत्रे तृणे समर्पयन् पृष्ठसंज्ञं स्तोत्रमुपाकरोति उपावर्त्तध्वमिति ।

ततः प्रेष्यति–अभिषोतारोऽभिषुणुतेति प्रतिप्रस्थातृनेष्टृन्नेतॄन् तृतीयसवनाभिषवार्थम् । तत उलूखलानुद्वायतेत्यग्नीद्ब्रह्मयजमानान् सवनीयनिर्वापार्थं प्रेष्यति। अग्नीदाशिरं विनय सौम्यस्य वित्तादित्यग्नीधं प्रेष्यति ।

ततः प्रतिप्रस्थात्रादयोऽधिषवणं परित उपविशन्ति उत्तरतः प्रतिप्रस्याता, इतरौ दक्षिणतः । तत्र हिरण्यग्राव्णामीषान्तरेणाहरणम् । त्रयाणां पाणिप्रक्षालनं, हिरण्यबन्धनं, त्रयाणामद्र्यादानं, वाग्यमनम् । कुण्डलिकां विस्रंस्य ऋजीषेण मिश्रितां कृत्वा

दयताग्नीदाशिरं विनय सौम्यस्य वित्तादिति ॥१२॥ ऋजीषमिश्रमंशुमभिषुण्वन्ति यथाकथा चानुदकम्॥१३॥ आधवनीये करोति ॥१४॥ त्रिपर्यायान्वाऽभिषवोपदेशात् ॥१५॥ मानाभिमर्शनवर्जं कृतत्वात् ॥१६॥ पूतभृति पावनं शुक्राभावात् ॥१७॥ स्तूयमाने कुम्भे चर्जीषस्याधानम् ॥१८॥ सवनीया अपयस्याः ॥१९॥ सौम्य-

---

मा भेरिति प्रहरणं, मत्या प्रहाराः उत्पुञ्ज्य पुनरभिषवः। पुनरुत्पुञ्ज्य पुनरभिषवः। आप्यायनम्। एवं त्रिपर्याय एकोऽभिषवः। एवमेवापरं वारद्वयं कुर्युः। आधवनीये सर्वमृजीषमवदधाति प्रतिप्रस्थाता।

आग्नीध्रः पयस्यावर्जितान्सवनीयान्निर्वपति। सौम्यश्चरुर्वारुणश्चैककपालोऽधिकौ। तत्र चतुरासनं, प्रणीताप्रणयनम्। पात्रासादनम्—शूर्पाग्निहोत्रहवणि, कपालानि द्वादश, कर्परं, चरुस्थाल्येका, शम्याकृष्णाजिनं, उलूखलमुसलं, दृषदुपलं, पात्रीधान्यं, संयवनार्थमुदकं दधि च, शृतावदानं मेक्षणं च, पुरोडाशपात्र्येका, पञ्चबिला चेत्यासाद्य स्फ्योपहितपात्रीकरणादि। ग्रहणं सादनान्तम्।

तत्र इन्द्राय जुष्टम्, इन्द्राय हरिवते जुष्टम्, इन्द्राय पूषण्वते जुष्टं, वरुणाय जुष्टमिति विशेषः।

हविर्ग्रहण्यामपः कृत्वा पूर्वाभ्यामेव पवित्राभ्यामुत्पवनं, सव्यहस्ते करणादि। प्रोक्षणे-इन्द्राय त्वा। इन्द्राय हरिवते त्वा। इन्द्राय पूषण्वते त्वा। सोमाय त्वा। वरुणाय त्वेति च।

व्रीहिमयपुरोडाशपक्षे कणान्ते विभज्यालम्भः-इदमिन्द्रस्य वरुणस्य च। इदं सोमस्य। यवमयपक्षे सोमः पृथग्भूत एव। विभज्य धाना मन्थानां च। यवतण्डुलानामालम्भः। इदमिन्द्रस्य हरिवत इन्द्रस्य पूषण्वतश्चेति। पुरोडाशयोः पूर्ववत्। इन्द्रस्यैकादश कपालानि, वारुणस्यैकम्। तपसा तप्यस्वेत्यभ्यूहनम्। उपसर्जन्यधिश्रयणाद्यन्तं सर्वं प्रातःसवनवत्।

शृतावदानमेक्षणपञ्चबिलापुरोडाशपात्रीसंमार्गः। संमार्जनानामन्नोत्करे प्रासनम्। तत आग्नीध्रीयस्य पश्चादाशिरं विनयति मन्थतीत्यर्थः। तदुक्तं मानवे-"पश्चादाग्नीध्रीयस्याशिरं मन्थती"ति।

माहेन्द्रस्तोत्रानन्तरं होतुः शस्त्रम्। ततः पूर्वं प्राङुपविश्याहूतस्यावृत्य प्रतिगरः। शस्त्रान्ते ओमिति प्रतिगरः। उत्थाय प्रदक्षिणेतरथा-

**अरुश्चारुणश्चैककपालोऽधिकौ ॥२०॥ आ पात्रप्रक्षालना-त्कृत्वोक्थ्यं विगृह्णाति पूर्ववदिन्द्राय त्वेति सर्वेभ्यः ॥२१॥**

वृत्ती । माहेन्द्रमादाय यजतिदेशं गत्वाऽऽश्राव्योक्थशा यज सोमस्येति प्रैषः। प्रतिवषट्कारं होमः। चमसानां पूर्ववत् कम्पनम् । इदं माहेन्द्राय इदमन्नय इति त्यागौ । प्रदक्षिणावृत्तीतरथावृत्ती ।

अध्वर्युहोतृभ्यां माहेन्द्रभक्षणम । चमसिनश्चानुपहूयैव सर्वभक्षांश्चमसान् भक्षयन्ति । ततो मार्जालीये चमसानां प्रक्षालनम् । उत्तरवेदिमपरेण प्रशास्तृचमसपूर्वकं निधानम् ।

ततः प्रातःसवनवत्त्रय उक्थ्यविग्रहाः । तत्र प्रथमे अध्वर्युरुक्थ्यपात्रं सव्यहस्ते कृत्वोक्थ्यस्थालीं दक्षिणेनाश्राव्योक्थ्यपात्रे सोमस्य तृतीयं भागं निनयति इन्द्राय त्वा देवाव्यमिति ।

ततः उक्थ्यस्थालीं तूष्णीं स्वस्थाने निदधाति । परिमार्जनं, प्रदक्षिणेतरथावृत्ती । तूष्णीं सादनं, प्रशास्तृचमसपूर्वकं चमसोन्नयनं, तृणाभ्यां ग्रहमुपस्पृश्य स्तोत्रोपाकरणम् ।

स्तोत्रान्ते प्रशास्ता शस्त्रं शंसति । तत्राध्वर्योः प्रतिगरः । शस्त्रान्ते प्रदक्षिणावृत्तीतरथावृत्ती । ग्रहादानम् , चमसाध्वर्यूणां चमसादानम् , आश्राव्योक्थशा यज सोमानामिति प्रैषः ।

प्रतिवषट्कारं ग्रहचमसहोमः इदमिन्द्रायेदमन्नय इति त्यागौ । प्रदक्षिणावृत्तीतरथावृत्ती । ग्रहशेषस्य प्रशास्तृचमसे आसेकपात्रस्य हविर्धानमध्ये निधानम् ।

ग्रहशेषस्याध्वर्युप्रशास्तृभ्यां भक्षणम् । प्रशास्तुः सर्वचमसेषु वषट्कारनिमित्तो भक्षः । चमसिनां च स्वचमसे समाख्यानिमित्तः । प्रशास्तुरपि स्वचमसे समाख्यानमित्तश्च । सर्वभक्षाश्चमसाः कार्याः। तेषां मार्जालीये प्रक्षालनम् । ब्राह्मणाच्छंसिचमसपूर्वकमुत्तरवेदेः पश्चान्निधानम् । एवं प्रथमोऽध्वर्युकर्तृक उक्थ्यविग्रह उक्तः ।

अथ द्वितीयः प्रतिप्रस्थातृकर्तृक उच्यते । तत्र प्रतिप्रस्थातोक्थ्यपात्रे उक्थ्यस्थाल्या अर्द्धं सोममिन्द्राय त्वेति गृहीत्वा स्थालीं निधाय परिमार्ष्टि ।

ततः प्रदक्षिणावृत्तिरितरथा च । तूष्णीं सादनम् । ब्राह्मणाच्छंसिचमसपूर्वकं पूतभृतश्चमसोन्नयनं, स्तोत्रोपाकरणं, स्तोत्रान्ते ब्राह्मणाच्छंसिशस्त्रं शंसति । तत्र प्रतिप्रस्थातुः प्रतिगरः ।

शस्त्रान्ते प्रदक्षिणेतरथावृत्ती । ग्रहचमसानामादानम् । आश्राव्योक्थशा यज सोमानामिति प्रैषः । प्रतिवषट्कारं ग्रहचमसहोमः । इदमि-

**वसतीवरीश्चासिञ्चतीदं तृतीयꣳ सवनं कवीनामृतस्य ये चमसमैरयन्त । ते सौधन्वनाः स्वरानशानाः स्विष्टिं नोऽभि वसीयो नयन्त्विति ॥२२॥ एकधनशेषं च ॥२३॥ प्रसुतान्तं भवति ॥२४॥ ॥३॥**

---

न्द्रायेदमग्नये। प्रदक्षिणेतरथाऽऽवृत्ती ।

ग्रहशेषस्य ब्राह्मणाच्छंसिचमसे आसेकः । तत्र प्रतिप्रस्थातृवषट्कर्त्रोर्भक्षणम् । सर्वचमसेषु वषट्कर्त्तुर्वषट्कारनिमित्तो भक्षः, स्वचमसे समाख्यानिमित्तश्च । चमसिनश्च स्वस्वचमसे समाख्यानिमित्तः । सर्वभक्षाश्चमसाः । मार्जालीये पात्रप्रक्षालनम् । अच्छावाकचमसपूर्वकमुत्तरवेदेः पश्चान्निधानम् । इति द्वितीय उक्थ्यविग्रहः ।

ततोऽध्वर्युराधवनीये वसतीवरीरासिञ्चति—इदं तृतीय ? सवनमिति मन्त्रेण। सर्वेषामेकधनानां शेषं चानेनैव मन्त्रेणाधवनीये आसिञ्चति । प्रत्येकं मन्त्रः ।

अथ तृतीय उक्थ्यविग्रह उच्यते । तत्र प्रतिप्रस्थातोक्थ्यपात्रे उक्थ्यस्थालीतः सर्वं सोमं गृह्णाति इन्द्राय त्वा देवाव्यमिति । परिमार्जनं, प्रदक्षिणेतरथावृत्ती, तूष्णीं सादनम् । उन्नेता चाच्छावाकचमसपूर्वकं चमसेषु पूतभृतः सर्वं सोमं विभज्योन्नयति। तृणाभ्यां ग्रहमुपस्पृश्य स्तोत्रोपाकरणम्।

स्तोत्रान्तेऽच्छावाकः शंसति । तत्र प्रतिप्रस्थातुः प्रतिगरः । शस्त्रान्ते प्रदक्षिणेतरथावृत्ती । ग्रहचमसानामादानम् । आश्राव्योक्थशा यज सोमानामिति प्रैषः। प्रतिवषट्कारं ग्रहचमसहोमः । इदमिन्द्रायेदमग्नय इति त्यागौ ।

प्रदक्षिणेतरथावृत्ती। ग्रहशेषस्याच्छावाकचमसे आसेकः । तस्मिन्प्रतिप्रस्थात्रच्छावाकयोर्भक्षणम् । सर्वचमसेष्वच्छावाकस्य वषट्कारनिमित्तो भक्षः । स्वचमसे समाख्यानिमित्तो भक्षः । सर्वभक्षाश्चमसाः कार्याः । तेषां मार्जालीये प्रक्षालनम् । हविर्धानमध्ये निधानम् । इति तृतीय उक्थ्यविग्रहः ।

ततोऽध्वर्युः प्रशास्तः प्रसुहीति मैत्रावरुणं प्रत्याह । ततः सर्पतेति प्रशास्त्राऽनुज्ञाताः सर्वे ऋत्विजः सदसो निष्क्रम्य चात्वालोत्करावन्तरेण गत्वा बहिर्वेदि मूत्रपुरीषादि कृत्वा प्रत्यागच्छन्ति ।

इति माध्यन्दिनं सवनं समाप्तम् । इति दशमस्य तृतीया कण्डिका ॥ ३ ॥

एहि यजमानेत्याह हविर्धानं प्रविशन्त्यध्वर्युयजमानप्रतिप्रस्थात्रग्नीदुन्नेतारः ॥१॥ पत्नी चापरेण ॥२॥ अपिहितद्वार आदित्यपात्रमादौ सꣳस्रवाँश्चोपरि पूतभृतस्तत आदित्यग्रहं गृह्णाति सꣳस्रवेभ्यः कदा चनेति ॥३॥ अपगृह्य पुनः कदा चनेति ॥४॥ दध्ना श्रीणात्येनं पश्चिमेऽन्ते मध्ये वा यज्ञो देवानामिति ॥५॥ उपाꣳशुसवनेन मिश्रयति विवस्वन्नादित्येति ॥६॥ उपाꣳशुसवनमुन्नेत्रे प्रयच्छत्यासृज ग्रावाणं इति चाह ॥७॥ आधवनीये चमसे वा सोमवति ग्रावाणोऽवधाय स्थाने निदधाति ॥८॥ अपावृतद्वारं निष्क्रामतो ग्रहमपिधाय पाणिना स्थाल्या वा ॥९॥ अन्वारभ्य आदित्येभ्योऽनुब्रूही-

---

अथ तृतीयसवनम्। तत्र पूर्वमध्वर्युरेहि यजमानेति यजमानं प्रत्याह। ततोऽध्वर्युयजमानप्रतिप्रस्थात्रग्नीदुन्नेतारः पूर्वद्वारेण हविर्धानं प्रविशन्ति। पत्नी चापरेण द्वारेण हविर्द्धानं प्रविशति। तत उभयोर्हविर्द्धानद्वारयोरपिधानम्। ततोऽध्वर्युरादित्यस्थालीमादित्यपात्रं वाऽऽदाय पूतभृत उपरि सव्यहस्तेनादित्यपात्रं गृहीत्वा दक्षिणहस्तेनादित्यस्थाल्याः संस्रवं सोममादित्यपात्रे निनयति कदा चन स्तरीरसीति।

तत आदित्यपात्रमपगृह्य धारातो विच्छिद्य पुनर्गृह्णाति यज्ञो देवानामिति। मन्त्रेणादित्यग्रहमुलूखलमध्ये वा पश्चिमेऽन्ते वा लौकिकेन दध्ना श्रीणाति।

तत उपांशुसवनेन सोमं दधि च परस्परं मिश्रयति विवस्वन्नादित्येति मन्त्रेण। तत उन्नेता उपांशुसवनं समर्पयन्नासृज ग्रावाण इति प्रत्याह।

तत उन्नेता पञ्चापि ग्रावाणो यत्नेनाधवनीयमध्येऽवधाय ततः पुनर्निष्काश्याधिषवणचर्मणि निदधाति। अथवा आधवनीयाच्चमसे सोममुन्नीय तस्मिन्ग्रावाणो निधायाधिषवणे निदधाति।

ततो ग्रहस्य परिमार्जनं, न सादनम्, "असन्नो हूयत" इति मनुवचनात्। पाणिना आदित्यस्थाल्या वा ग्रहस्य पिधानम्। द्वारयोरुद्घाटनम्। यजमानोऽध्वर्युमन्वारभते। हविर्द्धानान्निष्क्रमणमुभयोः। आदित्येभ्योऽनुब्रूहीत्यनुवाचनम्।

अथवा आदित्येभ्योऽनुब्रूहि। पितृभ्यः प्रियधामभ्योऽध्यस्तेभ्य

त्याह । प्रैषानुवाचनयोरन्यत्रास्मिन्नाह प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य इति ॥१०॥ हुत्वा प्रतिप्रस्थात्रे प्रयच्छति शेषौ ॥११॥ अत्र सर्पणमादित्यग्रहस्य प्राक्तृतीयसवनश्रुतेः ॥१२॥ ॥४॥

आग्रयणमादायासिञ्चति पवित्रेऽभिपूतभृतम् ॥१॥ प्रतिप्रस्थाता च सᳪंस्रवौ ॥२॥ आधवनीयादुन्नेतोदञ्चनेन चमसेन वा ॥३॥ तत आग्रयणं गृह्णाति ॥४॥ उक्थ्यं चो·

---

इति प्रैषः । आश्राव्यादित्येभ्यः प्रेष्येति प्रैषः। अत्रवा प्रियेभ्यः प्रियधामभ्य इति वक्तव्यम् । नानुवाचम् । वषट्कृते सशेषस्य होमः । नानुवषट्कारः । इदमादित्येभ्यः । हुत्वा ग्रहशेषस्थालीशेषौ प्रतिप्रस्थात्रे समर्पयति । अत्र तृतीयसवनादौ यत्सर्पणं तत्कर्त्तव्यम् ।

ततोऽपि पूर्वमाहवनीयस्य पश्चादुत्तराभिमुख उपविष्टो यजमानो लोकद्वारीयं साम गायति जुहोति । ततः सयजमाना ऋत्विजो धिष्ण्योपस्थानादि वा सदोऽभिमर्शनादारभ्य वा सर्प्पणं कुर्वन्ति । प्रतिप्रस्थाताऽपि कस्यचिद्धस्ते शेषौ समर्प्य सर्पणं करोति ।

इति दशमस्य चतुर्थी कण्डिका ॥ ४ ॥

---

ततः प्रतिहर्त्ता पूतभृतं पवित्रेण संमार्ष्टि । तत उद्गातार उपरि पवित्रं वितन्वन्ति । ततोऽध्वर्युर्माध्यन्दिनसवनगृहीतमाग्रयणस्थालीस्थं सोमं पात्रान्तरे कृत्वा तं स्वयमेवासिञ्चति सव्येन । "प्रस्कन्दयत्यध्वर्युराग्रयणस्येति श्रुतेः ।

प्रतिप्रस्थाता चाध्वर्युसमर्पितावादित्यस्थाल्योः शेषौ पृथक्पृथगासिञ्चति । उन्नेता चाधवनीयादुदञ्चनेन चमसेन वा सोममासिञ्चति। एवं चतसृभ्यो धाराभ्योऽध्वर्युर्य देवास इत्याग्रयणस्थाल्यां दक्षिणहस्तधृतायामाग्रयणं गृह्णाति । ततो दशापवित्रेणाग्रयणस्थालीमपगृह्य हिङ्कारादि। प्रतिप्रस्थात्रादीनां वाग्विसर्गः । परिमार्ज्जनम् । आग्रयणस्य सादनम् ।

ततोऽध्वर्युराशीर्म ऊर्जमित्यनेन पूतभृत्याशिरमासिञ्चति । ततः पत्नी अदस्मै नर इत्येनं साशिरं पूतभृतमवेक्षते मध्ये ।

सरस्वत्येकया ॥९॥ पूतभृत्याशिरमासिञ्चत्याशीर्म ऊर्जमु-

ततः पाणिप्रक्षालनं, समन्वारब्धानां निष्क्रमणम्। यस्ते इति विप्रुड्ढोमः। हुत्वा वा समन्वारम्भः। अध्वर्योर्वेदितृणद्वयादानम्। उत्थितानां सर्पणम्। गृहीततृणयोरेकस्य चात्वाले प्रक्षेपो देवानामिति। ततः सदोगमनम्।

उद्गातॄणां यथास्थानमुपवेशनम्। उपविष्टेषु विसर्गः। उद्गातॄणां पुरस्तात्तूष्णीं द्वितीयतृणप्रक्षेपः। ततः पुरस्ताज्जपे कृते प्रस्तोत्रे द्वे दर्भतृणे वा कुशमुष्टिं वा प्रयच्छन्नतृणो वा सोमः पवत इति पवमानमुपाकरोति। अध्वर्युप्रतिप्रस्थातृयजमाना उद्गातॄणां पुरस्तात्प्रत्यङ्मुखा उपविशन्ति।

ब्रह्माऽपि प्रशास्तुर्दक्षिणेन उपविशति। प्रथमप्रस्तावकाले यजमानोऽसतो मा सद्गमयेत्यादीनि यजूंषि शतपथस्वरेण सकृत् जपति। स्तूयमाने पवमाने उन्नेता पूतभृतो मुखे पवित्रमन्तर्धायाधवनीये सोममासिञ्चति। ऋजीषं च वसतीवरीणां कुम्भे प्रक्षिपति।

स्तोत्रान्तेऽध्वर्युरुत्तिष्ठन्प्रेष्यति अग्नीदग्नीन् विहर, बर्हिः स्तृणीहि, पुरोडाशाँ अलंकुरु, इत्यग्नीधम्, प्रतिप्रस्थातः पशौ संवदस्वेति प्रतिप्रस्थातारम्। ततोऽग्नीदाग्नीध्रीयाद्धोतृधिष्ण्यादिषु सर्वेष्वङ्गारान्विहरति।

ततोऽन्तःपात्यादारभ्योत्तरवेदिं यावत् पृष्ठ्याया उपरि बर्हिस्तूष्णीं स्तृणाति। तत आज्यस्थालीं वेदं स्रुचं चादाय शालायां गत्वा पुरोडाशविभस्मीकरणादि, प्राणदानं, कपालोद्वासनं, कर्परोद्वासनं च करोति। इन्द्रं गच्छ, इन्द्रं हरिवन्तं गच्छ, इन्द्रं पूषण्वन्तं गच्छ, इन्द्रं सरस्वतिवन्तं गच्छ, सोमं गच्छ, वरुणं गच्छेति विशेषः।

प्रतिप्रस्थाता स्फ्यमादाय गत्वा पृच्छादिति द्वितीयं शमित्रनुशासनं करोति। ततः शमिता हृदयं शूलान्निःकाश्य सर्वावदानानामुपर्युखायां निदधाति। शूलं चाऽध्वर्यवे प्रयच्छति। अध्वर्युः शूलं स्फ्योपरि निदधाति न भूमौ नाप्युदके। ततः प्रतिप्रस्थाता जुह्वां पृषदाज्यस्थाल्याः पृषदाज्यं समानीय चात्वालोत्करावन्तरेण निष्क्रम्य शमितारं प्रत्यागच्छन् शृतं हविः शमितेत्यादि करोति।

ततोऽध्वर्योरेव हृदयाभिघारणं, तद्व्यतिरिक्तमांसान्याज्येन पृषदाज्येन वाऽभिघारयति। तत उद्वासनम्। अग्निं गच्छेति अञ्जनं, चात्वालोत्करावन्तरेणाहरणं, दक्षिणत आसादनं, नात्मालम्भः, जुह्वादिषूपस्तारः, हिरण्यावधानं, मनोताप्रैषः, जौहवानां जुह्वामवदानं, औपभृतानामु-

त सुप्रजास्त्वमिषं दधातु द्रविण्ꣳ सुवर्चसम्। सञ्जयन् क्षेत्राणि सहसाऽहमिन्द्र कृण्वानो ऽन्यानधरान्त्सपत्ना-

पभृति, पुनर्हिरण्यावधानं, उभयत्र सकृदभिघारः, वसाग्रहणं, द्विर-भिघारः ।

ततो वसाशेषस्येडापात्र्यामासेकः । क्रोडस्यानस्थिमतां च प्रासनं श्रोणिवर्जम्। द्विरभिघारः। जाघनीगुदयोर्निधानम। पत्नी पशुसंमर्शनम्। अग्नये छागस्य हविषोऽनुब्रूहि । आश्राव्य अग्नये छागस्य हविः प्रस्थितं प्रेष्य। अर्द्धर्चान्तरे प्रतिप्रस्थातुर्वसाहोमः। वषट्कृते प्रधानावदानहोमः। इदमग्नये ।

ततः प्रदक्षिणावर्तनादि । वनस्पतिस्विष्टयागौ । दिग्व्याघारणं, स्रुचोः सादनम्। नात्र संचराभ्युक्षणं, प्राशित्रसमर्पणं, अप उपस्पृश्येडामन्तरा यूपाग्नी प्रत्याहृत्य सदसि होत्रे समर्पयति। प्रतिगृह्य पर्वाञ्जनादि मयीदमिति जपान्तम् ।

क्लोमादीनां नियमेन समर्पणम। मैत्रावरुणप्रतिप्रस्थातृसहितानां हविर्यज्ञर्त्विजामिडाभक्षणं, यजमानस्य च। मार्जनम्।

ततः सवनीयासादनम्। आलम्भः । स्रुचावादाय यजप्रैषावाज्यभागौ। ततो जुह्वामुपभृति चोपस्तारः। पुरोडाशादीनां द्विर्द्विरवदानम्। अवद्यतो वा अवदीयमानेषु वा अवदाय वाऽ नुवाचनम्— तृतीयस्य सवनस्येन्द्राय पुरोडाशानामनुब्रूहीति। उपरि सकृदभिघारः। प्रत्यवदानं क्षताभ्यङ्गः। उपभृति स्विष्टकृद्दवदानं, द्विरभिघारः। अतिक्रम्याश्राव्य तृतीयस्य सवनस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति मैत्रावरुणं प्रति प्रैषः। वषट्कृते होमः। इदमिन्द्राय हरिवते पूषण्वते सरस्वतिवत इति त्यागः। इदमिन्द्रायेति वा सवनीयेषु निर्गुणः स्विष्टकृद्यागः। इदमग्नये। स्रुचोर्निधानम्।

सञ्चराभ्युक्षणम्। प्रशित्रावदानम्। समर्पणम्। अप उपस्पृश्येडावदानम्। षडवत्तब्रह्मयजमानभागानां च। इडाया होतृधिष्ण्ये निधानम्। पाणिप्रक्षालनम्। उन्नीयमानेभ्योऽनुब्रूहीति मैत्रावरुणं प्रति प्रैषः। तत उन्नेता दश चमसानुत्तरवेदिमपरेण निधाय पूतभृत एवोन्नयनं करोति। शुक्राभावादुपस्ताराभावः।

ततोऽनुवचनान्ते अच्छिन्नस्येति यजमानस्य जपः। ततोऽध्वर्युर्होतृचमसं गृह्णाति। चमसाध्वर्यवश्चेतरान्नव चमसान् गृह्णन्ति। अध्वर्युराश्राव्य तृतीयस्य सवनस्य ऋभुमतो विभुमतो वाजवतो बृहस्पतिमतो विश्वदे-

**निति ॥६॥ अदस्मै नर इत्येनमवेक्षते पत्नी ॥७॥ समन्वारब्धानिष्क्रमणादि करोति माध्यन्दिनवत् ॥८॥ पशौ संवदस्वेत्युपचयस्थाने ॥९॥ प्रातः सवनप्रभृत्या संवादाच्छुतेः ॥१०॥ शामित्रनुशासनप्रभृतीडान्तं कृत्वा पुरोडाशादि चेडाभक्षात् ॥११॥ चमसैरेव ॥१२॥ होतृचमसं गृहीत्वाऽऽश्राव्याह तृतीयस्य सवनस्य ऋभुमतो विभुम-**

न्यावतस्तीव्राँ आशीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति मैत्रावरुणं प्रेष्यति । वषट्कारानुवषट्कारयोस्तूष्णीमेव होमः । चमसाध्वर्यूणां च होतृब्रह्मोद्गातृयमानचमसानां द्विर्होमः । इतरेषां गणानां सकृत् । इदमिन्द्राय इदमग्नय इति त्यागौ । प्रेतु होतुश्चमस इत्यत्र शुक्रस्याभ्युन्नयध्वमित्यस्य स्थाने आशीर्वतोऽभ्युन्नयध्वमिति प्रैषः ।

ततो होत्रादिचमसानां चतुर्णां सदसि नयनम् । प्रशास्त्रादिचमसेष्वाशीर्वतः पूतभृत एव सकाशाच्चमसाध्वर्यव एवोन्नयनमेवं कुर्वन्ति ।

ततोऽध्वर्योः प्रशास्तृचमसं गृहीत्वा प्रशास्तर्यज । प्रतिषट्कारं होमः । इदं मित्रावरुणाभ्याम्, इदमग्नये । चमसप्रस्थापनम् । ब्रह्मचमसं गृहीत्वा ब्रह्मन्यज । प्रतिवषट्कारं होमः । इदमिन्द्राय । चमसप्रस्थापनम् । होतृचमसमादाय पोतर्यज । प्रतिवषट्कारं होमः । इदं मरुद्भ्यः, इदमग्नये ।

चमसप्रस्थापनम् । नेष्टृचमसमादाय नेष्टर्यज । प्रतिवषट्कारं होमः, इदं त्वष्ट्रे, इदमग्नये । चमसप्रस्थापनम् । अच्छावाकचमसं गृहीत्वा अच्छावाक यज, प्रतिवषट्कारं होमः, इदमिन्द्राविष्णुभ्याम्, इदमग्नये । चमसप्रस्थापनम् । ततोऽग्नीध्रचमसं गृहीत्वाऽऽश्राव्य यजति । प्रतिवषट्कारं होमः, इदमग्नये, इति द्वावपि त्यागौ ।

मैत्रावरुणचमसहोमानन्तरमग्नीध्रचमसहोमानन्तरं चोपविश्य तृम्पन्त्विति जपः । सदो गत्वा अयाडग्नीदिति ब्रुवन् होतुरग्रे प्रत्यङ्मुख उपविशति। ततो होतुरिडासमर्पणं, पर्वाञ्जनं, अवान्तरेडावदानं, इडोपहवः । षडवत्तसमर्पणं, चतुर्द्धाकरणाभावः, मयीदमिति जपः, होतुरवान्तरेडाप्राशनं, यजमानस्य सवनप्रार्थना ।

ततः प्रस्थितयागसंबन्धिचमसानां भक्षः। तत्र होतृचमसे होत्रध्वर्वोर्भक्षः, ततो होतुः सर्वचमसेषु वषट्कारनिमित्तो भक्षश्चमसिनः पृष्ट्वा। पुनरभ्युन्नीतेष्वध्वर्युं च पृष्ट्वा ब्रह्मादीनां स्वस्वचमसेषु होतारं पृष्ट्वा समाख्यानिमित्तो भक्षः। प्रशास्त्रादीनां होतारमध्वर्युं च पृष्ट्वेति विशेषः। हो-

**तो वाजवतो बृहस्पतिमतो विश्वदेव्यावतस्तीव्राँ २॥ आशीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्येत्याशीर्वत इति शुक्रस्थाने ॥१३॥ प्रागिडाभक्षात्कविधाने यथास्वं चमसेषूपास्यन्ति पुरोडाशमात्रा अनुदकाः पिण्डपितृयज्ञवद्दानप्रभृति प्रागवघ्राणात्॥१४॥ यजमानपितृभ्यो वा तस्य फलाधिकारात् ॥१५॥ भक्षयित्वेडामुपांशवन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहणं वाममद्येति काले पात्नीवतमितरेण ॥१६॥ ५ ॥**

---

शुश्च स्वचमसे समाख्यानिमित्तो भक्षः। एवं प्रस्थितयानिमित्तं भक्षणं समाप्तम्।

अथ प्रशास्त्रादिचमसेषु होतारं प्रशास्त्रादींश्च पृष्ट्वाऽध्वर्योर्भक्षः। ततः प्रशास्त्रादीनां होतारमध्वर्युं च पृष्ट्वा वषट्कारसमाख्यानिमित्तौ भक्षौ तन्त्रेण पृथग्वा। असर्वभक्षाश्चमसाः। यथास्वं चमसाप्यायनं प्रातः सवनवत्। चमसानां हविर्द्धानमध्ये दक्षिणहविर्द्धानाक्षस्य पश्चान्निधानम्।

ततः सयजमानाः षोडर्त्विजः पुरोडाशमात्रा आदाय स्वचमससंनिधौ हविर्द्धानमध्ये पितृपितामहप्रपितामहेभ्यः पिण्डपितृयज्ञवत्पिण्डदानं कुर्वन्ति। तत्र नीविकरणम्, लेखोल्मुकप्रथमावनेजनसकृदाच्छिन्नस्तरणानामभावः। नामगोत्राभ्यां पिण्डदानं पितृयज्ञवत्।

अत्र पितर इत्यादिजपः। आवृत्योदङ्ङासनम्। पर्यावृत्यामीमदन्तेति जपः। प्रत्यवनेजनाभावः। नीविविस्रंसनम्। अञ्जलयः। सूत्रदानम्। गृहान्न इति जपः। येषामृत्विजां चमसा न सन्ति ते संनिहितचमसे पिण्डदानं कुर्वन्ति। यथा नेष्टृचमसेऽध्वर्य्वादयः। होतृचमसे ग्रावस्तुत्।

उद्गातृचमसे सुब्रह्मण्यः। ततो ब्रह्महोत्रध्वर्य्वग्नीत्प्रशास्तॄणामाग्नीध्र इडाभक्षः। यजमानस्य हविःशेषभक्षो नेडायाः। समस्य मार्जनम्। प्रस्तरे पवित्रकरणं, भागसमर्पणम्। अत्र शाखाया आहवनीये प्रहरणं, न प्रातःसवने। नापि माध्यंदिने। अध्वर्योरेव उपवेषहोमः। पिष्टलेपाहुतिः। प्रणीताविमोकः। राक्षसभागः। सवनीयभागावेक्षणं, भागप्राशनं च। ततोऽध्वर्योः पाणिप्रक्षालनम्।

हविर्द्धानं प्रविश्योपांशुपात्रेऽन्तर्यामपात्रे वा आग्रयणाद्वाममद्येति मन्त्रेण सावित्रग्रहणं, परिमार्जनं, सादनाभावः।

इति दशमस्य पञ्चमी कण्डिका ॥ ५ ॥

देवाय सवित्रेऽनुवाचयति ॥१॥ अभक्षितेन महावैश्वदेवग्रहणमुपयामगृहीतोऽसि सुशर्मासीति ॥२॥ होता शꣳसति ॥३॥ एकया च दशभिश्चेति शस्यमाने द्विदेवत्यानि प्रतिप्रस्थाता प्रक्षाल्य खरे निदधाति ॥४॥ प्रयावा यज्ञैरित्येतासु मदामो दैवेति त्रिः प्रतिगरः ॥५॥ स्वादुष्किलीयासु चेच्छन् ॥६॥ आ पात्रप्रक्षालनात्कृत्वा सौम्येन चरति ॥७॥ आज्येनोभयतः परियजति ॥८॥ अन्यतरतो वा ॥९॥ घृतस्य यजेत्याह घृतशब्द उपांꣳशु

---

देवाय सवित्रेऽनुब्रूहीतित्यनुवाचनं, अतिक्रम्याश्राव्य देवाय सवित्रे प्रेष्येति प्रैषः । सर्वहोमः । नानुवषट्कारः । इदं देवाय सवित्र इति त्यागः । ततो हविर्द्धानं प्रविश्य येन पात्रेण सावित्रो गृहीतस्तेनैव पूतभृतः सकाशान्महावैश्वदेवं गृह्णाति उपयामगृहीतोऽसि सुशर्मासीति मन्त्रेण । परिमार्जनं, प्रदक्षिणावर्त्तनमितरथावर्त्तनं च ।

तत एष ते योनिरिति पात्रस्थाने खरे सादनम् । ततः सदो गत्वा होतुः पुरस्तात्प्राङ्मुखोपवेशनम् । आहूतस्यावृत्य प्रतिगरः । तत्र शस्त्रे एकया च दशभिश्चेति शस्यमाने प्रतिप्रस्थाता द्विदेवत्यपात्राणि मार्जालीये प्रक्षाल्य खरे स्वस्थाने निदधाति ।

प्रयावा यज्ञैरित्येतासु शस्यमाना सुतिसृणामृचामर्द्धर्चेषु मदामो दैवेति प्रतिगरो भवति । प्रणवे तु प्राकृत एव । शस्त्रान्ते ओ ३ मिति प्रतिगरः । प्रदक्षिणावर्त्तनं, वैश्वदेवग्रहोपादानं, चमसाध्वर्यूणां चमसादानं, आश्राव्योक्थशा यज सोमस्येति प्रैषः । वषट्कारानुवषट्कारयोर्होमः । प्रदक्षिणेतरथावृत्ती । प्रातःसवनवत् त्रिश्चमसकम्पनं, इदं विश्वेभ्यो देवेभ्यः, इदमग्नय इति त्यागो ।

होत्रध्वर्युभ्यां ग्रहशेषभक्षणं, चमसिनामनुपहूयैव स्वस्वचमसभक्षणं, सर्वभक्षाश्चमसाः । मार्ज्जालीये चमसग्रहपात्रप्रक्षालनम् । ग्रहपात्रस्य खरे स्थापनम् । चमसानामुत्तरवेदेः पश्चात् । ततः सौम्यचरुणा यागः । चरोरासादनं, आलम्भः । जुहूं वेदं च गृहीत्वा ध्रुवातश्चतुर्गृहीतं गृहीत्वाऽऽश्राव्य घृतस्येत्युपांशु यजेत्युच्चैः । इदमग्नये ।

ततो जुह्वां ध्रुवात उपस्तीर्य द्विश्चरोरवदायोपरिष्टादभिघार्याश्राव्य सौम्यस्य यजेत्युक्त्वा वषट्कृते जुहोति । इदं सोमाय । पुनश्चतुर्गृही-

॥१०॥ सौम्यस्य यजेति सौम्येन चरन् ॥११॥ यावदुक्तं सौम्यस्य पुनर्ग्रहणात् ॥१२॥ आज्यमासिच्योद्गात्रे सौम्यं प्रयच्छति । चतुर्गृहीतं प्रचरण्या धिष्ण्येषु जुहोति यथान्युप्तं प्रभावयञ्छालाकान्प्रदीप्य विभूरसीति प्रति

---

त्वाऽऽघृतस्येत्युपांशु यजेत्युच्चैः । इदं विष्णवे । अथवा घृतयागः पूर्वं वा पश्चाद्वा, तदा च इदमग्नाविष्णुभ्यामिति त्यागः ।

ततोऽध्वर्युः सौम्यचरुमध्ये लौकिकमाज्यमासिच्य सौम्यं चरुं सदसि नीत्वोद्गात्रे समर्पयति । ततः पूर्वतरं होता उद्गात्रे ह्रियमाणमध्वर्युहस्तस्थितमेवावेक्षते ।

ततोऽध्वर्युः प्रचरण्यामाज्यस्थाल्यां चतुर्गृहीतं गृहीत्वा शालाकान्प्रदीप्य प्रदीप्याग्नीध्रीयादिधिष्ण्येषु विभूरसीति प्रतिमन्त्रमेकैकं चतुर्गृहीतं विभज्याष्टसु स्थानेषु जुहोति । तिसृभिः शरवीरणादिशलाकाभिरेकः शालाकः । एवं विधास्त्रयः शालाकाः प्रतिधिष्ण्यमादीप्यन्तेऽग्निषु । शान्तेषु स्वयोनेराग्नीध्रीयाच्छालाकानादीप्य धिष्ण्येष्वाग्नीध्र एव निदधाति ।

ततस्तेषु जुहोति । तत्र क्रमः । प्रथमं पूर्वद्वारेणाग्नीध्रं प्रविश्य धिष्ण्यस्य पुरस्तात्प्राङ्मुख उपविश्याग्नीध्रीये विभूरसीति जुहोति, इदं विभुवे प्रवाहणाय । ततः पूर्वद्वारेणाग्नीध्रीयान्निष्क्रम्य पूर्वद्वारेण सदः प्रविश्य प्रत्यङ्मुखो होतृधिष्ण्ये वह्निरसीति जुहोति धिष्ण्ये । इदं वह्नये हव्यवाहनाय ।

ततः पूर्वेणौदुम्बरीं गत्वा प्रत्यङ्मुखः प्रशास्तृधिष्ण्ये श्वात्रोऽसीति जुहोति । इदं श्वात्राय प्रचेतसे । तथैव प्रत्यागत्य ब्राह्मणाच्छंसिधिष्ण्ये तुथोऽसीऽति। इदं तुथाय विश्ववेदसे । ततः पोतृधिष्ण्ये उशिगसीति । इदमुशिजे कवये ।

ततो नेष्टृधिष्ण्ये अङ्घारिरसीति । इदमङ्घारये बम्भारये । ततोऽच्छावाकधिष्ण्ये अवस्यूरिति । इदमवस्यवे दुवस्यवे। सदोमध्येषु सर्वधिष्ण्येषु प्रत्यङ्मुख एव जुहोति । "प्रत्यङ्ङासीनः सर्वान् धिष्ण्यान्व्याघारयती"ति कठमैत्रसूत्रयोर्दर्शनात् ।

ततः पूर्वद्वारेण सदो निष्क्रम्य मार्जालीयं गत्वा प्रत्यङ्मुख एव शुन्ध्यूरसीति जुहोति । इदं शुन्ध्यवे मार्जालीयाय ।

ततो यथागतं प्रत्यागत्य पश्चिमेन हविर्द्धानमाग्नीध्रीयं दक्षिणेन

**मन्त्रम् ॥१३॥ आग्नीध्रीये पुनः पश्चादिच्छन् ॥१४॥ उपयामगृहीतोसि बृहस्पतिसुतस्येति प्रतिप्रस्थाता पात्नीवतं गृह्णाति ॥१५॥ प्रचरणीशेषेण श्रीणात्येनमहं परस्तादिति ॥१६॥ अग्नी३ पात्नीवतस्य यजेत्याह ॥१७॥ अग्ना३इ पत्नीवन्नित्युत्तरार्धे जुहोति ॥१८॥ प्रेष्यति चाग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा संख्यापयोन्नेतर्होतुश्चमसमनून्नय सोमं माऽतिरीरिचा इति ॥१९॥ प्रभावयेत्युक्थ्यादिषु ॥२०॥ आग्नीध्रे भक्षणं वषट्कारोपह्वानाभ्याम् ॥२१॥ सपात्र आसीदति नेष्टुरुपस्थम् ॥२२॥ अत्र**

---

गत्वोत्तरवेदिं प्रति गच्छन्ति । केचिदाग्नीध्रीये पुनस्तूष्णीं जुह्वति । यदा अध्वर्युर्धिष्ण्यानां व्याघारणं करोति तदैव प्रतिप्रस्थाता हविर्द्धानं प्रविश्याग्रयणादुपांश्वन्तर्यामपात्रयोर्मध्ये पूर्वं येन पात्रेण सावित्रो गृहीतो न भवति तेन गृह्णातीत्यर्थः ।

उपयामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम त इति मन्त्रेण । एवं गृहीत्वा हविर्द्धानस्य पूर्वद्वारेण ग्रहमादायोपविशति । अध्वर्युर्धिष्ण्याव्याघारणानन्तरं तत्रागत्य तृणं अन्तर्धाय प्रचरणीशेषेण पात्नीवतं ग्रहमहं परस्तादिति मन्त्रेण श्रीणाति ।

ततोऽध्वर्युर्ग्रहं सव्ये हस्ते कृत्वा परिमार्ष्टि । सादनाभावः । उत्थायातिक्रम्याश्राव्याग्नीत्पात्नीवतस्य यजेति प्रषः । ततोऽग्ना३इ पत्नीवन्निति मन्त्रेणाग्नेरुत्तरार्द्धे यजतिस्थाने तिष्ठन्नेव वषट्कृते जुहोति, इदमग्नये पत्नीवते । नानुवषट्कारः ।

सशेषं पात्रमादायाग्नीध्रे गत्वोपविश्याध्वर्युरग्नीदुपह्वयस्वेति पृच्छति । उपहूत इत्युक्त्वा आग्नीध्रोऽध्वर्य उप माऽऽह्वयस्वेत्यध्वर्युं प्रत्याह ।

ततोऽध्वर्युरुपहूत इत्युक्त्वा आग्नीध्र एवोपविष्टः प्रेष्यति । अग्नीन्नेष्टुरुपस्थमासीदेत्यग्नीधं प्रेष्यति । नेष्टः पत्नीमुदानयोद्गात्रा संख्यापयेति नेष्टारम् ।

उन्नेतर्होतुश्चमसमनून्नय सोमं माऽतिरीरिच इत्युन्नेतारम् । ततोऽग्नीत्पात्नीवतपात्रसहित एव सदो गत्वा नेष्टुरुत्सङ्गे उपविशति । ततः सदस्येवाध्वर्य्वाग्नीध्रौ पात्नीवतशेषं भक्षयतः । ततोऽग्नीदुत्सङ्गादुत्थाय मार्जालीये पात्नीवतपात्रं प्रक्षाल्य खरे स्थापयति ।

वा भक्षणं पात्रहरणसामर्थ्यात् ॥२३॥ अग्नीत्प्रक्षाल्य पात्रं खरे करोति ॥२४॥६॥

यज्ञायज्ञियᳬ स्तोत्रमुपाकरोति होतृचमसमुपस्पृश्य ॥१॥ प्रोर्णुते चेच्छन्नुद्गातृवत् ॥२॥ पत्नीᳬ सदः प्रवेश्यापरेणोत्तरत उपविष्टामुद्गात्रा समीक्षयति प्रजापतिर्वृषाऽसीति ॥३॥ पान्नेजनीभिराभिषिञ्चति विवृत्य दक्षिणोरुम् ॥४॥ उद्गात्राऽनुज्ञाता गच्छति, ईक्षिता वा त्रिः ॥५॥ एवा न इन्द्रो मघवेति शस्यमाने ध्रुवं होतृचमसेऽवनयति ध्रुवं ध्रुवेणेति ॥६॥ अवनयामि-स्थाने गृह्णामीति वा ॥७॥ वैश्वानरं यजमानस्य गृहीतश्चेत् ॥८॥ पात्रप्रक्षाल-

---

तत उन्नेता अपरेणोत्तरवेदिं होतृचमसादीन्दश चमसान्निधाय पूतभृतो निःशेषं सोमं चमसेषु विभज्योन्नयति । होतृचमसे स्वल्प, तस्मिन् शस्त्रान्ते ध्रुवस्य निनयनविधानात् ॥

इति दशमस्य षष्ठी कण्डिका ॥ ६ ॥

---

ततोऽध्वर्युस्तृणाभ्यां होतृचमसस्थं सोमं पृष्ट्वा अकर्णप्रावृतः आकर्णप्रावृतो वा पुरस्ताज्जपे कृते प्रस्तोत्रे तृणे समर्पयन्नुपावर्तध्वमिति मन्त्रेण यज्ञायज्ञियं स्तोत्रमुपाकरोति ।

ततो नेष्टा अपरेण द्वारेण पत्नीं बाहुगृहीतां सदो मध्ये प्रवेश्योद्गातृणामुत्तरत उपविष्टां पत्नीमुद्गात्रा सह समीक्षणं कारयति पत्न्युद्गातारमीक्षस्वेत्यध्येषणया । तद्धिकारवेलायां पत्नी प्रजापतिर्वृषाऽसीति मन्त्रेणोद्गातारमीक्षते ।

ततो निधनवेलायां पत्नी स्वं दक्षिणमूरुं वस्त्रपराकरणेन विवृतं कृत्वा पान्नेजनीभिः स्वयमेवाभिषिञ्चति । एवमेव प्रतिहिंकारमुद्गातुरीक्षणं प्रतिनिधनं चोर्वासेकं च स्तोत्रसमाप्तिपर्यन्तं करोति । उद्गात्राऽनुज्ञाता सती तत उत्थाय पत्नी शालायां गच्छति ।

अथवोद्गात्रा त्रिर्वारमीक्षिता सती गच्छति । अस्मिन्पक्षे वारत्रयं प्रेक्षितयोद्गात्रा त्रिर्निरीक्षणम्, वारत्रयमूर्वासेकश्च भवति । स्तोत्रान्ते होताऽऽग्निमारुतं शस्त्रं शंसति ।

नान्तेऽनुयाजाः समिद्वादि ॥९॥ उक्थ्यविग्रहणमुत्तरेष्विन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामिति ॥१०॥ स्तुतशस्त्रे अधिके षोडशी चेत् ॥११॥ तृतीयसवने प्रसवः ॥१२॥ स्रुग्व्यूहनमग्नेर्वनस्पतेरिन्द्रस्य वसुमतो रुद्रवत आदित्यवत ऋभुमतो विभुमतो वाजवतो बृहस्पतिमतो विश्वदेव्यावतः सोमस्योज्जितिमित्यग्निर्वनस्पतिरिन्द्रो वसुमान् रुद्रवानादित्यवानृभुमान्विभुमान्वाजवान् बृहस्पतिमान्विश्वदेव्यावान्त्सोमस्सपत्नानुदन्त्विति ॥१३॥ पशुदेवतावनस्पतिभ्यां वा सोमोपदेशा-

तत्राध्वर्युः पूर्वं होतुः पुरस्तात् प्राङास्ते । शोंसावेति होत्राऽऽहूतः प्रदक्षिणमावृत्य संमुखो भूत्वा प्रतिगृणाति । अस्मिन् शस्त्रे स्वादुः किलायमित्याद्यासु तिसृष्वृक्षु मर्द्धर्चेषु मदामो दैवेति प्रतिगरः । इच्छया प्रणवेषु प्राकृत एव ।

एवा न इन्द्रो मघवेत्यस्यां शस्त्रस्यान्त्यायामृचि शस्यमानायां विरोधात्प्रतिप्रस्थाता ध्रुवं ग्रहं ध्रुव ध्रुवेणेति मन्त्रेण सर्वं होतृचमसेऽवनयति ।शस्त्रान्ते ओमिति प्रतिगरः । नात्र प्रदक्षिणावृत्तिरग्रहत्वात् । अध्वर्युर्होतृचमसमादत्ते । चमसाध्वर्यवश्चमसान् ।

अतिक्रम्याश्राव्योक्थशा यज सोमानामिति प्रैषः । प्रतिवषट्कारं सर्वेषां होमः। इदमग्नये मरुद्भ्यः, इदमग्नय इति त्यागौ। नात्र प्रदक्षिणावृत्तिरग्रहत्वादेव । ततः सदसि गत्वा होत्रध्वर्योरुद्गातृचमसे भक्षः ।

होतुर्ब्रह्मादिसर्वचमसेषु तान् पृष्ट्वा वषट्कारनिमित्तो भक्षः । ब्रह्मादीनां च स्वस्वचमसे होतुः समाख्यानिमित्तो भक्षः ।

सर्वे भक्षांश्चमसांश्चमसाध्वर्यवो मार्जालीये प्रक्षाल्य चात्वालस्य पश्चाद्दोत्रादिक्रमेणोदकसंस्थान् स्थापयित्वोदकेन पूर्णान् कुर्वन्ति । तत उल्मुकसमासादि धारानुयाजान्तं पशुवत् ।

पयस्यापक्षे स्वरुहोमः । ततः स्रुचौ सादयित्वा व्यूहनम् । अग्नेर्वनस्पतेरिन्द्रस्य वसुमत इति जुह्वाः । अग्निर्वनस्पतिरिन्द्रो वसुमानित्युपभृतः । ततः स्रुचोरभ्युक्षणं, परिध्यञ्जनादिस्रुग्विमोकान्तम् । शाखायास्तृतीयसवनीयसमाप्तौ प्रहृतत्वात्केवलस्य प्रस्तरस्य होमः ।

प्रस्तरहोमे इदमग्नये वनस्पतये इन्द्राय वसुमते रुद्रवत आदित्यवते

दितरासाम् ॥१४॥ सर्वा वा सवनीयसौम्यभावात् ॥१५॥

विमुच्य स्रुचौ द्रोणकलशे हारियोजनग्रहणमुपयामगृहीतोऽसि हरिरसीति ॥ १ ॥ धानाश्चावपति हर्योर्धाना इति ॥ २ ॥ उन्नेताऽनुवाचयति मूर्धनि कृत्वा धानासोमेभ्यो ऽनुब्रूहीति ॥ ३ ॥ आश्राव्याह धानासोमान्प्रस्थितान् प्रेष्येति ॥४॥ भक्षः हरिरसीत्युक्त्वा ॥ ५ ॥ उत्तरवेदौ वा निधाय विलाभम् ॥ ६ ॥ यस्ते अश्वसनिरिति प्राणभक्षं भक्षयित्वोत्तरवेदौ निवपन्ति ॥ ७ ॥ शाकलाधानं देवकृतस्येति प्रतिमन्त्रम् ॥ ८ ॥ अपरेण चात्वालं यथास्वं चमसान्पूर्णपात्रानवमृशन्ति हरितकुशानवधाय संवर्चसेति ॥ ९ ॥ मुखान्यालभन्ते ॥ १० ॥ दधि-

ऋभुमते विभुमते वाजवते बृहस्पतिमते विश्वदेव्यावते देवेभ्य आज्यपेभ्योऽग्नये होत्राय वाजिभ्य इति त्यागः ।

इति दशमस्य सप्तमी कण्डिका ॥ ७ ॥

स्रुग्विमोकानन्तरं प्राकृतं च विकृताविति न्यायेन वेद्या आलम्भे कृते अध्वर्युः पाणी प्रक्षाल्य हविर्धानं प्रविश्य द्रोणकलशे आग्रयणादुपयामगृहीतोऽसि हरिरसि हारियोजन इति हारियोजनं गृह्णाति आग्रयणस्थाल्यव । सव सोमं द्रोणकलशमध्ये निनयतीत्यर्थः ।

ततो द्वे दर्भतृणे प्रागग्रे उदगग्रे वा द्रोणकलशस्योपरि निधाय हर्योर्धाना स्थेति लौकिकधानाभिः श्रयणं कार्यं, परिमार्जनं, सादनाभावः । तत उन्नेता मूर्धनि द्रोणकलशं निधाय धानासोमेभ्योऽनुब्रूहीति प्रशास्तारं प्रेष्यति ।

तत आश्राव्य धानासोमान् प्रस्थितान्प्रेष्येति वाक । वक्रीभूय द्रोणकलशेनैव प्रतिवषट्कारं धानामिश्रं सोमं जुहोति । सोमं सर्वहुतं धानांश्चासर्वहुतान् करोति । इदमिन्द्राय हरिवते, इदमग्नये । पक्षे असर्वहोमः ।

अस्मिन्पक्षे सदसि द्रोणकलशमुन्नीयोन्नेतुर्होतुश्च सोपहवं भक्षणम् । सर्वहुतपक्षे द्रोणकलशमुत्तरवेदौ निदधाति सदसि वा नयति ।

ततः सयजमानाः षोडशर्त्विजो द्रोणकलशात्तिस्रस्तिस्रो धाना गृही-

क्राण इत्याग्नीध्रे दधिभक्षणम् ॥ ११ ॥ पत्नीसंयाजाः पशुवत् ॥ १२ ॥ समिन्द्र ण इति नव समिष्टयजूंषि जुहोति प्रतिमन्त्रम् ॥१३॥ आसन्द्यौदुम्बर्यौ चात्वाल हरति । सोमलिप्तं च ॥१४॥ कृष्णविषाणमेखले चात्वाले प्रास्यति माऽहिर्भूरिति ॥१५॥ प्रतिप्रस्थाता च शङ्कु-

---

त्वा सदस्येव यस्ते अश्वसनिरिति घ्राणा अवघ्रायोत्तरवेदौ प्रक्षिपन्ति ।

ततः सर्वेऽपि देवकृतस्यैनस इति प्रतिमन्त्रं यज्ञियवृक्षस्य षट् षट् शकलानाहवनीये आदधाति, एकैकेन मन्त्रेणैकैकम् ।

ततश्चात्वालस्य पश्चात्स्थापितांश्चमसानुदकेन पूरयित्वा स्वयं तेषामुपरि हरितदर्भान्प्रासनप्रानुकृत्वा यथास्वं संवर्चसेत्यभिमृशन्ति स यजमानाः सर्वे ऋत्विजः । अथ तूष्णीं सर्वे मुखान्यालभन्ते । येषामृत्विजां चमसा न सन्ति ते सर्वे सन्निकृष्टानां चमसानभिमृशन्ति ।

तद्यथा अध्वर्युप्रतिप्रस्थातुन्नेतारो नेष्टृचमसं, सुब्रह्मण्य उद्गातृचमसं, ग्रावस्तुद्धोतृचमसमिति ।

ततः सर्वे सयजमाना आग्नीध्रे दधिभक्षणं कुर्वन्ति । ततो जाघनीमन्तरा यूपाग्नी प्रत्यागत्याग्नीध्रीयमुत्तरेण पत्नीशालायामपरेण शालाद्वार्यं नीत्वा पशुवत्पत्नीसंयाजाः कर्त्तव्याः ।

ततो दक्षिणाग्नावाहुतिद्वयहोमः । वेदस्तोककर्मिमाकः । ततो बर्हिषो मुष्टिं सव्ये गृहीत्वाऽध्वर्युस्तिष्ठन् ध्रुवयैव समिष्टयजूंषि जुहोति समिन्द्र णो मनसा इत्यादिभिः ।

तत्र प्रथमे इदं विश्वेभ्यो देवेभ्यः । द्वितीये संवर्चसा० इदं त्वष्ट्रे २ । धाता रातिः स० इदं धात्रे प्रजापतये देवायाग्नये त्वष्ट्र विष्णवे च ३ । सुगा वो देवाः स०इदं देवेभ्यः । ४ यां आ वह० इदमग्नये ५ । वयर्ठ० हि त्वा० इदमग्नये ६ । देवा गातुविदो० इदं वाताय ७ । यज्ञ यज्ञं० इदं यज्ञाय ८ । एष ते० इदं यज्ञपतये ९ ।

तत आसन्द्यौदुम्बर्या चात्वालं प्रति नयति । पूतभृदाधवनीयस्थालीचमसोलूखल द्रोणकलशग्रावपवित्रद्वयसंभरणीपरिप्लवाऽधिषवणचर्मादीनि सर्वाणि सोमलिप्तानि च चात्वालं प्रति हरति ।

ततोऽध्वर्युर्यजमानसकाशात् कृष्णविषाणमेखले आदाय माऽहिर्भूरिति मन्त्रेण चात्वाले प्रास्यति ।

ततः प्रतिप्रस्थाता पत्न्याः शङ्कुयोक्त्रे आदाय तूष्णीं चात्वाले प्रास्य-

योक्त्रे तूष्णीम् ॥१६॥ उरु हीति वाचयति यजमानम् ॥१७॥ साम प्रेष्यति गाय ब्रूहीति वा ॥ १८ ॥ ध्वध्वोदकान्तयोश्च ॥१९ सर्वे निधनमुपयन्ति ॥२०॥ आहृतमादायावभृथं गच्छन्ति स्यन्दमानानाᳫं स्थावराः ॥२१॥ तदभावेऽन्याः ॥२२॥ नमो वरुणायेति वाचयत्यपोऽवक्रमयन् ॥२३॥ प्राश्य समिधं चतुर्गृहीतेनाभिजुहोत्यग्नेरनीकमिति ॥२४॥ अपरेण प्रयाजान्बर्हिर्वर्जम् ॥ २५ ॥ अप्सु जुहोति ॥२६॥ एककपालेनावदायं चरन्तीति॥२७॥

---

ति । स तु पत्न्या योक्त्रेण दीक्षापदे । मेखलापदे तु मेखलाया एव प्रासनम् ।

ततोऽध्वर्युश्चात्वालसमीप एव यजमानमुरुᳫं० हीति वाचयति विधश्चिदिति ब्रूहीत्येवम् ।

ततः साम गायेति प्रस्तोतारं प्रेष्यति, साम ब्रूहीति वा । ततः प्रस्तोता साम गायति । तत्र सर्वे ऋत्विजो यजमानसहिता निधनमुपयन्ति ।

ततश्चात्वालसमीपे आहृतामासन्द्यौदुम्बरीं सोमलिप्तादिकं सर्वमादाय ऋजीषकुम्भवारुणपुरोडाशसमिद्दर्भमुष्टि-जुहू-स्रुव-शृतावदानस्फ्याज्यस्थालीं परिधानार्थवस्त्राणि चादाय नद्यादिषु वहन्तीनामपां मध्ये यत्र स्थावरो ह्रदो भवति तं प्रत्यवभृथं कर्तुं सयजमानाः सर्वे ऋत्विजो गच्छन्ति ।

एवंविधानामपां सन्निकृष्टानामभावे यथालाभमपो गच्छन्ति । ततो देवयजनावभृथस्थानयोरर्धमार्गे पुनः प्रैषः साम गायेति साम ब्रूहीति वा ।

ततो गानं निधनं च सर्वं पठन्ति । ततः सर्वमाहृतदायोदकसमीपे मुक्त्वा पुनः सामप्रैषः, गाननिधाने पूर्ववत् ।

ततोऽध्वर्युर्बाहुगृहीतं यजमानमुदकमध्ये प्रवेशयन्नमो वरुणायेति तं वाचयति । ततो यावदुक्ता अवभृथेष्टिः । ब्रह्मयजमानौ जलमध्यं दक्षिणतस्तिष्ठतः ।

आज्यपुरोडाशादि सर्वं हस्ते धारणीयम् । सर्व यथास्थानं जलस्थितास्तिष्ठन्त एव सर्वं कुर्वन्ति । ततोऽध्वर्युरपः परिस्तीर्य हस्तधृताया एव स्थाल्याश्चतुर्गृहीतमाज्यं जुह्वां गृहीत्वा समिधमाधाय तस्या उपयग्नेरनीकमिति मन्त्रेण जुहोति । इदमग्नये ।

**ऋजीषस्येच्छन्नवद्येदग्नीवरुणाभ्याᳬ सर्वहुतः शेषम् ॥२८॥ ऋजीषस्य च सकृत्पूर्वे चेत् ॥२९॥ वशा एतत्कुर्यात् ॥३०॥ यजमानोक्तावाज्यभागौ बर्हिर्वर्जे चानुयाजौ**

---

वक्ष्यमाणाः सर्वा आहुतयोऽस्मिन्नेवोदकप्रदेशे होतव्याः । ततः पुनराज्यस्थाल्याः तूष्णीमेव चतुर्गृहीतं गृहीत्वा स्रुगादापने पठिते आश्राव्य समिधो यजेत्यादि । बर्हिर्वर्जिताश्चत्वारः प्रयाजास्तेनैव चतुर्गृहीतेन ग्रहीतव्याः ।

पञ्चमे इदं वरुणाय देवेभ्य आज्यपेभ्य इति त्यागः । तत आज्यस्थाल्या पयोपस्तीर्य पुरोडाशस्य मध्यात्पदान्वरुणायानुब्रूहीत्याह ।

ततः पूर्वार्द्धाद् द्वितीयं, जमदग्नीनां पश्चात् तृतीयं वा । इच्छया ऋजीषस्याप्यवदानं पुरोडाशवत् । उपरिष्टात्सकृदभिघारः । नताभ्यक्तः । आश्राव्य वरुणं यज । अप्सु होमः । इदं वरुणाय ।

ततः पुनर्जुह्वामुपस्तीर्य सकलमपि पुरोडाशं जुहूमध्ये मुञ्चन्नग्नीवरुणाभ्यामनुब्रूहीत्याह । यदि वरुणयागे ऋजीषस्य द्विरवदानं कृतं भवति तदाऽत्रापि सकृदृजीषस्यावदानं, द्विरभिघारः, आश्राव्याग्नीवरुणौ यज, उत्तरार्द्धेऽसंसृष्टहोमः इदमग्नीवरुणाभ्याम् ।

अयं षडाहुतिपक्ष उक्तः । वाजसनेयिभिरयमेव पक्षोऽनुष्ठेय इति हरिस्वामिनः ।

अथ दशाहुतिपक्ष उच्यते । यदि यजमानस्य दशाहुतिपक्षेच्छा तदा मम पक्षान्तरं कुर्वित्येवमध्वर्युं प्रति यजमानो वदति । एवमुक्तोऽध्वर्युर्दशाहुतिपक्षं करोति । तत्र बर्हिर्वर्जिताश्चत्वारः प्रयाजा इत्थमेव चतुर्गृहीतेन ।

ततो द्वावाज्यभागौ प्रकृतिवत् ध्रौवेण । ततो वरुणाग्नीवरुणयागौ यथोक्तौ । ततो बर्हिर्वर्जितौ द्वावनुयाजौ प्रकृतिवदौपभृतेन । एवं दशाहुतयः ।

अस्मिन् पक्षे हरिस्वामिभिर्विशेष उक्तः । अत्रापि संस्कृतैरेवाज्यपुरोडाशपात्रैरपो गत्वा चतुर्गृहीतं गृहीत्वा हुत्वा जुह्वामुपभृति ध्रुवायां च क्रमेण प्रकृतिवत्त्रीणि चतुर्गृहीतानि गृहीत्वा तिष्ठन्त एवागत्य प्रधानसाधारणानग्निसंस्कारान्परिधानोपवाजनसंमार्गादीनप्सु कुर्वन्तो हस्तधृतैरेवाज्यहविर्भिश्चरेयुः ।

तत्रापि चेध्मसामिधेनीहोत्रार्षेयवरणानि न कुर्युः, शाखान्तरे तदभावस्य दृष्टत्वात् । तत्रापि "चेतमेतया च सामिधेतया चाहुत्या समिन्धे

॥३१॥ अन्यतरत्कृत्वा ॥३२॥८॥

समुद्रे त इत्यृजीषकुम्भं प्लावयति ॥ १ ॥ देवीराप इति विसृज्योपतिष्ठते ॥२॥ अवभृथेति मज्जयति ॥३॥ ॥३॥ कृष्णाजिनान्तं च मा मैन्द्रयं ज्यैष्ठयᳬ श्रैष्ठयं क्योषीरिति ॥४॥ पुत्रायैनत्प्रदाय वरुणप्रघासवत्स्नानप्रभृत्यासमिदाधानात् ॥५॥ सोमलिप्तं प्रास्यति ॥६॥ अदानं पूर्वयोः ॥७॥ उद्वयमित्युन्नेत्रोन्नीता आमहीयां जपन्तो गच्छन्ति "अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान । किं नूनमस्मान् कृणवदरातिः किमु

समिद्धे देवेभ्यो जुहवानीत्यतीधमसामिधेन्यर्थस्यान्यथासिद्धत्वादिति ।
तेनास्मिन्पक्षे प्रकृतिवत् ध्रौवेणाज्यभागौ । औपभृतेनानुयाजः ।
प्रयाजप्रधानयागादिकं तु षडाहुत्युक्तप्रकारेणैवेति । अङ्गिरसामङ्गिरसः पुत्रपौत्रादीनामयं पक्षः ॥

इति दशमाध्यायस्याष्टमी कण्डिका ॥ ८ ॥

एवमन्यतरपक्षमनुष्ठायाध्वर्युः समुद्रे ते हृदयमिति मन्त्रेण ऋजीषकुम्भमप्सु तारयति ।

ततोऽप्सु तीर्णात् कुम्भाद्धस्तं विसृज्य देवीराप एष व इति तं कुम्भमुपतिष्ठते मन्त्रलिङ्गात् । ततोऽवभृथेत्युदकमध्ये कुम्भं मज्जयति अधः प्रवेशयतीत्यर्थः ।

ततो मामैन्द्रयमिति स्वकृष्णाजिनस्यान्तमप्सु प्रवेशयति । ततः कृष्णाजिनं पुत्राय दत्वा पत्नीयजमानौ मार्जनं कुर्वन्तौ स्नानं कुरुतः । तत्र यजमानः पत्न्याः पृष्ठं प्रक्षालयति पत्नी च यजमानस्य । अध्वर्युः सर्वं सोमलिप्तमुलूखलादिकमुदकमध्ये प्रक्षिपति ।

ततः सर्व ऋत्विजस्तत्र स्नान्ति । तत उन्नेता पत्नीयजमानौ उद्वयमिति मन्त्रेण बाहुगृहीतौ जलमध्याद् बहिर्निष्काशयति, प्रत्येकं मन्त्रः । अनेनैव मन्त्रेण सर्वानृत्विजः प्रत्येकं निःकाशयति उन्नेतैव ।

ततः सयजमानाः सर्वे ऋत्विज आमहीयसंज्ञामपाम सोममित्येतामृचं जपन्तो देवयजनं प्रत्यागच्छन्ति । ततश्चात्वालोत्करावन्तरेण देवयजनं प्रविशन्ति ।

धूर्निरमृतं मर्त्येष्वि"ति ॥८॥ शालाद्वार्यमपरेणास्ते यजमानः कृष्णाजिनमङ्के कृत्वा स्रुवाहुतिं जुहोति "मैन्द्रयं ज्यैष्ठयं श्रैष्ठयमग्निर्दधातु स्वाहे"ति ॥९॥ कृष्णाजिनं निधायोदयनीया प्रायणीयावत् ॥१०॥ पथ्या स्वस्तिश्चतुर्थी ॥११॥ पात्रप्रोक्षणाद्याऽऽज्यासादनात्सवनीयवत् परिव्ययणादि मैत्रावरुण्या वशाऽनूबन्ध्या ॥१२॥ स्वर्ग-

---

ततो यजमानो देवानां समिदसीत्याहवनीये समिधमादधाति । पत्नी च गार्हपत्ये तूष्णीम् । गार्हपत्योऽत्र शालाद्वार्य एव ।

ततो ब्रह्मयजमानौ अतिप्रणीतस्य दक्षिणत उपविशतः । तत एकस्रुद्बर्हिर्होमः ।

ततो यजमानः पत्नीशालायां गत्वा शालाद्वार्यस्य पश्चात्कृष्णाजिनमुत्सङ्के कृत्वोपविशति । ततोऽध्वर्युः शालाद्वार्ये आज्यं संस्कृत्यातिप्रणीतेऽग्नौ स्रुवेणाहुतिं जुहोति । मैन्द्रयं ज्यैष्ठयं श्रैष्ठयमग्निर्दधातु स्वाहेति मन्त्रेण, परिस्तरणसमिदाधाने कृत्वा । इदमग्नये ।

ततो यजमानः कृष्णाजिनं कस्मिंश्चिद्गुप्ते भूप्रदेशे निदधाति । तत उदयनीयेष्टिः प्रायणीयावत् । शालाद्वार्योऽत्राहवनीयः । प्राजाहितो गार्हपत्यः "शालामुखे उदयनीयया चरन्ती" तिकात्यायनश्रुतेः । मानवे च "निष्कासे प्रायणीयस्योदयनीयमनु निर्वपति शालामुखीये प्रचरन्ती"ति ।

तत्र चतुरासननम्, ब्रह्मोपवेशनं, प्रणीताप्रणयनम् । आहवनीयस्यैव परिस्तरणम् , पात्रासादनं प्रायणीयावत् ।

प्रायणीयायां यस्यां स्थाल्यां चरुः कृतः सैवात्र चरुस्थाली । एते मेक्षणबर्हिषी अपि तदीये एव भवतः । अत्र पथ्या स्वस्तिराज्यभागानां चतुर्थी कर्तव्या । उत्तमप्रयाजे इदमग्नये सोमायाग्नये सोमाय सवित्रे पथ्यायै स्वस्तयेऽदित्यै देवेभ्य इत्यादि ।

अत्रोपांशुत्वमपि प्रायणीयावदेव । अदितियागमात्रस्य मन्द्रप्रधानयागव्यतिरिक्ता सकलेष्टिः सर्वमुपांशु चेति । आज्यभागानन्तरं चत्वार आज्यभागाः । अग्नये सोमाय सवित्रे ततः पथ्यायै स्वस्तये ।

एते ध्रुवायाश्चतुरवदायावदाय कर्तव्याः । ततश्चरुणाऽदितियागः । ततः स्विष्टकृदादि । व्यूहने–अग्नेः सोमस्य सवितुः पथ्यायाः स्वस्तेरदित्या उज्जितिम् । अग्निः सोमः सविता पथ्या स्वस्तिरदितिस्तमपनुनन्त्विति । प्रस्तरहोमे–इदमग्नये सोमाय सवित्रे पथ्याय स्वस्तये देवेभ्य इत्या-

**वगूहनादि वा कृतत्वात् ॥१३॥ वशाऽभाव उक्षा ॥१४॥ उभयाभावे पयस्या ॥१५॥ आमावैनानाज्यभागप्रभृतीडान्तामेके ॥१६॥ उदवसानीयाऽऽग्नेयः पञ्चकपालः समारूढनिर्मथिते ॥१७॥ हिरण्यं दक्षिणाऽनड्वान्वा**

---

दि। शंयोर्वाकान्ता। परिधिप्रक्षेपः। संस्रवहोमः। धुरि स्फ्ये वा स्रुचोर्निधानं, वेद्यालम्भः, वेदयोक्त्रविमोकः। प्रतिपत्तिपक्षे ध्रौवस्य समिष्टयजुर्होमः। बर्हिर्होमः, प्रणीताविमोकः, राक्षसभागः। भागावेक्षणं, भागप्राशनम्। इत्युदयनीया समाप्ता।

अथानुबन्ध्योच्यते। सा च वशा अगर्भिणी मित्रावरुणदेवत्या भवति। तस्याश्च कलौ लोकविद्विष्टत्वात्तस्याः स्थानेऽजामालभन्ते। तत्र ब्रह्मासनं, ब्रह्मोपवेशनम्। आहवनीयशालाद्वार्यदक्षिणाग्नीनां परिस्तरणम्। दक्षिणा पूर्णपात्रवर्जम्।

पाशुकं पात्रासादनम्—अग्निहोत्रहवणीवज्जः, शम्यादृषदुपलं, पवित्रच्छेदनानि पवित्रे, स्थालीमाज्यं च, वेदश्च, इध्मत्रनृष्टयं, बर्हिश्चतुष्टयं, स्रुक्पञ्चकं, पान्नेजनीहिरण्यशकलानि, पृषदाज्यार्थं दधि, उपाकरणं, उखापच्चयं, मन्थनत्रनृष्टयम्, प्राशित्रेडापात्री, षडवत्तं, योक्त्रं, यूनः, कुशाश्च, पीठं कुशास्तीर्णम्।

ततः प्रोक्षणीसंस्कारः। पात्रप्रोक्षणम्, अग्नश्चरे निधानं, कृष्णकुटाहननं, आज्यनिर्वापः, वेदवन्धः। आग्नीध्र पत्र प्रोक्षणीस्फ्याद्यासादनं—पशुवत्पात्रसम्मार्गः, पत्नीसन्नहनं, आज्योद्वासनं, पत्न्यवेक्षणं, आज्यप्रोक्षणीनामाग्नीध्रे उत्पवनं, पशुवदाज्यग्रहणम्। तत आज्यान्यादायेध्मवर्हिषी चादाय ज्याय्यनिरिक्तमादव ियस्योत्तरतो निदधाति।

तत इध्मप्रोक्षणाद्येकपृथ्वर्हिस्तरणान्तं सवनीयवत्। समित्प्रस्तरादादानाद्याप्यालम्भोदकालम्भान्तं च। यूपोऽस्त्येव। यूपसमीपे गत्वा दिवः सूनूरिति स्वर्वगूहनम्। तत उपाकरणमन्थने नियमेन।

नियोजने मित्रावरुणाभ्यां जुष्टं०। प्रोक्षणे त्वा जुष्टम्। अधस्तादुपोक्षणान्ते एहि होतरित्यादि वपामार्जनान्ते विशेषः।

शेतान्नु मुहूर्तमित्यस्याभावः। नेष्टः पत्नीमुदानयेति प्रैषः। वपायां नाज्यभागौ। मित्रावरुणाभ्यामुस्राया वपायै मेदसोऽनुब्रूहि। उपरि छिद्रभिघारः।

मित्रावरुणाभ्यामुस्राया वपां मेदः प्रेष्येति विशेषः। नात्र प्रस्थित-

शब्दः। इदं मित्रावरुणाभ्याम्। वपामार्जनान्ते पशुपुरोडाशनिर्वापः। तत्र चतुरासनं, प्रणीताप्रणयनम्। पात्रासादनं-शूर्पं, एकादश कपालानि, कृष्णाजिनं, उलूखलमुसलं, पात्रीधान्यं, उपवेषः, संयवनोदकं, शृताबदानं, पुरोडाशपात्री, पूर्णपात्रम, कर्मापवर्गा चेति।

ततः स्फ्येोपहितपात्रीकरणादि। मित्रावरुणाभ्यां जुष्टं, प्रोक्षणादि सर्वालम्भान्तम्।

तत एतर्ह० होतृमैत्रावरुणाविति प्रैषः। स्रुचावादाय यजप्रपावाज्यभागौ।

अवद्यतोऽनुवाचनम्-मित्रावरुणाभ्यामुस्राया हविः प्रेष्येति। भागावदाननियमः। अनुयाजान्ते स्वरुहोमः। व्यूहने मित्रावरुणयोर्वनस्पते रुजितिम्। मित्रावरुणौ वनस्पतिस्तमप नुदन्तु। बर्हिर्होमानन्तरं शूलावभृथः समिदाधानान्तः। प्रणीताविमोकः। राक्षसभागः। बर्हिर्होमः। पूर्णपात्रनिनयनादिकर्मापवर्गान्तं सर्वसाधारणमत्र भवति।

इत्यनूबन्ध्या समाप्ता॥

तदभावे उस्रास्थाने वृषभ आलब्धव्यः। छन्दोगसूत्रे "अजे आजिगं मेषे ऊर्णायुमि"ति सामगानविधिपरे वाक्ये अजामेषावपि वैकल्पिकौ वशास्थाने कथितौ। तेन कलौ तत्पक्षाश्रयणमेव युज्यते।

उभयोरभावे पयस्येष्टिः। सा द्विविधा—सकला खण्डेष्टिश्च। तत्र सकलेष्टिपक्षः सुगमः। खण्डेष्टिपक्षे आज्यभागप्रभृतीडान्ता।

तत्र पदार्था लिख्यन्ते। मन्त्रेण शाखाच्छेदः। अनुमार्जनं, तूष्णीं शाखापरिवासनं, नोपवेषकरणं, पवित्रबन्धनं, पयस्यार्थं षड्वर्गस्यापाकरणं, मित्रावरुणाभ्यां भागमिति विशेषः। उपगूहनं, चतुरासनं ब्रह्मोपवेशनं, सर्वार्थपक्षे प्रणीताप्रणयनं, नादृष्टार्थत्वसंयवनार्थत्वपक्षयोः। अतिप्रणीतमुत्तरेण निधानं, तस्यैव परिस्तरणं, शालाद्वार्यस्य पश्चादुत्तरतो वा पात्रासादनम्।

अग्निहोत्रहवणी स्फ्यः, पवित्रच्छेदनानि, पवित्रे, स्थाली, आज्यं च, वेदश्च, दोहनचतुष्टयं, इध्मोऽष्टादशकाष्ठकः, प्रस्तरमात्रं बर्हिः, स्रुवो जुहूः, उपभृत, ध्रुवा च। प्राशित्रहरणे, वाजिनपात्रं, इडापात्री, योक्त्रं, यूनकुशाः, परिधयः, कुशास्तीर्णं होतृपीठमिति।

ततः सर्वसाधारणं-पूर्णपात्रं, कर्मापवर्गा चेति। ततः प्रोक्षणीः संस्कृत्य पात्रप्रोक्षणम्। असञ्चरे निधानं, आज्यानिर्वापो वेदबन्धः।

तत उपसृष्टादिपरिक्षालनान्तः शालाद्वार्ये दोहः। शालाद्वार्ये ए-

वाज्याधिश्रयणं, पयोवर्जं पर्यग्निकरणं, उदकालम्भः । पयस्यायाः श्रपणं, तप्ते पयसि दधिप्रक्षेपः ।

आग्नीध्रीये प्रोक्षणीप्रैषाद्याज्यग्रहणान्तं, ध्रुवायामेवाज्यग्रहणं, आज्यादिकमादायोत्तरवेदिं गत्वा इध्मप्रोक्षणं न वेदेः । बर्हिःप्रोक्षणं, तत्र स्रुचे त्वेति विशेषः ।

अपच्छेदाभावात्तूष्णीं प्रस्तरग्रहणं, ब्रह्मणे समर्पणं, सन्नहनविस्रंसनं, श्रोणौ निधानं, अन्यस्य वच्छादनं, तत इध्मात्समिदादानं, प्रस्तरस्य च ।

आहवनीयकल्पनं, नोल्मुकोदूहनं, परिधिपरिधानं, स्पृश्यास्पृश्ययोराधानं, सूर्यस्त्वेति जपः । आवृत्य स्तृताया एव वेदेः तृणं गृहीत्वा विधृत्योः स्तरणं, प्रस्तरस्तरणं, अभिन्यासः । स्फ्योपग्रहेण असि जुहूर्नाम्नाऽस्युपभृदिति स्रुचोरासादनम् ।

ततो वेदोपग्रहेण घृताचीति ध्रुवायाः । ततः शालाद्वार्यसमीपे गत्वा वाजिनपात्रस्थापनं, उपस्तारः ।

तत्रस्थाभिघारमदत्वा वा वाजिननिषेकः । ततः श्रृताभिघारः । उद्वासय प्राणदानं—मित्रावरुणौ गच्छ, वाजिनो गच्छेति ।

तत आज्यस्थाल्याः पयस्यायाश्च वेदौ सादनम् । उत्करे वाजिनस्य । सर्वालम्भः । आत्मालम्भः । उदकालम्भः । होतृषदनकरणम् । एहि होतरिति प्रैषः । अष्टादश काष्ठान्यासाद्य षोडशानामत्र सहैव तूष्णीमाहवनीये प्रक्षेप इन्धनार्थत्वात् ।

आहवनीयापवाजनं, अग्निसंमार्गप्रैषः,अग्निसंमार्गः, न पूर्वाघारः, नाञ्जलिकरणम् । नोत्तराघारः । होतृवरणं समन्त्रकं प्रकृतिवत् । न स्रुगादापनं, न प्रयाजाः ।

ततः स्रुचावादायाज्यभागौ । ततः पयस्यायागः । तत्र मित्रावरुणाभ्यामनुब्रूहि । मित्रावरुणौ यजेति । सान्नाय्यविकारत्वात् स्रुवेणावदानम् ।

ततः स्विष्टकृदादि । संचराभ्युक्षणाभावः । प्राशित्रेडादि । समस्य मार्जनं, चतुर्धाकरणाभावः । पवित्रप्रतिपत्तिः । अग्निसंमार्गप्रैषः । संमार्गः ।

व्यूहने—मित्रावरुणयोरुज्जितिं, मित्रावरुणौ तमपनुदताम् । जुह्वा अभ्युक्षणं, परिध्यञ्जनं, सूक्तवाकप्रैषः, प्रस्तरादानादि । सह शाखया प्रस्तरानुप्रहरणम्, इदमग्नये सोमाय मित्रावरुणाभ्यामग्नये होत्राय वाजिभ्यः । अनुप्रहरणं, तृणप्रक्षेपः । आत्मालम्भोदकालम्भौ । वाजिनयागो भक्षान्तः ।

॥१८॥पशुवद्वाऽऽहुतिः ॥१९॥ तदन्ते सायमाहुतिः ॥२०॥ सोमाकृतं० सन्निधिविरोधाभ्याम् ॥२१॥ नित्या वा प्रातराहुतिः श्रुतेः ॥२२॥ नियतक्रियाऽतः ॥२३॥ एष प्रथमः सोमः ॥२४॥ आर्दाप्य प्रविशन्ति ॥२५॥ षडुत्तरेऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामः ॥२६॥तेषामुक्थ्योऽच्छावाकमभि सन्तिष्ठते होतारमितरे ॥२७॥ वैश्यराजन्ययोः सोमे न्यग्रोधस्तिभीनुपनह्यच्छन् भक्षाय ॥२८॥ क्रयणप्रभृत्यनुसोममाश्रुता समा

---

संवदस्वादेरभावः । परिधिप्रक्षेपः । संस्रवाहुतिः । देशे स्रुचोर्निधानम् । अत्र वा वाजिनयागः । वेद्यालम्भाभावः । वेद्योक्तविमोकः ।

आवेदेः स्तरणं, समिष्टयजुर्होमः, प्रणयनपदे प्रणीताविमोकः । ततः सर्वसाधारणं पूर्णपात्रनिनयनादि कर्मापवर्गान्तम् । अत्र व्रतविसर्गः । पशुपुरोडाशभागप्राशनादि सर्वम् । इति पयस्या ।

ततः प्राजहिते समारोप इतरेषामप्रयुक्तत्वात् । अपरे सर्वेष्वग्निषु समारोपमिच्छन्ति ।

तत उदङ्ङुदवसाय मथित्वा गार्हपत्यस्थापनम् । तत उदवसानीयेष्टिः । आग्नेयः पञ्चकपालो ऽग्न्युद्धरणादिकर्मापवर्गान्तः पुनराधेयवत् ।

अत्राग्न्यन्वाधान ब्रह्मवरणव्रतग्रहणदक्षिणादानादि सर्वं भवति । हिरण्यं दक्षिणाऽनड्वान्वा । इत्युदवसानीया ॥

अथवा केवलमाहवनीमुद्धृत्याज्यं संस्कृत्य चतुर्गृहीत्वोरु विष्णविति पशुवदाहुतिः । तत्र यथाशक्त्याध्वर्यवे दानम् । ततः सहस्रब्राह्मणभोजनम् । अस्याग्निष्टोमस्य समृद्धये यथासम्पन्नेन भोजनपर्याप्तेनान्नेन सहस्रं ब्राह्मणानहं तर्पयामीति ।

ततो माङ्गल्यम् । तदानीं पुनरुद्धृत्य स्वयमेवाग्निहोत्रहोमः । प्रातर्होमस्तु यथाकाल एव । अत ऊर्ध्वं सन्ध्या-तर्पण-वैश्वदेवादिनित्यक्रिया, न ततः प्राक् ॥

सप्त सोमसंस्थाः । तेषां प्रथमोऽग्निष्टोमः । उक्थ्यषोडश्यतिरात्राणामग्निष्टोमविकारत्वम्, अत्यग्निष्टोमस्य च । षोडशिविकारो वाजपेयः । अतिरात्रविकारोऽप्तोर्यामः । स्वप्रकृत्यपेक्षया क्रतुकरणं पशवश्च । तेषां संस्थाविशेषाणां मध्ये उक्थ्योऽच्छावाकमभि सन्तिष्ठते ।

वाज्याधिश्रयणं, पयोवर्जं पर्यग्निकरणं, उदकालम्भः। पयस्यायाः श्रपणं, तप्ते पयसि दधिप्रक्षेपः।

आग्नीध्रीये प्रोक्षणीप्रैषाद्याज्यग्रहणान्तं, ध्रुवायामेवाज्यग्रहणं, आज्यादिकमादायोत्तरवेदिं गत्वा इध्मप्रोक्षणं न वेदेः। बर्हिःप्रोक्षणं, तत्र स्रुचे त्वेति विशेषः।

अपच्छेदाभावात्तूष्णीं प्रस्तरग्रहणं, ब्रह्मणे समर्पणं, सन्नहनविस्रंसनं, श्रौणौ निधानं, अन्यरबच्छादनं, तत इध्मात्समिदादानं, प्रस्तरस्य च।

आहवनीयकल्पनं, नोल्मुकोदूहनं, परिधिपरिधानं, स्पृश्यास्पृश्ययोराधानं, सूर्यस्त्वेति जपः। आवृत्य स्तृनाया एव वेदेर्द्वे तृणे गृहीत्वा विधृत्योः स्तरणं, प्रस्तरस्तरणं, अभिन्यासः। स्फयोपग्रहेण असि जुह्वर्नाम्नाऽस्युपभृदिति स्रुचोरासादनम्।

ततो वेदोपग्रहेण घृताचीति ध्रुवायाः। ततः शालाद्वार्यसमीपे गत्वा वाजिनपात्रस्थापनं, उपस्तारः।

तत्रस्थाभिघारमदत्वा वा वाजिननिषेकः। ततः शृताभिघारः। उद्वास्य प्राणदानं—मित्रावरुणौ गच्छ, वाजिनो गच्छेति।

तत आज्यस्थाल्याः पयस्यायाश्च वेदौ सादनम्। उत्करे वाजिनस्य। सर्वालम्भः। आत्मालम्भः। उदकालम्भः। होतृषदनकरणम्। एहि होतरिति प्रैषः। अष्टादश काष्ठान्यासाद्य षोडशानामत्र सहैव तूष्णीमाहवनीये प्रक्षेप इन्धनार्थत्वात्।

आहवनीयोपवाजनं, अग्निसंमार्गप्रैषः,अग्निसंमार्गः, न पूर्वाघारः, नाञ्जलिकरणम्। नोत्तराघारः। होतृवरणं समन्त्रकं प्रकृतिवत्। न स्रुगादापनं, न प्रयाजाः।

ततः स्रुचावादायाज्यभागौ। ततः पयस्यायागः। तत्र मित्रावरुणाभ्यामनुब्रूहि। मित्रावरुणौ यजेति। सान्नाय्यविकारत्वात् स्रुवेणावदानम्।

ततः स्विष्टकृदादि। संचराभ्युक्षणाभावः। प्राशित्रेडादि। समस्य मार्जनं, चतुर्धाकरणाभावः। पवित्रप्रतिपत्तिः। अग्निसंमार्गप्रैषः। संमार्गः।

व्यूहने—मित्रावरुणयोरुज्जितिं, मित्रावरुणौ तमपनुदताम्। जुह्वा अभ्युक्षणं, परिध्यञ्जनं, सूक्तवाकप्रैषः, प्रस्तरादानादि। सह शाखया प्रस्तरानुप्रहरणम्, इदमग्नये सोमाय मित्रावरुणाभ्यामग्नये होत्राय वाजिभ्यः। अनुप्रहरणं, तृणप्रक्षेपः। आत्मालम्भोदकालम्भौ। वाजिनयागो भक्षान्तः।

॥१८॥ पशुवद्वाऽऽहुतिः ॥१९॥ तदन्ते सायमाहुतिः ॥२०॥ सोमाङ्गं० सन्निधिविरोधाभ्याम् ॥२१॥ नित्या वा प्रातराहुतिः श्रुतेः ॥२२॥ नियतक्रियाऽतः ॥२३॥ एष प्रथमः सोमः ॥२४॥ आदीप्य प्रविशन्ति ॥२५॥ यद्वुत्तरेऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामः ॥२६॥ तेषामुक्थ्योऽच्छावाकमभि सन्तिष्ठते होतारमितरे ॥२७॥ वैश्यराजन्ययोः सोमे न्यग्रोधस्तिभीनुपनयेच्छन् भक्षाय ॥२८॥ क्रयणप्रभृत्यनुसोममाश्रुता समा

---

संवद्स्वादेरभावः । परिधिप्रक्षेपः । संस्रवाहुतिः । देशे स्रुचोर्निधानम् । अत्र वा वाजिनयागः । वेद्यालम्भाभावः । वेदयोक्त्रविमोकः ।

आवेदेः स्तरणं, समिष्टयजुर्होमः, प्रणयनपक्षे प्रणीताविमोकः । ततः सर्वसाधारणं पूर्णपात्रनिनयनादि कर्मापवर्गान्तम् । अत्र व्रतविसर्गः । पशुपुरोडाशभागप्राशनादि सर्वम् । इति पयस्या ।

ततः प्राजहिते समारोप इतरेषामप्रयुक्तत्वात् । अपरे सर्वेष्वग्निषु समारोपमिच्छन्ति ।

तत उदङ्ङुदवसाय मथित्वा गार्हपत्यस्थापनम् । तत उदवसानीयेष्टिः । आग्नेयः पञ्चकपालो ऽग्न्युद्धरणादिकर्मापवर्गान्तः पुनराधेयवत् ।

अत्राग्न्यन्वाधान ब्रह्मवरणव्रतग्रहणदक्षिणादानादि सर्वं भवति । हिरण्यं दक्षिणाऽनड्वान्वा । इत्युदवसानीया ॥

अथवा केवलमाहवनीमुद्धृत्याज्यं संस्कृत्य चतुर्गृहीत्वोरु विष्णविति पशुवदाहुतिः । तत्र यथाशक्त्यध्वर्यवे दानम् । ततः सहस्रब्राह्मणभोजनम् । अस्याग्निष्टोमस्य समृद्ध्यै यथासम्पन्नेन भोजनपर्याप्तेनान्नेन सहस्रं ब्राह्मणानहं तर्पयामीति ।

ततो माङ्गल्यम् । तदानीं पुनरुद्धृत्य स्वयमेवाग्निहोत्रहोमः । प्रातर्होमस्तु यथाकाल एव । अत ऊर्ध्वं सन्ध्या-तर्पण-वैश्वदेवादिनित्यक्रिया, न ततः प्राक् ॥

सप्त सोमसंस्थाः । तेषां प्रथमोऽग्निष्टोमः । उक्थ्यषोडश्यतिरात्राणामग्निष्टोमविकारत्वम्, अत्यग्निष्टोमस्य च । षोडशिविकारो वाजपेयः । अतिरात्रविकारोऽप्तोर्यामः । स्वप्रकृत्यपेक्षया क्रतुकरणं पशवश्च । तेषां संस्थाविशेषाणां मध्ये उक्थ्योऽच्छावाकमभि सन्तिष्ठते ।

नमासादनं प्रागभिषवात् ॥२९॥ चमसोन्नयनकाले वाऽऽहृत्य दध्नोन्मृध्य तच्चमसमनून्नयेत् ॥३०॥ हूयमानेषु कुशतरुणेन जुहोत्यहं त्वदस्मीत्यहं त्वदस्मीति ॥३१॥९॥

## एकादशोऽध्यायः ।

ब्रह्मत्वमतः ॥१॥ वाग्यतः कर्मणि वर्त्तमाने ॥ २ ॥ हिरण्यवत्याꣳ हुतायां दक्षिणाऽनुगच्छत्या क्रयात् ॥ ३ ॥ क्रीते प्राक्तीत्थ पूर्वेणानः परीत्यापरेण वा दक्षिणोऽनुगच्छत्या निधानात् ॥ ४ ॥ दक्षिणाग्निं वाऽपरेण घर्मे ॥ ५ ॥ स्तम्बयजुर्हरिष्यत्याहवनीयं दक्षिणेनास्ते वेदिसहितः ॥६॥ एवꣳ सर्वत्र प्रागग्नीषोमप्रणयनात ॥७॥ कर्मणः कर्मणो वा सहितस्तत्तदेवान्वेत्य ॥८॥ आहवनीये

---

वैश्यराजन्ययोः सोमे न्यग्रोधस्तिभान् वस्त्रेणोपनह्य क्रयणप्रभृति सोमावृता समानमासादनादि कर्तव्यम् । अभिषवात्प्राक् सोमद्रव्यविकारत्वात् प्रकृतावप्यूहः । चमसोन्नयनकाले वाऽऽहृत्य सम्मृध्य यजमानचमसोन्नयनम् । हूयमानेषु चमसेषु कुशतरुणेन जुहोति अहं त्वदस्मीति अध्वर्युरनु जुहोति ॥

इति दशमस्य नवमी कण्डिका ॥ १० ॥

इति श्रीत्रिरग्निचित्सम्राट् स्थपतिमहायाज्ञिक श्रीश्री प्रजापतिसुतयाज्ञिकदेवकृतायां कात्यायनसूत्रपद्धतावेकादशोऽध्यायः ।
अग्निष्टोमकक्ष समाप्तः ॥ श्रीः ॥

---

सौमिके कर्मणि ब्रह्मा वाग्यतो भवेत् । जूरसीति हिरण्यवत्यां हूयमानायां दक्षिणेनोपवेशनम् । सोमक्रयण्यां नीयमानायां दक्षिणतोऽनुगच्छेत् । जूरसीति हिरण्यवत्यां हूयमानायां च । स्तम्ब यजुर्हरिष्यत्याहवनीयदेशं दक्षिणेनास्ते वेदिसंलग्नः । प्रागग्नीषोमीयप्रणयनादाहवनीयं दक्षिणेन ।

अथवा यत्र कर्म क्रियते तत्र दक्षिणतो ब्रह्मा । आहवनीये प्रणीयमानेऽप्रतिरथसंज्ञा द्वादश ऋचो ब्रुवन्दक्षिणतोऽनु गच्छेदग्नौ । सर्वत्रैके प्रणयनोद्देशेन विधानात् । स्तीर्णाया वेदेर्यथाप्रयोजनं गत्वा

प्रणीयमानेऽप्रतिरथस्य द्वादश ब्रुवन्नग्नौ ॥९॥ सर्वत्रैके ॥१०॥ स्तीर्णायां यथार्थमेत्य ॥११॥ अग्नीषोमप्रणयनायोत्तरेण धिष्ण्याञ्छालाद्वार्यं पूर्वेणेत्यास्ते दक्षिणतः ॥१२॥ हुते च सोममादायाग्निमन्वेति ॥१३॥ यजमानो वा सोमठ० हरेत् ॥१४॥ अन्यस्मै प्रदायानिहिते यथेतमेत्यास्ते दक्षिणतः ॥१५॥ हुते च सोममादायाहवनीयं चातीत्य ॥१६॥ अपररात्रेऽग्नीषोमप्रणयनवदिच्छन् ॥१७॥ विप्रुषाᳬ होमᳬ हुत्वा प्रतिहर्त्तारमन्वारभेत वाऽदीक्षितः ॥१८॥ प्रस्तोत्राऽऽमन्त्रित एतं ते देव सवितः स्तुत सवितुः प्रसव इत्युक्त्वा प्रसौति ॥१९॥ देव सवितरेतद् बृहस्पते प्रेति वा ॥२०॥ रश्मिना सत्यायेति वा प्रतिमन्त्रम् ॥२१॥ येन प्रवेशनं तस्मिन्त्सर्पणम् ॥२२॥ पूर्वेण यूपं परीत्यापरेण चेत् ॥२३॥ प्रशास्तुर्दक्षिणत आस्ते ॥२४॥ अपरेण धिष्ण्यानितरे ॥२५॥ नेष्टा च ॥२६॥ विसᳬस्थितसञ्चरः

---

ब्रह्माऽऽसने उपविशेत् । अग्नीषोमप्रणयनार्थं धिष्ण्यानन्तरेण गत्वा शालाद्वार्यं पूर्वेण एत्य तस्यैव दक्षिणत आसीत ।

त्वठ० सोमेति वैसर्जिने हुते तेनैव मार्गेण सोमं गृहीत्वाऽग्निमनु गच्छेत् । यजमानस्य वा सोमप्रहरणम् । आग्नीध्रे गत्वाऽन्यस्मै प्रदाय सोमसन्निहितेऽग्नौ अधिगृह्य उत्तरेणैत्य तत्रैव दक्षिणत आसीत । अयं न इति द्वितीये वैसर्जिने हुते पुनरन्यस्मै दत्वाऽऽहवनीयं पूर्वेणागत्य दक्षिणत आस्ते ।

अपररात्रे उपविश्योत्तरेण धिष्ण्यं पूर्वेण शालाद्वार्यं गच्छेदपस्पर्शनार्थम् । अथवा एवमेवेत्यान्यतरस्मिन् दक्षिणत आस्ते । विप्रुड्ढोमे प्रतिहर्तारमन्वारभते वा । सत्रे नियमः । प्रस्तोत्राऽऽमन्त्रितः एतं ते देव सवित स्तुत सवितुः प्रसुव इत्याह ।

देव सवितरेतद् बृहस्पतेत्युक्त्वा प्रेति वा स्तुत सवितुः प्रसुव इति । रश्मिना सत्यायेति वा प्रतिमन्त्रम् । असोर्यामे पुनरावृत्तिरमीषाम् । येन प्रवेशनं तस्मिन्त्सर्पणम् । वागसोत्यादि सर्पणम् । अत्रापरेण

प्रशास्तृधिष्ण्यं वोत्तरेणापवमाने ॥२७॥ स्वथं स्वमितरे स्वथंस्वमितरे ॥२८॥ १ ॥

द्वारेण प्रवेशनम् । पूर्वेण चेदपरेण यूपम् ।

प्रशास्तुर्दक्षिणत आस्ते स्तोत्रशस्त्रकाले सदसि । अन्ये ब्रह्मपुरुषाः स्वस्वधिष्ण्यानामपरेणासीरन् । नेष्टा च स्वधिष्ण्यमपरेण । विसंस्थिते असमाप्ते सवने प्रशास्तृधिष्ण्यमुत्तरेण वा सञ्चारो ब्रह्मणः स्वधिष्ण्यमुत्तरेण सञ्चारोऽन्येषाम् ।

इति त्रिरग्निचित् सम्राट् स्थपति महायाज्ञिक श्री प्रजापतिसुत देवयाज्ञिककृतायां कात्यायन सूत्रपद्धतावेकादशोऽध्यायः ।

# द्वादशोऽध्यायः ।

ज्योतिष्टोमधर्मा एकाहद्वादशाहयोस्तद्गुणदर्शनात् ॥१॥ प्रथमस्य व्रात्यस्तोमसाध्यःकेषु वचनात् ॥२॥ अग्निष्टुत्सु च ॥३॥ एके ॥४॥ द्वादशाहः सत्त्रमहीनश्च ॥५॥ आसत उपयन्तीति सत्त्रलिङ्गं, यजत इत्यहीनस्य ॥६॥ उभयतोऽतिरात्रं सत्त्रमुपरिष्टादहीनस्य ॥७॥ यजमानाः सर्वे सत्त्रेषु ॥८॥ अदाक्षिणानि च स्वामियोगात् ॥ ९ ॥ गृहपतिर्यजमानमयुक्तत्वात् ॥ १० ॥ दर्शनाच्च ॥११॥ सर्वे संस्कारात् ॥१२॥ दर्शने वचनात् ॥१३॥

---

श्रीगणेशाय नमः ॥

अथ सत्रात्मकस्य द्वादशाहस्य पद्धतिर्लिख्यते ।

द्वादशाहे ज्योतिष्टोमधर्मा भवन्ति । द्वादशाहो द्विविधः सत्रमहीनश्च । यत्र विधिवाक्ये आसते उपयन्तीत्येवंविध आख्यातशब्दः श्रूयते तत सत्रम् । यत्र यजत इति शब्दः श्रूयते सोऽहीनः । तथा सत्रे यावन्ति सौत्यान्यहानि भवन्ति तेषां मध्ये आदिममहरन्त्यं चातिरात्रसंस्थं भवति । इतराणि यथोपदेशमहानि भवन्ति। अहीनेषु चोपरिष्टादेवातिरात्रो भवति नादौ ।

तत्र सत्ररूपो द्वादशाहो ब्राह्मणानां समानकल्पानां सर्वेषामेकं फलं कामयमानानां पृथक् पृथक् नानाफलं कामयमानां वा सप्तदशप्रभृति चतुर्विंशतिसंख्यानामाहिताग्नीनामिष्टप्रथमयज्ञानां भवति । न तत् सप्तदशभ्यो हीनसङ्ख्यानां नापि चतुर्विंशत्यधिकसंख्यानाम् ।

तत्र ऋत्विक्कर्तृकान् ब्रह्मत्वादीन् षोडश पदार्थान् यजमाना एव स्वयं कुर्वन्ति न ऋत्विजः। अत एव सत्रे दक्षिणादानं न भवति । ते च सप्तदशप्रभृतयो यजमानाः सत्रोपयोगि द्रव्यं सर्वं स्वकीयं समभागमेकत्र कृत्वा घृतपश्वादि सम्भारमुपकल्पयन्ति । फलं च सर्वेषां तुल्यं भवति । वचनाद् गृहपतेरधिकम् । तत्र याजमानं कर्म सर्वे कुर्वन्ति । अप्सुदीक्षादिसंस्काराः सर्वेषां भवन्ति ।

**अविभवाति गृहपत्यन्वारम्भः ॥१४॥ परार्थेष्वेकः कृतत्वात् ॥१५॥ अग्निं चेष्यमाणः समारोह्य गृहपतिर्मध्ये मन्थत्यर्द्धश इतरे दक्षिणोत्तराः ॥१६॥ गृहपत्याहवनीयेऽङ्गारप्रासनम् ॥१७॥ तत्र प्राजापत्यः पशुः ॥१८॥१॥**

---

याजमानमपि कर्म त्रिविधम्। एकं क्रत्वर्थम्—यथा पात्रासादनाज्यावेक्षणादि। अपरं पुरुषार्थं वपनाभ्यञ्जनादि। तृतीयमुभयार्थं यथाऽग्न्यन्वाधानवेदबन्धन-प्रयाजानुमन्त्रणादिकम्। यत्तु केवलं क्रत्वर्थं तद् गृहपतिरेव करोति पात्रासादनादिकम्। तथा शालाग्निखरोखेष्टकादीनां प्रमाणं गृहपतेरेव सर्वत्र भवति, तस्य मुख्यत्वात्। "मुख्यः कुर्यात् परार्थानी"ति वचनात्।

तथा यत् पुरुषार्थं तत् सर्वेऽपि कुर्वन्ति, उभयार्थं च। तदपि स्वकर्माविरोधेन। "स्वकर्माविप्रतिषेधेन सर्वेषां याजमानमि"ति मानवे दर्शनात्। यदुभयार्थमेकेन कृतत्वात् सर्वैः कर्तुं न शक्यते तद् गृहपतिरेवः सर्वैरन्वारब्धः करोति। यथाऽग्न्यन्वाधान-वेदबन्धन-प्रयाजानुमन्त्रणादि। तत्र सप्तदशयजमानपक्षे एको गृहपतिः। इतरे षोडश ब्रह्मत्वादिकर्मकर्तारः। अष्टादशादिपक्षे षोडशभ्योऽतिरिक्ता गृहपतय इति।

अत्र सर्वेषामग्नीनेकत्र संयोज्य सर्वं कर्म क्रियते। तत्राग्नीनामेकत्र करणे त्रयः पक्षाः। तत्र प्रथमः पक्षो लिख्यते। चयनं करिष्यमाणाः सर्वे यजमानाः स्वस्वगृहे स्वान्स्वानग्नीनरण्योः समारोप्य यत्र देशे प्राजापत्येनेष्टकापशुना यक्ष्यमाणा भवन्ति तस्मिन् देशे आयान्ति। ततस्तस्मिन् देशे मध्ये गृहपतिर्गार्हपत्यस्य मन्थनं कृत्वा खरे संस्कारपूर्वकं स्थापयति।

तत इतरे षोडश ब्रह्मादयो गृहपतेर्दक्षिणतो मन्थनं कुर्वन्ति। अर्धा गृहपतेरुत्तरतः।

तत्रैवं–मध्ये गृहपतिः। गृहपतेर्दक्षिणतो ब्रह्मा गृहपतेरुत्तरत उद्गाता। ब्रह्मणो दक्षिणतो होता। उद्गातुरुत्तरतोऽध्वर्युः। होतुर्दक्षिणतो ब्राह्मणाच्छंसी। अध्वर्योरुत्तरतः प्रस्तोता। ब्राह्मणाच्छंसिदक्षिणतो मैत्रावरुणः। प्रस्तोतुरुत्तरतः प्रतिप्रस्थाता। प्रशास्तुर्दक्षिणतः पोता। प्रतिप्रस्थातुरुत्तरतः प्रतिहर्त्ता। पोतुर्दक्षिणतोऽच्छावाकः। प्रतिहर्तुरुत्तरतो नेष्टा। अच्छावाकस्य दक्षिणतोऽग्नीत्। नेष्टुरुत्तरतः सुब्रह्मण्यः। अग्नीधो दक्षिणतो ग्रावस्तुत्। सुब्रह्मण्यस्योत्तरत उन्नेता इति। अनेन क्र-

**आज्येन पत्नीसंयाजा गृहपतिवर्जम् ॥१९॥ तदहर्दीक्षा ॥२०॥ अशक्तौ नियतक्रिया समारूढनिर्मथितेषु सर्वत्र ॥२१॥ दीक्षाकाल उदगवशालायां पूर्ववन्मन्थनम् ॥ २२ ॥ गार्हपत्ये प्रासनमत्र ॥ २३ ॥ आहवनीयस्ततः ॥ २४ ॥**

---

मेण स्वं स्वं गार्हपत्यं मथित्वा स्थापयन्ति ।

ततोऽध्वर्युः पञ्चभूसंस्कारपूर्वकं गृहपतेर्गार्हपत्यादिष्टकापश्वर्थमाहवनीयदक्षिणाग्न्योरुद्धरणं करोति । ततो ब्रह्मादयः सर्वे स्वस्वगार्हपत्यादेकैकमुल्मुकं गृहीत्वा गृहपतेराहवनीमध्ये प्रक्षिपन्ति । त एवमेव दक्षिणाग्निमध्येऽप्येकैकमङ्गारं प्रक्षिपन्ति ।

तत एवंविधे विहारे प्राजापत्य इष्टकापशुर्भवति। तत्रेष्टकापशौ गृहपतेर्गार्हपत्ये जाघन्या पत्नीसंयाजा भवन्ति । इतरेषु सर्वेषु गार्हपत्येष्वाज्येन। तत्र च बहूनि स्रुक्स्रुवाणि संस्कृत्य सर्वे स्वयमेव स्वस्वगार्हपत्ये आज्येन पत्नीसंयाजान् सहैव कुर्वन्तीति सम्प्रदायः। क्रमेण सर्वेष्वध्वर्युरेव करोतीति श्रीमदनन्तयाज्ञिकाः ।

एवमिष्टकापशुं समाप्य पशुशिरः सुगुप्ते देशे निधाय तस्मिन्नेवाहनि दीक्षां कुर्वन्ति । यदि तस्मिन्नेवाहनि दीक्षा कर्तुं न शक्यते तदा पुनरपि स्वस्वारण्योः स्वं स्वं गार्हपत्यं समारोह्य स्वस्वगृहं प्रत्यागत्याग्निहोत्रहोमं कुर्वन्ति ।

ततो यस्मिन्नहनि दीक्षायाः समयः कृतो भवति तस्मिन्नहनि पुनररण्योः स्वान् स्वानग्नीन्समारोह्य सर्वे देवयजनं प्रत्यायान्ति । ततो विंशत्यरत्निः प्राची, सप्तत्यधिकशतारत्निरुदीची एवं विधा उदग्वंशा शाला भवति । तस्यां शालायां मध्ये गृहपतिर्मन्थति, मथित्वा खरे स्थापयति । इतरे पूर्ववदर्धा दक्षिणतोऽर्धा उत्तरतः स्वं स्वं गार्हपत्यं मथित्वा पृथक् पृथक् गार्हपत्यखरे स्थापयन्ति ।

ततो ब्रह्मादयः स्वस्वगार्हपत्यादेकैकमुल्मुकमादाय गृहपतिगार्हपत्यमध्ये प्रक्षिपन्ति । ततोऽध्वर्युरेवंसाधारणीकृतात् गार्हपत्यादाहवनीयदक्षिणाग्न्योर्विहरणं करोति । तत्र एवंविधे विहारे दीक्षणीयादि कर्म कुर्वन्ति । तेषां दीक्षोपसत्सु आहवनीय एकः, गार्हपत्याः पृथक् पृथक् ।

तत उपसदां प्रथमे प्रायणीयेऽहनि गृहपतेर्गार्हपत्ये चित्युपधानं भवति । उपवसथदिने चाग्नीषोमीयाग्नेः प्रणयनात् प्राक् धिष्ण्यचयनानन्तरमध्वर्युर्ब्रह्मादीनां गार्हपत्यान् बुद्धिपूर्वं स्वप्रयत्नेनोपशमयेत् ।

तत्र दीक्षा ॥ २५ ॥ उपवसथप्रभृति प्रागग्नीषोमप्रणयनादुपशमय्य चिनोत्येनाञ्छालाद्वार्याद्दक्षिणोत्तरान्धिष्ण्यवत् ॥२६॥ श्रुतेः ॥२७॥ वा यथोक्तं गृहपतेः ॥२८॥१॥

आग्नीध्रीय उद्यतेऽङ्गारमेकैकः हरन्ति प्रतिचिति शालाद्वार्यात्॥१॥ प्रत्यग्नि सवनीयपुरोडाशा भूयोहविरुच्छिष्टमसत्प्रमाप्त्या इति श्रुतेः ॥२॥ पत्नीसंयाजाश्च पूर्ववत् ॥३॥ गृहपतिं वा पर्युपविश्य मन्थन्ति ॥४॥ गृहपतिः प्रथमः प्रथमः सर्वत्र ॥५॥ जातं जातं गृहपति

---

ततः शालाद्वार्यस्य दक्षिणत उत्तरतश्च पूर्वोक्तक्रमेण ब्रह्मादीनां सर्वेषां गार्हपत्यान् धिष्ण्यवच्चिनोति । अत्र मतत्रयम् । सर्वे गार्हपत्या वृत्ता एवैकविंशतीष्टका गृहपतिगार्हपत्यसदृशा एव प्रकृतिवच्चीयन्त इति कर्कसम्प्रदायकारौ । एकविंशतीष्टका एव चतुरस्रा ब्रह्मादीनां गार्हपत्याश्चीयन्ते इति पितृभूत्याचार्याः श्रीअनन्तयाज्ञिकश्च ।

अस्मिन् पक्षे गार्हपत्यचितेः क्षेत्रं "मण्डलं चतुरस्रं चिकीर्षन् विष्कम्भं पञ्चदश भागान् कृत्वा द्वा उद्धरेच्छेषं करणी"त्युपायेन चतुरस्रीकृत्य "षोडशपदं मध्येऽपच्छिद्य श्रोण्यंसानूकापच्छेदः परिलेखान्तरं वक्रा"इत्युपायेन वक्रा अपि समपार्श्वाः साधनीयाः । "अथेतरेभ्य उपवसथे धिष्ण्याग्नी"निति श्रवणात , कात्यायनेन "धिष्ण्यवदि"त्युक्तत्वाच्च । धिष्ण्यवदष्टेष्टका एव चेतव्या नैकविंशतिरिष्टका इति हरिस्वामिनः ।

पूर्वयोः पक्षयोर्गृहपतिगार्हपत्यचयनकाले पलाशशाखाया न निरसनं किन्तु अमीषां गार्हपत्यानां व्युदूहनोपस्थापनं कार्यम् । धिष्ण्यवच्चयनपक्षे च तदैव शाखानिरसनम् , प्रयोजनाभावात् ।

इति द्वादशस्य प्रथमा कण्डिका: ॥ १ ॥

---

ततः प्रणयनार्थमाग्नीध्रीये शालाद्वार्यात् प्रदीप्तेनेध्मेनोद्यते ऊर्ध्वं गृहीते ब्रह्मादयः शालाद्वार्यादेकैकमङ्गारं गृहीत्वा गार्हपत्यचितौ स्थापयन्ति ।

ततोऽग्नीषोमीयपशौ इष्टकापशुवत् पत्नीसंयाजा भवन्ति सुत्यायां न सर्वेषु। प्रत्यग्नि सर्वेषां यजमानानां गार्हपत्येषु पृथक् पृथक् सवनीयाः पुरोडाशादयः कर्तव्याः । अत्राग्नीद् गृहपतेः शालाद्वार्यं सवनीयान्निर्वप-

**गार्हपत्ये प्रास्यन्त्युभयत्र ॥६॥ उपवसथप्रभृति तुल्यः सर्वेषु ॥७॥ अरण्योर्वाऽऽहुर्गृहपतेर्य इतोऽग्निर्जनिष्यते स नः सह यदनेन यज्ञेन जेष्यामो ऽनेन पशुबन्धेन तन्नः**

---

ति । विरोधादितरेषु गार्हपत्येष्वन्ये निर्वपणं कुर्वन्तीति सम्प्रदायकारः ।

यागकाले च सर्वेषां सर्वैः सवनीयैः सहैव च यागः । ततः स्वं स्वं हविःशेषं भक्षयन्ति । सवनीयपशुष्वपि पत्नीसंयाजाः पूर्ववदित्येवमेकः पक्षः ।

अथ द्वितीयपक्ष उच्यते । पूर्ववदरण्योरग्नीं समारोह्य देवयजनमागच्छन्ति । ततो गृहपतिर्मध्ये मन्थनं करोति । ब्रह्माद्या गृहपतिं परितो मण्डलाकारेण पूर्वत आरभ्य क्रमेण प्रदक्षिणमुपविश्य स्वं स्वं गार्हपत्यं मथित्वा जातमात्रमरणिस्थमेवेष्टकापशौ दीक्षाकाले च गृहपतिगार्हपत्यमध्ये प्रक्षिपन्ति ।

अत्र पक्षे दीक्षोपसत्सु सर्वेषां त्रयोऽप्यग्नयः समानाः साधारणा एव, न प्रथमपक्षवत् पृथक् गार्हपत्या इति । तत एवंविधाद्गार्हपत्यादाहवनीयदक्षिणाग्नी उद्धृत्येष्टकापशुं सत्रं च कुर्वन्ति । उपवसथप्रभृति प्रागग्नीषोमप्रणयनादित्यादि अस्मिन् पक्षेऽपि सर्वं समानम् । इष्टकापश्वनन्तरं तदहर्दीक्षाशक्तौ समारूढनिर्मथितेषु नियतक्रियेत्यपि पूर्ववदेव । इति द्वितीयः पक्षः ।

अथ तृतीयपक्ष उच्यते । अथवा सर्वे यजमाना गृहे एव गृहपतेररण्योरालम्भं कृत्वा य इतोऽग्निर्जनिष्यत इत्येवं संवादं कुर्वन्ति । तस्यैव तदित्यन्तममुं मन्त्रं पठित्वा गृहपतिः स्वावग्नी गार्हपत्याहवनीयौ प्रथमं स्वारण्योः समारोपयति । ततो गृहपतिरेवेतरेषां गार्हपत्याहवनीयौ गृहपत्यरण्योरेव समारोहयति ।

अथवा इतरे ब्रह्मादयः स्वौ स्वावग्नी स्वयमेव गृहपत्यरण्योरेव समारोहयन्ति । एतावद् गृहे कृत्वा ततो देवयजनं प्रत्यायान्ति। ततस्तत्रागत्य गृहपत्यरणिभ्यां सर्वाग्निसमारूढाभ्यां साधारणं गार्हपत्यं मथित्वा तत आहवनीयदक्षिणाग्नी विहृत्य दीक्षणीयादि कुर्वन्ति ।

अस्मिन्नपि पक्षे धिष्ण्यचयनानन्तरं ब्रह्मादीनां गार्हपत्यचयनादि प्रथमपक्षेण समानम् । पत्नीसंयाजादिप्रथमपक्षवदेवाग्नीषोमीयसवनीयानुबन्ध्येषु ।

अथ तृतीयपक्षे एव पक्षान्तरमुच्यते । अथवा अस्मिन्नुत्तमे पक्षे एकाहवच्छालागार्हपत्यपुरोडाशपत्नीसंयाजा भवन्ति । एकाहवदिति द्र-

**सह सह नः साधुकृत्या नाना पापकृत्या य एव पापं करवत्तस्यैव तदित्युक्त्वा गृहपतिः समारोहयते स्वौ**

शारत्निविस्तारा विंशत्यरत्निदीर्घा शाला। गार्हपत्यचितिरप्येकैव । सवनीयपुरोडाशा अप्येकाहवदेव एकगुणा, न सप्तदशगुणाः । पत्नीसंयाजा अपि गृहपतिगार्हपत्ये जाघन्या एव, नाज्येनेतरेषाम् । अस्मिन् पक्षे गृहपतिरप्येक एव ।

अथ येन सत्रे देवा इति प्रकृत्य "एकगृहपतिका वै देवा इति तथो एवैत एकगृहपतिका एकपुरोडाशा" इत्यादि श्रवणात् । ततः सुत्यायामेकगुणसवनीयशेषेण सर्वेषां दीक्षितानां शरीरस्थितिपर्याप्तस्याशनस्यासम्भवात् तदर्थमुपायान्तरं विधीयते । तदा ऐन्द्रदैवत्यं पञ्चशरावं पञ्चभिः शरावैः परिमितमोदनं पुरोडाशं वा सर्वेषु सवनेषु सवनीयैः सह कुर्वन्ति । तच्छेषभक्षणेन च यजमानानां शरीरस्थितिर्भवति। एके पञ्चशरावं बृहस्पतिदैवत्यं कुर्वन्ति नेन्द्रदैवत्यम् इति देवतामात्रविकल्पः । इति सविकल्पस्तृतीयः पक्षः ।

अथ सर्वपक्षसाधारणः सत्ररूपे द्वादशाहे कर्मविशेषो लिख्यते । द्वादश दीक्षाः, द्वादशोपसदश्चात्र भवन्ति द्वादश सुत्याश्च । तस्यारम्भकालः काठके उक्तः-"चैत्रीपक्षस्य सप्तम्यां सत्राय द्वादशाहायाहीनाय वा दीक्षते फाल्गुनीपक्षस्येति लौगाक्षिरि"ति। मानवे-"चैत्रीपक्षस्य सप्तम्यां प्राग्वंशे संन्युप्य दीक्षेरन् सर्वे सुन्वन्तः सर्वं यजमानभागं प्राश्नन्ती"ति । साङ्ख्यायनेऽपि "शुक्लपक्षस्याष्टम्यां द्वादशाहाय दीक्षन्ते" इति । अतश्चैत्रफाल्गुनयोरन्यतरस्य शुक्लसप्तम्यामष्टम्यां वा प्रथमदीक्षा ।

तस्मिन् दिने पूर्वाह्णे सर्वे यजमानाः पृथक् पृथक् मातृपूजापूर्वकमाभ्युदयिकश्राद्धं कुर्वन्ति । तथा साग्निचित्यश्चेद् द्वादशाहः क्रियते तदा प्रथमं प्राजापत्य एवेष्टकापशुः कर्तव्यः, न वायव्यः, नापि पञ्चपशव्यः । यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति इति विशेषोपादानस्येतरपक्षनिवर्तनार्थत्वात् । तत्र "प्राजापत्यः पशुरि"ति सूत्राच्च ।

तस्य च कालद्वयम् । दीक्षादिन एव प्रातरिष्टकापशोरनुष्ठानं स्वकाले एव वा । तत्र प्रथममिष्टकापशौ विशेषाः प्रदर्श्यन्ते ।

अत्र यजमानानामेवर्त्विक्पदार्थकरणाद्वरणाभावः । पूर्वोक्तपक्षत्रयमध्येऽन्यतरपक्षमवधार्य तेन पक्षेणाग्नीन्साधारणान् कृत्वा गार्हपत्यं संपाद्येष्टकापश्वर्थमाहवनीयदक्षिणाग्नी विहृत्याग्न्यन्वाधानं कुर्यात् । यद्यग्न्यन्वाधानं यजमानकर्तृकं चेत् सर्वैरन्वारब्धो यजमानः करोति । मन्त्रश्चै-

प्रथमम् ॥८॥ यथास्वं वेतरे ॥९॥ दीक्षाकाले संवादप्र-

---

वमूह्यतेऽस्मिन् पक्षे अस्माकमग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धाना तन्वं पुषेम । अस्मभ्यं नमन्तां प्रदिश इति । अध्वर्युकर्तृके त्वनूह एव । अनेकगार्हपत्यपक्षे गृहपतेः पूर्वं स्वगार्हपत्येऽग्न्यन्वाधानम् । ततः क्रमेण ब्रह्मादिगार्हपत्येषु ।

अथवा ब्रह्मादयः स्वस्वगार्हपत्येषु अनूहितेनैव मन्त्रेण कुर्वन्ति । एक-गार्हपत्यपक्षे तु प्रकृतिवदेकस्मिन्नेव । तत्र ब्रह्मवरणं न भवति स्वयमेव-स्वार्थं कर्मणि प्रवृत्तेः, वरणस्याप्रवृत्तप्रवर्तनार्थत्वात् । ब्रह्मासनम् । ब्रह्मा-सनमन्त्रकमासनं संस्कृत्योपविशति । ततः सर्वे अन्तरेणापराग्नी गत्वा परे-णाहवनीयं क्रमेण प्राङ्मुखास्तिष्ठन्तोऽग्निमीक्षमाणा अप उपस्पृश्य व्रतमुप-यन्ति । ब्रह्मा च स्वासनादुत्थायैवमेव व्रतमुपैति । बह्वृचास्तु हो-तुरामन्त्रणात् पूर्वं यथास्वशाखाविहितं कुर्वन्ति । तदनुरोधेनेतरेषामपि हविरासादनोत्तरकालमेव व्रतग्रहणं युक्तम् । ततः सर्वेषां सत्यवदननियमः ।

ततोऽध्वर्युराज्यं संस्कृत्य यूपाहुतिं जुहोति उरु विष्णविति । तत्रोहः—प्रप्र यज्ञपतींस्तिरेति । षट्कासदनम् । यजमान वाचं यच्छतेति । ये यज-मानाः पदार्थेषु व्यापृता न भवन्ति ते सर्वे विहारस्य दक्षिणतः क्रमेण प्रत्य-क्संस्था यथावकाशमुपविशन्ति । प्रोक्षणीनामुदिङ्गने अग्रे यज्ञपतीन् सु-धातून् यज्ञपतीन् देवयुव इति ऊहः । परिग्रहप्रसवे नाकस्य पृष्ठे यज-मानाः सन्तु, इमं यज्ञं यजमानांश्च धेहीति । एवं प्रणय यज्ञं प्रोक्ष यज्ञं प्रजापतेऽनुब्रूहीत्यादिमन्त्रेष्वपि ज्ञेयम् ।

वेदबन्धं सर्वैरन्वारब्धो गृहपतिः करोति । तन्मन्त्रे च तेनास्मभ्यं वेदो भूया इत्यूहः । नानागार्हपत्यपक्षे स्वस्वगार्हपत्यसमीपे उपविष्टानां पत्नीनां सन्नहनं क्रमेण । एकगार्हपत्यपक्षे तत्समीप एवोपविष्टानाम् । पत्न्याज्यमवेक्षस्वेत्यन्तर्हित एव प्रैषः । गृहपतिपत्नी सर्वाभिः पत्नीभि-रन्वारब्धा सती अदब्धेनेत्याज्यमवेक्षते । परिधिपरिधाने यजमानानां परिधिरसीति ।

सर्वालम्भे ता विष्णो पाहि पाहि यज्ञपतीन्पाहि मां यज्ञन्यमिति । एवमेव वपापुरोडाशहृदयाद्यवदानेषूहः । यूपान्वारम्भं वपालेक्षणं च परार्थत्वात् गृहपतिरेव करोति । वाचनमन्त्रान्ते इति ब्रूत इत्येवं प्रैषः । सर्वे यजमानास्तं मन्त्रं पठन्ति । एवं सर्ववाचनेषु ज्ञेयम् । पत्नीनां वा-चनेष्वप्येवमेव ।

यूपस्य परिव्ययणे परीमान् यजमानान् राय इति । अग्निमन्थनानन्तरं मथितस्याग्नेः प्रासनमन्त्रे मा यज्ञपतीन् जातवेदसाविति । सन्तन्वन्निवे-

**भृति पशुबन्धस्थाने सत्त्रेणेति ॥१०॥ एकाहवद्वोत्तमे शालागार्हपत्यपुरोडाशपत्नीसंयाजाः ॥११॥ एकपुरोडाशेषु व्यत्यासम्भवादैन्द्रं पञ्चशरावमोदनं निर्वपेत्पुरोडाशं वा "पञ्चोदनीयन्ति पञ्चापूपीयन्ति" इति श्रुतेः**

---

ति प्रैषः । एकविंशेन वज्रेणेत्यवबाधनं च क्रत्वर्थं गृहपतेरेव न सर्वेषाम् । नह्यत्र मेत्यात्माभिप्रायिपदसम्बन्धेऽप्यात्मनः किञ्चित् प्रार्थ्यते, यदनुच्चारणे यजमानानां संस्कारपरिलोप आशङ्क्येत, तस्माद् गृहपतेरेव । हिरण्यगर्भ इत्युत्तराघारः ।

पशुश्रोण्याः समञ्जने संयजमानत्य आशिषा गच्छन्तामिति । अग्निर्देव इति दीक्षाक्रमेण सर्वयजमानार्थमुच्चारणं, तत्राव्यवहितानां तन्त्रेण । व्यवहितानां तु प्रतियजमानं भेदेन । होतृवरणानन्तरमग्निर्हि देवीनामिति यजमानवरणे । अग्निर्हि दैवीनां विशां पुर एतेमे यजमाना मनुष्याणां तेषामस्थूरि गार्हपत्ये दीदयच्छतꣳ हिमाद्वायू राधाꣳसीत्संपृचानावसंपृचानौ तन्व इत्यूहः । एवं सर्वेषामभिधानसमर्थो भवति ।

अत्र वषट्कृते होमनियमः । तथासति प्रक्षेपात् पूर्वं सर्वैः त्यागः सह कर्तुं शक्यते । सर्वैर्हि परित्यक्तस्य हविषः प्रक्षेपः कर्तव्यः । प्रयाजानुमन्त्राण्स्योभयार्थत्वात् । एकस्यानुमन्त्रणस्य सर्वैः कर्तुमशक्यत्वात् गृहपतिरेव सर्वान् कृत्वा ततः प्रजायानुमन्त्रणं करोति । तत्र चैको ममेत्यत्रास्मच्छब्दप्रयोगे सत्यप्यात्मनो न किंचित् प्रार्थ्यते यदनुच्चारणे यजमानानां संस्कारपरिलोप आशङ्क्येत, तस्मादेक एव करोति । अतएवानूहश्च ।

द्वितीयानुमन्त्रणे तूहो भवति । त्विषिमन्तो भूयास्म । अपचितिमन्तो भूयास्म । ब्रह्मवर्चसिनो भूयास्म । अन्नादा भूयास्मेति । शामित्रस्य पश्चात्तृणोपासनमन्त्रे यज्ञे यज्ञपतीन् धा इति । पशोः प्राणानां शोधनं परार्थत्वात् गृहपतिरेव करोति अनन्वारब्ध एव । शेषेण यजमानश्च शिरःप्रभृत्यनुषिञ्चत इत्येतदपि गृहपतिरेवाध्वर्युसहितः । इदमहमिति तृणाभिष्ठानं क्रत्वर्थत्वात् गृहपतिरनन्वारब्ध एव करोति ।

वपाप्राणदाने प्रजापतिं गच्छ स्वयजमानेभ्यो विन्देति । एवं सर्वत्र प्राणदानेषु ज्ञेयम् । सर्वेषां यजमानानां सर्वासां पत्नीनां चेदमाप इति चात्वाले मार्जनं भवति । प्रणीताप्रणयने यजमाना वाचं यच्छतेति प्रैषः । हविर्ग्रहणकाले पात्रीबिले जपे यज्ञपतयो ह्वार्षुरिति । पुरोडाशप्रथने यज्ञ-

पतयः प्रथन्तामिति ।

पुरोडाशाभिवासने अतमेरुर्यजमानानां प्रजा भूयादिति । उशिङ्गन-प्रोक्षण-प्रतिप्रसव-प्राणदानालम्भेषु ऊहा उक्ताः । मयीदमिति जपः सर्वेषाम्, पुरुषस्याशीःप्रार्थनार्थत्वात् । ऋत्विजामभावाच्चतुर्धाकरणाभावः । पशुश्चाधिश्रयणे मा नो यज्ञपतयो ह्वार्षीरिति । पवित्रप्रतिपत्तौ यजमानानां प्राणापानौ पातमिति ।

अनुयाजप्रसवमन्त्रे तेन यज्ञपतींस्तेन मामवेति । व्यूहने यजमानकर्तृकपक्षे गृहपतिः सर्वैरन्वारब्धः करोति । प्रजापतेर्वनस्पतेरुज्जितिमनूज्जेषास्म वाजस्यास्मान् प्रसवेन प्रोहामि । उपभृद्व्यूहने तु विशेषो नास्ति । अध्वर्युकर्तृकपक्षे उज्जितिमनूज्जयन्त्विमे यजमाना वाजस्यैनान् प्रसवेन प्रोहामि । प्रजापतिर्वनस्पतिस्तमपनुदन्तां यमिमे यजमाना द्विषन्ति यश्चैनान् द्वेष्टि वाजस्यैनान्प्रसवेनापोहामीति ।

गृहपतेरेव वेद्यालम्भः । स्विष्टे नः सन्तिष्ठस्वेति । इतरेषामन्वारम्भः । नानागार्हपत्यपक्षे गृहपतेर्जाघन्या पत्नीसंयाजाः । आज्येनेतरेषाम् । इडावदानं जाघन्या एव कार्यं नाज्यात् । अदब्धाहुतिर्न भवति ।

सर्वेषां सहैव मुख्यगार्हपत्ये पत्नीसंयाजकरणपक्षे स्रुक्स्रुवादीनां तावत्संख्यानां प्रथममेवासादानादिसंमार्गान्ताः संस्काराः कर्तव्याः । पिष्टलेपाहुतिमन्त्रे सत्याः सन्तु यजमानानां कामा इति । वेदविमोके नोह इति संप्रदायः । गृहपतिपत्न्येवेतरान्वारब्धा विमोकं करोति । भवतीत्यपरे ।

समिष्टयजुर्होमेषु यज्ञ यज्ञपतीन् गच्छेति । एष वो यज्ञो यज्ञपतयः सहसूक्तवाकः सर्ववीरस्तं जुषध्वं स्वाहेति ।

शूलावभृथे गृहपतिराहवनीये, तत्पत्नी च सर्वगार्हपत्येषु समिदाधानं करोति । समिदाधानस्याग्नीन्धनार्थत्वेन परार्थत्वात् "मुख्यः कुर्यात् परार्थानी"ति वचनात् ।

सर्वे यजमाना उपर्युपर्यञ्जलीन् कृत्वा पूर्णपात्रस्य प्रतिग्रहणं कुर्वन्ति । सर्वेषां मुखविमार्जनम् ।

अध्वर्युः सर्वेषामञ्जलीनामुपरि स्वीयमञ्जलिं कृत्वा निनयनं प्रतिग्रहणं चोपायेनोभयं करोति । विष्णुक्रम-भाग-भूमि-प्राक्-सूर्यावेक्षण-प्रदक्षिणावर्तन-प्रागगमनेषु अन्वारम्भः । आहवनीयावेक्षणगार्हपत्योपस्थान पुत्रनामग्रहणतूष्णीमाहवनीयोपस्थान व्रतविसर्गभागप्राशनानि भेदेन ।

अध्वर्युर्गृहपतिं दीक्षयति ब्रह्मादींश्चाध्वर्य्वादीन्प्रतिप-

---

यजमानभागं सप्तदशधा विभज्य सर्वे स्वांशावेक्षणं प्राशनं च कुर्वन्तीत्य-परे आहुः। सूर्यावेक्षणे वर्चोदा असि वर्चो नो देहीति। प्रागमनमन्त्रे प्रप्र यज्ञपतींस्तिरेति। पुत्रनामग्रहणमन्त्रे ततोऽसि तन्तुरस्यनु नस्तनु ह्यस्मिन्निति।

त्वङ्मस्तिष्कोद्धृतस्य घृताक्तस्य शिरसः सुगुप्तदेशे निधानम्। अज-शेषस्याप्सु प्रासनं च। दीक्षादिन एवैकपशुकरणपक्षे नानागार्हपत्य-पक्षे गृहपतिगार्हपत्यादुखासंभरणार्थमाहवनीयं दक्षिणाग्निं चोद्धर-त्यध्वर्युः।

ब्रह्मादयश्च स्वस्वगार्हपत्यादेकैकमङ्गारमाहवनीये दक्षिणाग्नौ च प्रक्षि-पन्ति। तत उखासंभरणम्। एकगार्हपत्यपक्षेऽपि गार्हपत्यं विभज्योखा-संभरणार्थं पुनः संनिवापः। तत्रोखासंभरणमजापयसोऽवसेकान्तम्। तत्र गृहपतिपत्न्यैवानन्वारब्धा आषाढीं करोति परार्थत्वात्। उखाया वि-श्वज्योतिषां च करणं गृहपतेरेव।

"अथातोऽग्निमग्निष्टोमेनानुयजति तमुक्थ्येन तमतिरात्रेण तमेकरात्रेण तं द्विरात्रेण"इत्यग्निरुपदेशेनैव धीयते। तेन तं द्वादशरात्रेणेत्यनेन वचनेनै-कयजमानके अनेकयजमानके च द्वादशाहे उपदिष्ट एवाग्निर्नातिदिष्टः। तेन "न प्रकृतावपूर्वत्वात्"इत्यनेन न्यायेन अनेकयजमानकेऽपि द्वादशाहे चयनसम्बन्धिषु मन्त्रेषु यजमानाभिधायीनि नोह्यन्ते पत्नीशब्दवत्।

दीक्षादिने पशुकरणाशक्तौ पशुरुत्तरस्यां फाल्गुन्यां पौर्णमासेनेत्या-दिप्रसिद्धे स्वकाल एव भवति। तदा च पशुसमाप्तेरनन्तरं स्वान् स्वा-नग्नीन् समारोप्य स्वस्वगृहे गत्वाऽग्निहोत्राद्या नित्यक्रियाः कुर्वन्ति। एकगार्हपत्यपक्षेऽपि तं विभज्य स्वस्वारण्योः समारोप्य गृहे गमनादि। पशोः स्वकाले करणपक्षे उखासंभरणमपि फाल्गुनकृष्णाष्टम्यामेवाग्नीनां संवापं कृत्वा कर्तव्यम्।

ततश्चैत्रशुक्ले सप्तम्यां देवयजनजोषणादिकर्म क्रियते। तत्र मानु-षर्त्विग्वरणाभावेऽपि दैवर्त्विग्वरणं भवत्येव। अग्निर्नो होता। आदि-त्यो नोऽध्वर्युरित्याद्यूहो युक्तः। तथा अग्निर्नो होता स नो देवयजनं ददा-त्विति। एतद्देवर्त्विग्भ्यो देवयजनप्रार्थनमपि भवति।

ततो देवयजनजोषणम्। उद्धतौषधिमूलकरणम्। ततः पक्षत्रये-ऽपि उदग्वंशशालाकरणम्। प्रतियजमानं दशदशारत्निप्रमाणा उदीची वर्तते।

प्रस्थाता प्रतिप्रस्थात्रादीन्नेष्टा नेष्ट्रादीनुन्नेता उन्नेतारं ब्र·

प्राची तु विशत्यरत्निरेव। "एकाहवदोत्तमे" इत्यस्मिन् पक्षे प्राग्वं·शैव प्रकृतिवद्दशारत्निविपुला भवति। ततः पूर्वं गृहपतिर्गार्हपत्याद्यूपाहुत्यर्थमाहवनीयमुद्धृत्य पूर्ववदेकैकाङ्गारमाहवनीये प्रास्य यूपाहुतिहोमः।

तत इष्टकापशुवत् समारोपः। एकाग्निपक्षे गृहपतेररण्योः संवादे पशुबन्धेनेत्यस्य स्थाने सत्रेणेति पदप्रयोगः। ततः पूर्ववत्समारोपः। उदवसानम्।

देवयजनमागत्य पूर्वया द्वारा पत्नीशालां प्रविश्य पूर्वयोः पक्षयोः सर्वे यजमानाः स्वे स्वेऽरणी पाणौ कृत्वा शालास्तम्भग्रहणं कुर्वाणं गृह·पतिमन्वारभन्ते। तृतीये पक्षे गृहपतिरेवारणिपाणिर्नेतरे।

संवत्सरं चातुष्प्राश्यपक्वाहिताग्नयश्चेत् सत्रं कुर्वन्ति तदा गृहपति·रेव लौकिकारणिपाणिः शालास्तम्भं गृहीत्वेदमगन्मेति पठति। ततः सो·मनिधानं वा। मन्थनमिष्टकापशुवत्। इष्टकापशौ यः पक्षोऽङ्गीकृतो भवति स एवात्रापि भवति। अथवा पक्षश्चेदत्र गार्हपत्येऽङ्गारमिति विशेषः।

ततोऽर्धव्यामादिकेषु प्रक्रमेष्वाहवनीयस्योद्धरणम्। वितृतीये दक्षि·णाग्नेः। प्रमाणं सर्वत्र गृहपतेरेव। क्रत्वर्थं नो गोपायेति क्रत्वर्थापदेशः। अन्नोपहारः। सर्वेषां सपत्नीकानामिष्टाशनम्। ततोऽप्सुदीक्षैकैकस्य प्रपा·दनान्ता। अत्राध्वर्युर्गृहपतिं ब्रह्माणमुद्गातारं होतारं च दीक्षयति। अनु·पति एषां पत्नीः प्रतिप्रस्थाता दीक्षयति। ततोऽध्वर्युर्ब्राह्मणाच्छंसिनं प्रस्तोतारं मैत्रावरुणं च क्रमेण प्रतिप्रस्थाता दीक्षयति। अनुपत्येषां पत्नी·र्नेष्टा दीक्षयति।

ततः प्रतिप्रस्थातारं पोतारं प्रतिहर्तारमच्छावाकं च क्रमेण नेष्टा दीक्षयति। अनुपत्येषां पत्नीः क्रमेणोन्नेता दीक्षयति।

ततो नेष्टारमग्नीध्रं सुब्रह्मण्यं ग्रावस्तोतारं च क्रमेणोन्नेता दीक्ष·यति। अनुपत्येषां पत्नीः क्रमेणोन्नेत्रोपनीतः स्नातको वा ब्रह्मचारी वाऽन्यो ब्राह्मणो वा दीक्षयति। उन्नेतारमुन्नेतुः पत्नीं च ब्रह्मचार्या·दीनामन्यतम एव दीक्षयति।

ततो दीक्षणीया। तत्र नानागार्हपत्यपक्षेऽप्यग्न्यन्वाधानं परिस्तरणं च गृहपतिगार्हपत्य एव, होमाभावान्नेतरेषु। गार्हपत्ये एवाङ्गारप्रास·नेन गृहपतिगार्हपत्यस्य साधारणीकृतत्वात्। ऊहस्थानानि तु प्राजाप·त्यपशावेव उक्तानि। ततो वेदयोक्त्रविमोकान्ते नवनीतदीक्षा सर्वेषाम्, तत्राभ्यञ्जनाद्येकैकस्य प्रवेशनान्तम्। पूर्वोक्ततत्तत्कर्तृकत्वं च। अत्र वोक्षा·

**ब्रह्मचारी स्नातकोऽन्यो वा ब्राह्मणो "न पूतः पावयेत्" इति श्रुतेः ॥१५॥ अनुपत्नि पत्नीरुत्तर उत्तरः ॥१६॥ त**

प्रवृञ्जनम् । तस्य यजमानकर्तृकपक्षे गृहपतिरुखामाहवनीयेऽधिश्रयति। समिदाधानम् । तत औदुम्बरभस्महोमः दीक्षणीयाशेषसमाप्तिः ।

ततः कृष्णाजिनदीक्षा सर्वेषाम् । तत्रैकैकस्य कृष्णाजिनास्तरणादि-दण्डोच्छ्रयणान्तमप्सुदीक्षोक्तक्रमेण ।

अत्र वा उखाधिश्रयणादि समिदाधानान्तम् । सर्वेषां कण्ठे स्वयमेव रुक्मप्रतिमोकः । अत ऊर्ध्वं बृहदिति मन्त्रेणासन्द्यामुखानिधानपर्यन्तं सर्वेषामन्वारम्भः । सीद त्वमित्युपस्थानं सर्वे कुर्वन्ति, वात्सप्रोपस्थानं च ।

अत्र मानवसूत्रे विशेषः—"रुक्मप्रतिमोचनादि वात्सप्रान्तमेकैकस्ये"ति । तेन प्रतिदीक्षानुक्रमेण विष्णुक्रमवात्सप्रे भवतः । उद्वादनप्रैषो दीक्षिता इमे ब्राह्मणा इति । प्राक् प्रैषात् सूर्यास्तमयश्चेत् गृहपतिब्रह्मादयस्तस्मिन्नेव विहारे क्रमेण सर्वेऽग्निहोत्रं जुह्वति ।

आऽस्तमयाद् वाग्यमनं सर्वेषाम् । अस्तमिते भस्मोद्वापो गृहपतेः । दीक्षिता वाचं विसृजध्वमिति वाग्विसर्गप्रैषः । पत्नि वाचं विसृजस्वेत्यत्रानूहः, प्रकृतावसमवेतत्वात् । व्रतकरणप्रैषः सर्वेषाम् । वाग्विसर्गश्च । समिदाधानं च । बहुवचनेन गोदोहनप्रैषः व्रतदुघा धुक्ष्वेति । व्रतानि सर्वेषां पृथक् पृथक् श्रपयित्वा यत्नेन रक्षणीयानि । पत्नीनां च ।

अपररात्रे सर्वेभ्यो व्रतप्रदानम् । व्रते दत्ते गृहपतिः स्वकीये व्रते समिधं न्यज्याधानं करोतीति कर्कसंप्रदायकारौ । स्वीये व्रते न्यज्य सर्वेऽपि समिध आदध्युरिति वासुदेवः ।

विबुद्धवाचने व्रतेति प्रैषः । सर्ववाचनेष्वेवम्। वाग्बन्धप्रैषो दीक्षिता वाचं यच्छतेति । पत्निशब्दे वाग्विसर्गबन्धनप्रैषयोर्नोहः । उदिते भस्मोद्वपनादिसमिदाधानान्तम् । एवं दीक्षितधर्मरूपेण द्वादशाहान्यासते ।

ततो द्वितीयायां दीक्षायां विष्णुक्रमाः । तृतीयायां वात्सप्रम् । चतुर्थ्यां विष्णुक्रमाः । पञ्चम्यां वात्सप्रम् । षष्ठ्यां विष्णुक्रमाः । सप्तम्यां वात्सप्रम् । अष्टम्यां विष्णुक्रमाः । नवम्यां वात्सप्रम् । दशम्यां विष्णुक्रमाः । एकादश्यां वात्सप्रम्, द्वादश्यां विष्णुक्रमाः इति ।

एवं प्रत्यहं व्यत्यासेन विष्णुक्रमवात्सप्रे दीक्षासु भवतः । तत्र द्वादशानां दीक्षाणां मध्ये यस्यां दीक्षायामिच्छा भवति तस्यां यूपच्छेदनमहावीरसम्भरण-वनीवाहनानि यथोक्तानि कर्तव्यानि । दीक्षामध्ये भस्माऽप्स्वभ्यवहरणमपोच्छ्रता वनीवाहनादूर्ध्वं कर्तव्यम् ।

मानवे विशेषः–"अहीने प्रभृति चिन्वीते"ति । अहीन इत्युक्तत्वात् सत्रे वनीवाहनं न भवति इति गम्यते । दीक्षाणामुत्तमेऽहनि उख्यस्याग्नेः स्थानेऽर्धव्यामेन गार्हपत्यस्य परिलेखः । मण्डलादेव त्रीन् प्रक्रमान्प्रक्रम्यान्तःपात्यशङ्कुनिखननं कर्तव्यम् । ततो ब्रह्मयजमानावाहवनीयदेशं दक्षिणेन वेदिसंलग्नावुपविशतः । यजमाना वाचं यच्छतेति प्रैषः । षट्कासादनादि त्रिकप्रोक्षणान्तम् ।

ततो वेदिमानं, पृष्ठ्यामानं, अग्निमानं परिश्रिन्निखननान्तम् । ततश्चैत्रकृष्णचतुर्थ्यामुदिते भस्मोद्वपनादिसमिदाधानान्ते त्रिस्तनं व्रतदुघा भुङ्क्ष्वेति । चतसृषूपसत्सु त्रिस्तनं व्रतकरणम् ।

ततो भस्मापोऽभ्यवहरणाद्यध्वराग्निप्रायश्चित्यन्तं कृत्वा क्रमप्राप्तं वात्सप्रोपस्थानं च कृत्वा ततो विष्णुक्रमवात्सप्रसमासं कुर्यात् । ततः पलाशशाखया गार्हपत्यव्युदूहनादि प्रायणीयहविष्कृदन्ते विशेषः । उपवसथप्रभृति नानागार्हपत्यपक्षे शाखायाः स्थापनमितरेषां गार्हपत्यानां गृहपतिगार्हपत्यचयनपक्षे । धिष्ण्यचयनपक्षे तु निरसनमेव ।

ततो महावेदेः स्पाद्यासंमर्शनान्तम् । ततः शूर्पादानादि वेदविमोकान्तं प्रायणीयं कृत्वा सीरयोजनादि सर्वौषधिवपनान्तम् । तत उपरवदेशे सोमनिवपनाद्यातिथ्यहविष्कृदन्ते विशेषः । पद्याभिहोमार्थे चतुर्गृहीते गृहपतेरेवान्वारम्भः । शुण्ठाधी लोहाकर्णी सोमक्रयणी । "अहर्गणेऽव्यविशेषादि"त्युक्तत्वात् । शुण्ठाधो पीतमुखी वेष्टितमुखीति केचित् । पीतपुच्छीत्येके । लोहाकर्णी लोहितकर्णी । पदसमर्पणेऽन्वारम्भः । युष्मासु रायोऽस्मासु राय इत्यूहश्च । गृहपतिपत्न्या एव पदसमर्पणम् । पत्नीवाचनेषु ब्रूतेति प्रैषः । सर्वासां मन्त्रवाचनम् ।

यजमानकर्तृकपक्षे सोमोपनहनं गृहपतिः करोति । सोमोपनहने दशकृत्वो मन्त्रेण सोमं मित्वाऽर्थवत् परिमाणस्य सोमस्योपर्येकादशोऽध्यावापः कार्यः । आगते सोमे उत्थानं चेत् सर्वेषामूरावाधानं गृहपतेरेव । स्वान भ्राजेति जपश्च गृहपतेरेव । शिरसोऽपोर्णवनं सर्वेषाम्, पत्नीनां च ।

गृहपतेर्दण्डो मैत्रावरुणाय देयः । "दीक्षिता दण्डान् प्रयच्छन्ती"ति मानवे । शीर्ष्णि सोमकरणादि गृहपतेः । वाचनादि सर्वेषाम् । आतिथ्यायां हविर्ग्रहणे गृहपतिपत्न्यैवाध्वर्युमन्वारभते । हविर्ग्रहणे मुष्टिं विभज्याध्वर्युणा हविर्ग्रहणं कर्तव्यम् । ग्रहणानन्तरं पुनर्बन्धनम् । एवं सर्वत्रार्त्विज्यविरोधे सर्वैर्याजमानं त्याज्यम् ।

अत्र हविष्कृदन्ते आहवनीयपरिश्रिताभिमन्त्रणादि लोगेष्टकोपधानान्तम् । ततः शम्यामादायोत्तरवेदिच्छादनान्तम् । ततः सिकतानि-

वापाद्यालम्भनान्तम् । आतिथ्येडान्तेऽवान्तरदीक्षा सर्वेषां यजमानाना-माहवनीये समिदाधानान्ता । पत्नीनां च ।

नानागार्हपत्येषु पत्नीनां स्वस्वगार्हपत्ये समिदाधानान्तम् । प्रवर्ग्यचरणे अनाधृष्टेति वाचने अध्यधि प्रादेशधारणं गृहपतेः । वाचनं सर्वेषाम् । पाणिनिधानं विश्वाभ्यो नो नाष्ट्राभ्य इति गृहपतेरेव ।

प्रादेशनिधानं च । गर्भो देवानामित्युपस्थानं सर्वेषाम् । अपातामित्यनुमन्त्रणं गृहपतेः सर्वैरन्वारब्धस्य । मधु हुतमिति भक्षणं सर्वेषाम् । उपसद्धोमे गृहपतेरन्वारम्भः । घर्मचितिप्रणयनाद्यश्वोत्सर्गान्तम् । उत्तरवेदिप्रोक्षणादि नाभिव्याघारणान्तम् । मयि गृह्णामीति जपः सर्वेषाम् । सत्यसामगानं गृहपतेः ।

पुष्करपर्णोपधानादि लोकम्पृणानामुपधानान्ते विशेषः । सर्पनामोपस्थानं गृहपतेः, प्रावणान्तपरिलेखश्च । प्राजापत्यपशुशिरसि पञ्चशिरोव्याप्तिश्चेत्पञ्चवारं समानां अतानां हिरण्यशकलानां प्रक्षेपः । सहस्रदा इत्युद्ग्रभणम् । आदित्यं गर्भमिति पुरुषमन्त्रेणोपधानम् । अश्वादिशिरसामुपधानमन्त्रैस्तस्य शिरसस्तस्यां तस्यां दिश्यङ्गुल्या स्पर्शः कार्यः । चित्रं देवानामित्याहुती च । सर्वैरुत्सर्गमन्त्रैरुपस्थानं च ।

अपराह्णे तानूनप्त्रमध्ये गृहपतेर्व्रतमभ्युन्सिच्य तस्य गृहपतय एव प्रदानं नेतरेभ्यः । ततः सायं प्रवर्ग्योपसदौ । उपास्तमयमश्वपरिणयनमितरथावृत्यन्तम् । ततो वाग्यमनप्रैषादि । प्रातरुदिते प्रवर्ग्योपसदौ । ततः प्रथमायां चितौ पुरीषनिवापः । वार्त्रहत्यायेति पुरीषवत्याः प्रथमाया उपस्थानम् । ततोऽपराह्णे त्रिस्तनं व्रतकरणम् । ततः प्रवर्ग्योपसदौ ।

ततः सायंकाले अश्वपरिणयनम् । वाग्बन्धप्रैषादि । प्रातर्वाग्विसर्गान्ते त्रिस्तनव्रतकरणम् । प्रवर्ग्योपसदौ । आद्यासु चतसृषूपसत्सु अयःशयेोपसदाहुतिः । ततो द्वितीयायाश्चितेरुपधानं लोकम्पृणोपधानान्तम् । ततोऽपराह्णे व्रतकरम् । प्रवर्ग्योपसदौ । सायमश्वपरिणयनम् । वाग्बन्धादि प्रातर्विसर्गान्तम् । त्रिस्तनमेव व्रतकरणम् ।

ततः प्रवर्ग्योपसदौ । द्वितीयायां पुरीषावापः । समर्चोपस्थानम् । अपराह्णे त्रिस्तनं व्रतकरणम् । ततः सायं प्रवर्ग्योपसदौ । अश्वपरिणयनम् । वाग्बन्धादि प्रातर्विसर्गान्तम् । प्रातश्चैत्रकृष्णाष्टम्यां पञ्चम्यामुपसदि द्विस्तनं व्रतदुघां धुक्ष्वेति प्रैषः । इतः प्रभृति चतसृषु उपसत्सु द्विस्तनं व्रतकरणम् । ततः प्रवर्ग्योपसदौ । पञ्चम्या उपसदः प्रभृति अष्टमीं यावद्रजः शयेत्युपसदाहुतिः ।

ततः तृतीयचितेरुपधानम् । ततोऽपराह्णे द्विस्तनं व्रतकरणम् ।

प्रवर्ग्योपसदौ । अश्वपरिणयनम् । वाग्बन्धादिप्रातर्विसर्गान्तम् । प्रवर्ग्यौपसदौ । तृतीयायां पुरीषावापः । स्वमन्त्रोपस्थानम् । अपराह्णे व्रतकरणम् । प्रवर्ग्योपसदौ । अश्वपरिणयनम् । वाग्बन्धादि प्रातर्विसर्गान्तम् । ततः प्रवर्ग्योपसदौ ।

ततश्चतुर्थ्याश्चितेरुपधानम् । अपराह्णे व्रतप्रदानम् । प्रवर्ग्योपसदौ । सायमश्वपरिणयनम् । वाग्बन्धादि प्रातर्विसर्गान्तम् । प्रातः प्रवर्ग्योपसदौ । चतुर्थ्यां पुरीषावापः । स्वमन्त्रोपस्थानम् । ततोऽपराह्णे व्रतकरणम् । प्रवर्ग्योपसदौ । अश्वपरिणयनम् । वाग्बन्धनादि प्रातर्विसर्गान्तम् । प्रातर्नवम्यामुपसदि एकस्तनं व्रतदुघा धुक्ष्वेति प्रैषः। प्रवर्ग्योपसदौ । नवमीप्रभृतिषु व्रतसूपूपसत्सु एकस्तनं व्रतम् । इरिशयेत्युपसदाहुतिश्च । ततः पञ्चम्याश्चितेरुपधानम् । अपराह्णे एकस्तनं व्रतप्रदानम् । प्रवर्ग्योपसदौ ।

पञ्चम्यां चितौ पुरीषनिवापः । अपराह्णे व्रतकरम् । प्रवर्ग्योपसदौ । अश्वपरिणयनम् । वाग्बन्धनादि प्रातर्वाग्विसर्गप्रैषान्तम् । प्रातः प्रवर्ग्योपसदौ । ततो विकर्णयुपधानाद्युक्थ्यशंसनप्रैषान्तम् । अपराह्णे व्रतकरणम् । ततः प्रवर्ग्योपसदौ । अश्वपरिणयनम् । वाग्बन्धादि वाग्विसर्गान्तम । रात्रौ आर्द्राणामौदुम्बरीणां घृतमध्ये प्रक्षेपः । सकलां रात्रिं ताः समिधो घृतमध्ये तिष्ठन्ति । अनुदिते वाग्बन्धप्रैषादि प्रातर्वाग्विसर्गान्तम् ।

प्रातः पञ्चगृहीतादि धिष्ण्यचयनान्ते विशेषः । इमं स्तनमिति वाचनपक्षे ब्रूतेति प्रैषः । वसोर्धाराहोमं गृहपतिः सर्वैरन्वारब्धः करोति । वाजप्रसवीयहोमान्ते सर्वेषामभिषेकः । हविर्धानप्रक्षालनादि विशेषः। गृहपतिपत्न्यक्ष्योपाञ्जनं करोति । उपरवाभिमर्शने तन्नः सह, तन्न इति । सर्वान्वारब्धस्य गृहपतेरध्वर्योश्चाभिमर्शनम् । धिष्ण्यचयनानन्तरमेकाहवद्धोत्तम इत्येतत्पक्षव्यतिरिक्तेषु त्रिषु पक्षेषु शालाद्वार्यादक्षिणोत्तराणां सर्वेषां गार्हपत्यानां पूर्वोक्तप्रकारेण चयनम् ।

प्रथमपक्षे पूर्वं ब्रह्मादि गार्हपत्यानामुपशमनम् , ततश्चयनमिति विशेषः । तत्र गार्हपत्यचितिवच्चयनपक्षे प्रथमं सर्वेषां परिलेखः परिमण्डलपक्षे । चतुरस्रपक्षे "मण्डलस्य चतुरस्रं चिकीर्षन्नि"त्युपायेन मण्डलस्य चतुरस्रकरणम् । ततः सर्वेषां शाखया व्युदूहनम् । ततः शाखानिरसनम् । ततः सत्रेषूषनिवापो मण्डलाच्छादनान्तः ।

ततः सर्वेषु सिकतानिवापो मण्डलाच्छादनान्तः । ततः सर्वेषु परिश्रिन्निखनम् । अर्धबृहत्युपधानादि समविलकरणान्तमेकैकस्य । अत

एत्योन्नेतुः ॥१७॥ दक्षिणाकाले कृष्णाजिनानि धून्वाना

---

ऊर्ध्वमनुदेशाद्धिष्ण्यवच्चयनपक्षे तूष्णीं निवापं कृत्वा आग्नीध्रीयवत् सर्वेष्वष्टानामष्टमिष्टकानामुपधानम् । तेषु लोकम्पृणेषु सकृन्मन्त्रः ।

ततः सर्वेषु यावदिष्टकं परिश्रितां परितो निधानम् । ततः सर्वेषु तूष्णीं पुरीषनिवापः । अस्मिन् पक्षे पलाशशाखाव्युदूहनादेरभावः । ततः सम्राडसीत्याहवनीयानुदेशादि । सप्तदशगार्हपत्यपक्षे सप्तदशानां शाखानां छेदनम् । एकाहवत्पक्षे तु एकैव शाखा ।

अपरे तु सर्वपक्षेष्वेकामेव शाखामिच्छन्ति । नानागार्हपत्यपक्षे प्रातःसवनवत् सप्तदशानां षड्वर्गाणां सवनीयदध्यर्थमपाकरणम् । तत्र गोः शाखयोपस्पर्शने ध्रुवा एषु गोपतिषु स्यात बह्वीरित्यूहः । यजमानानां पशून् पाहि इति च । यजमानपदस्य पशुविशेषणत्वेऽपि क्रतूपयोगिपशूनां सर्वयजमानसाधारण्यात् । एकाहवत्पक्षे प्रकृतिवदेव ।

शालाद्वार्यमपरेणासनं गृहपतेः। अपिव्रतान्वारम्भो यथास्वम्। यजमानानामेकेन वाससाऽऽच्छादनम् । आग्नीध्रीयस्योद्यमने कृते सर्वे ब्रह्मादयः शालाद्वार्यादेकैकमङ्गारं हृत्वा स्वस्वचितिषु स्थापयन्ति । विसृज्योपस्थाने सर्वे गृहपतिमन्वारभन्ता उपागा इदं वयं मनुष्यान्त्सहेति विपरिणामः । निष्क्रमणप्रभृति अङ्गुलिविसर्गान्तमेकैकस्य ।

नानागार्हपत्यपक्षे पत्नीनां स्वस्वगार्हपत्येषु समिदाधानम् । सुब्रह्मण्याह्वाने सर्वेषां नामग्रहणानि । सवितः स्वेति बाहुग्रहणानि सर्वेषां भेदेन । शालाद्वार्यमपरेण गृहपतिपत्नी आस्ते । उत्तरवेदिमपरेण गृहपतिरुपस्थे सोमं कृत्वोपविशति । वस्त्रान्तरेण बद्ध्वा अर्थवत्सोमपरिहरणम् । यथोपाकृतं दोहाः । उखाधिश्रयणे मा ते यज्ञपतयो ह्वार्षुरिति ।

नानागार्हपत्यपक्षे पयस्यार्थे सप्तदशानां षड्वर्गानामपाकरणम् । आवसथादीनां दानं न भवति । "अध्वर्योरदीक्षितस्य" त्युक्तत्वात् । ततः सुत्यायामपररात्रे स्वयमेवोत्थायाप उपस्पृश्य परिस्तरणादि । सवनीयपशुविकल्पाश्रयणापेक्षया पाशुकं पात्रासादनम् । आग्नीध्रीये स्थापितसोमार्द्धस्योपावहरणम् । प्रातरनुवाकोपाकरणाद्ग्नियोजनम् । पूर्ववत् सुब्रह्मण्याह्वानम् ।

नानागार्हपत्यपक्षे प्रत्यग्नि सवनीयानां निर्वापः। तत्र गृहपतिगार्हपत्येऽग्नौ । विरोधादन्ये इतरेषु गार्हपत्येषु । पात्रासादनं पाशुकमस्त्येव । तत् सवनीयनिष्पत्त्यर्थमासादयति-अर्थवत् परिमाणे जुह्वप्रभृतौ । श्रुतावदानं चेत्यग्नीधोऽधिकमितरेषां सवनीयनिष्पत्त्युपयोगिनामेवासादनम् ।

प्रोक्षणप्रैषेऽपि ब्रह्मन् हविः प्रोक्षिष्याम इत्येव वक्तव्यः। अन्यथा प्रोक्षितेति प्रतिप्रश्नो विरुध्यते। यथास्नमन्वारब्धे दोहाः।

एकाहवत्पक्षे प्रकृतिवदेकैकपशुपुरोडाशादि निर्वपणानन्तरमन्द्रं बार्हस्पत्यं वा पञ्चशरावमोऽन्नं पुरोडाशं वा निर्वपेत। तत्र सप्तदशरावमात्रेण चतुर्वारं ग्रहणं कर्तव्यम्। अस्मिन् पक्षे पात्रासादने चरुश्चेच्चरुस्थाल्यधिका। पुरोडाशश्चेदष्टौ कपालानि।

नानागार्हपत्यपक्षे आग्न्यान्ते अर्थवत्परिमाणयोर्जुहूपभृतोः संमार्गार्थं तु संमृड्ढि इति प्रैषः। तयोः संमार्जनम्। गृहपतेर्गार्हपत्ये प्रतपनम्। ततः स्रुचोरग्नि जुहूरस्युपभृदित्याभ्यामादनम्।

पात्रयोजने षोडशिनः पात्रमधिकमग्निमस्थाने खरे सादनीयम्। तथा चतुरस्रमौदुम्बरमंशुग्रहार्थं पात्रं चासादनीयम्। सर्वाः पत्न्यो द्वौ द्वौ पान्नेजनावुन्नयन्ति।

पान्नेजनः पादनेजनार्थमुदककलशः। एतस्मादेव प्रतिपत्ति पान्नेजनद्वयोन्नयनवचनात् सर्वाः पत्न्यः पशोः प्राणशोधनं कुर्वन्तीति गम्यते इति हरिस्वामिनः। गृहपतये निग्राभ्यासमर्पणम्। यमम इति मन्त्रेण छदिष आलम्भनम्। तूष्णीं हविर्धाने प्रवेशो वा। "छदिरतिरात्र" इत्युक्तत्वात्।

एकधनस्थाने उभयशेषं निधायेध्मस्यानन्तरमध्वर्युरंशुग्रहार्थमनामिकायां हिरण्यं बध्नीते। ततस्तूष्णीमद्ग्रादानं करोति। तूष्णीमुपावहृतात् सोमांशूनधिषवण उपनिवपति। तूष्णीं निग्राभ्या आसिञ्चति।

ततो ग्रावाणां प्रहरणार्थमुद्यम्य विकल्पेन प्रहरणं करोति, उद्यमनमात्रं वा। ततस्तूष्णीं तदुदकमौदुम्बरे चतुरस्रे उलूखले गृह्णाति। ततः परिमृज्योत्थाय गत्वा तूष्णीमाहवनीये स्वाहेति सर्वं जुहोति। अनवानं वा जुहोति। इदं प्रजापतये।

ततो यदनामिकायां हिरण्यं पूर्वं बद्धं भवति तस्यावघ्राणं करोति। सत्रादन्यत्राध्वर्यवे द्वादश प्रथमगर्भा वत्सतरीर्ददाति। ततोऽदाभ्यग्रहं गृह्णाति। तत्र यजमानस्य भूतिफलस्य वाञ्छा चेद् येन पात्रेणांशुग्रहणं कृतं तस्मिन्नेव पात्रे निग्राभ्यातूष्णीमासिञ्चति।

उपयामगृहीतोऽस्यग्नये त्वा गायत्रच्छन्दसं गृह्णामीत्येकं सोमांशुं पात्रमध्ये च निदधाति। उपयामगृहीतोऽसीन्द्राय त्वेति द्वितीयम्। उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य इति तृतीयम्।

एवं त्रीन् सोमांशून् पात्रेऽवधायोत्थायाहवनीयं प्रति गच्छति। त्रेशीनां त्वेति मन्त्रेण गृह्णामीत्यन्तेनांशुभिरस्मिन् पात्रे गृहीता निग्राभ्या

अवधूनोति आडूवालयति। ततस्तस्मै ते सोमेति मन्त्रेण जुहोति। इदं सोमाय। निःशेषस्य होमः। पूर्ववद्धिरण्यावघ्राणम्। द्वादशसंख्यानां गर्भिणीनां वत्सतरीणामध्वर्यवे दानं सत्रादन्यत्र।

ततः पात्रस्थान् सोमांशून् क्रमेणोशिक्त्वमिति प्रतिमन्त्रमधिषवणस्थे सोमे प्रास्यति। अधिषवणे निग्राभ्याणामुरसि ग्रहणं गृहपतेः। वाचनं सर्वेषाम्। मितालम्भने एभ्यो यजमानेभ्य उरु राये इति विशेषः।

प्रातःसवने आग्रयणग्रहणानन्तरं षोडशिग्रहणम्। प्रदक्षिणावृत्तीत-रथावृत्ती। आसादनं, षोडशिनो होमं यावत्। अध्वर्योर्वाग्यमनम्। आग्रयणे पाहि यज्ञपतीन् विष्णुस्त्वामिति। तथा अस्मै क्षत्रायैभ्यः सुन्वद्भ्यो यजमानेभ्यः पवत इति च। ध्रुवहोमपर्यन्तं मूत्रपुरीषयोरकरणं सर्वेषाम्। समन्वारब्धनिष्क्रमणं विप्रुड्ढोमं कृत्वा ब्रह्मा यजमानो गृह-पतिः उभावपि प्रतिहर्तारं समन्वारभेतामिति संप्रदायः। आश्विनग्रहणे गृहपतेरन्वारम्भो वैकल्पिकः।

अवकाशवाचने प्राणाय मे वर्चोदावरस्वेति ब्रुवन्तः उपांशुमीक्ष-ध्वमिति। एवं यथाग्रहं प्रयोगः। भूर्भुवः स्वरिति जपः सर्वेषाम्। अथात्र सवनीयपशुविकल्पा उच्यन्ते, प्रत्यहमैन्द्राग्नः पशुर्भवति। अथवा प्रत्यहं स्तोमायनं भवति। अस्मिन् पक्षे अग्निष्टोमसंस्थेऽप्येक आग्नेयः पशुर्भवति। उक्थ्यसंस्थेऽप्याग्नेयैन्द्राग्नौ द्वौ पशू। षोडशिसंस्थे आग्ने-यैन्द्राग्नैन्द्रास्त्रयः पशवः।

अतिरात्रसंस्थे आग्नेयैन्द्राग्नैन्द्रसारस्वताश्चत्वारो यथोक्तजाती-याः। अथवा एकादशस्वहस्सु प्रत्यहमेकादशिना आग्नेयादयो विहृता-भवन्ति, क्रमेण प्रत्यहमेकैकः। अस्मिन् पक्षे उदयनीयातिरात्रे द्वादशेऽहनि एकादशिनानामाद्य आग्नेयः पशुः। अथवा सर्वे आग्नेयादय एका-दशापि। अथवा ऐन्द्राग्न इति।

अतः प्रायणीयप्रभृति सर्वेष्वहस्सु त्रयो विकल्पाः। अतश्च प्रायणीये ऐन्द्राग्नो वा सवनीयः। एकादशिनिपक्षे आग्नेयः। स्तोमायनं वेति पक्षे आग्नेयादयश्चत्वार इति। तत्रेन्द्राग्नपक्षे इन्द्राग्निभ्यां जुष्टम् इत्यादि निरूढवत्। एकादशिनिपक्षेऽग्निष्टोमवत्। स्तोमायनपक्षेऽतिरात्रवत्। नियोजनादि सर्वम्। ऋतुयाज्यावरणे अग्निहहैवीनां विशां पुर एता मसुन्वन्तो मनुष्याणां तेषामस्थूरि इत्यादि पशुवत्।

एते मे सुन्वन्तो यजमाना मनुष्याणामिति वा। प्रवृत्तहोमं तु परार्थत्वादितरान्वारब्धो गृहपतिः करोति। तत्रोहः। जुष्टो वाचे भूयास्मेति। वपामार्जनान्ते धिष्ण्योपस्थानादौ सर्पणे अध्व-

दक्षिणापथेन जपन्तो गच्छन्ति यन्मे गदायुषः परा-

नामध्वपत इत्यादीनि त्रीण्यभिमन्त्रणानि यजमानकर्तृकाणि भवन्तीति सम्प्रदायः । अतश्च सूर्याभिमन्त्रणे धिष्ण्याभिमन्त्रणे चोहो भवति । अध्वनामध्वपते प्रास्मांस्तिर स्वस्ति नोऽस्मिन् पथीति सूर्यम् । अग्नयः सगरा० नोकेन पातास्मान० तास्मान० अद्य गापायतास्मान्नमो वोऽस्तु माऽस्मान्हिंस्ष्टेति । ऋत्विगभिमन्त्रणं सत्रे न भवति ऋत्विजामभावात् ।

अपरेऽभिमन्त्रणान्यध्वर्युकर्तृकानीत्याहुः, ऋत्विगभिमन्त्रण एव याजमानमिति । नानापुरोडाशपक्षे यथारम्भिणे जुहूपभृतावादाय तत्र सर्वेषां सवनीयानां समवदाय तन्त्रेण यागः । एकपुरोडाशपक्षे ऐन्द्रस्य पञ्चशरावस्य सहैव यागः । बार्हस्पत्यश्चेत्सवनीययागानन्तरं बृहस्पतयेऽनुब्रूहि इत्युक्त्वोपस्तीर्य तस्यावदाय तत उपभृत्युपस्तारादि सवनीयानां बार्हस्पत्यस्य च । स्विष्टकृदर्थमवदानम् । द्विरभिघारः।

तत उत्थायाश्राव्य बृहस्पतिं यजेति प्रैषः । तन्त्रेण स्विष्टकृद्यागः । पञ्चशरावस्य होतृधिष्ण्ये निधानं न भवति । शुक्रामन्थिप्रचारे अभिरायस्पोषेण यजमानान् इति । यजमानचमसे होता पृच्छति । सुन्वन्त उपह्वयध्वमिति, यजमाना उपह्वयध्वमिति वा ।

सर्वे प्रत्याहुरुपहूत इति । गृहपतिप्रभृतयो होतारं पृष्ट्वा पृष्ट्वा यजमाना उपह्वयध्वमिति च पृष्ट्वा सर्वे यजमानचमसे भक्षयन्ति । एवं सर्वयजमानानां प्रत्येकं भक्षः। एवं सर्वेषु भक्षेषु । वैश्वदेवग्रहणेऽन्वारम्भपक्षे गृहपतिमन्वारभन्ते । माध्यन्दिनीयसवनीयनिर्वापे प्रथमं पुरोडाशनिर्वपणम् । तत्र पात्रासादने पूर्णपात्रकर्मापवर्गयोरनासादनं, प्रागुदयनीया तिरात्रात् । माध्यन्दिने सर्पणाभिषवनिग्राभ्यावाचनाद्युक्तम् ।

माध्यन्दिने आग्रयणानन्तरं षोडशिनो ग्रहणं, तत उक्थ्यः । तस्मिन् पक्षे मरुत्वतीयो मुष्टिग्रहः । अग्नीदग्नीनिति प्रैषे दक्षिणा उपावर्तयेत्यस्याभावः । दधिघर्मे सर्वेषां प्रत्यक्षभक्षो नियमेन । दक्षिणाया अभावाद् दाक्षिणाभावः । तत्र गृहपत्यादयः सर्वे यजमानाः कृष्णाजिनानि धून्वाना गवादिदक्षिणानयनमार्गेण यन्मे गदायुष इति मन्त्रं जपन्तो गच्छन्ति ।

अत्र मन्त्रे अमुममुष्यायणमित्यत्रामुकगोत्रममुकशर्माणममुकस्य पौत्रममुकस्य पुत्रं कामायेति यथास्वमुच्चारणम् । मन्थौदनतिलमाषाणां नयनं भवति । पुरुषार्थत्वपक्षे मन्थादीनामपि। प्रकृतौ हिरण्यादिवद्दक्षि-

गिराऽगात्तां तेऽगद दक्षिणां नयामीतीदमहममुमामु-

णात्वेनैव दानमिति हरिस्वामिनः।

तन्मताश्रयणे गवादिवन्मन्थादीनामप्यभाव एव सत्रे। सदोगमन-पत्नस्य प्रेरणाऽऽत्रेयप्रासर्पकदानादि गृहपतेः। तृतीयसवनार्थानि सवनी-यनिर्वपणानन्तरं सौम्यं चरुं निरुप्याग्नीदाश्विनं द्विकपालं पुरोडाशं निर्वपति। तत्र सवनीयपात्रासादने त्रयोदश कपालानि, पुरोडाशपात्री चेत्येतावदधिकम्।

अवभृथार्थं वारुणनिर्वापः प्रागुदयनीयातिरात्रान्न भवति। प्राग-च्छावाकविग्रहात्प्रसतीवरिग्रहणमत्र वा सादनान्तम्। आदित्यग्रहार्थं गृहपतेर्हविर्धानप्रवेशनम्। अन्वारम्भश्च। तृतीयसवने आग्रयणादुत्तरं वा षोडशिना ग्रहणमासादनान्तम्। तत उक्थ्यग्रहणम्। आशिरावे-क्षणे पत्न्या अन्वारम्भो न चोहः, प्रकृतावसमवेतत्वात्।

हविर्धानमध्ये पिण्डपितृयज्ञवद्दाने पुरोडाशस्य सप्तदशादि चतुर्विं-शपर्यन्ता यजमानसंख्यया भागाः कर्तव्याः। तेषां भागानां मध्यादेकं भा-गमवदाय सप्तदशधा विभज्य ब्रह्मणः पितृभ्यः सर्वे प्रकृतिवत् पिण्डदानं कुर्वन्ति। इयांस्तु विशेषः। ब्रह्मा यजमानत्वेन यजमानचमसे पिण्डं करोति ब्रह्मपदार्थकर्तृकत्वात् ब्रह्मचमसे च।

ततस्तृतीयं सप्तदशभागमादायोद्गातृपितृभ्यः सर्वे पिण्डदानं प्रकृ-तिवत् कुर्वन्ति। उद्गाता च ब्रह्मवत् यजमानचमसे स्वचमसे च पिण्डदानं करोति। ततश्चतुर्थं भागमादाय होतृपितृभ्य एवम्। होता च ब्रह्मवत् उभये चमसे। ततः पञ्चमं भागमादायाध्वर्युपितृभ्यः। एवमुन्नेतृपर्यन्तं सर्वेषां पितृभ्यः सर्वे पिण्डदानं कुर्वन्ति।

एकाधिकगृहपतिपक्षे प्रथमं सर्वगृहपतिपितृभ्यो दत्वा ततो ब्रह्मा-दिपितृणामिति। सावित्रग्रहणे जिन्व यज्ञं जिन्व यज्ञपतिं भगायेति। प्राग्यज्ञायज्ञियोपाकरणादग्निविमोचनं च। यज्ञायज्ञिये गृहपतिपत्नी सर्वाभिः पत्नीभिरन्वारब्धा सती उद्गातारमीक्षते। उर्वासेकः सर्वासाम्। पात्रप्रक्षालनान्ते उक्थ्यविग्रहणम्।

ततः सर्पणपूर्वकं षोडशी। प्रातः सवनादिष्वगृहीतश्चेत् पूतभृतो ग्रहणं, वाग्यमनं, चमसोन्नयनं, उपस्थानं, उपास्तमयं कृष्णेऽश्व उप-तिष्ठति तृणहिरण्यैरुपाकरणादि भक्षान्तम्। ततः पुनः सर्पणं कर्माकरा-णाम्। चतुस्तोत्रास्त्रयः पर्यायाः। तेऽत्र चमसैरेव। सर्वेषु प्राणदानम्। चतुर्णां स्तोत्राणामन्तेषु प्रतिस्तोत्रमेकैकं शस्त्रम्।

ष्यायणममुष्य पुत्रममुष्याः पुत्रं कामाय दाक्षिणां नया-

तत्र प्रथमस्तोत्रान्ते होतुः । द्वितीयस्तोत्रान्ते मैत्रावरुणस्य । तृतीयान्ते ब्रह्मणाच्छंसिनः । चतुर्थ्यान्तेऽच्छावाकस्येति । होतृप्रशास्तृशस्त्रयोरध्वर्योः प्रतिगरो हारश्च । इतरयोः शस्त्रयोरुभयं प्रतिप्रस्थातुः । सर्वेषु यज्ञायज्ञियवत् पूतभृतश्चमसोन्नयनम् । पर्यायाणां त्रयाणामुक्थ्यादौ पृथक् पृथक् सर्पणम् ।

ततः पर्यायत्रयान्ते सर्पणं कृत्वा होत्रादीनां चमसानुन्नीय सन्धिस्तोत्रोपाकरणम् । शस्त्रान्ते होतुराश्विनं शस्त्रं तत्राध्वर्योः प्रतिगरः । होता सूर्योदयानन्तरं शस्त्रं समापयति । ततः शस्त्रान्ते प्रतिप्रस्थाताऽऽश्विनमासाद्यालभ्यात्मानमालभ्यापः स्पृष्ट्वा जुहूपभृतावादत्ते । चमसाध्वर्यवश्चमसान् । अश्विभ्यां तिरोऽह्न्यानां सोम्यानामनुब्रूहीत्यध्वर्युराह ।

ततः प्रतिप्रस्थाता जुह्वामुपस्तीर्य सर्वमप्याश्विनं जुह्वामवधाय द्विरभिधार्य प्रथमे च वषट्कारे चमसैः सह जुहुयात् । अध्वर्युराश्राव्याश्विभ्यां तिरोऽह्न्यान् सोमान् प्रस्थितान् प्रेष्येत्याह । वषट्कारानुवषट्कारयोः सर्वचमसानां होमः । आग्निमारुतपक्षे भक्षणम् । सर्वभक्षाश्चसाः । मार्जालीये चमसप्रक्षालनं चात्वालमपरेण निधानम् । तत उल्मुकसमासाद्यनुयाजाः । व्यूहने-ऐन्द्राग्नसवनीयपक्षे इन्द्राग्न्योर्वनस्पतेरिन्द्रस्य वसुमत इत्यादि । एकादशिनिपक्षे अग्नेर्वनस्पतेरिन्द्रस्येति ।

स्तोमायनपक्षे अग्नेरिन्द्राग्न्योरिन्द्रस्य सरस्वत्या वनस्पतेरिन्द्रस्य वसुमत इत्यादि । बार्हस्पत्यपक्षे विश्वदेव्यावतो बृहस्पतेः सोमस्याश्विनोरुज्जितिमिति । एवमिन्द्राग्नी वनस्पतिरिन्द्रो वसुमानिति च । अग्निर्वनस्पतिरिति वा । अग्निरिन्द्राग्नी इन्द्रः सरस्वती वनस्पतिरिन्द्रो वसुमानिति वा । विश्वदेव्या वा । बृहस्पतिः सोमोऽश्विनौ तमपनुद्भवति । सर्वशाखाभिः सह प्रस्तरानुप्रहरणम् ।

उदयनीयेऽग्निविमोकपक्षे न परिधिप्रक्षेपः । सर्वोपवेषहोमः । हारियोजनान्ते अग्नीत्प्रेष्यति श्वः सुत्यामिन्द्राग्निभ्यामित्यादि वाचं यच्छेत्यन्तम् । वसतीवरीपरिहरणपर्यन्तं ब्रह्मणो वाग्यमनम् । तथाच छन्दोगसूत्रम्—"अहर्गणेष्वेनं सदसि प्रैषेण प्रशास्ता वाचं यमयति राजानं रक्षेति चाह तदुभयं कुर्यात् आ वसतीवरीणां परिहरणात् तत्सत्रे पर्यायेण कुर्युरहीने तु ब्रह्मैवे"ति ।

तथाच मानवे-"अतिप्रेषिते आग्नीध्रः स्वधिष्ण्यस्य पश्चात् सद-

मीति ॥ १८ ॥२॥

पृष्ठयः षडहः प्रथमोऽग्निष्टोमश्चतुर्थः षोडश्युक्थ्या

सुत्यामिन्द्राग्निभ्यां ब्रह्मन् वाचं यच्छेत्यावेदयति पत्नीसंयाजान्तान्यहानि तिष्ठन्ति तदनु वाचं यच्छति परिहृतासु वसतीवरीषु वाचं विसृजत" इति । शाङ्खायने—"अनुवषट्कृत एव मैत्रावरुणसंप्रेषित आग्नीध्रः स्वधिष्ण्यस्य पश्चादुपविश्य श्वः सुत्यामित्याहे"ति । वेद्यालम्भः ।

कर्कमते समिष्टयजुषोऽभावे वेद्यालम्भाभावः । पत्नीसंयाजाः पशुवत्। नानागार्हपत्ये गृहपतेर्जाघन्या, इतरेषामाज्येन । पत्नीसंयाजान्तानि सर्वाण्यहान्युदयनीयातिरात्रवर्जम् । तेन सर्वेषु दक्षिणाग्निहोमः । पूर्णपात्रादि कर्मापवर्गान्तानामर्थकर्मणामभावः । प्रतिपत्तियस्तु प्रवर्तन्ते । वेदविमोकः । योक्त्रविमोकपक्षे योक्त्राणां च । एकवृद्बर्हिर्होमः। पशुपुरोडाशभागावेक्षण भागप्राशनादि पुनः शाखाच्छेदनाद्युपगूहनान्तमुक्तन्यायेन । वसतीवरीग्रहणमत्रावसरे वा निधानान्तम् ।

व्युत्क्रामतेति प्रैषः । वसतीवरीपरिहरणम् । शालाद्वार्यमपरेण गृहपतिपत्न्यास्ते । उत्तरवेदिमपरेण गृहपतिः । एवं सर्वत्र । वस्त्रान्ते बद्ध्वा अर्थतः सोमपरिहरणम् । वाग्यतस्य ब्रह्मणो रक्षणमा बोधनात् । इतरे दीक्षिताः समिदाहरणार्थमुत्तराहःशेषभूतस्वाध्यायार्थं च गच्छन्ति । सोमरक्षिता तु तत्रस्थ एव स्वाध्यायं करोति । इतरे च तस्य समिध आनीयार्पयन्ति ।

समिदर्थं स्वाध्यायार्थं च गतानां यदि कश्चिद् भक्षणार्थमपूपमोदकादिकमर्पयति तदा तत्ते हविरुच्छिष्टमपि अश्नन्ति । तत्राप्यश्नन्ति विधिबलात् । ततः समिदाद्याहृत्य गच्छन्ति । ततः पूर्ववत् सुब्रह्मण्याह्वानम् । ततः सर्वे दीक्षिताः आहृताः समिधो हस्ते कृत्वा सर्वेष्वग्निष्वाहवनीयाग्नीध्रीय दक्षिणाग्निषु क्रमेण समिदाधानं कुर्वन्ति । ततोऽपाकृतहोमः ।

आतञ्चनम् । निधानम् । ततः पयस्यार्थं वत्सापाकरम् । तस्मिन्नेव दिने तदेव पृष्ठस्य प्रथमाह्नोऽग्निष्टोमसंस्थाया आरम्भः ।

इति द्वादशस्य द्वितीया कण्डिका ॥ २ ॥

ततो वैकल्पिकमग्नियोजनम्। क्रतुकरणमग्निष्टोमिकम्। अतिग्राह्यपात्राग्रिकं पात्रयोजनम्। अंशुग्रहपात्रस्य च। अपोनिधायांश्वदाभ्यौ। तता-

इतरे ॥१॥ तत्रातिग्राह्यग्रहणं त्र्यहे पूर्वेऽग्ने पवस्वाच्छिद्रमित्यन्वहमेकैकम् ॥२॥ उत्तरे वा ॥३॥ उभयोर्वा ॥४॥ माहेन्द्रमनुहोमः ॥५॥ अग्ने वर्चस्विन्निन्द्रौजि-

ऽधिषवणे पर्युपवेशनादि । प्रातःसवने आग्रयणग्रहणानन्त वैकङ्कते उलूखले अग्ने पवस्व स्वपा० इत्यतिग्राह्यग्रहणम् । परिमार्जनम् । एष ते योनिरिति सादनं, तत उक्थ्योऽपि ।

ततः प्रातःसवने बहिष्पवमानोपाकरणं सदसि सर्वेष्वहस्सु प्रायणीयोदयनीयौ वर्जयित्वा। पशुरैन्द्राग्नो वा। एकादशिनिपक्षे सारस्वतः। सरस्वत्यै जुष्टम् । सरस्वत्यै छागस्य वपायै अपां, हविषो हविरित्यादि अतिरात्रवत् । ऐन्द्राग्नस्तोमायनपक्षयोः प्रकृतिवत् सर्वं प्रैषजातम् । स्तोमायनपक्षे आग्नेयः । सारस्वतपक्षे तत्पशुपुरोडाशोऽष्टाकपालः । माध्यन्दिने च । उक्थ्यं गृहीत्वाऽतिग्राह्यग्रहणम् । पृष्ठोपाकरणात् पूर्वं पूतभृतोऽतिग्राह्यग्रहणं वा । पृष्ठकाले वेदिं दक्षिणेन रथसंसारणम् ।

अत्र सूत्रान्तरे विशेषः--"पृष्ठे रथमपि वहेयुः पश्चात् प्राग्वा दक्षिणतो वोदञ्चं बहिर्वेदि रथन्तरस्य स्तोत्र" इति । माहेन्द्रमन्वतिग्राह्यहोमः प्रति प्रस्थातुः। इदमग्नये वर्चस इति त्यागः । अग्ने वर्चस्विन्निति मन्त्रेण सर्वैर्यजमानैरतिग्राह्यस्य भक्षणं कार्यम् । प्रागच्छावाकविग्रहाद्वसतीवरीणामाधवनीयेऽवनयनम् । अत्र वोत्तराहरर्थे वसतीवरीणां ग्रहणं निधानान्तम् ।

व्यूहने-सारस्वतपक्षे सरस्वत्या वनस्पतेरिन्द्रस्य० । सरस्वतिर्वनस्पतिरिन्द्रो वसुमानिति। पक्षान्तरे इन्द्राग्न्योर्वनस्पतेरिन्द्रस्य वसुमतः। इन्द्राग्नी वनस्पतिरिन्द्रो वसुमान् । स्तोमायनपक्षे अग्निष्टोमवत् । प्रतिपत्तिसमाप्ती ।

शाखाच्छेदनादि वत्सापाकरणान्तम् । वसतीवरीग्रहणादि निधानान्तम् । ततः परिहरणादि सुब्रह्मण्यान्तम्। समिदाधानं सर्वेषु । यथोपाकृतदोहादि पयस्यावत्सापाकरणान्तम् । सोमरक्षणमुद्गातुर्वाग्यतस्याबोधनात् । अन्यत् सर्वं प्रायणीयातिरात्रवत् ।

प्रातर्द्वितीयं पाष्ठिकमहरुक्थ्यसंस्थम् । क्रतुकरणे प्रथमपरिभ्यालम्भनम् । अपररात्रे अपो निधायादाभ्यग्रहणं प्रथमाहर्वत् । अतिग्राह्यग्रहणमुत्तिष्ठन्नोजसेति मन्त्रेण । एष ते योनिरिति सादनम् । इदमिन्द्रायौजसे इति त्यागः । सवनीये इन्द्राग्नी वा । एकादशिनिपक्षे सौम्यः ।

**ष्ठ सूर्य भ्राजिष्ठेति भक्षणं यजमानैः ॥६॥ पृष्ठकाले रथ-**

तत्र सोमाय जुष्टं । सोमाय छागस्य वपायै वपां हविषे हविरिति । अष्टाकपालः पुरोडाश आग्नेयविकारः । सोमाय पुरोडाशस्यानु० पुरोडाशं प्रस्थितमिति । पत्न्यन्तयोः प्राग्वत् ।

स्तोमायनपक्षे आग्नेयैन्द्राग्नौ छागौ । पृष्ठकाले दुन्दुभिशब्देनोपाकरणं, माहेन्द्रमन्वतिग्राह्यहोमः । इन्द्रौजिष्ठेति याजमानानां भक्षणम् । यथादेवतं व्यूहनम् । एकादशिनी वेति पक्षे सोमस्य वनस्पतेरिन्द्रस्य वसुमतः । सोमो वनस्पतिरिन्द्रो वसुमानिति । ऐन्द्राग्नपक्षे उक्तम् । स्तोमायनपक्षे अग्नेरिन्द्राग्न्योर्वनस्पतेरिन्द्रस्य वसुमतः, अग्निरिन्द्राग्नी वनस्पतिरिन्द्रो वसुमानित्यादि । पत्नीसंयाजान्ते प्रतिपत्तिपरिसमाप्त्यादि पयस्यावत्सापाकरणान्तम् । सोमरक्षणं होतुरावोधनात् ।

प्रातः पृष्ठ्ये तृतीयमहरुक्थ्यमेव । यमग्न इति प्रथमपरिध्यालम्भनम् । अंश्वदाभ्यातिग्राह्याः पूर्ववत् । अहश्रमस्येति अतिग्राह्यग्रहणमन्त्राः । पशवो द्वितीयाहवत् । एकादशिनश्चेत् पौष्णः । तत्र पूष्णे जुष्टं युनज्मि । पूष्णश्छागस्य वपाया इत्यादि अष्टाकपालः पुरोडाशः आग्नेयविकारः पूष्णे पुरोडाशस्येत्यादि । माहेन्द्रमन्वतिग्राह्यहोमः । सूर्य भ्राजिष्ठेति मन्त्रेण यजमानानामतिग्राह्यभक्षणम् । इदं सूर्याय भ्राजायेति त्यागः ।

पृष्ठकाले उपवाजनैः पृष्ठोपाकरणम् । व्यूहने–पूष्णो वनस्पतेरिन्द्रस्य-वसुमतः। पूषा वनस्पतिरिन्द्रो वसुमानित्यादि । अन्यत् पयस्यार्थं वत्सापाकरणान्तं पूर्ववत् । सोमरक्षणमध्वर्योः । प्रातः पृष्ठ्यस्य चतुर्थमहः षोडशिसंस्थम् । यमग्न इति ररास्यालम्भनम्। तूष्णीं प्रवेशो वा । तत्रापरात्रे पात्रासादने षोडशिपात्रमधिकम् । अंश्वदाभ्यौ उदयनीयाति रात्रपर्यन्तं प्रत्यहं भवत एव । अतिग्राह्यपृष्ठ्यस्य प्रथम एव ऽयहे ग्रहणम् । उत्तरे ऽयहे वा । उभयोर्वा । उभयोस्त्र्यहयोर्ग्रहणपक्षे अस्मिन् ऽयहे आदितस्त्रयाणां प्रत्यहमेकैकस्य ग्रहणादि पूर्ववत् । पशुरैन्द्राग्नो वा । एकादशिनि बार्हस्पत्यः ।

तत्र बृहस्पतये जुष्टम् । बृहस्पतये छागस्य वपायै इत्यादि । अष्टाकपालः पुरोडाश आग्नेयधर्मकः। स्तोमायनपक्षे आग्नेयैन्द्राग्नावधिकौ। तृतीय ऐन्द्रो मेषः । पृष्ठकाले अरणिभ्यामुपाकरणामुद्गातुरूरौ मन्थनम् । स्तोत्रान्ते आहवनीये भवतं न इति प्रहरणमग्नावग्निरिति होमश्च । प्रातः सवनेऽतिग्राह्यग्रहणोत्तरकालं विकल्प्यते षोडशिनो ग्रहणम । माध्यन्दिने

**संसारणं प्रथमे दक्षिणेन वेदिम् ॥७॥ द्वितीये दुन्दुभिशब्देनोपाकरणम् ॥८॥ तृतीय औपधाजनैः ॥९॥ चतुर्थेऽरणिभ्यां मन्थनं चोद्गातुरूरौ होमश्च ॥१०॥ पञ्चमे सावकयोदपाद्या ॥ ११ ॥ षष्ठे सांवाशिनेन ॥१२॥ मातृभिर्वत्सान्संसृज्य सदः पूर्वेण व्यावर्त्तयन्ति ॥१३॥**

---

वाऽऽग्रयणं गृहीत्वा षोडशिनं गृह्णीयात् । तत उक्थ्यम् । ततोऽतिग्राह्यम् । ततो मरुत्वतीयम् । एतौ द्वौ मुष्टिग्रहौ ।

माहेन्द्रमनु होतुर्न्यूङ्खः । तत्र होतृप्रत्ययः प्रतिगरः ओ३ थो ३ ओ३ ओँ ओ३ ३ उँ उँ उँ उ ३ उँ उँ उ उ ३ भो देवेति । यावतीष्वृक्षु न्यूङ्खास्तावतीष्ववसाने ईदृशः प्रतिगरः, प्रणव प्राकृतः । तृतीयसवने आग्रयणं गृहीत्वा षोडशिनो ग्रहणम् । उपाकरणकाले वा पूतभृतः । अस्तमनसमये षोडशिन उपस्थानादि भक्षान्तम् । षोडशिनि विहृतासु ऋक्षु ओ३ थामो दैव मदे इत्यवसाने । मोदामो देवो थो इति प्रणवे ।

व्यूहने यथा देवता । एकादशिना वेति पक्षे बृहस्पतेर्वनस्पतेरिन्द्रस्य वसुमतः । बृहस्पतिर्वनस्पतिरिन्द्रो वसुमानिति । स्तोमायनपक्षे षोडशिवत् । ऐन्द्राग्नपक्षे तूक्तम् । शेषसमाप्तिः । सोमरक्षणं ब्राह्मणाच्छंसिनः । प्रातर्वैशाखशुक्लपञ्चम्यां पृष्ठ्यस्य पञ्चममहरुक्थ्यसंस्थम् । यमग्न इति प्रथमपरिध्यालम्भनम् । एकादशिनिपक्षे सवनीये वैश्वदेवः । अन्यत्तृतीयाहर्वत् ।

सावकयोदपाद्या पृष्ठस्योपाकरणम् । यथादैवतं व्यूहनम् । विश्वेषां देवानां वनस्पतेरिन्द्रस्य वसुमत इत्येकादशिनिपक्षे । इन्द्राग्न्योर्वनस्पतेरिन्द्रस्य वसुमत इति वा । अग्नेरिन्द्राग्न्योर्वनस्पतेरिन्द्रस्येति वा । विश्वे देवा बृहस्पतिरिन्द्रो वसुमानिति वा । अग्निरिन्द्राग्नी वनस्पतिरिन्द्रो वसुमानिति वा । सोमरक्षणं प्रस्तोतुः ।

प्रातः पृष्ठ्यस्य षष्ठममहरुक्थ्यसंस्थम् । तत्रैकादशिनी वेति पक्षे सवनीय ऐन्द्रः । तत्पशुपुरोडाशोऽष्टाकपालः । अन्यत् सर्वं तृतीयाहर्वत् । अध्वर्योर्यजमानस्य च स्वयमृतुयाजेषु याज्यापाठः । ततोऽन्त्यग्रहयोर्वषट्कारमिमित्तं तयोरेव भक्षणं न होतुः । सांवाशिनेन पृष्ठ्योपाकरणम् । तच्च सदसः पुरस्ताद्वत्सान् स्वस्वमातृभिः संयोज्य नियोजयन्ति । तन्मातुरुत्तरस्यां नयन्ति । दक्षिणस्यां मातुः । एवं क्रियमाणे गावो वत्सान् संसृष्टान् कुर्वन्ति तत्सांवाशिनम् । तेन पृष्ठोपाकरणम् ।

स्वयमृतुयाजेष्वथाऽर्वाञ्चमद्य यय्यं नृवाहणꣳ रथं युञ्जाथामिह वां विमोचनं पृङ्क्तꣳ हवीꣳषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसू इति ॥१४॥ होतृप्रत्ययः प्रतिगरः ॥१५॥ प्राकृतं चान्यार्थत्वादितरेषाम् ॥१६॥ षडहान्ते न बहु वदेत् नान्यं पृच्छेत् नान्यस्मै प्रब्रूयात् ॥१७॥ मधोः प्राशनं घृतस्य वा ॥१८॥ उक्थ्यारुछ-

अत्र छन्दोगसूत्रे विशेषः—"वारवन्तीयस्य स्तोत्रे धेनूः संवाशयेयुर्दक्षिणतः कृत्वोत्तरतो वत्सान्, ततः समाप्ते स्तोत्रे पूर्वेण सदः संमृज्य पश्चिमेनाग्नीयमुदीचीं त्यजेयुरि"ति । तृतीयसवनीयोक्थ्यविग्रहे शस्त्रेषु सर्वेषु होतृप्रत्ययः प्रतिगरः । तद्यथा—तत्र मैत्रावरुणोक्थ्यशस्त्रविहृतास्वृक्षु अवसाने ओ३थामो दैव वदेमोदामो दैवाथो इति प्रणवे विहृतासु प्राकृतः । ततो ब्राह्मणाच्छंसिनः ।

शस्त्रे विशेषः—तत्र विहितो तोरसृततेत्याद्यासु त्रयोविंशति संख्यास्वृक्षु न्यूङ्खाः । ततः प्रतिगरः । ओ३ ओ३ ओ३ ओ३ ३ ओ३ ओ३ ओ३ ओ३ ३ ओ३ ओ३ ओ३ ओ३ ३ मदेम मदेवो ३ ओ३ ३ थामो दैवेत्यवसाने प्रणवे प्राकृतः । ततो राज्ञो वैश्यजनितस्येति चतस्रः पारीक्षित्यः । आसां चतुर्थे पादे प्रथमचतुर्थयोरक्षरयोश्चेत्स्वयम् । तत्र ओ३ थामो दवेत्यस्मिन् प्रतिगरेऽऽपि प्रथमचतुर्थयोस्त्रैस्वर्यमेव भवति ।

तत आदित्याह जरितरङ्गिरोभ्य इत्याद्यासु चतसृषु शस्यमानासु पवाह जरितरोथामो दैवेत्यवसाने । तथाह जरितरोथामो दैवेति प्रणवे । तत इहेत्थ प्रागुदगधरागिति चतस्रः प्रवल्हिकासंज्ञाः । भुगित्यभिगर इति तिस्रः प्रतिधाराः । आसां सप्तानां सप्त प्रतिगराः क्रमेण । मलाकनि जरितरोथामो दैव । १ पृषातकनि जरितरोथामो दैव २ पिपीलिका वरोजरितरोथामो दव ॥ ३ ॥ अश्वत्थपलाशं जरितरोथामो दैव ४ श्वा जरितरोथामो दैव ५ पर्णसदोजरितरोथामो दैव ६ गोशफो जरितरोथामो दैव ७

ततो वामे देवा इत्यस्यां पत्नी वियदयमाणा जरितरोथामो दैवेत्यवसाने । १ होता विष्टी मे जरितरोथामो दैवेति प्रणवे २ ततो यद्देवासो ललामगुमित्याद्यासु न्यूङ्खाः । तत्रावसाने प्रतिगरः । वि ई ई ई ३ इ इ इ ३ ई ३ इ इ ई ई ३ किमयमिदमाहो ३ ॐ उ उं मेथामो दैव इति । ततोऽच्छावाकशस्त्रे प्रवोहे मतयो यन्त्वित्याद्यासु न्यूङ्खाः । तत्रावसाने प्रतिगरः । इह

न्दोमास्त्रय उत्तरे ॥१२॥ अत्यग्निष्टोमोऽविवाक्यं दशमम्

---

मदो ३ ॐ ॐ ॐ ः ॐ ॐ ३० ई म मदे मधोरिन्द्रस्य मदिरम देवो ३ ई ३ ३० थामो दैवेति ।

व्यूहने एकादशिना वेति पक्षे इन्द्रस्य वनस्पतेरिन्द्रस्य वसुमतः । इन्द्रो वनस्पतिरिन्द्रो वसुमानिति । ऐन्द्राग्नपक्षे—इन्द्राग्न्योर्वनस्पतेरिन्द्रस्य वसुमतः । इन्द्राग्नी वनस्पतिरिन्द्रो वसुमानिति । सोमरक्षणं मैत्रावरुणस्य । "बहुहे संस्थिते बहु न वदेत् । स्वाध्यायार्थं नान्यं पृच्छेत्। नान्यस्मै प्रब्रूयात्। मधुप्राशनं सर्वैर्दीक्षितैः कर्तव्यं, घृतप्राशनं वा।

ततः क्रमेण त्रिषु त्रिलेषु त्रयश्छन्दोमा उक्थ्यसंस्था भवन्ति । तत्र प्रथमे चतुर्विंशस्तोमो दशरात्रस्य सप्तममहः । तत्रैकादशिना वेति पक्षे मारुतः सवनीयः । तत्र मरुद्भ्यो जुष्टं०, मरुद्भ्यस्त्वा जुष्टं० मरुद्भ्यश्छागस्य वपायै वपामिति । मरुद्भ्यः पुरोडाशस्यानु० पुरोडाशं प्रेष्य इति च । सप्तकपालः पुरोडाशः । मरुद्भ्यश्छागस्य हविषो० हविः प्रस्थितमिति । व्यूहने मरुतां वनस्पतेरिन्द्रस्य वसुमत इति । मरुतो वनस्पतिरिन्द्रो वसुमानिति । ऐन्द्राग्नस्तोमायनपक्षयोरुक्थ्यसंस्थावत् ।

द्वितीयश्चतुश्चत्वारिंशस्तोम उक्थ्यश्छन्दोमो दशरात्रस्याष्टममहः । तत्रैकादशिनिपक्षेऽप्यैन्द्राग्नः पशुः । तत्रेन्द्राग्निभ्यामित्यादि प्रैषजातमुक्तम् । ऐन्द्राग्नस्तोमायनपक्षयोरुक्थ्यसंस्थावत् । ततस्तृतीयोऽष्टाचत्वारिंशस्तोमश्छन्दोमा उक्थ्यसंस्थो दशरात्रस्य नवममहः । तत्रैकादशिना वेति पक्षे सावित्रः पशुः । तत्र सवित्रे जुष्टं० सवित्रे त्वा जुष्टं० । सवित्रे छागस्य वपायै, वपामिति । सवित्रे पुरोडाशस्यानु० । पुरोडाशमिति च । अष्टाकपालः पुरोडाशः । सवित्रे छागस्य हविषः । हविः प्रस्थितमिति । व्यूहने सवितुर्वनस्पतेरिन्द्रस्य वसुमतः । सविता वनस्पतिरिन्द्रो वसुमानिति । ऐन्द्राग्नस्तोमायनपक्षौ उक्तौ ।

ततश्चतुर्थश्छन्दोमसंज्ञकमेव दशरात्रस्य दशममहरत्यग्निष्टोमसंस्थं भवति । तत्राग्निष्टोमवद्धर्माः पृष्ठ्यधर्मवर्जम् । एकादशिना वेति पक्षे वारुणः पशुः । वरुणाय जुष्टं० । वरुणाय छागस्येत्यादि । पशुपुरोडाशोऽष्टाकपालः । पक्षे ऐन्द्राग्नः । स्तोमायनपक्षे आग्नेयः । अत्राग्निमारुतस्य पात्रप्रक्षालनान्तेऽनुयाजादि । न शुष्कषोडशी ।

अत्रात्यग्निष्टोमत्वं सत्रोत्थानान्तर्गतमानसस्तोत्रकग्रहयागाभ्यासेनैव संपद्यते, न शुष्कषोडशिना । सर्वशाखान्तरविरोधात् । व्यूहने—

॥२०॥ पत्नीसंयाजान्तान्यहान्यन्त्यवर्जम् ॥२१॥३॥

एकैको वाग्यतः सोमꣳ रक्षत्या बोधनात् ॥१॥ वसतीवरिपरिहरणादि वा ॥२॥ इतरे विसृज्यन्ते स्वाध्यायाय समिद्ध्यां वा ॥३॥ तत्राप्यशनम् ॥४॥ दशमे वा सन्निधेः ॥५॥ अस्तमिते समिदाधानꣳ सर्वेषु ॥६॥ दशमेऽपराह्णेऽप उपस्पृश्य शालाप्रवेशनम् ॥७॥ शालाद्वार्येऽन्वारब्धेष्विह रतिरिति जुहोति॥८॥अपरामुपसृजन्निति॥९॥ उत्तरेण परिक्रम्यापरेण द्वावधानं प्रविश्योत्तरस्य हविर्धानस्यापरकूबरीमालभ्य सत्रस्यर्द्धिं गायन्ति सत्रस्य ऋद्धिरसीति ॥१०॥ उत्तरवेदिश्रोण्यां वोत्तरस्याम् ॥११॥ युवं तमिति दक्षिणस्याधोऽक्षं प्राञ्चो निष्क्रामन्ति ॥१२॥ अहं

---

वरुणस्य वनस्पतेरिन्द्रस्य वसुमतः । वरुणो वनस्पतिरिन्द्रो वसुमानिति । पक्षान्तरयोरुक्तम् ।

इति द्वादशस्य तृतीया कण्डिका ॥ ३ ॥

दशमेऽहनि पत्नीसंयाजान्ते सत्रोत्थानम् । "पुरा पत्नीसंयाजेभ्यः संस्थाप्य वे"ति शाङ्खायनः। तत्र गृहपतिप्रभृतयः सर्वे बहुमाना अपराह्णे शालासमीपमागत्य अप उपस्पर्शनं कृत्वा शालां प्रविशन्ति ।

ततोऽध्वर्युः शालाद्वार्ये पयाज्यं संस्कृत्य तमेव परिस्तीर्य समिधमाधाय सकृद्गृहीतेनाज्येनेह रतिरिति शालाद्वार्ये सर्वेषु यजमानेष्वन्वारब्धेषु जुहोति । इदं पशुभ्यः । पुनः सकृद् गृहीत्वा उपसृजन् धरुणमिति तथैव द्वितीयामाहुतिं जुहोति । इदमग्नय इति त्यागः ।

ततो विहारमुत्तरेण परिक्रम्य धिष्ण्याव्यवायेन गत्वाऽपरेण द्वारेण हविर्धानं प्रविश्योत्तरस्य हविर्धानस्यापरकूबरीमपरविष्कम्भिकामालभ्य सत्रस्य ऋद्धिरसीत्यस्यामृचि सर्वे दीक्षिताः सत्रस्यर्द्धिसंज्ञं साम गायन्ति ।

अथवोत्तरवेदेरुत्तरवेदिश्रोण्यामेतत्साम गायन्ति । ततो युवं तमिन्द्रापर्वतेति मन्त्रेण दक्षिणस्य हविर्धानाक्षस्याधस्तान्मार्गेण प्राङ्मुखा हविर्द्धानपूर्वद्वारेण निष्क्रामन्ति । ततः सर्वे पूर्वद्वारेण प्रविश्य-

गृह्णाति प्राजापत्यं वायुं पृथिव्या पात्रेण ग्रहणसादनस्तोत्रोपाकरणहोमभक्षाहरणभक्षणानि मनसा ॥१३॥ चतुर्होतृव्याख्यानं होतुः ॥१४॥ गृहपतिरजानाति ॥१५॥ प्रतिगृणात्यरात्सुरिमे यजमाना भद्रमेभ्यो यजमानेभ्योऽभूदिति ॥१६॥ ब्रह्मोद्यं वदन्ति ॥१७॥ प्रजापतेरगुणाख्यानम् ॥१८॥ अप्रतिभायां वा तद्वादः ॥१९॥ आश्वमेधिकं वा नामधेयात् ॥२०॥ अनस्तमिते गृहीत्वौदुम्बरीं वाचं गच्छन्ति ॥२१॥ अस्तमिते निष्क्रम्यापरेणोत्तरवेदिमासते

---

स्वासनेषूपविशन्ति। ततोऽध्वर्युः पृथिव्या पात्रेण वायुं द्रव्यभूतं प्रजापतिदैवतं ग्रहं गृह्णाति। अत्र वायुग्रहग्रहणं सादनं स्तोत्रोपाकरणं होमो भक्षाहरणं भक्षणं च, एतानि सर्वाणि मनसा मनोव्यापारेणैव कार्याणि। मनसैवैतच्चिन्तनीयं यदेतदेतच्च करोतीति। तत्र पूर्वं पृथिवीं पात्रत्वेन मनसा, मनसैव ग्रहमुपस्पृश्य सदस्यागत्य तृणे समर्पयेत्। मनसैव स्तोत्रोपाकरणं चिन्तयेत्। तत उद्गातारः सार्पराज्ञ्या ऋक्षु आयं गौरित्याद्यासु तिसृषु स्तुवते।

ततो होता चतुर्होतॄन् व्याचष्टे। होता यदि न जानाति तदा यजमानश्चतुर्होतृव्याख्यानं करोति। तत्राध्वर्यो होतः ॐ होतस्तथा होतरित्येवं होतृप्रत्ययः प्रतिगरः। अत्र शाङ्खायनी व्यवस्थामाह—अध्वर्यो इत्यामन्त्रतो होतरिति सर्वत्र प्रतिगृणाति। ॐ होतस्तथा होतरित्याचक्षाणेऽनुगृणाति। ॐ मित्येकस्मिन्नवसाने। तथा होतरिति अपरस्मिन्। एवं वक्ष्यमाणं प्रजापतिरकामयतेत्याचक्षाणे होतरिति गृहपतौ वा प्रतिगृणाति। होतः गृहपतेरिति गृहपतिपक्षे इति शाङ्खायनभाष्ये। अरात्सुरिमे भद्रमेभ्यो यजमानेभ्योऽभूदिति पृथगध्वर्युवेदविहितश्च प्रतिगरः।

ततः शस्त्रान्ते प्रदक्षिणावृत्तीतरथावृत्तौ कृत्वा मनसा ग्रहमादायाहवनीये गत्वा मनसैव हुत्वा मनसैव भक्षमाहरति। उपहवपूर्वकं मनसैवाध्वर्युर्होता च भक्षयति। ततः सर्वे यजमाना ब्रह्मोद्यं वदन्ति। निर्गुणस्य ब्रह्मणो वदनम्। तत्र प्रथमं यूपस्य दक्षिणतो ब्रह्मा प्रतिवचनं ददाति। ततो होता कः स्विदासीति ब्रह्माणं पृच्छति। ब्रह्मा द्यौरासीति प्रत्याह।

तत उत्थाय पूर्वद्वारेण सदः प्रविश्य स्वासनेषूपविशन्ति। तत्र पूर्वं

**प्रतिप्रस्थाता वसतीवरीः परिहरति ॥२२॥ वाग्विसर्जनꣳ सत्रकामेन ॥ २३ ॥ पृथक्कामेषु भूर्भुव इति ॥ २४ ॥ सुब्रह्मण्याह्वानं गृहपतेर्यं वाऽऽह गृहपतिः ॥२५॥ सुब्रह्मण्य**

---

होताऽध्वर्युं पृच्छति कः स्विदेकाकीति । अध्वर्युः सूर्य एकाकीति प्रत्याह । ततोऽध्वर्युर्होतारं पृच्छति किं स्वित् सूर्यसममिति । ततो होताऽध्वर्युं प्रत्याह ब्रह्मसूर्यसममिति । ततो ब्रह्मा पृच्छामीत्युद्गातारं पृच्छति । उद्गाता अपि नेष्विति ब्रह्माणं प्रत्याह । तत उद्गाता केष्वन्तरिति ब्रह्माणं पृच्छति । ब्रह्मा पञ्चस्वन्तरिति तं प्रत्याह ।

तत उत्थायापरेणवेदिमपरेण यथास्थानं पर्युपविशन्ति । तत्र प्रथमं होता का स्विदासीदित्यध्वर्युं पृच्छति । अध्वर्युर्द्यौरासीति तं प्रत्याह । ततोऽध्वर्युः का ईमरे इति होतारं पृच्छति । होता अजारे पिशङ्गिलेति प्रत्याह । ततो ब्रह्मा कत्यस्य विष्ठा इत्युद्गातारं पृच्छति । उद्गाता षडस्य विष्ठा इति तं प्रत्याह । तत उद्गाता का अस्य वेदेति ब्रह्माणं पृच्छति । वेदाह यस्येति तं प्रत्याह । ततो यजमानः पृच्छामि त्वा परमन्तमिति अध्वर्युं पृच्छति । ततोऽध्वर्युरियं वेदिरिति तं प्रत्याह ।

ततोऽनस्तमिते सूर्ये सर्वे आदुम्बरीं हस्ते गृहीत्वा वाचं यच्छन्ति । अस्तमिते सूर्ये नक्षत्रदर्शनानन्तरं सदसो निष्क्रम्यापरेणोत्तरवेदिमुपविशन्ति । ततोऽध्वर्योरग्निकर्तृदूर्वाहिर्होमादि प्रतिपत्ति समापयति । ततः शाखाछेदनमवगूहनान्तम् । वसतीवरीग्रहणमद्य वा । अपरेणोत्तरवेदि दीक्षितानामासनम । व्युत्कामतेति प्रैषपूर्वकं प्रतिप्रस्थाता वसतीवरीपरिहरणमाग्नीध्रनिधानान्तं करोति ।

गृहपतिस्तु सोममुत्सङ्गे कृत्वा चापरेणोत्तरवेदिमास्ते । ततः सर्वे दीक्षिता येन कामेन तत् सत्रं कुर्वाणा भवन्ति तेन कामेन वाग्विसर्गं कुर्वन्ति । वृष्टिर्नः कामः स नः समृध्यताम् । स्वर्गो नः कामः स नः समृध्यतामिति । ब्रह्मवर्चसमेव नः कामस्तन्नः समृध्यतामिति । एवं तत्सर्वेषामेककामनापक्षे । भिन्नकामनापक्षे तु भूर्भुवः स्वः सुप्रजा इत्यनेन मन्त्रेण सर्वे वाचं विसृजन्ति । भिन्नकाममात्रे एवम् । केचित् स्वर्गादिलोककामाः, केचित् प्रजाकामाः, केचित् पशुकामा इति ।

प्रतिहर्तुः सोमरक्षणम् । सोमस्वाध्यायोपक्रमः । तत्राप्यशनम् । आगमनम् । ततो गृहपतिः स्वयमेव सुब्रह्मण्याह्वानं करोति । अथवा गृहपतिर्यं प्रति ब्रूयात् अमुक त्वं सुब्रह्मण्यामाह्वयेति स सुब्रह्मण्यह्वानं

उप मा ह्वयस्वेत्युक्त्वा समिदाधानम् ॥२६॥ अप उपस्पर्शनाद्येतन्मन्त्रोत्थानम् ॥२७॥४॥

अन्तराऽऽग्रयणोक्थ्यावागन्तुस्थानं ग्रहाणाम् ॥१॥ प्रातःसवनेऽतिग्राह्यान्गृहीत्वा षोडशिनं खादिरेण चतुःस्रक्तिनाऽऽतिष्ठ युक्ष्वा हरी इति वा ॥२॥ माध्यन्दिने वाऽऽग्रयणादुत्तरः ॥३॥ धाराग्रहान्ते वाऽतिग्राह्यान् ॥४॥ पूतभृतो वोपाकरिष्यन्पूर्वम् ॥५॥ अपरां निधायांशुं स्वदाभ्यग्रहणमौदुम्बरेण चतुःस्रक्तिना ॥६॥ अंशोरंशूनंशुं सर्वम् ॥७॥ अनुच्छ्वसंश्चरन् ॥८॥ अप्याय्यानांशूनिवपनोपसर्जनसकृत्प्रहरणहोमान् हिरण्यं चापाजिघ्रति ॥९॥ उद्यम्य वा प्र-

---

करोति । तत्र सुब्रह्मण्याह्वाने सर्वेषां क्रमेण नामसंकीर्तनं क्रियते ।

ततः सर्वे उप मा ह्वयस्वेत्येवमनुज्ञां सुब्रह्मण्यातः प्रार्थयित्वा यन्नैत्यिकं सर्वेष्वग्निषु प्रत्यग्निं समिदाधानमुक्तं तत् कुर्वन्ति । आहवनीये समिधमभ्यादधतीति [illegible]स्वामिनः ।

इति द्वादशस्य चतुर्थी कण्डिका ॥ ४ ॥

---

ततो दोहाः । पयस्यार्थं वत्सापाकरणम् । प्रातरुदयनीयोऽतिरात्रः । तत्र प्रायणीयातिरात्रवत् सर्वम् । यमाग्न इति कारिण आलम्भनम् । तूष्णीं हविर्धाने प्रवेशो वा । पात्रसादने अंशुपात्रषोडशीपात्रे अधिके । सवनीय ऐन्द्राग्नो वा । अथवाऽतिरात्रिकं, स्वामायनं वा ।

एकादशिना वेति पक्षे आग्नेयादीनामेकादशानामेकादशस्वहस्सु कृतत्वात् द्वादशस्य चाभावात् पुनरेकादशिनानां प्रथम आग्नेयो द्वादशेऽहनि उदयनीयातिरात्रे कर्तव्यः । अथवा सर्वसमासः । सर्वं आग्नेयाद्यो वारुणान्ता एकादशापि पशवो द्वादशेऽहन्यालम्भनीयाः । अथवा एकादशिना वेति पक्षेऽपि द्वादशेऽहनि ऐन्द्राग्नः कर्तव्य इति त्रयः पक्षाः ।

माध्यन्दिनसवनीयनिर्वापे प्रथमं यथापशुपुरोडाशनिर्वापः । तत्र पूर्णपात्रं कर्मापवर्गो चेत्येतावदधिकमासाद्यते । तृतीयसवने सवनीयैः सह सौम्याश्विनवारुणानां निर्वापः प्राणदानान्तः । वसतीवरिग्रहणा-

तृणहिरण्यैः स्तोत्रोपाकरणमुपास्तमय। सोमोऽप्यरेच्यु- पावर्त्तध्वमिति कृष्णोऽश्व उपनिष्ठाति ॥ ॥ इन्द्रश्च सम्रा-

---

तत्रैको यजमानो भवति द्वौ वा बहवो वा । त्रिप्रभृति अनियतसंख्या बहवोऽपि परार्द्धपर्यन्ता भवन्ति । ऋत्विजस्तु यजमानव्यतिरिक्ता एव । "एको द्वौ वा बहवो वा अहीनेन यजेरन् स्वान् दीक्षिता याजयेयुरि"ति शाङ्खायनात् । तत्रानेकयजमानपक्षेऽपि साधारणप्रकरणाहि सर्वं सत्रा- त्मकद्वादशाहवद्भवति । इयांस्तु विशेषः । ऋत्विजस्तु अदीक्षिता ब्रा- ह्मणा भवन्ति । दक्षिणादानं च भवति ।

त्रिप्रभृति बहुयजमानपक्षे अस्माकमग्ने वर्च इत्यूहः सत्रवत् । द्वियजमानके तु सर्वाणि यजमानाभिधायीनि पदानि द्विवचनान्तानि उच्चारणीयानि । तत्र दीक्षा द्वादश, उपसदो द्वादश, सुत्या द्वादश, एवं षट्त्रिंशदहःसु द्वादशाहो भवति । तत्र गवां सहस्रं किंचिदधिकं द- क्षिणा भवति । तस्मिन् पक्षे हिरण्याद्यन्यदक्षिणानिवृत्तिः । अथवा प्रत्यहं प्राकृती अग्निष्टोमिकी दक्षिणा भवति । काठके-"दक्षिणाः प्राकृती- मन्वहमनुक्तदक्षिणेषु यथोक्ता उक्तदक्षिणा" इति । तत्र प्रत्यहं प्राकृतं दक्षिणापक्षे अश्वदाभ्यौ निस्ताऽन्वनध्याश्चेत्याद्यौ चेत्येतच्च भवति । किंचिदधिकसहस्रदक्षिणापक्षे अश्वदाभ्यवर्जमेतत् सर्वं भवति ।

तत्र द्वियजमानके दैवर्त्विग्वरणे । अग्निर्नौ होता, आदित्यो नाव- ध्वर्युः, चन्द्रमा नौ ब्रह्मा, पर्जन्यो न उद्गाता, आपो नौ होत्राशंसिनः, रश्मयो नौ चमसाध्वर्यव इति । बहुयजमानके अग्निर्नो होता, आदित्यो नोऽध्वर्युः, चन्द्रमा नो ब्रह्मा, पर्जन्यो न उद्गाता, आपो नो होत्राशंसिनः । रश्मयो नश्चमसाध्वर्यव इति । एकयजमानके प्रकृतिवत् सर्वम् ।

ततोऽमुकसगोत्र अमुकशर्मन् चतुर्विंशत्तुष्टुभनवत्रिणवत्रयस्त्रिंश- स्तोमेन सर्वपृष्ठेन साग्निचित्येन किंचिदधिकसहस्रगवदक्षिणेन वा प्रत्यहं प्राकृतदक्षिणेन वा व्यूढच्छन्दसाऽहीनेन द्वादशाहेनाहं यक्ष्ये । आवां यक्ष्यावहे इति द्वियजमानके । वयं यक्ष्यामहे इति बहुयजमानके ।

देवयजनप्रार्थना-अग्निर्नौ होता स नो देवयजनं ददातु, होतर्देवयजनं नौ देहीत्येवं सर्वत्र ज्ञेयम् । अग्निर्नो होता स नो देवयजनं ददातु । होत- र्देवयजनं नो देहीत्येवं बहुयजमानके । अत्र सर्वेऽपि यजमाना मुख्या एव । न सत्रवत् मुख्यत्वं तेन परार्थेऽपि पदार्थेषु यस्य कस्य चिदेकस्य कर्तृत्वम् । एकाग्निपक्षे अनेन सत्रेणेत्यस्य स्थाने अनेनाहीनेनेति ।

**ड्डिति भक्षणम् ॥२॥ आ पात्रप्रक्षालनात्कृत्वाऽतिरात्रश्चे-त्सौम्येन सहाश्विनो द्विकपालः सर्वत्र ॥३॥ त्र्यधः पर्या-**

---

द्वियजमानके अनेन यज्ञेन जेष्यावोऽनेनाहीनेन तन्नौ सह नौ सह नौ सा-धुकृत्येत्यादि । पशावप्येवम् । तत्र द्वियजमानके सर्वे ऊहाः प्रदर्श्यन्ते ।

अग्न्यन्वाधाने—आवयोः अग्ने वर्चो विहवेष्वस्तु आवाभ्यां नम-न्तामिति । यूपाहुतौ यज्ञपती तिरेति । उदिङ्गने यज्ञपती देवयुवौ इति । परिग्रहप्रसवे यजमानौ च धेहीति । एवं प्रणय यज्ञं प्रोक्ष यज्ञम् इत्यादिषु ज्ञेयम । वेदबन्धने तेनावाभ्यां वेदो भूया इति । परिधिपरिधाने यज-मानयोः परिधिरसीति । सर्वालम्भे पाहि यज्ञपती इति । सर्वेषु पत्नी-यजमानवाचनेषु ब्रूतम् इति । परिव्ययणे परीमौ यजमानौ राय इति । प्रासने मा यज्ञपती जातवेदसाविति ।

श्रोणिसमञ्जने संयज्ञपती आशिषा गच्छेतामिति। अग्निर्हि देवीनां विशां पुर एतेमौ यजमानौ मनुष्याणां तेषामस्थूरि गार्हपत्यं दीदयच्छत० हि-माश्वयो यवो राध्यांऽसीत् संपृचाना असंपृचानास्तन्व इति यज-मानवरणे ।

बहुयजमानके शतं० हिमाश्चत्वारो यवः पञ्च यवः षड् यवः सप्त यवः विंशतिर्यवः पञ्चाशद्यव इति यजमानसंख्यानुसारेणैकाधिकं प्रयो-ज्यम् । प्रयाजानुमन्त्रणे त्विषिमन्तौ भूयास्व । मपचितिमन्तौ भूयास्वे-ति, यशस्विनौ भूयास्वेति, ब्रह्मवर्चस्विनौ भूयास्वेति अन्नादौ भूया-स्वेति । तृणापासने यज्ञपतो धा इति ।

प्राणदाने—स्वयंमानाभ्यां विन्देति । प्रणीताप्रणयने यजमानौ वाचं यच्छतमिति प्रैषः । पात्रीबिलेजपे-मा ते यज्ञपती ह्वार्ष्टाम् इति । प्रथने-उरु ते यज्ञपती प्रथेताम् इति । अभिवासने यजमानयोः प्रजा भूयादिति। पवि-त्रयोः प्रस्तरे करणे-यजमानयोः प्राणापानौ पातम् इति । एतं त इति मन्त्रणे-तेन यज्ञपती तेन मामवेति ।

व्यूहने—उज्जितिमनूज्जयतमिमौ यजमानौ वाजस्य नौ प्रसवेन प्रोहामि, तमपनु० यमिमौ यजमानौ द्विष्टो यश्चैनौ द्वेष्टि वाजस्यैनौ प्रस-वेनापोहामि । वेद्यालम्भे-स्विष्टे नौ सन्तिष्ठस्वेति । पिष्टलेपाहुतौ सत्याः सन्तु यजमानयोः कामा इति । समिष्टयजुःषु यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छेति । एष वां यज्ञो यज्ञपती सहसूक्तवाकस्तं जुषेथां स्वाहेति ।

सूर्यावेक्षणे वर्चो नौ देहीति । प्राग्गमने यज्ञपती तिरेति । पुत्रनामग्र-हणमन्त्रे त०स्य नु नौ त० ब्रूहीति । उद्वदानप्रैषे दीक्षिताविमौ ब्राह्मणौ इति ।

**याश्चमसैश्चतुस्तोत्रः पर्यायः ॥४॥ होतुः प्रथमं प्रथममुक्थ्यवदितरेषु ॥५॥ तदन्ते चमसानुन्नीय स्तोत्रोपाकरणं॥**

वाग्विसर्गप्रैषे दीक्षितौ वाचं विसृजेथामिति । वाग्बन्धप्रैषे दीक्षितौ वाचं यच्छतम् । व्रतदुघा धुक्ष्वेति बहुवचनेन गोदोहप्रैषः । पदसमर्पणे युवयो रायः आवयो राय इति । प्रवर्ग्यचरणे पाणिनिधाने विश्वाभ्यो नौ नाष्ट्राभ्य इति । उपरवाभिमर्शने तन्नौ अस्तु तन्नः सहेति । अध्वर्युणा सह बहुर्त्वात् ।

वत्सापाकरणे ध्रुवा अनयोर्गोपत्योः स्यात बह्वीरिति । यजमानयोः पशून् पाहीति च । विसृज्योपस्थाने इदमावां मनुष्यान्त्सहेति । उत्ताधिश्रयणे मा ते यज्ञपतयो ह्वार्षीम् इति । मितालम्भने तेनाभ्यां यजमानाभ्यामुरु राये इति । आश्रयणे पाहि यज्ञपती विष्णुस्त्वामिति । तथा अस्मै सत्रायाभ्यां पुत्राभ्यां यजमानाभ्यां पवत इति ।

अवकाशावाचने यथाग्रहं ब्रुवन्तावीक्षेथामिति प्रयोगः । ऋतुयाज्यावरणे पुर एतेमौ सुन्वन्तौ मनुष्या यजमानानामिति । शेषं पशुवत् । प्रवृत्तहोमे जुष्टो वाचे भूयास्व । जुष्टो वाचस्पतये देवि वा० तस्मिन्नौ धाः स्वाहेति ।

सर्पणे अभिमन्त्रणानि यजमानकर्तृकपक्षे—अध्वनामध्वपते प्र तौ तिर स्वस्ति नावस्मिन् पथि इति सूर्यम् । अहीने ऋत्विगभिमन्त्रणमपि भवति, तत्र मित्रस्य मा चक्षुषेक्षध्वमिति । बहुयजमानकेऽपि मित्रस्य मा चक्षुषेति, सर्वैः स्वयमेवाभिमन्त्रणस्य क्रियमाणत्वादूहाभावः । अग्नयः स० पात नावग्नयः पिपृत नावग्नयो गोपायत नौ नमो व इति धिष्ण्यानामभिमन्त्रणे ।

शुक्रामन्थिप्रचारे–अभि रायस्पोषेण यजमानाविति । यजमानचमसभक्षे सुन्वन्तावुपह्वयेथामिति वा प्रैषः । दक्षिणाप्रतिग्रहमन्त्रेषु दात्र एधीत्यत्र दातृभ्यामेधीति द्वियजमानके । दातृभ्य एधीति बहुयजमानके। पिण्डदाने पुरोडाशं द्वेधा विभज्यकेनांशेन द्वयोरपि यजमानयोः पितृणां सर्वैः क्रमेण पिण्डदानं कर्तव्यम् ।

सावित्रग्रहणे जिन्व यज्ञपती भगायेति । समिष्टयजुःषु यजमानाभ्यां द्रविण दधात स्वाहेति । शालाद्वार्यद्वित्वपक्षे उदयनीयायामध्वर्योर्द्वित्वे वरुणप्रघासवदूहः । बहुयजमानके सर्वं सत्रवत् । चतुर्धाकरणं भवतीति विशेषः ।

कर्ममते अध्न पिन्वस्वोहो भवति नास्माकमूहः । बर्हिषि करणं

सन्धेः ॥६॥ होता शास्त्राश्विनम् ॥७॥ शस्त्रान्त आश्विनेन सर्वहुतेन चरति एकप्रदानश्चमसैः ॥८॥ अश्विभ्यान्तिरोन्ह्यानां सोमानामनुवाचनप्रैषौ ॥९॥ ऐन्द्राग्नः सवनीयोऽन्वहम् ॥१०॥ स्तोमायनं वा ॥११॥ एकादशि-

---

त्वध्वर्युकर्तृकत्वात् । पृथग्यजमानपक्षे सर्वे मन्त्रा अग्निष्टोमवदेव पठनीयाः ।

अत्र द्वादशाहे अहान्युच्यन्ते । प्रथमं प्रायणीयोऽतिरात्रः। ततः पृष्ठ्यः षडहः । ततस्त्रयश्छन्दोमा उक्थ्याः । ततश्चतुर्थश्छन्दोमसंज्ञोऽविवाक्योऽस्त्यग्निष्टोमसंस्थः । असावग्निष्टोमः सत्रोत्थानान्तर्गतमानसस्तोत्रग्रहयागाभ्यासेनैव सम्पद्यते, न त्वितरात्यग्निष्टोमवदुक्थषोडशिना । सर्वशाखान्तरविरोधात्, षड्शतमग्निष्टोमा* इत्यादि स्वश्रुतिविरोधाच्च। पत्नीसंयाजान्ते सत्रोत्थानं प्रातरुदयनीयोऽतिरात्र इति । बहुयजमानके द्वियजमानके अनेकयजमानके च सर्वं कर्म सत्रात्मकद्वादशाहवदनुष्ठेयं वरणाद्यादीक्ष्य प्रवेशनान्तम् ।

इयांस्तु विशेषः । अहीने व्यूढछन्दसि द्वादशाहे दशरात्रस्य चतुर्थनवमयोरह्नोः ऐन्द्रवायवात् पूर्वमाग्रयणग्रहणम् । तत्रान्तर्यामपात्रासादनानन्तरमाग्रयणस्थालीमादायाग्रयणं गृहीत्वा कस्य चिद्धस्तेऽर्पयित्वा ऐन्द्रवायवादीन मन्थिपर्यन्तान् ग्रहान् गृह्णाति । ततो मन्थिसादनानन्तरमाग्रयणस्थालीमादाय दशापवित्रेणाग्रयणमपगृह्य त्रिर्हिङ्कृत्यादिसादनान्तम् । तत उक्थ्यग्रहणादि ।

तत अवकाशावाचने च यथागृहीतमिति । वाचनान्ते ऐन्द्रवायवात्पूर्वमन्तर्यामानन्तरं चात्मने म इत्याग्रयणस्यावेक्षणम् । माध्यन्दिनेऽपि शुक्रामन्थिग्रहणात् प्रथममाग्रयणं गृहीत्वाऽन्यहस्ते समर्प्य शुक्रामन्थिनो ग्रहणं सादनान्तं कृत्वाऽऽग्रयणस्य दशापवित्रेणापग्रहणादिसादनान्तं कर्तव्यम् । तथा दशरात्रस्यैव षष्ठसप्तमयोरह्नोरैन्द्रवायवाग्रं प्रथमं शुक्रस्य ग्रहणं कर्तव्यम् । तत्राप्यन्तर्यामपात्रसादनानन्तरं शुक्रं गृहीत्वा अन्यस्य हस्ते प्रदायैन्द्रवायवमैत्रावरुणयोः ग्रहणं सादनान्तं कृत्वा शुक्रस्य परिमार्जनमासादनं च कर्तव्यम् । "अवकाशावाचने यथागृहीतमि"ति वचनात् ।

अन्तर्यामानन्तरं चक्षुषे मे वर्चोदा वर्चसे पवस्वेति ब्रुवन् शुक्रमीक्षस्वेत्यूहितेन मन्त्रेण शुक्रस्येक्षणम् । तत्र ऐन्द्रवायवादीनां मध्यवेक्षणेऽपि चक्षुषे मे वर्चोदा वर्चसे पवस्वेति ब्रुवन् मन्थिनमीक्षस्वेति मन्थिन

**ना वा विहृताः ॥१२॥ द्वादश आद्यः ॥१३॥ सर्वसमासो वैन्द्राग्नो वा ॥१४॥ यावच्छेषमुत्तरेषु ॥१५॥ काम्या**

---

ईक्षणम् । अन्यत्वाद् यथागृहीतमित्यस्यापवादसूत्रमेव "शुक्रामन्थिनौ युगपदि"ति । तेनापि मन्त्रक्रमेण वाऽन्तर्हितेनैव मन्त्रेण शुक्रामन्थिनो र्युगपदेवावेक्षणं न पृथक् इति । युक्ततरं चैतदिति । इत्थमेवानुष्ठेयम् ।

अथवोद्गातृहोत्रादिभिश्छन्दसि व्यूहे त्रिःप्रमाणेऽपि ग्रहाणां व्यूहविपर्यासं न कुर्यात् । अथवाऽहीनो द्वादशाहः । अहीनत्वेऽपि सति वचनादुभयतोऽतिरात्रो भवति । नोपरिष्टादतिरात्रः । किञ्चिदधिकसहस्रदक्षिणापक्षे प्रत्यहमविभागेन दक्षिणादानम् । समविभागे क्रियमाणे या अधिका भवन्ति तासां सर्वासामन्त्येऽहनि दानम् । विभागे च प्रत्यहमशीतिर्गावो भवन्ति । आद्येऽहनि चतस्रोऽधिका यावत्यो दीयन्ते ताश्च देयाः । प्रत्यहं प्राकृतदक्षिणापक्षे प्रकृतिवत् ।

अत्र पृष्ठे षडहे उभयोस्त्र्यहयोरतिग्राह्यग्रहणमन्यतरस्मिन्वा । तेषां च माहेन्द्रमनु होमो भक्षणं च यजमानकर्तृकम् । रथसंसारणादीन्युपाकरणानि ।

चतुर्थषष्ठयोरह्नोर्मानसशस्त्रे च होतृप्रत्ययः प्रातगरः। षष्ठेऽहनि स्वयमृतुयाजेज्यापाठोऽध्वर्युयजमानयोः । षडहान्ते न बहु वदेत्। घृतप्राशनम्। नान्यं पृच्छेन्नान्यस्मै प्रब्रूयात् । सर्वेषां सयजमानानामृत्विजां मधुप्राशनं वा षष्ठेऽहनि समाप्त एव रात्रौ । अस्तमिते सर्वेष्वग्निषु यजमानकर्तृकं समिदाधानम् । दशरात्रेऽसत्रोत्थान इति । पौण्डरीकेऽहीने सत्रोत्थानस्य प्रतिषेधात् । वरणवाग्यमने चा"हीनेष्वेकः कुर्यादि"ति छन्दोगसूत्राच्च ।

अहीनेऽपि दशमेऽहनि पत्नीसंयाजान्ते सत्रोत्थानम् । सर्वेष्वहःस्वैन्द्राग्नो वा सवनीयः । एकादशिनानां वा प्रत्यहमेकादशस्वहस्सु । द्वादशेऽहनि एकादशिनानामाद्य आग्नेयः पशुः सर्वे वा एकादशिना आग्नेयादिवारुणपर्यन्ताः । अथवा ऐन्द्राग्न इति । अथवा प्रतिदिनं प्रातिस्विकं स्तोमायनम् । हारियोजनान्ते श्वः सुत्यामिति प्रैषः । प्रतिदिनमुदयनीयातिरात्रवर्जितं तथा प्रायणीयोदयनीये वर्जयित्वा । दशरात्रे दशस्वहस्सु प्रातःसवनेऽपि सदस्येव पवमानोपाकरणमुदयनीयातिरात्रवर्जं सर्वाण्यहानि पत्नीसंयाजान्तानि ।

माध्यन्दिने सवने प्रागच्छावाकविग्रहाद्वसतीवरीनिनयनान्ते उत्तराहे पुनर्वसतीवरीणां ग्रहणम् । परिहरणात्पूर्वं वा । व्युत्क्रामतादिकर्म प्रत्यहं

सत्रम् ॥१६॥ अहीने व्यूढच्छन्दसि दशरात्रस्य चतुर्थ-नवमयोरन्होराग्रयणग्रहणं प्रथमम् ॥१७॥ शुक्रस्य षष्ठ-

---

भवति । किञ्चिदधिकसहस्रदक्षिणापक्षे तिस्रोऽनूबन्ध्यास्त्रैधातवी च । प्रत्यहं प्राकृतदक्षिणापक्षे त्वेतन्न भवति । सहस्रपक्षे दक्षिणासंकल्पः । अस्याहीनस्य द्वादशाहस्य समृद्ध्यर्थं अशीति गाः दक्षिणां प्रथमेऽह्नि ब्रह्मादिभ्य ऋत्विग्भ्यो यथाशास्त्रविभागेनाहं संप्रददे इति ।

प्रत्यहं प्राकृतदक्षिणापक्षे तु अस्य द्वादशाहाङ्गभूतस्य प्रायणीयातिरात्रस्य समृद्ध्यर्थं तथा दशरात्रस्य प्रथमस्याह्नः समृद्ध्यर्थं द्वितीयस्याह्नः समृद्ध्यर्थमिति । शेषमग्निष्टोमवत् । मानवसूत्रे सहस्रमेव द्वादशाहे दक्षिणा उक्ताऽस्ति-"अहीने सहस्रं समधा विभज्यान्वहं दद्युरि"ति । तस्मिन् पक्षे प्रत्यहमंश्वदाभ्यग्रहणम् । तिस्रोऽनूबन्ध्यास्त्रैधातवी उदवसानीया च भवति ।

अथ तिसृणामनूबन्ध्यानां विधिर्लिख्यते । तत्र पात्रासादने एकं महत् स्थूलं द्वे महत्यौ वपाश्रपण्यौ । एका महती उखा । परिस्तरणाद्याज्यासादनान्तं सवनीयस्य पशुवत् कृत्वा स्ववर्वगूहनं कुर्यात् । तिस्रोऽनूबन्ध्याः-प्रथमा मैत्रावरुणी, द्वितीया वैश्वदेवी, तृतीया बार्हस्पत्या । अत्र नियोजनं बार्हस्पत्यायाः। अत्र नियोजने मित्रावरुणाभ्यां जुष्टं नियुनज्मीति प्रथमाया यूपे बन्धनम् । विश्वेभ्यो देवेभ्यो जुष्टं नियुनज्मीति द्वितीयायाः । तृतीयाया वैश्वदेव्या गले बन्धनम् । अनूबन्ध्यास्तिस्रो यूपे बध्यन्त इति संप्रदायः ।

प्रोक्षणे मित्रावरुणाभ्यां त्वा जुष्टं, विश्वेभ्यस्त्वा देवेभ्यो जुष्टं. बृहस्पतये त्वा जुष्टमिति । नेष्टः पत्नीमुदानयेति प्रैषः । शेतां नु मुहूर्तमित्यस्याभावः ।

प्राणदाने मित्रावरुणौ गच्छ, विश्वान् देवान् गच्छ, बृहस्पतिं गच्छेति । न वपायामाज्यभागौ । वपाया द्विरभिघारः । वपायागे मित्रावरुणाभ्यां सुत्याया वपायै मेदसोऽनुब्रूहि । विश्वेभ्यो देवेभ्य उस्राया वपां मेदः प्रेष्येति । ततः पशुपुरोडाशाः । मैत्रावरुण एकादशकपालः । वैश्वदेवो द्वादशकपालः, बार्हस्पत्योऽष्टाकपालः ।

ततः साग्निचित्ये पञ्च देविकाहर्वींषि—अनुमत्यै चरुः । राकायै चरुः । सिनीवाल्यै चरुः । कुह्वै चरुः । धात्रे द्वादशकपालः सर्वहुतः । तत्र ग्रहणादि सुगमम् । प्रधानयागे मित्रावरुणाभ्यां पुरोडाशस्यानुब्रूहि । पुरोडाशं प्रेष्य, विश्वेभ्यो देवेभ्यः पुरोडाशस्या० पुरोडाशमिति । बृहस-

**समयोः ॥१८॥ असादनमा पूर्वेषां ग्रहणात् ॥१९॥ परिमार्जनप्रभृति काले हिङ्कृत्य सादनम् ॥२०॥ अव्यूढो वा**

---

तये पुरोडाशस्य० पुरोडाशमिति । ततो देविकाहविषां प्रचारः । तत् प्रकारः सर्वोऽपि चपनपद्धतौ विलोक्यः । आद्ययोः पुरोडाशयोश्चतुर्धाकरणाभावः ।

पशुयागे मित्रावरुणाभ्यामुस्राया हविषो०, हविः प्रेष्य । नात्रावदाननियमः । व्यूहने मित्रावरुणयोर्विश्वेषां देवानां बृहस्पतेर्वनस्पतेरुज्जितिम् । मित्रावरुणौ विश्वे देवा बृहस्पतिर्वनस्पतिस्तमपनुदन्त्विति । साग्निचित्ये तु मित्रावरुणयोर्विश्वेषां देवानां बृहस्पतेरनुमत्या राकायाः सिनीवाल्याः कुह्वाः धातुः मित्रावरुणयोर्विश्वेषां देवानां बृहस्पतेर्वनस्पतेरुज्जिति० मित्रावरुणौ विश्वे देवा बृहस्पतिरनुमती राका सिनीवाली कुहूर्धाता मित्रावरुणौ विश्वेदेवा बृहस्पतिर्वनस्पतिस्तमपनुदन्त्विति ।

अपरे तु देविकाहविषां पशुपुरोडाशस्य च देवतानां व्यूहने कीर्तनं नेच्छन्ति । साग्निचित्ये हृदयशूलतो यदाकूतादिति प्रत्यृचमष्टानां स्रुवाहुतीनां होमः । कर्मापवर्गान्ते चित्रोऽसीति चित्यस्याग्नेर्नाम कृत्वा ये अग्नय इत्यग्निमुपतिष्ठते। ततोऽग्नं समारोह्य पुनरुद्धृत्य त्रैधातव्युदवसानीयेष्टिर्भवति । तत्र त्रैधातव्युदवसानीयार्थमभ्युद्धरणम् । अग्न्यन्वाधानम्। ब्रह्मवरणे–त्रैधातव्युदवसानीययाऽहं यक्ष्ये इति । व्रतग्रहणम्।

पात्रासादने द्वादश कपालानि । धान्यं व्रीहयो यवाश्च । दक्षिणार्थे त्रीणि शतमानानि, तिस्रो धेनवः । त्रीणि वासांसि, तिस्रो गावः । अन्यत् प्रकृतिवत् । ग्रहणे इन्द्राविष्णुभ्यां जुष्टं०। प्रथमे मुष्टौ केवलानां व्रीहीणां ग्रहणम् । द्वितीये मुष्टौ तृतीयं भागं व्रीहीणां वस्त्राद्यन्तर्हितमादाय भागद्वयं यवानाम् । एवं द्वितीयो मुष्टिर्ग्राह्यः । तृतीये मुष्टौ यवानां भागद्वयं प्रथमं वस्त्राद्यन्तरितमादाय तृतीयं भागं व्रीहीणां गृहीत्वा अग्निहोत्रहवण्या सह प्रक्षिपेत् । चतुर्थे मुष्टौ व्रीहय एव ग्राह्याः ।

एवं चतुर्मुष्टिकमध्ये भागद्वयं व्रीहीणाम्, एको भागो यवानां ग्रहणकाले मध्ये ग्राह्यः। पृथक् पृथक् कण्डनं पेषणं संयवनं च। व्रीहीणां पिण्डं द्विधा विभज्यैकं भागं पृथुं कृत्वा मध्ये यवमयं पिण्डं पृथक् कृत्वा पुनरपि व्रीहिमयं पिण्डं निधाय पृथुं कुर्यात् । पश्चादुरुप्रथा इति । अवदानकाले त्रिभ्योऽपि धातुभ्योऽवदानग्रहणम् । इन्द्राविष्णू गच्छ, इदमिन्द्राविष्णुभ्याम् ।

दक्षिणालम्भे प्रजापतेर्भागा स्थ इति बहुवचनान्तो मन्त्रः । उदान-

॥२१॥उभयतोऽतिरात्रः ॥२२॥अतिप्रेषितेऽग्नीदाह इवः

---

व्यानौ मे पात त्रि त्रि-शतमान धेनु वासो गाव स्थो ऊर्जमयि धत्तादितय स्थ मा मे० ह्ममुत्रेत्यादि। अस्यात्रैधातव्युदवसानीयायाः समृद्ध्यर्थं त्रीणि सुवर्णशतमानानि दक्षिणा ब्रह्मन् तुभ्यमहं संप्रददे : अस्यात्रैधातव्यर्थं तिस्रो धेनूर्दक्षिणा होतः तुभ्यम् । अस्यात्रैधातव्यर्थं त्रीणि वासांसि दक्षिणा अध्वर्यो तुभ्यं० । अस्यात्रैधा०र्थं तिस्रो गा दक्षिणा अग्नीत्तुभ्यमिति।

व्यूहने--अग्नाविष्णवेऽरुज्जितिम् । इन्द्राविष्णु तमप नुदताम् इति । कर्मापवर्गान्तं सर्वे । ततः साग्निचित्यमैत्रावरुणी पयस्या सकला उद्धरणादिकर्मापवर्गान्ता । उपांशुदेवता तूपरमिथुनदक्षिणा । ततो ब्राह्मणानां सहस्रद्वयस्य भोजनम् । ततः सायमाहुतिः । आदीप्य प्रवेशनम् । इत्यहीनो द्वादशाहः समाप्तः ।

सर्वेषु सत्रेषु सत्रात्मकद्वादशाहधर्मा भवन्ति । अहीनात्मकेषु सर्वेष्वहीनेषु । वृतजपो भगं मे वोचतं भद्रं मे वोचतं श्रियं मे वोचतं यशो मे वोचतं भूतिं मे वोचतं इति द्वियजमानके । बहुयजमानके तु भगं मे वोचत भद्रं मे वोचत भूतिं मे वोचत श्रियं मे वोचत यशो मे वोचत० इति । सत्रे तु वरणाभावात् वृतजपाभावः । आवह देवान् यजमानाभ्यां० । यजमानेभ्यः । साधु वां यजमानौ देवता । यावग्निं होतारमवृषाथाम् । योऽग्निं होतारमवृत्म् :

उपहूताविमौ यजमानावुत्तरस्यां देवयज्यायामुपहूतौ भूयः इदं नौ देवा हविर्जुषन्तामिति तस्मिन्नुपहूतौ । उपहूता इमे यजमाना उत्तरस्यां देवयज्यायामुपहूता भू० नो देवा हविर्जुषन्तामुपहूताः । सूक्तवाके ओमन्वती वामस्मिन् यज्ञे यजमानौ द्यावापृथिवी स्तां० ओमन्वती वोऽस्मिन् यज्ञे यजमाना द्यावापृथिवी स्तां० । देवज्यायामाशासाते इमौ यजमानौ अमुकशर्माऽमुकशर्माणौ अमुकदत्तशर्मणावुत्तरां देवयज्यामाशासाते भूयो हविःकरणमाशासाते आयुराशासाते, सुप्रजास्त्वमाशासाते यदनेन हविषाऽऽशासाते तदश्यास्तां तदृध्यास्तां तदाभ्यां देवा० दुभे चैनौ द्यावापृथिवी इति । बहुषु—देवज्यामाशासात इमे यजमानाः ।

अमुकशर्माऽमुकशर्माणो देवदत्तयज्ञदत्तविष्णुमित्रा उत्तरां देवयज्यामाशासते भूयो हविःकरणमाशासते आयुराशासते सुप्रजास्त्वमाशासते दिव्यं धामाशासते यदनेन हविषाऽऽशासते तदश्यासुस्तदृध्यासुस्तदेभ्यो देवा० दुभे चैनान् द्यावापृथिवी इति । पशौ–वसु वार्याणि यजमानाभ्यां शिक्षिते। यजमानेभ्यः शिक्षिते । अग्निमद्य होतारमवृणीतामिमौ य·

सुन्वामिन्द्राग्निभ्यां प्रब्रवीमि विश्वेभ्यो देवेभ्यो ब्राह्म-

जमानौ पचन्तौ पक्तीः पचन्तौ पुरोडाशं बध्नन्तावग्नीषोमाभ्यं छागम् ।

बहुषु—होतारमवृणतेमे यजमानाः पचन्तः पक्तीः पचन्तः पुरोडाशं बध्नन्तोऽग्नीषोमाभ्यां छागम् । त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतमिमौ यजमानौ बहुभ्य इति ; अवृणतेमे यजमाना बहुभ्य इति तान्याभ्यामा च शास्वं, तान्येभ्य आ च शास्वेति। सवनीयपशौ द्वयोः अग्निमद्य होतारमवृणातामिमौ सुन्वन्तौ यजमानौ पचन्तौ पुरोडाशं बध्नन्तौ यथा-देवतं छागौ छागान् । इन्द्राय सोमं सुन्वन्तौ भृज्जन्तौ हारिभ्यां धानाः ।

बहुषु । होतारमवृणतेमे सुन्वन्तो यजमानाः पचन्तः पक्तीः पचन्तः पुरोडाशा बध्नन्तो यथादैवतं छागौ छागान् इन्द्राय सोमं सुन्वन्तो भृज्जन्तो हरिभ्यां धानाः । यदा मुख्यः परार्थानिति वचनात् प्रवृत्ताहुतिं मुख्य एव जुहोति तदा मन्त्रे ऊहः । जुष्टो वाचे भूयास्व जुष्टा वाचस्पतये तस्मिन्नो धा इति । अच्छावाकोपहवे अयं सुन्वन् यजमानो अग्रभीदित्यत्र इमौ सुन्वन्तौ यजमानौ अग्रभीष्टाम् , इमे सुन्वन्तो यजमाना अग्रभीषुरिति । ऋतुग्रहेषु सुगृहपती इमौ सुन्वन्तौ यजमानौ भूयास्तां, सुगृहपतिस्त्वमाभ्यां यजमानाभ्यामिति, सुगृहपतय इमे सुन्वन्तो यजमाना भूयासुः, सुगृहपतिस्त्वमेभिः सुन्वद्भिर्यजमानैः । गृहपती यजेते गृहपतयो यजन्त इति ।

सत्रेष्वेकस्यैव गृहपतिशब्दवाच्यत्वे गृहपतिशब्देऽनूहः । तत्रापि बहुषूहो भवत्येव । माध्यन्दिने सवने प्रस्थितयागप्रैषे सुन्वतो यजमानस्येत्यत्र सुन्वतोर्यजमानयोः सुन्वतां यजमानानामिति यथार्थमूहः। दक्षिणाप्रतिग्रहमन्त्रेषु दात्र एधीत्यत्र दातृभ्यामेधि दातृभ्य एधीत्यूहः । आदित्यग्रहप्रैषे अस्मै सुन्वते यजमानायेत्यत्र आभ्यां सुन्वद्भ्यां यजमानाभ्याम् एभ्यः सुन्वद्भ्यो यजमानेभ्य इत्यूहः । सावित्रप्रैषेऽप्येवमेव । हारियोजनप्रैषे-धानासोमाना।मन्द्राद्भि च पिब चेत्यत्र अस्मिन् सुन्वति यजमान इत्यत्र अनयोः सुन्वतोर्यजमानयोः एषु सुन्वत्सु यजमानेषु । ताभ्यां क्रिमरास्थाः । तेभ्यः क्रिमरास्थाः । यद्यदचीकमेतां यद्यदचीकमन्त इति । प्रेमं सुन्वन्तं यजमानमवतु इत्यत्र प्रेमौ सुन्वन्तौ यजमानाववतु प्रेमान् सुन्वतो यजमानानवतु इति विशेषः । प्रेमं सुन्वन्तं यजमानमवतु इत्यत्र प्रेमौ सुन्वन्तौ यजमानाववतु प्रेमान् सुन्वतो यजमानानवतु इति विशेषः । अवता यजत्विति यथासमाम्नातम् ।

पशुद्वित्वबहुत्वादिषूह उच्यते । अस्मा अस्मा अस्मिन् । प्राभ्या-

णेभ्यः सोमपेभ्यो ब्रह्मन्वाचं यच्छेति ॥२३॥ प्रायणीयेऽस्य सुत्यामेके प्राप्तकालत्वात् ॥२४॥ न पूर्वशेषात् ॥२५॥ अचोदितत्वाच्च ॥२६॥ तस्माच्च श्वोभावात् ॥२७॥

मग्निं, प्रेभ्योऽग्निम् । स्त्रीपशौ प्रास्या अग्निं, प्राभ्यामग्निं, प्राभ्योऽग्निं भरतः । अन्वेनं माता, अन्वेनौ माता, अन्वेनान्माता । स्त्रियाम् अन्वेनां माता, अन्वेने माता, अन्वेना माता । मन्यतामित्यस्यानूहः । उदीचीं नी० अस्य पद्‌ः एनयोः पद्‌ः, एषां पद्‌ः । स्त्रियाम् अस्याः पद्‌ः । एनयोः पद्‌ः । आसां पदो निधत्तात् ।

पृथिवी शरीरं० । शरीरम् । शरीरे । शरीराणि । एकधाऽस्य त्वचम् । एकधैनयोस्त्वचं, एकधैषां त्वचम् । स्त्रियाम् एकधाऽस्यास्त्वचं, एकधैनयोस्त्वचम्, एकधैकधासां त्वचम् । एकधैकधेति वीप्सयाऽभिधानम् । अव्ययत्वेनान्यथानभिधानात् । एवं पुरा पुरानाभ्यावं वपामुत्खिदतात् । वपे उत्खिदतात्, वपा उत्खिदतात् । अन्तरे चोष्माणमिति ! श्येनमध्ये वक्षः कृणुतात् । श्येनमेषां वक्षांसि । प्रशसा बाहुम् पश्वेकत्वे । द्वित्वबहुत्वयोस्तु प्रशसा बाहू बाहून् शूलदोषाणि कश्यपे वासानच्छिद्राः श्रोणीः कवषोरून् । एकपर्णाष्ठीवतः इति ।

वनिष्ठुमस्य मा राविष्टोरूकं मन्यमानाः वनिष्ठू एनयोः मा राविष्टोरूके मन्यमानाः वनिष्ठू एतेषां मा राविष्टोरूकाणि मन्यमानाः। स्त्रियां वनिष्ठुमस्याः । वनिष्ठू एनयोः । वनिष्ठू एनासां मा राविष्टेति । आग्नीषोमाभ्यां छागस्य वपाया मेदसो जुषेतां छागयोर्वपयोर्मेदसोः छागानां वपानां मेदसां जुषन्तौ जुषन्तामिति । देवतैकत्वबहुत्वयोः होता यक्षदग्नीषोमौ पुरोडाशस्य जुषेताम् । पुरोडाशयोः । पुरोडाशानाम् ।

स्विष्टकृति होता यक्षदग्निं पुरोडाशस्य । पशुपुरोडाशद्वित्वे पुरोडाशयोः, बहुत्वे पुरोडाशानामिति । होता यक्षदग्नीषोमाविति प्रैषे। देवतान्यत्वे प्रातिपदिकोहः । एकत्वबहुत्वयोर्वचनोहः । अन्यो व्यूहो वक्ष्यते । होता यक्षद् वनस्पतिमिति प्रैषः । अत्र छागस्य छागयोः छागानां छागाया इति । तत्रेतं प्रस्तुत्य । तत्र तौ । तत्रैतान । स्त्रियाम् तत्रैतां प्र । तत्रैते प्र । तत्रैताः ।

स्विष्टकृत्प्रैषेऽपि छागस्येत्यादीनि पूर्ववदूह्याः । अग्निमद्येत्यत्र बध्नन्नग्नीषोमाभ्यां छागं यथादैवतं छागौ छागान् । पुरोडाशम्, पुरोडाशौ, पुरोडाशान् । यथादैवतं सर्वत्र देवतापदम् । अनूबन्ध्याऽपि मित्रावरुणाभ्यामुस्राम्, अग्नीषोमाभ्यां छागेन, छागाभ्यां, छागैः । वशायामु-

**अग्निमद्योति च लिङ्गात् ॥२८॥ प्रायणीयादुत्तरमहः स्वः कालाभावात् ॥२९॥ न सम्पच्छ्रुतेः ॥३०॥ कालो वचनात् ॥ ३१ ॥ ६ ॥**

---

त्वया अवज्ञातं मेदस्तः प्रतिपचतामग्रभीष्टामवीवृधेतां पुरोडाशेन। एकदेवत्ये अघत्तं मेदस्तः।

बहुदेवत्ये अत्तंस्तं मेदस्तः। पशुद्वित्वबहुत्वयोस्तौ मेदस्तः। ताभ्मेदस्तः। पुरोडाशेन, पुरोडाशाभ्यां, पुरोडाशैः। अग्रभीष्टामवीवृधेतामित्यनयोर्वक्ष्यते। त्वामद्य ऋष आर्षेय ऋषीणां नपादित्यग्निप्रार्थनार्थत्वान्। ददुस्तानि ता या देवा देव दानान्यदुरित्येतद्यथार्थत्वादत्र तान्यस्मै, द्वियजमानके तान्याभ्याम्, बहुषु तान्येभ्यः।

ऋक्षु विकारो न विद्यते यजमानाभ्यां यजमानेभ्यः। मेधपते मेधपतिभ्यां मेधपतिभ्यः मेधं मेधौ मेधान्। स्त्रीपशौ–मेधां, मेधे, मेधाः। आदत, आहन्, घस्तु, घसन्तु, अघसत अघसन् अघसत्तं मेदस्तः अघसत्ते मेदस्तः। अघसंस्ते मे दस्तः। अघदत्तन्निति वा। अघत्तं मे अत्तंस्तं मेदस्त इति वा।

अभीयांसाविवाभीयस इव। स्त्रीपशोरभीयसीमिव। रभीयस्याविव। रभीयसीरिव। अग्रभीत्। अग्रभीषुः३ अवीवृधतावीवृधन्त। अध्यास्त, अध्यासुः। अश्यास्तां। रध्यास्तामिति ययोः। अचीकमेताचीकमन्त। इत्यर्थभेदाच्छन्दविकारः।

बर्हिश्चक्षुः। श्रोत्रं प्राणांस्तुत्वाग्नाभिरुष्माज्ञानिनां मां निश्येते शलाकस्यया कयस्वास्त्रेकपर्णो बध्यमोहमक्तेति यथासमाम्नातम्। छन्दोगानामनेकयजमानकेऽपूहः। व्रतजपे महन्मे वोचतं यशो मे वोचतं स्तोमं मे वोच ' भुक्तं मे वोचतं सर्वं मे वोचतं तन्मामवत्वित्यादि द्वियजमानके। बहुषु महन्मे वोचत भर्गो मे वोचत यशो मे वोचत स्तोमं मे वोचत भुक्तिं मे वोचत सर्वं मे वोचत तन्मामवत्वित्यादि। सत्रे तु वरणाभावे वृतजपाभावः।

द्रोणकलशाध्यूहने इदमहमिमौ यजमानौ पशुष्वध्यूहमिति द्वयोः। इदमहमिमान् यजमानान् पशुष्वध्यूहामीति बहुषु। धारायां सन्ततायां प्रशुकृति जपे यजमानयोर्मध्ये यजमानानामृद्ध्या अमुष्या राज्यायेति। स्तोमयागमन्त्रे यजमानाभ्यां विन्देष वै यजमानयोर्लोक एतारौ स्थोऽत्र यजमानौ परस्तादिति द्वयोः। लोकं नः यजमानेभ्यो विन्दैष वै यजमानानां लोक एतारः स्थोऽत्र यजमानाः परस्तादिति। इतरधाराभ्य एको

# त्रयोदशोऽध्यायः ।

द्वादशाहधर्माः सत्रेषु तद्गुणदर्शनात् ॥१॥ गवामयनायैकाष्टकायां दीक्षा ॥२॥ फाल्गुनीपौर्णमासे ॥३॥ चैत्र्याम् ॥४॥ चतुरहे वा पुरस्तात्प्राक्पौर्णमास्याः ॥५॥ चैत्र्यानन्तर्यात् ॥६॥ सर्वा वाऽविशेषात् ॥७॥ माघी वा क्रयश्रुतेः ॥८॥ लोकप्रत्ययात् ॥९॥ अर्थवादाच्च ॥१०॥ पवमानेषूद्गातारमन्वारभेरञ्श्येनोऽसि गायत्रच्छन्दा अनु त्वारभे स्वस्ति मा सम्पारय सुपर्णोऽसि त्रिष्टुप्छन्दा ऋभुरसि जगच्छन्दा इतीतरयोः सवनयोः सवनान्तेषु जपन्ति मयि भर्गो मयि महो मयि यशो मयि

जुहोति । त्रिष्वपि सवनेषु एत एवोहाः । दक्षिणाप्रतिग्रहमन्त्रेषु वयो दातृभ्यो भूयात् इति ह्यंशः, वयो दातृभ्यो भूयादिति बहुषु ।

इति द्वादशस्य षष्ठी कण्डिका ॥ ६ ॥

इति त्रिरग्निचित् सम्राट्स्थपति महायाज्ञिक श्रीश्रीप्रजापतिसुतेन देवेन कृतायां कात्यायन सूत्रपद्धतौ द्वादशोऽध्यायः समाप्तः ।

---

अथ गवामयनस्य पद्धतिर्लिख्यते । तत्र द्वादश दीक्षा द्वादशोपसदः । एकषष्ट्यधिकानि त्रीणि शतानि सौत्यान्यहानि । माघकृष्णाष्टम्यां दीक्षा । फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा । माघ्याः पूर्वं चतुरहे वा । एकादश्यामित्यर्थः । इष्टकापशुर्दीक्षादिने स्वकाले वा भवति । उखासम्भरणमपि तद्वत् । सत्रधर्माः सर्वे द्वादशाह उक्ता एव । विशेषमात्रमत्र लिख्यते ।

माघकृष्णाष्टम्यां प्रारम्भे वा कृते फाल्गुनकृष्णद्वितीयायां प्रायणीया । माघशुक्लैकादश्यां प्रारम्भे फाल्गुनद्वितीयायां प्रायणीया । माघशुक्लैकादश्यां प्रारम्भे फाल्गुनशुक्लपञ्चम्यां प्रायणीया । फाल्गुन्यां चेद्दीक्षा तदा चैत्रशुक्लनवम्यां प्रायणीया । चैत्र्यां चेत्प्रारम्भस्तदा वैशाखशुक्लनवम्यां प्रायणीया इति ।

अत्र प्रातःसवने सर्वे यजमानाः श्येनोऽसि गायत्रच्छन्दा इति मन्त्रेण बहिष्पवमाने उद्गातारमन्वारभेरन । सुपर्णोऽसीति मन्त्रेण माध्यन्दिने पवमाने सर्वे उद्गातारमन्वारभेन् । ऋभुरसीति मन्त्रेण तृतीयसवने आ-

सर्वमिति ॥११॥ सर्वत्रैके ॥१२॥ यजतिशब्दात् ॥१३॥ न प्रकरणात् ॥१४॥१॥

आभिप्लवः षडहोऽग्निष्टोमौ प्रथमान्त्या उक्थ्या इतरे ॥१॥ अतिरात्राच्चतुर्विंशमहरग्निष्टोम उक्थ्यो वा ॥२॥ चत्वारोऽभिप्लवाः पृष्ठ्यश्च मासः ॥३॥ एवं चत्वार उत्तरे ॥४॥ षष्ठे त्रयोऽभिप्लवाः पृष्ठ्यः ॥५॥ अभिजिदग्निष्टोमः ॥६॥ त्रयः स्वरसामानो ऽग्निष्टोमा उक्थ्या वा ॥७॥ अग्निष्टोमो विषुवान् ॥८॥ प्रातरनुवाकः

---

र्भवे पवमाने सर्वे यजमानमन्वारभेरन् । सर्वेषां सवनानामन्तेषु प्रशास्तः प्रसुहीत्येतस्मात् प्रैषात् प्राक् मयि भर्गो मयि महो महि यशो मयि सर्वमिति मन्त्रं सर्वे यजमाना जपन्ति ।

इति त्रयोदशस्य प्रथमा कण्डिका ॥ १ ॥



अत्र पूर्वमाभिप्लवषडहस्य स्वरूपं निरूप्यते । प्रथमोऽग्निष्टोमः । ततश्चत्वार उक्थ्याः । पुनः षष्ठोऽग्निष्टोमः । एवंविधस्याह्नां षट्कस्याभिप्लव इति संज्ञा । यत्राभिप्लव इत्युच्यते तत्रैतान्येवंविधान्यहानि ज्ञेयानि ।

अत्राभिप्लवषडहे ज्योतिर्गौरायुः, आयुर्गौर्ज्योतिरित्येव । गौ आयुषी उक्थ्याविति । ज्योतिरादयस्त्रय एकाहा एव प्रतिलोमानुलोमाः सन्ति । तत्र एकाहः सङ्घातमापद्यमानो लभते । "तायमानरूपाणो"ति बह्वृचसूत्रकारवचनात् । एतेष्वैकाहिकेषु सर्वत्र सत्रधर्मा गवामयनधर्माश्च भवन्ति । वैशेषिकधर्मास्तु स्वकीया अपि भवन्ति ।

अत्रापि सर्वेष्वहस्सु द्वादशाहवदेव सवनीयपशवो वैकल्पिकाः । प्रत्यहमैन्द्राग्नो वा । एकादशिना वा । तानेव पुनः पुनरावृत्त्या प्रत्यहमेकैकः । यथास्वं स्तोमायनं वा । एकादशिना वेति पक्षे उदयनीयातिरात्रे ऐन्द्राग्नादयस्त्रयः परिशिष्टाः पशवो भवन्ति ।

अथानुक्रमेण गवामयनस्याहानि लिख्यन्ते । अग्नीषोमीयानन्तरं प्रथमं प्रायणीयातिरात्रः । ततश्चतुर्विंशमहरग्निष्टोमसंस्थमुक्थ्यसंस्थं वा । एते द्वे अहनी षण्मासमध्ये गणयेते । तावत् पृथगेव तिष्ठतः । ततश्चत्वारोऽभिप्लवाः षडहाः । तत एकः पृष्ठ्यः षडहः । एवं पञ्च । एवं पञ्चभिः षडहैः त्रिंशद्दिनात्मकः सावनो मासो भवति । एवमेव

सन्धिवेलायामुदिते यथोक्तं वा ॥९॥ सौर्य उपालभ्यः ॥१०॥ उदु त्यमिति ग्रहग्रहणमतिग्राह्यवद्भक्षवर्जम् ॥११॥ पूर्वपक्षप्रातिलोमम ॥१२॥ अभिजित्स्थाने विश्वजिदग्निष्टोमः ॥१३॥ सर्वपृष्ठश्चेत्सर्वेऽतिग्राह्याः॥१४॥ षष्ठे मासे त्रयोऽभिप्लवा गोऽआयुषी दशरात्रो महाव्रतमग्निष्टोमः

---

द्वितीयो मासः ।

एवंविध एव तृतीयो मासः । एवंविध एव चतुर्थो मासः । एवंविध एव पञ्चमो मासः । षष्ठे मासे त्रयोऽभिप्लवाः षडहाः । एवं चतुर्विंशतिरहानि । ततोऽभिजिदग्निष्टोमसंस्थः । ततस्त्रयः स्वरसामसंज्ञका अग्निष्टोमसंस्था उक्थ्यसंस्था वा । एतानि चत्वार्यहानि पूर्वैः सहाष्टाविंशतिर्भवन्ति । द्वे प्रथमे अहनी प्रायणीयचतुर्विंशे अत्र गण्येते । एवमयमपि त्रिंशद्दिनात्मकः सावनो मासः पूर्यते । ततो विषुवान् इत्येवसंज्ञमग्निष्टोमसंस्थमहः ।

अत्र सन्ध्यावेलायामुदिते सूर्ये प्रातरनुवाको यथोक्तकाले वा । अत्र द्वितीयः सूर्यदेवत्यः पशुर्यूपे एव बध्यते । उदु त्यं जातवेदसमिति मन्त्रेण ग्रहग्रहणम् । अस्य च ग्रहस्यातिग्राह्यवद् ग्रहणकालस्त्रयो माहेन्द्रमनुहोमश्च भक्षं वर्जयित्वा । इदमहः संवत्सरादतिरिक्तमेकस्यापि मासस्य मध्ये न गण्यते मध्ये एकाकी च तिष्ठति । ततः पूर्वपक्षस्य प्रतिलोमेनोत्तरतः पक्षो भवति । तत्र प्रथमं प्रतिलोमास्त्रयः स्वरसामानोऽग्निष्टोमा उक्थ्या वा ।

ततो विश्वजित्संज्ञोऽग्निष्टोमः । स सर्वपृष्ठश्चेद् भवति तह्यत्र सर्वेऽतिग्राह्या एकस्मिन्नेवाहनि पूर्वोक्तविधिना ग्रहणादिभक्षान्ता भवन्ति "विश्वजिति सर्वपृष्ठ एकाह एवं गृह्यन्त" इति श्रुतेः । तत एकः प्रतिलोमस्त्रयस्त्रिंशारम्भणः पृष्ठ्यः षडहः । तत्रातिग्राह्या अपि प्रतिलोमा भवन्ति । ततस्त्रयोऽभिप्लवाः षडहाः । एवमष्टाविंशत्यहानि । महाव्रतोदयनीयौ चान्तिमावस्मिन् मासे गण्येते । तेन त्रिंशद्दिनात्मको मासः पूर्यते । एवमयमेको मासः ।

द्वितीये मासे प्रथमं प्रतिलोमस्त्रयस्त्रिंशारम्भणः पृष्ठ्यः षडहः । ततश्चत्वारोऽभिप्लवाः षडहाः । एवं पञ्चभिः षडहैस्त्रिंशद्दिनात्मको द्वितीयो मासो भवति । एवंविधस्तृतीयो मासः । एवंविध एव चतुर्थो मासः । एवंविध एव पञ्चमो मासः । ततः षष्ठे मासे त्रयोऽभिप्लवाः षडहाः ।

॥१५॥ प्रजापत्य उपालम्भ्यः ॥१६॥ ग्रहं गृह्णाति वि न इन्द्र वाचस्पतिं विश्वकर्माणिति वाऽतिग्राह्यवत् ॥१७॥ उप मा यन्तु मज्जयस्सनीडा उप मा जक्षुरूप मा मनीषा प्रियामहं तन्वं पश्यमानो मयि रमो देवानां तेजसे ब्रह्मवर्चसायेति भक्षणं यजमानैः, पृष्ठ्योपाकरणं बाणेन शततन्तुना ॥ १८ ॥ मौञ्जास्तन्तवो वैतसं वादनम् ॥१९॥२॥

---

ततो गोसंज्ञ उक्थ्यसंस्थः । तत आयुःसंज्ञ उक्थ्यसंस्थः । ततो द्वादशाहिको दशरात्रः ।

तत्र दशरात्रे पृष्ठ्यः षडहः । त्रयश्छन्दोमाः । दशममहरग्निष्टोमसंस्थमविवाक्यसंज्ञम् । तत्र यज्ञायज्ञियान्तेन शुष्कषोडशी । सत्रोत्थानान्तर्गतमानसस्तोत्रकग्रहयागाभ्यासेनैवात्यग्निष्टोमत्वसिद्धेः । अस्य पत्नीसंयाजान्ते सत्रोत्थानं यथोक्तम् । एवंविधो दशरात्रः । एवमयं त्रिंशद्दिनात्मकः षष्ठो मासः पूर्णः । ततो महाव्रतसंज्ञमग्निष्टोमसंस्थमुपान्त्यमहर्भवति । तदनन्तरमुदयनीयातिरात्र इति । इमे द्वे अहनी सप्तममासमध्ये गण्येते ।

अथ महाव्रतस्य धर्मा लिख्यन्ते । तत्र प्रजापत्यपशुरुपालम्भ्यो भवति । स च यूपे एव बध्यते, न गले । अत्रातिग्राह्यवद् ग्रहं गृह्णाति वि न इन्द्रेति मन्त्रेण । वाचस्पतिं विश्वकर्माणमित्यनेन वा । विश्वकर्मन् हविषेत्यनेन वा । अस्य ग्रहस्य माहेन्द्रमनु होमो भवति । ग्रहणमन्त्रलिङ्गानुसारेण त्यागः । उप मा यन्त्विति मन्त्रेण सर्वे यजमानास्तं भक्षयन्ति । अत्रौदुम्बरेण तदभावे यज्ञियवृक्षोद्भवेन शततन्तुना बाणेन पृष्ठ्योपाकरणं कर्तव्यम् । बाणो वीणास्वरः स्वरमण्डलम् । तत्र मुञ्जमयाः शततन्तवो भवन्ति ।

अत्र बाणे उभयतो दश दश छिद्राणि भवन्ति । तत्रैकैकस्मिन् दश दश तन्तवः प्रतिमुच्यन्ते । अथवा बाणे एव छिद्राणि कृत्वा मध्यमे छिद्रे चतुर्विंशतितन्तुना प्रवयणम् । इतरयोश्छिद्रयोस्त्रयस्त्रिंशत्तन्तवः प्रत्येकम् । वैतसवृक्षोद्भवं तस्य बाणस्य वादनं भवति । वादनं वादनसाधनं काष्ठम् ।

इति त्रयोदशस्य द्वितीया कण्डिका ॥ २ ॥

बृसीषूपविशन्ति प्रेङ्खे होता फलकेऽध्वर्युः प्रतिगृ-णाति॥१॥उद्गाताऽऽसन्द्यां प्रादेशपाद्यां सोमामन्दीवत् ॥२॥ अन्यदन्तर्वेदि ॥ ३ ॥ अभिगरापगरौ ॥ ४ ॥ आ-क्रोशत्येकः प्रशंसत्यपरः॥५॥पुंश्चलूब्रह्मचारिणावन्योन्य-माक्रोशतः ॥६॥ शूद्रार्यौ चर्म्मणि परिमण्डले व्यायच्छे-ते ॥७॥ जयत्यार्यः ॥८॥ मार्जालीयं दक्षिणेन परि-वृते मिथुनौ सम्भवतः ॥९॥ क्षत्रियः सन्नाहयति दक्षि-णां वेदिश्रोणिमपरेण ॥ १० ॥ मर्माणि त इति कवचं

---

अत्र प्राकृतमपि तृणाभ्यां ग्रहमुपस्पृश्य उपाकरणं भवत्येव । सर्वे ऋत्विजो बृसीषु दर्भमयेषु कूर्चेषु प्रादेशेषूपविशन्ति । कौशानि मूल-कन्दसदृशाकाराण्यासनानि बृस्य इति याज्ञिकाः ।

प्रेङ्खे दोलायां होतोपविशति । अध्वर्युरौदुम्बरे फलके आसन्दी-वत्पादयुक्ते उपविश्य प्रतिगृणाति । महदुक्थशंसनकाले उद्गातौदुम्ब-र्यामासन्द्यां प्रादेशमात्रपादयुक्तायामरत्निमात्राङ्ग्यां मुञ्जरज्ज्वा व्युतायां महाव्रतस्तवनायोपविशति । तत स्तूयमाने महाव्रतस्तोत्रे वेदिमध्ये अ-भिगरो ब्राह्मणः सदसः पूर्वद्वारे प्रत्यङ्मुख उपविशति । अपगरः शूद्र-सदृशोऽपरद्वारे पूर्वाभिमुख उपविशति । ततः शूद्रः सत्रिणामाक्रोशं नि-न्दां करोति । एतैः सम्यङ् नानुष्ठितमित्यपवदति ।

अभिगरो ब्राह्मणः सत्रिणां प्रशंसां करोति । एतैः सम्यगनुष्ठित-मिति । ततः पुंश्चलूब्रह्मचारिणावन्योन्यमाक्रोशतः । तत्र पुंश्चलूर्जघनच-पला स्त्री । सा आग्नीध्रीयस्य पुरस्ताद् बहिर्वेदि दक्षिणाभिमुखी आ-स्ते । अन्तर्वेद्यभिमुखो ब्रह्मचारी । तत्र पुंश्चलूर्ब्रह्मचारिणं प्रति ब्रूते । दुश्चारिन्नवकीर्णिन्निति । ब्रह्मचारी तां प्रति ब्रूते धिक्त्वा जाल्मि पुंश्चलि ग्रामस्य मार्जनि पुरुषस्य शिश्नप्रणेजनीति । एवं परस्परमाक्रोशं कुरुतः ।

ततः शूद्रार्यौ परिमण्डले वर्तुले चर्मणि व्यायच्छेते । विरुद्धमात्म-सम्मुखं सहैव चर्मण आकर्षणं कुर्वाते । तत्र मार्जालीयं दक्षिणेनान्तर्वेदि आर्यो दक्षिणाभिमुख उपविशति । बहिर्वेद्युदङ्मुखः शूद्रः। तौ परिमण्डलं श्वेतं चर्म गृहीत्वा इदं मदीयमिदं मदीयमिति स्पर्द्धयाऽऽत्माभिमुखं बलादाकर्षतः । तत्रार्यो यथा जयति तथा कर्तव्यम् । आर्यस्त्रैवर्णिकः । मार्जालीयस्य दक्षिणतो बहिर्वेदि परिवृतमध्ये अनियतजातौ स्त्रीपुरुषौ मैथुनं सुरतं कुर्वाते ।

प्रयच्छति ॥११॥ तूष्णीमन्येभ्यः ॥१२॥ त्रिः समन्तं परियन्ति शालामपरेणोत्तरेण चात्वालं वशाचर्म कटे विशाख्यां वाऽऽस्तीर्णमुच्छ्रितं वा विध्यन्त्यनिष्पत्रम्॥१३॥ दक्षिणेन चर्म यन्ति त्रिर्विद्ध्वा पुरस्ताद्विमोचनम् ॥१४॥ सदः स्रक्तिषु दुन्दुभीन्वादयन्ति ॥ १५ ॥ आग्नीध्रमपरेण श्वभ्रं सवालधानेन चर्मणाऽवनद्ध वालधानेनाहन्ति ॥१६॥ गोधावीणाकाः काण्डवीणाश्च पत्न्यो

ततो दक्षिणवेदिश्रोणिमपरेण स्थित्वा क्षत्रियं सन्नह्यस्वेति प्रैषः। तत्रैवावस्थिताय क्षत्रियाय मर्माणि त इति मन्त्रेण कवचं समर्पयति। ततोऽन्येभ्यः क्षत्रियेभ्यस्तूष्णीमेकैकं कवचं समर्पयति । ततस्ते चत्वारः क्षत्रियाः कवचानि परिधाय त्रिभिरश्वैर्युक्तं रथमारुह्य शालामपरेण गत्वा त्रिर्देवयजनं परितो गच्छन्ति ।

ततश्चात्वालमुत्तरेण कटे वशाचर्मास्तीर्णं भवति। अथवा विशाख्यामुच्छ्रितं भवति ऊर्ध्वग्रीवम्। ते सर्वे क्षत्रिया रथारूढाः परिगमनं कुर्वन्तो वशाचर्म एकैकेन शरेणैकप्रदेशे मध्ये ग्रीवासु च क्रमेण विध्यन्ति। यथा शरपत्राणि बहिर्न निष्पतन्ति। ततश्चर्मणो दक्षिणतः क्षत्रियाः परियन्ति। पुनर्देवयजनं प्रदक्षिणीकृत्य शालामपरेण परीत्य वशाचर्मसमीपे आगत्य पुनरेव सर्वे एकैकेन शरेण तथैव शालां विध्यन्ति ।

ततः पुनरपि दक्षिणेन चर्मणा वा देवयजनं प्रदक्षिणीकुर्वन्तः शालामपरेण परीत्य चर्मसमीपे आगत्य सर्वे एकैकेन शरेण तृतीयं वारं वशाचर्म तथैव विध्यन्ति। एवं त्रिर्विद्ध्वा देवयजनस्य पुरस्तात् सन्नाहविमोचनं रथविमोचनं च कुर्वन्ति। तथा सदसः चतुर्षु कोणेषु दुन्दुभीन् वादयन्ति ।

तथा आग्नीध्रमपरेणार्धमन्तर्वेदि श्वभ्रं खात्वा तन्मध्ये शङ्कून्निधाय तेषु शङ्कुषु सबालधानं सपुच्छमेकं पशोश्चर्म पोथयित्वा तस्य श्वभ्रस्य मुखं बद्ध्वा परितः पांशुभिः पूरणीयम् तस्य चर्मण एव बालधानेन पुच्छेन तं चर्मणाऽवनद्धं श्वभ्रं भूमिदुन्दुभिसंज्ञमाहन्ति वादयति ।

ततः सर्वाः पत्न्योऽधोऽधो गोधावीणाः काण्डवीणाः शालद्रुमय्यो वीणा वादयन्ति। ततः पत्न्य उद्गानं कुर्वन्ति । अन्यानपि गाने प्रसिद्धान् मर्दलादिशब्दान् कुर्वन्ति । ततः पञ्च वा पञ्चविंशतिर्मध्यमाः पञ्चाधिकशतं परा

वादयन्ति ॥१७॥ उपगायन्ति ॥१८॥ अन्यांश्च शब्दान् कुर्वन्ति ॥१९॥ उदकुम्भान् शिरस्सु कृत्वा मार्जालीयं दास्यः परियन्ति ॥२०॥ वाचयत्येनाः पर्यायादिषु ॥२१॥ हैमहा३ हैमहा३ इति ॥२२॥ गावो हारे सुरभय इदं मधु गावो गुल्गुलुगन्धय इदं मधु गावो घृतस्य मातर इदं

---

र्या दास्यः शिरस्सु नवान् उदकुम्भान् कृत्वा मार्जालीयं परियन्ति ।

तत्र परिगमनात् पूर्वमध्वर्युः हैमहा ३ हैमहा ३ इति ब्रूतेति अमुं मन्त्रं दासीर्वाचयति । ततः दास्यो गावो हारे सुरभय इदं मधु मध्वाकर्षैः कुशैर्यथेदं मध्विति मन्त्रेणाप्रदक्षिणं मार्जालीयं परियन्ति १ । पुनर्हैमहा इत्यध्वर्युर्दासीर्वाचयति । ततो गावो गुल्गुल्विति मन्त्रेण दास्यस्तथैव परियन्ति २ । पुनरध्वर्युर्हैमहा ३ इति दासीर्वाचयति ।

दास्यश्च गावो घृतस्येति परियन्ति ३ । पुनर्हैमहा ३ इति वाचयति । दास्यस्ता इहेति परियन्ति । ४ पुरस्ताद्वाचयति तया वयमिति दास्यः परियन्ति ५ । पुरस्ताद्वाचयति । शम्याः प्रतरतामिति ताः परियन्ति ६ पुरस्ताद्वाचयति । न वै गाव इति दास्यः परियन्ति ।७। पुनरध्वर्युर्दासीर्वाचयति । दास्यश्च निगीर्य सर्वा आधीरिदं मधु मध्वाकर्षैः कुशैर्यथेदं मध्विति मन्त्रेण मार्जालीयमप्रदक्षिणेन परियन्ति ८ । एवमष्टस्वपि मन्त्रेषु मध्वाकर्षैः कुशैरिति अस्यानुषङ्गः ।

एवमष्टौ अप्रदक्षिणानि परिगमनानि कृत्वा एवमेव वाचनपूर्वकाण्येव तन्मन्त्रकाण्येवाऽष्टौ प्रदक्षिणं परिगमनानि । एवं स्तोत्रसमाप्तिपर्यन्तं पुनरष्टकृत्वोऽप्रदक्षिणं पुनरष्टकृत्वः प्रदक्षिणं पुनरप्रदक्षिणम् पुनः प्रदक्षिणम् । एवं प्रकारेण परिगमनम् ।

अथवा त्रिस्त्रिर्वा यादृशमष्टकृत्वोऽप्रदक्षिणपरिगमनमुक्तं तादृमेव त्रिर्वारमप्रदक्षिणं परीत्य तादृग्विधमेव त्रिर्वारं प्रदक्षिणं परियन्ति । एवं चतुर्विंशतिकृत्वोऽप्रदक्षिणपरिगमनं भवति । तावदेव प्रदक्षिणमिति । अयं श्रीयाज्ञिकानन्ताभिमतः प्रकार उक्तः । कर्काचार्याणां मते मध्वित्याकर्षैरिति सर्वत्रानुषङ्ग इति विशेषः । अन्यत् पूर्वोक्तेन समानम् ।

पितृभूत्याचार्याणां मते एकमेव तूष्णीं परिगमनं नाष्टौ । तत्र परिगमनस्यादौ एवंविधान्यष्टौ वाचनानि । हैमहा ३ हैमहा ३ गावो सुरभय इदं मध्वाकार्षैर्यथेदं मध्विति ब्रूत । एवं सर्वेषां मन्त्राणामादौ हैमहा ३ हैमहा ३ इति । अत्रैवाकर्षैरिति प्रयोगः । निगीर्य सर्वा आधीरिदं मधु

मधु ता इह सन्तु भूयसीरिदं मधु तया वयं प्लवामह इदं मधु शम्याः प्रतरतामिवेदं मधु न वै गावो मन्दीरस्य गङ्गाया उदकं पपुः सरस्वतीनदीं ताः प्राच्य उज्जिगाहीर इदं मधु निगीर्य सर्वा आधीरिदं मधु मध्वाकर्षैः कुशैयेथेदं मध्विति ॥२३॥ अपसव्यं प्रदक्षिणं चास्तोत्रान्तात् ॥२४॥ त्रिस्त्रिर्वा ॥२५॥ निषिच्य मार्जालीये पूर्णान् निदधति ॥२६॥ अभिगरादि स्तूयमाने सर्वं क्रियते ॥२७॥ अतिरात्रः श्वः ॥२८॥ तिस्रोऽनुबन्ध्या मैत्रावरुणीवैश्वदेवीबार्हस्पत्याः ॥२९॥ संवत्सरावरेषु सत्त्रेष्वसारस्वतेषु सहस्रदक्षिणावरेषु च ॥३०॥ अनूबन्ध्यावपाहोमान्ते दक्षिणस्यां वेदिश्रोणौ सर्वकेशश्मश्रुलोमवपनम् ॥३१॥ पत्न्यश्च ॥३२॥ त्रैधातव्युदवसानीया सर्वत्र

---

मध्वाकर्षैरित्यत्रैवं मध्विति पदं नान्येषु ।

एवमष्टौ वाचनान्यादौ कारयति । तत एकवारं प्रदक्षिणं परियन्ति । एवमेव स्तोत्रान्तं यावत् । त्रिस्त्रिर्वा । तस्मिन् पक्षे प्रथममष्टकृत्वो वचनात् तत एकवारमप्रदक्षिणं परिगमनम् । एवमेव वाचनपूर्वं द्वितीयम् । एवमेव वाचनपूर्वं तृतीयमिति ।

ततो दास्यः कुम्भान् यत्र क्वचन प्रदेशे निषिच्य केषां चिन्मते मार्जालीये एव निषिच्य पुनरुदकेन पूरयित्वा मार्जालीये निदधति । एतत् अभिगरापगरावित्यादिस्तूयमाने महाव्रतस्तोत्रे क्रियते ।

ततः प्रातरुदयनीयातिरात्रो भवति । अत्र प्रायणीयातिरात्रमारभ्योदयनीयान्तेषु सर्वेष्वहस्सु प्रत्यहमंश्वदाभ्यौ ग्रहौ स्वकाले भवतः ।

तत उदयनीयान्ते तिस्रोऽनूबन्ध्या भवन्ति । एका मैत्रावरुणी द्वितीया वैश्वदेवी तृतीया बार्हस्पत्या । एतास्तिस्रोऽपि यूपे एव बध्यन्ते न गलगलिकान्यायेति सम्प्रदायः । आसां विधिर्द्वादशाहे उक्तः । अयं तु विशेषः । अनूबन्ध्याहोमान्ते महावेदेर्दक्षिणस्यां श्रोणौ सर्वेषां यजमानानां सपत्नीकानां श्मश्रुलोम्नां वपनं भवति । येषां रोम्णां वपनं न प्रसिद्धं तेषां वपनमिति सर्वशब्दस्यार्थः ।

ततस्त्रैधातवी उदवसानीया द्वादशाहवत् । मैत्रावरुणी पय-

॥३३॥ अवभृथादुदेत्य ज्योतिष्टोमोऽग्निष्टोमः पृष्ठशमनीयः ॥३४॥ सहस्रदक्षिणो वा ॥३५॥ एकाहमेके ॥३६॥ सत्त्राङ्गं प्रकरणात् ॥३७॥ फलाऽश्रुतेश्च ॥३८॥ न फलं न्यायात् ॥३९॥ कालप्राधान्याच्च ॥४०॥ सहस्रदक्षिणे त्रिरात्रे प्रतिविभज्य नयन्रोहिणीमुपध्वस्तामप्रवीतामतिरेचयति त्रिरूपां वा ॥४१॥ आद्येऽहन् प्रथमां नयेदन्त्ये वा पश्चात् ॥४२॥ हविर्धानाग्नीध्रान्तरे द्रोणकलशमेनामाघ्रापयत्याजिघ्रेति ॥४३॥ इडे रन्त इति दक्षिणेऽस्याः कर्णे यजमानो जपति ॥४४॥ वाचेरिति वाऽन्ते ॥४५॥ सर्वतो नवसु दशमीं कृत्वा होत्रे दद्यात् ॥४६॥ उन्नेतारौ वा कृत्वाऽनाश्रावयते ॥४७॥ दशादशाऽभेदेन दक्षिणा दद्यात् ॥४८॥ अनुबन्ध्यावपाहोमान्ते दद्यादेनाम् ॥४९॥ उदवसानीयायां वा ॥५०॥ अन्यादिच्छन् ॥५१॥ अहर्गणे व्युत्क्रामतात्यन्वहम् ॥५२॥ वसतीवरिग्रहणं च ॥५३॥ एके माध्यन्दिने ऽवनीयावनीय ॥५४॥३॥

---

स्था । ततोऽग्नीन् विभज्य सायमाहुतयः । तत आगामियजनीये सर्वे दीक्षिताः पृथक् पृथक् पृष्ठशमनीयसंज्ञं ज्योतिष्टोममग्निष्टोमसंस्थं सहस्रदक्षिणं प्राकृतदक्षिणं वा कुर्वन्ति । तत्र सहस्रदक्षिणापक्षे अश्वदाभ्यौ तिस्रोऽनूबन्ध्यास्त्रैधातवी च । अयं सत्रस्याङ्गं न भवत्यवेति जैमिनिः । एके सवनीयानां मध्ये यं क्वचिदेकाहं पृष्ठशमनीयस्य स्थाने कुर्वन्ति न पृष्ठशमनीयम् । सहस्रदक्षिणे त्रिरात्रे प्रतिविभज्य नयन्नित्यादिसूत्राणां पद्धतिरहीनप्रकरणे त्रिरात्रेष्वेव प्रदर्शयिष्यते ।

इति त्रयोदशस्य तृतीया कण्डिका ॥ ३ ॥

इति याज्ञिकदेवकृतायां कात्यायनसूत्रपद्धतौ गवामयनसंज्ञं संवत्सरसत्रं समाप्तम् ।

त्रयोदशोऽध्यायः समाप्तः ।

# चतुर्दशोऽध्यायः ।

**वाजपेयः शरद्यवैश्यस्य ॥ १ ॥ उभयतः शुक्लपक्षौ बृहस्पतिसवेन यजेत ॥ २ ॥ ज्योतिष्टोमेन वा ॥ ३ ॥**

## वाजपेययज्ञः ।

ब्राह्मणक्षत्रिययोरेव शरदि वाजपेयो भवति न वैश्यस्य । तत्र वाजपेयस्य पुरस्तादनन्तरे शुक्लपक्षे बृहस्पतिसवो भवति । तत्राश्विनामावास्यायां वाजपेयसुत्या चेद्भाद्रपद्यां बृहस्पतिसवस्य सुत्या कार्या । आश्विनशुक्लदशम्यां वाजपेयस्य दीक्षा । कार्तिकामावास्यायां चेद्वाजपेयस्य सुत्या भवति तदाऽऽश्विन्यां बृहस्पतिसवस्य सुत्या कार्या । कार्तिकशुक्लदशम्यां वाजपेयस्य दीक्षा । असम्भवे वाजपेयारम्भसम्बन्धिनि शुक्लपक्ष एव रिक्तादिवर्जिते दिने बृहस्पतिसवस्य सुत्या कार्या ।

वाजपेयस्योपरिष्टादपि अनन्तरे शुक्लपक्षे कार्तिक्यां मार्गशीर्ष्यां वा बृहस्पतिसवः कार्यः । तत्रासम्भवे वाजपेयादनन्तरमेव प्रतिपद्यारम्भे पञ्चम्यां सप्तम्यां वा बृहस्पतिसवस्य सुत्या कार्या ।

तत्र प्रथमं बृहस्पतिसवस्य पद्धतिर्लिख्यते । तत्र वाजपेयाङ्गत्वात्पृथक् श्राद्धाभावः । ऋत्विग्वरणम् । तत्र रथन्तरपृष्ठेन त्रिवृत्स्तोमेनाश्वाधिकत्रयस्त्रिंशद्गवदक्षिणेन वा, अश्वाधिकत्रयस्त्रिंशच्छतगवदक्षिणेन वा, अश्वाधिकत्रयस्त्रिंशत्सहस्रगवदक्षिणेन वा अग्निष्टोमसंस्थेन वाजपेयाङ्गभूतेन बृहस्पतिसवेनाहं यक्ष्ये, इति प्रयोगः ।

अत्र सर्वमग्निष्टोमवद्भवति । इयांस्तु विशेषः । अग्नीषोमीयस्य पशुपुरोडाशमनु देवसूहविषां निर्वापः । तद्विधिश्च सर्वोऽपि चयनप्रकरण एव विलोकनीयो राजसूये च ।

अग्नीषोमीयपशुपुरोडाशानन्तरं सवित्रे सत्यप्रसवाय जुष्टं प्लाशुकानामष्टाकपालो द्वादशकपालो वा । अग्नये गृहपतये जुष्टं०, आशूनामष्टाकपालः । सोमाय वनस्पतये श्यामाकानां चरुः । बृहस्पतये वाचे नैवारश्चरुः, इन्द्राय ज्येष्ठाय हायनानां चरुः । रुद्राय पशुपतये गावेधुकश्चरुः । मित्राय सत्यानां यावश्चरुः । वरुणाय धर्मपतये यावश्चरुः ।

अत्र नानाबीजधर्मेण सर्वं वारुणेन चरित्वा प्राक् स्विष्टकृतोऽध्वर्युर्यजमानस्य दक्षिणं बाहुं गृहीत्वा सविता त्वेत्यादि कण्डिकाद्वयं पठति । इममुमुकममुकस्य पुत्रमस्यै विश इत्यादि यथापठितमेव ब्राह्मणस्य पठनीयम् । ततोऽग्नये स्विष्टकृत इति सगुणः प्रेष्यप्रैषः स्विष्टकृद्यागः ।

सुत्यायां पात्रयोजने एकं वैकङ्कतं पात्रमधिकं सादनीयम् ।

प्रातःसवने आग्रयणग्रहणानन्तरं बृहस्पते अति यदर्य इति धारया बार्हस्पत्यग्रहणम् । माध्यन्दिने चोक्थ्यग्रहणानन्तरं मुष्टिग्रहः । पृष्ठोपाकरणात्पूर्वं वा पूतभृतो ग्रहणम् । ततः परिमृज्य एष ते योनिर्बृहस्पतये त्वेति सादनम् । प्रतिप्रस्थातः पशुभ्यामेहीति प्रैषः । एक आग्नेयः पशुः द्वितीयो-बार्हस्पत्य उपालम्भ्यो यूप एव । तत्र नियोजने-अग्नये जुष्टं० । बृहस्पतये जुष्टं० । प्रोक्षणे-अग्नये त्वा जुष्टं० । बृहस्पतये त्वा जु० गणधर्मा एकादशिन्यामुक्ताः ।

संज्ञपयान्वगमतान् । संज्ञप्तौ पशू । माऽहिर्भूतं मा पृदाकू । शृते प्रचरेत्यूहाः । वपाप्रचारे अग्नये छागस्य वपायै० वपां० बृहस्पतये छागस्य वपायै० वपामिति ।

प्रातःसवने हविर्द्धानमध्ये नाराशंसानां चमसानां निधानानन्तरमच्छावाकचमसस्यापि तन्निधाने कृते इडाभक्षात्प्राक् त्रयस्त्रिंशत्संख्यानां गवां मध्ये एकादश गाः दक्षिणा सुन्वन् ऋत्विग्भ्यो व्यादिशति-अस्मिन् गोयूथे एकादश गावो ब्रह्मादीनामृत्विजामिति । व्यादेशश्चर्त्विजामुद्देशेनोच्चारणमात्रं न दानं, प्रकृताविदं ब्रह्मण इत्यादिवत् । तत इडाभक्षणादि । पशुपुरोडाश एक आग्नेयः । द्वितीयो बार्हस्पत्योऽष्टाकपालः । त्रिः प्रच्युतयोर्हृदये उत्तमे कुरुतादित्यूहः ।

माध्यन्दिने सवने पशुपुरोडाशयागः । अग्नये पुरोडाशस्यानु० पुरोडाशं प्रेष्य । बृहस्पतये पुरोडाशस्यानु० पुरोडाशं प्रेष्येति विशेषः । हविर्द्धाने नाराशंसनिधानानन्तरमिडाभक्षात्प्राक् अश्वद्वादशानामेकादशानां गवां पूर्ववद् व्यादेशः । अस्मिन् गोयूथे अश्वाधिका एकादश गावो ब्रह्मादीनामृत्विजामिति । ततः प्रातर्माध्यन्दिनसवनव्यादिष्टानामुभयीनां गवां गोयूथात् पृथक्करणं स्थानान्तरे तासां संस्थापनम् । तत इडाभक्षादि । स्वकाल एव दाक्षिणहोमः । आत्रेयप्रासर्पकेभ्यो दानं च । अयं न इत्याद्याहुतिर्माध्यन्दिने व्यादेशात् प्राग्घोतव्येति केचित् ।

महामरुत्वतीयान्ते माहेन्द्रग्रहणात्पूर्वमुत्तरवेदिमपरेण प्राग्ग्रीवे उत्तरलोम्नि कृष्णाजिने उपविष्टं यजमानमध्वर्युर्लौकिकेनाज्येनाभिषिञ्चति । देवस्य त्वा०भ्याम् । सरस्वत्यै वाचो यन्तुर्यन्त्रियं दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चामि अमुकशर्म्मन्नित्यनेन मन्त्रेण । अथवा शुक्रामन्थिनोः संस्रवेण वा यजमानमभिषिञ्चति नाज्येन । अस्मिन् पक्षे सन्निधानान्माध्यन्दिने सवने शुक्रामन्थिशेषस्य पात्रान्तरे स्थापनं न भक्षणम् , अन्यत्र विनियोगात् ।

ततः स्थपतिरयममुकशर्मेत्येवं सर्वे ब्रूयुः । ततो माहेन्द्रग्रहणादि । बार्हस्पत्यग्रहं माहेन्द्रमनु प्रतिप्रस्थाता जुहोति । "अतिग्राह्यवदि"ति सूत्रात् । यजमानस्य भक्षणं वाग्देवीति ।

ततस्तृतीयसवने प्रतिप्रस्थातः पश्वोः संवदस्वेति प्रैषः । अग्नये-छागस्य हविषोऽनुब्रूहि । छागस्य हविः प्रस्थितं० । बृहस्पतये छागस्य हविषोऽनुब्रूहि । छागस्य हविः प्रस्थितमिति विशेषः । ततो हविर्द्धान-मध्ये तृतीयसवने नाराशंसनिधानानन्तरं प्राक् पिण्डदानादेकादशानां गवां व्यादेशः प्रातःसवनवत् । अस्मिन गोयूथे एकादश गावो ब्रह्मा-दीनामृत्विजामिति ।

सर्वेषु सवनेष्वेकादश शतानि गावः, एकादश सहस्राणि गाव इति पक्षान्तरयोर्व्यादेशो यथा—अनयोः पक्षयोस्तिस्रोऽनूबन्ध्यास्त्रैधातव्युदव-सानीया चेत्येतावदधिकं भवति । व्यूहने—अग्नेर्बृहस्पतेर्वनस्पतेरिन्द्रस्य वसुमतः । अग्निर्बृहस्पतिरिन्द्रो वसुमानित्यादि । त्रयस्त्रिंशद्वदक्षिणाप-क्षेऽपि नियमेनैका मैत्रावरुण्यानूबन्ध्याऽग्निष्टोमवत् । तस्या वपाहोमान्ते तृतीयसवनव्यादिष्टानां गोयूथात्पृथक्करणम् ।

ततः सहिरण्यो यजमानः शालां पूर्वेण तिष्ठन् वेदेर्दक्षिणस्यां दिशि स्थिताः सर्वा दक्षिणा रूपेण व इत्यभिमन्त्रयते । ततस्तासां शालासदसो-रन्तरालेनातिक्रमणादि आग्नीध्राद्यजमानस्यानुगमनम् । ततः सदोगम-नम् । ततः सदस्यानां प्रेक्षणम् । ब्राह्मणमद्येत्याग्नीध्रगमनम् । तत्र दक्षि-णासङ्कल्पः । अस्य वाजपेयाङ्गभूतस्याग्निष्टोमसंस्थस्य बृहस्पतिसवस्य समृद्ध्यर्थं त्रयस्त्रिंशद्गाः अश्वं च दक्षिणाः ब्रह्मादिभ्यो यथाशास्त्रविभा-गेनाहं सम्प्रददे । ततोऽस्मद्राता इति पठित्वा अग्नीद्दक्षिणानां ते यो विभाग इत्यादि पूर्ववत् । आत्रेयप्रासर्पकादिभ्यस्तु स्वकाले दत्तमेव । एवं त्रयस्त्रिंशतं शतानि गाः । इति पक्षान्तरे विशेषः । इति बृहस्पतिसवः समाप्तः ॥

अथ वाजपेयस्य पुरस्तादुपरिष्टाच्च बृहस्पतिसवस्थानेऽग्निष्टोमसं-स्थो ज्योतिष्टोम एव भवति न बृहस्पतिसवः । अयं द्वितीयपक्षः । अथ वा वाजपेयस्य पुरस्ताद् द्वादशसु शुक्लपक्षेषु द्वादश यागा भवन्ति । तेषां द्वादशानां शुक्लपक्षाणां मध्येऽयुग्मेषु प्रथमतृतीयपञ्चमसप्तमनवमै-कादशेषु शुक्लपक्षेष्वग्निष्टोमसंस्थो ज्योतिष्टोम एव भवति । "अवचनेऽ-ग्निष्टोम" इति वचनात् ।

युग्मेषु द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशेषु शुक्लपक्षेषु क्रमेण षट् पृष्ठ्यषडहसम्बन्धीन्यहानि विहृतानि भवन्ति । तत्राश्विन्यां ज्योति-

**द्वादश वा पुरस्तादयुक्षु ॥ ४ ॥ ज्योतिष्टोमः पार्ष्ठिका-**

ष्टोमः । कार्तिक्यां पार्ष्ठिकं प्रथममहरग्निष्टोमसंस्थम् । मार्गशीर्ष्यां ज्योतिष्टोमः । पौष्यां पार्ष्ठिकं द्वितीयमहरुक्थ्यम् । माघ्यां ज्योतिष्टोमः । फाल्गुन्यां पार्ष्ठिकं तृतीयमहरुक्थ्यम् । चैत्र्यां ज्योतिष्टोमः । वैशाख्यां पार्ष्ठिकमहश्चतुर्थं षोडशी । ज्यैष्ठ्यां ज्योतिष्टोमः । आषाढ्यां पार्ष्ठिकं पञ्चममहरुक्थ्यम् । श्रावण्यां ज्योतिष्टोमः । भाद्रपद्यां पार्ष्ठिकं षष्ठमहरुक्थ्यसंस्थम् ।

अत्र पार्ष्ठिकेऽप्यतिग्राह्यग्रहाणामभावः । षडहान्तनियमानां मधुप्राशनादीनां च । एते सर्वे सोमाः प्रागुक्ताग्निष्टोमोक्थ्यषोडशिवद्यथायथं भवन्ति । तत आश्विनशुक्लदशम्यां वाजपेयस्य दीक्षा । आश्विनामावास्यायां सुत्या । तत उपरिष्टादपि द्वादशसु शुक्लपक्षेष्वेत एव सोमयागा भवन्ति ।

इयांस्तु विशेषः । अयुग्मेषु षट्सु शुक्लपक्षेषु प्रतिलोमानि त्रयस्त्रिंशाभरणानि षष्ठादारभ्य-प्रथमपर्यन्तानि पार्ष्ठिकानि । युग्मेषु षट्सु शुक्लपक्षेषु ज्योतिष्टोमः । तत्रेवं-वाजपेयानन्तरं प्रथमे शुक्लपक्षे कार्तिक्यां पार्ष्ठिकं षष्ठमहः । मार्गशीर्ष्यां ज्योतिष्टोमः । पौष्यां पार्ष्ठिकं पञ्चमम् । माघ्यां ज्योतिष्टोमः । फाल्गुन्यां पार्ष्ठिकं चतुर्थम् । चैत्र्यां ज्योतिष्टोमः । वैशाख्यां पार्ष्ठिकं तृतीयम् । ज्यैष्ठ्यां ज्योतिष्टोमः । आषाढ्यां पार्ष्ठिकं द्वितीयम् । श्रावण्यां ज्योतिष्टोमः । भाद्रपद्यां पार्ष्ठिकं प्रथममग्निष्टोसंस्थमिति ।

अपरे तु पुरस्तादिवोपरिष्टादपि अयुग्मेषु शुक्लपक्षेषु ज्योतिष्टोमः । युग्मेषु प्रतिलोमं त्रयस्त्रिंशारम्भणपार्ष्ठिकानीति । युक्ततरश्चायं पक्षः छन्दोगसूत्रेण सम्मतत्वात् । तथाच छन्दोगसूत्रम्—"पार्ष्ठिकांस्तोमान् ज्योतिष्टोमस्य तन्त्रे कल्पयित्वा ज्योतिष्टोमाग्निष्टोमादिभिस्तद्देवतैः संवत्सरं पूर्वपक्षेषु वाजपेयेनेष्ट्वा तैरेवावृत्तैरपरं संवत्सरं यथोत्साहं दक्षिणाः स्यु"रिति । अयं परियज्ञानां द्वितीयः पक्षः ।

अथवा वाजपेयस्य पुरस्तान्नवसु शुक्लपक्षेषु क्रमेण नव राजसूयस्य सोमाः ज्योतिष्टोमान्ताः सर्वेऽग्निष्टोमसंस्था भवन्ति । तत्र पौष्यां पवित्रः । माघ्यामभिषेचनीयः । फाल्गुन्यां दशपेयः । चैत्र्यां केशवपनीयोऽतिरात्रः । वैशाख्यां व्युष्टिद्विरात्रस्य प्रथममहः । ज्यैष्ठ्यां व्युष्टिद्विरात्रस्य द्वितीयमहः । आषाढ्यां क्षत्रधृतिः । श्रावण्यां त्रिष्टोमः । भाद्रपद्यां ज्योतिष्टोम इति ।

नीतरेषु ॥५॥ प्रतिलोमं पार्ष्ठिकान्युपरि ॥ ६ ॥ सर्वाग्नि-

तत आश्विनदशम्यां वाजपेयस्य प्रारम्भः। आश्विनामावास्यायां तस्य सुत्याः।

ततो वाजपेयस्योपरिष्टान्नवसु शुक्लपक्षेष्वेत एव राजसूयसोमा ज्योतिष्टोममारभ्य पवित्रान्ताः प्रातिलोम्येनाग्निष्टोमसंस्था भवन्ति। तत्र कार्तिक्यां ज्योतिष्टोमः। मार्गशीर्ष्यां त्रिष्टोमः। पौष्यां क्षत्रधृतिः। माघ्यां व्युष्टिद्विरात्रस्य द्वितीयमहः। फाल्गुन्यां व्युष्टिद्विरात्रस्य प्रथममहः। चैत्र्यां केशवपनीयः। ज्यैष्ठ्यामभिषेचनीयः। आषाढ्यां पवित्र इति।

अत्र व्युष्टिद्विरात्रस्याह्नो भेदेनानुष्ठाने द्वादशदीक्षोपसत्कता प्रत्यहं भवति। पार्ष्ठिकेषु वेति कर्कसम्प्रदायकारमतम्। तच्च सूत्रान्तरविरुद्धत्वादुपेक्षणीयम्। तथाच सूत्रान्तरम्—"एकाहसंघातमापद्यमानो लभेत तायमानरूपाणि सांघातिकादेकाहीभवतो निवर्त्तेरन्नि"ति। तेन सर्वे एते अग्निष्टोमधर्मका एव भवन्ति। अयं परियज्ञानां चतुर्थः पक्षः। कालभेदात्सर्वे परियज्ञा नानादीक्षा भवन्ति। भिन्नतन्त्रा इत्यर्थः।

कार्तिकामावास्यायां वाजपेयसुत्यापक्षे तदपेक्षया शुक्लपक्षाणामयुग्मत्वादिकं गणनीयम्। अथाश्विनशुक्लदशम्यां कार्तिकशुक्लदशम्यां वा मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा वाजपेयार्थमृत्विग्वरणं कुर्यात्। तत्र प्रयोगः। रथन्तरपृष्ठेन सप्तदशस्तोमेन सप्तदशशतसप्तदशशतगोवस्त्राजाविदक्षिणेन सप्तदशसप्तदशनिष्कस्ठवृषलीहस्तवद्यकमहानसदक्षिणेन सप्तदशसंख्यसप्तदशगणकगोद्रव्यदक्षिणेन च वाजपेयेनाहं यक्ष्य इति।

ततो यजमानः पत्नी च सर्व ऋत्विजश्च कण्ठे हिरण्यमालां बध्नन्ति। हिरण्यस्रजः सुवर्णपुष्पमालाः। ततो देवयजनजोषणादीष्टाशनान्तम्। तत्र वाजपेयार्थमित्याहवनीयदक्षिणाग्न्योरुद्धरणे विशेषः। ततोऽध्वर्युः प्रागप्सुदीक्षाया आज्यं संस्कृत्य परिस्तरणसमिदाधानपूर्वकं सकृद्गृहीतमाज्यमाहवनीये जुहोति देव सवितः प्रसुव यज्ञमिति मन्त्रेण। ब्रह्मयजमानौ च पूर्वमेवाहवनीयं दक्षिणेनोपविशतः। ब्रह्मणस्तूष्णीमासनसंस्कारः। देव सवितरित्याज्याहुतिः पूर्ववत्।

ततो दीक्षणीयादि उद्वादनप्रैषान्तम्। सप्तदश दीक्षाः। शाखान्तरे त्रयोदश दीक्षाः पठिताः सन्ति। असम्भवे ता अपि क्रियन्ते। तथाच सूत्रान्तरे "तस्य पौर्णमास्यां दीक्षित्वा त्रयोदश दीक्षाः स्युः सप्तदश वा। अमावा-

ष्टोमैर्वा राजसूयसोमैः ॥७॥ प्रतिलोममुपरि ॥८॥ नाना-दीक्षाः परियज्ञाः कालभेदात् ॥९॥ सप्तदश दीक्षाः ॥१०॥ देव सवितरिति जुहोति यजत्यादिषु ॥११॥ सकृद्दीक्षा-रम्भे कर्मैकत्वात् ॥१२॥ क्रयणवेद्यारम्भणप्रवर्ग्योत्साद-नाग्निप्रणयनहविर्धानाग्नीषोमाणां सदआग्नीध्रधिष्ण्य-निवपनवसतीवरिग्रहणपरिहरणेषु च कर्मान्तरत्वात्प्रा-क्सुत्यायाः ॥१३॥ सोमात्क्रीयमाणात्सहितं दक्षिणतः सीसेन परिस्रुतः क्रयणं केशवान् ॥१४॥ तद्द्रव्याणां

---

त्यायां दीक्षित्वा मासमित्यि गौतमः । "सम्वत्सरमिति धानञ्जय्यः । षडुपसत्कः साग्नि-चित्यः स्यादि"ति । आश्वलायनोऽपि—"सप्तदश दीक्षाः सप्तदशापवर्गो वे"ति ।

दीक्षाणां मध्ये यदा इच्छा भवति तदा यूपच्छेदनं करोति । सप्तदशा-रत्निर्यूपः । उत्कीर्णसमाग्रः । उत्कीर्णं खातयुक्तं समं चाग्रं यस्यासावु-त्कीर्णसमाग्रः । गोधूमपिष्टं संयुज्य तन्मयस्य यूपस्य चषालं कार्यं मूलेऽरत्नित्रयं किञ्चिदूनदशाङ्गुलाधिकमुपरभागं परित्यज्यावशिष्टो यूपोऽष्टाश्रिः कार्यः । स्वरुकरणम ।

ततो महावीरसंभरणमजापयसाऽवसेकान्तम् । ततः कृष्णद्वादश्यां प्रायणीयेष्टिः । पूर्वं देव सवितरिति मन्त्रेण सकृद्गृहीतामाज्याहुतिं जुहो-ति । ततः प्रायणीया । तच्छेषसपत्निपर्यन्तं प्रकृतिवत् । ततः सोमक्रयणी-पदे चतुर्गृहीताज्यसंस्कारान् पृथं पृथगाज्यं संस्कृत्य देव सवितरित्याहुतिः ।

द्रव्यक्रयपक्षे रामवाजपेयिवते—सुरासोमविक्रयिन् क्रय्य स्ते सुरा-सोमा इति नेष्टा । क्रय्या इति विक्रयी । तान्वै ते क्रीणानि । क्रीणीहि । सीसेन क्रीणानीति नेष्टा । क्रीताः सोमा इति विक्रयी । एवमेकैकद्रव्य-क्रयः । पुनराज्यं संस्कृत्य चतुर्गृहीतग्रहणादि । सोमेऽध्वर्युणा क्रीय-माणे तस्माद्देशाद्दक्षिणस्यां दिशि सन्निधावेव नेष्टा केशवाद्दीर्घकेशयुक्ता-त्पुरुषात्सीसेन तूष्णीमेव निष्पन्नां सुरां क्रीणाति । सुराद्रव्याणि वा शष्पादीनि चतुर्विधानि सीसेन क्रीणाति । तानि चाभिधीयन्ते ।

विरूढा व्रीहयः शष्पशब्दवाच्याः । विरूढा यवास्तोक्मशब्दवा-च्याः । भृष्टा व्रीहयो लाजाः ।

सर्जत्वक् त्रिफला चैव शुण्ठी चैव पुनर्नवा ।
चतुर्जातकसंयुक्ता पिप्पली गजपिप्पली ॥

वा ॥१५॥ पर्युह्यमाणेऽनुहरणम् ॥१६॥ दक्षिणेन प्रवेश्य दक्षिणाग्नौ पक्त्वाऽपरेऽग्नौ नेष्टा सुरां करोति ॥१७॥

---

वंशोऽवका बृहच्छुभ्रा चित्रार्कं चेन्द्रवारुणी ।
अश्वगन्धां समुत्पाट्य मूलान्येतानि निर्दिशेत् ॥
धान्यकं च यवानी च जीरकं कृष्णजीरकम् ।
द्वे हरिद्रे वचा चैव विरूढा व्रीहयो यवा इति ॥

एतानि द्रव्याणि सीसेन तूष्णीं क्रीत्वा सोमे अनसा पर्युह्यमाणे नेष्टा एतानि द्रव्याणि हस्ते गृहीतान्येवानुहरति । शकटो सुब्रह्मण्यायामिन्द्र आगच्छ हरिव आगच्छेति ब्रह्माण आगच्छेति विशेषो देवभाष्ये । सोमे शालायां प्रवेशिते नेष्टा तानि द्रव्याणि दक्षिणेन द्वारेण शालायां प्रवेशयति ।

ततोऽध्वर्युरातिथ्यारम्भात्पूर्वं देव सवितरित्याहुतिं हुत्वा तूर्णं सत्वरमातिथ्यामारभते। नेष्टा च सहैव सुरां निष्पादयति । तत्र प्रथमं शष्पाणि द्रषदुपलाभ्यां पिनष्टि ततस्तोक्मानि पिनष्टि। ततो लाजान् पिनष्टि। ततः सर्जत्वगाद्यौषधानि पिनष्टि । एतानि पिष्ट्वा पृथक् पृथक् पात्रेषु स्थापयति । ततस्तूष्णीमेव व्रीहितण्डुलानां श्यामाकतण्डुलानां च द्वावोदनौ दक्षिणाग्नौ बहुलोदके श्रपयति । ततः शृतावुद्धास्य पृथक् पात्रयोश्चैवोराचामनिषेकं करोति ।

ततः शष्पादीनां त्रयाणां चूर्णानां क्रमेण तृतीयं तृतीयं भागमादाय तेषां त्रयाणामपि भागानामर्धमर्धं द्वयोराचामयोः प्रक्षिपति । ततः सर्जत्वगाद्यौषधचूर्णस्यार्धमादाय तस्यार्द्धमर्द्धं द्वयोराचामयोः प्रक्षिपति । ततस्तयोश्चूर्णसंसृष्टयोर्मासरमिति संज्ञा भवति ।

ततः शष्पादिचूर्णानां त्रयाणां क्रमेणैकैकं भागमादाय तेषां भागानामर्धमर्धं द्वयोरोदनयोः क्रमेण प्रक्षिपति । ततः सर्जत्वगादिचूर्णमवशिष्टं सर्वमादाय तस्यार्धमर्द्धं द्वयोरोदनयोः प्रक्षिपति । तत एकस्यां महत्यां कुम्भ्यामोदनं प्रक्षिप्य मासरसंज्ञयोराचमयोस्तस्यामेव कुम्भ्यां प्रक्षेपं करोति ।

ततः शालामध्ये नैर्ऋतकोणे गर्तं खात्वा कुम्भीं गर्तमध्ये यत्नेन निधाय परितः पांसुभिः पूरयति ।

ततोऽपिधाय मुखं वस्त्रादिना यत्नेन बध्नाति । शष्पादिसुराद्रव्याणां क्रयपक्षे एतावत्पर्यन्तं नेष्टुः कर्म । शष्पतोक्मलाजचूर्णानामवशिष्टं तृतीयं तृतीयमंशं क्वचित् सुगुप्तदेशे निदध्यात् । प्रतिदिनं सुरामध्ये

**खरं कृत्वा नाराशꣳसस्थानेऽपरम् ॥१८॥ दक्षिणतः सन्धिं करोति ॥१९॥ यूपवेष्टनं सप्तदशभिर्वस्त्रैर्यूपग्रन्थनं**

प्रक्षेपार्थं निष्पन्नायाः सुरायाः क्रयपक्षे तु तां तूष्णीं सीसेन क्रीत्वा पर्युह्यमाणे सोमेऽनुहृत्य दक्षिणेन द्वारेण शालायां प्रवेश्य नैर्ऋतकोणे गर्तमध्ये कुम्भोस्थितां निधाय पांशुभिर्गर्तं पूरयित्वा दिनत्रयं स्थापयति ।

आतिथ्यान्ते प्रवर्ग्यादौ देव सवितरित्याहुतिः । तत उपसदादावाहुतिः । पुनरपराह्णे प्रवर्ग्यस्यादौ उपसदादौ चाहुतिः । रात्रौ व्रतकरणान्ते एकां गां तूष्णीं हस्तेनापाकृत्य दुग्ध्वा तद्दुग्धं सुरायामासिच्य शष्पचूर्णस्य तृतीयांशं सुरामध्ये प्रक्षिपति । प्रातस्त्रयोदश्यां द्वितीयायामुपसदि प्रवर्ग्यस्योपसदादौ चाहुतिः ।

ततो वेदिमानादौ यजमान वाचं यच्छेत्यतः प्राक् देव सवितरित्याहुतिः । ततोऽपराह्णे प्रवर्ग्यस्यादावुपसदादौ चाहुतिः । रात्रौ व्रतकरणान्ते हस्तेनैव गोद्वयमपाकृत्य दुग्ध्वा तद्दुग्धं सुरायामासिच्य तोक्मचूर्णस्य तृतीयांशं सुरामध्ये प्रक्षिपति ।

प्रातश्चतुर्दश्यां तृतीयायामुपसदि प्रवर्ग्यादावुपपसदादौ चाहुतिः । ततोऽर्द्धव्रतप्रदानं, पुनः प्रवर्ग्यस्यादावुपसदादौ चाहुतिः । ततः प्रवर्ग्योत्सादनादावन्तःपात्ये परिवर्म्यनिधानात्प्रागाहुतिः । अग्निप्रणयनार्थमिध्माधानात्प्रागाहुतिः । ततो हविर्द्धानप्रवर्तनादौ अतिप्रणीते आहुतिः । ततो युञ्जत इत्यादि । उपरवखननादावाहुतिः । खरकरणादावाहुतिः । ग्रहसादनार्थं खरं कृत्वा नाराशंसानां चमसानां निधानस्थाने द्वितीयं खरमुद्धतावोक्षिते सिकतोपकीर्णं चतुरस्रं कुर्यात् ।

ततो हविर्द्धानस्य दक्षिणपार्श्वे उच्छ्रार्यो विदार्य सन्धिमल्पप्रमाणं कुड्यारं कुर्यात् । सदःकरणादावाहुतिः, अन्तःपात्यात्षट् प्रक्रमान् मास्वेत्यतः प्राक् । तत आग्नीध्रकरणमभिमर्शनान्तम् । ततो धिष्ण्यनिवपनादावाहुतिः । तत आग्नीध्रीयादिधिष्ण्यानां निवापः । तत उत्करानुदेशानन्तरमग्नीषोमीयादावाहुतिः । ततः परिस्तरणाद्यारम्भः । ततः शाखाछेदनानन्तरमाग्नीध्रीयप्रणयनादावाहुतिः ।

ततः प्रणयनीयाधानम् । किंचिदूनदशाङ्गुलाधिकारत्नित्रयपरिमाणस्य यूपावटस्य खननम् । प्रथमं हस्तद्वयपरिमाणं निम्नं विपुलं खात्वा मध्ये उपविश्य सार्द्धहस्तप्रमाणमन्तर्वेद्यर्धं संकीर्णं खनेत् । परिव्ययणात्प्राक्सप्तदशभिर्वासोभिर्यूपस्य वेष्टनं कुर्यात् । न तु वेष्टनमात्रम् । यूपश्चात्र सप्तदशारत्निः । सप्तदशभिरेव वस्त्रैर्यूपस्य वाजपेय इति

वा परिव्ययणकाले ॥२०॥ द्रवो वा सवनीयेषु ॥२१॥ उत्कीर्णसमाग्रो गौधूमचषालः ॥२२॥ सुत्यादौ हिरण्यस्रजोऽपिनह्यन्तेऽधिकृता यजमानः पत्नी च सुत्यस्य तच्छब्दात् ॥२३॥ सर्वत्राविशेषात् ॥२४॥ एकधनप्रवेश-

प्रागुक्तत्वात् । अष्टाश्रियूपो भवतीति प्रकृत्य "सप्तदशभिर्वासोभिर्यूपो वेष्टितो वा ग्रन्थितो वा भवती"ति श्रुतत्वात् । सप्तदशारत्निर्भवतीति च विग्रथितो वा विच्छिन्नेषु प्रदेशेषु लंबमानैर्बद्ध इति हरिस्वामिनः । व्युद्ग्रथनं चावचूलकरणमिति च कर्काचार्याः । "बैल्वो यूप" इति शाङ्खायनः । मानवं "विविधमूर्ध्वग्रथनं व्युद्ग्रथनं व्युद्ग्रथनं वा कुर्यात्" इति ।

वपामार्जनान्ते वसतीवरिग्रहणादावाहुतिः । परिहरणादौ चव्युत्क्रान्तेरयतः प्रागाहुतिः । अत ऊर्ध्वमाहुतेरभावः ।

ततोऽपरात्रे पात्रयोजन एकं षोडशिनः । खादिरं चतुरस्रं पात्रं, त्रीणि वैकङ्कतान्यतिग्राह्याणां पात्राणि । एकमौदुम्बरं चतुःस्रक्ति चांशुग्रहपात्रम् । पञ्चैन्द्राणां ग्रहाणां वैकङ्कतानि पात्राणि । तथा सप्तदश वारणानि सोमग्रहाणां पात्राणि । एकं मधुग्रहार्थं हिरण्यपात्रम् । एतावत्पात्रयोजनमधिकम् ।

पात्रासादने-अग्निहोत्रहवणी वज्रः, शम्या दृषदुपलम्, पवित्रच्छेदनानि पवित्रे, स्थाली आज्यं च, वेदश्च दक्षिणा गवाद्याः, इध्मचतुष्टयं, शूलद्वयमेकं हस्तत्रयपरिमाणं समं श्लक्ष्णं तनु च । अपरमरत्निमात्रं शूलम्, द्वे वपाश्रपण्यौ सार्द्धारत्निप्रमाणे । तथा अपरे द्वे वपाश्रपण्यौ षट्सप्तारत्निमात्रदीर्घे । ते च तत्प्रमाणायामे वा । काष्ठैस्तनुभिर्निष्पादितायां निःश्रेण्यामेकविंशतिसंख्यसोपानयुक्तायां दृढे बन्धनीये । बर्हिश्चतुष्टयं स्रुक्पञ्चकं पान्नेजनीसप्तकं । षड्विंशतिहिरण्यशकलानि । महत्पान्नेजनीपात्रम् । उखापञ्चकं एका अतिमहती विंशतिसंख्यपशूनामवदानश्रपणसमर्था । द्वितीया च मेषमेष्योरवदानश्रपणसमर्था । एका त्रिगुणरशना । द्वात्रिंशतिर्द्विगुणरशनाः । मन्थनचतुष्टयम् । प्राशित्रहरणे, इडापात्री । षडवत्तम् । योक्त्रम् । लूनकुशाश्च । कुशास्तृतं होतृषदनम् । अन्तर्द्धानकट इत्यादि ।

ऋतुकरणे यमम इति मन्त्रेण रराटयालम्भनम् । तूष्णीं हविर्धानप्रवेशो वा । एकधनप्रवेशनकाले यदाऽध्वर्युप्रभृतयो हविर्धानस्य पूर्वद्वारेण वसतीवर्येकधनादिकं प्रवेशयन्ति तदा नेष्टा अपरेण द्वारेण हविर्द्धानमध्ये सुरां प्रवेश्यापरस्मिन् खरे सादयति । ततः सुराग्रहार्थानि सप्त-

**नकाले सुरां नेष्टाऽपरेण प्रवेश्य खरे करोति सन्धिना पात्राण्याहृत्य पात्रे बालेन पुनाति ॥५५॥ प्रातःसवनेऽतिग्राह्यान्गृहीत्वा षोडशिनं पञ्च चैन्द्रान् ॥२६॥१॥**

---

दश वारणानि पात्राणि । एकं सुरागालनार्थं महत्पात्रं पालाशम् । एताव-त्सन्धिना दक्षिणत· कृतेन कुद्वारेणाहृत्य पालाशे महति पात्रे गोबालाश्व-बालनिर्मितेन पवित्रेण पुनाति ।

अध्वर्युरेकधनस्थान उभयशेषं निधायानामिकायां हिरण्यं बध्वाऽधि-षवणसमीपे आगत्यांशुग्रहं गृह्णाति । तत्र तूष्णीं सर्वान् पदार्थान् कुर्यात् । इच्छया अनवानं कुर्यात् । प्रथमं तूष्णीमद्रयादानम् । सोमांशूनामधिष-वणे निवापः । निग्राभ्यासेकः । अद्रेरुद्यमनमात्र प्रहरणं वा । औदुम्ब-रेण चतुःस्रक्तिना पात्रेण तूष्णीं ग्रहणम् । परिमार्जनम् । आहवनीयं गत्वा तिष्ठन्नेव तूष्णीं स्वाहाकारेण सर्वं जुहोति । इदं प्रजापतये । अना-मिकायां बद्धस्य हिरण्यस्यावघ्राणम् ।

ततो द्वादशसंख्यानां गुर्विणीनां वत्सतरीणामध्वर्यवे दानम् । अस्यां-शुग्रहस्य समृद्ध्यर्थं द्वादश वत्सतरीर्गर्भिणीर्दक्षिणाः अध्वर्यो तुभ्यमहं० ततो हविर्द्धानमध्ये आगत्य तस्मिन्नेव पात्रे अदाभ्यं गृह्णाति । तत्र प्रथमं तूष्णीं तस्मिन् पात्रे निग्राभ्याणामासेकः । तत उपयामगृहीतोऽस्य-ग्नये त्वा गायत्रेणेति मन्त्रेणोलूखलमध्ये एकं सोमांशुमूर्द्ध्वं निदधाति । उपया०मीन्द्राय त्वेति तथैव द्वितीयम् । उपया०विश्वेभ्यस्त्वेति तृतीयम् । एवं त्रीनंशूनूर्द्ध्वान्पात्रमध्ये निधायोत्थायाञ्जुष्ठेऽभिगर इत्युक्त्वा आह-वनीयं प्रति गच्छेद् भ्रेशीनां त्वा पत्मन्निति मन्त्रेण । तैः सोमांशुभिः पात्रस्थ-मुदकमाधूनोति आन्दोलयति । ततस्तिष्ठन्नेव तस्मै ते सोमेति मन्त्रेण सर्वमाहवनीये जुहोति । इदं सोमाय ।

ततो हिरण्यावघ्राणम् । पूर्वग्रहे वत्सतरीणां दानम् । तत उशिक्त्वमिति प्रतिमन्त्रं त्रयाणामंशूनां सोमे प्रक्षेपः । ततोऽधिषवणं पर्युपवेशनादि महाभिषवं क्षुल्लकाभिषवं च कृत्वोपांश्वन्तर्यामौ हुत्वा ऐन्द्रवायवा-द्याग्रयणग्रहणान्तं कुर्यात् । ततस्त्रीनतिग्राह्यान गृह्णीयात् । अग्ने पवस्वेति प्रथमं सादनान्तम् । उत्तिष्ठन्नोजसेति द्वितीयम् । अहमिति तृतीयम् । ततो नियमेनात्रैव काले खादिरेण चतुःस्रक्तिना पात्रेण षोडशिनो ग्रहणम् आतिष्ठेति मन्त्रेण युक्ष्वाहीति वा । परिमार्जनम् । प्रदक्षिणावृत्तीतरथा-वृत्ती । सादनम् । आहोमादध्वर्योर्वाग्यमनम् ।

इति चतुर्दशस्य प्रथमा कण्डिका ॥ १ ॥

ध्रुवसदमिति प्रतिमन्त्रमतिग्राह्यवद्धोमः ॥१॥ सप्तदशापरान् ॥२॥ नेष्टा च तावतः सौरान् ॥३॥ व्यत्यासं ग्रहणम् ॥४॥ अत्यानतिक्रमणं ग्रहाणाम् ॥५॥ उपर्युपर्यक्षमध्वर्युर्धारयत्यधोऽधो नेष्टा सम्पृचाविति ॥६॥ विपृचावित्याहरतः ॥७॥ हिरण्मयेन मधुग्रहं गृहीत्वा खरम-

---

ततो ध्रुवसदमिति प्रतिमन्त्रं पञ्चसंख्यानैन्द्रान् ग्रहान् गृह्णीयात्। तत्र ध्रुवसदं त्वेति प्रथमस्य ग्रहणम्। परिमार्जनम्। एष त इति सादनम्। ततोऽप्सुषदमिति द्वितीयस्य ग्रहणं सादनान्तम्। ततः पृथिविसदन्त्वेति तृतीयस्य ग्रहणं सादनान्तम्। ततोऽपा ँ रसमिति चतुर्थस्य। ग्रहा ऊर्जेति पञ्चमस्य। ततः सप्तदश सोमग्रहान् प्रत्यङ्मुखोऽध्वर्युर्गृह्णाति। एषामुपयामगृहीतोऽसीत्येतावान् ग्रहणमन्त्रः। एष ते योनिरित्येतावानेव सादनमन्त्रः।

नेष्टा च प्रत्यङ्मुखः सप्तदशैव सुराग्रहान् गृह्णाति। तेषां च तूष्णीमेव ग्रहणं, तूष्णीमेव सादनम्। तत्र प्रथममध्वर्युः सोमग्रहं गृहीत्वा दक्षिणस्य हविर्धानाक्षस्योपरि धारयति। नेष्टा च सुराग्रहं गृहीत्वाऽक्षस्याधस्ताद्धारयति। ग्रहणं व्यत्यासेन। धारणं च युगपत्कुरुतः। तत्र धारणे उभयोः सहैव मन्त्रपाठः। संपृचौ स्थः सं मा भद्रेण पृङ्क्तमिति मन्त्रान्तेऽध्वर्योर्धारणम्। ततो विपृचौ स्थ इति मन्त्रान्ते स्वं स्वं ग्रहं स्वं खरं प्रत्याहरतः।

ततः परिमार्जनम्। सादनम्। एवं व्यत्यासं गृहीत्वाऽध्वर्योरक्षस्योपरि नेष्टुश्चाक्षस्याधस्ताद्युगपत् संपृचाविति मन्त्रान्ते धारणम्। ततो विपृचौ स्थ इति मन्त्रान्ते प्रत्याहरणं परिमार्जनं सादनं चेत्येवं सप्तदशस्वपि ग्रहेषु भवति। ततोऽध्वर्युः सप्तदशसोमग्रहग्रहणानन्तरं हिरण्मयेन पात्रेण मधुग्रहं तूष्णीं ग्रहं गृहीत्वा परिमृज्य खरमध्ये तूष्णीं सादयति। तत उक्थ्यं ध्रुवं च गृह्णाति। ततोऽर्द्धपूर्णं द्रोणकलशं कृत्वा सर्वमासिञ्चति सुन्वम्। ततः पाणिप्रक्षालनम्। विप्रुड्ढोमादि स्वर्गेव गृहनान्तम्।

तत्र प्रतिप्रस्थातः पशुभिरेहीति प्रैषः। द्वाविंशतिः पशवः एक आग्नेयोऽजो द्वितीय ऐन्द्राग्नस्तृतीय ऐन्द्राग्नो मेषः। चतुर्थी सारस्वती मेषी पञ्चमी वशा पृश्निर्गौः। कलौ गोपशोर्लोकविद्विष्टत्वादस्वर्ग्यत्वाद्‌।

"अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्न तु"

द्ये सादयति ॥८॥ उक्थ्यादि ॥९॥ अतिरात्रपशूनुपाकृत्य वशापृश्निं मरुद्भ्य उज्जेषेभ्यः ॥१०॥ तदभावेऽपृश्नि-

---

इति निषिद्धत्वाच्चाधुना तस्याः स्थानेऽजामालभन्ते। एताः सप्तदशसंख्याः प्राजापत्याः पशवः श्यामतूपराः प्रजननसमर्थाश्च। एवं द्वाविंशसंख्यान् पशून् प्रतिप्रस्थाता आनयति। मेषमेषीव्यतिरिक्ताः सर्वे छागाः।

तेषां च प्रथमद्वितीयज्ञापनार्थं सर्वेषामेकैकस्मिन् पाश्चात्ये पादे रज्जवो बन्धनीयाः। तासु रज्जुषु प्रथमायामेको ग्रन्थिः पशोः प्रथमत्वस्य चिह्नम्। द्वितीयस्य पशो रज्जौ द्वौ ग्रन्थी पशोर्द्वितीयत्वज्ञापनार्थं चिह्नभूतौ। ततस्तृतीयस्य पशो रज्जौ त्रयो ग्रन्थयः। एवं द्वाविंशे पशौ रज्जौ द्वाविंशतिग्रन्थयः। एवं कृते पशूनां विपर्यासो न भवति। विशसनकाले च चिह्नग्रन्थिरज्जुयुक्तः पादः काष्ठे ऊर्द्ध्वो बन्धनीयो यथा यथा ग्रन्थयो न गच्छन्ति।

एवमवदानानामाधारार्थासु वंशपात्रीष्वपि एवमेव ग्रन्थियुक्ता बन्धनीयाः। गले च यथासंख्यमङ्काश्च लेखनीयाः। एवमेवाविपर्यासार्थमुपायं कृत्वा क्रमेण सर्वेषामुपाकरणं कुर्यात्॥

ततो ग्रन्थिबन्धनम्। तत ऋतस्य त्वेत्यादि। नियोजने चतुर्णामाद्यानां यूपे बन्धनम्। ततो वशाप्रभृतीनां गलगलिकान्यायेनोदक्संस्थानां बन्धनम्। प्रथममग्नये जुष्टं नियुज्मि। इन्द्राग्निभ्यां जु० नि०। इन्द्राय जु० मेषं। सरस्वत्यै जु०मेषीन्। छागं वा नियमेन। "सारस्वतर्ठ० सप्तदशाय स्तोत्रायालभत" इति पुल्लिङ्गनिर्देशात्। मरुद्भ्य उज्जेषेभ्यो जुष्टं वशां पृश्निं विचित्रवर्णाम्। एवंविधाया अभावे अपृश्निम्। ततः प्रजाप्रजापतये जुष्टमिति क्रमेण सप्तदशानां प्राजापत्यपशूनां बन्धनम्। सर्वेषामुक्तगुणानामभावे कियन्तोऽप्युक्तगुणाः स्युः। केचित् सप्तदशं पशुं वाचे जुष्टमिति वाचे देवतायै आलभन्ते न प्रजापतये।

अन्तरा शृङ्गबन्धनाद्येकैकस्य नियोजनान्तम्। तत एकस्यामेव स्रुचि संस्कृताः प्रभूताः प्रोक्षणीरादाय ब्रह्मन्हविः प्रोक्षिष्यामीत्यामन्त्र्य तदनुज्ञात आग्नेयादीन्सर्वान्पशूनालम्भक्रमेण प्रोक्षति। प्रोक्षणमेकैकस्याधस्तादुपोक्षणान्तम्। अग्नये त्वा जुष्टं प्रोक्षामि। इन्द्राय त्वा। सरस्वत्यै त्वा। मरुद्भ्य उज्जेषेभ्यस्त्वा। प्रजापतये त्वा जुष्टमिति सप्तदशकृत्वः। तत इध्मप्रैषादि। तत उत्तराघारानन्तरमुपाकरणक्रमेण सर्वेषां ललाटादिषु समञ्जनम्। असिस्वरुभ्यां क्रमेण सर्वेषां ललाटोप-

म् ॥१२॥ प्राजापत्यांश्च सप्तदश श्यामतूपरान् वस्तान्

स्पर्शनम् । संज्ञपनाय नयने उल्मुक एक एव । आद्यानां चतुर्णां युगपद्गमनम् । इतरेषामानुपूर्व्या क्रमेण गमनम् । चतुर्णामपि वपाश्रपणीभ्यामन्वारम्भः । पशुसंख्यातो द्विगुणानां चतुश्चत्वारिंशत्संख्यानां वेदितृणानामध्वर्योरादानम् । एकस्योपप्रेष्येति प्रैषः ।

प्रतिपशु वर्षो वर्षीयसीति तृणापासनम् । आद्यानां चतुर्णां शामित्रस्य पश्चादेव प्राक्संस्थानां संज्ञपनम् । इतरेषामुत्तरोत्तरमुदक्संस्थम् । संज्ञपयान्वगन्निति तन्त्रेणोहितः प्रैषः । परिपशव्ये तन्त्रेण । संज्ञप्ताः पशव इति प्रैषः । अनेके संज्ञप्यमाना वाश्येयुः । तन्त्रेण सकृदेव नैमित्तिकम् । माऽहिर्भूमा पृदाकुरिति नियोजनीनां प्रक्षेपः । नेष्टः पत्नीमुदानयेति प्रैषः । पत्नी महान्तं पान्नेजनमुदकपूर्णं कलशमादाय गच्छति ।

ततः क्रमेण सर्वेषां पशूनां प्राणशोधनम् । तत्रा मुखादि पादान्तमेकैकस्य । ततोऽध्वर्युयजमानौ शिरःप्रभृति पश्चात्पशोर्निषेकान्तमेकैकस्य पशोः क्रमेणानुषिञ्चनं कुरुतः । तत उत्तानकरणाद्येकैकस्य पशोर्लोहितेन तृणमूलाञ्जनान्तम् । अन्त्यस्य पशोर्लोहितेन कृते सर्वतृणमूलानां तन्त्रेणोत्करे प्रक्षेपः । अभिष्ठानं च तन्त्रेण ।

ततो निश्रेण्यामुदगग्रायां विस्तारस्य मध्यप्रदेशेऽधस्तादुद्दम्भे वपाश्रपण्यौ बद्ध्वा सोपानबन्धनार्थं वपाश्रपणीबन्धनार्थाश्च रज्जवो मृदा लिम्पनीयाः । ततो निश्रयणीमुदगग्रां कृत्वा विंशतिसंख्येषु सोपानानामन्तरालेषु वपाश्रपण्योराग्नेयादीनां विंशतेरजानां वपाभिः क्रमेण प्रोर्णनं कर्तव्यम् । मेषमेष्योः पृथक् वपाश्रपण्यौ भवतः । वपोत्खेदनादिपरिवासनान्तमेकैकस्य तृणाग्राणां सहैव प्रक्षेपः ।

ततः सर्वासां क्रमेणाग्निराज्यस्येत्यभिघारणम् । तत स्तोकप्रैषः । श्रपणम् । शृताः प्रचरेति प्रैषः । सर्वासां तत्रस्थाभिघारः । प्रत्याहरणम । उत्तरत उदक्संस्थे वपाश्रपण्यौ निधाय प्राणदानम् । अग्निं गच्छ । इन्द्राग्नी गच्छ । इन्द्रं गच्छ । सरस्वती ग० मरुत उज्जेषान् गच्छेति वशापृश्न्यौ ।

ततः क्रमेण सप्तदशकृत्वः प्रजापतिं गच्छेति । ततः प्रियैर्धामभिः प्रियर्ठ० सद आसीदतेति विंशतिवपान्तं तन्त्रेणासादनम् । ततः प्रियाभ्यां धामभ्यां प्रियर्ठ० सद आसीदतमिति मेषमेषीवपयोस्तन्त्रेणासादनम् । सर्वासामुत्पत्तिक्रमेणालम्भः । स्वाहाकृतियागः । वपादीनामभिघारणम् । जुह्वामुपस्तारः । हिरण्यावधानम् । वपामवद्यन्नाह । अग्नये छाग-

॥१२॥ तद्गुणाभावे सर्वेषामेकदेशोऽपि ॥१३॥ वाच उत्त-

स्य वपायै मेदसोऽनुब्रूहीति ।

ततः पुनर्हिरण्यावधानम् । द्विरभिघारः । आश्राव्याग्नये छागस्य वपां मेदः प्रस्थितं प्रेष्येति प्रैषः । इदमग्नये । एवमेव सर्वासां वपानामवदानम् । प्रैषमात्रे विशेषः । इन्द्राग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूहि । इन्द्राग्निभ्यां छागस्य वपां मेदः प्रस्थितं प्रेष्य । इन्द्राय मेषस्य वपायै मेदसोऽनुब्रूहि । इन्द्राय मेषस्य वपां मेदः । सरस्वत्यै वपाया० । अजपत्ते सरस्वत्यै छागस्य व० । मरुद्भ्य उज्जेषेभ्य आश्राव्य मरुद्भ्य उज्जेषेभ्यो वपां मेदः ।

ततो जुह्वां सकृदुपस्तीर्य सकृदेव हिरण्यशकलमवधाय सर्वा वपा एकत्र कृत्वा सहावद्यन्नाह । प्रजापतये उपांशु छागानां वपाभ्यो मेदसोऽनुब्रूहि । सप्तदशानां वपानां सहावधानम् । उपरि सकृदेव हिरण्यशकलावधानम् । ततो द्विरभिघारः । आश्राव्य प्रजापतये उपांशु छागानां वपां मेदः प्रस्थितं प्रेष्येत्युच्चैः । तन्त्रेणेदं प्रजापतय इति । सप्तदश त्यागाः ।

ततः स्वाहाकृता ऊर्ध्वनभसं मारुतं गच्छतेति चतुर्णां वपाश्रपणीनां प्रासनम् । स्रुचोर्निधानम् । चात्वाले मार्जनम् । ततो धिष्ण्योपस्थानादि ऐन्द्राग्नग्रहस्य भक्षप्रभृत्या निधानान्तं कृत्वा वैश्वदेवग्रहणान्तम् । पशुपुरोडाशप्रथमान् बार्हस्पत्यान्तान् माध्यन्दिनसवनीयान्निर्वपति ।

तत्र चतुरासनम् । प्रणीताप्रणयनम् । पात्रासादनम् । शूर्पं, कपालानि सप्तषष्टिः । कर्परं चरुस्थाल्येका महती । उलूखलमुसलम् । पात्रीधान्यं व्रीहियवादि, नीवाराश्च । शाखोपवेषः । संयवनार्थं दधि च । श्नावदानम् । षट् पुरोडाशपात्र्यः । मेक्षणं च ।

ग्रहणे—अग्नये जु० । इन्द्राग्निभ्यां जु० । इन्द्राय जु० । सरस्वत्यै जु० । मरुद्भ्य उज्जेषेभ्यो जु० । प्रजापतये जु० । प्राजापत्यानामेक एव पशुपुरोडाशो न प्रतिपशु । एवं षट् पशुपुरोडाशाः । इन्द्राय जु० । इन्द्राय हरिवते जु० । इन्द्राय पूषण्वते जुष्टमिति सवनीयानां निर्वापः । ततः सप्तदशशरावस्य नैवारस्य बार्हस्पत्यस्य चरोर्ग्रहणम् । तत्र सप्तदशशरावचतुष्टयपरिमाणेन पात्रेण चतुर्ग्रहणं न मुष्टिभिः । बृहस्पतये जुष्टं गृह्णामीति विशेषः । ततः शेषाभिमर्शनादि सादनान्तम् ।

ततः पात्रान्तरात् प्रोक्षणीः स्रुचि कृत्वा ब्रह्मणाऽनुज्ञातः प्रोक्षति । अग्नये त्वा जुष्टं प्र० । इन्द्राग्निभ्यां त्वा जु० । इन्द्राय त्वा जु० । सरस्वत्यै त्वा

**ममेके ॥१४॥ माहेन्द्रान्ते वशावपाप्रचरणम् ॥१५॥ अव·**

---

जु० । मरुद्भ्य उज्जेषेभ्यस्त्वा जु० । प्रजापतये त्वा जु० । इन्द्राय त्वा जु० । हरिवते त्वा जु० । इन्द्राय पूषण्वते त्वा जु० । बृहस्पतये त्वा जु० इति ।

यवमयपुरोडाशपक्षे फलीकरणानन्तरं विभज्यालम्भः । इदमिन्द्राग्न्योरिन्द्रस्य सरस्वत्या मरुतामुज्जेषाणां प्रजापतेरिन्द्रस्येति । इदमिन्द्रस्य हरिवतश्चेन्द्रस्य पूषण्वतश्चेति । पुनः संयवनानन्तरं प्रत्येकं विभज्यालम्भः । कपालोपधाने-आग्नेयस्याष्टौ कपालानि । ऐन्द्राग्नस्य द्वादश । इन्द्रस्याष्टौ । सारस्वतस्याष्टौ । मारुतस्य द्वादश । प्रजापतेरष्टौ ।

ततः सवनीयस्यैन्द्रस्यैकादश । ततः कर्परस्येति । पात्रसंमार्गान्ते पशुविशसनम् । तत्रैकस्मिन् महति परिवृते द्वाविंशतिसंख्याकानि काष्ठानि प्राक्संस्थानि निखाय तेषूपाकरणक्रमेण पशून्बद्ध्वा शमित्रा विशसनं कारयितव्यम् ।

ततः सर्वेषां पशूनां क्रमेण हृदयाद्यवदानानां ग्रहणं पृथक् पृथक् कृतचिह्नासु वंशपात्रीषु स्थापनम्। मांसानां प्रक्षालनम् । वस्त्रनिर्मितेषु कृताङ्कादिचिह्नेषु पशुसंख्येष्वावपनेषु हृदयव्यतिरिक्तानि क्रमेण प्रक्षिप्याबपनानां मुखानि सङ्कोच्य बन्धनीयानि । यथा मांसानां विपर्यासो बहिष्पातश्च न भवति तथा कार्यम् । ततस्तन्त्रेण श्वभ्र ऊवध्यावधानम् । लोहितानां प्रासनं च । ततो महच्छूलमादाय तस्मिन् शूले आग्नेयैन्द्राग्न्योर्हृदये प्रतृद्य द्वितीये शूले मेषमेष्योर्हृदयप्रतर्दनम् ।

ततः सर्वेषां हृदयानां क्रमेण महति शूले प्रतर्दनम् । ततः शूलानां शामित्रे श्रपणम् । ततो द्यौरसीति महत्या उखाया आदानम् । मातरिश्वन इत्यधिश्रयणम् । तस्यां प्रथमद्वितीयपश्वोरवदानानि प्रक्षिप्य ततो द्वितीयामुखामादायाधिश्रित्य तस्यां मेषमेष्यवदानानि वस्त्रावपनबद्धान्येव प्रक्षिपेत् ।

ततः परिशिष्टानामष्टादशपशूनामवदानानि महत्यामेवोखायां प्रक्षिपति । सर्वाण्यावपनानि एकस्यां रज्ज्वां हस्तमात्रान्तराले बद्ध्वा क्रमेणोखायां प्रक्षिपेत्। तत उदकमाक्षिप्य शमितारं शास्ति-त्रिःप्रच्यावयतात् त्रिःप्रच्युतानां हृदयान्युत्तमानि कुरुतादिति । पुरोडाशालङ्करणे प्रथममिन्द्रं गच्छेति दधिघर्मस्य । पशुपुरोडाशेषु अग्निं गच्छ । इन्द्राग्नी गच्छ । इन्द्रं गच्छ । सरस्वतीं गच्छ । मरुत उज्जेषान् गच्छ । प्रजापतिं गच्छेति ।

**दानैश्च द्वैध ऽश्रुतेः ॥१६॥ पूर्वेभ्यो देवतास्विष्टकृद्भ्यामवद्यत्युत्तराणि विशे ददाति ॥१७॥ वामदेव्यग्रहान्ते प्राजापत्यानाम् ॥१८॥ स्रग्व्यूहनात्प्रागग्रविषा ॥१९ यथान्यायं वोभयोः ॥२०॥ वशायाश्च ॥२१॥ ऐकध्यं च अपणम् ॥२२॥ अदानं च विशे॥२३॥ माध्यन्दिनीयैः सह नैवारश्चरुर्बार्हस्पत्यः सप्तदशशरावः ॥२४॥ संख्यामुष्टिनिवृत्तिः सामान्यात् ॥२५॥ न, यजतिशब्दात् ॥२६॥ सप्तदशसप्तदश शतानि ददाति गोवस्त्राजावीनाम्॥२७॥**

---

ततः सवनीयानामिन्द्रं गच्छ । इन्द्रं हरिवन्तं गच्छ । इन्द्रं सरस्वतिवन्तं गच्छेति। ततो बार्हस्पत्यस्य चरोः बृहस्पतिं गच्छेति । पशुपुरोडाशयागेषु जुह्वामुपस्तारः । उपभृति चेदानीमेवोपस्तारः । प्रथमं पुरोडाशावदानप्रत्यभिघारानन्तरमुपभृति स्विष्टकृदर्थमवदानं नोपर्यभिघारः ।

अवद्यन्नाह । अग्नये पुरोडाशस्या० । अतिक्रम्याश्राव्याह । अग्नये पुरोडाशं प्रेष्य । सरस्वत्यै पुरोडाशस्यानुब्रू० । सरस्वत्यै पुरोडाशं प्रेष्य । मरुद्भ्य उज्जेषेभ्यः पुरोडाशस्यानुब्रूहि । मरुद्भ्य उज्जेषेभ्यः पुरोडाशं प्रेष्य । आगत्य जुह्वामेवोपस्तारः । प्राजापत्यपुरोडाशस्य मध्यात्पूर्वार्द्धाच्चावदानम् । अभिघारः । ततोऽभ्यङ्गः । स्विष्टकृदर्थमुपभृत्यवदानम् । ततो द्विरभिघारः । तत उत्थायातिक्रम्याश्राव्य प्रजापतये उपांशु पुरोडाशस्यानुब्रूहि । प्रजापतये उपांशु पुरोडाशं प्रेष्य ।

ततो निर्गुणस्विष्टकृद्यागसूत्रेण तत्र पुरोडाशावदानम्। उपभृति स्विष्टकृदर्थमवदानम् । अन्त्ये हविष्यवत्ते द्विरभिघारः । ऐन्द्राग्नमारुतयोश्चतुर्धाकरणाभावः। अन्यत् सर्वेषां सर्वं प्राशित्रादिभागपरिहरणान्तम् । सवनीयप्रचारादि इडाभक्षान्तम् । ततः शालाद्वार्ये दाक्षिणहोमाद्याग्नीध्रगमनान्तम् ।

तत आग्नीध्रे दक्षिणासङ्कल्पः । अस्य वाजपेयस्य समृद्ध्यर्थम् एकोननवत्यधिकैकोनविंशतिशतानि गाः सप्तदशशतानि वस्त्राणि च सप्तदशशतान्यजांश्च सप्तदशशतान्यवींश्च सप्तदशनिष्ककण्ठीर्वृषलीश्च सप्तदशहस्तिनश्च सप्तदशवह्यकानि च सप्तदशमहानसानि च दक्षिणाः ब्रह्मादिभ्य ऋत्विग्भ्यो यथाशास्त्रविभागेनाहं सम्प्रददे ।

ततोऽस्मद्दाता इति पठित्वाऽग्नीद्दक्षिणानां ते यो विभाग इत्यादि प्रक्र

सप्तदश वृषल्यो निष्ककण्ठ्यः ॥२८॥ हस्तिवह्यकमहानसानाम् ॥२९॥ जातेजातेऽश्वा सप्तदशगणपूरणात् ॥३०॥ द्रव्येषु वा सप्तदशता सप्तदश सप्तदशानि ददातीति श्रुतेः ॥३१॥२॥

मरुत्वतीयान्त इन्द्रस्य वज्र इति रथावहरणम् ॥१॥ दक्षिणेन चात्वालमावर्त्तयति वाजस्येति धूर्गृहीतम् ॥२॥ अश्वान्प्रोक्षत्यपोऽवनीयमानान्स्नातान्वागतानप्स्वन्तरिति ॥ ३ ॥ देवीराप इति वा ॥ ४ ॥ समुच्चयो वा ॥५॥ दक्षिणं युनक्ति वातो वेति ॥६॥ उत्तरं वातरंहा इति ॥७॥ दक्षिणाप्रष्टिं जवो यस्त इति ॥८॥ अयु-

---

तिवत् सर्वम् । गोवासर्सा रुद्राय त्वेत्याद्या यथास्वं प्रतिग्रहमन्त्राः । अन्येषां सर्वेषां कोऽदादिति प्रतिग्रहमन्त्रः । अथवा तूष्णीमेव सर्वद्रव्याणां प्रतिग्रहः "इच्छतो मन्त्रवचनमि"ति सूत्रकारवचनात् । चतुर्भिः सुवर्णैरेको निष्को भवति ।

एवंविधो निष्कः कण्ठे यासां ता निष्ककण्ठ्यः । वृषल्यो दास्यः । वह्यकं यानं पुरुषवाह्यम् । महानसो रसवतीपाकगृहभाण्डादिकं पाकोपहारयुक्तम् । अन्यत् प्रसिद्धम् । सर्वमेतत् प्राकृतदक्षिणाविभागेन विभज्य देयं, नान्वाहार्यादिवदेकस्यापि समो विभागः ।

इति चतुर्दशस्य द्वितीया कण्डिका ॥ २ ॥

---

ततः सशस्त्रमरुत्वतीयस्य पात्रनिधानान्ते माहेन्द्रग्रहणात् पूर्वं वाजपेयिका विशेषाः पदार्था भवन्ति । तत आग्नीध्रमुत्तरेणैकस्य रथस्योपरि द्वितीयो रथः स्थापितो भवति । ततोऽध्वर्युरिन्द्रस्य वज्रोऽसीति मन्त्रेण रथाद्रथमुपाहरति अवतारयति । ततो वाजस्य नु प्रसव इति मन्त्रेण रथं धुरि गृहीत्वा चात्वालस्य दक्षिणतः समीपे वेदिमध्ये आनयति ।

ततोऽप्स्वन्तरिति मन्त्रेण स्नानार्थेऽप्सु प्रवेश्यमानानश्वान् प्रत्येकं मन्त्रावृत्त्या प्रोक्षति । ततोऽपःप्रविष्टाश्वानां स्नपनम् । ततो देवयजनं प्रत्यानयनम् । अथवाऽकृतस्नानान्देवयजनमागतान् प्रोक्षति । अथवा देवीरापो यो व इत्यनेन अश्वान् प्रोक्षति नाप्स्वन्तरित्यनेन । अथवोभयोर्मन्त्रयोः प्रोक्षणे समुच्चयो भवति ।

**रतश्चतुर्थोऽनुगच्छति सर्वयन्त्री ॥९॥ बार्हस्पत्यमेनाना- घ्रापयति वाजिन इति ॥१०॥ चतुर्युजो युनक्त्यपरांस्तू- ष्णीं बहिर्वेदि षोडश ॥११॥ देवस्याहमिति ब्रह्मा रथच- मारोहत्युत्करे नाभिमात्रे स्थाणौ स्थितम् ॥१२॥ ऐन्द्राः क्षत्रियस्य चक्रदुन्दुभ्याः ॥१३॥ सप्तदश दुन्दुभीनासज- त्यनुवेदि पश्चादाग्नीध्रात् ॥१४॥ बृहस्पते वाजमित्येकं दुन्दुभिमाहन्ति तूष्णीमितरान् ॥१५॥ क्षत्रियः सप्तद- शेषुप्रव्याधानस्यति तीर्थादुदीचः ॥१६॥ अन्त्ये मिनो-**

---

ततो दक्षिणमश्वं रथे युनक्ति वातो वेति । तत उत्तरमश्वं वातरंहा भवेति । ततो दक्षिणाश्वस्य दक्षिणपार्श्वे दक्षिणाप्रष्टि यवो यस्ते वाजिन्निति । एवं त्रीनश्वान् रथे युनक्ति । द्वौ दक्षिणतः । एकमुत्तरतः । चतुर्थोऽश्वोऽप्ययुक्त एव पल्याणमुखरिकावल्गणसन्नाहादि सर्वयन्त्रो- पेतो रथमनु गच्छति ।

ततोऽध्वर्युः सप्तदशशरावं बार्हस्पत्यं चरुमश्वान् प्रत्येकमाघ्रापयति वाजिनो वाजजितो वाजꣳ० सरिष्यन्त इति मन्त्रेण । प्रत्येकं मन्त्रः । तत एतद् द्र- व्यव्यतिरिक्तान् षोडश रथान् बहिर्वेदि चतुर्युजश्चतुर्भिश्चतुर्भिरश्वैस्तूष्णीं युनक्ति । तत उत्करे नाभिमात्रं स्थाणुं निखाय तस्योपरि रथचक्रं स्थाप्यते । रथचक्रं चौदुम्बरं सप्तदशारं भवति ।

ततो ब्रह्मा देवस्याहꣳ स० सत्यसवसो० हेयमिति मन्त्रेण तत्स्थाणावुपर्या- रोपितं चक्रमारोहति । क्षत्रियस्येन्द्रस्योत्तममितीन्द्रलिङ्गो मन्त्रश्चक्रारोहणे । एवमिन्द्रलिङ्गकाः सर्वे चक्रदुन्दुभिसम्बन्धिनो मन्त्राः क्षत्रियस्य यज- मानस्य ज्ञेयाः ।

तत आग्नीध्रस्य पश्चाद्वेद्यन्तमनुलक्षीकृत्य स्तम्भद्वयं पूर्वापरं निखाय तयोरुपर्येकं काष्ठं सप्तदशशङ्कुयुक्तं प्रागग्रं निदध्यात् । तेषु सप्तदशसु शङ्कुषु सप्तदश दुन्दुभीन् पश्चिमत आरभ्य प्राक्संस्थान् क्रमेणासजति अवलगयति ।

ततोऽध्वर्युर्बृहस्पते वाजमिति मन्त्रेण प्रथमं दुन्दुभिमवहन्ति । दण्डेन वादयति । ततस्तूष्णीमितरान् षोडश दुन्दुभीन् प्रत्येकं दण्डेन कुट्टयति । तत एकः क्षत्रियः चात्वालोत्करावन्तरालादारभ्योदीच्यां दिशि सप्तदश- संख्यान् प्रास्यति । तच्चैवम्—तीर्थे स्थित्वा बलादेकमिषुमुदीच्यां

र्ण्यौदुम्बरीᳬ शाखाम् ॥१७॥ देवस्याहमिति यजुर्युक्तमारोहति यजमानः ॥१८॥ अध्वर्योश्च तूष्णीं ब्रह्मचार्यन्तेवासी वा वाचनाय ॥१९॥ इतरेषामेकस्मिन्राजन्यो वैश्यो वा सौरप्रतिग्रहाय ॥२०॥ आजिं शीघ्रं यन्ति ॥२१॥ वाजिन इति वाचयति ॥२२॥३॥

ब्रह्मा त्रिः सामानि गायति ॥१॥ दुन्दुभीन्वादयन्ति ॥२॥ एष स्य इति प्रत्यृचं जुहोति ॥३॥ अनुमन्त्रयते वा ॥४॥ उत्तरेण च त्र्यृचेन ॥५॥ सुन्वन् जयति ॥६॥ शाखां प्रदक्षिणं कृत्वा यन्ति ॥ ७ ॥ आगतेषु ब्रह्माऽवरोहति देवस्याहमिति ॥८॥ एषा ह व इति मन्त्राहतमवहरते ॥९॥ तूष्णीमितरान् ॥१०॥ अवरुह्य नैवारमालभते

---

प्रक्षिप्य यत्र स पतितो भवति तत्र स्थित्वा द्वितीयमिषुमुदीच्यां बलात् प्रक्षिपति ।

स यत्र द्वितीय इषुः पतति तत्र स्थित्वा ततो बलादाकृष्य तृतीयमिषुमुदीच्यां प्रक्षिपति एवं प्रकारेण सप्तदशेषून् प्रक्षिपति । सप्तदशस्येषोः पतनस्थाने क्षत्रिय एवौदुम्बरीं शाखां निखनति अवधिभूताम् ।

ततो यजमानो देवस्याहमिति मन्त्रेण मन्त्रयुक्तं रथमारोहति । देवस्याहᳬ सवितुः सवे सत्यप्रसवसो बृहस्पतेर्वाजजितो वाजं जेषमित्ययं मन्त्रः ।

ततोऽध्वर्युणा य उपनीतो भवति सोऽध्वर्योर्ब्रह्मचारी अध्वर्योः शिष्यो वा कश्चिद् ब्राह्मणो यजमानारूढं रथं तूष्णीमारोहयति वाचनार्थम् ।

ततोऽन्येषां षोडशरथानां मध्ये एकस्मिन् रथे क्षत्रियो वैश्यो वा सौरप्रतिग्रहार्थमारुह्योपविशति । ततः शीघ्रमाजिं यन्ति । स्पर्द्धया धावनमाजिशब्देन उच्यते । तेन परस्परं स्पर्द्धया अहमहमिकया रथान् प्रधावयन्ति इत्यर्थः । औदुम्बरीं शाखां प्रति स्पर्द्धया रथान् प्रधावयन्तो गच्छन्तीत्यर्थः । ततो गमने प्रारब्धे अध्वर्योर्ब्रह्मचारी शिष्यो वा वाजिनो वाजजितोऽध्वन इति मन्त्रं यजमानं वाचयति ॥

इति चतुर्दशस्य तृतीया कण्डिका ॥ ३ ॥

---

ततो ब्रह्मा रथचक्रोपविष्ट एव त्रिः साम गायति । केचन दुन्दुभीन् वादयन्ति । ततोऽध्वर्युरेषस्य वाजीति प्रत्यृचं सकृद्गृहीतमाज्यमाहवनीये

**तीर्थे स्थितमामा वाजस्येति ॥११॥ यजुर्युक्तानाघ्रापयति वाजिन इति ॥१२॥ चतुर्थं युक्त्वाऽध्वर्यवे ददाति ॥१३॥ सर्वेभ्यः षोडश ॥१४॥ अध्वर्युयजमानौ मधुग्रहꣳ सौरप्रतिग्रहाय प्रयच्छत उत्तरस्यां वेदिश्रोणा उपविष्टाय ॥१५॥ नेष्टा च सौरान्पश्चिमेन निष्क्रम्य शालामपरेण हस्त्वैकं प्रयच्छन्नाहानेन त इमं निष्क्रीणा-**

---

जुहोति एष स्येति प्रथमाम् । उत स्मास्येति द्वितीयाम् । अथवा एताभ्यामृग्भ्यां धावतोऽश्वाननुमन्त्रयते । ततः शन्नो भवन्त्विति तृचेन सकृद्गृहीतमाज्यं प्रत्यृचं जुहोति । अथवा अनेनापि तृचेनाश्वाननुमन्त्रयते । होमपक्षे इदमश्वेभ्य इति पञ्चानां त्यागा रथस्थेनैव यजमानेन कर्तव्याः । इहस्थितया पत्न्या वा कार्याः । द्वयोस्तिसृणां च पृथग्विधानमसन्नियोगार्थम् , तेन पूर्वाभ्यां होमः । तृचेनानुमन्त्रणम् । अथवा पूर्वाभ्यामनुमन्त्रणम् । तृचेन होम इत्येवमपि भवति । यजमानोऽग्रतो गमनेन जयति तथा कर्तव्यम् ।

ततो यजमानप्रभृतयः सर्वे सप्तदशे प्रव्याधे निखातामौदुम्बरीं शाखां प्रदक्षिणं कृत्वा देवयजनं प्रत्यायन्ति । ततः सर्वेषु याजमानादिरथेषु देवयजनमागतेषु ब्रह्मा देवस्याहꣳ स॰ बृहस्पतेरुत्तमं नाकमरुहमिति मन्त्रेण रथचक्रादवरोहति ।

ततोऽध्वर्युरेषा व इति मन्त्रेण वादितं दुन्दुभिवहरति नीचैरवतारयति। ततस्तूष्णीमन्यान् षोडश दुन्दुभीनवतारयति । ततो नैवारचरुश्चात्वालोत्कराधन्तरेण स्थाप्यते । यजमानो रथादवरुह्य तीर्थे स्थितं नैवारं चमा मा वाजस्येत्यालभते ।

ततो वाजिनो वाजजितो वाजꣳ॰ सस्रवाꣳस इति मन्त्रेण मन्त्रयुक्तानश्वान्नैवारचरुमाघ्रापयन्ति प्रत्येकं मन्त्रावृत्त्या । ततश्चतुर्थमश्वं रथे युक्त्वा तं रथमध्वर्यवे ददाति । इमं यजुर्युक्तं रथमध्वर्यो तुभ्यमहं सम्प्रददे । ततः सर्वेभ्योऽध्वर्युसहितेभ्योऽन्यान् षोडश रथान् ददाति एकैकस्यैकैकम् । ततः क्षत्रियो वैश्यो वा यो रथमारूढो भवति स रथादवतीर्थ महावेदेरुत्तरस्यां वेदिश्रोण्यामुपविष्टाय क्षत्रियाय वैश्याय वा मधुग्रहं प्रयच्छति ।

ततो नेष्टा हविर्धानं प्रविश्य सर्वान् सौरग्रहानादाय पश्चिमेन द्वारेण निष्क्रम्य दक्षिणेन मार्जालीयं गत्वा शालामपरेण हस्तेनोत्तरस्यां वेदिश्रोणावागत्य तेषां सौराणां मध्ये एकं सौरग्रहं सौरप्रतिग्रहाय प्रयच्छन्

मीति ॥१६॥ ब्रह्मणे मधुग्रहं ददाति सपात्रम् ॥१७॥ तं स यथेष्टं कुरुते ॥१८॥४॥

द्वादश स्रुवाहुतीर्जुहोत्याप्पये स्वाहेति प्रतिमन्त्रं वाचयति वा ॥१॥ षड् वोत्तराः ॥२॥ नेष्टा पत्नीमानेष्यन्कौशं वासः परिधापयति चण्डातकं दहरं वा ॥३॥ अन्तरं दीक्षितवसनात् ॥४॥ निश्रयणीं यूप उच्छ्रयत्युत्तरां दक्षिणां वा ॥५॥ आरोक्ष्यन् जायामा-

---

अनेन त इमं निष्क्रीणामीत्याह । तत इतरानपि सौरग्रहान् तस्मा एव प्रयच्छति ।

मधुग्रहमादाय यजमानाय समर्पयति । यजमानस्तं पात्रसहितं मधुग्रहं ब्रह्मणे ददाति । स ब्रह्मा तेन मधुग्रहेण यथेष्टं कुरुते यदि मधु पातुमिच्छति तदा पिबति । यदि दातुं तदा ददाति । यद्यदिच्छति तत्तत् करोतीत्यर्थः ॥

इति चतुर्दशस्य चतुर्थी कण्डिका ॥ ४ ॥

---

ततोऽध्वर्युराज्यस्थालीं स्रुवं चादायाहवनीयसमीपे आगत्योपविश्याप्पये स्वाहेति प्रतिमन्त्रं द्वादश स्रुवाहुतीर्जुहोति । इदमाप्पये । इदं स्वाप्पये । इदमपिजाय । इदं क्रतवे । इदं वसवे । इदमहर्पतये । इदमह्ने मुग्धाय । इदं मुग्धाय वैनर्ठ०शिनाय । इदं विनर्ठ०शिन आन्त्यायनाय । इदमन्त्याय भौवनाय । इदं भुवनस्पतये । इदमधिपतये । १२ अथवा इदं प्रजापतये इत्येव सर्वेषां त्यागाः । "आपय आयुर्यज्ञेन प्राजापत्यानी"ति वचनात् ।

अथवा आप्पये स्वाहेति ब्रूहीत्येवं द्वादशापि मन्त्रान् यजमानं वाचयति । तत आयुर्यज्ञेन कल्पतामिति षड्भिर्मन्त्रैः षट् स्रुवाहुतीः प्रतिमन्त्रं जुहोति । इदं प्रजापतय इति षण्णामपि त्यागाः । अथवा आयुर्यज्ञेन कल्पतामिति ब्रूहीत्येवं षडपि मन्त्रान् यजमानं वाचयति । द्वादशानां षण्णां च पृथग्वचनं पूर्ववदसन्नियोगार्थम् ।

ततो नेष्टा पत्नीं यूपारोहणायानयिष्यन्दर्भमयं वासो दीक्षितवस्त्रस्य मध्ये परिधापयति । पत्नि कौशं वासः परिधत्स्वेति प्रैषेण । वस्त्रं च चण्डातकं दहरं वा । चण्डातकं चलनकम् । "अर्द्धोरुकं वरस्त्रीणां वासश्चण्डातकं विदुरि"त्यभिधानात् । दहरं कौपीनम् ।

भिमन्त्रयते जाय एहि स्वो रोहावेति रोहावेति प्रत्याह प्रजापतेरित्यारोहतः ॥६॥ स्वरिति गोधूममालभते ॥७॥ शिरसा यूपमुज्जिहीतेऽमृता इति ॥८॥ अस्मे व इति दिशो वीक्षते ॥९॥ सप्तदशाश्वत्थपत्रोपनद्धानूषपुटानुदस्यन्त्यस्मै विशः ॥१०॥ प्रतिगृह्णात्येनान् ॥११॥ नमो मात्र इति भूमिमवेक्षते, मरुक्मे बस्तचर्मण्यवरोहति, भूमौ वा ॥१२॥ उत्तरवेदिमपरेणौदुम्बरीमासन्दीं बस्तचर्मणा स्तृणातीयं त इति ॥ १३ ॥ सुन्वन्तमस्यामुपवेशयति यन्ताऽसीति ॥१४॥ नीवारेण प्रचरति ॥१५॥ प्राक् स्विष्टकृत औदुम्बरे पात्रेऽप आसिच्य

---

ततोऽध्वर्युर्यूपे निश्रयणीमुत्तरां दक्षिणां वोच्छ्रयति । ततो यजमानो यूपस्यारोहणं करिष्यन् प्रथमं जायां स्वस्त्रियं जाय एहि स्वो रोहावेति मन्त्रेणाह्वयति । सा एवमाहूता जाया रोहावेति प्रतिवक्ति । ततो जायापती प्रजापतेरिति मन्त्रेण निश्रयण्या यूपमारोहतः । उभयोर्मन्त्रः । तत आरुह्य यजमानः स्वर्देवा इति गोधूमचषालमालभते । ततोऽमृता अभूमेति मन्त्रेण शिरसा यूपमुज्जिहीते । यूपाग्रात् स्वशिर उद्ध्वं करोतीत्यर्थः ।

ततो यजमानोऽस्मे व इति सर्वा दिशो वीक्षते । ततोऽधःस्थित यजमानस्य पुत्रपौत्राद्याः प्रजाः सप्तदशसंख्यानश्वत्थपर्णैर्बद्धान् ऊषाणां क्षारमृत्तिकानां पुटान्यजमानं प्रत्युदस्यन्ति ऊर्ध्वानुत्क्षिपन्ति । यजमानस्तानूषपुटान् प्रतिगृह्णाति । ततो यजमानस्तत्र स्थित एव नमो मात्रे पृथिव्या इति मन्त्रेण भूमिमवेक्षते ।

ततो यजमानः सपत्नीको यूपान्निश्रेण्याऽवतीर्य रुक्मसहितेऽजचर्मण्यध्वर्युणा प्रथमं स्तृते रुक्मस्योपर्यवरोहति । भूमौ वा अरुक्मायामेव । ततोऽध्वर्युरुत्तरवेदेः पश्चादौदुम्बरीमासन्दीं निधाय तस्यां प्राग्ग्रीवमुत्तरलोमाऽऽजं चर्मास्तृणाति इयं ते राडिति ।

ततोऽध्वर्युर्बाहुगृहीतं यजमानमस्यामासन्द्यामुपवेशयति यन्ताऽसि यमन इति मन्त्रेण । ततोऽध्वर्युर्नैवारं चरुं प्रियेणेत्यासाद्यालभ्य स्रुचावादाय यजप्रैषावाज्यभागावनुष्ठाय बृहस्पतयेऽनुब्रूहीत्युक्त्वा जुह्वामुपस्तीर्य चरोर्द्विरवदायाभिघार्य त्वताभ्यङ्गं कृत्वोत्थायाश्राव्य बृहस्पतिं यजेत्युक्त्वा वषट्कृते जुहोति । इदं बृहस्पतये । यथाहाश्वलायनः—"आ-

पयश्च ॥१६॥ सप्तदशान्यन्नान्यावपति ॥१७॥ यावत्स्मृति वा ॥१८॥ एकवर्जम् ॥१९॥ अभोजनं तस्योच्छ्वासात् ॥२०॥ स्रुवेण सम्भृताज्जुहोति वाजस्येममिति प्रतिम-

ज्यभागप्रभृतीडान्ता बार्हस्पत्येष्टिरि''ति ।

ततः स्रुचावन्यस्मै प्रदायाज्यहोमं जुहोति प्रारभते । तत्र पूर्वच्छिन्नयैव शाखया सप्तानां षड्वर्गाणामपाकरणम् । प्रणीताप्रणयनम् । पात्रासादनम् । शूर्पं पात्री, एकवर्जितानि सर्वधान्यानि ग्राम्यारण्यानि यावन्ति स्मर्यन्ते, सप्तदश वा । उदकस्थाली दोहनचतुष्टयानि सप्त, औदुम्बरपात्रम् । ततः स्फ्योपहितपात्रीकरणम् ।

पात्रान्तरे प्रोक्षणीरुत्सार्य शूर्पाग्निहोत्रहवण्योरादानम् । प्रतपनम् । उदकालम्भः । पात्रीं प्रति गमनम् । बिलालम्भः । वीक्षणम् । अपद्रव्यनिरसनम् । तदभावेऽभिमर्शनं च । आलम्भः । सप्तानां चतुर्मुष्टिकानां तूष्णीं ग्रहणम् । शेषाभिमर्शनम् । प्राङीक्षणम् । उत्थानम् । उत्तरतो गमनम् । औषधानामासादनम् । प्रोक्षणीरादाय सकृदौषधानां प्रोक्षणम् । उदकनिर्वापः । यजमानस्य स्थाल्यादानादि परिक्षालनान्ताः सप्त दोहाः।

औषधानामीक्षणम् । उदकाधिश्रयणम् । पर्यग्निकरणम् । दोहानां श्रपणम् । औदुम्बरपात्रस्य सम्मार्गः । प्रतपनम् । उदकोद्वासनम् । वेदोपग्रहेण आज्यधर्मित्वात् पत्न्यवेक्षणम् । आहवनीयमपरेण निधानम् । तस्योत्पवनम् । अवेक्षणं च । औदुम्बरे पात्रे उपस्तारः । दोहानां तत्रस्थाभिघारः । उद्वासनम् । औदुम्बरे पात्रे उदकस्थाल्यामुदकस्य सर्वस्यासेकः । ततः सप्तानां पयसां चासेकः ।

ततः सर्वेषामौषधानामावापः । एकं वर्जयित्वा तस्य यावज्जीवं न भोक्ष्ये इति संकल्पः । ततः प्राणदानमासादनानालम्भौ ।

ततः स्रुवेण गृहीत्वा वाजस्येममिति प्रतिमन्त्रं स्रुवेणैव सप्ताहुतीर्जुहोति । वाजस्येममिति प्रथमाम् । इदं प्रजापतये । वाजस्येमामिति द्वितीयाम् । इदं प्रजा० । वाजस्य न्विति तृतीयाम् । इदं प्रजा० । सोमꣳ० राजानमिति चतुर्थीम् । इदं सोमायाग्नये आदित्येभ्यो विष्णवे सूर्याय ब्रह्मणे बृहस्पतये च । इदं विश्वेभ्यो देवेभ्य इति वा । अर्यमणं बृहस्पतिमिति पञ्चमीम् । इदमर्यम्णे बृहस्पतये इन्द्राय वाचे विष्णवे सरस्वत्यै सवित्रे वाजिने च । अग्ने अच्छेति षष्ठीम् । इदमग्नये । प्र नो यच्छेति सप्तमीम् । इदमर्यम्णे पूष्णे बृहस्पतये वाचे देव्यै च । ततः स्रुवस्य व्यूहनम् । प्रणीताविमोकश्च ।

न्त्रम् ॥२१॥ शेषेणाभिषिञ्चति यजमानं देवस्य त्वेति॥२२॥ सरस्वत्यै वाचस्थाने विश्वेषां त्वा देवानाम् ॥२३॥ सरस्वत्यै त्वेति वा ॥२४॥ सम्राडयमसावित्याह नामग्राहं त्रिरुच्चैः ॥२५॥ अग्निरेकाक्षरेणेत्यनुवाकं द्वादशवत्कृत्वा नैवारस्विष्टकृदिडं करोति माहेन्द्रादि च ॥२६॥ अवरुह्य गच्छति स्तोत्राय प्रहितः ॥२७॥ उज्जितिभ्यो वोत्तरो माहेन्द्रः ॥२८॥ षोडश्यन्ते स्तोत्रं चमसैरेव ॥२९॥

---

ततो होमशेषेणोदकमिश्रितेन पात्रेणैवासन्द्यामुपविष्टं यजमानमभिषिञ्चति । देवस्य त्वा० सरस्व०यैन्त्रिये० चाम्यमुकशर्मन्नित्येवमन्तेन मन्त्रेण । अस्मिन् मन्त्रे सरस्वत्यै वाच इत्यस्य स्थाने विश्वेषां त्वा देवानां यन्तुर्यन्त्रिय इत्येवं प्रयोज्यम् । सरस्वत्यै वाच इति त्वा वाच इति वा । त्वाशब्दाधिक्यमात्रं वा ।

ततोऽध्वर्युः सम्राडयममुकशर्मा इत्येवं नाम गृहीत्वा गृहीत्वा त्रिवारमुच्चैर्ब्रूते । ततोऽध्वर्युरग्निरेकाक्षरेणेत्यनुवाकेन प्रतियजुः सप्तदशाहुतीः स्रुवेण जुहोति । अथवा ऽग्निरेकाक्षरेणेत्यादीनि सप्तदश यजूंषि यजमानं वाचयति । इदमग्नये १ इदमश्विभ्यां २ इदं विष्णवे ३ सोमाय ४ पूष्णे ५ सवित्रे ६ मरुद्भ्यः ७ बृहस्पतये ८ मित्राय ९ वरुणाय १० इन्द्राय ११ विश्वेभ्यः देवेभ्यो १२ वसुभ्यः १३ रुद्रेभ्यः १४ । उदकस्पर्शः । आदित्येभ्यः १५ अदित्य १६ इदं प्रजापतये १७ ।

ततोऽन्यहस्तात् स्रुचावादायाग्नये स्विष्टकृतेऽनुब्रूहि इत्युक्त्वा जुह्वामुपस्तीर्य चरोरुत्तरार्द्धादादाय द्विरभिघार्याश्राव्याग्निं स्विष्टकृतं यजेत्युक्त्वा वषट्कृते जुहोति । उदकालम्भः सर्वेषाम् । ततः स्रुचौ निधाय प्राशित्रादिचतुर्द्धाकरणं भागपरिहरणान्तम् । ततो नैवारचरोः कणापासनं रक्षसामिति । तद्भागावेक्षणम् । भागप्राशनं च । एतावत्पर्यन्तं यजमान आसन्द्यामेवोपविशति ।

ततोऽध्वर्युर्माहेन्द्रग्रहणादिपृष्ठोपाकरणान्तं कृत्वा उत्तरवेदिसमीपे आगत्य स्तोत्रोपासनाय सदो गच्छेति यजमानमनुजानाति ।
ततो यजमान आसन्दीतोऽवरुह्य सदसि गत्वोद्गातॄणां पुरस्तात् प्रत्यङ्मुख उपविशति । माहेन्द्रमनु त्रयोऽतिग्राह्याः पञ्चैन्द्राश्च प्रतिप्रस्थात्रादिभिर्यथासम्भवमुपह्वयन्ते । इदं महेन्द्रायेति महेन्द्रस्य त्यागः । इदमग्नय इत्यनुवषट्कारे । इदमग्नये वर्चसे इदमिन्द्रायौजसे । इदं सूर्याय भ्राजा-

**ऋत्विक्चमसेषु सप्तदशावनवति ॥२०॥ द्वौ द्वौ ॥२१॥**

---

येत्यतिग्राह्याणां क्रमेण त्यागाः। इदमिन्द्रायेति पञ्चानामैन्द्राणाम्।

अतिग्राह्यशेषान् यजमानो भक्षयति। अग्ने वर्चस्विन्नित्यादिभिर्मन्त्रैः। ऐन्द्रांश्च प्रतिप्रस्थात्रादयो यथाहुतं भक्षयन्ति। अथवाऽग्निरेकाक्षरेणेत्युज्जितिभ्योऽनन्तरं माहेन्द्रग्रहणादि भक्षणान्तं कृत्वा नैवारचरोः स्विष्टकृदादि कर्तव्यम्। अथ वशायाः प्राजापत्यानां च वपाप्रचार-हविःप्रचाराणां वैकल्पिकं कालान्तरमुच्यते।

माहेन्द्रान्ते वशाया वपाप्रचारः कर्तव्यः। वशाया अङ्गानि जौहवानि सौविष्टकृतानि च पृथगुखाया द्वयं कृत्वा भेदेन श्रप्यन्ते इतरपशुश्रपणकाले एव। तत्र सौविष्टकृतावदानश्रपणार्थोखायाः संस्कारा न भवन्ति। वपायागानन्तरमेव मारुत्या हविषो यागः।

तत्र जुह्वामुपस्तीर्य हिरण्यमवधाय जौहवानि द्विर्द्विरवदाय हिरण्यमवधायाभिघार्याभिघार्य हृदयादीनि प्रत्यभिघार्योपभृत्युपस्तीर्य पुरोडाशहृदयादिभ्यः सकृत्सकृदवदाय त्रिरभिधार्य प्रधानस्विष्टकृद्यागौ कृत्वा सौविष्टकृतानि अङ्गानि यजमानस्य पुत्रादिभ्यो दद्यात्। ततो मैत्रावरुणस्योक्थ्यविग्रहणानन्तरं सप्तदशानां प्राजापत्यानां वपाभिः प्रचारः।

ततो धारानुयाजानन्तरं प्राजापत्यानां हविःप्रचारो यथोक्तः। सर्वहविःप्रचारानन्तरं साधारण एको वनस्पतियागः। अस्मिन् पक्षे वशाया अकृतेऽपि वशाहोमे वपायाः प्राजापत्यानां च स्वकाल एव पशुपुरोडाशः। अथवाऽतिरात्रवपायागानन्तरमेव वशायाः प्राजापत्यानां च वपायागः। तेषां हविर्यागमनु वशायाः प्राजापत्यानां च हविभिर्यागः प्राक्कृतस्थान एव।

अस्मिन् पक्षे वशाया अवदानान्येकस्यामेवोखायां श्रप्यन्ते। जौहवानि जुह्वामवद्यति। औपभृतानि चोपभृति प्रकृतिवदेव। न सौविष्टकृतानां, तेषां विशे प्रजायै दानम्। तृतीयसवने आग्रयणानन्तरमुक्थ्यग्रहणम्।

प्रतिप्रस्थातः पशुषु संवदस्वेति प्रैषः। हृदयानि शूलान्निष्काश्य क्रमेणैकस्यां रज्वां सर्वाणि प्रमुच्य यथा संकरो न भवति प्राणदानं च यावत्। आवपनानां मुखानि च विस्रंस्यावदानानि प्रकटीकृत्य कृतचिह्नासु वंशपात्रीषु क्रमेण स्थापयित्वा प्राणदानं कुर्यात्।

ततो हरणादि सर्वेषां क्रमेणासादनालम्भनान्तम्। ततो जुह्वामुपभृति वसाहोमहवन्यां प्राशित्रे इडापात्र्यां चोपस्तारः। जुह्वामुपभृति च हिरण्यावधानम्। अभिघारः। अनेकपाशुके पशुपुरोडाशप्रचारे हविः

## एकन्निष्टुः ॥१२॥ उद्वसानीयान्ते यूपवेष्टनान्यध्वर्यवे

प्रचारे विशेषः । काठके—"यदि बहवः पशवः पुरोडाशा वा स्युर्जुहूपभृतो-रुपस्तीर्य जुह्वामवदायाभिघार्योपभृत्यवदायानभिघार्योत्तमस्याभिघा-रणमनु सौविष्टकृतमभिघारयेद्यत्र क्वचन सहोपभृदेतमेव कुर्यादि"ति ।

वसाग्रहणम् । द्विरभिघारः । आद्रवालनम् । प्राशित्रावदानमाग्ने-यजौहवेभ्यः । इडावदानम् । प्राशित्रेडयोस्तावदभिघाराभावः । जाघनीगुदयोर्निधानम् । अग्नये छागस्य हविषोऽनुब्रूहीति प्रैषः । वसा-शेषेण इन्द्राग्निभ्यां छागस्य हविषो हविः प्रस्थितम् । इन्द्राय मेषस्य हविषो हविः प्रस्थितम् । सरस्वत्यै मेष्या हविषोऽनुब्रूहि । सरस्वत्यै मेष्या हविः प्रस्थितं प्रेष्य । अजपदे सरस्वत्यै छागस्य हविषो हविः प्रस्थितम् । मरुद्भ्य उज्जेषेभ्य उस्राया हविषोऽनु० मरुद्भ्य उज्जेषेभ्य उस्राया हविः प्रस्थितं प्रेष्येति विशेषः । ततो वसाशेषं पात्रान्तरे कृत्वा प्रत्यागत्य प्रागेवोपात्तयोरर्थपरिमाणयोर्जुहूपभृतोः पात्रान्तरसहाययोर्वा प्रधानस्विष्टकृदर्थमवदानम् ।

तत्र जुह्वां वसाहोमहवन्यां चोपस्तारः । जुह्वां हिरण्यावधानं, मनोता-प्रैषः, सर्वप्राजापत्यजौहवानां क्रमेण जुह्वामवदानम् । ततः प्राजापत्यानां-सर्वेषां सौविष्टकृतानामुपभृति द्विर्द्विरवदानम् । ततो जुहूपभृतोर्हिरण्या-वधानम् । अभिघारः । वसाग्रहणम् । द्विरभिघारः । आद्रवा लनम् । ततः सर्वेषां प्राजापत्यपशूनां जौहवेभ्यः प्राशित्रावदानम । अभिघारः ।

तत इडापात्र्यां वसाशेषयोरासेकः । सर्वक्रोडानस्थिमतां प्राश-नम् । द्विरभिघारः । सर्वजाघनीगुदानां निधानम् । सर्वपशुशेषाणां प-शुसम्मर्शनम् । ततः प्रजापतये उपांशु छागानां हविषोऽनुब्रूहि इत्युच्चै-रुत्थाय यजतिदेशं गत्वाऽऽश्राव्य प्रजापतये छागानां हविः प्रस्थितं प्रेष्येति प्रैषः । अर्द्धर्चान्तरे प्रतिप्रस्थाता वसां जुहोति । वषट्कृते ऽवदा-नानां होमः । इदं प्रजापतये इति सप्तदश त्यागास्तन्त्रेण ।

ततः प्रदक्षिणमावृत्य पृषदाज्यग्रहणम् । सकृद्वनस्पतियागः । ततः समानीय स्विष्टकृद्यागः । सर्वान् वसाशेषान् वसाहोमहवन्यां समा-सिच्य दिग्व्याघारणम् । स्रुङ्निधानम् । प्राशित्रसमर्पणादि । सोमं प्रभावयेति प्रैषः । यज्ञायज्ञियान्ते समर्पणपूर्वकास्त्रय उक्थ्यविग्रहाः ।

ततः समर्पणम । होतृचमसादिषु पूतभृतः सोमोन्नयनम् । यस्मान्न जात इति षोडशिन उपस्थानम् । कृष्णेऽश्वे पुरस्तात् समीपे स्थिते सति तृणहिरण्यैः सोमोऽत्यरेच्युपावर्तध्वमिति स्तोत्रोपाकरणम् । स्तो-

**ददाति ॥३३॥ यथोपयुक्तः हिरण्यस्रजः ॥३४॥५॥**

---

अनन्तरं होतुः शस्त्रम् । तत्रोथामो दैव मदे इति विहृतास्वृद्दवसाने प्रतिगरः मोदामो दैवोथो इति प्रणवे । इतरासु प्राकृत एव ।

शस्त्रान्ते ओम् इति प्रतिगरः । प्रदक्षिणावृत्तिः । ग्रहोपादानमध्वर्योः । चमसाध्वर्यूणां सर्वचमसानामाश्राव्योक्थ्यशा यज सोमानामिति प्रैषः । वषट्कारानुवषट्कारयोः सर्वेषां सशेषहोमः । प्रदक्षिणं तद्विपरीतं चावर्तनम् । इदमिन्द्राय षोड़शिने, इदमग्नये इति त्यागौ ।

ग्रहशेषस्य इन्द्रश्च सम्राडिति होत्रध्वर्युभ्यां भक्षणं, चमसानां यज्ञायज्ञियवत् । सर्वभक्षाश्चमसा मार्जालीये प्रक्षाल्योत्तरवेदिमपरेण होतृचमसपूर्वकं स्थापनीयाः । तत उन्नेता पूतभृतः सर्वं सोमं होतृचमसादिषु सर्वचमसेषु विभज्योन्नयति । ततोऽध्वर्योर्होतृचमसमुपस्पृश्य स्तोत्रोपाकरणम् । ततः सप्तदशसोमग्रहाणां द्वयोर्द्वयोर्ऋत्विक् चमसेष्ववनयनम् । नेष्टुश्चैकस्यैव निनयनम् । ऋत्विग्ग्रहणाद्यजमानचमसे ग्रहावनयनाभावः ।

ततः स्तोत्रान्ते होतुः शस्त्रम् । तत्राध्वर्योः प्रतिगरः । नात्र शस्त्रान्ते होमान्ते च प्रदक्षिणावृत्तिरग्रहत्वात् । आश्राव्योक्थशा यज सोमानामिति प्रैषः । इदं विष्णवे शिपिविष्टाय इदमग्नय इति त्यागौ । वषट्कारानुवषट्कारयोः सर्वचमसानां सशेषो होमः । यज्ञायज्ञियवद् भक्षणादिपात्रप्रक्षालनान्तम् ।

तत उल्मुकसमासाद्यनुयाजाः । वशायाः प्राजापत्यानां चावदानयागोत्कर्षेऽपि चोदनक्रमेणैव व्यूहनमसकृद् वनस्पतेर्व्यूहनम् । अग्नेरिन्द्राग्न्योरिन्द्रस्य सरस्वत्या मरुतामुज्जेषाणां प्रजापतेर्वनस्पतेरिद्रस्य वसुमतो देव्यावतो बृहस्पतेः सोमस्योज्जितिमिति । अग्निरिन्द्राग्नी इन्द्रः सरस्वती मरुत उज्जेषाः प्रजापतिर्वनस्पतिरिन्द्रो वसुमान् रुद्रवान्० देव्यावान् बृहस्पतिः सोमस्तमप० । उदयनीयान्ते तिस्रोऽनूबन्ध्या मैत्रावरुणीवैश्वदेवीबार्हस्पत्याः । तद्विधिर्द्वादशाहे उक्तः ।

ततः समारोह्योदवसाय त्र्यातव्युदवसानीया । साऽपि विस्तरेण द्वादशाहे उक्ता । तदन्ते यूपवेष्टनानामध्वर्यवे दानम् । हिरण्यमाला या या येन येन बद्धा सा सा तस्मै तस्मै देया ।

इति चतुर्दशस्य पञ्चमी कण्डिका ॥ ५ ॥

इति वाजपेयः । इति त्रिरग्निचित सम्राट् स्थपति महायाज्ञिक श्रीप्रजापतिसुत याज्ञिकदेव विरचितायां कात्यायनसूत्रपद्धतौ वाजपेयाख्यश्चतुर्दशोऽध्यायः ॥ १४ ॥

---

# पञ्चदशोऽध्यायः ।

**राज्ञो राजसूयः ॥ १ ॥ अनिष्टिनो वाजपेयेन ॥२॥**

---

अथ शाखान्तरोक्ता वाजपेयप्रकाराः । तत्र प्रथमं संस्थावाजपेयः । तत्र सर्वो विधिः संस्थावाजपेयवत् । दक्षिणाऽग्निष्टोमवत् । सुब्रह्मण्याह्वाने शक्रं गच्छेति विशेषो ब्रह्माण आगच्छतेति च विशेषो न भवति । संस्थापशव एव भवन्ति न प्राजापत्याः । वसन्त एव कालः । न परिपत्तौ । मरुत्वतीयान्ते रथावहरणादि यदाध्वर्यवं तद्भवति द्वितीयं कुत्स वाजपेयं सामगाचार्यैरेवेष्यते । तत्र सर्वो विधिराद्यवाजपेयवत् । दक्षिणासु सप्तदशैव गावः । सहस्रदक्षिणाविषयिकांश्वदाभ्यग्रैधातव्यादि न भवति ।

संस्थावाजपेये तु वैश्योऽप्यधिकारी । वाजपेयस्य षोडशिविकारत्वम् । षोडशिनि च मैत्रायणीयकठश्रुतौ चयननिषेधः । सावरभाष्योदाहृतश्रुतौ तु अथाग्निष्टोमेनानुयजति तमनुतमतिरात्रेणेत्यादि आह्वादशरात्रादनुक्रान्तं, तत्र षोडशिवाजपेययोश्च विकल्पेन चयनं सिद्धान्तितम् तच्छाखान्तरपरम् । तत्र स्वशाखायामुत्तरवेदिमपरेणेति कात्यायनेनाभिषेकावसरे सूत्रणादुत्तरवेदिरेव भवति । न वपनं वाजपेये इति कात्यायनमतम् । 'षडुपसत्कश्च साग्निचित्यः स्या'दिति लाट्यायनसूत्रे वचनमुक्तम् ।

तत्र साग्निचित्ये इष्टकापशुप्रयोगात् पूर्वं मातृपूजाभ्युदयिके कार्ये । चयनाकरणे तु प्रथमयज्ञात् पूर्वं आपस्तम्बोक्तवाजपेये नाजिधावनं रथसंस्कारत्वात् । रथादीनामभावात् ।

केचिदेकेन रथेनाजिधावनमिच्छन्ति । शिष्टं सर्वं प्रथमेन तुल्यम् । संस्थावाजपेयाग्रे श्लोकः—

संकल्पादि च रूपेण, वयसादिवनेन हि ।
न माहेन्द्रात् परं सत्रं शिष्टं सर्वं तु पूर्ववत् ॥ १ ॥

इति कात्यायनश्रौतसूत्रोक्तचतुर्दशाध्यायस्थोऽतिरिक्तो वाजपेयप्रयोगः समाप्तः ॥

॥ शुभम् ॥

---

## राजसूयः ।

राज्ञ एव राजसूयो भवति न ब्राह्मणवैश्ययोः । राज्ञाऽपि प्रथमं येन वाजपेयो न कृतो भवति, न तु वाजपेययाजिनः । तत्र प्रथमं सक-

**इष्टिसोमपशवो भिन्नतन्त्राः कालभेदात्** ॥ ३ ॥ पवि-

त्रराजसूयार्थं लौकिकं सर्वेषामृत्विजां वरणम् । वैधं तु प्रतिसो[मयागं क्रियते ।

अत्र पवित्राद्याः सोमाः । मल्हाद्यः पशवः । अनुमत्याद्या इष्टयश्च कालभेदाद्भिन्नतन्त्रा एव भवन्ति न समानतन्त्राः । सोमानुष्ठानरहितेषु सर्वेषु दिनेष्वग्निहोत्राद्या नियतक्रिया भवन्त्येव ।

तत्र प्रथमं चतुर्दीक्षस्त्र्युपसत्क एकसुत्यः पवित्रसंज्ञकः सोमयागोऽग्निष्टोमसंस्थ ऋत्विग्वरणाद्यादीपनान्तोऽग्निष्टोमवत् । तत्र फाल्गुनशुक्लप्रतिपदि मातृकाश्राद्धम् । तत्र वरणे सहस्रगवदक्षिणेनाग्निष्टोमसंस्थेन पवित्रेणाहं यक्ष्ये, इति विशेषः ।

"क्षत्रियवैश्ययोश्च नित्यमि"ति वचनात् यजमानभागानां प्रस्तरहोमानन्तरमहं त्वदस्मीति मन्त्रेण होम एव भवति न प्राशनम् । "एकशतेन वा राजसूये" इतिवचनादेकाधिकशतसंख्यैः पवित्रैर्यजमानस्य पावनं, प्रकृतिवद्वा । ब्राह्मण इत्येव वैश्यराजन्ययोरपि श्रुतेरिति वचनाद्दीक्षितोऽयं ब्राह्मण इत्येवोद्वादनप्रैषो नतु क्षत्रिय इति राजेति वा ।

"यवागू राजन्यस्ये"ति वचनात् पत्नीयजमानयोर्व्रतार्थं शृत एव यवागुरुपादीयते । सिद्धोपादानसामर्थ्यान्मन्थौदनवत् । तथा वैश्यराजन्योः सोमे न्यग्रोधस्तिभिनीरुपनह्य क्रयणप्रभृति सोममनु सोमवत्सर्वं क्रयणादि कर्तव्यम् अभिषवात् प्राक् । अभिषवस्तेषां न भवति । न्यग्रोधस्तिभिन्य इति वटस्य फलान्यङ्कुराश्चेति तन्त्रटीकायाम् ।

अथवा चमसोन्नयनकाल एव न्यग्रोधस्तिभीनामाहरणम् न ततः प्राचीनाः क्रयणादयः पदार्थाः । ततो न्यग्रोधस्तिभीन्पिष्ट्वा दध्ना सहोन्मृद्य मिश्रयित्वा सोमचमसोन्नयनानन्तरं यजमानचमसे तान्दध्नोन्मर्दितान् न्यग्रोधस्तिभीन् जुहुयात् ।

तत्र क्रयणादिपदार्थपद्धतिः लिख्यते । सोमनिधानान्तरमुपरवदेशे न्यग्रोधस्य च निधानम् । सोमक्रयणानुमन्त्रणमन्त्रे स्वस्ति सोमन्यग्रोधसखा पुनरेहीति । सोमन्यग्रोधोपनहने आहर सोमं न्यग्रोधपर्याणहने आहरोणीषौ आहरेति ॥ एष वां गायत्रो भाग इति मे सोमन्यग्रोधाभ्यां ब्रूतादेष वां त्रैष्टुभो भाग इति मे सोमन्यग्रोधाभ्यां ब्रूतात् छन्दोनामानाᳪ साम्राज्यं गच्छेति मे सोमन्यग्रोधाभ्यां ब्रूतादिति ब्रूहि इति वाचने । उभयोरालम्भनम् । आस्माकौ स्थः शुक्रस्ते ग्रह्य इति । सोमोपनहनमास्तीर्य न्यग्रोधोपनहनास्तरणम् । सोमानन्तरं मन्त्रेण मानं तद्वत् ।

अश्वतुर्दीर्घः ॥४॥ सहस्रदक्षिणः ॥५॥ मार्गीपक्षयजनीये

उष्णीषेण बन्धनम् । अङ्गुल्या विवरकरणं च मन्त्रेण । उभयोः सोमविक्रयिणे समर्पणम् ।

सोमविक्रयिन् कय्यौ ते सोमन्यग्रोधौ राजानाविति प्रैषः । तौ वै ते क्रीणानीति । भूयो वा अतः सोमन्यग्रोधौ राजानावर्हतः । भूय एवातः सोमन्यग्रोधौ राजानावर्हतो महांस्त्वेवेत्यध्वर्युः । क्रीतौ सोमन्यग्रोधौ राजानौ वयांसि प्रब्रूहीत्यन्ते सोमविक्रयी आह । शुक्रौ वां शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतावमृतेनेति वाचनम् । परमेण पशुना क्रीयेथे इत्यजालम्भवाचने ।

मित्रौ न एतं सुमित्रधौ इत्युभयादानम् । इन्द्रस्योरुमाविशतं दक्षिणमुशन्तावुशन्तं स्योनौ स्योनमित्युभयोरूरावाधानम् । स्वान भ्राजेति जपतः सोमविक्रयिण ईक्षणम् । शिरसि न्यग्रोधस्य च करणम् । अदित्यै सद आसीदतमित्युभयोरासादनम् । सोमन्यग्रोधावालभस्वेति प्रैषः । अस्तभ्नीतां द्यां वृषभो अन्तरिक्षममिमातां वरिमाणं पृथिव्याः । आसीदतं विश्वा भुवनानि सम्राजौ विश्वेत्तानि वरुणस्य व्रतानीति सोममालभ्य वाचनम् ।

सोमन्यग्रोधाभ्यां क्रीताभ्यामनुब्रूहि पर्युह्यमाणाभ्यामनुब्रूहीति चाऽनुवाचनम् । भद्रौ मे स्थः प्रच्यवेथां भुवनस्पती विश्वान्यभि धामानि । मा वां परिपरिणो विदन् मा वां परिपन्थिनो विदन् मा वा वृका अघायवो विदन् । श्येनो भूत्वा परा पत यजमानस्य गृहान् गच्छतं तन्नौ संस्कृतमिति वाचनम् । वरुणस्थ ऋतसदनमासीदतमित्युभयोरासादनम् ।

या वां धामानि हविषा यजन्ति ता वां विश्वा परिभूरस्तु यज्ञम् । गयस्फानौ प्रतरणौ सुवीराववीरहणौ प्रचरतं सोमन्यग्रोधौ दुर्यान् इति वाचनम् । तानूनप्त्रस्य यजमानप्रदानार्थत्वादत्रावधिश्रितस्याज्यस्य क्षत्रियस्य भक्षप्रतिषेधादत्र तानूनप्त्राभावः । सोमन्यग्रोधयोर्द्वयोराप्यायनम् । तन्मन्त्रे चोहो भवति मन्त्रस्येन्द्रप्रकाशकत्वान्न्यग्रोधस्यापि यागार्थत्वेनेन्द्रार्थत्वात् ।

अंशुरंशुर्वां देवौ सोमन्यग्रोधावाप्यायतामिन्द्रायैकधनविदे । आ युवाभ्यामिन्द्रः प्यायतामा युवामिन्द्रायाप्यायेथाम् । आप्याययतमस्मान्त्सखीन्त्सन्या मेधया स्वस्ति वां देवौ सोमन्यग्रोधौ सुत्यामशीयेति । सम्प्रदायपद्धतावयमूहितो नास्ति तस्केनाप्यभिप्रायेणेति न विद्मः । सो-

दीक्षा ॥६॥ तदन्ते पूर्णाहुतिर्गृहेष्विच्छतो वरदक्षिणा ॥७॥ श्वः प्रभृत्यन्वहं पश्चोत्तराणि ॥८॥ अष्टाकपालोऽनुमत्यै ॥९॥ शम्यायाः पश्चाद्धविष्यसन्नं स्रुवे कृत्वा दक्षि-

मन्यग्रोधाभ्यामिति वाऽग्नीषोमप्रणयने । सोमन्यग्रोधयोरुभयोः प्रणयनम् ।

देव सवितरेतौ ते सोमन्यग्रोधौ तौ रक्षस्व मा त्वा दभतामित्युभयो र्दक्षिणेऽनसि सादनम् । एतद्वा देवौ सोमन्यग्रोधौ देवौ देवां उपागा इत्युपस्थाने । आग्निष्टोमिकं क्रतुकरणम् । सवनीयपशुश्च । "वाजपेये राजसूये ग्रहीतव्य" इति वचनाद्यो निधायां ध्वदाभ्यग्रहणम् । चमसेषु सोमोन्नयनकाले न्यग्रोधस्तिभीन् पिष्ट्वा दध्ना सहोन्मृज्य यजमानचमसोन्नयनम् । सोमचमसेषु हूयमानेष्वस्य न्यग्रोधस्य दर्भतृणेनाहं त्वद स्मीति मन्त्रेण होमश्चमसाध्वर्योः ।

ततो यजमानस्य भक्षः । तत्र वाग्देवी जुषाणा न्यग्रोधस्य तृप्यत्वित्यूहः । चमसोन्नयनकाले एव वा न्यग्रोधस्तिभीनाहृत्य पिष्ट्वा दध्नोन्मर्दनादि कार्यम् । नाधस्तनाः पदार्था न्यग्रोधस्य कार्याः । सहस्रं गावो दक्षिणा । हिरण्यवाससोरत्र दक्षिणामध्ये दानाभावाद्दक्षिणाहोमे वासो हिरण्ययोर्निधानाभावः । अश्वदानाभावादयं न इत्याहुतेरप्यभावः । तिस्रोऽनूबन्ध्याः । त्रैधातव्युदवसानीया । एवमष्टम्यां पवित्रस्य समाप्तिः । ततः फाल्गुनशुक्लनवम्यां गृहेष्वेव यजमानेच्छया पूर्णाहुतिहोमः ।

तत्राध्वर्युः प्रथमं पूर्णाहुत्यर्थमाहवनीयमुद्धरति । चतुरासनम् । तूष्णीं ब्रह्मवरणम् । ब्रह्मयजमानयोर्दक्षिणतस्तूष्णीमुपवेशनम् । अध्वर्योराज्यसंस्कारः । स्रुक्स्रुवसम्मार्गः । स्रुक्पूरणपर्यन्तं स्रुवेणाज्यग्रहणम् । समिधमादाय स्रुवं चादायाहवनीयसमीपे गत्वोपविश्य परिस्तरणसमिदाधानपूर्वकं स्वाहेति जुहोति । इदमग्नये । इदं प्रजापतये इति हरिस्वामिनः ।

ततो यजमानोऽध्वर्यवे वरं ददाति । यजमानेच्छाभावे पूर्णाहुतेरभावः । ततोऽष्टम्यामानुमत्येष्ट्यर्थमाहवनीयदक्षिणाग्नी विहृत्याष्टाकपालोऽनुमत्यै पुरोडाशः कर्तव्यः । तत्रानुमतेष्ट्याऽहमिति वरणे । पात्रासादने अष्टौ कपालानि । ग्रहणे अनुमत्यै जुष्टमित्यादि ।

अत्र चक्षुषे त्वेति पिष्टेक्षणान्ते तण्डुलरूपं पिष्टरूपं वा यद्धविष्यं पेषणे क्रियमाणे शम्यायाः पश्चात्कृष्णाजिनस्योपरि पतितं भवति तत्खादिरे स्रुवे कृत्वा दक्षिणाग्नेरुल्मुकमादाय दक्षिणस्यां दिशि गत्वा स्वय-

णाग्न्युल्मुकमादाय दक्षिणा गत्वा स्वयं प्रदीर्णे इरिणे वाऽग्नौ जुहोत्येष ते निर्ऋत इति ॥१०॥ अनपेक्षमेत्यानुमतस्य संवपनादि करोति ॥११॥ वासो देयम् ॥१२॥ हिरण्यमाग्नावैष्णवे ॥१३॥ पुनरुत्सृष्टो गौरग्नीषोमीये ॥१४॥ अनड्वान् साण्ड ऐन्द्राग्ने ॥१५॥ गौराग्रयणे ॥१६॥ चातुर्मास्यप्रयोगः फाल्गुन्याम् ॥१७॥ पौर्ण-

---

मेव प्रदीर्णे श्वभ्रप्रदरादौ वा ऊषरे वा तमुल्मुकं स्थापयित्वा परिस्तीर्य समिधमाधायैष ते निर्ऋत इति स्रुवेणैव तद्धविष्यं तण्डुलपिष्टादिकं जुहोति । इदं निर्ऋतये । ततो ब्रह्मयजमानाध्वर्यवो होमदेशस्य पश्चादवलोकनमकुर्वन्त एवागच्छन्ति । उदकालम्भः ।

तत आनुमतस्य सपवित्रायां पात्र्यां संवपनादि करोति । अनुमतयेऽनु० । अनुमतिं यज । चतुर्द्धाकरणादि सर्वम् । वासो दक्षिणा । तत्र वासोऽस्यूर्जमिति । एकादश्यां पुनरुद्धृत्याग्नावैष्णव एकादशकपालः पुरोडाशः कर्मापवर्गान्तः । हिरण्यं दक्षिणा । द्वादश्यामग्नीषोमीय एकादशकपालः उद्धरणादि कर्मापवर्गान्तः । पुनरुत्सृष्टो गौर्दक्षिणा । त्रयोदश्यामैन्द्राग्नो द्वादशपालः । आण्डसहितोऽनड्वान् दक्षिणा ।

चतुर्दश्यां राजसूयिकमपूर्वं यवाग्रयणं नित्ययवाग्रयणवत् त्रिहविष्कम् । तत्र प्रथमजो गौर्दक्षिणा । फाल्गुन्यां पौर्णमास्यां राजसूयिकानामपूर्वाणां कर्मणां प्रारम्भः । तत्र फाल्गुन्यां वैश्वदेवं पर्व कृत्वा प्रतिपत्प्रभृत्यमावास्यापर्यन्तं कृष्णपक्षे प्रत्यहं पौर्णमासेष्टिरपूर्वा राजसूयिकी नित्या पौर्णमासेष्टिवत् । अमावास्यानन्तरं प्रतिपत्प्रभृति पौर्णमासीपर्यन्तं समग्रेऽपि शुक्लपक्षे प्रत्यहं पिण्डपितृयज्ञवर्जिता राजसूयिकी आमावास्येष्टिः प्रकृतिवत् ।

प्रतिपदि प्रथमं राजसूयिकीमिष्टिं कृत्वा पश्चान्नित्यदर्शपौर्णमासेष्टिः कार्या । नित्यः पिण्डपितृयज्ञो राजसूयदर्शार्थ एवोद्धृते दक्षिणाग्नौ भवति । एवं शुनासीरीयपर्यन्तं कृष्णपक्षे पौर्णमासयागः । शुक्लपक्षे चामावास्येन यागः । आषाढ्यां वरुणप्रघासाः । कार्तिक्यां साकमेधाः ।

तत्र चतुर्दश्यां राजसूयिकं दर्शं समाप्यानीकवत्यादि । पञ्चदश्यां त्रैयम्बकान्तं कृत्वा राजसूयिकं दर्शं कुर्यात् । फाल्गुनशुक्लप्रतिपदि शुनासीरीयमित्युत्सृष्टचातुर्मास्यस्य ।

पुनः पुनश्चातुर्मास्यानि प्रयुञ्जानस्य नित्यदर्शपूर्णमासवन्नित्यान्यपि

**मासेन कृष्णपक्षानेत्यामावास्येन शुक्लाना शुनासीरीयात् ॥१८॥ पवित्रदीक्षास्थाने शुनासीरीयम् ॥१९॥ पञ्चवातीयमाहवनीयं प्रतिदिशं व्युह्य मध्ये च स्रुवेणाग्निषु जुहोत्यग्निनेत्रेभ्य इति प्रतिमन्त्रम् ॥२०॥ उत्तराः**

---

चातुर्मास्यानि भवन्ति । पूर्वं राजसूयिकानि पश्चान्नित्यानि । तत्र राजसूयारम्भतः प्रथममारब्धानां नित्यानां चातुर्मास्यानां शुनासीरीयं पर्व फाल्गुन्यां पौर्णमास्यां प्रथमं कृत्वा ततो राजसूयिकं वैश्वदेवं कुर्यात । प्रतिपदि च प्रथमं नित्यं वैश्वदेवं कृत्वा ततो राजसूयिकं पौर्णमासम् । ततो नित्यम् ।

आषाढशुक्लचतुर्दश्यां राजसूयिकमामावास्यं समाप्य राजसूयिकं करम्भपात्रकरणम् । पौर्णमास्यां राजसूयिकान् वरुणप्रघासान् समाप्य पुनरुद्धृत्य राजसूयिकं दर्शं कुर्यात् । ततो नित्यवरुणप्रघासानां समारोपादिकरम्भपात्रकरणान्तम् । प्रातः प्रतिपदि प्रथमं नित्यान्वरुणप्रघासान् समाप्य ततो राजसूयिकं पौर्णमासम् । ततो नित्यम् ।

कार्तिकशुक्लचतुर्दश्यां राजसूयिकं दर्शं कृत्वा राजसूयिकसाकमेधानामनीकवत्यादि गृहमेधीयान्तम् । प्रातः पौर्णमास्यां दर्विहोमादि त्र्यम्बकान्तं राजसूयिकं समाप्य राजसूयिकं दर्शं कुर्यात् । ततः समारोपादि नित्यं साकमेधानामनीकवत्यादि गृहमेधीयान्तम् । प्रतिपदि च दर्विहोमादि त्र्यम्बकान्तं नित्यं कृत्वा प्रथमं राजसूयिकं पौर्णमासम् । ततो नित्यम् ।

ततः पवित्रदीक्षास्थाने फाल्गुनशुक्लप्रतिपद्येव राजसूयिकं शुनासीरीयम् । नित्यं चागामिन्यां फाल्गुन्यां पौर्णमास्यामेव भविष्यति । अतः फाल्गुनशुक्लप्रतिपदि पवित्रदीक्षास्थाने राजसूयिकं शुनासीरीयं

कृत्वा कस्मिंश्चिद्दिने पञ्चवातीयहोमं कुर्यात् । तत्र प्रथमं भूसंस्कारपूर्वकं पञ्चवातीयार्थमित्याहवनीयमुद्धृत्य तस्य पञ्चधा प्रतिदिशं व्यूहनं भूमिलग्नस्यैव प्रेरणं कुर्यात् खरमध्य एव । आहवनीयं पञ्चधा विभज्य प्रथमं पुरस्तात् प्रेरणम् । ततो दक्षिणतः । ततः पश्चात् । तत उत्तरतः । मध्ये चास्यैव ।

ततश्चतुरासनम् । तूष्णीं ब्रह्मवरणाद्युपवेशनान्तम् । तत आज्यं संस्कृत्य स्रुवं संमृज्य तन्त्रेणाहवनीयं परिस्तीर्य प्रत्येकं समिदाधानपूर्वकं स्रुवेणाज्यं प्रथमं पूर्वार्द्धेऽग्नौ जुहोति अग्निनेत्रेभ्य इति । अग्निनेत्रेभ्यो देवेभ्यः

**समस्य ये देवा इति प्रतिमन्त्रम् ॥२१॥ त्रियुक्तोऽश्वरथो दक्षिणा ॥२२॥ व्याधितस्याप्येवम् ॥२३॥ इन्द्रतुरीयम् ॥२४॥ आग्नेयः ॥२५॥ वारुणो यवमयश्चरुः ॥२६॥ अन्यत्रापि ॥२७॥ रौद्रश्च गावेधुकः ॥२८॥ वहिनी दध्यै-**

---

पुरःसद्भ्यः । ततो दक्षिणतो व्यूढे यमनेत्रेभ्य इति । ततः पश्चाद् व्यूढे विश्वेदेवनेत्रेभ्य इति । तत उदक्व्यूढे मित्रावरुणनेत्रेभ्यो देवेभ्य उत्तरासद्भ्यः स्वाहेति । मरुन्नेत्रेभ्यो देवेभ्य उत्तरासद्भ्य इति वा मन्त्रे विकल्पः । ततो मध्ये जुहोति सोमनेत्रेभ्य इति । इदंशब्दयुक्ताः स्वाहाकारवर्जिताः सर्वत्र त्यागाः ।

ततः सर्वानग्नीन्मध्ये समस्यैकां समिधमादाय स्रुवेण पञ्चाहुतीर्जुहोति । ये देवा अग्निनेत्रा इति प्रथमम् । ये देवा यमनेत्रा इति द्वितीयाम् । ये देवा विश्वदेवनेत्रा इति तृतीयाम् । ये देवा मित्रावरुणनेत्रा उत्तरासदस्तेभ्य इति चतुर्थीम् । अत्रैव ये देवा मरुन्नेत्रा उत्तरासदस्तेभ्य इति वा मन्त्रविकल्पः । ये देवाः सोमनेत्रा इति पञ्चमीम् । पूर्ववत्त्यागाः । त्रिभिरश्वैर्युक्तो रथोऽस्य पञ्चवातीयहोमस्य दक्षिणा ।

अन्योऽपि योऽतिशयेन व्याधिपीडितो भवति तस्य तद्व्याध्युपशान्त्यर्थं मातृश्राद्धपूर्वकमेतत्पञ्चवातीयं भवति । ततः श्वोभूते इन्द्रतुरीयसंज्ञं कर्म भवति । तत्रोद्धरणादिकर्मापवर्गान्ते विशेषः । चत्वारि हवींषि । आग्नेयोऽष्टाकपालः पुरोडाशः । वारुणो यवमयश्चरुः । रौद्रो गावेधुकश्चरुः । वहिन्या दध्यैन्द्रं चतुर्थं हविः । या स्त्रीगवी रथं वहति सा वहिनी ।

तत्रेन्द्रतुरीयार्थमित्युद्धरणम् । अग्न्यन्वाधानम् । शाखाच्छेदः सन्नमनम् । वहिन्या वत्सस्यापाकरणम् । ततः शाखया वहिन्या उपस्पर्शनम् । देवो वः सविता० आप्यायस्वाघ्न्ये इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माऽघशꣳसो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरिति । यजमानस्य पशून् पाहीति । ततः शाखापरिवासनम् । मन्त्रेणोपवेषकरणम् । पवित्रबन्धनम् । उपसृष्टाप्रैषः । स्थाल्यादानम् । अधिश्रयणम् । उपरि पवित्रबन्धनम् । एकस्या वहिन्या दोहनादि परिक्षालननिनयनान्तम् । ततः सोदकेन मृन्मयेनापिधानम् ।

ततः षडासनादि । इन्द्रतुरीयेणाहं यक्ष्ये इति वरणम् । व्रतग्रहणम् । प्रणीताप्रणयनम् । पात्रासादने अष्टौ कपालानि । स्थालीद्वयम् । हविर्द्रव्यम् । व्रीहयो यवा गवेधुकाश्च । शाखोपवेषः । पुरोडाशपात्र्येका । मेक्षणं च । सा वहिन्येव दक्षिणा । ग्रहणे अग्नये जुष्टम् । वरुणाय जुष्टम् । रुद्राय जुष्टम् इति । यवमयपुरोडाशपक्षे कणान्ते विभज्यालम्भः ।

न्द्रम् ॥२९॥ ॥ १ ॥

**अपामार्गहोमः ॥१॥ स्रुवे पालाशे वैकङ्कते वाऽपामार्गतण्डुलान् कृत्वा ॥२॥ त्र्यम्बकवद्दिगग्नी ॥३॥ प्राची वा ॥४॥ अग्ने सहस्वेत्युल्मुकादानम् ॥५॥ देवस्य त्वेति**

दृभ्नश्च प्राणदानम् । हविःप्रचारादि सुगमम् ।

चतुर्द्धाकरणं सर्वेषां दधिवर्जितम् । सह शाखया प्रस्तरानुप्रहरणम् । परिधिभिः सहोपवेषहोमः । दक्षिणालम्भने वह्निनो गौरसीति । एवं कर्मापवर्गान्तं कर्तव्यम् ।

इति पञ्चदशस्य प्रथमा कण्डिका ॥ १ ॥

ततः श्वोभूते अपामार्गहोमे जुहोतिधर्मेण तूष्णीं कर्मापवर्गान्तः । तत्र दक्षिणाग्नेरुद्धरणम् । तत्रैवाग्न्यन्वाधानम् । ब्रह्मवरणम् । ब्रह्मण उपवेशनम् । प्रणीताप्रणयनम् । दक्षिणाग्निमुत्तरेण निधानम् । तस्यैव परिस्तरणम् ।

पात्रासादनम् । शूर्पाग्निहोत्रहवणि । स्फ्यः कर्परम् । शम्याद्दृषदुपलम् । पात्री अपामार्गफलानि । पवित्रच्छेदनानि पवित्रे, स्थाली आज्यं च । वेदश्च । अन्वाहार्यो दक्षिणार्थः । उदकतृणमश्मिः । इध्मद्वयम् । बर्हिः । स्रवो जुहूः । पालाशो वैकङ्कतो वा द्वितीयः स्रुवः । ध्रुवा योक्त्रम् । यूनकुशाः । परिधयः । पूर्णपात्रं कर्मापवर्गो वा । एतावन्त आसाद्यन्ते । अन्यस्योपवेषादेरभावः । स्फ्योपहितपात्रीकरणादि । अपामार्गफलानां चतुर्मुष्टिकस्य ग्रहणं सादनान्तम् ।

ततः पवित्रच्छेदनादि पात्रप्रोक्षणान्तम् । भर्जनोपधानम् । तत्राङ्गाराणां प्राचः करणम् । आमभृष्टान् कृत्वोद्वासनम् । ततो भृष्टान्यपामार्गफलानि हस्ताभ्यां मर्दयित्वा तण्डुलनिष्पादनम् । कुक्कुटाहननम् । तुषनिरसनम् । आज्यनिर्वापो वेदबन्धः । तण्डुलेक्षणम् । आज्याधिश्रयणम् । पर्यग्निकरणम् । अन्वाहार्याधिश्रयणम् । ततोऽग्ने सहस्वेति मन्त्रेण दक्षिणाग्न्युल्मुकमादायोदग्गमनं प्राग्वा । उदग्गमनपक्षेऽपि वितानं प्रागेव ।

परिसमूहनादि कृत्वोल्मुकस्थापनम् । ततो वेदिमानादीध्मबर्हिःसादनान्तम् । ततः स्रुवजुहूवैकङ्कतस्रुवध्रुवासंमार्गः । ततः पत्नीसन्नहनादि ध्रुवासादनान्तम् । ततो होमार्थे स्रुवे उपस्तारः । तण्डुलावापः ।

जुहोति ॥६॥ रक्षसां त्वेति स्रुवमस्यति तां दिशं यस्यां जुहोत्यवधिष्म रक्ष इत्यागन्त्यनपेक्षम् ॥७॥ त्रिषंयुक्तेषु ॥८॥ आग्नावैष्णव ऐन्द्रावैष्णवो वैष्णवो वामनो दक्षिणा ॥९॥ लिङ्गग्रहणे गौः सर्वत्र ॥१०॥ आग्नापौष्ण ऐन्द्रापौष्णः पौष्णः श्यामो दक्षिणा ॥११॥ अग्नीषोमीय ऐन्द्रासौम्यः सौम्यो बभ्रुर्दक्षिणा ॥१२॥ एकादशकपालः प्रथमः प्रथमश्चरव इतरे ॥१३॥ वैष्णवास्त्रिकपालो वा ॥१४॥ श्वो वैश्वानरो द्वादशकपालो वारुणश्च-

---

प्राणदानम् । आज्यस्थाल्यासादनम् । स्रुवस्थानां तण्डुलानां प्रस्तरैकदेश एवासादनम् । सर्वालम्भः आत्मालम्भः उदकालम्भः आहवनीयोपवाजनाद्याज्यभागान्ते देवस्य० भ्याम् । उपांशु ओर्वीयेणेति मन्त्रेण तेनैव स्रुवेण जुहोति ।

ततः पवित्रप्रतिपत्त्यादिकर्मापवर्गान्तम् । ततो यदि प्राच्यां दिशि गत्वा होमः कृतो भवति तदा रक्षसां त्वेति मन्त्रेण प्राच्यां दिशि स्रुवं निरस्यति । यदि उदीच्यां दिशि गत्वा हुतं तदोदीच्यां दिशि स्रुवं निरस्यति । ततोऽपां स्पर्शनम् । ततोऽवधिष्म रक्ष इति मन्त्रेण सर्वे ऽनपेक्षं प्रत्यागच्छन्ति । अपां स्पर्शः ।

राजसूययाजिनोऽन्योपि यः परैरभिचर्यमाणो भवति स यजनीयेऽहनि तत्कृतस्याभिचारस्य तमेव प्रतिगमनाय इदं कर्म करोति । तत्र मातृकाश्राद्धमन्वारम्भणीयां च कृत्वा दक्षिणाग्निमुद्धृत्य पूर्ववद् द्रव्यं निष्पाद्य दक्षिणाग्न्युल्मुकमादाय यस्यां दिश्यभिचारकर्ता भवति तां दिशं गृहीत्वा पूर्ववज्जुहोति । इयांस्तु विशेषः—

तत्र होममन्त्रेण स्रुवप्रासनमन्त्रे आगमनमन्त्रे चाभिचारकर्तुर्नामादिशति । होममन्त्रे चाभिचारकर्तुर्नामादिशति । होममन्त्रे हतोऽमुकः स्वाहेति । स्रुवप्रासने अमुकस्य वधायेति । आगमने अवधिष्मामुकमिति । ततस्मिन्नेव फाल्गुनशुक्लप्रतिपद्दिने त्रिषंयुक्ताख्यां प्रथमामिष्टिं त्रिहविष्कां कुर्यात् । तत्राग्नावैष्णव एकादशकपालः प्रथमं हविः । तत ऐन्द्रावैष्णवश्चरुर्द्वितीयम् । वैष्णवश्चरुस्त्रिकपालः पुरोडाशो वा तृतीयम् । वामनो गौर्दक्षिणा । अन्यत्सर्वं प्रकृतिवत् । प्रथमयोश्चतुर्द्धाकरणाद्यभावः ।

ततः श्वोभूते द्वितीयां त्रिषंयुक्तसंज्ञां त्रिहविष्कामिष्टिं निर्वपेत् ।

**कतन्त्रे ॥१५॥ श्वो वैकः ॥१६॥ ऋषभः पूर्वस्य दाक्षिणा कृष्णं वास उत्तरस्याभावेऽकृष्णम् ॥१७॥ २ ॥**

**द्वादशोत्तराणि रत्नहवीꣳषि ॥१॥ प्रतिगृहमेकैकꣳ श्वः श्वः ॥२॥ समारूढनिर्मथितेऽग्नयेऽनीकवते सेनान्यः ॥३॥**

---

तत्राग्नापौष्णः एकादशकपालः पुरोडाशः प्रथमं हविः । ऐन्द्रापौष्णश्चरु-र्द्वितीयम् । पौष्णश्चरुस्तृतीयम् । सोऽपिष्टानां तण्डुलानां कार्यः । श्यामो गौर्दक्षिणा । आद्ययोश्चतुर्द्धाकरणाद्यभावः । अन्यत् प्रकृतिवत् ।

ततः श्वोभूते तृतीयां त्रिषंयुक्तसंज्ञां त्रिहविष्कामिष्टिं कुर्यात् । तत्राग्नीषोमीय एकादशकपालः । ऐन्द्रासौम्यश्चरुः । एतानि त्रीणि हवींषि । अत्र बभ्रुर्गौर्दक्षिणा । आद्ययोश्चतुर्द्धाकरणाद्यभावः । अन्यत् प्रकृतिवत् । ततः श्वोभूते चतुर्थ्यां द्विहविष्का इष्टिः । वैश्वानरो द्वादशकपालः । वारुणो यवमयश्चरुः । समानतन्त्राण्येतानि हवींषि । अन्वाहार्यो दक्षिणा । चतुर्द्धाकरणादि सर्वमन्यत् प्रकृतिवत् ।

अथवा पूर्वदिने केवलो वैश्वानरः । तत्र ऋषभो दक्षिणाऽस्मिन् पक्षे इति विशेषः । श्वोभूते वारुणो यवमयश्चरुः । तत्र कृष्णं वासो दक्षिणा । कृष्णवस्त्राभावे अकृष्णमपि दक्षिणा । अत्र हरिस्वामिमिश्रयाणामपि त्रिषंयुक्तानां फाल्गुनशुक्लद्वितीयायामेवानुष्ठानमुक्तम् । वारुणवैश्वानरयोस्तृतीयायां समानतन्त्रपक्षे । पक्षान्तरे तु तृतीयायां वैश्वानरः । चतुर्थ्यां वारुण इति । तस्मिन्नेव दिने रत्नहविषामारम्भः । समानतन्त्र पक्षे तु तृतीयायाम् ।

इति पञ्चदशस्य द्वितीया कण्डिका ॥ २ ॥

---

ततो द्वादश रत्नहवींषि भवन्ति । तानि च फाल्गुनशुक्लतृतीयाप्रभृति चतुर्थीप्रभृति वा भवन्तीति हरिस्वामिनः । तेषाम्मध्ये वक्ष्यमाणानां सेनापत्यादिगृहाणां मध्ये प्रतिगृहमेकैकस्यानुष्ठानं क्रियते । तत्र प्रथमे एकरत्नहविषि अरण्योरग्न्योः समारोपः । मन्थनम् । तत्र सेनान्यः सेनापतेर्गृहे अग्नयेऽनीकवते अष्टाकपालः पुरोडाशो हिरण्यदक्षिणं प्रथमं रत्नहविः कर्तव्यम् । तत्रोद्धरणादिकर्मापवर्गान्तं प्रकृतिवत् । ततः श्वोभूते पुरोहितस्य गुरोर्गृहे गत्वा बार्हस्पत्यश्चरुः । शितिपृष्ठो गौर्दक्षिणा । शितिपृष्ठः श्वेतपृष्ठः ।

ततः श्वोभूते यजमानगृहे एवैन्द्र एकादशकपालः पुरोडाशः । ऋ-

**बार्हस्पत्यश्चरुः पुरोहितस्य ॥४॥ ऐन्द्रो यजमानस्य ॥५॥ आदित्यै महिष्याः ॥६॥ वारुणः सूतस्य ॥७॥ मारुतो ग्रामण्यः ॥८॥ सावित्रः क्षत्तुः ॥९॥ आश्विनः सङ्ग्रहीतुः ॥१०॥ पौष्णो भागदुघस्य ॥११॥ रौद्रो यजमानस्या-**

---

षभो दक्षिणा । ततः श्वोभूते यजमानस्य प्रथमपरिणीतायाः पत्न्या गृहे अदित्यै चरुः । धेनुर्दक्षिणा । श्वः सूतस्याश्वसारथेर्गृहे वारुणो यवमयश्चरुः । अश्वो दक्षिणा । सूतोऽश्वपोषक इति हरिस्वामिनः । श्वो ग्रामण्यो गृहे मारुतः सप्तकपालः पुरोडाशस्तस्य पृषन् विचित्रवर्णो गौर्दक्षिणा । ग्रामणीर्महत्तरो ग्रामनेता । श्वः क्षत्तुर्गृहे सावित्रो द्वादशकपालोऽष्टाकपालो वा पुरोडाशः । श्येनोऽनड्वान् दक्षिणा । श्येतो रक्तः । श्वेत इति माधवाचार्याः । क्षत्ता प्रतीहारः । दूतो वा मन्त्री वा ।

श्वः संग्रहीतुर्गृहे आश्विनो द्विकपालः । यमौ गावौ दक्षिणा । तौ च सह प्रसूतौ अनुक्रमप्रसूतौ वा एकमातृजौ । संग्रहीता सारथिः । श्वो भागदुघस्य गृहे पौष्णश्चरुः । श्यामो गौर्दक्षिणा । शुक्लकृष्णरोमा श्यामः । भागदुघो भोजयिता परिवेषकः । श्वः अक्षावापस्य गृहात् गोविकर्तस्य गृहाच्च गवेधुकामानीय यजमानस्य गृहे रौद्रं गावेधुकं चरुं निर्वपेत् । अक्षावापेऽक्षनेता । अक्षगोप्ता वा । द्यूतपतिर्वा । सभादिषूतां गां विकृन्तति इति गोविकर्तः । कर्षुक इत्यपरे । मृगयासहायभूतो गोहिंसको व्याध इति माधवाचार्याः । अयं त्रिदक्षिणः । शितिबाहुः कृष्णबाहुः, शितिवालः कृष्णपुच्छः, श्वेतबाहुः श्वेतपुच्छ इति हरिस्वामिनः । एतयोरन्यतरद्दक्षिणा । तथा नखरोऽसिः कोशरहितः खड्गः । अथवा नखरस्तीक्ष्णाग्रः कट्टारिकारूपो न मण्डलाग्रः । तथा वालदामबद्धमक्षावपणम् । बालमयेन दाम्ना बद्धमक्षावपणं गोणिकारूपम् तत्र गौरस्यक्षावपणमस्यूर्जं मयि धेहीति ।

श्वः पालकस्य दूतस्य गृहे गत्वा आहवनीयमुद्धृत्य तूष्णीं ब्रह्माणं वृत्वोपवेश्य चाज्यं संस्कृत्य चतुर्गृहीत्वाऽध्वने देवतायै जुषाणोऽध्वनाज्यस्य वेतु स्वाहेत्याहवनीये परिस्तरणसमित्पूर्वकं जुहोति । इदमध्वने इति । तस्य दक्षिणा स्युदणवेष्टितं धनुः । स्युदणः स्नायुः । अजगरचर्म वा । तेन वेष्टितम् । तथा तिस्र इषुपूर्णाश्चर्मतूण्यः चर्मभस्त्राः । रक्तवर्ण उष्णीषश्च । उष्णीषः शिरोवेष्टनम् । धनुश्चर्म तूण्युष्णीषमस्यूर्जमिति ।

श्वः परिवृत्त्याः पुत्रपतिरहितायाः गृहे कृष्णानां व्रीहीणां नखैर्वितुषी

क्षावापगोविकर्त्तगृहेभ्यो गवेधुकानाम् ॥१२॥ चतुर्गृहीतं जुषाणोऽध्वाज्यस्य वेत्त्विति दूतस्य ॥१३॥ नैर्ऋतः परिवृत्त्यै कृष्णव्रीहीणां नखनिर्भिन्नानां दर्विहोम एष ते निर्ऋत इति जुहोति वषट्कृते वा ॥ १४ ॥ यथासंख्यं दक्षिणा हिरण्यं शितिपृष्ठर्षभो धेनुरश्वः पृषच्छ्येतोऽनड्वान्यमावभावेऽनुपूर्वजौ श्यामस्त्रिदक्षिणो रौद्रः शितिबाहुशितिबालयोरन्यतरः ॥१५॥ असिर्नखरः ॥१६॥ बालदामबद्धमक्षावपणम् ॥१७॥ उत्तरस्याऽप्युक्ष्णवेष्टितं धनुः ॥ १८ ॥ चर्मतूण्यः सेषुकाः ॥ १९ ॥ लोहित उष्णीषः ॥२०॥ कृष्णा वत्सतर्य्यपहतोत्तमस्य ॥ २१ ॥ परिवृत्तीं चाह माऽमेऽथेशायां वात्सीदिति ॥ २२ ॥ सौमारौद्रोऽतश्चरुः शुक्लापयसि शुक्लवत्सायाः ॥२३॥ सैव दक्षिणा ॥ २४ ॥ अनूचानोऽप्ययशा यजेत ॥ २५ ॥ किलासाबाधं तु ॥ २६ ॥ मैत्राबार्हस्पत्यश्चरुः ॥ २७ ॥

---

कृतानां नैर्ऋतं चरुं निर्वपति । अयं जुहोतिर्वा यजतिर्वा । उभयथा प्रधानहोमे मन्त्र एष ते भागस्तं जुषस्व स्वाहेति । इदं नैर्ऋत्यै । दक्षिणा कृष्णा गौर्व्याधिता वृद्धा च । जुहोतिपक्षे तद्धर्मा उक्ताः । इष्टिपक्षे प्रकृतिवत् । अस्य कर्मापवर्गान्ते यजमानः परिवृत्तिं प्रत्याह । मा मे देशमवात्सीरिति । ततः सा एवं यजमानोक्ता ब्राह्मणगृहे गत्वा वसति । एवं रत्नहविषामेकैकमन्वहं कृतम् । तत्र प्रथम एव समारोपो मन्थनं च नेतरेष्विति संप्रदायः ।

ततः सौमारौद्रश्चरुर्भवति। फाल्गुन्यां यजनीयेऽहनीति हरिस्वामिनः। स चरुः शुक्लवर्णायाः शुक्लवर्णवत्साया गोः पयसि श्रप्यते । तां प्रथममेव दुग्ध्वा तद्दुग्धस्योपसर्जन्यः कार्याः । सं पय ओषधीभिरिति च विशेषः । सैव शुक्ला शुक्लवत्सा गौर्दक्षिणा । तथा योऽनूचानोऽपि अर्थतो ग्रन्थतश्च वेदमन्येभ्यः प्रोक्तवानपि यशः प्राप्तुं योग्योऽपि अयशाः कीर्तिरहितः सोऽपि यशः प्राप्त्यर्थमनेन सौमारौद्रेण चरुणा यजेत । यजनीये श्राद्धान्वारम्भणीयापूर्वकम् । तथा किलासाबाधं तु । किलासा व्याधिविशेषः । श्वित्र इति केचित् । इदं कर्म तस्य बाधकं निवृत्तिकरं भवति ।

**बार्हस्पत्यमधिश्रित्याश्वत्थ्या या स्वयं भग्ना प्राच्युदीची वा शाखा तत्पात्रेणापिदधाति ॥ २८ ॥ विनाटाद्रथपर्यूढान्नवनीतꣳ स्वयं जातमाज्यमासिच्य पात्रे तस्मिन्स्थविष्ठांस्तण्डुलान्मित्रायावपति ॥ २९ ॥ ऊष्मणा शृतो भवति ॥ ३० ॥ अणिष्ठानितरस्मिन्नेकं प्रदानम्**

ततस्तस्मिन्नेवाहनि मैत्राबार्हस्पत्यश्चरुर्भवति । तत्रोद्धरणादौ विशेषः । अश्वत्थस्य या शाखा प्राच्यां दिशि प्रसृता भवत्युदीच्यां वा पुरुषव्यापारं विना वातादिना स्वयमेव भग्ना च । तस्याः शाखाया एकं श्लक्ष्णं चरुस्थाल्या अपिधानयोग्यं खातवच्च ( चमसाकारमित्यापस्तवः ) मैत्रसंज्ञं पात्रं कार्यते । तथा दधि आतच्य विनाटे दृतौ चर्ममय्यामासिच्य रथस्योपरि विनाटं स्थापयित्वा गाढं बद्ध्वा रथं युक्त्वा प्रधावय इति प्रेष्यति । तस्तूर्णं रथं प्रधावयेत् । तेन रथप्रधावनेन दृतौ दध्नो यत्स्वयं नवनीतमुत्पद्यते तदशृतमेव नवनीतरूपमाज्यमुपसर्जनीः कुर्यात् ।

तत्र मैत्राबार्हस्पत्यर्थमित्युद्धरणे । पात्रासादने कपालस्थाने चरुस्थाली मैत्रं पात्रं च । संयवनार्थमुदकं, नवनीतोत्पन्नमातपे स्वयं विलीनं घृतं च । दक्षिणार्थं गौः मेक्षणं च । ग्रहणे मित्राबृहस्पतिभ्यां जुष्टम् । उपसर्जनीद्वयस्याधिश्रयणम । ईक्षणान्ते स्थूलानां सूक्ष्माणां च तण्डुलानां पृथक्करणं, निर्देशः । इदं बृहस्पतेरिति सूक्ष्माणामालम्भः । इदं मित्रस्येति स्थूलानाम् । चरुस्थाल्यां बार्हस्पत्यस्य सूक्ष्मांस्तण्डुलानोप्य त्रिः प्रक्षाल्योदकोपसर्जनीरानीभ्रो निनयति ।

ताः पवित्राभ्यां प्रतिगृह्य बार्हस्पत्यमधिश्रित्य पूर्वोक्तेन मैत्रपात्रेणोखानेनापिधायाज्यास्योपसर्जनीरस्तस्मिन् मैत्रपात्रे सं घृतौषधीभिरित्यासिच्य स्थविष्ठांस्तण्डुलानाज्यमध्ये घर्मोऽसीत्यावपति । ततः पर्यग्निकरणम् । स मैत्रचरुर्मैत्रपात्रस्थ एव घृते ऊष्मणा श्रप्यते । विभज्यालंभनानन्तरं मैत्रतण्डुलानामार्द्रीभावार्थं पयस्तक्रयोर्मध्ये प्रक्षेपः कार्यः । ततो निष्कास्येदानीं मैत्रपात्रे प्रक्षेपः । श्रपणम् । उभयोर्मा भेरित्यालम्भः । अभिघारः प्राणदानं युगपदासादनं च । प्रधानयागेन सह प्रदानम् । तयोरुभयोः सहावद्यन्नाह मित्राबृहस्पतिभ्यामनुब्रूहीति । आश्राव्य मित्राबृहस्पती यज । वषट्कृते होमः । इदं मित्राबृहस्पतिभ्याम् । गौर्दक्षिणा । फाल्गुन्यां नित्यं शुनासीरीयम् । प्रातर्नवं वैश्वदेवपर्व ।

॥ ३१ ॥ गौर्दक्षिणा ॥३२॥ अभिषेचनीयदशपेययोर्दाक्षि-
णोत्तरे देवयजने ॥ ३३ ॥ दक्षिणमभिषेचनीयस्य ॥३४॥
फाल्गुनीपक्षयजनीयेऽभिषेचनीयाय दीक्षते ॥ ३५ ॥ ३
भार्गवो होता ॥ १ ॥ पञ्चापवर्गः ॥ २ ॥ सोमं क्री-
त्वा द्वैधमुपनह्य पर्युह्यैकं ब्रह्मागारे निदधाति ॥ ३ ॥
अग्नीषोमीयस्य पशुपुरोडाशमनु देवसूर्हवींषि निर्व-

फाल्गुनकृष्णपक्षे किमपि कर्म न भवति । ततश्चैत्रशुक्लप्रतिपदि अभिषेचनीयदशपेययोर्युगपदारम्भः । तत्र वरणे अभिषेचनीयदशपेयाभ्यां यक्ष्ये इति विशेषः ॥

इति पञ्चदशस्य तृतीया कण्डिका ॥ ३ ॥

अत्र भृगुगोत्रो ब्राह्मणो होता भवति । एका दीक्षा तिस्र उपसदः । एका सुत्यैव । पञ्चभिरहोभिः समाप्तिर्भवति । फाल्गुनकृष्णप्रतिपद्येवा नयोरारम्भ इति हरिस्वामिनः । फाल्गुनशुक्लप्रतिपद्येवेति छन्दोगसूत्रे । अत्र द्वयोर्देवयजनयोर्जोषणम् । अभिषेचनीयस्य दक्षिणम् । उत्तरं दशपेयस्य । ततः शालाद्वयकरणम् । यूपाहुतिस्तन्त्रेण । ततोऽग्नौ समारोप्य शालां प्रविश्य प्रथमं दक्षिणे स्तंभग्रहणं तत उत्तरे । प्रत्येत्य दक्षिणेऽग्निमन्थनम् । एकशतेन वा पावनम् । सर्वत्र यजमानभागहोमः ।

न्यग्रोधस्य क्रयणादि सर्वपदार्थानुष्ठानपक्षे तस्याप्युपरवदेशे निधानम् । दशपेयार्थं च । पलिवाचकाः शब्दा बहुवचनान्ताः । सोमन्यग्रोधोपनहनान्याहर, सोमन्यग्रोधपर्याणहनान्याहरोष्णीषमाहरेति । सोमविक्रयिणः सकाशाद्धिरण्यग्रहणानन्तरं सोमस्य द्वैधमुपनहनं न्यग्रोधस्य च । यजमानः सर्वान् शिरसि कृत्वा शकटं प्रति गच्छति । आसादने अदित्यै सद आसीदतम् । सोमन्यग्रोधावालभस्वेति प्रैषः । सर्वालम्भनम् । अस्तभ्नन् द्यां वृषभा अन्तरिक्षममिमत वरिमाणं पृथिव्याः । आसीदत विश्वा भुवनानि सम्राजो विश्वेत्तानि वरुणस्य व्रतानि इति वाचनम् ।

सोमन्यग्रोधेभ्यः क्रीतेभ्य इति प्रैषः । सर्वेषामालम्भनम् । दीक्षितस्य भद्रा मे स्थः प्रच्यवध्वं भुवनस्पतयो विश्वान्यभि धामानि । मा वः परिपरिणो विदन् मा वः परिपन्थिनो विदन् मा वो वृका अघायवो विदन् । श्येनो भूत्वा परा पतत यजमानस्य गृहान् गच्छत तन्नौ संस्कृतमिति वाचनम् । शस्योद्धरणान्ते दशपेयार्थस्य सोमस्य न्यग्रोधस्य च ब्रह्मणो-

**पति यजप्रैषाणि ॥ ४ ॥ प्लाशुकानाᳲ सवित्रे सत्यप्रसवाय ॥ ५ ॥ आशूनामग्नये गृहपतये ॥ ६ ॥ उत्तरे चरवः ॥ ७ ॥ श्यामाकः सोमाय वनस्पतये ॥ ८ ॥ नैवारो बृहस्पतये वाचे ॥ ९ ॥ हायनानामिन्द्राय ज्येष्ठाय ॥ १० ॥ रुद्राय पशुपतये ॥ ११ ॥ नाम्बो मित्राय सत्याय ॥ १२ ॥ वरुणाय धर्मपतय इति ॥ १३ ॥ उत्तमेन चरित्वा सविता त्वेत्याह यजमानबाहुं दक्षिणं गृहीत्वा नामाऽस्य गृह्णाति मन्त्रे यथास्थानम् ॥ १४ ॥ मातापित्रोश्च ॥ १५ ॥ यस्याश्च जाते राजा भवति ॥ १६ ॥ देशस्यानवस्थितत्वात् ॥ १७ ॥ पशुपुरोडाश-**

---

निवासगृहे स्थापनम् । अभिषेचनीयार्थस्य तस्योभयस्य आसन्द्यभिमर्शनादि कर्म पवित्रवत् कुर्यात् ॥

अग्नीषोमीयस्य पशुपुरोडाशमनु देवसूहविषां निर्वापः । तत्र पात्रासादनेऽग्नीषोमीयस्य पशुपुरोडाशस्यैकादशकपालानि सवितुः सत्यप्रसवस्याष्टौ द्वादश वा । अग्नेर्गृहपतेरष्टौ, षट् चरुस्थाल्यः, तिस्रः पात्र्यः । मेक्षणं च । प्लाशुकादीनि नानाविधानि हवींषि । तत्र सवित्रे सत्यप्रसवाय प्लाशुकानां व्रीहीणां पुरोडाशो द्वादशकपालोऽष्टाकपालो वा । प्लाशुकाः प्ररूढा व्रीहयः । अग्नये गृहपतये आशूनामष्टाकपालः पुरोडाशः । आशवः शीघ्राः पक्षत्रयपाचिनो व्रीहयः । एतौ द्वौ पुरोडाशौ ।

अथ षट् चरवः । सोमाय वनस्पतये श्यामाकानां चरुः । बृहस्पतये वाचे नैवारश्चरुः । स्वयं जाता व्रीहयो नीवाराः । इन्द्राय ज्येष्ठाय हायनानां चरुः । हायना रक्तशालयः संवत्सरपक्वाः इति माधवाचार्या याज्ञिकाश्च । रुद्राय पशुपतये गवेधुकानां चरुः । मित्राय सत्याय नाम्बानां चरुः । स्वयं जाता व्रीहयो नाम्बाः । वरुणाय धर्मपतये यवानां चरुः ।

नानाबीजधर्मेण नवानामपि आसादनादि परिहरणान्तम् । देवसूहविषां देवतापदान्युपांशु । यजेति प्रैषाः । पशुपुरोडाशयागः प्रेष्यप्रैषः । अत्रोत्तमेन देवसूहविषा वारुणेन प्रचर्याध्वर्युर्यजमानस्य दक्षिणबाहुं स्वहस्तेन गृहीत्वा सविता त्वा सवानामिति कण्डिकाद्वयं जपति । तत्र इमं देवा इत्यस्मिन् मन्त्रे अमुकवर्माणम् अमुकवर्मणः पुत्रम् अमुकिदायाः

तन्त्रं प्राधान्यात् ॥ १८ ॥ इतरेषां वा भूयस्त्वात् ॥१९॥ स्विष्टकृच्चकृतेश्च ॥ २० ॥ इडान्तेऽपो गृह्णाति ॥ २१ ॥ यूपमुत्तरेण नैमित्तिकीरसम्भवात् ॥ २२ ॥ गत्वेतराः पृथक्पात्रेष्वौदुम्बरेषु सारस्वतीः ॥ २३ ॥ अवगाह्यावगाढात्पशोः पुरुषाद्वा पूर्वापरा ऊर्मीः ॥ २४ ॥ स्यन्दमानाः ॥ २५ ॥ प्रतिलोमाः ॥ २६ ॥ अपयतीः ॥ २७ ॥ नदीपतिं मुख्याः ॥ २८ ॥ काष्ठं वोच्छ्रितोढम् ॥ २९ ॥ निवेष्याः ॥ ३० ॥ स्यन्दमानाः स्थावराः प्रत्यातपे ॥३१॥ अन्तरिक्षात्प्रतिगृह्य आतपवर्ष्याः ॥ ३२ ॥ सरस्याः कूप्याः प्रुष्वा मधु गोरुल्ब्याः पयो घृतम् ॥ ३३ ॥ सरस्वतीर्गृह्णात्यपो देवा इति ॥ ३४ ॥ जुहोत्युत्तरासु च

---

पुत्रम् इति क्रमेण सुन्वतस्तत्पितुस्तन्मातुः स्वनाम गृहीत्वा अस्यै कौरव्यै विशे पाञ्चाल्यै विशे । एष वः कुरवो राजा, पाञ्चालो राजा । अङ्गाः वङ्गाः सुह्माः पुण्ड्राः इत्यादिदेशस्य नाम गृहीत्वा च सोमोऽस्माकमिति मन्त्रशेषं पठेत् ।

ततोऽग्नये स्विष्टकृते प्रेष्येति प्रषः सगुणः स्विष्टकृन्माध्यन्दिनानाम् । काण्वानां तु यजप्रैष इति विशेषः । ततः प्राशित्रादि । पशुपुरोडाशवर्जं सर्वेषां चतुर्द्धाकरणादि भागपरिहरणान्तम् । ततोऽभिषेकार्थं नानाविधान्युदकानि पृथक् पृथगौदुम्बरेषु पात्रेषु गृह्णाति । तत्र वक्ष्यमाणानामपां मध्ये या आपः सन्निकृष्टा न भवन्ति याश्च नैमित्तिक्यः प्रुष्वागोरुल्ब्या आतपवृष्टयाद्याः सारस्वत्यश्च यदि दूरे सरस्वती ताः प्रथममेव संपाद्येदानीं यूपस्योत्तरतस्तासां मन्त्रेणौदुम्बरेषु पात्रेषु ग्रहणं कर्तव्यम् । याश्च संनिकृष्टा सुलभा भवन्ति तासां स्वस्थानस्थानामेव तत्र गत्वा ग्रहणं कार्यम् ।

तत्र प्रथममपो देवा मधुमतीरिति मन्त्रेण सारस्वतीनामपामौदुम्बरेण ग्रहणम् । सुगुप्ते देशे तावन्निधानम् । ततोऽध्वर्युः पूर्णाहुतिवदाज्यं संस्कृत्य चतुर्गृहीतं गृहीत्वा तडागादिस्थमुदकं प्रति गत्वा स्वयमप्युदके प्रविश्य तत उदकमध्ये पुरुषं पशुं वा प्रवेशयति । तत्र प्रवेश्यमाने पुरुषे पशौ वा यौ पूर्वापरा ऊर्मी कल्लोलौ जले उत्पद्येते तयोर्मध्ये पूर्वस्मिन् कल्लोले वृष्ण ऊर्मिरसीति स्वाहाकारान्तेन चतुर्गृहीतं हुत्वौदुम्बरेण पात्रेण

**सुगृहीतानि वृष्ण ऊर्म्यादिभिः स्वाहाकारान्तैः पूर्वैः पूर्वैः प्रतिमन्त्रमुत्तरैरुत्तरैर्गृह्णाति ॥ ३९ ॥ आपः स्वराजइत्य-**

द्वितीयेन स्वाहाकाररहितेन वृष्ण ऊर्मिरित्यनेनैव तं पूर्वं कल्लोलं गृह्णाति।

तन्निधाय पुनश्चतुर्गृहीतं गृहीत्वा अपरस्मिन् कल्लोले स्वाहान्तेन वृषसेनोऽसीत्यनेन हुत्वा द्वितीयेन स्वाहाकाररहितेन वृषसेनोऽसीत्यनेनैवमपरं गृह्णीयात्। एवं सर्वेषु मन्त्रेषु ज्ञेयम्। स्वाहान्तेन चतुर्गृहीतहोमः। द्वितीयेन स्वाहाकाररहितेनापां ग्रहणमिति मन्त्रेण चतुर्गृहीतं गृहीत्वा होतव्यम्। प्रतिहोमं चापां ग्रहणं कर्तव्यम्।

ततः स्यन्दमानानां नद्यादौ वहन्तीनामपामर्थेत स्थेति। ततः स्यन्दमानामेव या आप. प्रतिलोमाः प्रत्यागच्छन्ति तासामोजस्वती स्थेति होमग्रहणे। तत्र आपः परिवाहिणीरित्यपयती रपो गृह्णातीति इरिस्यामिनः। ततो ऽपां पतिरसीति समुद्रस्योर्ध्वमुच्छलन्तीनामपां होमपूर्वं ग्रहणम्। अथवा याभिः समुद्राभिरद्भिः प्रथमं काष्ठमूर्द्धीकृत्य गृहीतं ततस्तदेव काष्ठं तिर्यक् पातयित्वोढं तासां समुद्राणामपां ग्रहणम्। ततो नद्यादौ स्यन्दमानानां वहन्तीनामपां याः स्थावराः गह्वरह्रदाद्यौ स्थिराः उपरिष्टात् सूर्यातपेन ताप्यमानाः तासां सूर्यत्वचस स्थेति मन्त्राभ्यां होमग्रहणे।

ततो याः सातपे सूर्ये वर्षन्ति ता अभूमिपतिता एवान्तरिक्षात् प्रतिगृह्येदानीं यूपमुत्तरेण सूर्यवर्चस इति मन्त्राभ्यां तासां होमग्रहणे। ततो मान्दा स्थेति निवेष्याणां तडागसम्बन्धिनीनामपां होमपूर्वं ग्रहणम्। ततो व्रजक्षित स्थेति मन्त्राभ्यां कूपसम्बन्धिनीनामपां होमग्रहणे। ततो वाशा स्थेति प्रुष्वाणामपां होमग्रहणे। अवश्यायो हिमाम्भःप्रुष्वाः ठार इति लोके या प्रसिद्धाः ताश्च यत्र प्रदेशे बहून्यार्द्राणि तृणानि भवन्ति तत्र रात्रावाकाशाकाशादधः पतितत्वात्तृणेषु बिन्दुरूपा आपस्तिष्ठन्ति तासामुपरि शुद्धं वस्त्रं प्रक्षिप्यार्द्रीकृत्य कचिद्विपुले पात्रे निष्पीड्यते। एवमुपायेन तासां ग्रहणम्। अन्यथा ग्रहीतुमशक्यत्वात्।

ततः शविष्ठा स्थेति मन्त्रेण होमपूर्वं मधु गृह्णाति। ततः शक्करी स्थेति गोर्विजायमाना उल्ब्या अपो होमपूर्वं गृह्णाति। ताश्च गोप्रसवकाले निःसरन्तीः संगृह्येदानीं यूपमुत्तरेण संगृह्यन्ते। ततो जनभृत इति होमपूर्वं पयो दुग्धं गृह्णाति यूपमुत्तरेणैव। ततस्तत्रैव विश्वभृत इति होमपूर्वं घृतं गृह्णाति यूपमुत्तरेण ता गृह्यन्ते। ताः पूर्वं कस्मिंश्चिद्विपुले पात्रे निधाय तत्र चतुर्गृहीतं हुत्वा तत औदुम्बरे पात्रे गृह्यन्ते। ततो होमं विनैवाञ्जलिनाऽऽपः स्वराज इति मरीचीः पुनः गृहीत्वा सारस्वतीप्रभृतिषु सर्वास्वप्सु

ञ्जलिना सर्वासु सᳪँ सृजति ॥३६॥ औदुम्बरे पात्रे समासि-ञ्चत्येना मधुमतीरिति ॥३७॥ मैत्रावरुणधिष्ण्यस्य पुरस्ता-न्निदधात्यत्यनाधृष्टाः सीदतेति पात्राणि च तूष्णीं पालाशौदुम्बरनैयग्रोधपादाश्वत्थान्यभिषेकाय ॥ ३८ ॥ उक्थ्यः ॥३९॥ श्वः पयस्या मैत्रावरुणी माध्यन्दिनीयैः सह ॥४०॥ शतᳪँ सहस्राणि दक्षिणा ॥४१॥ ॥ ४ ॥

मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्मास्तृणाति

---

प्रत्येकं संसृजति । प्रतिग्रहणं मन्त्रावृत्तिः । सूर्यरश्मिभिरुद्धृता आपो मरीच्यस्ताश्च तत्स्योपरि दृश्यमाना अञ्जलिना गृहीत्वा गृहीत्वा पूर्वगृहीतास्वेतास्वप्सु संसृजतीति हरिस्वामिनः ।

ततः सर्वा अप्येकस्मिन्महत्यौदुम्बरे पात्रे समासिञ्चति मधुमतीरिति मन्त्रेण एकधनासेकवत् । प्रत्येकं मन्त्रः । ततस्तदौदुम्बरं पात्रं सर्वोदकयुक्तमनाधृष्टाः सीदतेति मन्त्रेण मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति । ततस्तूष्णीं चत्वारि अभिषेकपात्राणि मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति । तत्र एकं पालाशं पात्रं, द्वितीयमौदुम्बरं, तृतीयं नैयग्रोधम् । न्यग्रोधस्य वटस्य पादः अधस्ताल्लम्बायमानं मूलं भूमिमध्ये प्रविष्टम् । न्यग्रोधस्य पादस्येदं नैयग्रोधपादम् । चतुर्थमाश्वत्थमिति । एवमेतानि चत्वारि पात्राणि रिक्तान्यभिषेकार्थानि निदधाति । एतावत् पशुपुरोडाशभागपरिहरणान्तं कर्म ।

ततो ऽग्नीषोमीयस्य पशोर्विशसनादि दोहान्तम् । प्रातःसवनपयस्यार्थवत्सापाकरणानन्तरं राजसूयिकयो माध्यन्दिनपयस्याया मैत्रावरुण्याः षड्वर्गस्यापाकरणम् । प्रातश्चैत्रशुक्लपञ्चम्यामृत्विक् प्रबोधनादि । अंशुपात्रमधिकम् । उक्थ्यवत् क्रतुकरणम् । अपो निधायाश्विदाभ्यग्रहणं यथोक्तम् । न्यग्रोधस्य परिकर्म पवित्रे उक्तम् । आग्नेयैन्द्राग्नौ द्वौ सवनीयौ । माध्यन्दिनसवनीयैः सह प्रातःसवनवदेव मैत्रावरुणी पयस्या कर्तव्या । अश्वाहुतिवर्जं दाक्षिणहोमः । गवां लक्षं दक्षिणा ॥

इति पञ्चदशस्य चतुर्थी कण्डिका ॥ ४ ॥

---

मरुत्वतीयान्ते मैत्रावरुणधिष्ण्यस्य पुरस्तात् निहितानां पालाशादीनामभिषेचनीयपात्राणां पुरस्तात्सदो मध्ये एवाध्वर्युः प्राग्ग्रीवमुत्तरलो-

सोमस्य त्विषिरिति ॥१॥ अपरेऽन्ते सीसं निदधाति ॥२॥ पार्थानामग्नये स्वाहेति षड् जुहोति प्रतिमन्त्रम् ॥३॥ पवित्रे कृत्वा हिरण्यमेनयोः प्रवयति ताभ्यामुत्पुनात्यपः सवितुर्व इति ॥४॥ अभिषेचनीयेष्वेनाः व्यानयति सधमाद इति ॥५॥ तार्प्यं परिधापयति ॥६॥ क्षौमम् ॥७॥ त्रिपाणं वा ॥८॥ घृतोत्रमेके ॥९॥ यज्ञरूपस्यूतम् ॥१०॥ पाण्डुवं च निवस्ते ॥ ११ ॥ अधीवासं प्रतिमुच्योष्णीषं संवेष्ट्य निवीतेऽवगूहते नाभिदेशे परिहरते वा ॥ १२ ॥

---

म व्याघ्रचर्माऽऽस्तृणाति सोमस्य त्विषिरसीति मन्त्रेण । ततस्तस्य व्याघ्रचर्मण उपरभागे चर्मण उपर्यैव सीसं निदधाति तूष्णीम् । ततोऽध्वर्युराज्यं संस्कृत्य समित्पूर्वं सकृद्गृहीतैः अग्नये स्वाहेति षट् पार्थानि जुहोति । ततः पवित्रे स्थ इति पवित्रे कृत्वा तयोः पवित्रयोर्हिरण्यं प्रवयति प्रोतयति प्रमुञ्चतीत्यर्थः । ततस्ताभ्यां पवित्राभ्यां ता औदुम्बरपात्रस्था अपो विभज्य चतुर्षु पालाशोदुम्बरादिष्वभिषेचनीयेषु पात्रेषु सधमाद इति मन्त्रेण निनयति । प्रतिपात्रं मन्त्रावृत्तिः ।

ततो यजमानं प्रति तार्प्यं परिधत्स्वेत्यध्वर्युः प्रेष्यति । तार्प्यशब्देन क्षौममुच्यते । त्रिः पायितं वासो वा । त्रिः पायितैस्तन्तुभिर्व्यूतं त्रिपाणं वल्कलमिति केचित् । घृतक्लिन्नं वस्त्रं वा । तस्मिन् तार्प्ये यज्ञरूपाणि स्रुक् स्रुव चमसाद्याकाराणि सर्वाणि स्यूतानि भवन्ति । दोरकैः परिषीवणेन वस्त्रे तदाकाराण्युत्पादितानि भवन्ति । ततः प्रेषितो यजमानो दीक्षितवस्त्रं परित्यज्य क्षत्रस्योल्वमिति मन्त्रेणैवंविधं तार्प्यं परिधत्ते ।

ततः पाण्डवं परिधत्स्वेति प्रैषः । ततो यजमानः क्षत्रस्य जराय्वसीति मन्त्रेण पाण्डुवसंज्ञं द्वितीयं वासस्तार्प्यस्योपरि धत्ते । पाण्डुवं रक्तनेपालकम्बलम् । ततो यजमानः क्षत्रस्य योनिरसीति मन्त्रेणाधीवासं कञ्चुकं प्रति मुञ्चति । ततः शिरस्युष्णीषं परिधत्ते । उष्णीषस्य मध्यप्रदेशेन तूष्णीं वेष्टयित्वा तस्योष्णीषस्योभौ प्रान्तौ परिहितस्य वस्त्रस्य निर्गते कृतनीविकेऽस्यामवगूहते क्षत्रस्य नाभिरसीति मन्त्रेण नाभेः पुरस्तात् अवगूहते । अथवोष्णीषस्योभौ प्रान्तौ नाभिदेशे परिहरते । समन्तं परिवेष्टयति तेनैव मन्त्रेण । न निवीतेऽवगूहते । माहेन्द्रग्रहादर्वाग् दीक्षितवस्त्रस्य निवृत्तिर्नियमेन । तत ऊर्ध्वं विकल्पेन ।

तार्प्यप्रभृतीनि क्षत्रस्येति प्रतिमन्त्रम् ॥ १३ ॥ दीक्षितवसननिवृत्तिर्विरोधान्माहेन्द्रादौ वा पुनः परिधानं निधायैतानि ॥१४॥ इन्द्रस्य वार्त्रघ्नमिति धनुरा तनोति ॥१५॥ मित्रस्य वरुणस्येत्यस्य बाहू विमार्ष्टि ॥१६॥ धनुः प्रयच्छति त्वयाऽयमिति ॥१७॥दृबाऽसीति प्रतिमन्त्रमादाय तिस्र इषूः प्रयच्छति पातैनमिति प्रतिमन्त्रम् ॥१८॥ आविर्मर्या इति वाचयति ॥१९॥ अवेष्टा इति लोहायसमाविध्यति केशवास्ये सदोऽन्त उपविष्टाय ॥२०॥ सुन्वन्तमाक्रमयन् दिशः प्राचीमारोहेति वाचयति प्रतिदिशं यथालिङ्गम् ॥ २१ ॥ आक्रम्य पादेन सीसं निरस्यति प्रत्यस्तमिति ॥२२॥ व्याघ्रचर्मारोहयति सोमस्य त्विषिरिति ॥२३॥ रुक्ममधः पदं कुरुते मृत्योरिति ॥२४॥

ततो ऽध्वर्युरिन्द्रस्य वार्त्रघ्नमसीति मन्त्रेण धनुरा तनोति ज्याधिरूढं करोति । ततो मित्रस्य वरुणस्येति द्वाभ्यां प्रतिमन्त्रं धनुषो बाहू कोटी प्रान्तौ हस्तेन विमार्ष्टि ततस्त्वयाऽयं वृत्रमिति मन्त्रेण तद्धनुर्यजमानाय समर्पयति । ततोऽध्वर्यु र्दृबाऽसीत्येकामिषुं हस्तेनादत्ते । रुजा ऽसीति द्वितीयाम् । क्षुमाऽसीति तृतीयाम् । एवं तिस्रः इषूः प्रतिमन्त्रमादाय तिस्रोऽपि क्रमेण यजमानाय प्रयच्छति।तत्र पातैनं प्राञ्चमिति प्रथमामिषुं यजमानाय प्रयच्छति । पातैनं प्रत्यञ्चमिति द्वितीयाम् । पातैनं तिर्यञ्चमिति तृतीयाम् । तत इषुसमर्पणानन्तरम् आविर्मर्या इति सप्त यजूंषि प्रतिमन्त्रं यजमानं वाचयति ।

ततः सदः समीपे उपविष्टस्य केशवस्य बहुदीर्घकेशयुक्तस्य पुरुषस्य मुखमध्ये अवेष्टा इति मन्त्रेण लोहायसं प्रक्षिपति । लोहायसं लोहस्यैव जातिविशेषः । "अनोऽश्मायः सरसो"मिति जातौ टचः स्मरणात् । लोहायसं ताम्रमिति सर्वे भाष्यकाराः । ताम्रपरिष्कृतमयो लोहायसमिति हरिस्वामिनः । ततो बाहुगृहीतं यजमानं पूर्वादिकां दिशमाक्रमयन् प्राचीमारोहेत्यादिकान् पञ्च मन्त्रान् यथालिङ्गं वाचयति । आक्रमणं चात्र तत्तद्दिगभिमुखं गमनमेव ।

ततोऽध्वर्युः शार्दूलचर्मणा उपरि भागे स्थापितं सीसं दक्षिणेन पादेनाक्रम्याधिष्ठाय प्रत्यस्तं नमुचेरिति मन्त्रेण पादेनैव निरस्यति ।

शिरसि च नवतदूर्मं शततदूर्मं वाजोऽसीति ॥ २५ ॥ बाहू उद्गृह्णाति हिरण्यरूपा इति ॥२६॥ मित्रोऽसि वरुणोऽसीति वा ॥२७॥ स्थितं प्राञ्चमभिषिञ्चति पुरोहितोऽध्वर्युर्वा पुरस्तात्पालाशेन प्रथमं पश्चादितरे द्वितीयेन स्वस्तृतीयेन मित्र्यो राजन्यो वैश्यश्चतुर्थेन सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रम् ॥२८॥ अभिषिञ्चामीति सर्वत्र साकाङ्क्षत्वात् ॥२९॥ क्षत्राणां क्षत्रपतिरेधीति च

---

ततोऽध्वर्योर्व्याघ्रचर्मारोहस्वेति प्रैषः। ततः प्रेषितो यजमानः सोमस्य त्विषिरिति मन्त्रेण व्याघ्रचर्मारोहति । बाहुगृहीतं वा यजमानमध्वर्युः व्याघ्रचर्मारोहणं कारयति न प्रैषेण। तत्रापि सोमस्येति मन्त्रो यजमानस्यैव।

ततोऽध्वर्युर्यजमानस्य पादयोरधस्तात्सौवर्णं परिमण्डलं रुक्मं मृत्योः पाहीति मन्त्रेण निदधाति। ततो द्वितीयं रुक्मं नवच्छिद्रयुक्तं वा यजमानशिरस्योजोऽसि सहोऽसीति मन्त्रेण निदधाति । ततोऽध्वर्युर्यजमानस्य बाहू हिरण्यरूपा उषस इति मन्त्रेणोद्गृह्णाति ऊर्ध्वौ करोति। यजमान एवेति केचित् । मित्रोऽसि वरुणोऽसीत्यनेन वा मन्त्रेण बाहू उद्गृह्णाति न हिरण्यरूपा इत्यनेन ।

ततः शार्दूलचर्मण्येव प्राङ्मुखमूर्ध्वबाहुं तिष्ठन्तं यजमानं ब्राह्मणादयश्चत्वारः पालाशादिभिः पात्रैः क्रमेणाभिषिञ्चन्ति। तत्र राज्ञः पुरोहितो वाऽध्वर्युर्वा पुरस्तादवस्थितः पालाशेन पात्रेणाभिषिञ्चति सोमस्य त्वेति मन्त्रेण। तत्रैवं मन्त्रपाठः। सोमस्य त्वा द्युम्नेनाभि षिञ्चामि क्षत्राणां क्ष० द्यून्पाहि । इमं मे देवा असपत्नमिति देवसूहविःष्वित्र नामग्रहणसंयुक्तं पठति ब्राह्मणानां राजेत्यन्तम्।

ततः पश्चादवस्थिता इतरे स्वादयोऽभिषिञ्चन्ति । ततः स्वो राज्ञो भ्राता द्वितीयेन औदुम्बरेण पात्रेणाभिषिञ्चति। तत्र मन्त्रः—अग्ने भ्राजसाऽभिषिञ्चामि क्षत्राणां क्षत्र० द्यून्पाहीत्यादीन्द्रियायेत्यन्तम्।

ततस्तृतीयेन वटपात्रेण मित्र्यो राजन्यो मित्रभूतः क्षत्रियोऽभिषिञ्चति। सूर्यस्य वर्चसाऽभिषिञ्चामि क्षत्राणां क्षत्रपतिरेध्यति दिद्यून्पाहीत्यादि इन्द्रियायेत्यन्तम् । ततो वैश्यश्चतुर्थेनाश्वत्थपात्रेणाभिषिञ्चति । तस्य मन्त्रः। इन्द्रस्येन्द्रियेणाभिषिञ्चामि क्षत्राणां क्षत्रपतिरेध्यति दिद्यून्पाहीत्यादीन्द्रियायेत्यन्तम् ।

तार्प्यप्रभृतीनि क्षत्रस्येति प्रतिमन्त्रम् ॥ १३ ॥ दीक्षितवसननिवृत्तिर्विरोधान्माहेन्द्रादौ वा पुनः परिधानं निधायैतानि ॥१४॥ इन्द्रस्य वार्त्रघ्नमिति धनुरा तनोति ॥१५॥ मित्रस्य वरुणस्येत्यस्य बाहू विमार्ष्टि ॥१६॥ धनुः प्रयच्छति त्वयाऽयमिति ॥१७॥ दृबाऽसीति प्रतिमन्त्रमादाय तिस्र इषूः प्रयच्छति पातैनमिति प्रतिमन्त्रम् ॥१८॥ आविर्मर्या इति वाचयति ॥१९॥ अवेष्टा इति लोहायसमाविध्यति केशवास्ये सदोऽन्त उपविष्टाय ॥२०॥ सुन्वन्तमाक्रमयन् दिशः प्राचीमारोहेति वाचयति प्रतिदिशं यथालिङ्गम् ॥ २१ ॥ आक्रम्य पादेन सीसं निरस्यति प्रत्यस्तामिति ॥२२॥ व्याघ्रचर्मारोहयति सोमस्य त्विषिरिति ॥२३॥ रुक्ममधः पदं कुरुते मृत्योरिति ॥२४॥

---

ततो ऽध्वर्युरिन्द्रस्य वार्त्रघ्नमसीति मन्त्रेण धनुरा तनोति ज्याधिरूढं करोति । ततो मित्रस्य वरुणस्येति द्वाभ्यां प्रतिमन्त्रं धनुषो बाहू कोटी प्रान्तौ हस्तेन विमार्ष्टि ततस्त्वयाऽयं वृत्रमिति मन्त्रेण तद्धनुर्यजमानाय समर्पयति । ततोऽध्वर्यु र्दृबाऽसीत्येकामिषुं हस्तेनादत्ते । रुजा ऽसीति द्वितीयाम् । क्षुमाऽसीति तृतीयाम् । एवं तिस्रः इषूः प्रतिमन्त्रमादाय तिस्रोऽपि क्रमेण यजमानाय प्रयच्छति। तत्र पातैनं प्राञ्चमिति प्रथमामिषुं यजमानाय प्रयच्छति । पातैनं प्रत्यञ्चमिति द्वितीयाम् । पातैनं तिर्यञ्चमिति तृतीयाम् । तत इषुसमर्पणानन्तरम् आविर्मर्या इति सप्त यजूंषि प्रतिमन्त्रं यजमानं वाचयति ।

ततः सदः समीपे उपविष्टस्य केशवस्य बहुदीर्घकेशयुक्तस्य पुरुषस्य मुखमध्ये अवेष्टा इति मन्त्रेण लोहायसं प्रक्षिपति । लोहायसं लोहस्यैव जातिविशेषः । "अनोऽश्मायः सरसो"मिति जातौ टचः स्मरणात् । लोहायसं ताम्रमिति सर्वे भाष्यकाराः । ताम्रपरिष्कृतमयो लोहायसमिति हरिस्वामिनः । ततो बाहुगृहीतं यजमानं पूर्वादिकां दिशमाक्रमयन् प्राचीमारोहेत्यादिकान् पञ्च मन्त्रान् यथालिङ्गं वाचयति । आक्रमणं चात्र तत्तद्दिगभिमुखं गमनमेव ।

ततोऽध्वर्युः शार्दूलचर्मणा उपरि भागे स्थापितं सीसं दक्षिणेन पादेनाक्रम्याधिष्ठाय प्रत्यस्तं नमुचेरिति मन्त्रेण पादेनैव निरस्यति ।

**शिरसि च नवतदूर्मं शततदूर्मं वौजोऽसीति ॥ २५ ॥ बाहू उद्गृह्णाति हिरण्यरूपा इति ॥२६॥ मित्रोऽसि वरुणोऽसीति वा ॥२७॥ स्थितं प्राञ्चमभिषिञ्चति पुरोहितोऽध्वर्युर्वा पुरस्तात्पालाशेन प्रथमं पश्चादितरे द्वितीयेन स्वस्तृतीयेन मित्र्यो राजन्यो वैश्यश्चतुर्थेन सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रम् ॥२८॥ अभिषिञ्चामीति सर्वत्र साकाङ्क्षत्वात् ॥२९॥ क्षत्राणां क्षत्रपतिरेधीति च**

ततोऽध्वर्योर्व्याघ्रचर्मारोहस्वेति प्रैषः । ततः प्रेषितो यजमानः सोमस्य त्विषिरिति मन्त्रेण व्याघ्रचर्मारोहति । बाहुगृहीतं वा यजमानमध्वर्युः व्याघ्रचर्मारोहणं कारयति न प्रैषेण । तत्रापि सोमस्येति मन्त्रो यजमानस्यैव ।

ततोऽध्वर्युर्यजमानस्य पादयोरधस्तात्सौवर्णं परिमण्डलं रुक्मं मृत्योः पाहीति मन्त्रेण निदधाति । ततो द्वितीयं रुक्मं नवच्छिद्रयुक्तं वा यजमानशिरस्योजोऽसि सहोऽसीति मन्त्रेण निदधाति । ततोऽध्वर्युर्यजमानस्य बाहू हिरण्यरूपा उषस इति मन्त्रेणोद्गृह्णाति ऊर्ध्वौ करोति। यजमान एवेति केचित् । मित्रोऽसि वरुणोऽसीत्यनेन वा मन्त्रेण बाहू उद्गृह्णाति न हिरण्यरूपा इत्यनेन ।

ततः शार्दूलचर्मण्येव प्राङ्मुखमूर्ध्ववाहुं तिष्ठन्तं यजमानं ब्राह्मणादयश्चत्वारः पालाशादिभिः पात्रैः क्रमेणाभिषिञ्चन्ति । तत्र राज्ञः पुरोहितो वाऽध्वर्युर्वा पुरस्तादवस्थितः पालाशेन पात्रेणाभिषिञ्चति सोमस्य त्वेति मन्त्रेण । तत्रैवं मन्त्रपाठः । सोमस्य त्वा द्युम्नेनाभि षिञ्चामि क्षत्राणां क्ष० द्यून्पाहि । इमं मे देवा असपत्नमिति देवसूहविःष्विव नामग्रहणसंयुक्तं पठति ब्राह्मणानां राजेत्यन्तम् ।

ततः पश्चादवस्थिता इतरे स्वादयोऽभिषिञ्चन्ति । ततः स्वो राज्ञो भ्राता द्वितीयेन औदुम्बरेण पात्रेणाभिषिञ्चति । तत्र मन्त्रः—अग्ने भ्राजसाऽभिषिञ्चामि क्षत्राणां क्षत्र० द्यून्पाहीत्यादीन्द्रियायेत्यन्तम् ।

ततस्तृतीयेन वटपात्रेण मित्र्यो राजन्यो मित्रभूतः क्षत्रियोऽभिषिञ्चति । सूर्यस्य वर्चसाऽभिषिञ्चामि क्षत्राणां क्षत्रपतिरेध्यति दिद्यून्पाहीत्यादि इन्द्रियायेत्यन्तम् । ततो वैश्यश्चतुर्थेनाश्वत्थपात्रेणाभिषिञ्चति । तस्य मन्त्रः । इन्द्रस्येन्द्रियेणाभिषिञ्चामि क्षत्राणां क्षत्रपतिरेध्यति दिद्यून्पाहीत्यादीन्द्रियायेत्यन्तम् ।

॥३०॥ इममसुष्येति च प्रथमो देवसूवत् ॥३१॥ पार्थानामिन्द्राय स्वाहेति षड् जुहोति प्रतिमन्त्रम् ॥३२॥५॥

शौनः शेपं च प्रेष्यति ॥१॥ द्यूतान्ते वा ॥२॥ ओ३मित्यृचां प्रति गरस्तथेति गाथानाम् ॥३॥ होताध्वर्यू हिरण्मय्योः कशिपुनोरुपविष्टौ ॥४॥ शौनःशेपान्ते पृथक् शते ददाति ॥५॥ सहस्रं वा ॥६॥ आसने च ॥७॥ कण्डूयन्याऽभिषेकेण प्रलिम्पते प्र पर्वतस्येति ॥८॥ चर्माणि विर्विक्रमयति विष्णोरिति प्रतिमन्त्रम् ॥९॥ पालाशे शेषानासिच्य पुत्राय प्रयच्छति प्रियतमायेदं मे कर्मेदं वीर्यं पुत्रोऽनुसन्तनोत्विति ॥१०॥ शालाद्वार्ये जुहोति पुत्रेऽन्वारब्धे प्रजापत इति पुत्रयजमानयोर्नाम गृह्णाति पितृशब्दं पुत्रे कृत्वा यथायथं पश्चात् ॥११॥ आग्नीध्राय पालाशेन

इममसुष्य पुत्रम् इत्यादि मन्त्रशेषः प्रथमस्य ब्राह्मणस्य पुरोहितस्य वाऽध्वर्योर्वाऽभिषेक एव नेतरेषु, सोमोऽस्माकं ब्राह्मणानामिति मन्त्रलिङ्गात् । अतः क्षत्राणां क्षत्रपतिरित्यादि इन्द्रस्येन्द्रियायेत्येव मन्त्रा अन्येषां त्रयाणां भवन्ति । ततः पूर्वसंस्कृतादेवाज्यात् सकृद् गृहीतैः समिद्धर्जमग्नये स्वाहेत्यादीनि षट् पार्थानि जुहोति ।

इति पञ्चदशस्य पञ्चमी कण्डिका ॥ ५ ॥

ततोऽध्वर्युः शौनःशेपं० शर्ठ०सेति होतारं प्रेष्यति । अथवा वक्ष्यमाणस्य द्यूतस्यान्ते शौनःशेपं प्रेष्यति । ततः प्रेषितो होता शौनःशेपं शंसति । तत्र शस्त्रे ऋचां शंसने ओ३ मिति प्रतिगरः । गाथानां शंसने च तथेति प्रतिगरः । शौनःशेपान्ते यजमानोऽध्वर्यवे होत्रे च प्रत्येकं गवां शतं ददाति गवां सहस्रं वा । आसने च सौवर्णे कशिपुनी यथा स्वं होत्रध्वर्युभ्यां ददाति ।

ततो यजमानः कण्डूयन्या कृष्णविषाणया करणभूतयाऽभिषेकेण स्वशरीरसंलग्नेनाभिषेकोदकेन स्वशरीरं प्र पर्वतस्येति मन्त्रेण प्रलिम्पति । सर्वं स्वशरीरं लिम्पति । ततोऽध्वर्युर्बाहुगृहीतं यजमानं विष्णोर्विक्रमणमसीति प्रतिमन्त्रं सदोमध्य एव शार्दूलचर्मणि त्रिविक्रमयति प्रागुदग्वा । यजमानस्य मन्त्रपाठः ।

**शेषान् जुहोति रुद्र यत्त इत्युत्तरार्धे ॥१२॥ गवां शतम· धिकं वा स्वस्याहवनीयस्योत्तरतः स्थापयति ॥ १३ ॥ पूर्वाग्निवहनं च साग्निम् ॥१४॥ वाजपेयवद्रथमवहृत्य दक्षिणस्यां वेदिश्रोणौ युनक्ति पूर्ववन्मित्रावरुणयोरिति चतुर्भिः ॥१५॥ दक्षिणापथेन यात्वाऽपरेण चात्वालꣳ स्थापयति ॥१६॥ अव्यथायै त्वेति सुन्वन्नारोहति ॥१७॥ मरुतामिति दक्षिणधुर्यं प्राजति ॥१८॥ गवां मध्ये स्था·**

---

ततो यजमानः पालाशे पात्रे सर्वपात्राणां शेषानासिच्य पुत्राणां मध्ये यः पुत्रो यजमानस्य प्रियतमोऽतिशयेन वल्लभो भवति तस्मै पुत्राय तान् पालाशस्थानभिषेकशेषान् समर्पयति इदं मे कर्मेदं वीर्यं पुत्रोऽनुसन्त· नोत्विति मन्त्रेण । दर्शपूर्णमासवदत्र मन्त्रे पुत्रस्य नामग्रहणम् । अध्वर्योः पालाशे शेषासेकः । यजमानपुत्राय समर्पणम् इति सम्प्रदायः । ततोऽ· ध्वर्युराज्यं संस्कृत्य पालाद्वार्यं समित्पूर्वकं सकृद्गृहीतं प्रजापते न त्वदे· तान्यन्य इति मन्त्रेण पुत्रेऽन्वारब्धे सति जुहोति । अयममुष्य पितेत्य· त्र अयं राज्ञोऽमुष्य दशरथस्य पितेत्येवं पितृशब्दः पुत्रे कर्तव्यः । पश्चाद्यथास्वम् । असावस्य पितेत्यत्रासौ दशरथोऽस्य रामस्य पिते· त्येवं होममन्त्रे विशेषः । इदं प्रजापतये ।

ततोऽध्वर्युराग्नीध्रीयेऽग्नावुत्तरार्द्धे रुद्र यत्त इति मन्त्रेण पालाशेन पात्रेणाभिषेकोदकशेषान् जुहोति इदं रुद्राय । तत उदकोपस्पर्शः । ततः स्वस्य राज्ञो भ्रातुर्गवां शतं वा किञ्चिदधिकं वाऽऽहवनीयस्यो· त्तरतः स्थापनीयम् । अग्निसहितं पूर्वाग्निवहनं शकटमपि आहवनीय· मुत्तरेण स्थापयति । पूर्वाग्निश्च यः सेनायां राज्ञः शान्तिकपौष्टिकाद्यर्थं सह नीयते शकटेन । आवसथ्याग्निर्वेति हरिस्वामिनः ।

ततः शालाया दक्षिणतो रथस्योपरि रथः स्थाप्यते । ततोऽध्वर्युरिन्द्र· स्य वज्रोऽसीति मन्त्रेण रथाद्रथमवतारयति । ततो धूर्गृहीतमन्तर्वेदिमध्ये आनीय दक्षिणस्यां वेदिश्रोणौ चतुर्भिरश्वैर्युनक्ति । मित्रावरुणयोस्त्वा प्रशा· स्त्रोः प्रशिषा युनज्मीति दक्षिणमार्गेण शालासदसो अन्तरेण गत्वा दक्षिणे· नाग्नीध्रीयतीर्थेन गत्वाऽध्वर्यू रथस्य धूर्गृहीत्वा चात्वालस्य पश्चाद्रथं स्थापयति ।

ततोऽव्यथायै त्वेति मन्त्रेण सुन्वन् रथे आरोहति । यन्ताऽपि इदानी· मेव तं रथमारोहति । अग्रे अवरोहणविधानात् । ततो यन्तैव मरुतां

**पयस्यापामेति ॥१९॥ धनुरात्न्योंपस्पृशति गां यजमानः समिन्द्रियेणेति ॥२०॥ जिनामीमाः कुर्व इमा इति चाह ॥२१॥ तावद् भूयो वा गोस्वामिने दत्त्वा पूर्वेण यूपं परीत्यान्तःपात्यदेशे स्थापयति मा त इति ॥२२॥ अग्नये गृहपतय इति चत्वारि रथविमोचनीयानि जुहोति प्रतिमन्त्रं पशूनाᳬं रसोऽसीति वराहोपानहा उपमुञ्चते ॥२३॥ भूमिमवेक्षते पृथिवि मातरिति ॥२४॥ अवरोहति हᳬंसः शुचिषदिति॥२५॥ विमुच्य सयन्तृकᳬं**

---

प्रसवेनेति दक्षिणधुर्यं प्राजति गमनाय प्रेरयति । ततो यन्तैवाऽऽपाम मनसेति मन्त्रेणाहवनीयस्योत्तरतः स्थापितानां भ्रातृसक्तानां गवां मध्ये रथं स्थापयति । ततो यजमानः समिन्द्रियेणेति मन्त्रेण अनुरात्न्यां धनुष्कोट्या प्रान्तेनैकां गामुप स्पृशति ।

ततो यजमान एव जिनामीमाः कुर्व इमा इत्याह । जिनामि इमा गाः, कुर्वे करोमि वाऽऽत्मानीना इमा गा इति मन्त्रार्थः। ततो यजमानो गोस्वामिने स्वकीयाय भ्रात्रे तावतीरन्याः स्वकीया गा ददाति यावत् संख्या भ्रातुस्तत्र भवति तत् संख्यातो भूयसीरतिशयेनाधिकसंख्या वा स्वकीया गाः गोस्वामिने ददाति ।

ततः पूर्वेण यूपं परीत्य वेदिं दक्षिणेन गत्वा मा त इन्द्रेति मन्त्रेण रथमन्तःपात्यदेशे स्थापयति । ततोऽध्वर्युराज्यं संस्कृत्य सकृद्गृहीतेन समित्पूर्वकमाहवनोये चत्वारि रथविमोचनीयानि जुहोति । अग्नये गृहपतय इति प्रथमम् । सोमाय वनस्पतये इति द्वितीयम् । मरुतामिति तृतीयम् । इन्द्रस्येति चतुर्थम् । इदंशब्दयुक्ता एतावन्तस्त्यागाः । ततो यजमानो रथो पविष्ट एव पशूनाᳬं रसोऽसीति मन्त्रेण वराहस्य शूकरस्य चर्मणा निर्मिते उपानहौ पादयोः प्रतिमुञ्चते ।

ततो यजमानः पृथिवि मातरिति मन्त्रेण भूमिमवेक्षते । ततो हᳬंसः शुचिषदिति रथादवरोहति । ततोऽध्वर्युस्तं रथं विमुच्य सयन्तृकं सारथि सहितमेवोत्पाट्य रथवाहणस्योपरि निदधाति । रथवाहणशब्दार्थोऽप्रसिद्ध इति कृत्वा सूत्रकारः स्वयमेव व्याचष्टे—अनस्तत्कर्म । अनः शकटमेव तत्कर्म रथवाहणकर्म रथवाहणशब्दवाच्यमित्यर्थः । नान्यद् द्रव्यं वहनयोगादनडुदादिकम् ।

रथवाहणे करोत्यनसस्तत्कर्म शालाया दक्षिणतः ॥ २६ ॥ अवतरते यन्ता ॥२७॥ रथवाहणस्य दक्षिणेऽन्ते शतमानावासजति वृत्तौ ॥२८॥ अनुवर्त्ममौदुम्बरीᳬ शाखामुपगूहत्युपस्पृशति शतमानाविन्द्रस्यासीति ॥२९॥ तौ ब्रह्मणे ददात्यसीति शाखामुपस्पृशति ॥ ३० ॥ इन्द्रस्य वामित्यवहरते बाहू पयस्यायां व्याघ्रचर्मदेशे स्थितायाम् ॥३१॥ सेषुकं धनुः प्रयच्छति ॥ ३२ ॥ उत्तरवेदिं हृत्वा पयस्यया प्रचरति प्राक् स्विष्टकृतः ॥३३॥६॥

खादिरीमासन्दीᳬ रज्जूतां व्याघ्रचर्मदेशे निदधाति स्योनाऽसीति ॥१॥ अधीवासमस्यामास्तृणाति क्षत्रस्य योनिरिति ॥२॥ सुन्वन्तमस्यामुपवेशयति स्यो-

ततो रथवाहणस्योपरि रथस्थापनानन्तरं यन्ता सारथिः शालाया दक्षिणतो रथादवतरति। ततोऽध्वर्युः रथवाहणस्य दक्षिणेऽन्ते दक्षिणपार्श्वे चक्रे चक्रमावर्त्य समीप एव वर्तुलौ शतमानावासजति बध्नाति। ततोऽनुवर्त्य दक्षिणे रथचक्रवर्त्मसमीप एव औदुम्बरीं शाखामुपगूहति रथवाहण एव यजमानः।

ततः स एव इयदसीति मन्त्रेण शतमानावुप स्पृशति। ततो माध्यन्दिनीयसवनीयैः सह या पयस्या कृता सा मैत्रावरुणधिष्ण्यस्य पुरस्तात् स्थाप्यते। ततोऽध्वर्युरेव इन्द्रस्य वां वीर्यकृत इति मन्त्रेण प्रागूर्ध्वीकृतौ यौ यजमानबाहू तौ बाहू अधुना व्याघ्रचर्मदेशे स्थितायां पयस्यायां पयस्यामध्येऽवहरते नीचौ करोति। ततस्तिसृभिरिषुभिः सहितं धनुर्ब्रह्मणे राय यजमानः समर्पयति।

ततः पयस्यामुत्तरवेदिं प्रति हृत्वा आसाद्यालभ्याज्यभागौ यजप्रैषो कृत्वा मित्रावरुणाभ्यामनुब्रूहि मित्रावरुणौ यजेत्येवं पयस्यया प्रचरति। ततः स्रुचावन्यस्मै प्रदाय स्विष्टकृतः प्राक् वक्ष्यमाणं कर्म करोति॥

इति पञ्चदशस्य षष्ठी कण्डिका ॥ ६ ॥

ततोऽध्वर्युः खादिरीमासन्दीं रज्जुभिर्युतां व्याघ्रचर्मदेशे मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति स्योनाऽसीति मन्त्रेण। ततोऽस्यामास-

नामासीदेति ॥३॥ नि षसादेत्युरोऽस्यालभते ॥४॥ अभि-भूरित्यस्मै पञ्चाक्षान् पाणावाधाय पश्चादेनं यज्ञियवृक्ष-दण्डैः शनैस्तूष्णीं घ्नन्ति ॥५॥ पाप्मानं तेऽपहन्मोऽति त्वा वधं नयामीति वा ॥६॥ वरं वृत्वा ब्रह्मन्नित्यामन्त्र-यते पञ्चकृत्वः ॥७॥ प्रत्याह त्वष्टत्यास ( ? ) सविता वरुण इन्द्रो रुद्र इति त्वं ब्रह्माऽसीत्यादिभिः ॥८॥ आदिनैवा-नत्यम् ॥९॥ बहुकारेति च ह्वयत्येवं नामानम् ॥१०॥ राजा राजभ्राता सूतस्थपत्योरन्यतरो ग्रामणीः सजात-श्चैवं पूर्वः पूर्व उत्तरस्मै ॥११॥ एतेन सजातः प्रतिप्रस्था-ता च पूर्वाग्निसहितः शुक्रपुरोरुचा द्यूतभूमिं कुरुतः

---

न्द्यां क्षत्रस्य योनिरसीत्यधीवासमाच्छादनवस्त्रमास्तृणाति । ततः स्योनामा-सीदेति मन्त्रेणाऽध्वर्युर्बाहुगृहीतं यजमानमासन्द्यामुपवेशयति । अध्वर्यो-र्मन्त्रः ।

ततोऽध्वर्युर्नि षसादेति मन्त्रेण यजमानस्य हस्ते पञ्चसंख्यानक्षान् समर्पयति ।

ततोऽध्वर्य्वादयो यज्ञियवृक्षदण्डैः शनैस्तूष्णीं यजमानं पृष्ठदेशे घ्नन्ति मन्दं मन्दं कुट्टयन्ति । पाप्मानं तेऽपहन्मोऽति त्वा वधं नयामीति मन्त्रेण वा यजमानं घ्नन्ति न तूष्णीम् । ततो यजमानो वरं वृणीते । इदं मेऽस्तु राज्यं मेऽस्तु यशो मेऽस्तु इत्यभीष्टं प्रार्थयते । ततो ब्रह्मन्नित्येवं ब्रह्माण-मा मन्त्रयते । त्वं ब्रह्माऽसि सविताऽसि सत्यप्रसव इति ब्रह्मा यजमानं प्रत्या-ह । पुनर्द्वितीयं ब्रह्मन्नित्या मन्त्रयते । त्वं ब्रह्माऽसि वरुणोऽसि सत्यौजा इति ब्रह्मा प्रत्याह । ततो ब्रह्मन्निति तृतीयं पृच्छति । त्वं ब्रह्माऽसीन्द्रोऽसि विशौजा इति प्रत्याह । ततो ब्रह्मन्निति चतुर्थमा मन्त्रयते । ततस्त्वं ब्रह्माऽसि रुद्रोऽसि सुशेव इतीतरः प्रत्याह । ततो ब्रह्मन्निति पञ्चममा मन्त्रयते । इतरस्त्वं ब्रह्माऽसीत्येतादेव प्रति वक्ति । ततो बहुकार श्रेयस्कर भूयस्कर एहीति मन्त्रेण बहुकारादिसंज्ञमाह्वयति ।

ततोऽध्वर्युर्यजमानस्य पुरोहितो वा यजमानाय स्फ्यं प्रयच्छति । इन्द्रस्य वज्रोऽसि तेन मे रध्येति मन्त्रेण । ततो राजा अनेनैव मन्त्रेण राजभ्रात्रे स्फ्यं प्रयच्छति । ततः स राजभ्राता सूताय वा स्थपतये वा स्फ्यं प्रयच्छति । ततः सूतो वा स्थपतिर्वा ग्रामण्ये महत्तराय स्फ्यं

॥१३॥ मन्थिनो विमितम् ॥ १४ ॥ धृतभूमौ हिरण्यं नि-धायाऽभिजुहोति चतुर्गृहीतेनाग्निः पृथुरिति ॥१५॥ अक्षा-न्निवपति स्वाहाकृता इति ॥ १६ ॥ गां दीव्यध्वमित्याह ॥ १७ ॥ कृतादि वा विदध्याद्राजप्रभृतिभ्यः ॥ १८ ॥ सजाताय कलिम् ॥१९॥ गामस्यानीय घ्नन्ति ॥ २० ॥ पूर्वाग्निवाहौ दक्षिणा ॥ २१ ॥ पयस्यास्विष्टकृदिडं करोति माहेन्द्रादि च ॥ २२ ॥ अवरुह्य गच्छति स्तोत्राय प्रहितः ॥ २३ ॥ अवभृथमेकेन तार्प्यादी-नि चेत् ॥ २४ ॥ उदैत्येकेन ॥२५॥ दीक्षितवसनं च

---

प्रयच्छति । ततो ग्रामणीः सजाताय स्फ्यं प्रयच्छति ।

ततः सजातः प्रतिप्रस्थाता चोभौ आहवनीयस्योत्तरतः पूर्वाग्निसन्नि-धाने एतेन स्फ्येन शुक्रग्रहग्रहणमन्त्रेण तं प्रत्नथेत्यनेन द्यूतभूमिं कुरुतः । ततो मन्थिनः पुरोरुचा अयं वेन इत्यनेन मन्थिग्रहणमन्त्रेण तस्यां द्यूतभू-मावर्धप्रमाणं विमितं चतुरस्रं मण्डपं कुरुतः । सूतोऽश्वपोषकः स्थपति-र्ग्रामेश्वरः। ग्रामणीर्ग्रामीणां नेतृत्वेन महत्तरः। सजातो ग्रामण्यो भ्राता । पुरोहितो योऽथर्ववेदविहितानां शान्तिकपौष्टिकाभिचारकर्मणां कर्ता ।

ततोऽध्वर्यूराज्यं संस्कृत्य चतुर्गृहीत्वा द्यूतभूमौ हिरण्यं निधाय परि-स्तरणपूर्वकं हिरण्ये जुहोति अग्निः पृथुरिति मन्त्रेण । इदमग्नये । ततोऽध्वर्युः स्वाहाकृता इति मन्त्रेण द्यूतभूमौ तान् पञ्चाशतान्निवपति। ततो गां दीव्यध्वमिति यजमान आह । ततो राजादयः पञ्चाक्षैर्दीव्यन्ति लोकवत् । अथवा कितवप्रसिद्धं कृतादि द्यूतं कुर्वन्ति । राज्ञः कृतः, राजभ्रा-तुस्त्रेता, सूतस्थपत्योरन्यतरस्य द्वापरः । ग्रामण्यः पञ्च कलिङ्गादिसंज्ञः ।

अस्मिन् पक्षे सजाताय कलिं कलिसंज्ञकं द्यूतं दद्यात् । ततः सजा-तस्य गां द्यूतभूमावानीय घ्नन्ति । दण्डादिना ताडनमात्रं स्पर्शमात्रं कुर्वन्तीति कर्कः । प्राणवियोगसामर्थ्यं हननं कुर्वन्तीति हरिस्वामिनः । अत्र द्यूते पूर्वाग्निवाहो बलीवर्दो दक्षिणा । अत्रावसरे वा शौनःशेपस्य शंसनम् । द्यूतान्ते वेति सूत्रितत्वात् । ततोऽन्यहस्तात् स्रुचावादाय पय-स्यायाः सगुणस्विष्टकृद्यागादीडामार्जनान्तं कार्यम् ।

ततोऽध्वर्युर्माहेन्द्रग्रहग्रहणादि पृष्ठोपाकरणान्तं कृत्वा यजमानं प्रति स्तोत्रोपासनार्थं सदो गच्छेति प्रेष्यति । एतावत्पर्यन्तं यजमानः

नामासीदेति ॥३॥ नि षसादेत्युरोऽस्यालभते ॥४॥ अभि-भूरित्यस्मै पञ्चाक्षान् पाणावाधाय पश्चादेनं यज्ञियवृक्ष-दण्डैः शनैस्तूष्णीं घ्नन्ति ॥५॥ पाप्मानं तेऽपहन्मोऽति त्वा वधं नयामीति वा ॥६॥ वरं वृत्वा ब्रह्मन्नित्यामन्त्र-यते पञ्चकृत्वः ॥७॥ प्रत्याह त्वमस्यास ३ सविता वरुण इन्द्रो रुद्र इति त्वं ब्रह्माऽसीत्यादिभिः ॥८॥ आदिनैवा-न्त्यम् ॥९॥ बहुकारेति च ह्वयत्येवं नामानम् ॥१०॥ राजा राजभ्राता सूतस्थपत्योरन्यतरो ग्रामणीः सजात-श्चैवं पूर्वः पूर्व उत्तरस्मै ॥११॥ प्रत्तेन सजातः प्रतिप्रस्था-ता च पूर्वाग्निसहितः शुक्रपुरोरुचा द्यूतभूमिं कुरुतः

---

न्द्यां क्षत्रस्य योनिरसीत्यधीवासमाच्छादनवस्त्रमास्तृणाति । ततः स्योनामा-सीदेति मन्त्रेणाध्वर्युर्बाहुगृहीतं यजमानमासन्द्यामुपवेशयति । अध्वर्यो-र्मन्त्रः ।

ततोऽध्वर्युर्नि षसादेति मन्त्रेण यजमानस्य हस्ते पञ्चसंख्यानक्षान् समर्पयति ।

ततोऽध्वर्य्वादयो यज्ञियवृक्षदण्डैः शनैस्तूष्णीं यजमानं पृष्ठदेशे घ्नन्ति मन्दं मन्दं कुट्टयन्ति । पाप्मानं तेऽपहन्मोऽति त्वा वधं नयामीति मन्त्रेण वा यजमानं घ्नन्ति न तूष्णीम् । ततो यजमानो वरं वृणीते । इदं मेऽस्तु राज्यं मेऽस्तु यशो मेऽस्तु इत्यभीष्टं प्रार्थयते । ततो ब्रह्मन्नित्येवं ब्रह्माण-मा मन्त्रयते । त्वं ब्रह्माऽसि सविताऽसि सत्यप्रसव इति ब्रह्मा यजमानं प्रत्या-ह । पुनर्द्वितीयं ब्रह्मन्नित्या मन्त्रयते । त्वं ब्रह्माऽसि वरुणोऽसि सत्यौजा इति ब्रह्मा प्रत्याह । ततो ब्रह्मन्निति तृतीयं पृच्छति । त्वं ब्रह्माऽसीन्द्रोऽसि विशौजा इति प्रत्याह । ततो ब्रह्मन्निति चतुर्थमा मन्त्रयते । ततस्त्वं ब्रह्माऽसि रुद्रोऽसि सुशेव इतीतरः प्रत्याह । ततो ब्रह्मन्निति पञ्चममा मन्त्रयते । इतरस्त्वं ब्रह्माऽसीत्येतादेव प्रति वक्ति । ततो बहुकार श्रेयस्कर भूयस्कर एहीति मन्त्रेण बहुकारादिसंज्ञमाह्वयति ।

ततोऽध्वर्युर्यजमानस्य पुरोहितो वा यजमानाय स्फ्यं प्रयच्छति । इन्द्रस्य वज्रोऽसि तेन मे रध्येति मन्त्रेण । ततो राजा अनेनैव मन्त्रेण राजभ्रात्रे स्फ्यं प्रयच्छति । ततः स राजभ्राता सूताय वा स्थपतये वा स्फ्यं प्रयच्छति । ततः सूतो वा स्थपतिर्वा ग्रामण्ये महत्तराय स्फ्यं

॥१३॥ मन्थिनो विमितम् ॥ १४ ॥ द्यूतभूमौ हिरण्यं निधायाऽभिजुहोति चतुर्गृहीतेनाग्निः पृथुरिति ॥१५॥ अक्षान्निवपति स्वाहाकृतः इति ॥ १६ ॥ गां दीव्यध्वमित्याह ॥ १७ ॥ कृतादि वा विदध्याद्राजप्रभृतिभ्यः ॥ १८ ॥ सजाताय कलिम् ॥१९॥ गामस्यानीय घ्नन्ति ॥ २० ॥ पूर्वाग्निवाहो दक्षिणा ॥ २१ ॥ पयस्यास्विष्टकृदिडं करोति माहेन्द्रादि च ॥ २२ ॥ अवरुह्य गच्छति स्तोत्राय प्रहितः ॥ २३ ॥ अवभृथमेकेन तार्प्यादीनि चेत् ॥ २४ ॥ उदैत्येकेन ॥ २५ ॥ दीक्षितवसनं च

---

प्रयच्छति । ततो ग्रामणीः सजाताय स्फ्यं प्रयच्छति ।

ततः सजातः प्रतिप्रस्थाता चोभौ आहवनीयस्योत्तरतः पूर्वाग्निसन्निधाने एतेन स्फ्येन शुक्रग्रहग्रहणमन्त्रेण तं प्रत्नथेत्यनेन द्यूतभूमिं कुरुतः । ततो मन्थिनः पुरोरुचा अयं वेन इत्यनेन मन्थिग्रहणमन्त्रेण तस्यां द्यूतभूमावर्थप्रमाणं विमितं चतुरस्रं मण्डपं कुरुतः । सूतोऽश्वपोषकः स्थपतिर्ग्रामेश्वरः। ग्रामणीर्ग्रामाणां नेतृत्वेन महत्तरः। सजातो ग्रामण्यो भ्राता । पुरोहितो योऽथर्ववेदविहितानां शान्तिकपौष्टिकाभिचारकर्मणां कर्ता ।

ततोऽध्वर्युराज्यं संस्कृत्य चतुर्गृहीत्वा द्यूतभूमौ हिरण्यं निधाय परिस्तरणपूर्वकं हिरण्यं जुहोति अग्निः पृथुरिति मन्त्रेण । इदमग्नये । ततोऽध्वर्युः स्वाहाकृता इति मन्त्रेण द्यूतभूमौ तान् पञ्चाशतानि वपति। ततो गां दीव्यध्वमिति यजमान आह । ततो राजादयः पञ्चाक्षैर्दीव्यन्ति लोकवत् । अथवा कितवप्रसिद्धं कृतादि द्यूतं कुर्वन्ति । राज्ञः कृतः, राजभ्रातुस्त्रेता, सूतस्थपत्योरन्यतरस्य द्वापरः । ग्रामण्यः पञ्च कलिङ्गादिसंज्ञः ।

अस्मिन् पक्षे सजाताय कलिं कलिसंज्ञकं द्यूतं दद्यात् । ततः सजातस्य गां द्यूतभूमावानीय घ्नन्ति । दण्डादिना ताडनमात्रं स्पर्शमात्रं कुर्वन्तीति कर्कः । प्राणवियोगसामर्थ्यं हननं कुर्वन्तीति हरिस्वामिनः । अत्र द्यूते पूर्वाग्निवाहो बलीवर्दो दक्षिणा । अत्रावसरे वा शौनःशेपस्य शंसनम् । द्यूतान्ते वेति सूत्रितत्वात । ततोऽन्यहस्तात् स्रुचावादाय पयस्यायाः सगुणस्विष्टकृद्यागादीडामार्जनान्तं कार्यम् ।

ततोऽध्वर्युर्माहेन्द्रग्रहग्रहणादि पृष्ठोपाकरणान्तं कृत्वा यजमानं प्रति स्तोत्रोपासनार्थं सदो गच्छेति प्रेष्यति । एतावत्पर्यन्तं यजमानः

**प्रास्यति ॥२६॥ अनूबन्ध्यवपाहोमान्ते दद्यादेनानि ॥२७॥ उदवसानीयायां वा ॥२८॥ त्रैधातव्युदवसानीया ऐन्द्रा-वैष्णवो द्वादशकपालो व्रीहियवानाम् ॥२९॥ तृतीयं यवानां मध्ये ॥३०॥ अधिश्रयणं च ॥३१॥ तिस्रस्तिस्रो दक्षिणा ददाति शतमानानि ब्रह्मणे धेनुर्होत्रे वासाऽस्य-**

---

खादिर्यामासन्द्यामुपविष्टो भवति । अधुनाऽध्वर्युणाऽनुज्ञात आसन्दी-तोऽवरुह्य स्तोत्रोपासनायोद्गातृसमीपं गच्छति । अत्रावसरे यजमान स्तार्प्यादीनि निधाय विकल्पेन दीक्षितवस्त्रं परिधत्ते न वा । तृतीय-सवने आग्रयणादनन्तरं मन्थिग्रहणम् । यज्ञायज्ञीयपात्रप्रक्षालनान्ते उक्थ्य-ग्रहणं च । अत्र कृष्णविषाणादीनां प्रासनं न भवति । यदि माहेन्द्रा-दीनि परित्यक्तानि भवन्ति तदा तार्प्यादीनां मध्ये एकेन परिहितेनाव-भृथं करोति । द्वितीयेन परिहितेन जलमध्यान्निः सरति । दीक्षितवस्त्रं चाप्सु प्रास्यन्ति ।

ततः प्रत्यागत्योदयनीयान्तं कृत्वा तिस्रोऽनूबन्ध्याः क्रियन्ते । तद्वपा-मार्जनान्ते तार्प्यादीनां चतुर्णामध्वर्यवे दानम् । अनूबन्ध्यान्ते त्रैधातव्युद-वसानीया । तत्र समारोपोऽग्न्यन्वाधानव्रतग्रहणानामभावः । ऐन्द्रा-वैष्णवो द्वादशकपालः पुरोडाशः । तत्र पात्रासादने द्वादश कपालानि । धान्यं व्रीहयो यवाश्च । शतमानादीनि द्वादश द्रव्याणि दक्षिणार्थे । अत्र पुरोडाशमध्ये तृतीयो भागो यवानाम् । द्वौ भागौ अधरोत्तरौ व्रीहीणाम् ।

अत्र ग्रहणेऽपि द्वयोर्व्रीहिभागयोर्मध्ये प्रथमं व्रीहिभागं गृहीत्वा मध्ये यवभागं पुनरन्ते व्रीहिभागमिति ग्रहणं कुर्यात् । तत्रैवमुपायः— यवानां तृतीयभागं समं द्वेधा विभज्य द्वे पोटलिके बद्ध्वा त्रेधाऽभिमर्श-नार्थेषु यवेषु निदध्यात् । तत्र प्रथमे मुष्टौ केवला व्रीहय एव ग्राह्याः । द्वितीये मुष्टौ मुष्टेस्तृतीयं भागं व्रीहीणामादायैकाकां पोटलिकां गृह्णी-यात् । तृतीये मुष्टौ प्रथमं यवपोटलिकामादाय ततस्तृतीयं मुष्टिभागं व्रीहीणां गृह्णीयात् । ततश्चतुर्थे मुष्टौ पुनर्व्रीहय एव ग्राह्याः ।

तत उभयोः शेषाभिमर्शनादि नानाबीजधर्मेण कण्डनं पेषणं संयवनं च भेदेन कृत्वाऽधिश्रयणकाले व्रीहिपिण्डं द्विधा विभज्य तयोरेकं प्रथमं कपालेष्वधिश्रित्य पृथुं कृत्वा तस्योपरि मध्ये यवपिण्डमधिश्रित्य पृथुं कुर्यात् । ततो यवपिण्डस्योपरि पुनर्द्वितीयवारं व्रीहिपिण्डं निधाय प्रथयेत् । एवं यवानां मध्येऽधिश्रयणं कर्तव्यम् । अवदाने ग्रहणकाले

ध्वर्यवे गामग्नीधे ॥३२॥ भैषज्याभिचारयोरप्येषा॥३३॥७॥

दशोत्तराणि संसृपाᳬहवीᳬषि निर्वपति ॥१॥ देवयजनान्तरमेकैकेनोत्सर्पति ॥२॥ शालायामन्त्यम् ॥३॥ सावित्रसारस्वतत्वाष्ट्रपौष्णैन्द्रबार्हस्पत्यवारुणाग्नेयसौम्यवैष्णवानि यथोक्तम् ॥४॥ प्रतिष्टि पुण्डरीकाणि प्रय-

---

त्रिभ्योऽपि धातुभ्योऽवदानग्रहणम् ।

दक्षिणाकाले त्रीणि सुवर्णशतमानानि ब्रह्मणे दद्यात् । तिस्रो धेनवो होत्रे । त्रीणि वासांस्यध्वर्यवे । तिस्रो गा अग्नीध्रे । एकामेव गामग्नीध्र इति हरिस्वामिनः । इति त्रैधातव्युदवसानीया । एषा त्रैधातवो रोगिणो रोगोपशान्त्यर्थं शत्रुमारणार्थं च यजनीयेऽहनि आह्लान्वारम्भणीयापूर्विका भवति ।

इति पञ्चदशस्य सप्तमी कण्डिका ॥ ७ ॥

---

ततोऽपराग्नौ उत्तरं देवयजनं प्रति नीत्वा दश संसृपाहवींषि निर्वपति । तत्रैकैकेन हविषा दशपेयदेवयजनं प्रति गच्छति । प्रतीष्टि स्तोकम् । तत्र प्रथममभिषेचनीयशालाया उत्तरतः समीप एवाग्नीन् स्थापयित्वा कर्तव्यम् । ततस्तस्मात्स्थानादुत्तरस्मिन् प्रदेशे द्वितीयम् । तस्योत्तरतस्तृतीयम् । अनेन प्रकारेण कुर्वन् दशपेयशालामध्ये दशमं संसृपाहविः कुर्यात् । अत्र संसृपाहविःष्वग्न्यन्वाधानब्रह्मवरणव्रतग्रहणानामभावः । तत्र प्रथमं सावित्रो द्वादशकपालोऽष्टाकपालो वा । पुण्डरीकं जलजं कमलं सुवर्णमयं वा दक्षिणा ॥ १ ॥ एवमेतत्कर्मापवर्गान्तं कृत्वा पुनस्तस्मात्स्थानादग्नीनुत्सार्य चोत्तरतः स्थापयित्वा द्वितीयं हविः सारस्वतश्चरुः । पुण्डरीकं दक्षिणा ॥ २ ॥

पुनरुत्सार्योत्तरतः स्थापयित्वा तृतीयं त्वाष्ट्रो दशकपालः । पुण्डरीकं दक्षिणा ॥ ३ ॥ ततः पुनरुत्सार्य चतुर्थं हविः पौष्णश्चरुः प्रपिष्टानाम् । पुण्डरीकं दक्षिणा ॥ ४ ॥ पुनरुत्सार्य पञ्चम ऐन्द्र एकादशकपालः । पुण्डरीकं दक्षिणा ॥ ५ ॥ ततः पुनरुत्सार्य षष्ठं बार्हस्पत्यश्चरुः । पुण्डरीकं दक्षिणा ॥ ६ ॥ पुनरुत्सार्य सप्तमं हविर्वारुणो यवमयश्चरुः पुण्डरीकं दक्षिणा ॥ ७ ॥ पुनरुत्सार्याग्नेयोऽष्टाकपालोऽष्टमं हविः । अत्र पुण्डरीकद्वयं दक्षिणा ॥ ८ ॥ ततोऽग्नीनुत्सार्योत्तरतः सौम्यश्चरुर्नवमं संसृपाहविः । पुण्डरीकद्वयं दक्षिणा ॥ ९ ॥ ततो दशपेयशालामध्येऽग्नीन् स्थापयित्वा

च्छति ॥५॥ हिरण्मयानि वा ॥६॥ उत्तमासु तिसृषु पञ्च ॥७॥ तेषाᳬं स्रजं प्रतिमुञ्चते ॥८॥ तद्दीक्षो भवति ॥९॥ एकतन्त्रौ क्रथैकत्वात् ॥१०॥ नाना वाऽवभृथदीक्षाश्रुतिभ्याम् ॥११॥ एकं त्वानुपूर्व्ययोगात् ॥१२॥ अवभृथदीक्षाभ्यासो वचनात् ॥१३॥ सप्तम्यां ब्रह्मागारात्सोममाहृत्यासन्द्यभिमर्शनादि करोत्युपसद्देवताहवीᳬंषि निर्वपत्युपसदन्त इच्छन्यथोक्तम् ॥१४॥ पितामहदशगणᳬं सोमपानाᳬं संख्याय सर्पणम् ॥१५॥ सवित्रेति वाऽनु·

---

वैष्णवस्त्रिकपालः पुरोडाशो वा चरुर्वा दशमं संसृपाहविः कर्तव्यम् । अत्रैकं पुण्डरीकं दक्षिणा ॥ १० ॥

एतानि सर्वाणि पुण्डरीकाणि सुवर्णमयानि वा जलानि कमलिनीपुष्पाणि वा भवन्ति । "पुण्डरीकं सितां भोजमि"त्यमरः । ततो दत्तव्यतिरिक्तानां जलजानां द्वादशकमलानां मालां कृत्वा यजमानः प्रतिमुञ्चते सैव दीक्षा । एतानि दश संसृपाहवींषि चैत्रशुक्लष्ठ्यां भिन्नतन्त्राणि कुर्यात् ।

अथ सप्तम्यां तिथौ ब्रह्मागाराद्दशपेयार्थं न्यग्रोधसहितं सोममाहृत्यासन्द्यभिमर्शनादि सर्वं कर्मातिथ्याप्रवर्ग्यादिकं करोति पवित्रवत् । काण्वानां च षट्सु संसृपाहविःषु श्वोभूत इति पठ्यते—तत्र षष्ठीप्रभृति षट्सु दिनेष्वेकैकं कृत्वा सप्तमे दिनेऽवशिष्टानि चत्वारि कृत्वा स्रजं यजमानः प्रतिमुञ्चते ।

सप्तम्यामभिषेचनीयसमाप्तितः सप्तमे दिने द्वादश्यां तिथौ आसन्द्यभिमर्शनादि । चैत्र्यां दशपेयस्य सुत्या । एवं चाभिषेचनीयसमाप्त्यनन्तरं दशमेऽहनि सुत्या भवति । "अथ यद्दशमेऽहनि प्रसुतो भवति तस्माद्दशपेय" इति श्रुतेः ।

अत्रोपसत्स्वयं विशेषः । उपसत्समाप्त्यन्ते यजमानेच्छया उपसद्देवताभ्योऽग्निसोमविष्णुभ्यो हवींषि निर्वपति । तत्राग्नेयोऽष्टाकपालः । सौम्यश्चरुः । वैष्णवस्त्रिकपालः । पुरोडाशश्चरुर्वा । अत्र सर्वं प्रकृतिवत् । अग्न्यन्वाधानब्रह्मवरणव्रतग्रहणदक्षिणादानवर्जम् । एवं तासां हविषां कर्मापवर्गान्तं कृत्वा प्रवर्ग्योत्सादनादि आवसथ्योम्मर्दनादिदानान्तम् ।

ततश्चैत्रशुक्लदशम्यामपररात्रे ऋत्विक् प्रबोधनादि दशपेयस्याग्नि·

वाकमुक्त्वा ॥१६॥ दश दशकैकं चमसमनु भक्षयन्ति ॥१७॥ यजमानस्य राजन्याः ॥१८॥ ब्राह्मणा वा श्रुतेः ॥१९॥ तुल्याः संख्यायोगात् ॥२०॥ ब्रह्मणे ददात्यशुवद्दक्षिणा ॥२१॥ हिरण्मयीᳫं स्रजमुद्गात्रे रुक्मᳫं होत्रे हिरण्मयौ प्राकाशावध्वर्युभ्यामश्वं प्रस्तोत्रे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छᳫसिने वाससी नेष्टापोतृभ्यामन्यतरतोयुक्तं यवाचितमच्छावाकाय गामग्नीधे

ष्टोमसंस्थं सप्तदशस्तोमकं सोत्यमहर्भवति । अत्र दशपुरुषपर्यन्तमविच्छिन्नकृतसोमपानाः सोमपाः शतं ब्राह्मणाः प्रतिसवनं सर्पणात् प्राक् स्वं स्वं पितामहदशगणं पितृपितामहप्रभृतीनां दशानां पूर्वजानां समूहं सोमयाजिनां संख्याय असौ प्रथमः सोमपः असौ द्वितीयः असौ तृतीयः असौ दशम इत्येवं दशमपर्यन्तान्सोमयाजिनो गणयित्वा सर्वे विभूरसीत्यादिकं सर्पणं कुर्वन्ति । वचनात्तेषां शतसंख्याकानामनृत्विजामपि सर्पणं भवति ।

अथवा सवित्रा प्रसवित्रेत्यनुवाकं पठित्वा सर्वेषु सवनेषु सर्पणं कुर्वन्ति न पितामहदशगणं संख्याय । चमसानां भक्षणकाले एकैकं चमसं दशब्राह्मणा भक्षयन्ति । तत्रैकैक ऋत्विक् नवाप्राकृताः । तत्र नेष्टृचमसे चत्वारोऽध्वर्युपुरुषाः षडन्ये । होतृचमसे ग्रावस्तुत् द्वितीयः अन्येऽष्टौ । उद्गातृचमसे चत्वारः सामगाः उद्गातृ प्रस्तोतृ प्रतिहर्तृ सुब्रह्मण्याः, षडन्ये ।

अन्येषु चमसेषु नव नवान्ये । यजमानचमसे तु दशाप्यन्य एव । अब्राह्मणत्वात् यजमानस्य स्वचमसे भक्षो न भवति । एवं दशस्वपि चमसेषु प्रतिचमसं दश दश ब्राह्मणा भक्षयन्ति । "शतं ब्राह्मणाः सोमं भक्षयन्ती"ति दशपेये शाखान्तरश्रुतेः । एवं सर्वचमसभक्षेषु ।

ततो दक्षिणाकाले द्वादश वत्सतर्यो गर्भिण्यो दक्षिणा ब्रह्मणे देया । सुवर्णमयी पुष्करमालोद्गात्रे देया । रुक्मं होत्रे दद्यात् । रुक्मः सौवर्ण आभरणविशेषः । हिरण्मयौ प्रकाशावध्वर्युप्रतिप्रस्थातृभ्यां दद्यात् । वाससी नेष्टृ पोतृभ्याम् । अत्र व्यवस्था छन्दोगसूत्रे "वासो स्थूला शाटी क्षौमो नेष्टुः पोतुः कार्पासं वस्त्रमि"ति । अन्यतरत एकस्मिन्नेकपार्श्वे युक्तं यवाचितं यवैः पूर्णं शकटमच्छावाकाय दद्यात् । अग्नीधे सवत्सां गां दद्यादिति हरिस्वामिनः । गामनड्वाहं दद्यादित्यन्ये । तदेव युक्तम् ।

अनड्वानग्नीधे इति ताण्ड्यश्रुतेः ।

॥२२॥ अभिषेचनीयान्ते केशवपनार्थे निवर्त्तनꣳ संवत्सरम् ॥२३॥ भूम्यनधिष्ठानं च ॥२४॥ अनुपानत्कस्य यावज्जीवम् ॥२५॥८॥

उत्तरे शुक्ले पञ्चबिलः ॥१॥ आग्नेय ऐन्द्रः सौम्यो वा वैश्वदेवश्चरुः पयस्या मैत्रावरुणी बार्हस्पत्यश्चरुः ॥२॥ प्रतिदिशमासादनमाग्नेयं पुरस्तात्प्रदक्षिणमितराणि मध्येऽन्त्यम् ॥३॥ पूर्वैश्चरित्वा चरित्वा मध्यमे सꣳस्रवासेचनम् ॥४॥ आग्नेयो हिरण्यदक्षिणोऽग्नीधे ददात्यैन्द्रस्य

---

तथोन्नेतृग्रावस्तुत् सुब्रह्मण्य प्रतिहर्तृभ्यो द्रव्यान्तरदानं च ताण्ड्ये उक्तम् । धेनुः प्रतिहर्त्रे । अजः सुब्रह्मण्याय । वत्सतर्युन्नेत्रे । साण्डस्त्रिवत्सो ग्रावस्तुते इति । त्रिवत्सस्त्रिवर्षः । अत्र दक्षिणासु अश्वस्य विद्यमानत्वात् दाक्षिणहोमेष्वयं न इत्यश्वाहुतिर्भवति । यज्ञायज्ञीयपात्रप्रक्षालनान्तेऽनुयाजाद्युदयनीयान्तं प्रकृतिवत् । अनूबन्ध्या । अभावे पयस्या वा । उदवसानीया च ।

तदन्ते यजमानस्य केशवपनादिनियमानां संकल्पः । ततो यजमानः संवत्सरपर्यन्तं केशवपनं न कारयेत् । यत्र दीक्षादौ वाचनिकं केशवपनं प्राप्नोति वपनस्थाने केशनिवर्तनं कार्यम् । निवर्तनं च केशानां कर्तनम् । उपानद्रहितस्य यजमानस्य यावज्जीवं भूम्यनधिष्ठानम् । यदा भूमौ यजमानस्तिष्ठति तदा प्रथममुपानहौ पादयोः परिधायैव पादौ भूमौ निदधाति । अन्यथा पीठाद्युपर्येव पादौ स्थापयति न भूमौ । संवत्सरपर्यन्तं सोपानत्कस्यापि भूम्यनधिष्ठानम् । इति दशपेयः समाप्तः ।

ततश्चैत्रशुक्लैकादशीप्रभृति वा चैत्री प्रभृति वा चैत्रान्तामावास्यापर्यन्तं किमपि कर्म न भवति ॥

इति पञ्चदशस्याष्टमो कण्डिका ॥ ८ ॥

---

ततो वैशाखशुक्लपक्षे कस्मिंश्चिदहनि वैशाख्यामेव वा पञ्चबिलो भवति । पञ्चबिल इति वक्ष्यमाणस्य कर्मणो नाम । तत्र पञ्च हवींषि भवन्ति । आग्नेयोऽष्टाकपालः प्रथमं हविः । एकादशकपाल ऐन्द्रो वा सौम्यश्चरुर्वा द्वितीयं हविः । वैश्वदेवश्चरुस्तृतीयम् । मैत्रावरुणी पयस्या चतुर्थम् । बार्हस्पत्यश्चरुः पञ्चमम् । तत्रोद्धरणादि कर्मापवर्गान्ते विशेषः ।

**ऋषभः सौम्यस्य बभ्रुर्ब्रह्मणे वैश्वदेवस्य पृषन्होत्रे पयस्याया वशाऽभावेऽप्रवीताऽध्वर्युभ्यां बार्हस्पत्यस्य शितिपृष्ठो ब्रह्मणे ॥५॥ अन्नाद्यकामस्याप्येषा ॥६॥ द्वादशोत्तराणि प्रयुग्घवींᳬषि ॥७। मासान्तराणि ॥८॥ आहवनीयाद्धा पुरस्ताच्छम्याप्रासे शम्याप्रास आग्नेयसौम्यसावित्रबार्हस्पत्यत्वाष्ट्रवैश्वानरा यथोक्तम् ॥९॥ एवमावृत्तस्य चरवः सारस्वतपौष्णमैत्रक्षैत्रपत्यवारुणाऽऽदित्याः॥१०॥ षट् षड् वैकतन्त्रे ॥११॥ पूर्वाग्निवाहौ द्वौ द्वौ**

---

अग्न्यन्वाधानानन्तरं शाखाच्छेदः पवित्रबन्धनान्तः। पयस्यार्थं वत्सवर्गस्यापाकरणम्। मित्रावरुणाभ्यां भागमिति।

ततः शाखोपगूहनम्। पात्रासादने आग्नेयस्याष्टौ कपालानि। ऐन्द्रश्चेत्तस्यैकादश। सौम्यचरुपक्षे तिस्रश्चरुस्थाल्यः। अन्यथा द्वे। दोहनचतुष्टयम्। एका पुरोडाशपात्री द्वे वा। वाजिनभाण्डम्। दक्षिणार्थं गोहिरण्यादीनि। पयस्याधर्माश्चरुधर्माश्चोक्ताः।

आसादनकाले वेदिमध्ये प्रतिदिशमासादनम्। आग्नेयं पुरस्तात्। द्वितीयमैन्द्रं सौम्यं वा दक्षिणतः। वैश्वदेवं चरुं पश्चात्। पयस्यामुत्तरतः। बार्हस्पत्यं मध्ये। हविःशेषप्रचारकाले पूर्वैर्हविर्भिर्यागं कृत्वा कृत्वा मध्यमे बार्हस्पत्यचरौ प्रतियागं संस्रवासेचनं करोति।

दक्षिणादानकाले आग्नेयस्य समृद्ध्यर्थं हिरण्यमाग्नीध्रे ददाति। ऐन्द्रपुरोडाशपक्षे तस्य समृद्ध्यर्थं ऋषभं ब्रह्मणे दद्यात्। सौम्यचरुपक्षे तस्य समृद्ध्यर्थं बभ्रुं धूसरवर्णां गां ब्रह्मणे दद्यात्। वैश्वदेवस्य समृद्धये पृषन् विचित्रवर्णो गौर्होत्रे देयः। पयस्यायाः समृद्धये वशा वन्ध्या अगर्भिणी गौरध्वर्य्वग्नीध्राभ्यां देया। यदि वशा न संपद्यते तदा या काचनाप्रवीता ऋषभेणाभुक्ता वत्सतरी साऽध्वर्युभ्यां देया।

बार्हस्पत्यसमृद्ध्यर्थं शितिपृष्ठः श्वेतपृष्ठो गौर्ब्रह्मणे देया। तत्रालम्भमन्त्रो हिरण्यर्षभ पृषद्व वशा शितिपृष्ठगवमस्यूर्जमिति। सौम्यपक्षे ऋषभपदस्थाने बभ्रुगवेति पदं प्रयोज्यम्। प्रत्येकं यथोक्तः संकल्पः॥ इति पञ्चबिलः॥

अन्नाद्यकामस्यापि यजनीयेऽहनि श्राद्धान्वारम्भणीयपूर्वक एष पञ्चबिलो भवति। ततो द्वादश प्रयुग्घवींषि भवन्ति। प्रयुग्घवींषीति तेषां संज्ञा।

षण्णाᳬ षण्णां दक्षिणा ॥१२॥ अष्टापदीवत्पशुबन्धौ गर्भिणीभ्याᳬ स्वगुणदक्षिणौ ॥१३॥ श्येन्यादित्येभ्यो ऽदित्यै वा ॥१४॥ वैश्वदेवी पृषती मारुती वा ॥१५॥ तदन्ते केशवपनीयोऽतिरात्रः पौर्णमासीसुत्यः ॥१६॥

---

तेषां चानुष्ठाने त्रयः पक्षाः । प्रथमपक्षे एकैकस्य मासान्तरेऽनुष्ठानम् । द्वितीयपक्षे एकस्मिन्नेव काले शम्याप्रासान्तराले । तृतीये पक्षे षण्णां षण्णां समानतन्त्रेणकत्रैवानुष्ठानमिति । तत्र प्रथमे पक्षे तानि परस्परं मासान्तराणि भवन्ति । तत्र प्रथमं वैशाखशुक्लपक्षे वैशाख्यां क्रियते । आग्नेयोऽष्टाकपालः प्रथमं हविः । ततो मासान्तराले ज्यैष्ठ्यां सौम्यश्चरुर्द्वितीयं हविः । आषाढ्यां सावित्रो द्वादशकपालोऽष्टाकपालो वा तृतीयम् । श्रावण्यां बार्हस्पत्यश्चरुश्चतुर्थम् । भाद्रपद्यां त्वाष्ट्रो दशकपालः । पञ्चमम् । आश्विन्यां वैश्वानरो द्वादशकपालः षष्ठम् । कार्तिक्यां सारस्वतश्चरुः सप्तमम् । मार्गशीर्ष्यां पौष्णश्चरुरष्टमम् । पौष्यां मैत्रश्चरुर्नवमम् । माघ्यां क्षत्रपत्यश्चरुर्दशमम् । फाल्गुन्यां वारुणश्चरुरेकादशम् । चैत्र्यामादित्यश्चरुर्द्वादशमिति । अस्मिन् पक्षे सर्वेषामन्वाहार्यो दक्षिणा ।

अथ द्वितीय पक्ष उच्यते । अथवा वैशाख्यामेव प्रथमं हविः आहवनीयस्य पुरस्ताच्छम्याप्रासे कर्तव्यम् । ततः पुरस्ताच्छम्याप्रासे द्वितीयम् । ततः पुरस्ताच्छम्याप्रासे तृतीयम् । ततः पुरस्ताच्छम्याप्रासे चतुर्थम् । ततः पुरस्ताच्छम्याप्रासे पञ्चमम् । तत्स्थाने पुरस्ताच्छम्याप्रासे षष्ठम् । ततः प्रत्यावृत्य पञ्चमस्थाने सप्तमम् । चतुर्थस्य स्थाने अष्टमम् । तृतीयस्यस्थाने नवमम् । द्वितीयस्य स्थाने दशमम् । प्रथमस्य स्थाने एकादशम् । शालायां द्वादशमिति ।

अस्मिन्नपि पक्षे अन्वाहार्य एव दक्षिणा । अत्र प्रथमं पञ्चबिलान्तेऽध्वर्युराहवनीयसमीपे स्थित्वा प्राच्यां शम्यां प्रक्षिपेत् सा यत्र पतति तद्गार्हपत्यस्य स्थानं कार्यम् । ततोऽष्टप्रक्रमादिप्रदेशे यथोक्तमाहवनीयस्थानम् । तत्र प्रथमं हविः । तत समाप्य पुनरपि शम्याप्रासनादि । एवं षडनुष्ठाय पुनः प्रत्यागमने गार्हपत्यसमीपे स्थित्वा प्रतीचीं शम्यां प्रास्यति सा यत्र पतति तदाहवनीयस्थानम् । ततः प्रतीच्यां यथोक्तं गार्हपत्यस्यैवं सर्वेषु ज्ञेयम् । तथा सत्यन्त्यं हविः शालायां भवति इति द्वितीयः पक्षः ॥

१०६ न्यायमञ्जरी । जयन्तभट्टकृता । न्याय-व्याकरणाचार्येण पं० सूर्यनारायणशास्त्रिणा कृतया टिप्पण्या समेता । सम्पूर्ण । [ न्या० वि० १५ ] रु० ८—०

१०७ शारदातिलकम् । श्रीमद्राघवभट्टकृतपदार्थादर्शटीकासहितम् । ( तन्त्रशा० वि० १ ) रु० ५—०

१०८ मन्त्रार्थदीपिका । म० म० श्रीशत्रुघ्नविरचिता । सटीक । ( वेद० वि० ७ ) रु० २—०

१०९ शब्दशक्तिप्रकाशिका । श्रीमज्जगदीशतर्कालङ्कारविनिर्मिता । श्रीकृष्णकान्त-विद्यावागीशकृतया कृष्णकान्तीटीकया श्रीमद्रामभद्रसिद्धान्तवागीशविरचितया रामभद्रीटीकया च समलङ्कृता । पं० ढुण्ढिराजशास्त्रिकृतया छात्रोपयुक्तया विषमस्थलटिप्पण्या मूलकारिकार्थेन च सहिता । (न्या वि० १६) रु० ४—८

११० योगदर्शनम् ( पातञ्जलदर्शनम् ) भगवत्पतञ्जलिरचितं, राघवानन्दसरस्वतीकृत-"पातञ्जलरहस्याख्य"टिप्पनीयुक्तया द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रवि-रचितया "तत्त्ववैशारद्या"व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित"योगवार्त्तिक"-समुद्भासितेन मधुपुरीयकापिलमठस्थस्वामिहरिहरानन्दारण्यकृतभास्वतीवृत्त्या सहितेन भगवच्छ्रीकृष्णद्वैपायनव्यासदेवोपज्ञ-"सांख्यप्रवचन" भाष्येणोद्द्योति-तम्, प्रदेशविशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य्य-दार्शनिकसार्वभौम-साहित्य-दर्शनाद्याचार्य-तर्करत्न-न्यायरत्न गोस्वामिदामोदरशास्त्रिणा विहितया टिप्पन्या "पातञ्जलप्रभा"नामिकया भूमिकया च संवलितम्। ( योग. वि. ३ ) ४—०

१११ (१) सारस्वत व्याकरणम् । अनुभूतिस्वरूपाचार्य्यप्रणीतम् । श्रीचन्द्रकीर्त्तिसूरि प्रणीतचन्द्रकीर्त्तिनाम्न्या सुबोधिकया व्याख्यया, श्रीवासुदेवभट्टविरचितप्रसादा-ख्यटीकया च समन्वितम् । कवितार्किकोत्कल-पाल्क श्रीनवकिशोरशास्त्रिणा निर्मितया मनोरमाविवृत्या च समुद्भासितम् । ( व्या. वि. १३ ) पूर्वार्द्धम् । रु० १—८

१११ (२) „ „ „ „ उत्तरार्द्धम् । रु० २—०

११२ सामान्यनिरुक्ति-गादाधरी-गूढार्थतत्त्वालोकः । पं० कुलपति झोपाख्य-श्री-धर्मदत्त [ श्रीबच्चा झा ] शर्मविरचितः । ( न्या. वि. १७ ) रु० १—८

११३ जागदीशी पक्षता । गंगाख्यव्याख्या टिप्पणीसहिता । ( न्या. वि. १८ ) रु० १—८

११४ मनुस्मृतिः । कुल्लूकभट्टकृतमन्वर्थमुक्तावलीव्याख्यया काशीस्थगवर्नमेन्ट कालेज् व्याकरण-मीमांसा-धर्मशास्त्राध्यापकेन पं० नेने इत्युपाह्व गोपालशास्त्रिसंगृ-हीतपरिशिष्टटिप्पण्यादिभिरपि सहिता । सम्पूर्णम् । ( धर्म्मशास्त्र. वि. ३ ) रु० २—४

११५ व्युत्पत्तिवादः । श्रीमद्गदाधरभट्टाचार्यचक्रवर्तिविरचितः । वैयाकरणशिरोमणि-शुक्ल श्रीवेणीमाधवशास्त्रिरचित [ शास्त्रार्थ-परीक्षोपयोगि ] शास्त्रार्थकला टीका-सहितः । ( न्या. वि. १९ ) रु० २—०

११६ भामती । ब्रह्मसूत्रशाङ्करभाष्यव्याख्या सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविर-चिता । न्यायाचार्य पं० ढुण्ढिराजशास्त्रिणा सङ्कलितया विषमस्थलटिप्पण्या सम-लङ्कृता । तत्रायं द्वितीयाध्यायस्य द्वितीयपादान्तः प्रथमो भागः । रु० १—८

११७ जन्मपत्रदीपकः । सोदाहरण-सटिप्पण-हिन्दीटीकासहितः । ज्यौ० पं० श्रीवि-न्ध्येश्वरीप्रसादद्विवेदिना विरचितः । ( ज्यौ. वि. ५ ) रु० ०—

११८ गोभिलगृह्यसूत्रम् । सटीकम् । ( कर्म्मकाण्ड वि० १२ ) रु० ३—

११९ श्राद्धविवेकः । श्रीरुद्रधरकृतः । वेदाचार्य पं० अनन्तरामशास्त्रि कृत टिप्पणी सहितः ( कर्म्म० वि० १३ ) रु० १—

१२० कात्यायनशुल्बसूत्रम् । कर्कभाष्य-महीधरवृत्ति सहितम् । ( कर्म्म० वि० १४ ) रु० ०—

१२१ व्यक्तिविवेकः । श्रीराजानकमहिमभट्टकृतः । श्रीराजानकरुय्यककृत व्याख्यया साहित्याचार्य पं० श्रीमधुसूदनशास्त्रिरचित मधुसूदनीविवृत्या च समुद्भासिता रु० ४—८

December 1935.




THE

CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 456.

श्रीमन्महर्षिकात्यायनप्रणीतं

# श्रौतसूत्रम्

देवयाज्ञिकपद्धतिसहितम् ।

काशीविश्वविद्यालयाध्यापकेन

वेदाचार्य श्रीविद्याधरशर्मणा

संशोधितम् ।

# KĀTYĀYANA SRAUTA SŪTRA

WITH

DEVAYĀJÑIKA PADDHATI

*Edited by*

VEDĀCHĀRYA

PANDIT SRĪ VIDYĀDHARA S'ARMĀ

Professor, Benares Hindu University.

FASCICULAS. VI-६.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE.

*Benares City.*

1937




श्रीः



आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः ४५६.

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

**उत्तरे च मासान्तराः ॥१७॥ व्युष्टिद्विरात्रः ॥१८॥ अग्निष्टोमातिरात्रौ ॥१९॥ क्षत्रधृतिः ॥२०॥ तमुभयत**

अथ तृतीयः पक्ष उच्यते। अथवा वैशाखपौर्णमास्यामेकस्मिन्नेव काले एकस्मिन्नेव देशे पूर्वाणि षट् हवींषि समानतन्त्राणि क्रियन्ते। तेषु च पूर्वाग्निवाहौ द्वावनडवाहौ दक्षिणा। तत उत्तराणि षट् हवींषि सारस्वतादीनि समानतन्त्राण्येव क्रियन्ते। अत्रापि पूर्वाग्निवाहौ द्वौ अनड्वाहौ दक्षिणा। सर्वेष्वपि पक्षेष्वियमेव दक्षिणेति संप्रदायः। सा तु श्रुतौ सूत्रे च दृश्यते। तता वैशाखामावास्यायां सगर्भाऽनूबन्ध्या च। तत्र द्वौ पशुबन्धौ गर्भिणीभ्यां क्रियेते।

तत्र प्रथमे पशुबन्धे श्येनी गर्भिणी गौर्दक्षिणा। ततो द्वितीये पशुबन्धे पृषती विचित्रवर्णा त्वष्टगर्भा गौर्वश्वेभ्यो वा मरुद्भ्यो वा आलभ्यते। अस्या अपि गर्भस्य अनूबन्ध्यागर्भवद्विधिर्भवति। तस्या एवंविधैव पृषती गर्भिणी गौर्दक्षिणा। एवं क्रमेणैतौ द्रव्यभेदात् द्विवचनोपबन्धाच्च भिन्नतन्त्रौ कर्तव्यौ। ततो ज्यैष्ठ्यां केशवपनीयसंज्ञोऽतिरात्रसंस्थो यज्ञः पौर्णमासीसुत्यो भवति। तत्र सर्वमतिरात्रवत्।

राजसूयिका विशेषाः पवित्रवत्। दीक्षा दक्षिणाश्च प्रकृतिवदेव। तस्य सहस्रं दक्षिणा इति छन्दोगसूत्रे। अस्मिन् पक्षे अश्वदाभ्यौ तिस्रोऽनूबन्ध्यास्त्रैधातवी चेति। तत उत्तरे चत्वारः सोमा मासान्तराः पौर्णमासीसुत्याश्च भवन्ति। तत्राषाढ्यां व्युष्टिद्विरात्रोऽहीनो भवति। स च मासापवर्गः। अहीनत्वात् तस्य ज्येष्ठकृष्णद्वितीयायां प्रारम्भः। षोडश दीक्षा, द्वादशोपसदः, द्वे सुत्ये।

मानवे विशेषः, "पौर्णमास्यां केशवपनीयाय दीक्षितेऽमावास्यायां यजनीयेऽहन्यतिरात्रः क्रतुरषोडशिकः सहस्रदक्षिणो वपनकाले निखिलं केशश्मश्रु यजमानो वापयते प्रज्ञातमुदवसाये"ति। अनन्तरं व्युष्टिद्विरात्राय दीक्षते अग्निष्टोमसंस्थं प्रथममहः द्वितीयमहरतिरात्रः, सहस्रदक्षिणत्वादश्वदाभ्यौ तिस्रोऽनूबन्ध्यास्त्रैधातवी च। राजसूयिका धर्माः पवित्रवत्। अन्ये द्वादशाहिका धर्माः। छन्दोगसूत्रे—"संवत्सरादूर्ध्वं केशवपनीयाय दीक्षते। यस्मिन् काले ऽभिषेचनीयेन यजेत। तस्य पौर्णमास्यामतिरात्रो दशपेयेनेष्ट्वा उत्तरः पक्षस्तस्मिन्नेव केशवपनीयेन यजेतेति धानञ्जय्यः पौर्णमास्यां चैवातिरात्रः। तस्य सहस्रं दक्षिणा। तस्योदवसानीययेष्ट्वाऽनिष्ट्वा पौर्णमासेन व्युष्टिद्विरात्राय दीक्षितोऽमावास्यायां पूर्वमहरितिचेच्चिकीर्षेत् पौर्णमास्यामिति चेत् पूर्वपक्ष एव दीक्षेत उभयोर्विचारयोर्यजनीय उत्तरमहरि"ति। ततो मासान्तरे श्रावण्यां क्षत्रधृतिः अग्निष्टोम-

एके त्रिष्टोमज्योतिष्टोमौ ॥२१॥ अभिषेचनीयाद्वा संवत्सरात्केशवपनीयोऽतिरात्रः सोमापवर्गः ॥२२॥ उत्तरे शुक्ले सौत्रामणी ॥२३॥ व्रीहीन्विरूढाविरूढान्क्षौम उपनह्य क्रीणाति क्लीबात्सीसेन ॥२४॥ पक्त्वौदनं विरूढांश्चूर्णीकृत्याश्विभ्यां पच्यस्वेति म_सृजाति ॥२५॥

---

संस्थः । अग्निष्टोमवत् सर्वम् । अत्र पवित्रवदूहाः । दीक्षा दक्षिणा च प्रकृतिवत् । अंशवदाभ्यग्रहणम् । प्रकृतिवदनूबन्ध्योदवसानीया च । ततो मासान्तरे भाद्रपद्यां त्रिष्टोमोऽतिरात्रः ।

ततो मासान्तरे आश्विन्यां ज्योतिष्टोमोऽतिरात्रः । अनयोरंश्वदाभ्य ग्रहणम् । ऊहाश्च पवित्रवत् । अन्यत् सर्वमतिरात्रवत् । केचिदिमावग्निष्टोमसंस्थौ भवत इत्याहुः । छन्दोगसूत्रे ताण्ड्ये मैत्रकल्पसूत्रे च त्रिष्टोमज्योतिष्टोमयोर्विधानमेव नास्ति । तेन तमुभयत एके त्रिष्टोमज्योतिष्टोमौ कुर्वन्ति । एके न कुर्वन्त्येवेति । तेन करणपक्षे उभयत एवम् । प्रथमं–श्रावण्यां त्रिष्टोमः । मध्ये भाद्रपद्यां क्षत्रधृतिः । तत आश्विन्यां ज्योतिष्टोम इति । तत उत्तरे शुक्लपक्षे कार्तिक्यां सौत्रामणीति ।

एते च सोमकालाः प्रयुग्घविषां शम्याप्रासपक्षे पराणां पराणां तन्त्रपक्षे च । मासान्तरपक्षे तु आगामिनि वर्षे चैत्रामावास्यायां पशुबन्धो । वैशाख्यां पौर्णमास्यां केशवपनीयः । ज्यैष्ठ्यां व्युष्टिद्विरात्रः । आषाढ्यां त्रिष्टोमः । श्रावण्यां क्षत्रधृतिः । भाद्रपद्यां ज्योतिष्टोमः । आश्विन्यां सौत्रामणीति । अथवा ऽभिषेचनीयादारभ्य संवत्सरादूर्ध्वं केशवपनीयः सोमापवर्गो भवति । सर्वेषां व्युष्टिद्विरात्रादि ज्योतिष्टोमपर्यन्तानां सोमानामपवर्गे समाप्तावन्ते भवतीत्यर्थः । तथा च प्रयुग्घविषां सद्यस्त्वमेव भवति न मासान्तरता असम्भवात् ।

यदा प्रयुग्घवींषि मासान्तराणि क्रियन्ते तदा तैरेव संवत्सरस्य व्याप्तत्वात् सर्वसोमानामन्ते केशवपनीयस्याभिषेचनीयात संवत्सरेऽनुष्ठानं भवन्ति ।

अस्मिन् पक्षे मार्गशीर्षे पौर्णमास्यां व्युष्टिद्विरात्रः । पौषपौर्णमास्यां त्रिष्टोमः । चैत्रपौर्णमास्यां केशवपनीयः । सर्वसोमानामन्ते वैशाखे पौर्णमास्यां सौत्रामणीति ।

अथास्याः सौत्रामण्या इति कर्तव्यता लिख्यते । तत्र चतुर्दश्यां यथेष्टं प्रारम्भं कुर्यात् । तत्र विरूढानामविरूढानां च व्रीहीणां क्षौमेबन्धनम् । ततः सीसेन क्लीबात् पूर्वोक्तानां व्रीहीणां तूष्णीं क्रयणम् ।

**सिंहवृकव्याघ्रलोमानि चावपति ॥२६॥ पशुषु वा॥२७॥ पुरोडाशधर्मा द्रव्यसामान्यात् ॥२८॥ यावदुक्तं सौम्भिका गुणत्वात् ॥२९॥९॥**

**त्रिपशुः पशुबन्धः श्वश्चतुर्थ्याम्॥१॥ एकार्यां वा॥२॥ आश्विनोऽजः श्येतः ॥३॥ मल्हाऽविः सारस्वती ॥४॥**

ततः त्रिपश्वर्थमाहवनीयदक्षिणाग्न्योरुद्धरणम् । अग्न्यन्वाधानम् । ब्रह्मवरणम् । त्रिपशुनाऽहं यक्ष्य इति ।

तत आहवनीयं दक्षिणेन समन्त्रकमुपवेशनम् । यजमानस्य व्रतग्रहणं वा । दक्षिणत उपवेशनम् । ततः सर्वार्थपक्षे संयवनार्थपक्षे च प्रणीताप्रणयनं नादृष्टार्थपक्षे । ततः सुरानिष्पत्त्यर्थं पात्रासादनम् । शूर्याग्निहोत्रहवण्यौ । स्फ्यः स्थाली । कृष्णाजिनोलूखलमुसलम् । पात्री धान्यमविरूढा व्रीहय एव । पवित्रच्छेदनानि पवित्रे । संयवनोदकम् । शूर्पादानादि । ग्रहणं सादनान्तम् ।

तत्रैकग्रहणपक्षे तन्त्रेणैकस्य चतुर्मुष्टिकस्य ग्रहणम् । अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे जुष्टं० । त्रयाणां ग्रहाणां ग्रहणपक्षे च त्रीणि चतुर्मुष्टिकानि गृह्यन्ते । अश्विभ्यां जुष्टं० । सरस्वत्यै जुष्टं० । इन्द्राय सुत्राम्णे जुष्टं० इति । अस्मिन्नपि पक्षे एकमेव चतुर्मुष्टिकमिति सम्प्रदायः ।

पवित्रकरणादिग्रहणवत्प्रोक्षणम् । पात्रप्रोक्षणम् । प्रोक्षणीनां निःशेषीकरणम् । कुक्कुटाहननाभावः । अजिनादानादि फलीकरणान्तं कण्डनम् । उपसर्जन्यधिश्रयणम् । तण्डुलेक्षणम् । सपवित्रे चरौ संवापादिश्रृतालम्भनान्तम् । चरौ विरोधादनभिघारणम् । उद्वासनम् । प्रणयनपक्षे प्रणीताविमोकः ।अत्र समन्त्रकाः शूर्पाग्निहोत्रहवण्यादयः सर्वे पदार्थाः । ततो विरूढान् व्रीहींश्चूर्णीकृत्याश्विभ्यां पच्यस्वेति मन्त्रणौदनेन सह संसृजति । ततः सिंहवृकव्याघ्रलोम्नामोदनमध्ये विकल्पेन प्रक्षेपः । ततो निखननम् ।

इति पञ्चदशस्य नवमी कण्डिका ॥ ९ ॥

---

चतुर्दश्यामुपक्रमपक्षे श्वः पौर्णमास्यां त्रिपशुः पशुबन्धः । द्वादश्यामुपक्रमपक्षे द्वादशीतश्चतुर्थ्यां पौर्णमास्यामेवेत्यर्थः । तत्र पशुगणत्वादैकादशिनिधर्माः । यूप एकस्त्रयो वा ।

तत्रोद्धरणाग्न्यन्वाधानब्रह्मवरणानि सुरानिष्पादनात्पूर्वमेव कृतानि सन्ति । ततो यूपाहुत्यादि क्रियते । पशौ न प्रणीताप्रणयनव्रतग्रहणादि । वरुणप्रघासवद् द्वावग्नी । दक्षिणस्याग्नेर्वेद्यभावः । उत्तर-

ऋषभमिन्द्राय सुत्राम्णे तद्गुणाभावेऽजाः ॥५॥ प्रथमो लोहितः ॥६॥ त्रियूपो वैकादशिनिलिङ्गात् ॥७॥ अग्नी वरुणप्रघासवत् ॥८॥ अवेदिर्दक्षिणः ॥९॥ वपामार्जनान्ते कुशैः परिस्रुतं पुनाति वायुः पूत इति ॥१०॥ कुवलकर्कन्धुबदरचूर्णानि चावपाति ॥११॥ ग्रहं गृण्हाति कुवि-

---

स्मिन् पाशुको भवति । वरुणप्रघासवदग्निप्रणयनम् । दक्षिणस्य प्रतिप्रस्थातुः प्रणयनम् । परिस्तरणं च पाशुकम् । पात्रासादनम् । जातिभेदपक्षे वपाश्रपणीशूलोखानां भेदः । वपाश्रपण्या आसादनानन्तरं दक्षिणा पूर्णपात्रम् । कर्मापवर्गो वा ।

कुवलकर्कन्धुबदरचूर्णानि । वैकङ्कतमेकं ग्रहपात्रं त्रीणि वा । शिक्यम् । शतछिद्रो नवछिद्रो वा कुम्भः । दक्षिणस्याग्नेः इध्मः परिधयश्च। ततः पात्रप्रोक्षणादि । उत्तरेध्मपरिध्यनन्तरं दक्षिणेध्मपरिधीनामासादनप्रोक्षणे । आहवनीयकल्पनपरिधिपरिधानसामिधेनीप्रक्षेपोपवाजनसंमार्गादीनि दक्षिणेऽग्नौ अध्वर्युणा सह प्रतिप्रस्थात्रा कर्तव्यानि । अग्निभ्यां समिध्यमानाभ्याम्, अग्नी अग्नीत्संमृड्ढीत्याद्यूहश्च । गार्हपत्ये श्रपणनियमः । द्विःपरिवीतो यूपः ।

उपाकरणमन्थनयोर्नियमः । वपालेक्षणान्ते वा प्रतिप्रस्थातः पशुनेहीति प्रैषः । पशवस्त्रयः । आश्विन ईषद्रक्तश्छागः । मल्हा मेषी सारस्वती । यस्या ऊर्णासु रजो न तिष्ठति सा मल्हा । इन्द्राय सुत्राम्णे ऋषभ इति । एवं गुणकपशूनामभावे त्रयोऽप्यजा एवालभ्यन्ते । अस्मिन्नपि पक्षे आश्विनो लोहित एव भवति । अश्विभ्यां जु० सरस्वत्यै जु० इन्द्राय सुत्राम्णे जु० इति । परिपशव्याहुत्योर्नियमः ।

अनेकपाशुके ऊहा उक्ताः । यथाचोदितप्रैषाः । वपायां नाज्यभागौ । उपरिष्टाद् द्विरभिघारः । वपामार्जनान्तेऽध्वर्युर्वायुः पूत इति मन्त्रेण कुशैः सुरां पुनाति क्वचित् पात्रे । ततः पूतायां कुवल-कर्कन्धुबदरचूर्णान्यावपति । कुवलान्यामलकबदराणि महान्ति । कर्कन्धून्यारण्यकबदराण्यपनुपजीव्यानि । घोटकदराणि चणकबदराणि सूक्ष्माणि । ततोऽध्वर्युरेकं वा त्रीन् वा सुराग्रहान् गृह्णाति । तत्रैकग्रहग्रहणपक्षे कुविदङ्गेति मन्त्रेण यथापठितेनेन्द्राय त्वा सुत्राम्णेऽनुब्रूहीति ।

ततो दक्षिणेऽग्नौ गत्वा आश्राव्याश्विनौ सरस्वतीमिन्द्रं सुत्रामाणं यजेति । ग्रहत्रयपक्षे प्रथममन्वितरयोर्होमः । दक्षिणेऽग्नौ वषट्कारानुवषट्कारयोः सशेषहोमः । इदमश्विभ्याᳪ सरस्वत्या इन्द्राय सुत्राम्णे ।

**दद्भेति त्रीन्वा प्रतिदेवतमेतथैव ॥१२॥ समस्यानुवाचनं यजेति च ॥१३॥ प्रथमस्यानुहोमामितरौ ॥१४॥ परिस्रुद्धोमो दाक्षिणे ऽग्नौ ॥१५॥ भक्षमाहृत्य परिस्रुच्छेषमासिच्य रुक्मवच्छिद्रं कुम्भं शिक्यं कृत्वोपरि दक्षिणस्य धारयन्स्रवन्तमुपतिष्ठते तृचैः सोमवतां बर्हिषदामग्निष्वात्तानामिति ॥१६॥ हवींषि निर्वपति सावित्रवारुणैन्द्राणि यथोक्तं पशुपुरोडाशार्थे ॥१७॥ नपुंसको दक्षिणा**

---

इदमग्नय इति त्यागौ । ततो होत्रे भक्षाहरणम् । अध्वर्युहोतृभ्यां भक्षणम् । ततो दक्षिणाग्नेर्दक्षिणोत्तरे स्थूणे निखाय तस्मिन् शिक्यं शतच्छिद्रं नवच्छिद्रं वा कुम्भं कृत्वा तस्मिन् कुम्भे परिशिष्टां सुरामासिञ्चति ।

ततो दक्षिणाग्नेरुपरि स्रवन्तीं सुरामुपतिष्ठते । त्वꣳ सोम प्रचिकित इति पितॄणां सोमवतां तृचेन । ततो बर्हिषदः पितर इति बर्हिषदां तृचेन । तत आयन्तु नः पितर इत्यग्निष्वात्तानां तृचेन । एवं नवभिर्ऋग्भिरुपतिष्ठते । ततो राक्षसभागः। ततः पशुपुरोडाशानां स्थाने त्रयाणां हविषां निर्वापः। तत्र सावित्रोऽष्टाकपालो द्वादशकपालो वा पुरोडाशः । वारुणो यवमयश्चरुः । ऐन्द्र एकादशकपाल इति त्रीणि । तत्र प्रणीताप्रणयनादि । पात्रसंमार्गान्ते पशुविशसनादि खण्डप्रैषान्तम् । ततो हविषामुद्वासनाद्यालम्भनान्तम् । ततो हविषां पशुपुरोडाशवद्यागो भागपरिहरणान्तः । ततो दक्षिणादानम् । नपुंसको गौर्दक्षिणा । रथवाही वडवा वा दक्षिणा । ततः प्रतिप्रस्थातः पशुषु संवदस्वेति प्रैषः । प्रतिप्रस्थातुः संवादः ।

अभिघारणाद्यध्वर्योश्चरुहोमान्तम् । ग्रहदेवतापूर्वकं व्यूहनम् । अश्विनोः सरस्वत्या इन्द्रस्य सुत्राम्णः सवितुर्वरुणस्येन्द्रस्याश्विनोः सरस्वत्या इन्द्रस्य सुत्राम्णो वनस्पतेरुज्जितिम् । अश्विनौ सरस्वतीन्द्रः सुत्रामा सविता वरुण इन्द्रोऽश्विनौ सरस्वतीन्द्रः सुत्रामा वनस्पतिस्तमपनुदन्त्विति । समिष्टयजूꣳषि नव । भिन्नजातीयेषु पशुषु शूलावभृथे शुच स्थ तमभि शोचत योऽस्मान् द्वेष्टि यं च वयं द्विष्मो माऽपो मौषधीर्हिꣳसिष्टेति विशेषः ।

सोमातिपूतस्याऽप्येषा सौत्रामणी प्रायश्चित्तार्था भवति । तस्यापि पूर्ववत्सर्वम् । विशेषस्तु एतावान् वैकल्पिकः । पशुपुरोडाशनिर्वापकाले प्रथमं त्रिकपालस्याश्विनस्य निर्वापः । ततः सावित्रादीनां पशुपुरोडाशार्थानाम् । तत्पात्रसंमार्गान्ते पशुविशसनादि खण्डप्रैषान्तं कृत्वा हवि-

रथवाही वा वडवा ॥१८॥ सोमातिपूतस्याऽप्येषा ॥१९॥ अनुयाजान्ते पशुपुरोडाशार्थैश्चरत्याश्विनेन प्रागवदानेभ्यः ॥२०॥ हविर्भिर्वा ॥२१॥ आश्विनाभावस्तु ॥२२॥ राजसूययाजिनः कर्मापवर्गे वा सौत्रामणी ॥२३॥ त्रैधातव्यानुपूर्व्ययोगात् त्रैधातव्यानुपूर्व्ययोगात् ॥२४॥१०॥

षामुद्वासनादि प्राणदानान्तं कृत्वा सावित्रादीनि सुगुप्ते देशे निधाय केवलेनाश्विनेन द्विकपालेन पुरोडाशेन प्रचरति ।

भागपरिहरणान्ते दक्षिणादानम् । ततः संवादप्रैषादिश्चरुहोमान्तम् । ततः स्रुग्व्यूहनात् प्राक् सावित्रादिभिः प्रचारो भागपरिहारान्तः । स्रुग् व्यूहनम् । अश्विनोः सरस्वत्या इन्द्रस्य सुत्राम्णो वनस्पतेः सवितुर्वरुणस्येन्द्रस्योज्जितिं० अश्विनौ सरस्वतीन्द्रः सुत्रामा वनस्पतिः सविता वरुण इन्द्रस्तमपनुदन्त्विति । अत्र कालभेदाभावाद् ग्रहदेवतानामाश्विनस्य द्विकपालस्य पशुदेवतानां च तन्त्रेणोच्चारणम् । ततः सौत्रामण्यन्ते त्रैधातव्युदवसानीया पूर्ववत् । अत्र पशुगणे वैकादशिनिधर्मा ये एकादशिन्यामसाधारणपठिता यूपैकादशिनी वेत्यारभ्य त्वाष्ट्रान्तास्त एव भवन्ति नाग्ये सवनीयधर्माः । अन्यत् सर्वं पशुगणेऽपि निरूढवद्भवतीति श्री अनन्तयाज्ञिकाः ।

अतस्तेषां मते त्रिपशुषु सुरानिष्पत्तिकाले वरणानन्तरमग्निप्रणयनानन्तरं वा व्रतग्रहणम् । यूपाहुतियूपच्छेदानन्तरं षड्ढोताराहुतिः । यूपश्च पालाशस्त्र्यरत्निश्चतुररत्निर्वा । अथवा त्रयो यूपाः खादिराः षोडशसप्तदशाष्टादशारत्निप्रमाणाः क्रमेण भवन्ति । अग्निप्रणयनानन्तरं प्रणीताप्रणयनम् । न प्रतिप्रस्थातः पशुभिरेहीति प्रैषः । न गार्हपत्ये श्रपणनियमः । नोपाकरणमन्थने, त्रिवृत्पूरणं नैकवृत् । न द्विः परिवीतो यूपः । परिपशव्याहुत्योरपि न नियमः ।

वपायामाज्यभागौ सकृदभिघारश्च । दक्षिणादानान्त एव पशुविशसनानि । न खण्डप्रैषः । न प्रतिप्रस्थातुः संवादप्रैषः । स्वीय एव संवादः । श्रोण्येव समिष्टयजूंषि । पशुपुरोडाशे न प्रणीतादि । इत्यादि विशेषः ॥

इति पञ्चदशस्य दशमी कण्डिका ॥ १० ॥

इति श्री राजसूयः समाप्तः ॥

इति त्रिरग्निचित् सम्राट् स्थपतिर्विंशत् क्रतुकृत् महायाज्ञिक श्री प्रजापतिसुत कृत कात्यायन सूत्रपद्धतौ पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ।

अग्निः सोमाङ्गं तद्गुणत्वात्तेषङ्गात् ॥१॥ इच्छतः समहाव्रते नियमः ॥२॥ न प्रथमाहारे ॥३॥ उत्तरवेद्यग्निनिधानात् ॥४॥ चिकीर्षमाण उत्तरस्यां फाल्गुन्यां पौर्णमासेनेष्ट्वा पञ्च पशूनालभते ऽदक्षिणान् ॥५॥ ब्रह्मणे वा दद्यात् ॥६॥ अमावास्यायामेके ॥७॥ अग्निभ्यः कामाय पुरुषाश्वगोऽव्यजान् ॥८॥ वर्षिष्ठरशनः पुरुषोऽनुपूर्व्या इतरेषाम् ॥९॥ सर्वेषां वा तुल्याः ॥१०॥ समिध्यमान-

अथ सोमाङ्गभूतस्याग्निचयनस्य पद्धतिर्लिख्यते । तदग्निचयनं सोमयागमात्रे विकल्पेन भवति । समहाव्रते च नित्यम् । नित्यस्याग्निष्टोमस्य प्रथमप्रयोगे न भवति । द्वितीयादिप्रयोगे तु तत्रापि भवत्येव । षोडशिनि तु शाखान्तरे प्रतिषेधात्साद्यस्क्रेषु सारस्वतेषु चासंभवादग्न्यभावः।

तत्र चयनं करिष्यमाणस्य फाल्गुने कृष्णप्रतिपदि पौर्णमासयागानन्तरममावास्यायां वा इष्टकापशुर्भवति । तत्र त्रयः पक्षाः । एकस्मिन्पक्षे पुरुषाश्वगोऽव्यजाः पञ्च पशवो भवन्ति । तत्र द्वितीये पक्षे प्राजापत्यः पशुः । तृतीये वायव्य इति ।

तत्र पूर्वं पञ्चपशुपक्षो लिख्यते । तत्र वरणे–पञ्चपशुना इष्टकापशुनेति । ततो भूसंस्कारादि । उद्धरणे-पञ्चपश्विष्टकापश्वर्थमित्याहवनीयदक्षिणाग्न्योर्विहरणम् । अग्न्यन्वाधानम् । ब्रह्मवरणम् ।ब्रह्मोपवेशनम् । व्रतग्रहणम् । यूपाहुत्यादि । पञ्चानां यूपानां छेदनम् । एकस्य वा ।

पञ्चयूपपक्षे पञ्चदशारत्निप्रभृत्येकैकारत्निवृद्ध्या पञ्चानां यूपानामानं स्वरुनिष्पत्यन्तम् । ततः षड्ढोतारा ऽऽहुतिः । षट्कासादनाद्युपयमन्युपनिवपनान्तं पशुवत् । ततः प्रणीतादि । मध्यमवर्जं परिस्तरणम् ।

पात्रासादने विशेषः । सप्तविंशतिरिध्मकाष्ठानि । तिस्रो वपाश्रपण्यः । शूलानि पञ्च, उखाः पञ्च, सर्वैर्यागश्चेत् । अजेनैव यागपक्षे एकैकमेवोखादि ।

एकादशिनीवद्यूपनिखननं(१) पशुनियोजनं च । दक्षिणाया अभावः। पशुधेन्वादि वा । पुरुषस्य द्विगुणरशना षड्यामा । अश्वस्य पञ्च

(१) क्रमस्तु प्रथमं सप्तदशारत्नेः । ततोऽष्टादशारत्नेर्द्वितीयस्य । ततः षोडशारत्नेस्तृतीयस्य । तत एकोनविंशारत्नेश्चतुर्थस्य । ततः पञ्चदशारत्नेः पञ्चमस्य ।

समिद्धवत्यन्तरे समास्त्वाऽग्न इति नव दधाति ॥११॥ आप्रियो द्वादशोर्ध्वा अस्येति ॥१२॥ एकादशान्ते शासप्रैषादि करोति ॥१३॥ परिवृते पुरुषसंज्ञपनम् ॥१४॥ अजस्य शुन्धाति प्रचरणयोगात् ॥१५॥ सर्वेषां वाऽविशेषात् ॥१६॥ वैश्यः पुरुषो राजन्यो वा ॥१७॥ कण्ठेषु तृणमन्तर्धाय शिराᳪस्यादत्ते ॥१८॥ चतुर्णामप्सु काय·

---

श्यामा । गोश्चतुर्श्यामा । अवेस्त्रिश्यामा । अजस्य त्रिश्यामा । अथवा सर्वेषामपि त्रिश्यामा एव । अग्निभ्यः कामाम जुष्टं नियुनज्मीति प्रत्येकं नियोगः । एकयूपपक्ष गलगलिकान्यायः । बहुषु यूपेषु वेदेः पूर्वार्द्धं समं विभज्यावटपरिलेखः ।

इदमहं चतुर्विंशेन वजेणेत्यवाधनम् । समिध्यमानसमिद्धवत्योरन्तरे समास्त्वाऽग्न ऋतव इत्याद्या नव दधाति । (१)आवपति द्वादश प्रयाजाः । तेषाम् ऊर्ध्वा अस्य समिध इत्याद्या द्वादश याज्याः ।

एकादशप्रयाजस्यान्ते शासमाहरेत्यादि करोति । तनूनपान्नराशंसयोः समुच्चयेन द्वादश । शामित्रस्य पश्चात्संज्ञपनस्थाने परिवृतं कृत्वा तन्मध्ये पुरुषस्य संज्ञपनम् । पश्चात्पशोर्निषेकान्ते कण्ठेषु तृणमन्तर्द्धाय पुरुषादीनां शिरांसि छिनत्ति । यागार्थं जिह्वां गृहीत्वाऽन्यत्र स्थापयेत् सर्वैर्यागश्चेत् । अजेनव यागपक्षे तस्यैव जिह्वां गृह्णीयात् । एकेन यागपक्षे पुरुषादिचतुर्णां शरीराणामप्सु प्रक्षेपः ।

अग्नीन्कामं गच्छेति प्राणदाने । वपायागे अग्निभ्यः कामाय उपांशु। उस्रस्य मेषस्य छागस्य वपाभ्यो मेदसोऽनुब्रूहि । अग्निभ्यः कामाय उस्रस्य मेषस्य छागस्य वपां मेदः प्रेष्येति च । अनेकपाशुकं सर्वं कर्म यूपकादशिनीवत् । दक्षिणापक्षे तस्या ब्रह्मण एव दानम् । वैश्वानर एकः पशुपुरोडाशः । तत्र निर्गुणो वैश्वानर उपांशु भवति ।

सर्वैर्यागपक्षे हविर्यागे अग्निभ्यः कामाय पुरुषस्याश्वस्योस्रस्य मेषस्य छागस्य हविषोऽनुब्रूहि । हविः प्रेष्येति च । अत्रापि देवता पदमुपांशु । अनेकस्वरुहोमे दिवं वो धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मना पृणत स्वाहेति ।

---

( १ ) ये३ ऊनोवौ १. हे३ तनू. नावौ. हे३ मध्वा. रावौ ३ । हे३ छां ववौ. ४ हे३ सश्वावौ ५ हे३ द्वावो. वावौ ६ अस्तु नो वौ. ७ हे३ दैव्या छीवौ ८ हे३ तिस्रो. नावा० हे३ तन्न. रमे वां० १० हे३ वन० तोवो० ११ हे३ अग्ने स्वाहा० तां वौ १२ ।

प्रासनम् ॥१९॥ ततो मृदिष्टकार्थापश्च ॥२०॥ अजेन च-
रति ॥२१॥ सꣳस्थिते तस्य शेषप्रासनम् ॥२२॥ सर्वैरेके
॥२३॥ एकस्यापि किं ततः सम्भरेदिति श्रुतेः ॥२४॥
वैश्वानरः पशुपुरोडाश उपाꣳशु ॥२५ पशुर्देवता च॥२६
आग्नेय्यो याज्यानुवाक्याः कामवत्यः ॥२७॥ मैथुनं वर्ज-
येदा पयस्यायाः ॥२८॥ माꣳसोपर्यासने चेच्छन् ॥२९॥
त्वङ्मस्तिष्कोद्धृतानि घृताक्तानि शिराꣳसि निदधाति
॥३०॥ सकलानि वा ॥३१॥ अन्यानि वा ॥३२॥ हिरण्य

---

व्यूहने अग्नीनां कामस्य वैश्वानरस्याग्नीनां कामस्य वनस्पतेरुज्जि-
तिम् । अग्नयः कामो वैश्वानरोऽग्नयः कामो वनस्पतिस्तमप नुदन्त्विति ।
पुरोडाशदेवतया ( विजातीयतया ) व्यवधानाद्युपायागदेवतायाः पृथ-
गुच्चारणम् ।

शूलावभृथेऽनेकशूलपक्षे शुच स्थ तमभि शोचत० माऽपो मौषधीर्हि
ꣳसिष्टेति विशेषः । सꣳस्थिते अन्तु शेषप्रासनम् । पयस्यापर्यन्तं
यजमानस्य मांसमैथुनवर्जनसंकल्पः । मांसभोजनोपसर्यासनयोरिच्छ-
या वर्जनम् ।

ततः शिरोभ्यस्त्वङ्मस्तिष्कोद्धरणम् । ततः शिरसां घृतेनाञ्जनम् ।
क्वचित्सुगुप्ते स्थाने निदधाति । मस्तिष्कशब्देन शिरःकपालगता मज्जा-
ऽभिधीयते । अथवा सकलानामेव निधानम् ।

अथवा पश्वालम्भमकृत्वैव संग्रामहतानां पुरुषादीनां शिरांस्यानीयो-
पधेयानि । अथवा सौवर्णानि मृन्मयानि वा कार्याणि । तस्मिन्पक्षेऽन
भ्यञ्जनम् । इति पञ्चपशुपक्षः ॥

अथ पञ्चपशुपक्षे एव "एकादशिनीधर्माः पशुगणेष्वि"ति सूत्रादेका-
दशिनीधर्मा यदा क्रियन्ते तदा विशेषः । व्रतोपायनप्रणीतादेः पशाव-
भावः । पशुपुरोडाशे तानि क्रियन्ते। अनेकयूपपक्षे अवटहोमान्ते प्रति-
प्रस्थातः पशुभिरेहीति प्रैषः । एकयूपपक्षे चषालेक्षणान्तेऽपि संभवति ।
उपाकरणमन्थनयोर्नियमः। परिपशव्याहुत्योर्भागावदानानां च । त्रिः
परिवीतो यूपः । व्रतोपायनप्रणीतादि सर्वं पशुपुरोडाश एव न पशुषु ।
पशुपुरोडाशपात्रसम्मार्गान्ते पशुविशसनादि प्रथमशमित्रनुशासनान्तम् ।
पशुपुरोडाशस्य भागपरिहरणान्ते प्रतिप्रस्थातः पशुषु संवदस्वेति प्रैषः ।
ततो यस्वा पृच्छादित्यादि । नव समिष्टयजूꣳषि । अजयागपक्षेऽपि

मयानि वा ॥३३॥ मृन्मयानि वा ॥३४॥ अनालभ्यैतान् ॥३५॥ श्यामतूपरो वा प्राजापत्यः ॥३६॥ षड् दध्यात् ॥३७॥ हिरण्यगर्भ इत्यृचा स्रुवाघारः ॥३८॥ पूर्वो वा देवतासामान्यात् ॥३९॥ उत्तरे तु सामान्योपदेशाभ्याम् ॥४०॥ वायवे वा नियुत्वते श्वेतलप्सुदी द्वे दध्यात् ॥४१॥ प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः ॥४२॥ कद्रु-

नवैव। विकल्पेनान्वाहार्यो दक्षिणा। पशिवडान्ते तस्य ब्रह्मण एव दानम्।

अथ प्राजापत्यपशुरुच्यते। श्यामः शुक्लकृष्णरोमवान् तूपरः शृङ्गहीनः प्रजापतिदेवतः। एवं विधो वा एक इष्टकापशुर्भवति। तत्र ऋत्विग्वरणे प्राजापत्यनेष्टकापशुनाऽदक्षिणेनेति। प्राजापत्येष्टकापशवर्थमित्युद्धरणे। पात्रासादने चतुर्विंशतिरिध्मकाष्ठानि। पशुदेवता उपांशु। प्रजापतये जुष्टं नियुनज्मीति नियोजने। प्रोक्षणे–प्रजापतये त्वा जुष्टं०। इदमहमेकविंशेन वज्रेणेत्यवबाधने।

समिध्यमानो अध्वर इत्यस्या अनन्तरं समास्त्वाऽग्न इति षडृचोऽन्वाह। ततः समिद्धो अग्न इत्यादि। इत इन्द्र इत्यस्य स्थाने हिरण्यगर्भः समवर्तताग्रे इति मन्त्रेणोत्तराघारः। इदमिन्द्रायेत्येव त्यागः। द्वादश प्रयाजाः। तत्र प्रथमे इदं समिद्भ्य० एको ममेति। द्वितीये इदं तनूनपाते० द्वौ ममेति। तृतीये इदमिड्भ्यो० त्रयो ममेति। चतुर्थे इदं बर्हिषे० चत्वारो ममेति। पञ्चमे इदमग्नये० ममेति। षष्ठप्रभृतिद्वादशपर्यन्तेषु पञ्च मम न तस्य किञ्चनेति। एकादशान्ते शासप्रैषकरणम्।

पश्चात्पशोर्निषेकान्ते पशोः कण्ठे तृणमन्तर्धाय शिरश्छेदनम्। जिह्वाया यागार्थं ग्रहणम्। तत उत्तानं पशुं कृत्वेत्यादि। प्रजापतिं गच्छेति प्राणदाने। प्रजापतये उपांशु छागस्य वपाय मेदसोऽनुब्रूहीति। प्रजापतये छागस्य वपां मेदः प्रेष्येति। द्वादशकपालः प्राजापत्यः। पशुपुरोडाश उपांशु। तत्र प्रजापतये उपांशु पुरोडाशस्यानुब्रू३हि। प्रजापतये पुरोडाशं प्रेष्येति विशेषः। चतुर्द्धाकरणसहितं सर्वम्।

प्रजापतये उपांशु छागस्य हविषोऽनुब्रूहि। प्रजापतये छागस्य हविः प्रेष्येति। व्यूहने—प्रजापतेर्वनस्पतेरुज्जिति०। प्रजापतिर्वनस्पतिस्तमपनुदताम्। अन्यत्सर्वं निरूढवत्। अन्ते शतसङ्कल्पः।

अवशिष्टस्य पक्वस्य त्वगादिरूपस्यापक्वस्य चाजपेषस्याप्सु प्रक्षेपः। त्वङ्मस्तिष्कोद्धृतस्य घृताक्तस्य शिरसः सुगुप्ते देशे निधानम्। महता

न्त्यो याज्यानुवाक्याः प्राजापत्यस्य ॥४३॥ शुक्रवत्यो वायव्यस्य ॥४४॥ वपाया वा ॥४५॥ तुल्यमन्यत्सर्वेषु॥४६॥१॥

उखासम्भरणमष्टम्याम् ॥१॥ आहवनीयस्य पुरस्तान्मत्या चतुरस्रे श्वभ्रे मृत्पिण्डमवदधाति भूमिसमम्॥२॥ पिण्डमपरेण व्यध्वे वल्मीकवपां छिद्रां निदधाति ॥३॥ आहवनीयं दक्षिणेन त्रिवृन्मुञ्जपश्वाङ्गीबद्धास्तिष्ठन्ति प्राञ्चोऽश्वगर्दभाजाः पूर्वापरा रासभो मध्येऽश्वपूर्वाः ॥४॥

---

यत्नेन रक्षणम् । अथवा त्वगाद्यनुद्धृत्य सकलस्यैव शिरसो निधानम् । त्वक्चर्ममस्तिष्कशब्देन शिरःकपालान्तर्गतं मांसमुच्यते । दक्षिणाया विकल्पः । दानपक्षे ब्रह्मण एव पशुधेनुवराणामन्यतमस्य दानम । कर्कमतेऽन्वाहार्यस्य ॥

इति प्राजापत्यपशुपक्षः ॥

अथ वायव्यपशुपक्ष उच्यते । अत्र श्वेतवर्णस्तूपरो लम्बुदी कूर्चलो वायुदेवत्यः पशुः । सोऽप्युपांशु "वायव्योऽग्ना" वित्युक्तत्वात । विंशतिरिध्मकाष्ठानि । सप्तदशेन वज्रेणेत्यववाधनम् ।

समिध्यमान इत्यस्या अनन्तरं समास्त्वाऽग्न इति द्वे अनूच्य समिद्धोऽग्न इत्यादि । प्राकृत उत्तराघारो न हिरण्यगर्भ इति । वायवे छागस्येत्यादि सर्वत्रोहनीयम् । प्राजापत्यो द्वादशकपालः पशुपुरोडाशः ।

व्यूहने वायोः प्रजापतेर्वायोर्वनस्पतेरुज्जितिं० । वायुः प्रजापतिर्वायुर्वनस्पतिस्तमपनुदन्त्विति । वपापशुपुरोडाशपशुदेवतावनस्पतिसंकीर्तनेन व्यूहनम् । पशुपुरोडाशदेवतया व्यवधानाद्वपायागदेवताया भेदेनोच्चारणम् । अन्यत्सर्वं प्राजापत्यवत् ॥

इति वायव्यपशुपक्षः ।

इति त्रिविकल्प इष्टकापशुरुक्तः ।

इति षोडशस्य प्रथमा कण्डिका ॥ १ ॥

---

अथोखासम्भरणमभिधीयते । ततः फाल्गुनस्य कृष्णाष्टम्यामुखासंभरणसंज्ञं कर्म भवति । तत्र पञ्चभूसंस्कारपूर्वकमुखासंभरणार्थमित्याहवनीयदक्षिणाग्न्योरुद्धरणम् । चतुरासनम् । तूष्णीं सावित्राहुत्यर्थं ब्रह्मवरणम् । "आवृताऽवषट्कारास्त्वि"ति वचनात् ।

**उत्तरत आहवनीयस्यारत्निमात्र उभयतस्तीक्ष्णा वैणवी सुषिराऽभ्रिः कल्माष्यभावेऽकल्माषी प्रादेशमात्र्यरत्निमात्री वा ॥५॥ हिरण्मयीमेके ॥६॥ अष्टगृहीतं जुहोति·**

ततस्तूष्णीमासनं संस्कृत्य ब्रह्मण उपवेशनम् । तत आहवनीयस्य पुरस्तादिच्छाप्रमाणे प्रदेशे चतुष्कोणं गर्तं खात्वा तस्मिन्गर्ते भूमि(१) समं मृत्पिण्डमवदधाति । मृत्पिण्डश्च यास्वप्सु पशुशेषस्य प्रक्षेपः कृतो भवति तत आनेयः । अत्रोखादिकरणे यदुदकमुपयुज्यते तदपि तत एवानेयम् ।

ततः पिण्डाहवनीययोरर्द्धमार्गे वल्मीकवपां छिद्रयुक्तां निदधाति । वल्मीकवपा वल्मीकस्योपदीकाभिः कृतस्य मृत्सञ्चयस्य वपेव वपा अभ्यन्तरो भागः छिद्रसंयुक्तः ।

तत आहवनीयस्य दक्षिणतः प्राङ्मुखोऽश्वः । अश्वस्य पश्चात्प्राङ्मुखो गर्दभः । ततः पश्चात्प्राङ्मुख एवाजः । एते त्रयोऽपि त्रिगुणमुञ्जरज्जुनिर्मिताभिः पञ्चाङ्ग्याभिमुखरिकाभिर्बद्धास्तिष्ठन्ति ।

पञ्चाङ्ग्यश्चैवं निष्पाद्यन्ते–एका मुखबन्धनार्था वृत्ताकारा रज्जुः । द्वितीया चोभयतः प्रान्तयामुखबन्धनार्था या बद्धा चक्षुःश्रोत्रयोरन्तरालेन शिरसि स्थापनाय । तृतीया च चक्षुषोरधस्तान्मुखस्याग्रे प्रान्तयोः पूर्वरज्ज्वामुभयतो बद्धा । चतुर्थी च चक्षुःश्रोत्रान्तरालवर्तिन्यां दक्षिणतो बद्धा । मुखर्या मुखे प्रवयणानन्तरं ग्रीवाया अधस्तान्नीत्वा उत्तरप्रदेशे बन्धनार्था । पञ्चमी चावलम्बनरज्जुर्वलीसंज्ञा । एवं मुखर्यः पञ्चाङ्ग्यः कार्याः ।

तत आहवनीयस्योत्तरतोऽरत्निमात्रे वंशमयी अरत्निमात्री प्रादेशमात्री वा उभयतस्तीक्ष्णा सुषिरा सच्छिद्रा अभ्रिः स्थापनीया । सा च च कल्माषी । स्वभावतः परिपाकवशेन विचित्रवर्णा अभावे अकल्माष्यपि भवति । केचित्सुवर्णमयीमभ्रिमिच्छन्ति ।

तत आहवनीयस्योत्तरतोऽर्थात्परिमाणं चतुरस्रं परिवृतं कृत्वा तन्मध्ये सप्तभूसंस्कारान् कृत्वा सिकतानामुपकिरणं कुर्यात् । तत एकस्मिन्पात्रे आर्द्राः पलाशत्वचः कृत्वा तस्मिन्नुदकमासिच्य तत्पात्रं दक्षिणाग्नावधिश्रित्योदकमुत्कालयेत् ।

(१) भूमिसममिति पार्श्ववर्तिन्या भूमेररत्निनिम्नोन्नतमिति भाष्ये । भूमिनिधानपर्याप्तमिति रामः ।

सन्ततमुद् गृह्णन्युञ्जान इति ॥७॥ देवस्य त्वेत्यग्निमादाय हस्त आधायेत्यनामभिमन्त्रयते ॥८॥ अश्वप्रभृतींश्च प्रत्यृचं प्रतूर्तं युञ्जाथां योगे योग इति ॥९॥ अनुस्पृशन्नुत्क्रमयत्येनान्प्राचः प्रतिमन्त्रं प्रतूर्वन्नुर्वन्तरिक्षं पृथिव्याः सधस्थादिति ॥१०॥ अग्निषु ज्वलत्सु पिण्डं गच्छन्त्यग्निं पुरीष्यमिति ॥११॥ दक्षिणतश्च पशवो युगपत् ॥१२॥ अनड्वापुरुषमीक्षते देवपितृमनुष्यानर्थकमग्निं पुरीष्यमिति ॥१३॥ वल्मीकवपामादाय छिद्रेण पिण्डमीक्षतेऽन्व-

---

ततः पूर्णाहुतिवदाज्यं संस्कृत्याष्टगृहीतं जुह्वां गृहीत्वाऽऽहवनीये परिस्तरणसमिदाधानपूर्वकं युञ्जानः प्रथमं मन इत्याद्याभिरष्टाभिर्ऋग्भिः सन्ततमविच्छिन्नं स्रुचमूर्ध्वामुद् गृह्णन् जुहोति । अष्टानामन्ते एकः स्वाहाकारः । इदं सवित्र इति त्यागः । अष्टर्चान्त एव सन्ततं जुहुयान्नादित इति सम्प्रदायः । युञ्जान इत्यारभ्यान्तपर्यन्तं सन्ततमित्यपरे ।

ततो देवस्य त्वेति मन्त्रेण जागतेन छन्दसाऽङ्गिरस्वदित्यन्तेनाग्निमादाय दक्षिणहस्तस्थामेव तामग्निं हस्त आधायेत्यभि मन्त्रयते । ततोऽग्नौ हस्तस्थितायामेवाश्वादीनभि मन्त्रयते । प्रतूर्तमित्यश्वम् । युञ्जाथामिति रासभम् । योगे योग इत्यजम् ।

ततोऽश्वादीनां स्पर्शमकुर्वन्नेव पाणिमुद्यम्य भयप्रकाशनेनैवाश्वादीन् प्राच्यामुत्क्रमयति गमयति इत्यर्थः । प्रतूर्वन्नित्यर्द्धर्चेनाश्वम् । उर्वन्तरिक्षं वीहीत्यर्द्धेन रासभम् । पृथिव्याः सधस्थादाभरेत्यन्तेनाजम् । ततो गार्हपत्याद्यग्नय इन्धनानि प्रक्षिप्य प्रदीप्ताः कार्याः ।

ततो ज्वलत्स्वग्निष्वाहवनीयमुत्तरेण ब्रह्मयजमानाध्वर्यवोऽग्निं पुरीष्यमङ्गिरस्वदच्छेम इति मन्त्रेण पिण्डं प्रति गच्छन्ति । सर्वेषां मन्त्रः । अश्वादयश्च दक्षिणतोऽवस्थिता एव ब्रह्मादिभिः सहैव पिण्डं प्रति गच्छन्ति ।

ततो गमने आरब्धेऽध्वर्युरग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम इति मन्त्रेण देवपितृमनुष्याणां निष्प्रयोजनमनड्वापुरुषमीक्षते । ततो वल्मीकवपासमीपं गत्वा तामूर्ध्वां हस्ते गृहीत्वा तिष्ठन्नेव तस्याः छिद्रेण पिण्डं विलोकयति अन्वग्निरिति मन्त्रेण । पिण्डं दृष्ट्वा स्वस्थान एव वल्मीकवपामधो निदधाति ।

ततः पिण्डसन्निधौ गत्वा आगत्य वाजीत्यश्वमभि मन्त्रयते । तत

ग्निरिति ॥१४॥ दृष्ट्वा निदधात्येनाम् ॥१५॥ आगत्ये-त्यभि मन्त्रयतेऽश्वम् ॥१६॥ आक्रम्येत्यनेन पिण्डमधि-ष्ठापयति ॥१७॥ द्यौस्त इति पृष्ठस्योपरि पाणिं धारय-न्ननुपस्पृशन् ॥१८॥ उत्क्रामेत्युत्क्रमयति ॥१९॥ उदक्रमीदि-त्यभिमन्त्रयते ॥२०॥ आहवनीयवत् स्थापयति पिण्ड-स्य ॥२१॥ उपविश्य मृदमभिजुहोत्या त्वा जिघर्मीति-व्यतिषक्ताभ्यामृग्भ्यामाहुती स्रुवेणाश्वपदे ॥२२॥ अ-भ्रया पिण्डं त्रिः परिलिखति परि वाजपतिरिति बहिर्ब-हिरुत्तरयोत्तरया ॥२३॥ अभ्रया पिण्डं खनति देव-स्य त्वेति ॥२४॥ कृष्णाजिनमास्तीर्योत्तरतः॥२५॥ तस्मि-न्पुष्करपर्णमपां पृष्ठमिति ॥२६॥ विमाष्टर्येनद्दिव इति ॥२७॥

---

आक्रम्य वाजिन्निति मन्त्रेणाश्वस्योत्तरपूर्वपादेन पिण्डमधिष्ठापयति । अश्वस्याग्रिमं सव्यं पादं गृहीत्वा पिण्डस्योपरि स्थापयतीत्यर्थः ।

ततोऽश्वपादे पिण्डोपरि स्थित एवोत्थायाश्वस्योपरि दक्षिणं हस्त मसंस्पृष्टं धारयन् द्यौस्ते पृष्ठं पृथिवीति मन्त्रं पठेत् ।

तत उत्क्राम महत इति पिण्डादश्वमुत्क्रमयति अवतारयति । ततः पिण्डादवतारितमश्वमुदक्रमीद् द्रविणोदा इत्यभि मन्त्रयते । तत आहवनी-यवत पिण्डस्य दक्षिणतोऽश्वं प्राङ्मुखं स्थापयति । ततः पश्चाद्रास-भम् । ततः पश्चादजम् । तौ पूर्वं तत्र स्थितावेव भवतः । ततो ब्रह्मयज-मानौ पिण्डस्य दक्षिणत उपविशतः ।

तत आज्यसंस्कारः । स्रुवस्यैव संमार्गः । पिण्डस्य परिस्तरणम् । ततः स्रुवेणाज्यं गृहीत्वा पिण्डस्योपरि यदश्वपदं प्राक् कारितं तत्र द्वे आहुती जुहोति ।

तत्र मन्त्रे संहितापाठादयं विशेषः—आ त्वा जिघर्मि मनसा घृतेन प्रतिक्षि-यन्तं भुवनानि विश्वा । मर्त्यश्री स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा जर्भुराणः स्वा-हेत्येवं व्यतिषक्तया प्रथमाम् । इदमग्नये । आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषेत । पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसं दृशानं स्वाहेत्येवं व्यतिषक्तया द्वितीयाम् । इदमग्नये ।

ततोऽभ्रिं गृहीत्वा पिण्डं त्रिः परि लिखति । तत्र परि वाजपतिरिति पिण्डं परितः प्रथमां लेखां प्रदक्षिणं सर्वतो लिखति । ततः परि त्वाऽग्न

आलभत उभे शर्म च स्थ इति ॥२८॥ पिण्डं पुरीष्योऽसीति ॥२९॥२॥

पाणिभ्यां परिगृह्यास्थेनं दक्षिणोत्तराभ्यां दक्षिणः साग्निस्त्वामग्न इति षड्भिः सर्वं सकृद् धृत्वा पुष्करपर्णे निदधाति ॥ १ ॥ अपः श्वभ्रेऽवनयत्यपो देवीरिति ॥२॥ सन्त इति वातमपक्षिपति ॥३॥ अनामिकया संवपति पुरस्तात्पश्चाद्दक्षिणत उत्तरतश्च ॥४॥ आस्तीर्णयोरन्तानुद् गृह्णाति सुजात इति ॥५॥ त्रिवृता मुञ्जयोक्त्रेणोपनह्यति वासो अग्न इति ॥६॥ उत्तिष्ठति पिण्डमादायोदु तिष्ठति ॥७॥ ऊर्द्ध्वबाहुः प्राञ्चं प्रगृह्य-

---

इति पूर्वरेखाया बहिर्द्वितीयां रेखां करोति । ततस्त्वमग्ने द्युभिरिति द्वितीयलेखातो बहिस्तृतीयां लेखां करोति ।

ततोऽभ्रया देवस्य त्वेति द्वाभ्यां खनाम इत्यन्ताभ्यां पिण्डं गर्तपिण्डान्तरालप्रदेशे सर्वतः खनति । ततः पिण्डस्योत्तरतः प्राग्ग्रीवमुत्तरलोम कृष्णाजिनं तूष्णीमास्तीर्य अपां पृष्ठमित्यनेन पुष्कर इत्यन्तेन कृष्णाजिनस्योपरि पुष्करपर्णमुत्तानं निदधाति ।

इति षोडशस्य द्वितीया कण्डिका ॥ २ ॥

---

ततो दिवो मात्रयेति पुष्करपर्णं विमार्ष्टि । विमार्ज्जनेन पृथु विपुलं करोति इत्यर्थः । ततः शर्म च स्थ इति द्वाभ्यां कृष्णाजिनपुष्करपर्णे सहैवाभि मृशति । ततः पुरीष्योऽसीत्यर्द्धर्चेन पिण्डमभि मृशति । ततः पिण्डं दक्षिणप्रदेशे अग्निसहितेन दक्षिणहस्तेन गृह्णाति । उत्तरप्रदेशे केवलेन सव्यहस्तेन । एवं दक्षिणोत्तराभ्यामुभाभ्यां हस्ताभ्यां समग्रं निःशेषं पिण्डं परिगृह्यैकवारेणैव तूष्णीं सर्वं पिण्डं गृहीत्वा त्वमग्न इति षड्भिर्मन्त्रैर्दर्शतमित्यन्तैः पुष्करपर्णस्योपरि निदधाति ।

ततः श्वभ्रमध्ये अपो देवीरुप सृजेत्युदकं निनयति । ततो हस्तेन वातमुत्पाद्य सं ते वायुरिति मन्त्रेण अवटमध्ये क्षिपति । ततस्तूष्णीं सर्वाभ्यो दिग्भ्यः सकाशादवटमध्येऽनामिकया पुरीषं प्रक्षिपति । प्रथमं पूर्वतः, तत परस्याः, ततो दक्षिणतः, तत उत्तरतः । तत आस्तीर्णयोः कृष्णाजिनपुष्करपर्णयोः प्रान्तान्सर्वत उद् गृह्णाति । बन्धनार्थ-

त्यूदूर्ध्व ऊ षु ण इति ॥८॥ अवहृत्योपरिनाभि धारय-न्नश्वप्रभृतीनभिमन्त्रयते स जात स्थिरो भव शिवो भवेति ॥९॥ धारयत्येषामुपरि पिण्डमनुपस्पृशन्प्रैतु वाजी वृषाऽग्निमित्यश्वखरयोः ॥१०॥ अग्न आयाहीत्याहृत्य खराच्छागस्यर्तꣳ सत्यमित्या निधानात् ॥११॥ आयन्त्या-वर्त्य पशूनजः पुरस्ताद्रासभो मध्ये ॥१२॥ अनद्धापुरुष-मीक्षते पूर्ववदग्निं पुरीष्यामिति ॥१३॥ उत्तरत आहवनी-यस्योद्धतावोक्षिते सिकतोपकीर्णे परिश्रुते प्राग्द्वारे पिण्डं निदधात्योषधय इति ॥१४॥ वि पाजसेति प्रमुच्यैनमज-लोमान्यादाय प्रागुदीचः पशूनुत्सृजाति ॥१५॥ आपो हि

---

मूर्ध्वान् करोति सुजातो ज्योतिषेत्यदूर्ध्वर्चेन ।

ततस्त्रिगुणेन मुञ्जमयेन योक्त्रेण वासोऽ अग्न इत्यदूर्ध्वचन तानूर्ध्वी कृतान् कृष्णाजिनपुष्करपर्णयोरन्तान् बध्नाति । ततस्तूष्णीं पिण्डमादा-योदु तिष्ठ स्वध्वरेति मन्त्रान्ते उत्तिष्ठति । तत ऊर्ध्ववाहुः प्राच्यां दिशि पिण्डमूर्ध्वं धारयति ऊर्ध्वऽ ऊ षु ण इति ।

ततस्तस्मात्प्रदेशात्पिण्डमवहृत्य नीचैरानीय नाभेरुपरि पिण्डं धार-यन्नश्वादीनभि मन्त्रयते । तत्र स जातो गर्भ इत्यश्वम् । स्थिरो भव वीड्वङ्ग इति रासभम् । शिवो भव प्रजाभ्य इत्यजम् । ततोऽश्वादीनामुपरि पिण्डं धारयति स्पर्शमकुर्वन्नेव ।

तत्र प्रैतु वाजी कनिक्रदिति मन्त्रेण पुरेत्यन्तेनाश्वस्योपरि पिण्डं धारय-ति । ततो वृषाऽग्निमित्यर्द्धर्चेन रासभस्योपरि पिण्डं धारयति । ततोऽग्नऽ आयाहीति पादेन खरात्पिण्डमाहृत्य ऋतꣳ॰ सत्यमृतꣳ॰ सत्यमित्येतावता म-न्त्रेण छागस्योपरिष्टात्पिण्डं परिवृतमध्ये निधानपर्यन्तं सन्ततं धारयति ।

ततोऽजं तत्र स्थितमेव प्रदक्षिणमावर्त्य प्रत्यङ्मुखं कारयित्वा तत्र स्थितमेव गर्दभं तथैव कारयित्वाऽश्वमपि स्वस्थानस्थितमेव प्रदक्षिण मावर्त्य प्रत्यङ्मुखं कारयेत् । एवं कारयित्वाऽजस्योपरिष्टात्पिण्डं धार-यन्नेव ब्रह्मादिभिः सहितोऽश्वादिभिश्चाहवनीयं पूर्वेणैव परिवृतं प्रति गच्छति ।

तत्र परिवृते गमने प्रारब्धे पूर्ववदग्निषु ज्वलत्सु आहवनीयसमी-पमागतः सन्ननद्धापुरुषमीक्षतेऽग्निं पुरीष्यमङ्गिरस्वद्भराम इत्यनेन । तत उत्त-

छेति पर्णकषायपक्कमुदकमासिञ्चति पिण्डे १६॥ फेनं च तूष्णीं ततः कृत्वा ॥१७॥ अजलोमभिः सꣳसृजति मित्रः सꣳसृज्येति ॥१८॥ शर्कराऽयोरसाश्मचूर्णैश्च रुद्राः सꣳसृज्येति ॥१९॥ सꣳसृष्टामिति संयौति ॥२०॥ अषाढां करोति महिषी प्रथमवित्ता तदाख्या ॥२१॥ यजमानपादमात्रीं त्र्यालिखिताम् ॥२२॥ यजमान उखां करोति मृदमादाय मखस्य शिर इति ॥२३॥ प्रादेशमात्रीं तिर्यगूर्ध्वां च ॥२४॥ पञ्चप्रादेशामिषुमात्रीं वा तिर्यक् पञ्च-

---

रतो गत्वा प्राग्द्वारेण परिवृतं प्रविश्य दक्षिणतोऽवस्थितादजात्पिण्डमुत्तरतोऽवतार्य ओषधयः प्रति मोदध्वमिति द्वाभ्यामृग्भ्यां परिवृतमध्ये निदधाति ।

अस्मिन्नेवावसरे परिवृतं कृत्वा सप्त संस्कारान् कृत्वा सिकतोपकिरणं ततः पिण्डनिधानमिति सम्प्रदायः । ततो वि पाजसा पृथुनेति मन्त्रेण योक्त्रं विमुञ्चति । ततोऽजस्य लोमान्याच्छिद्याद्यायाश्वरासभच्छागानैशानीं दिशं प्रत्युत्सृजति ।

ततो यद्दक्षिणाग्नौ पूर्वमधिश्रितमुत्कालनार्थमुदकं तत्पर्णकषायपक्वोदकं, तस्मादुदकात्फेनमुद्धृत्य पात्रान्तरे स्थापयेत् । तत आपो हि ष्ठेति त्रिभिस्तत्पर्णकषायपक्कमुदकं पिण्डस्योपर्या सिञ्चति ।

ततः फेनं तूष्णीं पिण्डस्योपर्यासिञ्चति । ततो मित्रः सꣳ० सृज्येति मन्त्रेणाजलोमभिः पिण्डं संसृजति संयोजयति । ततो रुद्राः सꣳ०सृज्य पृथिवीमित्यनेन शर्कराचूर्णैरयोरसचूर्णैरश्मचूर्णैश्च सह पिण्डं संसृजति । शर्कराः सूक्ष्माः कण्डुकाः । अयोरसः कीटः । अश्मा दृढः पाषाणः ।

ततः सꣳ०सृष्टां वसुभिरिति त्रिभिः पिण्डं संयौति मिश्रयति कुष्णाति । ततो यजमानस्य प्रथमपरिणीता पत्नी अषाढासंज्ञामिष्टकां यजमानपादप्रमाणां त्र्यालिखितां करोति ।

ततो यजमान उखां करोति । तत्र पूर्वमुखातलस्य करणपर्याप्तां मृदं मखस्य शिरोऽसीति एतावता मन्त्रेण मृत्पिण्डादादत्ते । ततस्तां मृदं भूमौ निधाय वसवस्त्वेति मन्त्रेण प्रथयति प्रथनेन प्रादेशमात्रं समचतुरस्रमुखायास्तलं करोतीत्यर्थः ।

तत एवमुखातलं निष्पाद्य सर्वतश्चतुर्ष्वपि पार्श्वेषु तस्य प्रथितस्य तलस्यान्तानुन्नयति मध्यप्रदेशापेक्षयाऽङ्गुलमात्रमुच्चां करोतीत्यर्थः ।

**पशौ ॥२५॥ वसवस्त्वेति प्रथयति ॥२६॥ अन्तानुन्नीय सर्वतः प्रथमं धातुमादधाति रुद्रास्त्वेति ॥२७॥ संलिप्य श्लक्ष्णां कृत्वोत्तरमादित्यास्त्वेति ॥२८॥ विश्वे त्वेति समीकरोति ॥२९॥ वितृतीय उत्तरे वर्तिं सर्वतः करोत्यदित्यै रास्नेति ॥३०॥ ऊर्द्ध्वास्तूष्णीं प्रतिदिशं चतस्रोऽपरा वर्तीः प्रासाः ॥३१॥३॥**

---

ततो रुद्रास्त्वा कृण्वन्त्विति मन्त्रेण प्रथमं धातुमादधाति । तेषामुन्नीतानामन्तानामुपरि सर्वतः प्रथमां पिण्डिकां संयोजयतीत्यर्थः ।

ततः शिथिलया मृदा धातुसन्धिं सम्यङ् लिम्पति । ततो हस्तमुदकेनार्द्रीकृत्य सर्वतः श्लक्ष्णां सुकुमारां करोति । तत आदित्यास्त्वा कृण्वन्त्वित्यनेनोत्तरं धातुमुपरि वर्तमानां पिण्डिकामादधाति संयोजयति ।

ततो विश्वे त्वेत्यनेनोखां समीकरोति । उखा हि ऊर्ध्वा प्रादेशमात्री भवति । यदि पूर्वोक्तधातुद्वयाधानेनाधिकप्रमाणा निष्पन्ना तदाऽनेन मन्त्रेणाधिकां छित्वा प्रादेशमात्रीं समां कुर्यात् । यदि प्रादेशान्न्यूना तदोभाभ्यां हस्ताभ्यां पार्श्वप्रथनेन वर्द्धयित्वा अनेन मन्त्रेण समां कुर्यात् ।

एवमेकपशुपक्षे प्रादेशमात्री ऊर्द्ध्वा प्रादेशमात्र्येव तिरश्ची उखा कार्या । पञ्चपशुपक्षे तु पञ्चप्रादेशा इषुमात्री वा तिर्यक् प्रागुदगायता कार्या । सा च पञ्चप्रादेशपक्षे पञ्चपद्या लोकव्यापिनी क्षेत्रफलेन कार्या । ऊर्द्ध्वा तु प्रादेशमात्र्येव ।

इषुमात्रीपक्षे तु पञ्चप्रादेशप्रमाणया रज्ज्वा साधनीया । सा च क्षेत्रफलेन पञ्चविंशतिप्रादेशा सम्पद्यते । तत उखाया ऊर्द्ध्वप्रमाणस्योपरि वर्तमाने तृतीये भागे सर्वतश्चतुर्ष्वपि पार्श्वेषु वर्तिं रास्नां मेखलां मृन्मयीमेव कन्दोरकाकारां करोति । एवं तिरश्चीं वर्तिं सर्वतः कृत्वा ततस्तूष्णीं चतस्रो वर्तीः प्रतिदिशमूर्ध्वाः करोति ।

तत्र प्रथममुखायाः पूर्वपार्श्वमध्ये उखातलादारभ्य पूर्वकृतवर्तिपर्यन्तमूर्ध्वां वर्तिं कुर्यात् । वर्तिर्वर्त्याकारो मृदवयवः । एवं दक्षिणपार्श्वमध्ये द्वितीयां वर्तिं कुर्यात् । एवमेवापरपार्श्वमध्ये तृतीयाम् । एवमुत्तरपार्श्वमध्ये चतुर्थीम् ।

इति षोडशस्य तृतीया कण्डिका ॥ ३ ॥

स्तनानिवाऽग्रेषून्नयति ॥१॥ द्विस्तनामष्टस्तनामेके ॥२॥ बिलं गृह्णात्यदितिष्ट इति ॥३॥ कृत्वायेति निदधाति ॥४॥ तिस्र एके ॥५॥ इष्टकास्तु तिस्रो विश्वज्योतिषः पृथग्लक्षणास्त्र्यालिखिताः ॥६॥ मृदुमुपशयां निदधाति ॥७॥ सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीभिरेकैकेन वसवस्त्वेति प्रतिमन्त्रम् ॥८॥ अभ्रयाश्वभ्रं चतुरश्रं खनत्यदितिष्ट्वेति ॥९॥ श्रपणमास्तीर्य

---

एवं सर्वासु दिक्षु स्तम्भाकाराश्चतस्रो वर्तीः कृत्वा तासां चतसृणामपि वर्तीनामग्रेषु मस्तकेषु स्तनाकारान्मृदवयवान्करोति। प्रतिदिशमेकैकम्। एवं चतुःस्तनोखा भवति।

केचिद् द्विस्तनामुखां कुर्वन्ति। तस्मिन्पक्षे एकस्यामेव वर्तौ द्वौ स्तनौ कार्यौ। केचिदष्टस्तनामुखामिच्छन्ति। तस्मिन्पक्षे एकैकस्यामुर्ध्ववर्तौ द्वौ द्वौ स्तनौ कार्यौ। ततोऽदितिष्ट इति मन्त्रेणोखाया बिलं मुखं गृह्णाति। अभिपद्यते आलभते इत्यर्थः। अन्यत्रापि "अथास्यै स्तनमभिपद्यते इत्युक्तेः स्तनमालभत" इति सूत्रणात्।

ततः कृत्वायेति भूमौ निदधाति। केचित्तिस्र उखाः कुर्वन्ति। अस्मिन्पक्षे मृद्ग्रहणादि निधानान्तमेवमपरं द्विः कर्तव्यम्।

ततो यजमान एव तिस्रो विश्वज्योतिष इष्टकाः पद्यास्त्र्यालिखिताः करोति। तासु च पृथक् पृथक् चिह्नानि कार्याणि' प्रथमा—द्वितीयादिविवेकज्ञानार्थम्। ततोऽवशिष्टां मृदमुपशयासंज्ञां क्वचित्सुगुप्ते देशे निदधाति प्रायश्चित्त्यर्थम्। एतत्पर्यन्तं याजमानम्। अथाध्वर्यवमिति भाष्ये।

ततोऽवशिष्टान्यश्वशकृन्ति दक्षिणाग्न्यादीन्य तेषामेकैकेन स्वस्थानस्थितामेवोखां सप्तवारं धूपयति। तत्रैकैकं धूमायमानमश्वशकृद्धस्तेन गृहीत्वा तेन वसवस्त्वा धूपयन्त्विति मन्त्रेणोखां धूपयति। तद् धूमायमानमुखाया मध्ये परितश्च भ्रमयतीत्यर्थः। एवं रुद्रास्त्वेति द्वितीयेन। उद०। आदित्यास्त्वेति तृतीयेन। विश्वे त्वेति चतुर्थेन। इन्द्रस्त्वेति पञ्चमेन। वरुणस्त्वेति षष्ठेन। विष्णुस्त्वेति सप्तमेन।

ततोऽभ्रिमादायादितिष्ट्वा देवीति मन्त्रेणार्थात्परिमाणं चतुःकोणं गर्तं खनति। ततस्तूष्णीं तृणकरीषादिकं श्रपणं गर्तमध्ये आस्तीर्य प्रथमं तूष्णीमषाढां श्रपणस्योपरि गर्तमध्येऽवदधाति।

ततो देवानान्त्वा पत्नीरिति मन्त्रेणाधोमुखीमुखामषाढाया उत्तरतोऽव-

यथाकृतमवदधाति ॥१०॥ देवानां त्वेत्युखां न्युब्जाम् ॥११॥ श्रपणेनावच्छाद्य दक्षिणाग्न्याग्निना दीपयति धिषणास्त्वेति ॥१२॥ निर्मन्थ्येन वा धूपनश्रपणे ॥१३॥ वरूत्रीष्ट्वेतीक्षमाणो जपति ॥१४॥ आचरति मित्रस्येति ॥१५॥ यावदाचरेत् ॥१६॥ दिवैव प्रदहनोद्धरणे ॥१७ उद्वपतिश्रपणम् ॥१८॥ देवस्त्वेत्युखाम् ॥१९॥ उत्तानां करोत्यव्यथमानेति ॥२०॥ उद्यच्छत्युत्थायेति ॥२१॥ परिगृह्य पात्रे करोति मित्रैतां त इति ॥२२॥ अजापयसाऽवसिञ्च-

धाति तत्रैव । ततस्तूष्णीं विश्वज्योतिषोऽवदधाति यथाऽवकाशम् । पुनरुपरिष्टात्करीषतृणादिना श्रपणेन तत्सर्वमवच्छाद्य दक्षिणाग्नेरग्निना आपाकमादीपयति ।

तत्र पूर्वं तूष्णीमषाढाया आदीपनम् । धिषणास्त्वेत्युखायाः । तूष्णीमेव विश्वज्योतिषाम् । अथवा तत्कालमेवाग्निं निर्मथ्य तेनाग्निना धूपनं श्रपणं च कर्तव्यं न दक्षिणाग्न्यग्निना । ततो दण्डादिनोखोपरिस्थे श्रपणे छिद्रं कृत्वा तेन छिद्रेणोखामीक्षमाणो वरूत्रीष्ट्वेत्यादीनि त्रीणि यजूंषि स्वरेण जपति ।

ततो मित्रस्य चर्षणीधृत इति मन्त्रेण पुनः श्रपणमुपरिष्टात्प्रक्षिपति । अधस्ताच्च प्रवेशयति ।

एवं पाकपर्यन्तं यावत्क्रियच्छ्रपणप्रक्षेपणं तावदनेनैव मन्त्रेण । उखायाः पचनं, पक्वाया आपाकादुद्धरणं च दिवस एव कर्तव्यं न रात्रौ । ततोऽषाढायास्तूष्णीं श्रपणमपनयति ।

ततो देवस्त्वा सवितेत्युखायाः श्रपणमुद्वपति । ततो विश्वज्योतिर्भ्यस्तूष्णीं श्रपणमुद्वपति । तत उखां तत्रस्थामेव पर्यावर्तनेनोत्तानां करोति अव्यथमानेति ।

ततस्तूष्णीमषाढामुत्तरत उद्वास्य भूमौ निदधाति । तत एकं विपुलं पीठादिपात्रमुत्तरतो निदधाति उखास्थापनार्थम् । ततो द्वाभ्यां हस्ताभ्यां तूष्णीमुखां गर्तमध्यस्थितां परिगृह्योत्थाय बृहतीत्युखामुद्यच्छति ऊर्ध्वं गृह्णाति ।

तत ऊर्ध्वामुत्पाद्य मित्रैतान्त इति मन्त्रेणोत्तरतः पूर्वं स्थापितस्य पात्रस्योपरि निदधाति । ततस्तूष्णीं विश्वज्योतिषामुद्वासनम् । ततो वसवस्त्वाऽऽच्छृन्दन्त्विति प्रतिमन्त्रमजाया दुग्धमुखामध्ये चतुर्वारं निनयति ।

ति वसवस्त्वेति प्रतिमन्त्रम् ॥२३॥ इष्टकाश्चैकयाऽस्त-स्त्र्यालिखितानाम् ॥२४॥ अपरिमितालिखिता वोत्तर-

तिस्रश्चेदुखाः क्रियन्ते तदा एकैकस्या उत्तानकरणाद्यजापयोऽवसेकान्तं काण्डानुसमयेन कर्तव्यम् । इत्युखासंभरणं समाप्तम् ॥

अत ऊर्ध्वं सर्वासां पूरणोक्तानामिष्टकानां करणम् । यास्वप्सु पशुशेषः प्रक्षिप्तः ततो मृदमादायोदकं चादाय सर्वा इष्टका निष्पादनीयाः ।

तत्रेष्टकाकरणस्यायं प्रकारः । पूर्वं यजमानेनोर्ध्ववाहुना प्रपदोत्थितेन वा समं वंशं मित्वा पुरुषप्रमाणस्य त्रिंशांशं द्वात्रिंशांशं वाऽतिरिक्तं वंशच्छेदनेन तावत्प्रमाणं कुर्यात् । ततस्तस्य वंशस्य समा दश विभागाः शलाकादिभिर्वा मित्वा कार्याः । दशस्वपि भागेषु वंशे क्षुरिकादिना वंशस्य त्वचं छित्वा चिन्हानि कार्याणि ।

तस्य वंशस्य दशमेन भागेन पदं भवति । पदस्य द्वादशो भागोऽङ्गुलम् । एवं विधैरङ्गुलैर्द्वादशाङ्गुलं समचतुरस्रं पद्यानां प्रमाणं सारदारुकाष्ठैः कारयितव्यम् । षडङ्गुलं समचतुरस्रं पादभागानां प्रमाणं द्वितीयम् । षडङ्गुलदीर्घं त्र्यङ्गुलविस्तारमर्द्धपादभागानां प्रमाणम् । त्र्यङ्गुलं समचतुरस्रं चतुर्भागानाम् ।

अष्टादशाङ्गुलदीर्घं द्वादशाङ्गुलविपुलमध्यर्द्धानां प्रमाणम् । अष्टादशाङ्गुलं समचतुरस्रं जङ्घामात्रीणां प्रमाणम् । चतुर्विंशत्यङ्गुलं समचतुरस्रं बृहतीनां प्रमाणम् । चतुर्विंशत्यङ्गुलदीर्घमष्टादशाङ्गुलविपुलं त्रिग्राहिणीनां प्रमाणम् । द्वादशाङ्गुलदीर्घं षडङ्गुलविस्तारमर्द्धपद्यानां प्रमाणम् । चतुर्विंशत्यङ्गुलदीर्घं द्वादशाङ्गुलविस्तारमर्द्धबृहतीनां प्रमाणम् ।

अथ वक्राणां साधनोपाय उच्यते । पूर्वं चतुर्विंशत्यङ्गुलं समचतुरस्रं साधयित्वा तस्योत्तरांशे शङ्कुं निखायार्द्धव्यामप्रमाणां रज्जुमुभयतः पाशां कृत्वोत्तरांसशङ्कौ एकं पाशं प्रतिमुच्य दक्षिणांसस्योपरि लम्बायमानां तां रज्जुं दक्षिणत आकृष्यार्द्धव्यामप्रमाणां रेखां कृत्वा पाशप्रोतशङ्कुना प्रदक्षिणं तावद्वृत्तं लिखेत् यावत्साद्धंव्यामपरिमिता रज्जुस्तस्य चतुरस्रस्य दक्षिणश्रोणिरुपर्यायाति । ततो दक्षिणश्रोणेरारभ्य रज्जुप्रान्तं यावद्रेखां कुर्यात् । ततश्चतुरस्रस्य पश्चिमोत्तरपूर्वपार्श्वानि मार्जयेत् । अवशिष्टं वक्रं क्षेत्रं वक्राणां प्रमाणम् । एतादृशं क्षेत्रं विलोक्य वक्रदारुघटनेन वक्राप्रमाणं निष्पादनीयम् ।

सर्वेषां प्रमाणानां चतुरङ्गुलं वा षडङ्गुलं वा मत्या वोच्छ्रायप्रमाणं भवति । अर्द्धेनार्द्धोत्सेधानां पद्यार्द्धपद्यानामुत्सेधो भवति । षडङ्गुलपद्ये-

**याः ॥२५॥ पूर्ववदग्निः पाके ॥२६॥ दीक्षाऽऽमावास्यायामामा**

---

ऽयङ्गुलं चतुरङ्गुलपक्षे च द्व्यङ्गुलम् । तत्प्रमाणद्वयं पद्यानामर्द्धपद्यानां च पृथक् करणीयम् । एवं त्रयोदश प्रमाणानि समानि श्लक्ष्णानि च कारयित्वा तैरिष्टकाः समभूमौ निष्पादनीयाः ।

तत्र पक्षेष्टकानां संख्योच्यते । तत्र वक्रालिखितानां पादभागानां सप्तदश शतानि सद्वात्रिंशानि १७३२ सार्द्धसप्तसहस्रसंख्यास्त्रिंशदधिका ऋज्वालिखिताः पादभागाः ७५३० । द्वे शते द्वाषष्ट्यधिके वक्रालिखिता अर्द्धपादभागाः । २६२ । षोडशाधिकानि चत्वारि शतानि ऋज्वालिखिता अर्द्धपादभागाः । ४१६ । चतुर्भागाश्चतस्रो वक्रालिखिताः । ४ । अष्टौ ऋज्वालिखिताश्चतुर्भागाः । ८ । एकोनषष्ट्यधिकानि सप्तशतानि पूर्णोत्सेधाः पद्याः ७५९ । अष्टादश पद्याः अर्द्धोत्सेधाः १८ । द्वानवत्यधिकमेकं शतमर्द्धपद्याः । १९२ । तासां मध्ये चतुर्विंशतिः पूर्णोत्सेधाः तिरश्चालिखिता अर्द्धपद्याः २४ । चतस्रश्चार्द्धोत्सेधाः अर्द्धपद्यास्तिरश्चालिखिताः । ४ । अष्टौ अर्द्धपद्या अर्द्धोत्सेधा ऋज्वालिखिताः । ८ । द्वे वक्रालिखिते अर्द्धपद्ये पूर्णोत्सेधे । २ । पञ्चाशज्जङ्घामात्र्यः । ५० । सप्ततिस्त्रिग्राह्विण्यः । ७० । अष्टौ वक्राः । ८ । एकादशाधिकमेकशतमध्यर्द्धाः । १११ । षड् बृहत्यः । ६ । सप्त वा । ७ । चतस्रोऽर्द्धबृहत्यः । ४ । द्वे पादोने । २ ।

एवं सर्वासामिष्टकानामियं संख्या उपधानकालीना । निष्पादनकाले महत्य इष्टकाश्चतुर्गुणाः कारयितव्याः । मध्यप्रमाणा द्विगुणाः । अर्द्धोत्सेधाश्चतुर्गुणाः । पादभागा अर्द्धपादभागा अध्यर्द्धगुणा निकृष्टपक्षे । तथा शोषपाकाभ्यामिष्टकाप्रमाणस्य ह्रासो भवति । तेन त्रिंशांशेन द्वात्रिंशांशेन वा पादभागस्यार्द्धप्रमाणमधिकं कार्यम् ।

पद्याप्रमाणं द्वाभ्यां त्रिंशांशाभ्यां द्वाभ्यां द्वात्रिंशांशाभ्यां वाऽधिकं कार्यम् । जङ्घामात्रीप्रमाणं त्रिभिस्त्रिंशांशैरधिकं, त्रिभिर्द्वात्रिंशांशैर्वा । बृहतीप्रमाणं चतुर्भिस्त्रिंशांशैरधिकं कार्यम्, चतुर्भिर्द्वात्रिंशांशैर्वा । वक्राप्रमाणं च ।

एतेनैवार्द्धबृहतीत्रिग्राह्विण्यध्यर्द्धादीन्युक्तानि । द्वितीये चयने सर्वासामिष्टकानां स्वस्वसप्तमभागेन वृद्धिः । द्वितीयादिषु चयनेषु प्रतिचयनं प्रथमचयनेष्टकानां स्वस्वसप्तमो भागो वर्द्धितेष्टकाप्रमाणमध्ये अधिकः कार्य इति तत्त्वम् ।

सर्वा इष्टकास्त्र्यालिखिताः कार्याः । अथवा तिसृणां स्वयमातृण्णा-

**वास्येनेष्ट्वा ॥२७॥ आग्नावैष्णववैश्वानरौ ॥२८॥ घृते चरु-रादित्येभ्यः ॥२९॥ प्राकृतान्यौदुम्भणानि हुत्वा ससा-**

---

वतीनां चितीनामिष्टकास्त्र्यालिखिताः कार्याः । द्वितीयाचतुर्थ्योरपरिमितालिखिताः । दक्षिणाग्न्यग्निनैव तासां पाकः कार्यो निर्मन्थ्येन वा ॥

ततः फाल्गुनामावास्यायां पूर्वाह्णे एव पिण्डपितृयज्ञवर्जं सद्य एव दर्शेष्टिं कृत्वा मातृश्राद्धं च कृत्वा दीक्षा कार्या । तत्र ऋत्विग्वरणादौ विशेषः । साग्निचित्येनामुकसोमेनेति वरणे । विंशत्यरत्निदीर्घा दशारत्निविस्तारा शाला कार्या, न विमितम् ।

तदुपायश्च "प्रमाणार्द्धं गाऽभ्यस्याभ्यासषष्ठे लक्षणं करोति तन्निरञ्छनमि"ति । तत्र विंशत्यरत्निप्रमाणा मूलरज्जुः । तत्रैकं लक्षणम् । ततो दशारत्निरभ्यासरज्जुः । तत्राभ्यासरज्जोराद्ये षष्ठे भागे निरञ्छनार्थं लक्षणम् । अभ्यासरज्जोरर्द्धे पश्चारत्नौ च श्रोण्यंसाङ्कनार्थमिति ।

पूर्वदक्षिणपश्चिमदिक्षु गर्भे अरत्निद्वयविस्ताराणि द्वाराणि कार्याणि । तत्र गार्हपत्यखरं साधयित्वा तस्य मध्यात् त्रिपदेषु सप्तसु प्रक्रमेषु तत ऊर्ध्वमर्द्धव्यामे चाहवनीयखरस्य मध्यं कुर्यात् । तयोर्वितृतीये दक्षिणाग्निखरं साधयेत् ।

साग्निचित्यस्यामुकस्य सोमस्यार्थमित्याहवनीयदक्षिणाग्न्योरुद्धरणम् । दीक्षणीयायां विशेषः । त्रीणि हवींषि उपांशु भवन्ति । आग्नावैष्णव एकादशकपालः प्रथमं हविः । वैश्वानरो द्वादशकपालो द्वितीयम् । आदित्येभ्यश्चरुस्तृतीयम् ।

तत्र पात्रासादने त्रयोविंशतिः कपालानि । एका चरुस्थाली । संयवनोदकम् । चरुश्रपणार्थं घृतं च । शृतावदानानन्तरं मेक्षणम् । द्वे पात्र्यौ । अन्यत्प्रकृतिवत् ।

ग्रहणे अग्नाविष्णुभ्यां जुष्टं० । वैश्वानराय जुष्टं० । वैश्वानरोऽत्र निर्गुणः । कर्कमतेऽत्रापि सगुण एव । आदित्येभ्यो जुष्टं० । प्रोक्षणे अग्नाविष्णुभ्यां त्वा जुष्टं० । वैश्वानराय त्वा जुष्टं० । आदित्येभ्यस्त्वा जुष्टमिति । एकबीजपक्षे कणान्ते विभज्यालम्भः । इदमग्नाविष्णवोर्वैश्वानरस्य च । इदमादित्यानाम् ।

ततस्तण्डुलानां कोमलत्वसम्पादनार्थं दुग्धादौ प्रक्षेपः कार्यः । ततः पेषणादिप्रारम्भः । संवापकाले दुग्धादेस्तण्डुलान्निष्काश्य संवापः कार्यः । घृतोपसर्जनीप्रतिग्रहे संघृतमोषधीभिः समोषधयो रसेन । सꣳ रेवज्जगतीभिः पृच्यताꣳ संमधुमन्मधुमतीभिः पृच्यतामिति ।

ग्निकान्याकूतिमिति प्रतिमन्त्रम् ॥३०॥ दण्डोच्छ्रयणान्तं कृत्वाऽध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्र-

प्राणदाने—अग्नाविष्णू गच्छ। वैश्वानरं गच्छ। आदित्यान् गच्छेति। इदमहं सप्तदशेनेत्यववाधनम्। उत्तमे प्रयाजे। इदमग्नये सोमायाग्नाविष्णुभ्यां वैश्वानरायादित्येभ्यो देवेभ्य इत्यादि। प्रधानयागे। अग्नाविष्णुभ्यामनुब्रूहि। अग्नाविष्णू यज। वैश्वानरायानुब्रूहि। वैश्वानरं यज। आदित्येभ्योऽनुब्रूहि। आदित्यान् यज। ततः स्विष्टकृदादि। आग्नावैष्णवस्य चरोश्च चतुर्धाकरणाभावः। अन्यत्सर्वं सर्वेषाम्। वैश्वानस्य चतुर्धाकरणं च।

व्यूहने—अग्नाविष्णवोर्वैश्वानरस्यादित्यानामुज्जितिं०। अग्नाविष्णू वैश्वानर आदित्यास्तमपनुत्त्विति। प्रस्तरहोमे इदमग्नये सोमायाग्नाविष्णुभ्यां वैश्वानरायाभ्यादित्येभ्यो देवेभ्य इत्यादि। दक्षिणाग्नौ उलूखल इत्याहुतौ इदमग्नाविष्णुभ्यां वैश्वानरायादित्येभ्यः। ततो वेद्योः कृत्रविमोकान्ते नवनीतदीक्षादिप्रपःदनान्तम्। तत औद्ग्रभणेषु विशेषः। पूर्वमाकूत्या इत्यादीनि प्राकृतानि पञ्च औद्ग्रभणानि। तत्रापि पञ्चमे ध्रौवमाज्यमासिच्य द्विः स्थाल्याः स्रुवेणासिच्य तृतीयमभि पूर्य होमः

ततः सप्ताग्निकान्यौद्ग्रभणानि जुहोति स्थाल्याः स्रुवेण आकूतिमग्निं प्रयुजमिति प्रथमम्। इदमाकूत्या अग्नये प्रयुजे॥ १ ॥ मनो मेधामिति द्वितीयम्। इदं मनसे मेधाया अग्नये प्रयुजे ॥ २ ॥ चित्तं विज्ञातमिति तृतीयम्। इदं चित्ताय विज्ञातायाग्नये प्रयुजे ॥ ३ ॥ वाचो विधृतिमिति चतुर्थम्। इदं वाचे विधृत्या अग्नये प्रयुजे ॥ ४ ॥ प्रजापतये मनवे इति पञ्चमम्। इदं प्रजापतये मनवे ॥५॥ अग्नये वैश्वानरायेति षष्ठम्। इदमग्नये वैश्वानराय। ६। एतानि षट् स्थाल्याः स्रुवेण जुहोति।

ततः सप्तमे अवशेषितं सर्वं ध्रौवं जुह्वामासिच्य द्विश्च स्थाल्याः स्रुवेणासिच्य तृतीयं स्रुवमभि पूरयति विश्वो देवस्येति जुहोति। इदं विश्वदेवसवितृमित्रबृहस्पतिपूषभ्यः। इदं सवित्र इति वा। ततो दीक्षणीयाशेषसमाप्तिः।

कृष्णाजिनास्तरणादि दण्डोच्छ्रयणान्तं प्रकृतिवत्। ततोऽध्वर्युर्यजमानो वा उखामध्ये पूर्वं शणचूर्णं प्रक्षिप्य तदुपरि मुञ्जचूर्णं च प्रक्षिप्याहवनीयं सुसमिद्धं कृत्वेशानाभिमुखस्तिष्ठन्मा सु भित्था मा सु रिष इति द्वाभ्यां तामुखामाहवनीयेऽधिश्रयेत।

( १ ) प्रथमप्रधाने सामगनाक।

यति मुञ्जकुलायशणकुलायावस्तीर्णामन्तरे शणां मा सु भित्था इति तिष्ठन्नुदङ्‌ प्राङ्‌ ॥३१॥ रुक्मप्रतिमोचनविष्णुक्रमवात्सप्रेषु च ॥३२॥ अग्नावारूढे त्रयोदशास्यां प्रादेशमात्रीः समिध आदधाति ॥३३॥ अनारोहत्यङ्गारानोप्यैके ॥३४॥घृतोन्नां कार्मुर्कीं द्रवन्न इति॥३५॥ वैकङ्कतीं परस्या इति ॥३६॥ औदुम्बरीं परमस्या इति ॥३७॥ अपरशुवृक्णां यदग्न इति ॥३८॥ अधःशयां यदत्सीति ॥३९॥ पालाशीः प्रत्यृचमहरहरिति ॥४०॥ उपोत्तमां क्षत्रियस्येच्छन् ॥४१॥ उत्तमां पुरोहितस्य ॥४२॥ अन्यस्योभे ॥४३॥ स्वाहाकारः सर्वासूखायाम् ॥४४॥ औद्ग्रभणादि दण्डान्तमत्रैके ॥ ४५ ॥ ॥ ४ ॥

---

तत उखामध्येऽग्नावुत्पन्ने शुष्कगोमयखण्डादिभिस्तं समर्थं कृत्वाऽध्वर्युरेव वक्ष्यमाणाः प्रादेशमात्रीः त्रयोदश समिध आदधाति । यदि बहुनाऽपि कालेनात्यर्थं तापेनाप्युखायामग्निर्नोत्पद्यते तदोखामध्ये आहवनीयाङ्गारानोप्य समिदाधानादि कुर्यादित्येक आहुः ।

तत्र प्रथममध्वर्युर्घृताक्तां कार्मुकीं धमनवृक्षोद्भवां द्रवन्न इति मन्त्रेण स्वाहाकारान्तेनादधाति । उखायां समिदाधानमन्त्रेषु स्वाहाकारः कर्तव्यः ।

ततः परस्या इति वैकङ्कतीं द्वितीयाम् । ततः परमस्या इति तृतीयामौदुम्बरीम् । ततो यदग्न इत्यपरशुवृक्णामकुठारच्छिन्नामौदुम्बरीमेव चतुर्थीम् । ततो यदत्त्युप जिह्विकेत्यधःशयां भूमिसंलग्नामेव वृक्षात्प्रसृतामौदुम्बरीमेव पञ्चमीम् । ततोऽष्टौ पालाशीः समिधोऽहरहरप्रयावमित्याभिरष्टाभिः प्रत्यृचमेकैकामादधाति । एवं त्रयोदश समिधो भवन्ति । एतेषां मध्ये एकादश प्रथमाः समिधः सर्वेषां नित्यं भवन्ति । क्षत्रियस्य द्वादश्या विकल्पः । पुरोहितस्य त्रयोदश्या विकल्पः । क्षत्रियपुरोहितव्यतिरिक्तानां द्वादशीत्रयोदश्यौ उभे अपि विकल्पेन ।

उखाधिश्रयणे यजमानेन कृतेऽपि समिदाधानमध्वर्युरेव करोति । एकेऽभ्यञ्जनादि प्रपादनान्तं कृत्वा तत उखाधिश्रयणादिसमिदाधानान्तं च कृत्वा तत औद्ग्रभणादि दण्डान्तं कुर्वन्ति ॥

इति षोडशस्य चतुर्थी कण्डिका ॥ ४ ॥

यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलमेकाविंशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्लकृष्णेषु शणसूत्रे त्रिवृत्प्रोतमुपरिनाभि बहिष्पिण्डं दृशानो रुक्म इति ॥१॥ इण्ड्वशिक्यासन्दीषु मुञ्जरज्जवस्त्रिवृतो मृद्दिग्धाः ॥२॥ परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति नक्तोषासेति ॥३॥ हरति द्यावा क्षामेति ॥४॥ आहवनीयस्य पुरस्तादुदुम्बरासन्दीं प्रादेशमात्रीं चतुरश्राङ्ग्यं शिक्यवत्यां निदधाति देवा अग्निमिति ॥५॥ शिक्यपाशं प्रतिमुञ्चते षड्ढ्यामं विश्वा रूपाणीति ॥६॥ सशिक्यं प्राञ्चं प्र गृह्णाति सुपर्णोऽसीति पिण्डवत् ॥७॥

ततो यजमान ईशानाभिमुखस्तिष्ठन् दृशानो रुक्म इति मन्त्रेण कण्ठे सौवर्णं रुक्मं प्रतिमुञ्चते । कीदृशं रुक्मम् । परिमण्डलं वर्तुलम्, तथा एकविंशतिपिण्डम्, पिण्डशब्देन चणकदलसदृशाङ्केनोत्पादिता बिन्दवोऽभिधीयन्ते ।

तथा कृष्णाजिने शुक्लकृष्णलोमोपलक्षिते प्रदेशे नितरां स्यूतम् । तथा त्रिगुणे शणसूत्रे प्रोतम । तथा बहिःपिण्डम् । एवंविधं तथा प्रमुञ्चते यथा प्रमुक्तो नाभेरुपरि भवति । इण्ड्वयोः शिक्ये आसन्द्यां त्रिवृतस्त्रिगुणा मुञ्जरज्जवो भवन्ति । ताश्च मृदा लिम्पनीयाः ।

ततः आहवनीयस्य पुरस्तादौदुम्बरी आसन्दी निधेया । तस्याः प्रादेशमात्राश्चतुस्राः पादाः कार्याः । अरत्निमात्राणि चेषोपलानि । तान्यपि चतुरस्राणि । त्रिवृता मुञ्जरज्ज्वा च व्यूता । ततस्तस्या आसन्द्या उपरि शिक्यं विरलीकृत्य निधेयम् । तस्मिन् शिक्ये षड्ढ्यामरज्जुयुक्तः पाशः कार्यः ।

ततः परिमण्डलाभ्यामिण्ड्वाभ्यामुपायभूताभ्यां तप्तामुखां परिगृह्णाति नक्तोषासेति मन्त्रेण । ततो द्यावा क्षामेति मन्त्रेणोखामासन्दीं प्रति हरति । ततः पूर्वोक्तायां शिक्यवत्यामासन्द्यां देवा अग्निमित्युखां निदधाति ।

ततः शिक्यं समं कृत्वा विश्वा रूपाणीति मन्त्रेण षड्ढ्यामं शिक्यपाशं कण्ठे यजमानः प्रतिमुञ्चते । ततः सशिक्यमुख्यमग्निं सुपर्णोऽसीति मन्त्रेणोर्ध्वाभ्यां बाहुभ्यां प्राञ्चं गृह्णाति । ततस्तस्मात्प्रदेशादग्निमपहृत्य नाभेरुपरि धारयति ।

धारणं च ॥८॥ एतया विकृत्याऽभिमन्त्र्यैकेऽन्यचितिं चिन्वन्ति द्रोणचिद्रथचक्रचित्कङ्कचित्प्रउगचिदुभयतः प्रउगः समुह्यपुरीष इति ॥९॥ समुह्यपुरीषे प्रतिदिशं पुरीषहिरण्यम् ॥१०॥ विष्णुक्रमान्क्रमते विष्णोरिति प्रतिमन्त्रम् ॥११॥ अग्न्युद्ग्रहणं च तस्मिंस्तस्मिन् ॥१२॥ अक्रमश्चतुर्थे ॥१३॥ दिशो वीक्षते दिशोऽनुविक्रमस्वेति ॥१४॥ पिण्डवत्प्रागुदञ्चं प्रगृह्णात्यक्रन्ददग्निरिति ॥१५॥ अवहरत्यग्नेऽभ्यावर्त्तिन्निति ॥१६॥ उपरिनाभि धारयन्ना त्वाहार्षमित्यभिमन्त्रयते ॥१७॥ पाशा उन्मुच्योदुत्तममिति ॥१८॥ पिण्डवत्प्राग्दक्षिणा प्रगृह्णात्यग्रे बृह-

तत ईशानाभिमुखस्तिष्ठन् विष्णुक्रमान् क्रमते विष्णोः क्रमोऽसीति प्रतिमन्त्रम् । तत्र प्रथमेन विष्णोः क्रमोऽसीति मन्त्रेणेशानाभिमुखो दक्षिणपादेन क्रमणं करोति । नाभिदेशादग्निं च स्तोकमूर्ध्वं करोति । ततो द्वितीयेन विष्णोः क्रमोऽस्यभिमातिहेत्यनेन ततोऽपि ईशानदिशं प्रति दक्षिणपादेन चलति । पुनरप्यग्निं स्तोकमुद्गृह्णाति ।

ततः पुनरपि विष्णोः क्रमोऽस्यरातीयत इत्यनेन ततोऽपीशानाभिमुखः क्रमणं करोति चलति । अग्निमपि स्तोकमुद्गृह्णाति । ततो विष्णोः क्रमोऽसि शत्रूयतो हन्तेत्यनेन क्रमणं न करोति । अग्निमेवोच्चं करोति ।

ततस्तादृगवस्थ एव दिशोऽनु विक्रमस्वेति सकृत्पठितेनैव सर्वा दिशो वीक्षते विलोकयति । प्रतिदिशं मन्त्रावृत्तिरिति कर्कः । तत ऊर्ध्वबाहुरैशानीं दिशं प्रति अग्निमुद्गृह्णाति अक्रन्ददग्निरिति मन्त्रेण । यावत्प्रदेशे चतुर्थवारमुद्गृहीतस्तावति धृतमेव सन्तमैशानीं दिशं प्रति हरति । न चतुर्थवारमुद्गृहीतादुच्चम् ।

ततोऽग्नेऽभ्यावर्तिन्निति चतसृभिश्चतुष्कृत्वोऽग्निमवरोहयति । यथा चतुष्कृत्वः स्तोकमुद्गृहीतस्तथैव चतुष्कृत्वः स्तोकं स्तोकमवतारयतीत्यर्थः ।

ततो नाभेरुपर्यग्निमवधारयन्ना त्वाहार्षमिति तमभिमन्त्रयते । तत उदुत्तममिति मन्त्रेण कण्ठात्पाशौ रुक्मपाशं शिक्यपाशावुन्मुच्य शिरोमार्गेण निष्काश्य ततोऽग्ने बृहन्नित्यूर्ध्वबाहुराग्नेयीं दिशं प्रत्यग्निमुद्गृह्णाति । ऊर्ध्वं करोति । ततो हꣳसः शुचिषदित्यग्निमवरोहयति ।

ग्निति ॥१९॥ अवहरति हꣳसः शुचिषदिति ॥२०॥ आसन्द्यां करोति बृहदिति ॥२१॥ उपतिष्ठते सीद त्वमिति ॥२२॥ वात्सप्रेण च दिवस्परीत्येकादशभिः ॥२३॥ अनुवाकेनैके ॥२४॥ अत्र दीक्षितोऽयमिति ॥२५॥ आवृत्तिरतः संवत्सरम् ॥२६॥ ॥ ५ ॥

उखाया भस्मोद्वपनमस्तमिते पात्रे ॥१॥ वाचं विसृज्य समिदाधानꣳ रात्रीꣳ रात्रीमप्रयावमिति ॥२॥ एवमुदिते भस्मोद्वपनादि ॥३॥ अहरहरित्याधानम् ॥४॥ विष्णुक्रमवात्सप्रे चाहर्व्यवस्थासमुदिते समिधमाधाय ॥५॥ रुक्मप्रतिमोचनादि प्राग्वात्सप्राद्विष्णुक्रमाः ॥६॥ सोमा-

---

ततो बृहदिति मन्त्रेणासन्द्यां निदधाति । ततः सीद त्वमिति तिसृभिर्ऋग्भिरुख्यमग्निमुपतिष्ठते । रुक्मप्रतिमोचनादारभ्य सीद त्वमिति उपस्थानान्तस्य विष्णुक्रमा इति संज्ञा ।

अथ वात्सप्रम्—दिवस्परि प्रथमं यज्ञ इत्यत आरभ्यैकादशभिरुशिजो विवघुरित्यन्ताभिरीशानाभिमुख उख्यमग्निमुपतिष्ठते । केचिदनुवाकेनोपतिष्ठन्ते । तस्मिन् पक्षे अस्ताव्यग्निरित्येका अधिका । एतद्वात्सप्रम् । रुक्मप्रतिमोचनाद्येवमन्तं सर्वं याजमानम् । अत्रावसरे दीक्षितोऽयं ब्राह्मण इत्यादि ।

इति षोडशस्य पञ्चमी कण्डिका ॥ ५ ॥

---

ततोऽस्तमिते सूर्ये यजमान उखायाः सकाशाद्भस्मोद्धृत्य कस्मिंश्चित्पात्रे आवपति । ततो दीक्षितस्य वाग्विसर्गप्रैषः । व्रतं कृणुतेति व्रतकरणप्रैषः । अग्निर्ब्रह्मेति वाग्विसर्जनम् । ततो यजमानो रात्रीं प्रयावं भरन्त इति मन्त्रेण स्वाहान्तेनोखायां समिधमादधाति । ततो व्रतदुघे धुक्ष्वेति प्रैषः । मेहनस्वपनेऽग्निष्टोमवत् ।

अपररात्रेऽध्वर्युणा यजमानाय व्रते दत्ते दीक्षितो दैवीं धियमिति हस्तप्रक्षालनानन्तरं सामिधं व्रतदुग्धमध्येऽभ्यज्य अन्नपत इति मन्त्रेण स्वाहान्तेनोख्येऽग्नौ समिदाधानं करोति । ततो ये देवा इत्यादि ।

प्रातर्विबुद्धयाचनम् । वाग्यन्धप्रैषः । वाग्यमनम् । उदिते उखाया भस्मोद्वापः पूर्ववत् । वाग्विसर्गप्रैषः । वाग्विसर्गः । व्रतकरणप्रैषः । ततो यजमानोऽहरहरप्रयावमिति मन्त्रेण स्वाहान्तेनोखायां समिधमादधाति ।

**विरोधेन वा तत्प्राधान्यात् ॥७॥ न्यज्य समिधं व्रस्ते प्रस्ते प्रस्तेऽन्नपत इत्याधानम् ॥८॥ संवत्सरभृतिनोऽसंवत्सरभृतेऽपि ॥९॥ संवत्सरं सोष्यतः ॥१०॥ सम्वत्सराहिताग्नेः ॥११॥ जातस्य च ॥१२॥ षण्मास्यमनन्त्यम् ॥१३॥ अचयनं वा परस्मै ॥१४॥ प्रागनः कृत्वोखस्योत्तरतः समिदाधानं समिधाऽग्निमिति ॥१५॥ सासन्दीकमुख-**

---

ततो रुक्मप्रतिमोचनादि प्राग्वात्सप्राद्विष्णुक्रमाः । एवं साऽग्निचितस्य सोमस्य संवत्सरं दीक्षा भवन्ति । तासु च प्रत्यहं विष्णुक्रमवात्सप्रे व्यत्यास प्रयोज्ये । द्वितीयायां विष्णुक्रमाः । तृतीयायां वात्सप्रम् । चतुर्थ्यां विष्णुक्रमाः । पञ्चम्यां वात्सप्रम् । षष्ठ्यां विष्णुक्रमाः । सप्तम्यां वात्सप्रमित्येवमेव संवत्सरपर्यन्तम् । भस्मोद्वापादि न्यज्य समिधमित्येतत्पर्यन्ताः पदार्था दीक्षास्वेव भवन्ति नोपसत्सु ।

यस्मिन्सोमे नियता दीक्षा भवन्ति यथा द्वादशाहे दीक्षा द्वादशोपसदश्चेति, तथा स्वर्गकामस्यर्त्तपेयो दीक्षोपसदो द्वादशेति, तथा वाजपेये सप्तदश दीक्षा, अहीना मासापवर्गा इत्यादौ तत्र साग्निचित्येऽपि सोमाविरोधेनैव दीक्षा भवन्ति सौमिक्य एव दीक्षा भवन्ति नाग्निक्य इत्यर्थः । तथा येन यजमानेनैकवारं संवत्सरदीक्षापक्षेण साग्निचित्यः सोमः पूर्वं कृतो भवति तत ऊर्ध्वं तस्यैकादिदीक्षापक्षेऽपि चयनं भवति । तथा यः संवत्सरमुख्यं सत्रादि करिष्यन् भवति तस्य संवत्सरदीक्षाभावेऽपि चयनं भवति ।

तथा येनाग्न्याधेयानन्तरं संवत्सरमग्निहोत्रं हुतं भवति तस्य एकादिदीक्षापक्षेऽपि चयनं भवति । संवत्सरमग्निहोत्रं न हुतं चेत् तदा अग्निष्टोमोक्थ्यातिरात्रादावेकाहे संवत्सरदीक्षापक्षं विना चयनं न भवत्येव । तत्रापि नियतदीक्षे सोमे संवत्सरमध्येऽपि भवति । तथा द्वादश मासान् गर्भे स्थित्वा यो जातो भवति तस्याप्येकादिदीक्षापक्षे चयनं भवति । तथा प्राणो वा अग्निस्तमेतमेद्द् बिभर्तीत्यर्थवादोक्तज्ञानवतः सद्यो भृतेऽपि चयनं भवति ।

अथवा षण्मासानुख्यं धारयित्वा चयनं कार्यम् । अस्मिन्पक्षे इष्टकापशवः स्वकाल एव कर्तव्याः । उखासंभरणमपि स्वकाले एव । इष्टकाकरणं च । आश्वयुक् शुक्लद्वादश्यां कार्तिकस्य दीक्षा । तत्र दीक्षासु यूपच्छेदनं यूपाहुत्यादिस्वरुनिष्पत्त्यन्तं कर्तव्यम् । तथा दीक्षास्वेव यस्मि-

न्योदु त्वेति दक्षिणतोऽनसि करोति ॥१६॥ स्थाल्यां गार्हपत्यं पश्चात् ॥१७॥ अनड्वाहौ युक्त्वा प्रेदग्न इति प्राङ्यात्वा यथार्थम् ॥१८॥ आरोहेत्पार्श्वतो वा गच्छेत् ॥१९॥ अक्षे स्वर्जत्यक्रन्ददग्निरिति जपति ॥२०॥ वासेऽवहरत्युद्धतावोक्षित उत्तरतः समिदाधानं प्रप्रेति ॥२१॥ वनीवाहनमेतद्दीक्षासु यदेच्छेत् ॥२२॥ अप्सूरुप भस्मा-

---

ग्रहनोच्छ्रुति तस्मिन्महावीरसंभरणमजापयोऽवसेकान्तं करोति ।

तथा दीक्षास्वेव क्रत्वर्थद्रव्योपार्जनार्थं प्रयाणरूपं वनीवाहनसंज्ञं कर्म भवति । तत्र सर्वं यजमान एव करोति नाध्वर्युः । "स यदहः प्रयास्यन्स्यात्" इति श्रुतेः । मानवेऽपि "दीक्षितो भूतिं चिन्वीत प्रयास्यन्नु दु त्वेत्युख्यमादत्ते"इत्यादि सर्वं यजमानकर्तृकमेवोक्तं भवति तत्र शालाया उत्तरस्यां दिश्युख्यस्योत्तरतः प्राचीनं शकटमवस्थापयति । ततो यजमानः समिधाऽग्निमिति मन्त्रेणोख्येऽग्नौ समिधमादधाति स्वाहान्तेन ।

तत आसन्दीरोहितमेवोख्यमग्निमु दु त्वा विश्वे देवा इति मन्त्रेणोग्रस्य शकटस्य दक्षिणतोऽवस्थितः शकटोपस्थस्य पश्चाद्भागे स्थापयति । ततो गार्हपत्यं स्थाल्यां कृत्वा आहवनीयस्य पश्चात्स्थापयेत् ।

ततो यजमान एवानड्वाहौ तूष्णीं युगे युनक्ति । पूर्वं दक्षिणं तत उत्तरम् । ततो यजमानः प्रेदग्न इति मन्त्रेण प्रथमं कियन्तमध्वानं प्राङ् गच्छेत् । ततो यस्यां दिश्यर्थो भवति द्रव्यार्जनसंभवो भवति तां दिशं प्रति गच्छेत् । यजमानोऽनस्यारूढो वा पार्श्वतो गच्छेत् । यदि गच्छतः शकटस्याक्षचक्रादिघर्षणेन शब्दं कुर्यात् तदा अक्रन्ददग्निरिति प्रायश्चित्तार्थं जपेत् ।

यदि वा सार्थं शकटं विमुच्यते तदा प्राचीनं शकटं स्थापयित्वोत्तरत उद्धतावोक्षिते देशेऽग्नीनवतार्योख्येऽग्नौ प्रप्रायमग्निरिति मन्त्रेण यजमान एव समिदाधानं करोति। वासार्थं विना विश्रामादिकार्यान्तरार्थं वा विमोकेऽग्नयः शकट एव तिष्ठन्ति नावतार्यन्ते न च समिदाधीयते ।

यदि कश्चिद्दीक्षिताय किञ्चिद्धिरण्यादिकं द्रव्यमर्पयति तदा तल्लब्धं हिरण्यादिकमालभ्य हिरण्यमालभस्वेति प्रैषेण तस्यालम्भं कारयित्वा रास्वेयत्सोमेति मन्त्रमध्वर्युर्यजमानं वाचयति । देशकालविप्रकर्षेणाशक्य आलम्भे अनेन मन्त्रेण तस्य वस्तुनोऽभि मन्त्रणं करोति ।

ततो द्रव्योपार्जने सिद्धे प्रत्यागत्य शालायां यथास्थानं तानग्नीन्

स्वपनं कयणीयादौ ॥२३॥ अन्यत्र चेच्छन् ॥२४॥ ऊर्द्ध्वं वनीवाहनात्कर्मयोगात् ॥२५॥ पलाशपुटेनापो देवीरित्येकया ॥२६॥ ततो द्वाभ्याम् ॥२७॥ आद्याभ्यां वा पूर्वम् ॥२८॥ अनामिकया प्रास्तादादत्ते प्रमयेति ॥२९॥ प्रास्योखायामुपतिष्ठते बोधा म इति ॥३०॥ प्रायश्चित्तिं समिधोपहृत्य ॥३१॥ ॥ ६ ॥

आज्यं विश्वकर्मण इति जुहोति ॥१॥ उत्थायादधाति समिधं पुनस्त्वेति ॥२॥ गार्हपत्येऽनुगते निर्मथ्य ॥३॥ सुत्यास्वाहवनीये माङ्क्षाशिनेन हुत्वा ॥४॥ आग्नीध्रीयमुत्तरेण सदः ॥५॥ प्रवृञ्ज्यादावृतोऽख्ये ॥६॥ अध्वरप्रायश्चित्तिं च सर्वेषु यथाकालं पूर्वां पूर्वाम् ॥७॥ उखाभे-

स्थापयेत् । एतावद्वनीवाहनाख्यं कर्म यजमानकर्तृकम् ।

अथ भस्मापोऽभ्यवहरणमुच्यते । दीक्षामध्ये यत्पतिदिनं सायं प्रातरुखाया भस्मोद्धृत्य पात्रान्तरे स्थापितं भवति तडागादौ गत्वा वक्ष्यमाणप्रकारेण तस्य भस्मनो ऽप्सु प्रक्षेपः कार्यः । तत्रैकं वटपलाशाश्वत्थादिपत्रैः पुटं कृत्वा तस्मिन् तत्पत्रान्तरस्थमर्द्धं भस्म कृत्वा तेन पुटेनोदकमध्ये भस्म प्रक्षिपति। आपो देवीः प्रति गृभ्णोतेत्यनयैकयर्चा तस्मिन्नेव पलाशपुटे सर्वं भस्म विक्षिप्याप्स्वग्न इति द्वाभ्यामृग्भ्यां तेन पुटेन भस्म प्रक्षिपति।

अथवा प्रथमः प्रक्षेप आपो देवीरिति द्वाभ्यामृग्भ्याम् । ततो गर्भो असीत्येकया द्वितीयः । ततोऽप्सु प्रक्षिप्ताद्भस्मनः सकाशादध्वर्युरनामिकया किञ्चिद्भस्मादत्ते प्रसद्येति चतुर्भिर्मन्त्रैः । ततस्तडागादेः प्रत्यागत्य शालायां तदनामिकया गृहीतं भस्मोखामध्ये प्रक्षिपति । ततो बोधा मे अस्येति द्वाभ्यामृग्भ्यामुपतिष्ठते ।

इति षोडशस्य षष्ठी कण्डिका ॥ ६ ॥

ततोऽध्वर्युराज्यं संस्करोति । तत्र स्रुवस्रुक्समिधां सम्मार्गः । ततो ब्रह्मा उख्यमुखास्थितमेव परिस्तीर्य समिधमाधायोख्येऽग्नौ सकृद्गृहीतेन विश्वकर्मणे स्वाहेति कालाहुतिं हुत्वा ब्रह्मैव यज्ञस्य दोह इति स्वाहान्तं मन्त्रं यजमानं वाचयति । क्त्वाप्रत्ययसामर्थ्याद् ब्रह्मण एव वाचनं युक्तम् । अपरेऽध्वर्युकर्तृकं वाचनमिच्छन्ति ।

**दने नवस्थाल्यां महामुख्यामुखाकपालमवधायावपति ॥८॥ उखोपशये पिष्ट्वा मृदा सहोखां करोत्यावृता ॥९॥ पक्वायामावपति कपालं च ॥१०॥ उखोपशये पिष्ट्वा सꣳसृज्य निदधाति ॥११॥ अभ्यात्मं चयनमुपविश्य ॥१२॥ सव्यं.**

---

ततोऽध्वर्युः समिधा स्रुवस्थानीयया आज्यस्थाल्याः सकाशादाज्यं गृहीत्वोख्येऽग्नौ विश्वकर्मणे स्वाहेति समिधैवाज्यं हुत्वोत्थाय पुनस्त्वेति तां समिधमादधाति । एतन्नस्मापोऽभ्यवहरणसंज्ञं कर्म दीक्षामध्ये इच्छया भवति । सोमक्रयाह्न्यवश्यं भवत्येव । दीक्षामध्ये भवति न वा ।

अथाग्नीनां शमने प्रायश्चित्तमुच्यते । तत्र गार्हपत्येऽनुगते अरणिभ्यां मथित्वा स्थापयित्वाऽऽज्यसंस्कारपूर्वकमुभे प्रायश्चित्ती होतव्ये । तत्र पूर्वं ब्रह्मा कालाहुतिमध्वरप्रायश्चित्तिं च जुहोति । ततोऽध्वर्युः आग्निकीं प्रायश्चित्तिं समिधाऽऽज्यं गृहीत्वा विश्वकर्मणे स्वाहेत्येतामाहुतिं हुत्वा समिदाधानं करोति ।

अथ सुत्यास्वाहवनीशमने इध्मं विनाऽपि कर्परेणैवान्वग्निरिति मन्त्रेण प्राञ्चं सदोहविर्धानमध्येऽनैव नीत्वोत्तरवेदौ स्थापयित्वा समितमित्युपस्थानमिष्टिं वा कृत्वाऽध्वरप्रायश्चित्तिमग्निप्रायश्चित्तिं च पूर्ववत् कुर्यात् । एवमेवाग्नीध्रीयमुपशान्तमिध्मं विनैव कर्परेणोत्तरेण सदो हृत्वाऽऽग्नीध्रीये स्थापयित्वाऽध्वरप्रायश्चित्तिमग्निप्रायश्चित्तिं च कुर्यात् ।

उख्यस्याग्नेरनुगमने गार्हपत्यात्प्राञ्चमुद्धृत्याहवनीयखरे स्थापयित्वा पूर्ववत् तूष्णीमध्वर्युरेवोखाधिश्रयणं कृत्वोखायामग्निमुत्पाद्याध्वरप्रायश्चित्तिं च कुर्यात् । समिदाधानं पुनर्न भवति। सुत्यासु शालाद्वार्यानुगमने प्राजहितादन्वग्निरित्युद्धृत्य समितमित्युपस्थानमिष्टिं वा कृत्वाऽध्वरप्रायश्चित्तिमग्निप्रायश्चित्तिं च कुर्यात्। प्राजहितानुगमने गार्हपत्यवत्।

अथोखाभेदे प्रायश्चित्तमुच्यते । उखायां भग्नायां महामुख्यां मृन्मय्यां नूतनायां स्थाल्यां भग्नाया उखायाः कपालमवधाय तत्रोख्यमग्निमावपेत् । उखानिष्पत्तिपर्यन्तं तत्रवाग्निस्तिष्ठति । ततो नूतनामन्यां मृदमानीय भग्नामुखां पिष्ट्वा उपशयां च पिष्ट्वा आनीतया मृदा सहोखोपशयाचूर्णं संसृज्य संयौति । ततो यजमानः पूर्ववत्तूष्णीं मृदादानादि निधानान्तामुखां कुर्यात् । ततोऽध्वर्युरुखाधूपनाद्यजापयसोऽवसेकान्तं तूष्णीं करोति।

ततः पक्वायामुखायां तूष्णीमुखामध्ये स्थालीस्थमुख्यमग्निमोप्योखाकपालमपि तत्रैवावपति । ततोऽवशिष्टान्युखाकपालानि पिष्ट्वोपशयां च पिष्ट्वा संसृज्य प्रायश्चित्त्यर्थं सुगुप्ते देशे निदधाति । अत्राह वासुदेवः—

बाहुमन्तरं कृत्वोत्तरलक्षणाभिरिष्टकाभिः ॥१३॥ नित्ये-सादनसूददोहसा उपधानादुत्तरे तया देवतया ता अस्येति ॥१४॥ अविशेषोपदेशात् ॥१५॥ अनाम्नातप्रतिषेधाच्च ॥१६॥ एकचोदनास्वेकदेशासु तन्त्रेण ॥१७॥

"अन्यत्राध्वरिकं कार्यमग्नेः सोमाङ्गसूत्रतः ।

नियतेषु निमित्तेषु उभे श्रुतिर्यतस्ततः" इति । इत्युखाभेदे प्रायश्चित्तम् ।

अथ चयनस्य परिभाषा । सर्वत्र लोकम्पृणानां यजुष्मतीनां च चयनमध्वर्युणा आत्मसंमुखं कर्तव्यम्, उपविष्टेन च । यथा अपस्याः पञ्च पञ्चानूकान्तेष्विति । पूर्वासां चयनमुदङ्मुखोपविष्टेनोत्तरस्या अपस्याया आरभ्यात्मसंमुखं दक्षिणसंस्थम् । तथा दक्षिणापस्यानां प्राङ्मुखेन प्रत्यक्संस्थम् । तथा ऽपरापस्यानां दक्षिणामुखेनोदक्संस्थम् । तथोत्तरापस्यानां प्रत्यङ्मुखोपविष्टेन प्राक्संस्थमिति । एवं सर्वत्र ज्ञेयम् । तथा सव्यं बाहुमन्तरमग्न्यात्ममध्यस्थं कृत्वा चयनं कार्यम् । तथा अपस्यास्वेव पूर्वासां चयने उदङ्मुखस्याध्वर्योः सव्यबाहुरग्न्यात्ममध्ये भवति ।

दक्षिणतश्च प्राङ्मुखस्य । पश्चाच्च दक्षिणामुखस्य । उत्तरतश्चापराभिमुखस्य । उक्तविपरीतदिगाश्रयणे च बहिर्भवति । तथा उत्तरलक्षणाभिरिष्टकाभिश्चयनं कर्तव्यम् । उत्तराणि उपरिलक्षणानि यासां तास्तथा ताभिः । लोके हि अधोमुखीभिः चयनं प्रसिद्धम् । अत्र तूत्तानाभिः कार्यमित्यर्थः । तथा सर्वासामिष्टकानां मन्त्रेणोपधानानन्तरं तया देवतयेति मन्त्रेण सादनं कर्तव्यम् । ता अस्येति सूददोहसाधिवदनं च कर्तव्यम् । एतयोः सादनसूददोहसाधिवदनयोर्नित्ये इति संज्ञा संव्यवहारार्था ।

यत्र पुनरुपधानमध्ये एव सादनमन्त्रः पठितस्तत्र तेनैव सिद्धेर्नास्य पृथक् प्रयोगः । यथा स्वयमातृण्णोपधानमन्त्रेषु ऋतव्योपधानमन्त्रेषु च । चिदसि परिचिदसीत्येतयोश्च । तथा एकचोदनास्वेकदेशास्विष्टकासु तन्त्रेण नित्ये भवतः । एका चोदना एकं विधिवाक्यं यासामिष्टकानां ता एकचोदनाः । यथा पूर्वार्द्धे प्राणभृतो दशेति । सर्वतोऽषाढावेलायां स्तोमभागा इत्याद्याः ।

तथा एकदेश उपधानस्थानं यासां ता एकदेशाः । यथाऽत्रैव पूर्वार्द्धाषाढावेलादिः । तासु बह्वीष्वपि सकृदेव नित्ये भवतः । एतदुभयं मिलितं नित्ययोस्तन्त्रत्वे निमित्तं नैकैकम् । या एकचोदना एकदेशाश्च तास्विति । अतश्चापस्यासु सत्यप्येकचोदनात्वे देशभेदात्पञ्चानां पञ्चानां

**आत्मनि यजुष्मतीः ॥१८॥ लोकम्पृणामु दशसु दशसु मन्त्रो लोकं पृणेति ॥१९॥ असादनं च ॥२०॥ प्रतिचिति द्वे द्वे उपधायाधाय ॥२१॥ अयुग्मगणमध्यमाऽनूके ॥२२॥ एका च ॥२३॥ अभितो युग्माः ॥२४॥ उदञ्चो वर्गाः**

---

पृथक् नित्ये । तथा प्राणभृतां च प्रथमायाम् । तथा द्वितीयायामाश्विन्या-दीनां वयस्यानां च । तथा तृतीयायां दिश्यानां छन्दस्यानां च । पञ्च-म्यामसपत्नानां विराजां च ।

स्तोमभागानां चाषाढारूपे एकस्मिन्नेव देशे उपधानविधानादेकोन-त्रिंशत्संख्यानामपि सकृन्नित्ये । सृष्टीनामपि रेतःसिग्विलारूपे एकस्मि-न्नेव देशे विधानात्सप्तदशानामपि सकृन्नित्ये । तथा एकदेशे विहितानाम-पि चोदनाभेदे नित्यभेदः । तथा द्वितीयायामाश्विनीवैश्वदेवीप्राणभृद-पस्यानाम् । तथा यजुष्मत्यो दर्भस्तम्बो लोगेष्टका इत्याद्यानां सर्वासां यजुष्मतीनामुपधानमात्मन्येव कर्तव्यं न पक्षपुच्छेषु । तथा सर्वासु चितिषु प्रथमं द्वे द्वे लोकंपृणे तूष्णीमुपधाय तयोर्लोकं पृणेति मन्त्रे-णाभिमन्त्रणं कृत्वा पश्चाद्दश दश लोकम्पृणाः तूष्णीमुपधाय एकैकेन लोकम्पृणेति मन्त्रेण दशानां दशानां लोकम्पृणानामभि मन्त्रणं कुर्यात् ।

ततः सूददोहसाधिवदनमेव लोकम्पृणानां भवति सादनं च न भ-वति । तथा—यत्रायुग्मानामिष्टकानां गणस्योपधानमुच्यते—यथा पञ्च-म्यां तिसृणां तिसृणां छन्दस्यानाम्, प्रथमायां पञ्चानां पञ्चानामपस्या-नाम, द्वितीयायां पञ्चानां पञ्चानां वयस्यानाम । तृतीयायां सप्तानां स-प्तानां वालखिल्यानाम् । चतुर्थ्यां च नव दक्षिणेनानूकमिति नवानां सृ-ष्टीनाम्, पञ्चम्यां स्तोमभागासु पञ्चदश दक्षिणेनानूकमिति पञ्चदशानां स्तोमभागानामिति ।

तत्र सर्वत्र तस्य त्रिपञ्चमादीष्टकागणस्य या मध्यमा इष्टका सा अ-नूकस्योपर्युपधेया । अन्यास्तु तामनूकोपहितामभित उपधेयाः । तत्र तिसृणां द्वितीया मध्यमा, पञ्चानां तृतीया मध्यमा, सप्तानां चतुर्थी, न वानां पञ्चमी, पञ्चदशानामष्टमी मध्यमेति । तथा-या इष्टका एकैव वि-धीयते साऽप्यनूकस्योपर्येवोपधीयते । यथा—स्वयमातृण्णा, दूर्वेष्टका, द्वियजुः, विश्वज्योतिः, अषाढा, उखा, स्रुचौ ।

एताः प्रथमायाम्, तृतीयायां पञ्च, दिश्याः, विश्वज्योतिश्च । चतु-र्थ्यां दक्षिणत उत्तरतश्च दक्षिणोत्तरे द्वे द्वे, पञ्चम्यां विश्वज्योतिश्च । त-

**पूर्वापरे ॥२५॥ प्राञ्चो दक्षिणोत्तरे ॥२६॥ भिन्नकृष्णयोर-**

था—या इष्टका युग्मा विधीयन्ते ता अनूकमभितोऽर्द्धा अर्द्धा उपधेयाः । यथा सर्वासु चितिषु ऋतव्ये । प्रथमायां रेतःसिचौ ।

द्वितीयायां पुरस्ताच्चतस्रो वयस्याः । तृतीयायां पूर्वार्धे दश प्राण-भृतः । द्वादश द्वादशाप्ययेषु छन्दस्याश्च । यथा च चतुर्थ्यां पुरस्तात्पश्चा-च्चानूकान्तयोर्दक्षिणोत्तरे द्वे द्वे । प्रागनूकमुत्तरेण सृष्टयश्च । चतुर्द-शार्धपद्याः षड् पद्याश्च । तथा—पञ्चम्यां दश दश विराजः प्रागनूकमु-त्तरेण स्तोमभागाः । गार्हपत्य-पुनश्चिती च । विकर्णीस्वयमातृण्णे च ।

अथ सर्वासु चितिषु इष्टकानां लक्षणान्युच्यन्ते । तत्र पूर्वमिष्टकोपधानकाले अग्निक्षेत्रमध्ये महान्तोऽष्टौ शङ्कवो निखातव्याः । चतुर्ष्वात्मकोणेष्वे-कैकः । तथा प्रागनूकप्रान्ते एकः । तथा पुच्छमध्यप्रान्ते द्वितीयः । तथा दक्षिणपक्षमध्यप्रान्ते एकः । उत्तरपक्षमध्यप्रान्ते च द्वितीयः । एवमष्टौ शङ्कून्दृढान् निखाय तेषु रज्जवो गाढमाकृष्य बन्धनीयाः । दक्षिणप-क्षमध्यान्तशङ्क्वोरेका रज्जुर्गाढमाकृष्योदगायता बन्धनीया । तदुप-लक्षितः प्रदेश उदगनूक इति कथ्यते ।

तथाऽऽत्ममध्यप्रान्तनिखातशङ्कुपुच्छप्रान्तशङ्क्वोर्द्वितीया रज्जुः प्रा-गायता बन्धनीया । तदुपलक्षितः प्रदेशश्च प्रागनूक इति कथ्यते । तथा दक्षिणश्रोण्युत्तरांसशङ्क्वोरेका अक्षणया रज्जुस्तृतीया । तथोत्तर-श्रोणिदक्षिणांसशङ्क्वोरक्षणया रज्जुश्चतुर्थी बन्धनीया । एवं चतस्रो रज्जू-र्बद्ध्वा आत्मनः पूर्वान्तादारभ्य पुच्छापरान्तपर्यन्तं प्रागनूकमभितोऽ-क्षणयावधिके दक्षिणोत्तरे देशे प्राग्लक्षणा इष्टका उपधेयाः । तथा दक्षिण-पक्षान्तादारभ्य उत्तरपक्षान्तं यावदुदगनूकमभितोऽक्षणयावधिके पूर्वा-परे देशे उदग्लक्षणा इष्टका उपधेयाः ।

अथ प्रकारान्तरेणाऽप्ययमेवार्थ उच्यते । अक्षणयारज्जुभ्यामात्मनि चतुर्धा विभक्ते चतसृषु दिक्षु चत्वारि त्रिकोणानि संपन्नानि । तत्र पूर्वत्रिकोणे अपरत्रिकोणे च पुच्छसहिते प्राग्लक्षणा इष्टका उपधेयाः । दक्षिणपक्ष-सहिते दक्षिणत्रिकोणे उत्तरपक्षसहिते उत्तरत्रिकोणे चोदग्लक्षणा उपधेयाः । तथा दक्षिणश्रोण्युत्तरांसशङ्कुबद्धाऽक्षणयारज्ज्वधिष्ठिते दक्षि-णश्रोण्युत्तरांसावधिके सर्वस्मिन्नक्षणयादेशे या इष्टका उपधीयन्ते पद्यापादभागबृहतीजक्काभाग्यादिकास्ताः सर्वा उदग्लक्षणा उपधेयाः ।

तथा उत्तरश्रोणिदक्षिणांसशङ्कुबद्धाक्षणयारज्ज्वधिष्ठिते उत्तरश्रोणि-दक्षिणांसावधिके सर्वस्मिन्नक्षणयादेशे पूर्वोक्ताः सर्वा इष्टकाः प्राग्लक्षणा

चयनम् ॥२७॥ दीक्षाणामुत्तमेऽहनि वेद्यग्निमानम् ॥२८॥ उख्यस्थानेऽर्धव्यामेन गार्हपत्यस्य परिलिखति ॥२९॥ मण्डलाद्वा प्रक्रमणमन्तः पात्यस्य ॥३०॥ पश्चाद्यूपावट्या त्पादमात्रे चित्यस्य ॥३१॥ यजमानेनोर्द्ध्वबाहुप्रपदो-च्छ्रितेन समस्थितेन वा ॥ ३२ ॥ ॥ ७ ॥

---

उपधेयाः। तथा भिन्नानां भग्नानामिष्टकानां कृष्णवर्णानां च चयनं न कर्तव्यम्। पञ्चम्यां तु लोकपृणानां प्रकारान्तरेणोपधानविधानादुदञ्चो वर्गा इत्यादि नियमस्याप्रवृत्तिः। यजुष्मतीनां तु भवति।

अथ प्रकृतमुच्यते। प्रागुक्तानां दीक्षापक्षाणां मध्ये यः पक्षोऽङ्गीकृतो भवति तस्मिन्पक्षे यावत्यो दीक्षा भवन्ति तावतीनामुत्तमेऽहनि वेदिमानमग्निमानं च कर्तव्यम्। तत्र सम्वत्सरदीक्षापक्षे फाल्गुनकृष्णचतुर्दश्यां, षण्मासदीक्षापक्षे चैत्रशुक्लैकादश्यां वैशाखस्य वा शुक्लैकादश्यां वेदिमानं कार्यम्। एकदीक्षापक्षे च रात्रावग्निविसर्गानन्तरं यूपच्छेदनमहावीरसंभरणवनीवाहनाप्सुभस्मप्रक्षेपवेदिमानाग्निमानानि कार्याणि। तत्र पूर्वमुख्यस्याग्नेः स्थाने अर्द्धव्यामेन गार्हपत्यस्य मण्डलं परिलिखति। सप्तसु प्रकमेष्वर्धव्यामाधिकेष्वाहवनीयखरस्य मध्यं पूर्वं कृतमस्ति, अधुना तस्मान्मध्यादर्धव्यामेन गार्हपत्यस्य परिलेखः कार्यः। ततः परिलेखस्य पूर्वान्तादारभ्य प्राच्यां त्रिपदान् त्रीन्प्रक्रमान् प्रक्रम्यान्तःपात्यस्य शङ्कोर्निखननं कार्यम्। ततो ब्रह्मयजमानयोरग्निदेशं दक्षिणेन बहिर्वेद्युपवेशनम्। ब्रह्मणः समन्त्रक आसनसंस्कारः। यजमान वाचं यच्छेति प्रैषः। ततः षट्कासादनादि त्रिकप्रोक्षणान्तम्। तृणस्य यत्नेन स्थापनम्। ततस्त्रिपदप्रक्रमपरिमाणं काष्ठं गृहीत्वा तेन काष्ठेनान्तःपात्यादारभ्य षट्त्रिंशत्प्रक्रमां प्राचीं वेदिं विमीमिते। तत्र प्रान्ते यूपावटार्थं शङ्कुर्निखातव्यः।

ततो दक्षिणश्रोणेरारभ्योदक्त्रिंशत्प्रक्रमां, दक्षिणांसादरभ्योदक्चतुर्विंशतिप्रक्रमाम्, दक्षिणभागे उत्तरभागे च श्रोण्यंसगामिनीं रेखां कुर्यात्। वेदिपरिसमूहनमुत्करकरणं चाग्नीत्करोति।

ततोऽन्तःपात्यादारभ्य यूपावटशङ्कुपर्यन्तां पृष्ठ्यामध्वर्युर्निष्पादयति। एवं पृष्ठ्यायामान्तं वेदिमानम्।

इति षोडशस्य सप्तमी कण्डिका ॥ ७ ॥

द्विपुरुषाᳫं रज्जुं मित्वा ॥१॥ उभयतः पाशां मध्ये लक्षणमभितोऽर्धपुरुषयोश्च ॥२॥ मध्यमात् पुरुषपञ्चमे ॥३॥ अर्धे च ॥४॥ अनुपृष्ठ्यामायम्य ॥५॥ पाशयोः शङ्कू मध्ये ऽर्धपुरुषयोश्च ॥६॥ पाशा उन्मुच्यार्धपुरुषीययोः प्रतिमुच्य दक्षिणाऽऽयम्य मध्यमे नितोदं करोति ॥७॥ उन्मुच्य पाशावेकं मध्यमे प्रतिमुच्य दक्षिणाऽधिनितोदमायम्य मध्यमे शङ्कुः ॥८॥ तस्मिन् पाशं प्रतिमुच्य दक्षिणाऽऽयम्य मध्यमे शङ्कुः ॥९॥ पश्चादर्धपुरुषे च ॥१०॥ उन्मुच्य पूर्वार्ध्यात्पश्चार्द्धे प्रतिमुच्य दक्षिणाऽऽ

---

अथात्रिमानमुच्यते । तत्र पादाग्राभ्यां तिष्ठता समस्थितेन चोर्ध्वबाहुना यजमानेन एकः पुरुषो भवति ।

अत एवंविधेन पुरुषेण द्विपुरुषप्रमाणां रज्जुं मित्वा तस्या उभयोरन्तयोरेकैकः पाशः कर्तव्यः । ततस्तां द्विपुरुषां रज्जुं मध्यमोटनेन द्विगुणीकृत्य तस्या मध्ये पुरुषमात्रे लक्षणं कर्तव्यम् । ततस्तन्मध्यमलक्षणमात्मनो द्वयोरर्द्धपुरुषयोरेकैकं लक्षणं कार्यम्, एवं त्रीणि ।

ततस्तन्मध्यमाल्लक्षणात्पुरुषस्य पञ्चमे भागे मध्यमलक्षणसन्निकृष्टे चतुर्थं लक्षणं कार्यम् । ततस्तस्य पुरुषपञ्चमभागस्यार्द्धपञ्चमे लक्षणं कार्यम् ।

एवमुभयतःपाशां मध्ये लक्षणपञ्चकयुक्तां द्विपुरुषां रज्जुं कृत्वा यूपावट्यशङ्कोः पश्चात्पादमात्रे चित्यस्य पूर्वार्द्धे शङ्कुं निखाय तस्मिन् शङ्कावस्या रज्जोरेकं पाशं प्रतिमुच्य पृष्ठ्याया उपरि तां रज्जुं प्रतीचीमाकृष्यापरपाशान्ते शङ्कुं निखाय तत्र पाशं प्रति मुञ्चेत् ।

ततोऽस्या रज्ज्वा मध्ये एकं शङ्कुं निखनेत् । तमभितोऽर्धपुरुषयोरेकैकं निखनेत् । एवं द्विपुरुषप्रमाणायां प्राच्यां पञ्च शङ्कवो निहिताः ।

ततो रज्वाः पाशौ पूर्वापरशङ्कुभ्यां निःकाश्यार्द्धपुरुषलक्षणे निखाय तयोः पूर्वापरशङ्कोः पाशौ प्रतिमुच्य मध्यमलक्षणेन गृहीत्वा तां रज्जुं दक्षिणस्यां दिश्याकृष्य मध्यमलक्षणस्थाने नितोदं गर्तादिरूपं चिह्नं भूमौ करोति ।

ततोऽर्धपुरुषीयशङ्कुभ्यां पाशौ निकाश्य तयोः पाशयोर्मध्ये एकं पाशं प्राच्या मध्यमे शङ्कौ प्रतिमुच्य तां रज्जुं नितोदस्योपरि समां दक्षि-

**यस्य मध्यमे शङ्कुः ॥११॥ अभितोऽर्धपुरुषयोश्च ॥ १२ ॥ एवमुत्तरोऽन्तः ॥१३॥ दक्षिणे पार्श्वे पूर्ववदायम्य ॥१४॥ पञ्चमभागीये शङ्कुः ॥१५॥ तस्मिन्पाशं प्रतिमुच्य पूर्वे चार्धपुरुषीये ॥१६॥ पञ्चमभागीयार्धपुरुषीययोः संनिपात्य तस्मिञ्छङ्कुः ॥१७॥ एवं पश्चात् ॥१८॥ एवमुत्तरः पक्षः**

णत आकृष्य मध्यमे लक्षणे शङ्कुं निखनेत् । ततस्तस्मिन् शङ्कौ एकं पाशं प्रतिमुच्य द्वितीयं पाशं प्राच्याः पूर्वान्तनिहिते शङ्कौ प्रतिमुच्य मध्यमेन लक्षणेन रज्जुमाग्नेयकोणं प्रत्याकृष्य मध्यमे लक्षणे दक्षिणांसे शङ्कुं निखनेत् ।

ततस्तस्य शङ्कोः पश्चादर्धपुरुषलक्षणे च पक्षाङ्कनार्थं शङ्कुं निखनेत् । ततः प्राचीप्रान्तशङ्कोः पाशं निष्काश्य प्राच्यपरान्तशङ्कौ प्रतिमुच्य मध्यमेन लक्षणेन गृहीत्वा नैर्ऋतीं दिशं प्रत्याकृष्य मध्यमे लक्षणे दक्षिणश्रोणौ शङ्कुं निखाय तस्य शङ्कोः पुरस्तादर्धपुरुषे दक्षिणपक्षाङ्कनार्थं शङ्कुं निखनेत् । श्रोणिशङ्कोरुत्तरतश्चार्धपुरुषे पुच्छसाधनार्थं शङ्कुं निखनेत् ।

एवमात्मनो दक्षिणार्धं साधयित्वोत्तरार्धमप्येवमेव साधनीयम् । तच्चैवम् । पाशा उन्मुच्यार्धपुरुषीययोः प्रतिमुच्योत्तरत आयाम्य मध्यमे नितोदं करोति । तत उन्मुच्य पाशावेकं मध्यमे प्रतिमुच्य नितोदस्योपरि समामुत्तरस्यां दिश्याकृष्य मध्यमे लक्षणे शङ्कुं निखनेत् । ततस्तस्मिन् शङ्कावेकं पाशं प्रतिमुच्य द्वितीयं प्राचीपूर्वान्तशङ्कौ प्रतिमुच्य मध्यमेन लक्षणेन रज्जुमीशानकोणं प्रत्याकृष्य मध्यमे लक्षणे उत्तरांसे शङ्कुं निखाय तस्य शङ्कोः पश्चादर्धपुरुषे उत्तरपक्षसाधनार्थं शङ्कुं निखनेत् ।

ततः प्राचीपूर्वान्तात्पाशमुन्मुच्य तं पाशं प्राच्यपरान्तशङ्कौ प्रतिमुच्य मध्यमेन लक्षणेन वायव्यकोणं प्रति रज्जुमाकृष्य मध्यमे लक्षणे उत्तरश्रोणौ शङ्कुं निखाय तस्य शङ्कोर्दक्षिणतः पुच्छसाधनार्थं शङ्कुं निखनेत् । तस्य श्रोणिशङ्कोः पुरस्ताच्चोत्तरपक्षसाधनार्थं शङ्कुं निखनेत् । एवमात्मा साधितः ।

अथ दक्षिणपक्षस्य साधनम् । तत आत्मनो दक्षिणपार्श्वयोरर्धपुरुषीययोः शङ्कू निहितौ तयोः पाशौ प्रतिमुच्य मध्यमेन रज्जुं दक्षिणत आकृष्य मध्यमे लक्षणे नितोदं चिन्ह करोति । ततः पाशावुन्मुच्य

॥१९॥ तथा पुच्छं वितस्त्या ॥२०॥ इच्छन्पक्षपुच्छाऽप्ययेषु चतुरङ्गुलं चतुरङ्गुलं सङ्कर्षति विकर्षत्यन्ते ॥२१॥ पञ्चारत्निः पुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमास्त्रिपदः समविभक्तस्य ॥२२॥ परितस्य रज्ज्वा सहितं बर्हीरज्ज्वा ॥२३॥ एकषष्टे शते परिश्रितो मिनोति ॥२४॥

---

यस्मिन्भागे पञ्चमभागीयतदर्धलक्षणेन भवतस्तस्य भागस्य पाशमात्मदक्षिणपार्श्वमध्यशङ्कौ प्रतिमुच्य तां रज्जुं नितोदस्योपरि समां दक्षिणत आकृष्य पञ्चमभागीये लक्षणे शङ्कुं निखनेत् ।

ततस्तस्मिन् शङ्कौ प्रतिमुच्यात्मदक्षिणपार्श्वमध्यमशङ्कुप्रोतं पाशं दक्षिणपार्श्वपूर्वार्धपुरुषीये प्रतिमुच्य पञ्चमभागीयार्धपुरुषीयलक्षणे एकत्र गृहीत्वा रज्जुमाग्नेयीं प्रत्याकृष्य पक्षस्याग्नेयकोणे शङ्कुं निखनेत् ।

ततः पूर्वस्मादर्धपुरुषात्पाशं निष्काश्य पश्चादर्धपुरुषीयशङ्कौ पाशं प्रतिमुच्य तथैव नैर्ऋतीं प्रत्याकृष्य पक्षस्य नैर्ऋतकोणे शङ्कुं निखनेत् । एवं दक्षिणः पक्षः साधितः । एवमेवोत्तरः पक्षः साधनीयः ।

अथ पुच्छसाधनम् । तत्रात्मनः पश्चिमे पार्श्वे यौ पुच्छसाधनार्थमर्धपुरुषयोः शङ्कू निहितौ तयोः पाशौ प्रतिमुच्य मध्यमेन लक्षणेन रज्जुं पश्चादाकृष्य मध्यमे चिन्हं कुर्यात् । ततः पाशावुन्मुच्य रज्ज्वा यस्मिन्भागे पञ्चमभागीयार्धपुरुषीयलक्षणेन भवतः तद्भागस्य पाशमात्मपश्चिमपार्श्वमध्यमशङ्कौ प्रतिमुच्य तां रज्जुं नितोदस्योपरि प्रतीचीमाकृष्य पञ्चमभागीयार्धलक्षणे शङ्कुं निखनेत् ।

ततस्तस्मिन् शङ्कौ एकं पाशं प्रतिमुच्य मध्यमशङ्कुप्रोतं पाशं दक्षिणेऽर्धपुरुषीये प्रतिमुच्य पञ्चमभागीयार्धपुरुषीयलक्षणे एकत्र गृहीत्वा रज्जुं नैर्ऋतीं प्रत्याकृष्य पुच्छस्य नैर्ऋतकोणे शङ्कुं निखनेत् ।

ततो दक्षिणार्धपुरुषीयात्पाशं निष्काश्योत्तरपुरुषीये प्रतिमुच्य तथैव वायव्यां प्रत्याकृष्य पुच्छस्य वायव्यकोणे शङ्कुं निखनेत् । एवं पक्षपुच्छसहितोऽग्निः साधितः ।

इच्छया पक्षयोः सन्धौ चतुरङ्गुलं चतुरङ्गुलमुभयत्र संकोचयेत् । अन्ते चतुरङ्गुलमुभयत्र वर्धयेत । पुरुषस्य समभिभक्तस्य पञ्चमो भागोऽरत्निः, दशमो भागः पदम् । पदस्य द्वादशो भागोऽङ्गुलम् । ततोऽग्निक्षेत्रं पक्षपुच्छसहितं सर्वतो रज्ज्वा वेष्टयित्वा तस्या रज्जोर्बहिः संलग्ना एकषष्ट्यधिकाः शतद्वयसंख्याः परिश्रित ऊर्ध्वाः खाते निखातव्याः । तत्रेष्टकानां स्तम्भ-

चतुर्णवतीनि वा त्रीणि ॥२५॥ ऊर्ध्वाः शर्कराः खाते ॥२६॥ उत्सरे पुरुषोच्चयेनैकशताविधात् ॥२७॥ यथाऽग्निवेदीष्टकाप्रमाणम् ॥२८॥ अन्तःपात्यगार्हपत्ययोरिच्छन् ॥२९॥ उत्तरपक्षस्यापरस्याᳬ स्रक्त्यां परिश्रितो मिनोति जङ्घा-

---

मार्थाः कात्यायनसूत्राप्पाषाणाः माध्यन्दिनश्रुतेश्चेष्टकाः । तन्निखननार्थं च सर्वतो निम्ना परिखा खननीया ।

यथा परिश्रितां निरन्तरं निखननं भवति । अथवा चतुर्णवत्यधिकानि त्रीणि शतानि परिश्रितो निखनेत् । उभयपक्षेऽपि उत्तरपक्षस्यापरकोणे तिसृणां परिश्रितां खाते प्रमाणे विशेषः । एका जङ्घामात्री, तस्या उत्तरतो द्वितीया नाभिमात्री, तस्य उत्तरतस्तृतीया मुखमात्री। अन्यासामर्थादूर्ध्वं परिमाणं कल्प्यम् । द्वितीयादिषु चयनेषु पञ्चनवतितमचयनं · यावत् प्रतिचयनमेकैकपुरुषवृद्ध्याऽग्निक्षेत्रस्य मानं कार्यम् ।

प्रथमे चयने सार्धसप्तपुरुषप्रमाणमग्निक्षेत्रम् । द्वितीये चयनेऽष्टपुरुषप्रमाणम् । तृतीये चयने नवपुरुषप्रमाणम् । एवं पञ्चनवतितमे चयने एकाधिकं शतं पुरुषा भवन्ति । अर्द्धपुरुषमानं तु सर्वत्राधिकमस्त्येव । तस्यापि प्रतिचयनं स्वसप्तमभागेन वृद्धिर्भवत्येव । अन्तिमे चयने तस्याप्येकोत्तरशतं स्वसप्तमभागा भवन्ति । अग्निक्षेत्रवदेव द्वितीयादिषु चयनेषु वेदिप्रमाणं वर्द्धयेत् । इष्टकानां च सर्वासां प्रमाणं वर्धयेत्, न तु तासां संख्याधिक्यमाश्रित्य क्षेत्रपूरणम् ।

अत्रेदं रहस्यम् । सर्वमग्निक्षेत्रं सार्धसप्तपुरुषात्मकं समचतुरस्रीकृतस्य स्वसप्तमभागेन द्वितीये चयने वर्धनीयम् । पुरुषस्य क्षेत्रं वा पद्याबृहतीजङ्घामात्र्यादीष्टकाक्षेत्रं वा स्वसप्तमभागेन वर्धनीयम् । एवं प्रक्रमक्षेत्रमपि स्वसप्तमभागेन वर्धनीयम् । तृतीयादिषु चयनेषु सर्वत्रैकोत्तरशयेन स्वस्व सप्तमभागेन वृद्धिर्भवति । तद्यथा तृतीये द्वौ स्वसप्तमभागौ अधिकौ भवतः । चतुर्थे त्रयः, पञ्चमे चत्वारः । षष्ठे पञ्च । सप्तमे षट् । एवंक्रमेण पञ्चनवतितममे चतुर्णवतिः स्वसप्तमभागा वर्धन्ते ।

अत्रायमुपायः । बृहत्यादिक्षेत्रं सप्तधा विभज्य सप्तमं भागं चतुरस्रीकृत्य नानाप्रमाणसमास इत्याद्युपायेन बृहत्यादिक्षेत्रमध्ये आवपेदिति । तत्र गार्हपत्यचितेर्वेदेश्चान्तराले ये त्रयः प्रक्रमास्तेषामिच्छया वृद्धिः कार्या । तथा गार्हपत्यचितीष्टकानां क्षेत्रस्य चेच्छया वृद्धिः । शुल्वकारेण स्वन्तःपात्यगार्हपत्ययोर्वृद्धिः प्रतिषिद्धाऽस्ति ।

मात्रीं नाभिमात्रीं मुखमात्रीमिति मुखमात्रीमिति ॥१०॥८॥

## सप्तदशोऽध्यायः ।

श्वोऽभ्यवहरणादि प्रायश्चित्यन्तं कृत्वा विष्णुक्रमवात्सप्रसमासः ॥ १ ॥ वात्सप्रं कृत्वोपस्थेयं चेत् ॥ २ ॥

---

अत्र सप्तविधाद्येकशतविधानाग्नीनामनुष्ठाने क्रमनियमो नास्ति । तस्मादु सप्तविधमेव प्रथमं विदधीतार्थैकोत्तरमेकशतविधादित्येतत्तु प्राथम्यं चित्यप्रकारापेक्षमेव, नानुष्ठानापेक्षम् । असंभवात् । नहि दीर्घायुषाऽपि पुरुषेण ते प्रकाराः सर्वे क्रमेणानुष्ठातुं शक्यन्ते । ततश्चैकशतविधादीनां विधानस्य वैयर्थ्यमेव स्यात् । क्रमेण केनाप्येकशतविधपर्यन्ताग्निप्रकारानुष्ठानस्यासंभाव्यमानत्वात् ।

इच्छाक्रमेणानुष्ठाने तु सर्वप्रकाराणां सार्थकत्वं भवति । पुरुषभेदेन कश्चित्कंचित्प्रकारमनुतिष्ठति कश्चित्कञ्चिदिति । अत एवैकैकप्रकारस्यावृत्तिरपि कर्तुं शक्यते क्रमनियमाभावादिति ।

इति षोडशस्याष्टमी कण्डिका ॥ ८ ॥

इति त्रिरग्निचित्सम्राट्स्थपतित्रिंशत्क्रतुकृन्महायाज्ञिकदेवयाज्ञिक कृतायां कात्यायनपद्धतौ षोडशोऽध्यायः ॥

---

श्रीगणेशायनमः ॥

प्रातरुपरुसत्प्रथमे दिने नियमेन त्रिस्तनं व्रतकरणम् । चयने एकस्तनादिपक्षो न भवति । उदिते समिदाधानानन्तरं प्रथममपोऽभ्यवहरणादि प्रायश्चित्यन्तं पूर्ववत् कुर्यात । पूर्वं पलाशपुटेनोख्यभस्म एकयर्चाऽप्सु प्रक्षेपणीयम् । द्वितीयवारं तथैव द्वाभ्याम् । पूर्वं वा द्वाभ्याम् । द्वितीयमेकया । ततः प्रसद्येति चतसृभिरनामिकया ततो भस्मन आदानम् । शालायामागत्योखायामात्तस्य भस्मनः प्रासनं बोधा म इति द्वाभ्यामुपस्थानम् । आज्यसंस्कारपूर्विका अध्वरप्रायश्चित्तिरग्निप्रायश्चित्तिश्च । एतावत् प्रथमं कुर्यात् ।

ततो विष्णुक्रमवात्सप्रसमासं यजमानः करोति । यदि तस्मिन्नहनि विष्णुक्रमणपर्यायो भवति तदा विष्णुक्रमान् कृत्वा वात्सप्रोपस्थानं कुर्यात् । यदि वात्सप्रोपस्थानस्य पर्यायस्तदा पूर्वं वात्सप्रेणोपस्थानं कृत्वा ततो विष्णुक्रमान् वात्सप्रोपस्थानं च कुर्यात् ।

पलाशशाखया गार्हपत्यं व्युदूहत्यपेत वीतेति पच्छः प्रति- दिशं पुरस्तात्प्रथमम् ॥ ३ ॥ उदीचीᳬ शाखामुदस्योषां निवपति संज्ञानमिति ॥४॥ मण्डलं छादयति ॥५॥ सिक- ताश्चाग्नेर्भस्मेत्यूषवत् ॥६॥ परिश्रिद्भिः परिश्रयति पूर्वव- देकविᳬशत्या चित स्थेति ॥ ७ ॥ मध्येऽर्धबृहतीश्चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति दक्षिणत उदङ्ङग्ᳬ सोऽ अग्निरिति प्रत्यृचम् ॥ ८ ॥ सकृन्नित्ये ॥ ९ ॥ पश्चात्संहिते पादमात्र्यौ तिरश्च्यौ पुरस्ताच्च ॥१०॥ अपरेण परिक्रम्य

---

ततोऽध्वर्युः पलाशशाखया गार्हपत्यचितेः स्थानस्य मध्यादारभ्य प्रतिदिशं संमार्जनं करोति अपेत वीत इति पादेन पुरस्तात् प्रथमम् । येऽत्र स्थ पुराणा इति द्वितीयेन पादेन दक्षिणतः । अदाद्यम इति तृतीयपादेन पश्चात् । अक्रन्निममिति चतुर्थपादेनोत्तरतः । ततः पलाशशाखामुदीच्यां दिशि उदगग्रामुदस्येत् । ऊर्ध्वामेव निरस्येत् । ततः संज्ञानमिति मन्त्रेण मण्डलस्य मध्ये ऊषान्निवपति । ततस्तैरूषैः सर्वं मण्डलं छादयति । ततोऽग्नेर्भस्मासीति मन्त्रेण मण्डलस्य मध्ये सिकता नि वपति । तत स्ताभिः सर्वं मण्डलं तूष्णीं छादयति । सिकताश्चावपति ऊषवदग्नेर्भ स्मेति मन्त्रेण ।

तत एकविंशतिसंख्याभिः परिश्रिद्भिरेकेन चित स्थेति मन्त्रेण मण्ड- लं परि श्रयति । ताश्च मण्डस्य समन्ततः परिखां निम्नां खात्वोर्ध्वाः शर्कराः संलग्नाश्चितेरवष्टम्भनार्थं निखातव्याः । विस्तारस्तु ऽयङ्गुलानि । ततो मण्डलस्य दक्षिणभागे उदङ्मुख उपविश्य मण्डलस्य मध्ये चत स्रोऽर्द्धबृहतीरिष्टकाः प्रागूलक्षणा दक्षिणोत्तरा उत्तरामारभ्याभ्यात्ममयᳬ॰ सो अग्निरिति प्रत्यृचमुप दधाति । तत्रायᳬ॰ सो अग्निरिति प्रथमा । अग्ने यत्ते दिवीति द्वितीया । अग्ने दिवो अर्णमिति तृतीया । पुरीष्यास इति चतुर्थी ।

एवमुत्तराया आरभ्य दक्षिणसंस्थाश्चतस्र उपधाय तया देवतयेति चतसृणां सकृत सादनं कुर्यात् । ततस्ता अस्येति सकृदेव सूददोहसाधि- वदनं कुर्यात् । उपहितेष्टकानामुपरि हस्तं निधाय ता अस्येति मन्त्रपठन- मात्रम् । तत उपहितानामर्द्धबृहतीनां मध्ये द्वितीयतृतीये अर्द्धबृहत्यौ अपरेण पश्चाद् द्वे पद्ये अर्द्धबृहतीसंलग्ने उदग्लक्षणे उपधेये । तयोरेवा- र्द्धबृहत्योः पुरस्तादप्येवमेव द्वे पद्ये उदग्लक्षणे उपधेये । आसामुपधान- क्रमो मन्त्राश्चोच्यन्ते ।

चयनमिडामग्न इति पश्चिमे प्रतिमन्त्रमुत्तरतः ॥ ११ ॥ चिदसीति पूर्वे दक्षिणतः प्रतिमन्त्रम् ॥१२॥ नित्ये प्रतीष्टकं तिरश्चीषु ॥१३॥ स्रक्तिषु पादमात्रीः ॥१४॥ पूर्वदक्षिणस्यामर्धपद्ये ॥१५॥ शेषे वक्राः ॥१६॥ तिसृषु लोकम्पृणासु मन्त्रो दशसु च ॥ १७ ॥ द्वयोर्वा दशस्वेकस्यां च ॥ १८ ॥ चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति ॥१९॥ समम्बिलां कृत्वोख्यं निवपति समितमिति ॥ २० ॥ रिक्तां नावेक्षेतोखाम् ॥ २१ ॥ सिकताभिः समं

उपहितेष्टका अपरेण उत्तरतो गत्वा दक्षिणामुख उपविष्टोऽपरयोर्दक्षिणां प्रथमामुपदधाति इडामग्न इति । नित्ये च कृत्वा । ततस्ते अपरेण गत्वा दक्षिणत उदङ्मुखोपविष्टः पूर्वयोर्मध्ये प्रथममुत्तरामुपदधाति चिदसीत्येतावता मन्त्रेण । ततस्तया देवतयेति सादनम् । ता अस्येति सूददोहसाधिवदनं करोति । ततः परि चिदसीत्येतावता मन्त्रेण दक्षिणामुपधाय पूर्ववन्नित्ये करोति । ततोऽवशिष्टेषु त्रिषु कोणेषु पद्याः । पूर्वदक्षिणकोणे प्रागायते अर्धपद्ये । तत्र दक्षिणापरकोणे उदग्लक्षणा पद्योपधेया । उत्तरपूर्वकोणेऽप्युदग्लक्षणैव पद्योपधेया । उत्तरापरकोणे च प्राग्लक्षणा पद्या ।

ततः शेषे मण्डले अष्टौ वक्रा इष्टका उपधेयाः । ताश्च पुरस्ताद् द्वे प्राग्लक्षणे । पश्चाच्च द्वे प्राग्लक्षणे । दक्षिणोत्तरयोश्च द्वे द्वे उदग्लक्षणे । एवमेकविंशतीष्टकानां मध्ये अष्टौ मन्त्रान्तरेणोपहिताः । अथ त्रयोदश लोकम्पृणा अवशिष्यन्ते तासां मध्ये प्रथमं पूर्वयोर्वक्रयोर्दक्षिणा वक्रा । द्वे अर्धपद्ये । एतास्तिस्रः पूर्वमुपधाय लोकं पृणेत्यभिमन्त्रयेत् । ततोऽवशिष्टा दशोपधेयाः ।

अथवा प्रथममेका वक्रा एका अर्द्धपद्या । एवं द्वे उपधाय ततः प्रदक्षिणं दश । ततोऽन्ते पूर्वयोरुत्तरा एका वक्रेति । ततश्चात्वालदेशात् पुरीषमानीय इन्द्रं विश्वा इति गार्हपत्यचितेरुपरि निवपति । ततः पुरीषेण समंबिलां कृत्वा समितमिति चतुर्भिर्मन्त्ररुख्यमग्निं चितेर्मध्ये आवपति ।

ततोऽध्वर्युः रिक्तामग्निशून्यामुखां सिकतापूरणादर्वाक् न विलोकयेत्। तत उखां सिकताभिः पूरयित्वा मातेव पुत्रमिति मन्त्रेण शिक्यादुखां विमुञ्चति । ततोऽग्नेरुत्तरतोऽरत्निमात्रे चितेरुपयवोखां निधाय

बिलां कृत्वा मातेव पुत्रमिति शिक्याद्विमुच्याग्निवन्निधा-
याऽऽसिञ्चति पयो मध्ये तूष्णीम् ॥ २२ ॥ त्रिचितमेके
॥ २३ ॥ नैर्ऋतीः कृष्णास्तुषपक्वास्तिस्रोऽलक्षणाः पाद-
मात्रीर्हविष्यसन्नहोमवद्देशे दक्षिणोत्तराः कृत्वा दाक्षिणा-
मुखोऽनुपस्पृशन्नसुन्वन्तामिति प्रत्यृचं पराचीः ॥२४॥१॥

अभ्यात्ममेके ॥१॥ नित्याभावः ॥२॥ शिक्यरुक्मपा-
शेण्डूवासन्दीः परेणास्यति यं त इति ॥३॥ उदपात्रं निषि-
च्यान्तरात्मेष्टकमुत्तिष्ठन्ति नमो भूत्या इति ॥४॥ अनपेक्ष-
मेत्य शालाद्वार्योपस्थानं निवेशन इति ॥५॥ प्रायणीयहवि-

---

तूष्णीमेवोखामध्ये पयो निनयति । केचिदाचार्या गार्हपत्यं त्रिचितमि-च्छन्ति । अस्मिन् पक्षे अर्द्धबृहत्युपधानादि त्रिरपरं कर्तव्यम् । ततः पुरीषनिवपनादि । ततोऽध्वर्युः नैर्ऋतीसंज्ञकास्तिस्र इष्टकाः पद्याः कृष्णवर्णास्तुषैः पक्वा लक्षणवर्जिता नैर्ऋत्यां दिशि गत्वा स्वयम्प्रदी-र्णे श्वभ्रादौ ऊषरे वा दक्षिणोत्तरा निधाय ततो दक्षिणामुखस्तासामि-ष्टकानां स्पर्शमकुर्वन् पराचीरसुन्वन्तमिति प्रत्यृचमुपदधाति । तासु च नित्ये न भवतः ।

इति सप्तदशस्य प्रथमा कण्डिका ॥ १ ॥

---

ततः शिक्यं रुक्मपाशम् इण्डूवे आसन्दीं चेत्येतानि नैर्ऋतीभ्यो दक्षिणे देशे यं ते देवीरिति निरस्यति । तत आत्मनो नैर्ऋतीनां चान्तराले उदकपूर्णं चमसं विनीय नमो भूत्या इत्यनेन मन्त्रेण ब्रह्मयजमानाध्वर्यव उत्तिष्ठन्ति । ततो ब्रह्मादयो नैर्ऋत्युपधानदेशादनपेक्षं पश्चादवलोकनमकु-र्वन्तः शालां प्रत्यागच्छन्ति ।

ततः शालां प्रविश्य गार्हपत्यचितेरुत्तरतोऽवस्थिताः प्राङ्मुखा निवेशन इति मन्त्रेण शालाद्वार्यं शालाद्वारि भवं गार्हपत्यचित्यात्मकमि-ष्टकाहितमग्निमुपतिष्ठन्ते । एते त्रय उप तिष्ठन्त इति याज्ञिकाः । "प्रत्ये-त्याग्निमुपतिष्ठते यदेवोपतिष्ठत" इत्येकवचनश्रवणादध्वर्युरेवोपतिष्ठत इत्यन्ये ।

ततः प्रायणीयेष्टिः । तस्यां चतुरासनादि । हविष्कृदाह्वानादि तुष-विमोकान्तं कृत्वा शूर्पादानात् प्राक् महावेदेः स्फ्याद्दानादि संमर्शनान्तं

ष्कृदन्ते महावेदे स्स्फ्याग्रा संमर्शनात्करोति ॥६॥ प्रायणीयान्ते सीरं युनक्त्यौदुम्बरम् ॥७॥ मौञ्जं त्रिवृद्रज्जवम् ॥८॥ षड् द्वादश चतुर्विꣳशतिं वा युनक्ति ॥९॥ पूर्वेणोत्तराꣳसं दक्षिणामग्निश्रोणिमपरेण तिष्ठन्युज्यमानमभिमन्त्रयते सीरा युञ्जन्तीति ॥१०॥ आत्मनि कृषत्यनुपरिश्रिच्छुनꣳसु फाला इति प्रत्यृचम् ॥११॥ दक्षिणतः प्राचीम् ॥१२॥ प्रदक्षिणमितराः ॥१३॥ तूष्णीं तिस्रस्तिस्रः प्रदक्षिणम् ॥१४॥ तिर्यगनूके ॥१५॥ अक्ष्णया श्रोण्यꣳसयोः ॥१६॥ अनूके ॥१७॥ अक्ष्णया श्रोण्यꣳसयोः ॥१८॥ दीर्घप्रयुक्तेषु वा पुरुषाः

---

करोति पूर्ववत् । ततः शूर्पादानादि वेदयोक्त्रविमोकान्तं प्रायणीयं कर्तव्यम् । तत औदुम्बरं सीरं युनक्ति । तत्र सीरे यद्रज्जुजातं तन्मुञ्जमयं त्रिगुणं च भवति । षड् वा दश वा चतुर्विंशति वा बलीवर्दानग्नेरुत्तरांसस्य पुरस्ताद्युनक्ति प्रतिप्रस्थाता ।

ततोऽध्वर्युर्दक्षिणामग्निश्रोणिमपरेण तिष्ठन् प्रतिप्रस्थात्रादिभिर्युज्यमानं सीरं सीरा युञ्जन्तीति द्वाभ्यामभि मन्त्रयते । ततोऽध्वर्युः सीरेणात्मनि कृषति । हलस्याग्रे महतीं मौञ्जीं रज्जुं बद्ध्वा तस्याः प्रान्ते बलीवर्दानां स्कन्धस्थे युगे बध्नीयात् । बलीवर्दास्त्वग्निक्षेत्राद्बहिरेव तिष्ठन्ति । सीरं च कर्षणवेलायामध्वर्युपुरुषा अग्रतो नयन्ति ।

ततोऽध्वर्युः प्रथममात्मनो दक्षिणश्रोणेरारभ्य दक्षिणांसपर्यन्तां प्राचीं सीतां कृषति शुनꣳ सु फाला इति मन्त्रेण । ततः सीरमुत्पाट्य पुनर्दक्षिणश्रोणेरारभ्योत्तरश्रोणिपर्यन्तां द्वितीयामुदीचीं सीतां कृषति घृतेन सीतामिति । तत उत्तरश्रोणेरारभ्योत्तरांसपर्यन्तां तृतीयां सीतां प्राचीं लाङ्गलं पवीरवदिति मन्त्रेण कृषति । उत्तरांसादारभ्य दक्षिणांसपर्यन्तां दक्षिणसंस्थां चतुर्थीं सीतां कामं कामदुघ इति मन्त्रेण कृषति । एवं चतस्रः सीता आत्मनश्चतुर्षु पार्श्वेषु मन्त्रेण कृषति ।

अथ द्वादश सीता आत्ममध्ये तूष्णीं कृषति । तत्र प्रथममुदगनूके तिस्रः सीताः तूष्णीं प्रदक्षिणं कृषति । ततोऽक्ष्णया दक्षिणश्रोण्युत्तरांसयोस्तिस्रः सीतास्तूष्णीं प्रदक्षिणं कृषति । ततः प्रागनूके तिस्रः सीतास्तूष्णीं कृषति । ततोऽक्ष्णयोत्तरश्रोणिदक्षिणांसयोस्तिस्रः सीतास्तूष्णीं कृषति ।

कृषन्ति ॥१९॥ अनडुहो विमुच्य विमुच्यध्वमिति ॥२०॥ पशुवदुत्सृज्य दक्षिणाकालेऽध्वर्यवे ददाति ॥ २१ ॥ सीरमुत्करे कृत्वा ॥ २२ ॥ २ ॥

कुशस्तम्बमुपदधाति मध्ये तूष्णीम् ॥१॥ पञ्चगृहीतेनोद्गृह्णन्नभिजुहोति सजूरब्द इति ॥२॥ चतसृषु चतसृषु त्रींस्त्रीनुदचमसान्निनयाति यथाकृष्टमौदुम्बरेण चतुःस्र-

ततो विमुच्यध्वमिति मन्त्रेण सर्वान् बलीवर्दान् विमुच्य प्रागुदीच्यां दिश्युत्सृजति । दक्षिणाकाले यजमानेन बलीवर्दा अध्वर्यवे देयाः । ततः सीरमुत्करे प्रक्षिपेत् ।

इति सप्तदशस्य द्वितीया कण्डिका ॥ २ ॥

ततोऽध्वर्युरात्मनो मध्ये तूष्णीं कुशस्तम्बं प्रागग्रं पद्मप्रमाणमुपदधाति । नित्ये अपि न भवतः । ततोऽध्वर्युराज्यं संस्कृत्य पञ्चगृहीतं गृहीत्वा कुशस्तम्बं परिस्तीर्य कुशोपग्रहः कुशस्तम्बस्योपरि सजूरब्द इति मन्त्रान्ते जुहोति स्रुचमुद्गृह्णन् । इदमब्दायोषसेऽश्विभ्यां सूराय वैश्वानराय च ।

तत औदुम्बरचमसमुदकेन पुनः पूरयित्वा चतसृषु चतसृषु सीतासु त्रींस्त्रीनुदचमसान् कर्षणक्रमेण निनयति । तत्र च त्रिभागा सीता एकैकस्य चमसस्य भागे आयाति ।

तथाहि-प्रथमे चमसभागे एका दक्षिणा सीता समग्रा । अपरस्यास्तृतीयो भागः । द्वितीये अपरस्या द्वौ भागौ उत्तरस्याश्च द्वौ । तृतीये एको भाग उत्तरस्याः पूर्वा समग्रा । ततस्तिर्यगनूके यास्तिस्रः सीतास्तासां मध्यमा सकला । तत्पूर्वस्यास्तृतीयो भागस्तत्र चतुर्थः । ततस्तस्या द्वौ भागौ द्वावपरस्यास्तत्र पञ्चमः । ततस्तस्या एको भागः । दक्षिणश्रोण्युत्तरांससीतानां मध्यमा समग्रा । ततस्तद्दक्षिणा सीता समग्रा । उत्तरस्यास्तृतीयो भागः । तत्र सप्तमः । ततस्तस्या द्वौ भागौ । प्रागनूकसीतानां मध्यमायाश्च द्वौ भागौ । तत्राष्टमः । ततस्तस्यास्तृतीयो भागः । तस्या दक्षिणा समग्रा तत्र नवमः । तत उत्तरा समग्रा । उत्तरश्रोणिदक्षिणांससीतानां मध्यमायास्तृतीयो भागः । तत्र दशमः । ततस्तस्या द्वौ भागौ । तदपरस्याश्च द्वौ । तत्रैकादशः । ततस्तस्या एको भागः । पूर्वा च समग्रा । तत्र द्वादशः । एवं षोडशसु सीतासु

क्तिना ॥३॥ श्रोन्कृष्टाकृष्टयोः ॥४॥ कृष्टमात्रे वा ॥५॥ तस्मिन्त्सर्वौषधमावपत्येकवर्जमभोजनं तस्योच्छ्वासात् ॥६॥ या ओषधीरिति तृचैर्वपत्युदपात्रवत् ॥७॥ सोमनिवपनाद्यातिथ्यहविष्कृतः कृत्वाऽऽहवनीयपरिश्रितोऽभिमन्त्रयते चित स्थेति ॥८॥ सप्त सप्त वा ॥९॥ लोगेष्टकाः स्फ्येनाहृत्य बहिर्वेदरनूकान्तेषूपदधाति तिष्ठन्मा मा हिꣳसीदिति प्रत्यृचं प्रतिदिशं परस्तात्प्रथमम् ॥१०॥ उत्तरापरस्याः पश्चात् ॥११॥ उत्तरस्याः सिकताः प्रमार्ष्टि जहामि

---

द्वादशानां चमसानां निनयनं कृतम् ।

तथा त्रयश्चमसा अवशिष्यन्ते । तत्र तिसृणां तिसृणां सीतानां मध्ये ये द्वे द्वे अकृष्टे चतुर्ष्वपि स्थानेषु । एवं तान्यष्टौ भवन्ति । तेषु विभज्य ते त्रयश्चमसा निनेयाः । तत्र च त्रिभागोनानि त्रीणि त्रीण्यकृष्टान्येकैकस्य चमसस्य भागे आयान्ति ।

तथाहि—तिर्यगनूकभवे समग्रे द्वे अकृष्टे दक्षिणश्रोण्युत्तरांसाकृष्टयोर्दक्षिणस्याकृष्टस्य द्वौ तृतीयौ भागौ । तत्र त्रयोदशश्चमसो निनेयः । ततस्तस्य एकस्तृतीयो भागः । उत्तरं समग्रम् । प्रागनूकाकृष्टयोर्दक्षिणं समग्रम् । उत्तरस्यां तृतीयो भागः । तत्र चतुर्दशश्चमसो निनेयः । ततस्तस्य द्वौ भागौ । उत्तरश्रोणिदक्षिणांसभवे द्वे समग्रे अकृष्टे । तत्रात्मन आग्नेयकोणपर्यन्तं पञ्चदशश्चमसो निनेय इति ।

ततस्तस्मिन्नौदुम्बरे चमसे एकं धान्यं वर्जयित्वा सर्वाणि धान्यान्यावपति । यानि न संपद्यन्ते तत् प्रतिनिधौ यवानावपेत् मानवे दर्शनात् । यस्यावापो न क्रियते तस्य धान्यस्य यावज्जीवमभोजनसंकल्पो यजमानेन कर्तव्यो यावज्जीवमहं कोद्रवान्न भोक्ष्ये । माषान्न भोक्ष्ये इत्येवम् । एकस्मिन्नेवौदुम्बरे महति चतुरस्रे चमसे बहुतरं सर्वौषधमोप्यते, तेनैव चमसेन करणभूतेन पञ्चदशभिर्ऋग्भिर्वपनं कार्यमिति ।

ततो या ओषधीः पूर्वा जाता इत्यत आरभ्य पञ्चदशभिर्ऋग्भिरुदचमसोन्नयनवत् सर्वौषधं वपति । एकैकचमसस्थाने एकैका ऋक् । धान्यानि चमसेनैव वपति नतु ततो मुष्टया गृहीत्वा । कुतः ? "औदुम्बरेण चमसेन चतुः स्रक्तिने"ति चमसस्य वपनकरणत्वेन श्रवणात् । या ओषधीरिति मन्त्रान्ते आरभ्य प्रथमोदचमसनिनयनावधि पर्यन्तं वपति ।

सोदिमिति ॥१२॥ उत्तरवेदिं निवपति चत्वारिंशत्पदां युगमात्रीं वा सर्वतः कुशस्तम्बे ॥१३॥ अग्ने तवेति सिकता न्युप्य च्छादयत्यात्मानम्॥१४॥ आप्यायस्वेति सिकतालम्भनमृग्भ्याम्॥१५॥ आतिथ्याशेषाद्योपसदः कृत्वा रोहिते चर्मण्यानडुहेऽन्तः पात्यस्य पुरस्तादिष्टकाः करोति प्रथमाचितेः ॥१६॥ इतरासां च चितीनां स्वयमातृण्णाः ॥१७॥ मत्या च ॥१८॥ आज्ये न्यज्य कुशाग्राणि तूष्णीं

---

ततः शतं व इति द्वितीयं मन्त्रं पठित्वा द्वितीयोदचमसनिनयनस्थाने वपति ।

ओषधीः प्रतीति तृतीयोदचमसनिनयनस्थाने । ओषधीरिति चतुर्थस्य । अश्वत्थे व इति पञ्चमस्य । यत्रौषधीरिति षष्ठस्य । अश्वावतीमिति सप्तमस्य । उच्छुष्मा इत्यष्टमस्य । इष्कृतिरिति नवमस्य । अति विश्वा इति दशमस्य । यदिमा इत्येकादशस्य । यस्यौषधीरिति द्वादशस्य । साकं यक्ष्मेति त्रयोदशस्य । अन्या व इति चतुर्दशस्य । याः फलिनीरित्यनेन पञ्चदशचमसनिनयनस्थाने सकलमपि सर्वौषधं वपति । सर्वत्र चमसेनैव सर्वौषधं वपति न तु हस्तेन ।

तत उपरवदेशे प्रतिप्रस्थाता रोहिते चर्मण्यानडुहे सोमं निवपतीत्यत आरभ्यातिथ्येष्टेर्हविष्कृदाह्वानादितुषविप्रमोकान्तं कुर्यात् । शूर्पादानात्प्रागेवाध्वर्युरात्मन ईशानकोणादारभ्य सप्त सप्त परिश्रितोऽभिमन्त्रयते । सप्तत्रिंशदक्षरं सप्तसु सप्तसु मन्त्रः । ततोऽवशिष्टयोर्द्वयोरयं प्रकारः प्रथमपक्षे । द्वितीयपक्षे तु षट्पञ्चाशदक्षरं सप्तसु मन्त्रः । ततोऽवशिष्टयोर्द्वयोः ।

ततो लोगेष्टकानां मृत्खण्डानामुपधानम् । तत्र प्रथमं पुरस्ताद्बहिर्वेदेः सकाशात् स्फ्येन मृत्खण्डमाहृत्यात्मनः प्रागनूकान्ते परिश्रितोऽन्तरत उत्तराभिमुखस्तिष्ठन्नुपदधाति । आहरणे मन्त्रा इति कर्कः । मा मा हिंसीज्जनितेति मन्त्रेणोपदधाति । ततो निस्ये ।

ततो दक्षिणस्यां दिशि गत्वा बहिर्वेदेः स्फ्येन मृत्खण्डमाहृत्यात्मनो दक्षिणपार्श्वमध्ये दक्षिणपक्षसन्धिमन्तरेण संलग्नमेवानूकान्ते पूर्वाभिमुखस्तिष्ठन्नुपदधाति । अभ्यावर्तस्वेति मन्त्रेण । ततो निस्ये ।

ततो वायव्यां दिशि गत्वा बहिर्वेदेरुत्तरापरस्या एव दिशः सकाशात् स्फ्येन मृत्खण्डमाहृत्यात्मनः पश्चिमपार्श्वमध्येऽनूकान्ते पुच्छस-

**प्रोक्षति श्वेतेऽश्वे पुरस्तात्तिष्ठति श्वेताभावेऽश्वेतेऽश्वाभावेऽनडुहि ॥१९॥ अग्निभ्यः प्रह्रियमाणेभ्योऽनुवाचयति ॥२०॥ त्रिरुक्तायामश्वपूर्वां चितिं हृत्वा पुच्छाद्दक्षिणां निदधाति ॥२१॥ तीर्थेनाश्वमारोहयत्युत्तरपक्ष**

न्धिमन्तरेणाग्ने यत्त इति मन्त्रेण दक्षिणामुखस्तिष्ठन् उप दधाति । निस्ये च करोति ।

तत उत्तरस्यां दिशि गत्वा बहिर्वेदेस्तस्या एव दिशः स्फ्येन मृत्खण्डमानीयात्मन उत्तरपार्श्वमध्येऽनूकान्ते पक्षसन्धिमन्तरेण पश्चिमाभिमुखस्तिष्ठन् इषमूर्जमहमिति मन्त्रेण तन्निखनतेनोपदधाति । ततो जहामि सेदिमित्यनेनोत्तरस्या. सिकताः प्रमार्ष्टि हस्तसंस्पर्शनेनाधः पातयतीत्यर्थः । ततो निस्ये ।

ततः शम्यामादाय चात्वालमानायुत्तरवेदिछादनान्तं प्रकृतिवत् । तत्र विशेषः—कुशस्तंबस्योपर्युत्तरवेदिनिवापः । उत्तरवेदिश्च युगमात्री वा । चत्वारिंशत्पदा वा क्षेत्रफलेन । षडशीत्यङ्गुलैर्युगं भवति तावन्मात्रचतुरस्रा । चत्वारिंशत्पदा च क्षेत्रफलेन । यस्यां चत्वारिंशत्पदानां क्षेत्रं भवति सा च शुल्बकृतोक्ता "द्विपदा तिर्यङ्मानी षट्पदा पार्श्वमानी तस्यादणया रज्जुश्चत्वारिंशत्करणी"ति । ततोऽग्ने तवेति षडृचेनात्ममध्ये उत्तरवेदेरुपरि बह्वीः सिकता निवपति ।

ततस्तूष्णीं ताभिः सिकताभिः सर्वमात्मानं प्रदक्षिणं तथा प्रच्छादयति यथा प्रच्छादितः सन्नुत्तरवेदिलोगेष्टकाभिः समोच्छ्रायः संपद्यते । तत आप्यायस्वेति द्वाभ्यामात्माऽऽच्छादनभूताः सिकता आलभते । ततो वर्षवृद्धमसीति शूर्पादानप्रभृत्यातिथ्याशेषं समापयति । ततः प्रवर्ग्योपसदौ करोति ।

तत उपसत्सुब्रह्मण्याऽऽह्वानान्ते अन्तःपात्यस्य पुरस्ताद्वेदिमध्ये प्राग्ग्रीवमुत्तरलोमाऽऽनडुहं रोहितं चर्माऽऽस्तृणाति । तत्र चर्मणि प्रथमचितेरिष्टका निदधाति । इतरासां चितीनां स्वयमातृण्णा एव तत्र निदधाति । अन्याश्चेच्छया निदधाति । ततश्चर्मणः पुरस्तात् श्वेतोऽश्वः स्थाप्यते । श्वेतस्याभावेऽश्वेतोऽप्यश्वः स्थापनीयः । तस्याप्यभावेऽनड्वान् । तत आज्यमध्ये कुशाग्राणि अतिशयेनाङ्क्त्वा तैः कुशाग्रैस्तूष्णीं चर्मस्था इष्टका आज्येन प्रोक्षति ।

ततोऽध्वर्युर्गार्हपत्ये आज्यं सं० संस्कृत्य जुह्वां पञ्चगृहीतं गृह्णाति ।

मपरेण ॥२२॥ पुरस्तात्पश्चाद्वैके ॥२३॥ अनुयजुःकृष्टं परिणयत्युत्तरतः प्रथमम् ॥२४॥ प्रत्यञ्चमागतं चितिमवघ्राप्य परिणीयोत्सृजति पशुवत् ॥२५॥ उत्तरवेदिप्रोक्षणाद्या सम्भारनिवपनात्कृत्वोत्तरवेदिमपरेण तिष्ठन्यजमानो मयि गृह्णामीति जपति ॥२६॥ सत्यसाम गायति ॥२७॥ ॥३॥

पुष्करपर्णमुपदधाति स्तम्बे पूर्ववत् ॥१॥ तस्मिन्रु-

---

कस्मिंश्चित् पात्रे लौकिक्य एवापः प्रोक्षणार्थं कार्याः । आज्यप्रोक्षणीनामुद्यमनम् । ततो बह्वचोऽध्वर्य्वादयश्चर्मोद्यमनं कुर्वन्ति । ततोऽग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीति होतारं प्रति प्रैषः । ततः प्रथमायामृचि उपांशु त्रिरुक्तायामश्वं प्रथमं पुरस्तादग्रतो नयन्ति ।

ततश्चर्मस्थां चितिं प्राच्यां हृत्वा अग्नेः पुच्छाद्दक्षिणा निदधाति । चर्मस्थायामेव सव्यपादेनाश्वस्यारोहणमिति रामः । तत उत्तरपक्षमपरेणात्मन उत्तरश्रोणिपक्षसन्ध्यन्तर्वर्तिनाऽऽत्मप्रदेशेनाश्वमग्निक्षेत्रमारोहयति। एके आत्मपूर्वभागे प्रत्यञ्चमश्वमारोहयन्ति । एके पश्चात् पुच्छप्रदेशेन प्राञ्चम् । ततो यत्रात्मनि मन्त्रेण कर्षणं कृतं तेन मार्गेणाश्वं परिणयति । तत उत्तरपार्श्वे प्रथमं प्राङ्मुखं नयति, ततः पूर्वपार्श्वे दक्षिणमुखम् दक्षिणपार्श्वेप्रत्यङ्मुखमागच्छन्तमेव पुच्छाद्दक्षिणतः स्थापितां चर्मस्थां चितिमवघ्राप्य पश्चिमपार्श्वे उदङ्मुखं परिणीयोत्तरपक्षमपरेणैव निष्काश्य प्रागुदीच्यां दिश्युत्सृजति ।

ततोऽग्निमारुह्य प्रोक्षणीरादायेन्द्रघोषस्त्वेत्यादि प्रोक्षणं प्रतिदिशम् । बहिर्वेदि दक्षिणांससहितः शेषासेकः । नाभिव्याघारणम् । स्रुगुद्यमनम् । एतावदत्र कर्तव्यम् । अत ऊर्ध्वमग्निनिधानकाले एव । तत उत्तरवेदिमपरेण तिष्ठन् यजमानो मयि गृह्णामीति स्वरेण जपति ।

ततो यजमान एव सत्यसाम गायति । ब्रह्मा च दक्षिणस्य पक्षस्य दक्षिणत आसनं समन्त्रकं संस्कृत्योपविशति ।

इति सप्तदशस्य तृतीया काण्डिका ॥ ३ ॥

---

ततोऽध्वर्युः प्राङ्मुखोपविष्टः कुशस्तम्बस्योपरि पुष्करपर्णमुपदधाति अपां पृष्ठमिति मन्त्रेण पुष्कर इत्यन्तेन ।

ततो विवो भात्र्येति विमार्ष्टि विमार्जनेन विस्तीर्णं करोति । ततो

क्ममधःपिण्डं ब्रह्म जज्ञानमिति ॥२॥ उत्तानं प्राञ्चं हिरण्मयपुरुषं तस्मिन्हिरण्यगर्भ इति ॥३॥ पुरुषे चित्रे साम गायति ॥४॥ पूर्वेणापरीत्योऽतः ॥५॥ उपतिष्ठते यजमानो नमोऽस्त्विति ॥६॥ उपविश्य पञ्चगृहीतं जुहोति पुरुषे कृणुष्व पाज इति प्रत्यृचं प्रतिदिशं परिसर्पम् ॥७॥ प्रत्येत्य दक्षिणतः ॥८॥ पश्चात्प्रथमान्त्ये ॥९॥ पुरुषमवच्छाद्योरसाऽस्पृष्टं बाह्वोः प्रपणान्ते लिखति ॥१०॥ तत्र स्रुगुपधानं प्राक्रुयोः ॥ ११ ॥ काष्मर्यमयीं दक्षिणतः

---

नित्ये । ततः पुष्करपर्णस्योपर्य्यधःपिण्डं रुक्ममुपदधाति ब्रह्म जज्ञानमिति मन्त्रेण । ततो नित्ये । रुक्मश्च यः प्राग् यजमानेन धृतः स एव । पुष्करपर्णमप्युखासंभरणसम्बन्ध्येवेति केचित् । अन्यदित्यपरे ।

ततो रुक्मस्योपर्य्युत्तानं प्राङ्मुखं प्राक्शिरसं वा हिरण्यगर्भ इति द्वाभ्यां पुरुषमुपदधाति । ततो नित्ये । प्राङ्मुखमिति वासुदेवः । प्राक्शिरसमिति याज्ञिकाः । ततो यजमानः पुरुषमालभ्य छन्दोगविहितं पुरुषसाम गायति । पुरुषाः । पुरुष । होइ । २ । पुरुष हा ३१ उवा २ । ए । सुवर्ज्योतिः २३४५ः । ततः स्वशाखाविहितं पुरुषे इति पुरुषमालभ्य चित्रे चित्रलिङ्गके कया नश्चित्र इत्यस्मिन् मन्त्रे साम गायति । अत ऊर्ध्वमस्य पुरुषस्य पुरस्तात्परिगमनमध्वर्युणा न कर्तव्यम् । प्रागनूकोल्लङ्घनं कदाऽपि न कार्यमित्यर्थः ।

ततो यजमानो नमोऽस्तु सर्पेभ्य इति त्रिभिः पुरुषमुपतिष्ठते । यजमान इति कर्कः । ततोऽध्वर्युराज्यप० संस्कृत्य पञ्चगृहीतं गृहीत्वोपविश्य कुशोपग्रहः प्रतिदिशं गत्वा तत् पञ्चगृहीतं विभागेन पुरुषस्योपरि जुहोति । तत्र प्रथमं पश्चाद्भागे प्राङ्मुख उपविष्टः पुरुषस्य पश्चाद्भागे कृणुष्व पाज इति मन्त्रेण पञ्चगृहीतांशं जुहोति । इदमग्नय इति सर्वहोमेषु त्यागः ।

तत उत्थायोत्तरतो दक्षिणामुख उपविश्योत्तरपार्श्वे जुहोति तव भ्रमास इति । तत उत्थाय पुरस्तात् प्रत्यङ्मुख उपविश्य पूर्वभागे प्रति स्पश इति जुहोति । ततः प्रत्यागत्य पुरुषमपरेण दक्षिणस्यां दिशि गत्वोदङ्मुख उपविश्य दक्षिणपार्श्वे उदग्ने तिष्ठेति जुहोति । ततः पश्चादागत्य पूर्वाभिमुख उपविश्य पश्चात् पार्श्वे ऊर्ध्वो भवेति जुहोति ।

अथवा सर्वहोमेषु पुरुषस्योपरि मध्य एव होमो न प्रदेशभेदेन ।

पाणिमात्रपुष्करां बाहुमात्रीं पादमात्रीं वा सामर्थ्याद् घृतपूर्णामग्नेष्ट्वेति ॥ १२ ॥ एवमौदुम्बरीमुत्तरतो दधिपूर्णामिन्द्रस्य त्वेति ॥१३॥ तिरश्च्यावेके ॥१४॥ स्वयमातृण्णां पुरुषे शर्करां छिद्रां ध्रुवाऽसीति ॥१५॥ भूरित्येतस्याᳪं साम गायति ॥ १६ ॥ अन्यत्रापि व्याहृतिषु ॥ १७ ॥ मूलाग्रवतीं दूर्वां तस्यां पुरस्ताद् भूमिप्राप्तां काण्डात्काण्डादिति ॥ १८ ॥ पूर्वां पूर्वामुत्तरशः ॥१९॥ यास्त इति द्वियजुषं द्वितीये ॥ २० ॥ उलूखलस्य रेतःसि-

---

अध्वर्योरेवायं दिङ्नियमः। ततो यजमानोऽधोमुखः स्पर्शमकुर्वन्नेव पुरुषमुरसाऽवच्छाद्य बाहू दक्षिणोत्तरौ समौ प्रसारयति।

ततोऽध्वर्युर्बाह्वोः प्रापणान्ते लिखति स्रुचोरुपधानार्थं चिह्ने करोति। एकं दक्षिणतः। द्वितीयमुत्तरतः। ततः चिह्नयोः प्रागग्रयोः स्रुचोरर्धपद्याप्रमाणयोरुपधानं करोति। तत्र काश्मर्यमयीं स्रुचं पादमात्रीं दीर्घां षडङ्गुलविपुलाम् अर्द्धपद्यालोकव्यापिनीं घृतपूर्णां कुशोपग्रहः दक्षिणतः प्राङ्मुख उपविष्टोऽग्नेष्ट्वा अग्निर्मूर्द्धा० जिन्वतीति सादयति। ततो नित्ये।

तत औदुम्बरीं स्रुचं पादमात्रीं दीर्घां षडङ्गुलविपुलामर्धपद्यालोकव्यापिनीं दधिपूर्णां स्फ्योपग्रहः प्रत्यङ्मुख उपविष्ट इन्द्रस्य त्वौजसा सादयामि भुवो यज्ञस्येति मन्त्रेणोपदधाति। ततो नित्ये। स्रुचोश्चोभयत्र विश्वज्योतिर्वेलाप्रान्ते तिर्यगनूकस्योपर्युपधानम्। एके आचार्याः दक्षिणां स्रुचं दक्षिणाग्रामुपदधति। उत्तरां चोदगग्रामिति।

ततः पुरुषस्योपरि स्वयमातृण्णासंज्ञां शर्करां छिद्रां छिद्रयुक्तां तिर्यक्छिद्रामुपदधाति। ध्रुवाऽसि धरुणाऽऽस्तृतेत्यादि सीदेत्यन्तेन मन्त्रेण। ततो नित्ये। छिद्रं च पुरुषशिरस उपरि कार्यम्। कुतः। "यथा पुरुषशिरः प्रत्यातृण्णं स्यादि"ति मानवे दर्शनात्।

ततोऽस्यां स्वयमातृण्णायां यजमानो भूरिति व्याहृत्यां साम गायति। ततोऽध्वर्युरुदङ्मुख उपविश्य मूलाग्रयुक्तां दूर्वां स्वयमातृण्णाया उपर्युपदधाति। तस्या मूलानि स्वयमातृण्णाया उपरि भवन्ति। अग्राणि च स्वयमातृण्णायाः पुरस्ताद् भूमौ अर्द्धपद्यालोकं यथा व्याप्नुवन्ति तथोपधानं कार्यम्। काण्डात् काण्डादिति द्वाभ्यामृग्भ्यां दूर्वामुपदधाति। ततो नित्ये।

**र्वेलायामरत्निमात्रश्रुतेः ॥ २१ ॥ विराट् स्वराडिति रेतःसिचौ प्रतिमन्त्रम् ॥ २२ ॥ प्रजापतिरिति विश्वज्योतिषम् ॥ २३ ॥ ऋतव्ये मधुश्च माधवश्चेति ॥२४॥ अषाढाऽसीत्यषाढाम् ॥२५॥ स्वयमातृण्णारेतःसिग्विश्वज्योतिर्ऋतव्याऽषाढासु लक्षणानि कुरुते रज्वां वेलार्थानि॥२६॥ कूर्मं दधिमधुघृतैरनक्ति मधु वाता इति ॥२७॥ अरत्निमात्रेऽषाढां दक्षिणेनावकामुपरिष्टाच्च पुरुषमभिमुखम् ॥ २८ ॥ ४ ॥**

---

ततो यास्ते अग्न इति द्वाभ्यामृग्भ्यां द्वियजुषं पद्यां दूर्वायाः पुरस्तात् मध्यात् द्वितीये लोके अनूकस्योपर्युदङ्मुख उपदधाति । ततो नित्ये । ततो द्वियजुषः पुरस्तात् रेतः सिचौ द्वे पद्ये अनूकमभित उपदधाति । विराड् ज्योतिरिति प्रथममुत्तराम् । ततः स्वराड् ज्योतिरिति दक्षिणां द्वितीयामुदङ्मुख एवोपदधाति । ततो द्वयोः सकृन्नित्ये ।

ततो रेतःसिचोः पुरस्तात् प्रथमां विश्वज्योतिषं पद्यामुदङ्मुखः प्रजापतिष्ट्वेति मन्त्रेणानूकस्योपर्युपदधाति । ततो नित्ये । ततो विश्वज्योतिषः पुरस्तात् द्वे ऋतव्ये पद्ये अनूकमभित उदङ्मुखो मधुश्च माधवश्चेति मन्त्रेण संविशान्त्वित्यन्तेनोपदधाति ।

ततस्तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतमिति मध्यपठितेनैव सादनं करोति । ततस्ता अस्येति पठति । अत्रापि पूर्वमुत्तरां ततो दक्षिणां यथाक्रमं मधुश्च माधवश्चेत्यालभ्य वासन्तिकावृतू इत्यादिः शेष उभयोरालम्भं कृत्वा पठनीयः । ततः सकृन्नित्ये । तत ऋतव्ययोः पुरस्तात् या पूर्वं महिष्या कृता तामषाढां पद्यामनूकस्योपर्युदङ्मुखोऽषाढाऽसि सहमाना इति मन्त्रेण उपदधाति । ततो नित्ये ।

ततोऽषाढाया दक्षिणतोऽरत्निमात्रं पद्याद्वयप्रमाणं परित्यज्य तृतीये पद्यालोके उदङ्मुख उपविष्टः पद्यालोकव्यापिनं पुरुषाभिमुखं कूर्ममुपदधाति । तत्र पूर्वं कूर्मं दधि मधु घृतैर्मिश्रीकृतैः मधु वाता इति त्रिभिर्मन्त्रैरनक्ति । तत उपधानस्थाने पूर्वमवकाः शैवालं निधाय तासामुपरि अपां गम्भन्निति तिसृभिर्ऋग्भिः कूर्ममुपदधाति ।

इति सप्तदशस्य चतुर्थी कण्डिका ॥ ४ ॥

**अपां गम्भन्निति तिसृभिः ॥१॥ घट्टयति मध्यमया ॥२॥ उलूखलमुसले स्वयमातृण्णामुत्तरेणारत्निमात्रे औदुम्बरे प्रादेशमात्रे चतुरश्रमुलूखलं मध्यसङ्गृहीतमूर्ध्वं वृत्तं मुसलं दक्षिणमुलूखलाद्विष्णोः कर्माणीति ॥३॥ उलूखले उखां कृत्वोपशयां पिष्ट्वा न्युप्य पुरस्ताद् ध्रुवासीत्युखाम् ॥४॥ अग्ने युक्ष्वाहीति प्रत्यृचं स्रुवाहुतीर्जुहोत्युखायाम् ॥५॥ उपस्थानं वाऽसम्वत्सरभृतिनः ॥६॥ प्रतिशिरः सप्त सप्त हिरण्यशकलान्मुखे करोति सम्यक्स्रवन्तीति ॥ ७ ॥**

तत उपधानस्थाने पूर्वमवकाः । तत्र तिसृणामृचां मध्ये मध्यमया त्रीन् समुद्रानित्यनया ऋचा हस्तस्थिमेव कूर्मं घट्टयति कम्पयति । ततस्तूर्नीयायामृचि पठितायामन्ते उपदधाति । तत उपरिष्टात् पुनरवकाभिः कूर्मं प्रच्छाद्य साद्नसूददोहसौ करोति ।

ततोऽपरेण स्वयमातृण्णामुत्तरतो गत्वा ततो मध्यादुत्तरस्यां दिश्यरत्निमात्रे स्वयमातृण्णामुत्तरेणानूकस्योपर्युलूखलमुसले ऊर्ध्वे अर्द्धपद्याप्रमाणे प्रत्यङ्मुख उपविष्टो विष्णोः कर्माणि इत्येकेन मन्त्रेण द्वे अपि सहैवोपदधाति । उलूखलश्चौदुम्बरश्चतुरस्रः प्रादेशमात्र उच्चो मध्यसंगृहीतश्च भवति ।

तथा प्रयोजनाभावादखातमिति भाष्ये । मुसलं च प्रादेशमात्रं वृत्तमौदुम्बरमेव भवति । उत्तरत उलूखलमुपदधाति । मुसलं च दक्षिणतः । सकृन्नित्ये । तत उलूखलस्योपर्युखाया उपधानम् । तत्र पूर्वमुपशयापेषणम् । तत उखाया उलूखलस्योपरि निधानं विष्णोः कर्माणीति । तत उखां पूर्वेणोपशयानिवापः ।

ततो ध्रुवाऽसि धरुणेत इति द्वाभ्यामृग्भ्यामुखाया उपधानम् । ततो नित्य इति कर्कः । सूत्रोक्तक्रमेणैव सर्वमिति हरिस्वामिनः । पूर्वमुलूखले उखाकरणम् । तत उपशयापेषणम् । तस्याः पुरस्तान्निवापः । तत उपधानमिति । ततोऽध्वर्यु राज्यं संस्कृत्य स्रुवं संमृज्योत्तरपक्षमपरेणाग्ना प्राङ्मुख उपविष्ट उखायां स्रुवेण द्वे आहुती जुहोति अग्ने युक्ष्वा हीति प्रथमाम् । युक्ष्वा हीति द्वितीयाम् । इदमग्नय इति द्वयोस्त्यागौ । संवत्सरदीक्षापक्षे नियमेन होम एव भवति । अन्येषु पक्षेषु विकल्पेन होमः । विकल्पेन युक्ष्वा हीति द्वाभ्यामुखामुपतिष्ठते ।

अत्रोलूखलोखोपधानस्थाने पूर्वमर्थात्परिमाणं खातं कृत्वा तत्रोलूख-

उत्तरां द्वौ द्वौ ॥८॥ नासिकयोर्ऋचे त्वेति ॥९॥ अक्ष्णोर्भासे त्वेति ॥१०॥ श्रोत्रयोरभूदिदमिति ॥११॥ सर्वानप्येकस्मिन्नेके ॥१२॥ उखायां प्रत्यञ्चि ॥१३॥ सहस्रदा इति पुरुषशिर उद्गृह्य मध्ये ॥१४॥ अश्वाव्योरुत्तरतः पूर्वापरे ॥१५॥ गोअजयोश्च दक्षिणतः ॥१६॥ आदित्यं-

---

लाद्युपधानं कर्तव्यम् । यथा सिकतापूर्णाया उखाया उपर्युपहितानि पशुशिरांसि पार्श्वं एकाभिः समेत्राग्राणि भवन्ति । ततः पञ्चशिरःपक्षे शिरः शिरः प्रति सप्त सप्त हिरण्यशकलान् प्रास्यति । तत्र सम्यक् स्रवन्तीति मन्त्रेण प्रथमं मुखे हिरण्यशकलं प्रास्यति । तत्र अध्याहारपक्षे ऋचे त्वा प्रास्यामि एवं ज्योतिषेत्यन्तम् । अग्निर्ज्योतिषेत्यत्रास्विति श्रोत्रयोः प्रथममन्त्रे प्रास्यामीति भवति ।

पुरुषशिरस उद्ग्रहणमन्त्रे क्रियापदे सत्त्वेऽपि उद्गृह्णामीति लिखितत्वात् । ऋचे त्वेति दक्षिणनासिकायाम् । ततो रुचे त्वेति सव्यनासिकायाम् । ततो दक्षिणचक्षुषि भासे त्वेति । ज्योतिषे त्वेति सव्ये । ततोऽभूदिदमिति दक्षिणकर्णे । अग्निर्ज्योतिषे सव्ये इति संप्रदायः । हरिस्वामिनस्तु प्रथमं सव्येषु नासादिषु ततो दक्षिणेष्वित्युक्तवन्तः ।

अनेनैव प्रकारेण पञ्चस्वपि शिरःसु पुरुषादिक्रमेण हिरण्यशकलप्रासनम् । केचिदेकपशुपक्षेऽपि एकस्मिन्नेव शिरसि पञ्चवारं सप्त सप्त हिरण्यशकलान् प्रास्यन्ति । ततः प्रत्यङ्मुखोपविष्टः सिकतापूर्णायामुखायां प्रागासिक्तस्य पयस उपरि मध्ये पुरुषशिरः प्रत्यङ्मुखं न्युब्जमधोमुखमेवोपदधाति । तत्र पूर्वं सहस्रदा इत्यनेन पुरुषशिरसो हस्तेनोर्ध्वं ग्रहणम् ।

तत उखामध्ये आदित्यं गर्भम् इत्युपधानम् । ततो नित्ये । तत उत्तरपूर्वकोणेऽश्वस्य शिर उपदधाति वातस्य जूतिमिति मन्त्रेण । ततो नित्ये । ततो दक्षिणपूर्वकोणे गोः शिर उपदधाति अजस्रमिन्दुमिति । ततोऽपरोत्तरकोणे अवेः शिर उपदधाति वरूत्रीं त्वष्टुरिति मन्त्रेण । ततो नित्ये । ततो दक्षिणाऽपरकोणे अजस्य शिर उपधाति योऽअग्निरिति । ततो नित्ये सर्वाणि शिरांसि प्रत्यङ्मुखानि न्युब्जानि चोपधीयन्ते ।

तत आज्यं स्रुवं च संस्कृत्य पुरुषशिरसि द्वे आज्याहुती स्रुवेण जुहोति । चित्रं देवानामित्यर्द्धर्चेन प्रथमाम् । आऽप्रा द्यावेति द्वितीयार्धर्चेन

गर्भमिति प्रतिमन्त्रम् ॥१७॥ चित्रं देवानामित्यध्वर्युश्च‑
शः स्रुवाहुती मध्यमे ॥१८॥ बहिर्वेद्युदङ् तिष्ठन्नुपति‑
ष्ठत उत्सर्गैरिमं मा हि्ँसीरिति प्रतिमन्त्रम् ॥१९॥ उखां
परिक्रममेके ॥२०॥ उपधायोपधाय वा तस्य तस्य
यथालिङ्गम् ॥२१॥ सर्वमन्त्रानप्येकेऽस्मिन्नेके ॥२२॥ उप‑

---

द्वितीयाम् । इदं सूर्यायेति द्वयोस्त्यागः । ततस्तीर्थेन बहिर्वेदि दक्षिणस्यां दिशि गत्वोदङ्मुखस्तिष्ठन्नुत्सर्गसंज्ञकैर्मन्त्रैः शिरांस्यध्वर्युरुपतिष्ठते । इमं माहिर्ँ०सीर्द्विपादमिति पुरुषस्य शिरः प्रथममुपतिष्ठते ।

तत इमं मा हिर्ँ०सीरेकशफमित्यश्वस्य । तत इमर्ँ० साहस्रमिति गोः । तत इममूर्णायुमित्यवेः । ततोऽजो ह्यग्न इत्यजस्य । केचिदात्ममध्ये स्थितामेवोखां परिक्रम्य परिक्रम्यैभिरेव मन्त्रैः शिरसामुपस्थानं कुर्वन्ति । तत्र प्रत्युपस्थानमुखायाः परिक्रमणम् ।

तच्चैवम् । प्रथममुखां परिक्रम्य प्राङ्मुखः पुरुषशिर उपस्थाय प्रदक्षिणं परिक्रम्याश्वस्य शिरःसमीपे स्थित्वा तदुपस्थाय पुनः प्रदक्षिणं परिक्रम्य गोःशिरः समीपे स्थित्वा तदुपस्थाय ततोऽप्रदक्षिणं परिक्रम्यावेः शिरःसमीपे स्थित्वा तदुपस्थाय ततः प्रदक्षिणं परिक्रम्याज शिरः समीपे स्थित्वा तदुपतिष्ठत इति ।

अथवा पुरुषशिर उपधाय तत् सन्निधौ स्थित्वा पुरुषस्योपस्थानम् । ततोऽश्वशिर उपधाय तत्समीपे स्थित्वा तस्योपस्थानम् । एवं सर्वेषाम् । ततो बहिर्वेदेः सकाशात् तीर्थसमीपे आगत्य त्वं यविष्ठेति मन्त्रेण चित्यस्योपस्थानं करोति । आत्ममध्यास्थितस्योपस्थानपक्षेऽपि चित्यस्योपस्थानं भवति । केचिदेकस्मिन्नेव शिरसि सर्वमन्त्रान् प्रयुञ्जते । तत्पक्षे तस्मिन्नेवाजशिरसि पञ्चकृत्वः सप्त सप्त हिरण्यशकलप्रासनम् ।

ततस्तस्य सहस्रदा इत्युदुग्रहणम् । आदित्यं गर्भमिति पुरुषोपधानमन्त्रेणोपस्थानम् । अश्वाद्युपधानमन्त्रैः शिरसस्तस्मिस्तस्मिन् प्रदेशे अङ्गुल्या स्पर्शं करोति । ततश्चित्रं देवानामिति स्रुवाहुती । उत्सर्गमन्त्रैरिमं मा हिर्ँ० सीरित्याद्यैरुपस्थानम् । पञ्चशिरोऽव्याप्त्यभावे ऽजशिरसि सप्तानां हिरण्यशकलानां प्रासनम् । यो अग्निरिति मध्ये उपधानम् । न स्रुवाहुती।

ततो बहिर्वेदि गत्वोदङ्मुखस्याजो ह्यग्नेरजनिष्टेत्युपस्थानम् । उखां

धानमन्त्रान्विपरिहरन्नङ्गुलिं प्रथिष्ठे शिरसि ॥२३॥५॥

एत्य च त्वं यविष्ठेति चित्योपस्थानम्॥१॥अपरेण स्वयमातृण्णामेत्यापस्याः पञ्च पञ्चानूकान्तेष्वपां त्वेमन्निति

---

परिक्रम्य वा । तत्र स्थितस्यैव वा । ततस्त्वं यविष्ठेति चित्यस्योपस्थानम् ।

इति सप्तदशस्य पञ्चमी कण्डिका ॥ ५ ॥

---

ततस्तीर्थेनाग्निमारुह्यापरेण स्वयमातृण्णामागत्य सर्वासु दिक्ष्वनूकान्ते पञ्च पञ्चापस्या उपदधाति ।

तत्र प्रथमं प्रागनूकान्त उदङ्मुखोपविष्ट पञ्चापस्या उत्तरामारभ्याभ्यात्ममुपदधाति अपां त्वेमन्निति प्रथमाम् । अपां त्वोद्मन्निति द्वितीयाम् । अपां त्वा भस्मन्निति तृतीयाम् । अपां त्वा ज्योतिषीति चतुर्थीम् । अपां त्वाऽयन इति पञ्चमीम् । एतासां मध्यमाऽनूकस्योपर्युपधीयते । तामभितो द्वे अर्द्धपद्ये । एताः तिस्रः पद्याः । ततो नित्ये करोति ।

ततो दक्षिणतोऽनूकान्ते पञ्चापस्याः पद्याः प्राङ्मुख उपदधाति पूर्वामारभ्यात्मसंमुखम् । तत्रार्णवे त्वेति प्रथमाम् । समुद्रे त्वेति द्वितीयाम् । सरिरे त्वेति तृतीयाम् । अपां त्वा क्षय इति चतुर्थीम् । अपां त्वा सधिषीति पञ्चमीम् । ततो नित्ये ।

ततः पश्चादनूकान्ते दक्षिणामुखः पञ्चापस्याः पद्या दक्षिणामारभ्याभ्यात्ममुपदधाति । अपां त्वा सदन इति प्रथमाम् । अपां त्वा सधस्थ इति द्वितीयाम् । अपां त्वा योनाविति तृतीयाम् । अपां त्वा पुरीष इति चतुर्थीम् । अपां त्वा पाथसीति पञ्चमीम् । ततो नित्ये ।

तत उत्तरतोऽनूकान्ते पश्चिमाभिमुखः पञ्चापस्याः पद्या अपरामारभ्य प्राक्संस्था उपदधाति । गायत्रेणेति प्रथमाम् । त्रैष्टुभेनेति द्वितीयाम् । ततो जागतेनेति तृतीयाम् । आनुष्टुभेनेति चतुर्थीम् । पाङ्क्तेनेति पञ्चमीम् । ततो नित्ये करोति ।

ततो व्याघारणहोमक्रमेण प्रथमं दक्षिणऽसे, तत उत्तरश्रोण्याम्, ततो दक्षिणश्रोण्याम्, तत उत्तरेंऽसे, ततो मध्ये । अनेन क्रमेण चतुर्ष्वप्यक्षण्यादेशेषु मध्ये च दश दश प्राणभृत उपदधाति ।

तत्र दक्षिणांसोत्तरश्रोण्योरक्षण्यादेशे प्राणभृतः प्रागलक्षणा भवन्ति । दक्षिणश्रोण्युत्तरांसयोरक्षण्यादेशे चोदग्लक्षणाः । दक्षिणांसप्राणभृतां या दशमी स्वयमातृण्णासँलग्ना साऽर्द्धपद्या । उत्तरांसप्राणभृतां

प्रति मन्त्रम्॥२॥ व्याघारणवत्प्राणभृतः कर्णसहिता दश

च या दशमी स्वयमातृण्णासंलग्ना सा तिरश्चालिखिताऽर्द्धपद्या। तथा दक्षिणोत्तरश्रोण्योर्यौ दशम्यौ स्वयमातृण्णासंलग्ने ते द्वे अपि पादोने पादभागेनोने पद्ये इत्यर्थः। शेषाः षट् चत्वारिंशत् पद्या एव भवन्ति।

तत्र प्रथमं दक्षिणांसकोणादारभ्य प्राङ्मुख उपविष्ट एवोपसृत्योपसृत्य स्वयमातृण्णापर्यन्ता दश प्राणभृत उपदधाति। तत्राऽयं पुरो भुव इति प्रथमाम्।

तस्य प्राण इति द्वितीयाम्। वसन्त इति तृतीयाम्। गायत्री इति चतुर्थीम्। गायत्र्या इति पञ्चमीम्। गायत्रादिति षष्ठीम्। उपांशोरिति सप्तमीम्। त्रिवृत इत्यष्टमीम्। वसिष्ठ इति नवमीम्। प्रजापतिगृहीतयेति दशमीं स्वयमातृण्णासहितामर्द्धपद्याम्। ततः सकृन्नित्ये दशसु।

तत उत्तरश्रोणेरारभ्य स्वयमातृण्णापर्यन्तं दश प्राणभृतः पश्चिमाभिमुख उपसृत्योपसृत्योपदधाति। अयं पश्चादिति प्रथमाम्। तस्य चक्षुरिति द्वितीयाम्। वर्षा इति तृतीयाम्। जगतीति चतुर्थीम्। जगत्या इति पञ्चमीम्। ऋक्समादिति षष्ठीम्। शुक्रादिति सप्तमीम्। सप्तदशाद्वैरूपमित्यष्टमीम्। जमदग्निरिति नवमीम्। प्रजापतिगृहीतयेति दशमीं स्वयमातृण्णासंलग्नां पादोनां पद्याम्। ततः सर्वासु सकृन्नित्ये।

ततो दक्षिणश्रोणेरारभ्य स्वयमातृण्णां यावद्दश प्राणभृतो दक्षिणामुख उपसृत्योपसृत्योपदधाति। अयं दक्षिणा इति प्रथमाम्। तस्य मन इति द्वितीयाम्। ग्रीष्म इति तृतीयाम्। त्रिष्टुबिति चतुर्थीम्। त्रिष्टुभ इति पञ्चमीम्। स्वारादिति षष्ठीम्। अन्तर्यामादिति सप्तमीम्। पञ्चदशाद् बृहदित्यष्टमीम्। भरद्वाज इति नवमीम्। प्रजापतीति दशमीं स्वयमातृण्णासंलग्नां पादोनाम्।

ततः सर्वासु सकृन्नित्ये। तत उत्तरांसादारभ्य स्वयमातृण्णापर्यन्तं दशप्राणभृत उदङ्मुख उपविष्ट एवोपसृत्योपसृत्यो पदधाति।

तत्र इदमुत्तरात्स्वरिति प्रथमाम्। तस्य श्रोत्रमिति द्वितीयाम्। शरदिति तृतीयाम्। अनुष्टुबिति चतुर्थीम्। अनुष्टुभ इति पञ्चमीम्। ऐडादिति षष्ठीम्। मन्थिन इति सप्तमीम्। एकविंशाद्वैराजमित्यष्टमीम्। विश्वामित्र इति नवमीम्। प्रजापतीति दशमीं प्राणभृत्संलग्नां तिरश्चालिखितामर्द्धपद्याम्। ततः सकृन्नित्ये। एके पुरुषमुपाप्य पुरुषसमीपे प्रथमां प्रथमामुपधायादक्षिणयांऽसे कोणपर्यन्तमुपधानं कुर्वन्ति। अतश्च विकल्पः।

पुरुषादारभ्य कोणान्तमुपधानं कोणादारभ्य पुरुषान्तं वेति। एवं च-

**दश पुरुषमुपाप्यैकं रेतःसिग्वेलायां च सर्वतो यथायोगम यं पुर इति प्रतिमन्त्रम् ॥३॥ द्वितीयमयं पश्चादिति ॥४॥**

---

तुर्ष्वदणयादेशेषु चत्वारिंशत् प्राणभृत उपहिताः। अथावशिष्टा दश रेतःसिग्वेलायां सर्वासु दिक्षूपधीयन्ते। तासां दशानां मध्ये चतुर्ष्वपि स्थानेष्वदणयासंलग्ने द्वे द्वे। एवमष्टौ। पश्चादनूकमभितश्च द्वे। एवं दश।

तत्रेयमुपरि मतिरिति मन्त्रेण रेतःसिग्भ्यामुत्तरां प्रथमामुदङ्मुख उपदधाति। तस्यौ वाङ् मात्येति रेतःसिग्भ्यां दक्षिणां द्वितीयाम्। ततः प्रदक्षिणं सर्वा उपदधाति। ततः प्राङुपविश्य हेमन्त इति तृतीयाम्। पङ्क्तिरिति चतुर्थीम्। ततो दक्षिणामुखः पङ्क्त्या इति पञ्चमीम्। निधनवत इति षष्ठीम्। आयतनादिति सप्तमीम्। त्रिणवेत्यष्टमीम्। ततः प्रत्यङ्मुखो विश्वकर्मेति नवमीम्। प्रजापतीति दशमीम्। ततः परिक्रम्य सर्वासु सकृत्स्वित्ये। इति प्रथमायां यजुष्मतीनामुपधानमुक्तम्।

अथ लोकंपृणानामुपधानमुच्यते। तत्रात्ममध्ये षट् सप्ततिः पादमात्र्यः। अष्टाविंशतिरर्द्धपद्याः। नवशतानि चतुर्विंशत्यधिकानि पादभागाः। एतावदात्मन्युपधेयम्। तत्र पादमात्रीणामुपधानस्थानमुच्यते। सर्वेषु कोणेषु प्राणभृत उपहिताः सन्ति। सर्वेष्वनूकान्तेषु च मध्ये पञ्च पञ्चापस्याः। तेन तासां प्राणभृदपस्यानामष्टौ अन्तरालानि सन्ति। तत्र सर्वेषु प्राणभृदपस्यान्तरालेषु षट् षट् पद्या उपधेयाः।

तासां षण्णां षण्णां पद्यानां मध्ये एकैकामर्द्धपद्यामुपदधाति। पूर्वस्यां दिशि तु प्राणभृदपस्यान्तरालयोः सप्त सप्त पद्या एवोपदधाति। यतस्तत्र पूर्वस्यामनूकमभितोऽर्द्धपद्ये स्तः। अंसस्थयोः प्राणभृतोः पश्चाद्वर्तमानयोः षट्पद्यालोकयोः पद्यास्थाने द्वे द्वे अर्द्धपद्ये उदगायते उपदधाति। एवं च पूर्वपार्श्वे चतुर्दश पद्या उपहिताः। अपरपार्श्वे च द्वादश। दक्षिणोत्तरयोरेकादशैकादश। एवमष्टाचत्वारिंशत् पद्या उपहिताः।

आत्मनः पूर्वार्द्धे अपस्यासंलग्ना द्वादश पद्या प्रागनूकमभितः प्राग्लक्षणा उपदधाति। एवं षट् सप्ततिः पद्याः पूर्णाः। अर्द्धपद्यानां मध्ये दशानामुपधानं कृतम्। शेषाणां स्थानमुच्यते

विश्वज्योतिषमभितो द्वे अर्द्धपद्ये उपधेये। पश्चाच्च विश्वज्योतिर्वेलायां विश्वज्योतिषः स्थानमभितो द्वे अर्द्धपद्ये उपधेये। तथा द्वियजुषमभितो द्वे अर्द्धपद्ये। एवं षडर्द्धपद्याः। पूर्वाभिः दशभिः सह षोडश जाताः। शिष्टानां द्वादशानां मध्ये पूर्वदक्षिणे पुरुषे तिस्रोऽर्द्धपद्याः। त-

**लोकम्पृणा दक्षिणाᳫंसादध्या मध्यात्प्रदक्षिणमाऽऽनूका-न्तात्पूर्वस्मात् ॥५॥ प्रत्येत्य शेषम् ॥६॥ पक्षपुच्छानि प-**

द्मैका द्वितीयां प्राणभृतमुत्तरेण प्रागायता । तामेव प्राणभृतमपरेण द्वे उदगायते ।

ततः पूर्वार्धे या द्वादश पद्या उपहिताः तासां या दक्षिणा पद्या तां तत उद्धृत्य दक्षिणश्रोण्यां द्वितीयां प्राणभृतं पूर्वेणोदगूलक्षणामुपधा-य तस्याः पुरस्तत्तिस्रोऽर्धपद्या उदगूलक्षणाः उदगायता उपधेयाः । तत उत्तरापरे पुरुषे द्वितीयस्याः प्राणभृतः पूर्वेण चतस्रोऽर्धपद्या उदगा-यता उपधेयाः । उत्तरपूर्वकोणे च द्वे ।

तत्र च द्वितीयां प्राणभृतमपरेणैकामुदगायतां द्वितीयां प्राणभृतं दक्षिणेन प्रागायताम् । एवं सर्वा अध्यर्धपद्या उपहिताः । शेषे आत्म-न्युक्तसंख्याः पादभागाः । आत्मनि चत्वारि शतानि पद्यालोका भव-न्ति । तेषां मध्ये एकोना अशीतिर्लोका यजुष्मतीभिः पूरिताः । षट् सप्ततिर्लोकंपृणाभिः पद्याभिः । चतुर्दशलोका अष्टाविंशत्यर्धपद्याभिः । शेषा एकविंशदधिकं शतद्वयं पद्यालोकाः पादभागाः ।

अत्राहुः संप्रदायपद्धतिकाराः । द्वादशानामर्धपद्यानां पूर्वदक्षिणे पुरुषोपर्यर्धपद्यानामुपधानम् । दक्षिणापरे पञ्चानामुपधानम् । उत्त-रापरे चतसृणामुपधानम् । पूर्वोत्तरे द्वे अर्धपद्ये उपधीयते । एक-त्रिंशदधिकं शतद्वयं च पादभागानां प्रतिपुरुषमिति विभाग इति । एव-मात्मा पूर्णः ।

अथ पक्षपुच्छानां चयनमुच्यते । तत्र दक्षिणे पक्षे षट्पञ्चाशत् पद्या उपधेयाः । तत्र "वर्षीयस्यो बाह्या" इति न्यायेन पक्षस्य पार्श्ववर्तिषु लो-केषु द्वात्रिंशत्पद्यानामेकां पङ्क्तिमुपधाय तदनन्तरं तत्संलग्नामेव द्वि-तीयां चतुर्विंशतिसंख्यानां पद्यानां पङ्क्तिमुपदध्यात् । तत्रात्मसन्धौ द्वि-तीयपङ्क्तौ उभयत्र द्वौ द्वौ पद्यालोकौ परिशिष्येते । तत्र पूर्वयोः पद्यालो-कयोर्द्वे अर्धपद्ये उदगायते प्रथमपद्यापङ्क्ति संलग्ने उपधेये ।

नन्वपरपार्श्वे पूर्वस्मिन्नेका एवं कुतो न भवति । न, अपरपार्श्वापे-क्षया पूर्वपार्श्वस्य बाह्यत्वात् । लोकेऽपि ऊरुहस्तादावन्तर्बहिर्भाग-व्यवहारवत् । एवं सर्वत्र ज्ञेयम् । अपरयोः पद्यालोकयोर्मध्ये द्वितीये पङ्क्तिसंलग्ने पद्यालोके एकामर्द्धपद्यामुदगायतां प्रथमपद्यापङ्क्तिसंलग्ना-मुपदध्यात् । एवं तिस्रोऽर्द्धपद्याः । शेषे पञ्चाशदधिके द्वे शते पादभा-गाः । एवमेवोत्तरे पक्षे पुच्छे च पञ्चाशत्पद्याः । सप्तार्द्धपद्याः षड्-

**राग्भिरप्यर्थेभ्योऽधि ॥७॥ एवं ॥सर्वत्र ॥८॥ मध्ये पुरीषं नि-**

विशत्यधिकं शतद्वयं पादभागाः ।

तत्रः पुच्छपार्श्वे सर्वतस्त्रिंशत्संख्यानां पद्यानां प्रथमां पङ्क्तिमुपधाय तदनन्तरा विंशतिसंख्यानां पद्यानां द्वितीयां पङ्क्तिमुपदध्यात् । द्वितीयायां पङ्क्तौ दक्षिणत उत्तरतश्चात्मसन्निहितास्त्रयस्त्रयः पद्यालोकाः परिशिष्यन्ते तत्र दक्षिणेषु त्रिषु पद्यालोकेषु तिस्रोऽर्द्धपद्याः प्रागायताः प्रथमपद्यापङ्क्तिसंलग्ना उपधेयाः । द्वितीयपङ्क्ति संलग्ने लोके चतुर्थी अर्द्धपद्योपधेया ।

उत्तरे आत्मसंलग्ने पद्यालोकत्रये तिस्रोऽर्द्धपद्याः प्रागायताः प्रथमपद्यापङ्क्तिसंलग्ना उपधेयाः । शेषे उक्तसंख्याः पादभागा इति । तदेवं प्रथमायां शतद्वयमष्टात्रिंशदधिकं लोकम्पृणाः पद्याः २३८ । एकचत्वारिंशदर्द्धपद्याः ४१ । सार्द्धानि षोडश शतानि पादभागाः १६५० । एवमेकोनविंशतिशतान्येकोनत्रिंशदधिकानि भवन्ति । १९२९ । "गार्हपत्यलोकम्पृणाः प्रथमायामि"त्युक्तत्वाद् गार्हपत्यस्यैकविंशतिर्लोकम्पृणाः प्रथमायां गण्यन्ते । तेन पञ्चाशदूनं सहस्रद्वयं सम्पद्यते । १९५० । "द्विसाहस्री प्रथमा लोकम्पृणानां पञ्चाशदूने"त्युक्तत्वात् । इति लोकंपृणानामुपधानस्थानमुक्तम् ॥

अथोपधानप्रकार उच्यते । तत्र दक्षिणपूर्वकोणे प्राणभृतमपरेण ये द्वे अर्द्धपद्ये ते प्रथममुपधाय ततः प्रदक्षिणमभ्यात्मं दशभिर्दशभिर्लोकम्पृणानां प्रत्येकं तूष्णीमुपधानं कृत्वा कृत्वा लोकम्पृण छिद्रं पृणेति मन्त्रेणाभिमन्त्रयते । सादनं लोकम्पृणासु न भवति "असादनं चेति न सादयत्यसन्नो ह्येष" इति निषेधात् । ततस्ता अस्येति दशानामपि सूददोहसाधिवदनम् ।

एवं पूर्वप्राणभृद्भ्योऽपरलोकादारभ्य दक्षिणप्राणभृदवधि दीर्घाभिः प्रत्यक्संस्थपङ्क्तिभिर्बाह्यत आरभ्याभ्यन्तराभ्यन्तरमुपधानं कुर्वन् स्वयमातृण्णां यावद्गच्छेत् यस्याद्दणयादेशस्य सन्निधावुपधानं प्रथमत आरब्धं तल्लोकम्पृणानामुपधाने बह्वपेक्षितं तत्सर्वं देवभाष्ये द्रष्टव्यम् । सम्मुखं मर्यादाभूतं चाद्दणयादेशं नातिक्रामेत् ।

एवमेव श्रोण्योरन्तराले दक्षिणामुख उदक्संस्थं पङ्क्तिभिरुपधानं कुर्वन् स्वयमातृण्णां प्रति याति । एवमेवोत्तरपार्श्वे श्रोण्यंसान्तराले प्रत्यङ्मुखः प्राक्संस्थपङ्क्तिभिः । एवमेवोत्तरांसाद्दणयात आरभ्य प्रागनूकमर्यादं प्रदक्षिणः बाह्यतः स्वयमातृण्णां यावदुदङ्मुख उप दधाति । अद्दणयादेशं नातिक्रामेत् । सम्मुखं मर्यादाभूतं च ।

वपति पूर्ववत् ॥९॥ पूर्वमर्धानूकं छादयति ॥१०॥ प्रदक्षिण-मात्मानम् ॥११॥ पक्षपुच्छानि च ॥१२॥ एवꣳ सर्वत्र ॥१३॥६॥

चितिं पुरीषवतीमुपतिष्ठते वार्त्रहत्यायेति सप्तभिः ॥१॥ अष्टाभिरेके ॥२॥ दशभिर्वा ॥३॥ उपसत्सु पौर्वाह्णिक्याऽऽपराह्णिक्यन्तरे चयनपुरीषनिवपने ॥४॥ त्रिरश्वं परिणीयोपास्तमयं पशुवदुत्सृज्य तावत्प्रतिपर्येति ॥५॥ परिणयनमाऽग्निनिधानात् ॥६॥ त्र्युपसत्के द्वे प्रथमायां तिस्रो मध्यमायाम् ॥७॥ पञ्चगृहीतान्युत्तमा ॥८॥ उत्त-

---

एवं प्रदक्षिणं यथायोगं सव्यबाहुमन्तरं कुर्वन्नभ्यात्मं चयनं कुर्वन् सर्वतो बहिःप्रदेशात्स्वयमातृण्णां प्रत्यागच्छन् पूर्वानूकमर्यादमुपधाय ततः प्रत्यागत्य स्वयमातृण्णामपरेण गत्वा प्रागनूकं दक्षिणोनादण्याऽ-वधिकं लोकम्पृणा बाह्यत आरभ्य दक्षिणसंस्थपङ्क्तिभिः स्वयमातृ-तृण्णां यावदुपधेयाः ॥

तत आत्मसन्धेरारभ्योदङ्मुखो दक्षिणपक्षे दक्षिणसंस्थं प्रदक्षिणं स्वात्माभिमुखमुपदधाति । पुच्छे चात्मसन्धेरारभ्य प्रत्यक्संस्थं प्राङ्मुखः । उत्तरपक्षे चात्मसन्धेरारभ्योदक्संस्थं दक्षिणामुखो लोकम्पृणानामुपधानं करोति । सर्वासु चितिषु लोकम्पृणानामुपधाने अयमेव प्रकारः ।

ततश्चात्वालात् पुरीषमानीयेन्द्रं विश्वा इति मन्त्रेण मध्ये राशिं करोति । ततस्तूष्णीं पूर्वमर्द्धानूकं छादयति । ततः प्रदक्षिणं सर्वमात्मानं प्रच्छादयति । ततो दक्षिणं पक्षं, ततः पुच्छम् । तत उत्तरपक्षम् । सर्वचितिषु पुरीषनिर्वाप एवमेव भवति ।

इति सप्तदशस्य षष्ठी कण्डिका ॥ ६ ॥

ततो वार्त्रहत्यायेत्याद्याभिः सप्तभिर्ऋग्भिरध्वर्युः पुरीषवतीं चितिमुपतिष्ठते । केचिदष्टाभिर्ऋग्भिरुपतिष्ठन्ते । तत्र वयं ते अद्येत्यष्टमी । केचिद्दशभिरुपतिष्ठन्ते । तत्र चाध्यायसमाप्तिपर्यन्ताभिरुपस्थानम् ॥

अथ चयनोपयुक्तं किंचित् प्रसङ्गादुच्यते । उपसत्सु पौर्वाह्णिक्या उपसद आपराह्णिक्या उपसदश्चान्तराले चयनं पुरीषनिवपनं च भवति । उपसत्सु प्रत्यहं सायंकाले सूर्यस्यास्तमयात् पूर्वम् अश्वमग्निं परितस्त्रिः प्रदक्षिणं परिणीय तमश्वं प्रागुदीच्यां दिश्युत्सृज्य तावत् प्रतिपर्येति अप्र-

रासु च ॥९॥ सपुरीषा षट्स्वेकैका ॥१०॥ द्वादशोपसत्के व्यत्यासं चितिपुरीषे ॥११॥ विकर्ण्याद्येकादश्याम्॥१२॥ चतुर्मासोपसत्के द्वादशाहशः ॥१३॥ षट्त्रिंशदहशः षट्त्रिंशदहशः सम्वत्सरे ॥१४॥ तापश्चिते मासशश्चितिपुरीषे चतसृणाम् ॥१५॥ पञ्चम्यामसपत्ना विराजः प्रथमेऽहन् ॥१६॥ स्तोमभागा अन्वहम् ॥१७॥ मासं पुरीषं-तृष्णीम् ॥१८॥ नाकसत्प्रभृति मासम् ॥१९॥ पुरीषं च ॥२०॥ उत्तमयोरह्नोर्विकर्ण्यादि पूर्वे ॥२१॥ द्विसाहस्री

---

दक्षिणं त्रिः परिता गच्छति । एतदश्वपरिणयनमग्निनिधानं यावद्भवति न तत उर्ध्वम् ।

त्र्युपसत्के प्रथमायामुपसदि द्वे चिती प्रथमद्वितीये सपुरीषे चीयेते । मध्यमायामुपसदि तृतीया चतुर्थी पञ्चम्यां तिस्रोऽपि चितयः सपुरीषाश्चीयन्ते विकर्ण्याद्यग्न्युत्थप्रैषान्तं च । तृतीयायामुपसदि पञ्चगृहीतादि कर्म भवति ॥ बहूपसत्के सोमे प्रथमायामुपसदि सपुरीषा प्रथमा । द्वितीयायामुपसदि सपुरीषा द्वितीया । तृतीयायां सपुरीषा तृतीया चितिः ।

चतुर्थ्यां सपुरीषा चतुर्थी । पञ्चम्यां सपुरीषा पञ्चमी । विकर्ण्याद्यग्न्युत्थप्रैषान्तं च । षष्ठ्यां पञ्चगृहीतादि कर्म । द्वादशोपसत्के द्वादशाहादौ व्यत्यासेन चितिपुरीषे भवतः । प्रथमायामुपसदि प्रथमा चितिः । द्वितीयायामुपसदि प्रथमायां पुरीषनिवापः । तृतीयायामुपसदि द्वितीया चितिरुपधीयते । चतुर्थ्यामुपसदि द्वितीयायां चितौ पुरीषनिवापः ।

पञ्चम्यामुपसदि तृतीया चितिः । षष्ठ्यां तृतीयायां पुरीषनिवापः । सप्तम्यां चतुर्थी चितिः । अष्टम्यां चतुर्थ्यां पुरीषनिवापः । नवम्यां पञ्चमी चितिः । दशम्यामुपसदि पञ्चम्यां चितौ पुरीषनिवापः । एकादश्यामुपसदि विकर्णीस्वमातृण्योपधानाद्यग्न्युत्थशंसनप्रैषान्तम् । द्वादश्यां पञ्चगृहीतादि ।

चतुर्मासोपसत्के क्षुल्लकतापश्चिते सत्रे द्वादशभिरुपसदहोभिः प्रथमा चितिः । ततो द्वादशभिरहोभिः प्रथमायां पुरीषम् । एवं द्वितीयादीनाम् । पञ्चम्यां पुरीषमेकादशभिरहोभिः । एकादशेऽह्नि विकर्ण्यादि च । अत्रापि उत्तमायामुपसदि पञ्चगृहीतादि कर्म भवति । त्रिसंवत्सरोपसत्के महातापश्चिते सत्रे तिसृभिः षट्त्रिंशद्भिरुपसद्भिः प्रथमा

**प्रथमा लोकम्पृणानां पञ्चाशदूना ॥२२॥ उत्तराश्च ॥२३॥ त्रिसाहस्र्युत्तमा ॥२४॥ वङ्कालिखितानां दक्षिणोत्तरे मध्य इतरासाम् ॥२५॥ षट्त्रिꣳशच्छत्या वा तृतीयाऽष्टदशशत्या इतराः ॥२६॥ गार्हपत्यलोकम्पृणाः प्रथमायाम् ॥२७॥ धिष्णीया उत्तमायाम् ॥२८॥ अपरिमितेष्टका वा ॥२९॥ प्रथमोत्तमयोः पादमात्रीरतिरिक्ताः ॥३०॥ दशगणाधिका भित्त्वोत्करे कुर्यात् ॥३१॥७॥**

---

चेतव्या । तिसृभिः षड्विंशद्भिरेव प्रथमायां पुरीषनिवापः कार्यः । एवमेव द्वितीयादीनाम् । अत्राप्युत्तमायां पञ्चगृहीतादि कर्म ।

तापश्चिते सत्रे संवत्सरमुपसदो भवन्ति । तत्र प्रथमे मासे प्रथमा चितिश्चेतव्या । द्वितीये मासे प्रथमायां पुरीषम् । तृतीये मासे द्वितीया चितिः । चतुर्थे द्वितीयायां पुरीषनिवापः । पञ्चमे मासे तृतीया चितिः । षष्ठे मासे तृतीयायां पुरीषम् । सप्तमे मासे चतुर्थी चितिः । अष्टमे चतुर्थ्यां पुरीषम् । नवमे मासे प्रथमेऽहनि पञ्चम्याश्चितेरसपत्ना विराजश्चोपधीयन्ते ।

ततः प्रत्यहमेकैका स्तोमभागा उपधीयते । एवं नवमो मासः । ततो दशमे मासि प्रत्यहमेकैकस्यां स्तोमभागायां पुरीषनिवापः क्रियते । तत एकादशेन मासेन नाकसत्प्रभृति सर्वा पञ्चमी समाप्यते । ततो द्वादशे मासि अष्टाविंशतिभिर्दिनैः पञ्चम्यां पुरीषनिवापः क्रियते । एकोनत्रिंशत्तमे दिने विकर्ण्याद्यग्न्युत्थप्रैषान्तं क्रियते । त्रिंशत्तमे दिने पञ्चगृहीतादि कर्म क्रियते । प्रातः सुत्यादि ।

प्रथमादिषु चतसृषु चितिषु पञ्चाशदूने द्वे द्वे सहस्र लोकम्पृणे उपधीयेते । पञ्चम्यां चितौ त्रीणि सहस्राणि । तत्र पञ्चम्यामग्निं त्रिधा विभज्य मध्यमे भागे ऋज्वालिखिता लोकम्पृणा उपधीयन्ते । दक्षिणोत्तरभागयोर्वङ्कालिखिता उपधीयन्ते ।

गार्हपत्यचितेरेकविंशतिसंख्या लोकम्पृणाः प्रथमायां चितौ लोकंपृणामध्ये गण्यन्ते । धिष्ण्यसम्बन्धिन्योऽष्टासप्ततिर्लोकम्पृणाः पञ्चम्यां चितौ गण्यन्ते । अथवा तृतीयायां चितौ । एवं षट्त्रिंशच्छतानि लोकंपृणा भवन्ति । अन्यासु चतसृषु चितिषु अष्टादशाष्टादश शतानि ।

अथवाऽपरिमितेष्टकोऽग्निश्चेतव्यः । अस्मिन् पक्षे उक्तसंख्याता न्यूना वा अधिका वा यजुष्मत्यो लोकम्पृणाश्च भवन्ति । प्रथमायां पञ्च-

द्वितीयायामाश्विनीः प्रतिदिशम् ॥१॥ रेतःसिग्वे-लायामनूकमुत्तरेण पूर्वां द्वितीये ॥२॥ दक्षिणां पूर्वेण ॥३॥ अपरां दक्षिणेन ॥४॥ उत्तरामपरेण ॥५॥ दक्षिणामुत्तरेण पञ्चमीम् ॥६॥ वैश्वदेवीः ॥७॥ पूर्वां दक्षिणेन ॥८॥ दक्षि-णामपरेण ॥९॥ अपरामुत्तरेण ॥१०॥ उत्तरां पूर्वेण ॥११॥ एवं वैश्वदेवीभ्यः प्राणभृत. ॥१२॥ प्राणभृद्भ्योऽपस्याः ॥१३॥ पूर्ववत्पञ्चम्यः सर्वासाम् ॥१४॥ आश्विनीर्ध्रुवाक्षि-तिरिति प्रतिमन्त्रम् ॥१५॥ शुक्रश्च शुचिश्चेत्यृतव्ये पूर्व-

---

स्यां च महत्य इष्टकाः पद्या उपधीयन्ते । न पद्यातोऽधिकप्रमाणा जङ्घा-मात्र्येध्यर्द्धाद्याः । अष्टौ धिष्ण्या आहवनीयो गार्हपत्यश्चेति दशगणः । अस्माद्दशगणादधिका या इष्टका भवन्ति ता एतद्दशगणोपधानानन्तरम-नुदेशात्प्राक् अधिका इष्टका भित्वोत्करे प्रक्षिपेत् ॥

इति सप्तदशस्य सप्तमी कण्डिका ॥ ७ ॥

---

अथ प्रकृतमुच्यते ॥ तत्र प्रथमा चितिरुक्ता अथ द्वितीया चितिरुच्यते । ऽयुपसत्के तस्मिन्नेवाहनि प्रथमायां पुरीषनिवपनं सपुरीषायाः प्रथमाया उपस्थानञ्च कृत्वा तदेव द्वितीयचितेरुपधानं कुर्यात् । तत्र द्वितीयायां-चितौ सर्वासु दिक्षु रेतःसिग्वेलायामाश्विनीरुपदधाति ।

तत्र पूर्वस्यां दिश्यनूकमुत्तरेण रेतःसिग्वेलायां द्वितीये लोके प्रथमा-माश्विनीं पद्यां प्रागूलक्षणां ध्रुवक्षितिरिति मन्त्रेणोदङ्मुख उपदधाति । ततो नित्ये ।

ततो दक्षिणस्यां दिश्यनूकं पूर्वेण द्वितीये लोके द्वे अर्द्धपद्ये प्रागायते तिरश्चालिखिते प्राङ्मुख उपदधाति । तयोर्मध्ये या दक्षिणा सा द्वितीया आश्विनी । तस्याः कुलायिनीत्युपधानमन्त्रः । नित्ये च । या उत्तरा अर्ध-पद्या सा पञ्चमी आश्विनी पद्या तां दक्षिणामुखः स्वैर्दक्षैरित्युप दधाति ।

ततो नित्ये । तत उत्तरस्यां दिशि रेतःसिग्वेलायामनूकमपरेण द्वितीये लोके चतुर्थीमाश्विनीं पद्यां प्रत्यङ्मुखः पृथिव्याः पुरीषमित्युपद-धाति । ततो नित्ये । ततः प्रत्यागत्य दक्षिणामुत्तरेण पञ्चमीं प्राङ्मुखो-ऽदित्यास्त्वेत्युप दधाति । ततो नित्ये ।

ततः पूर्वं प्रथमायामुपहितयोर्ऋतव्ययोरुपरि अत्रापि तथव द्वे ऋत-

योरुपरि ॥१६॥ उत्तराश्च ॥१७॥ वैश्वदेवीः सजूर्ऋतुभिरिति प्रतिमन्त्रम् ॥१८॥ उत्तराश्च ॥१९॥ प्राणभृतः प्राणं

ध्ये पद्ये अनूकमभितः शुक्रश्च शुचिश्चेति मन्त्रेणोत्तराभिमुखोऽभ्यात्ममुपदधाति। नित्ये च पूर्ववत्करोति। ततः पञ्च वैश्वदेवीरुपदधाति। प्रथमाश्विन्या दक्षिणतः प्रथमां वैश्वदेवीं पद्या मुदङ्मुखः सजूर्ऋतुभिः सजूर्देवैरिति मन्त्रेणोपदधाति। ततो नित्ये।

ततो द्वितीयामाश्विनीमपरेण द्वितीयां वैश्वदेवीमर्धपद्यां तिरश्चालिखितां प्राङ्मुखः सजूर्ऋतुभिः सजूर्वसुभिरिति मन्त्रेणोपदधाति। ततो नित्ये। ततोऽपरस्यां दिशि दक्षिणामुखः आश्विनीमुत्तरेण तृतीयां वैश्वदेवीं पद्यां सजूर्ऋतुभिः सजू रुद्रैरित्युपदधाति। ततो नित्ये।

तत उत्तरतः प्रत्यङ्मुखः आश्विनीं पूर्वेण चतुर्थीं वैश्वदेवीं पद्यां सजूर्ऋतुभिः सजूरादित्यैरित्युपदधाति। ततो नित्ये। ततः प्रत्यागत्य दक्षिणां वैश्वदेवीमुत्तरेण पञ्चमीं वैश्वदेवीमपर्धपद्यां तिरश्चालिखितां प्रागायतां प्राङ्मुखः सजूर्ऋतुभिः सजूर्विश्वदेवैरित्युपदधाति। ततो नित्ये। ततः पञ्च प्राणभृत उपदधाति।

तत्र पूर्वं वैश्वदेवीतो दक्षिणां प्रथमां प्राणभृतं प्राणं म इत्युप दधाति। अपानं म इति दक्षिणां वैश्वदेवीमपरेणार्द्धपद्यां तिरश्चालिखितां द्वितीयां प्राणभृतमुपदधाति। ततोऽपरां वैश्वदेवीमुत्तरतस्तृतीयां प्राणभृतं व्यानं म इत्युपदधाति।

तत उत्तरां वैश्वदेवीं पूर्वेण चतुर्थीं प्राणभृतं चक्षुर्मे उर्व्येत्युपदधाति। ततः प्रत्यागत्य दक्षिणामुत्तरेणार्द्धपद्यां तिरश्चालिखितां प्रागायतां पञ्चमीं प्राणभृतं श्रोत्रं मे श्लोकयेत्युपदधाति। प्रतीष्टकं नित्ये भवतः। एवमेव प्राणभृद्भ्योऽपस्याः पञ्चोपदधाति। पूर्वां प्राणभृतं दक्षिणेन प्रथमामपस्यामपः पिन्वेत्युपदधाति। ततो दक्षिणां प्राणभृतमपरेण द्वितीयामपस्यामर्द्धपद्यां तिरश्चालिखितां प्रागायतामुपदधाति ओषधीर्जिन्वेति।

ततोऽपरां प्राणभृतमुत्तरेण तृतीयामपस्यां द्विपादवेत्युपदधाति। तत उत्तरां प्राणभृतं पूर्वेण चतुर्थीमपस्यां चक्षुष्पात्पाहीत्युपदधाति। ततः प्रत्यागत्य द्वितीयाया उत्तरतः पञ्चमीमपस्यां तिरश्चालिखितामधपद्यां प्रागायतां दिवो वृष्टिमित्युपदधाति। अत्रापि प्रतीष्टकं नित्ये भवतः।

ततः चतसृषु दिक्ष्वनूकान्तेषु पञ्च पञ्च वयस्या उपदधाति। पुरस्तादनूकान्ते चतस्रो वयस्या उपदधाति। अन्यासु दिक्षु तु पञ्च पञ्च। पुरस्ताच्चतुर्णां मध्ये अनूकमभितो द्वे अक्ष्णयाऽऽमात्र्यौ। प्रथमचतुर्थे द्वे अर्द्ध

म इति ॥२०॥ अपः पिन्वेत्यपस्याः ॥२१॥ वयस्याः पञ्च पद्ये । अन्यासु दिक्षु सर्वा वयस्या अध्यर्द्धाः । तत्र प्रथमं पुरस्तादुदङ्मुख उपविश्योत्तरामारभ्यात्ममुपदधाति ।

मूर्द्धा वय इति प्रथमाम् । क्षत्रं वय इति द्वितीयाम् । विष्टम्भो वय इति तृतीयाम् । विश्वकर्मा वय इति चतुर्थीम् । सक्नन्नित्ये । ततो दक्षिणतोऽनूकान्ते प्राङ्मुखः पूर्वामारभ्य प्रत्यक्संस्थाः पञ्चोपदधाति । बस्तो वय इति प्रथमाम् । वृष्णिर्वय इति द्वितीयाम् । पुरुषो वय इति तृतीयाम् । व्याघ्रो वय इति चतुर्थीम् । सिंहो वय इति पञ्चमीम् । सक्नन्नित्ये ।

तत उत्तरस्यां दिश्यनूकान्ते पश्चिमाभिमुखोऽपरामारभ्य प्राक्संस्थाः पञ्चोपदधाति । पष्ठवाड् वय इति प्रथमाम् । उक्षा वय इति द्वितीयाम् । ऋषभो वय इति तृतीयाम् । अनड्वान्वय इति चतुर्थीम् । धेनुर्वय इति पञ्चमीम् । ततः सक्नन्नित्ये । ततोऽपरस्यामनूकान्ते दक्षिणामुखः पञ्च वयस्या दक्षिणामारभ्योदक्संस्था उपदधाति । त्र्यविर्वय इति प्रथमाम् । दित्यवाड् वय इति द्वितीयाम् । पञ्चाविर्वय इति तृतीयाम् । त्रिवत्सो वय इति चतुर्थीम् । तुर्यवाड् वय इति पञ्चमीम । ततः सक्नन्नित्ये ।

ततो दक्षिणश्रोणेरारभ्य प्रथमावत् लोकंपृणा उपदधाति । प्रथमं दक्षिणश्रोण्यां द्वे उपदधाति । ततो दश दश प्रदक्षिणं पूर्वानूकान्तं यावदुपधाय प्रत्यागम्य प्रागनूकं दक्षिणेन दक्षिणश्रोण्यदणयादेशं यावच्छेषमुपदधाति । ततः पूर्ववदेव पक्षपुच्छचयनम् ।

ततः पुरीषनिवपनमिन्द्रं विश्वा इति । वार्त्रहत्यायेति पुरीषवत्या उपस्थानं च । द्वितीयायां लोकम्पृणा उच्यन्ते । द्वितीयायां चितौ दशसु कोणेषु दश जङ्घामात्रीरुपदधाति । चतस्र आत्मनश्चतुर्षु कोणेषु । द्वे द्वे पक्षकोणयोः । द्वे पुच्छकोणयोः । एवं दश । तथा सर्वासु दिक्षु वयस्या उपहिताः सन्ति, ता वयस्या अभित उभयपार्श्वे एकैकामध्यर्द्धाम् ।

तत एकैकां त्रिग्राहिणीम् । तत एकैकां जङ्घामात्रीम् । द्वे अध्यर्द्धे । एता इष्टका यथोक्तक्रमेणोपदधाति । एताश्च दक्षिणत उत्तरतश्चोदगायता उदग्लक्षणाश्च । पुरस्तात्पश्चाच्च प्रागायताः प्राग्लक्षणाश्च । तत्र दक्षिणोत्तरपक्षसन्धौ उपहितयोर्द्वयोर्द्वयोस्त्रिग्राहिण्योः षडङ्गुलानि पक्षयोर्मध्ये उपधीयन्ते ।

तथा पुच्छस्योभयोः पार्श्वयोः पञ्चानां पञ्चानां त्रिग्राहिणीनां मध्ये ये द्वे त्रिग्राहिण्यौ आत्मसंलग्ने उपधीयेते तयोः षडङ्गुलान्यात्मन्युपधीयन्ते । तयोस्त्रिग्राहिण्योः पुरस्तादात्मनि द्वे जङ्घामाड्यौ उपधीयेते ।

पश्चानूकान्तेषु मूर्द्धा स्यय इति प्रतिमन्त्रम् ॥२२॥ चतस्रः

सर्वत एकैकामध्यर्द्धां त्रिग्राहिणीमित्यस्यास्त्रिग्राहिण्याः स्थाने तथा पुरस्तादनयोः त्रिग्राहिण्यो स्थाने जङ्घा मात्र्यावेवोपधेये । अतः पुरस्तात्पश्चाद्यमिष्टकानां क्रमः । अभितो वयस्याः सर्वत एकैकामध्यर्द्धां जङ्घामात्रीं जङ्घामात्रीमध्यर्द्धं चेति ।

तथा पक्षपुच्छपार्श्वेषु पञ्च पञ्च त्रिग्राहिणीरुपदधाति । पक्षपुच्छेष्वेव कोणोपहितजङ्घामात्र्यन्तरालेषु सप्त सप्ताध्यर्द्धा उदगायता उपदधाति । त्रिग्राहिण्योऽपि पक्षयोरुदगायताः । पुच्छे च प्रागायताः । ततोऽवशिष्टे आत्मनि चतुर्विंशतिः पद्याः । द्वादशार्द्धपद्याः । षट्पञ्चाशदधिकानि नवशतानि पादभागाः । चत्वारोऽर्द्धपादभागाः । एतावदात्मन्युपधेयम् ।

तत्र चतुर्विंशतिः पद्याः समं विभज्य प्रतिपुरुषं षट् षट् उपधेयाः । ताश्च "वर्षीयस्यो बाह्या" इत्यनेन न्यायेन पुरुषाणां बाह्यकोणेषूपधेयाः । द्वादशार्द्धपद्या अपि विभज्य प्रतिपुरुषं तिस्रस्तिस्र उपधेयाः ।

तत्र पद्यानामर्द्धपद्यानां च प्रतिपुरुषं स्थानमुच्यते । तत्र पूर्वयोः पुरु योः पद्यार्द्धपद्यानामुपधानं कुर्वता पक्षसन्धिर्नातिक्रमणीयः । आत्मनः पूर्वभागस्य पक्षान्तर्वर्तिभागापेक्षया बाह्यस्योपधानस्थानस्य सम्भवात् ।

तत्र पूर्वदक्षिणे पुरुषे कोणोपहितजङ्घामात्रीसंलग्नामेकां पद्यां प्राग्लक्षणामुपधाय तस्य उत्तरतोऽपरतश्च शेषाः पद्या उपधेयाः । उत्तरतस्तिस्रः प्राग्लक्षणाः । तासामुत्तरतो द्वे प्रागायतेऽर्द्धपद्ये त्रिग्राहिणीस्थानोपहितजङ्घामात्र्युत्तरान्तसमे । परतश्च उदग्लक्षणे द्वे पद्ये ।

तथा पश्चादेकार्द्धपद्योदगायतोपधेया जङ्घामात्र्यपरान्तसमा । दक्षिणापरपुरुषे च कोणोपहितजङ्घामात्रीकोणसंलग्नामेकां पद्यामुदग्लक्षणामुपधाय तस्याः पुरस्तादुत्तरतश्च शेषाः पद्या उपधीयन्ते । पुरस्तात्तिस्रः पद्या उदग्लक्षणाः । तासां पुरस्ताद् द्वे अर्द्धपद्ये उदग्लक्षणे त्रिग्राहिणीपूर्वान्तसमे । उत्तरतश्च द्वे पद्ये प्राग्लक्षणे ।

तयोरुत्तरत एका अर्धपद्या उदग्लक्षणा जङ्घामात्रीस्थानोपहितजङ्घामात्र्युत्तरान्तसमा । तथा उत्तरापरकोणोपहितजङ्घामात्रीकोणसंलग्नामेकां पद्यां प्राग्लक्षणामुपधाय तस्याः पुरस्ताद्दक्षिणतश्च शेषाः पद्या विभज्योपधेयाः । पुरस्तात्तिस्र उदग्लक्षणाः पद्याः ।

तासां पुरस्ताद् द्वे अर्द्धपद्ये त्रिग्राहिणीपूर्वान्तसमे । दक्षिणतश्च द्वे

पुरस्तात् ॥२३॥ दक्षिणत उत्तरतः पश्चात् ॥२४॥ दक्षि-

प्रागूलक्षणे । तयोर्दक्षिणत एकाऽर्द्धपद्या प्रागायता जङ्घामात्रीस्थानोपहितजङ्घामात्रीदक्षिणान्तसमा । तथा उत्तरपूर्वकोणे च कोणोपहितजङ्घामात्रीकोणसंलग्नामेकां पद्यामुदगूलक्षणामुपधाय तस्या दक्षिणतः पश्चाच्च शेषाः पद्या उपधेयाः । दक्षिणतस्तिस्रः प्रागूलक्षणाः पद्याः । तासां दक्षिणतो द्वे अर्द्धपद्ये प्रागायते त्रिग्राहिणीस्थानोपहितजङ्घामात्र्या दक्षिणान्तसमे । पश्चाच्च द्वे पद्ये उदगलक्षणे ।

तयोः पश्चादेकाऽर्द्धपद्या उदग्लक्षणा जङ्घामात्र्यपरान्तसमा । एवं प्रतिपुरुषं षट् षट् पद्यास्तिस्रस्तिस्रोऽर्द्धपद्याश्चोपहिताः ।

यथा अपरयोः पुरुषयोः पद्यार्द्धपद्यानामुपधाने जङ्घामात्रीस्थानोपहिता जङ्घामात्री नातिक्रमणीया सार्द्धपद्यालोकद्वयातिक्रमेण वर्षीयसीनां पद्यानामुपधानप्रसङ्गात्, तथा अर्द्धपादभागानामतिसूक्ष्मत्वादात्ममध्ये उपधाने तेषां च प्रति पुरुषमेकैकस्योपधानं समविभागेन न सम्भवति लोकभेदापत्तेः । अतः पूर्वभागापेक्षया अपरभागस्याभ्यन्तरत्वादपरयोः । पुरुषयोर्विभज्य द्वौ प्रागायतावर्द्धपादभागावुपधेयौ । द्वावुदगायतौ । शेषे आत्मभागे षट्पञ्चाशदधिकानि नव शतानि पादभागा उपधेयाः । तत्रापरयोः पुरुषयोर्द्वात्रिंशद् द्वात्रिंशत् सार्द्धाः पद्यालोका महतीभिर्व्याप्ताः । पूर्वयोः पुरुषयोः पादोनास्त्रयस्त्रिंशत् । प्रतिपुरुषं षट् षट् पादमात्र्यस्तिस्रोऽर्द्धपद्याः एकोनचत्वारिंशे शते च ते पादभागानामुपधेये । अपरयोर्द्वौ द्वावर्धपादभागावधिकौ ।

तदेवं द्वितीयायामष्टाचत्वारिंशत्पद्यालोका यजुष्मतीभिर्व्याप्ताः । त्रिंशत्पद्याऽर्धपद्याभिः । शतद्वयमेकोनचत्वारिंशदधिकं पादभागैः । षट्त्रिंशदध्यर्द्धाभिः । पञ्चचत्वारिंशत्त्रिग्राहिणीजङ्घामात्रीभिः । सार्धएकः पुच्छे त्रिग्राहिणीभ्याम्, अर्धो लोकस्त्वर्धपादभागैरिति । एवमात्मनि चत्वारिंशच्छतानि पद्यालोकाः पूरिताः ।

अथ पक्षपुच्छचयनमुच्यते । तत्र द्वानवत्यधिकं शतत्रयं पादभागाः । एकाऽर्धपद्या । एतावद् द्वयोः पक्षयोरुपधेयम् । तत्र पूर्वापरपक्षयोः पञ्च पञ्च त्रिग्राहिण्यः कोणयोर्जङ्घामात्र्यौ । तयोरन्तराले दक्षिणपार्श्वे सप्ताध्यर्द्धाः । मध्ये उपहिताः । सर्वत्र पादभागाः । दक्षिणे पक्षे पूर्वदक्षिणकोणोपहितजङ्घामात्र्या वायव्यकोणसंलग्नोदगायतैकाऽर्धपद्योपधेया ।

उत्तरपक्षे चैशानकोणोपहितजङ्घामात्र्या नैर्ऋतकोणसंलग्नोदगायताऽर्धपद्योपधेया । पक्षे विंशत्यधिकं शतं पद्यालोका भवन्ति । तेषां च

णश्रोणरेधि लोकम्पृणाः पूर्ववत् ॥२५॥

तृतीयायाᳪं यस्वमातृण्णा मिन्द्राग्नी इति मध्ये ॥१॥ अनूकेषु पञ्च दिश्या वैश्वदेवीविद्राड्ग्यसीति प्रतिमन्त्रम् ॥२॥ विश्वकर्मेति विश्वज्योतिषमुपरि पूर्वस्याः ॥३॥

---

त्रिंशल्लोका दशभिस्त्रिग्राहिणीभिर्व्याप्ताः । पञ्चदश लोका जङ्घामात्र्य-ध्यर्द्धाभिः । त्रिसप्ततिर्लोकाः पादभागैः । सार्धएको लोक आत्मत्रिग्राहि-णीभ्याम् । अर्धलोकोऽर्धपद्यया । एवं विंशत्यधिकं शतं लोकाः पूरिताः । अत्र प्रतिपत्तं षट्चत्वारिंशत्सार्द्धाः पद्या लोका महतीभिर्व्याप्ताः । पा-दभागैरर्धपद्यया चावशिष्टव्याप्तिरिति संप्रदायः ।

पञ्च षष्ट्यधिकं शतद्वयं पादभागाः । द्वौ अर्धपादभागौ ।

एतावत्पुच्छ उपधेयम् । तत्र दक्षिणोत्तरपार्श्वयोः पञ्च पञ्च त्रिग्राहिण्यः । कोणयोर्जङ्घामात्र्यौ । तयोरन्तराले पश्चिमपार्श्वे सप्ता-ध्यर्द्धाः । मध्ये पादभागाः । अर्धपादभागौ चानुक्रमुत्तरतो मध्ये आ-त्मसंलग्नौ अपरानूकयवयस्योत्तरार्धसंलग्नौ उपधेयौ ।

दक्षिणभागापेक्षयोत्तरभागस्याभ्यन्तरत्वात् । उत्तरतश्चात्वालानां यज्ञाङ्गानां विद्यमानत्वात् । पुच्छे च दशाधिकं शतं पद्यालोका भवन्ति । तेषां चाष्टाविंशतिः सार्धदशभिस्त्रिग्राहिणीभिः पूरिताः । पञ्चदश लोका जङ्घामात्र्यद्वयद्धाभिः । सपादाः षट् षष्टिर्लोकाः पादभागैः पा-दभागार्धपादभागाभ्यामिति ।

अत्र च सार्द्धास्त्रिचत्वारिंशत्पद्यालोका महतीभिर्व्याप्ताः । पादभा-गार्धपादभागैभिरवशिष्टव्याप्तिरिति संप्रदायः । तदेवं द्वितीयायां द्वा-विंशतिर्लोकंपृणा जङ्घामात्र्यः २२। चतुस्त्रिंशत् त्रिग्राहिण्यः ३४, पञ्च-चत्वारिंशदध्यर्द्धाः ४५, चतुर्विंशतिः पद्याः २४, चतुर्दशार्धपद्याः १४ । षडर्धपादभागाः ६। अष्टादश शतानि पञ्चाधिकानि पादभागाः। १८०५। एवं पञ्चाशदूनं सहस्रद्वयं संपूर्णम् १९५० । इति द्वितीया ।

इति सप्तदशस्याष्टमी कण्डिका ॥ ८ ॥



अपराह्णे सतानूप्त्रं व्रतप्रदानम् । ततः सायंप्रातरुपसदौ । उपास्तम-यमग्निक्षेत्रं परितोऽध्वर्योर्यथोक्तमश्वपरिणयनं त्रिः प्रदक्षिणम् । ईशानदि-श्युत्सर्गः। त्रिरेवाप्रदक्षिणं परिगमनम् । वाग्बन्धप्रैषादि यथोक्तम्। भस्मोद्व पसमिदाधाने न भवतः । चितिप्रवर्ग्योपसदां दैवान् मानुषाद्वा काला-

उत्तमायां च ऋतव्ये नभश्च नभस्यश्चेति ॥४॥ अवकाः कूर्मवत् ॥५॥ इषश्चोर्जश्चेत्यपरे ॥६॥ पूर्वार्धे प्राणभृतो दशायुर्म इति प्रतिमन्त्रम् ॥७॥ छन्दस्या द्वादश द्वादशाप्ययेषु मा च्छन्द इति प्रतिमन्त्रम् ॥८॥ बालखिल्या लोकं पश्चाच्छिद्रष्ट्वा ॥९॥ बालखिल्याः सप्त पुरस्तात्

---

तिक्रमेऽप्यश्वपरिणयनवाग्बन्धविसर्जनान्युपास्तमयमेव कार्याणि। व्रतप्रदानमपि स्वकाल एव भवति । एतेषां स्वकालातिक्रमो न कार्यः । नाप्यत्र क्रमनियमः। श्वः संवत्सरन्दीक्षापक्षे प्रतिपदि द्विस्तनं व्रतकरणम् । ततः प्रवर्ग्योपसदौ ! ततस्तृतीयादिचितीनां चयनम् । तत्र तृतीयायां चितौ आत्ममध्ये स्वयमातृण्णां पूर्वोक्तलक्षणां प्राङ्मुख इन्द्राग्नी अव्यथमानामिति मन्त्रेणोपदधाति । ततो नित्ये ।

ततो यजमानो भुव इति व्याहृत्यां साम गायति । ततो रेतःसिग्वेलायां सर्वासु दिक्षु अनूकस्योपरि पञ्च दिश्या उपदधाति। दक्षिणस्यां दिश्यनूकस्योपर्येकस्मिन्पद्यालोके द्वे अर्द्धपद्ये प्रागायते दक्षिणोत्तरे तिरश्चालिखिते द्वितीयापञ्चम्योर्दिश्ये। अन्यासु दिक्षु तिस्रोऽपि दिश्याः पद्या एव। तत्र प्रथममुदङ्मुखो राज्ञसीति पूर्वानूके दिश्यामुपदधाति। ततो नित्ये

ततो दक्षिणस्यां दिशि प्राङ्मुखो दक्षिणस्यां दिश्यर्द्धपद्यां विराडसीत्युपदधाति । ततो नित्ये । ततो दक्षिणामुखः संम्राडसीति पश्चात् । ततो नित्ये । स्वराडसीत्युत्तरां प्रत्यङ्मुखः । ततो नित्ये। प्रत्यागत्य प्राङ्मुखो दक्षिणामुत्तरेण पञ्चमीमर्द्धपद्यामधिपत्न्यसीति । ततो नित्ये ।

ततोऽध्वर्युर्विश्वकर्मा त्वेति मन्त्रेण पूर्वस्या विश्वज्योतिष उपरि यजमानकृतां द्वितीयां विश्वज्योतिषमुपदधाति । ततो नित्ये । तत उदङ्मुख उपविश्य द्वितीयायामुपहितयो ऋतव्ययोः पुरीषच्छन्नयोरुपर्यवका निधाय द्वे ऋतव्ये अर्द्धोत्सेधे पद्ये प्राग्लक्षणे अनूकमभितोऽभ्यात्ममुपदधाति नभश्च नभस्यश्चेति मन्त्रेण ।

ततोऽवकाभिर्ऋतव्ये प्रच्छाद्य नित्ये कृत्वा पुनरपि तथाविधे एव द्वे ऋतव्ये तयोरुपर्युपदधाति इषश्चोर्जश्चेति मन्त्रेण। ततो नित्ये। तत आत्मनः पूर्वार्द्धे दश प्राणभृतः पद्या अनूकमभितः पञ्च पञ्चोपदधाति । तत उदङ्मुख आयुर्मे पाहीति प्रथममुत्तरामुपदधाति ।

ततोऽभ्यात्मं दक्षिणसंस्थां दक्षिणत उपसृत्योपसृत्योपदधाति । प्राणं म इति द्वितीयाम् । अपानमिति तृतीयाम् । व्यानं म इति चतुर्थीम्। चक्षुर्मे पा·

॥१०॥ प्राणभृद्भ्यो वाऽपराः ॥११॥ द्वादशभ्योऽपरास्तु ॥१२॥ मूर्धाऽसि राडिति प्रतिमन्त्रम् ॥१३॥ यजुष्मतीश्च

हीति पञ्चमीम् । श्रोत्रं मे पाहीति षष्ठीम् । वाचं मे पिन्वेति सप्तमीम् । मनो मे जिन्वेत्यष्टमीम् । आत्मानमिति नवमीम् । ज्योतिरिति दशमीम् ।

ततः सकृन्निन्त्ये । ततो दक्षिणपक्षसन्धौ द्वादश छन्दस्या अनूकमभितः षट् षडुपदधाति । तासां मध्ये मध्यमानष्टौ लोकानमितो द्वे अर्द्धपद्ये । शेषा दश पद्याः । एवमेव द्वादश छन्दस्याः पश्चात्पुच्छसन्धौ बालखिल्यानामुधानस्थानं परिशिष्य ततः पूर्वैस्तत्संलग्नाः । एवमेवद्वादशोत्तरं पक्षसन्धावनूकमभितः । एवं छन्दस्यानामुपधानस्थानमुक्त्वाऽधुनोपधानमुच्यते ।

तत्र दक्षिणतः पूर्वाभिमुख उपविष्टः पूर्वामारभ्याभ्यात्ममुपदधाति । मा छन्द इति प्रथमां पद्याम् । प्रमा छन्द इति द्वितीयामर्द्धपद्याम् । ततोऽष्टौ पद्याः । प्रतिमेति तृतीयाम् । अस्रीवय इति चतुर्थीम् । पङ्क्तिरिति पञ्चमीम् । उष्णिगिति षष्ठीम् । बृहतीति सप्तमीम् । अनुष्टुबित्यष्टमीम् । विराडिति नवमीम् । गायत्रीति दशमीम् । त्रिष्टुबित्यर्द्धपद्यामेकादशीम् । जगतीति द्वादशीं पद्याम् । सकृन्निन्त्ये । एताः सर्वा उदग्लक्षणाः । [ ततोऽपरस्यां दिशि दक्षिणाभिमुखो दक्षिणामारभ्य द्वादश ] छन्दस्या अभ्यात्ममुपदधाति । पृथिवी छन्द इति प्रथमाम् । अन्तरिक्ष इति द्वितीयामर्द्धपद्याम् । द्यौरिति तृतीयाम् । समा इति चतुर्थीम् । नक्षत्राणीति पञ्चमीम् । वागिति षष्ठीम् । मन इति सप्तमीम् । कृषिरित्यष्टमीम् । हिरण्यमिति नवमीम् । गौरिति दशमीम् । अजा इति एकादशीमर्द्धपद्याम् । अश्व इति द्वादशीं पद्याम् । सकृन्निन्त्ये । एताः सर्वाः प्राग्लक्षणाः ।

तत उदीच्यां दिशि प्रत्यङ्मुखोऽपरामारभ्य प्राक्संस्था द्वादश छन्दस्या उपदधाति । अग्निर्देवतेति प्रथमां पद्याम् । वात इति द्वितीयामर्द्धपद्याम् । सूर्य इति तृतीयाम् । चन्द्रमा इति चतुर्थीम् । वसव इति पञ्चमीम् । रुद्रा इति षष्ठीम् । आदित्या इति सप्तमीम् । मरुत इत्यष्टमीम् । विश्वे इति नवमीम् । बृहस्पतिरिति दशमीम् । इन्द्र इत्येकादशीमर्द्धपद्याम् । वरुण इति द्वादशीं पद्याम् । ततः सकृन्निन्त्ये । एताः सर्वा उदग्लक्षणाः ।

ततः प्राणभृतां पश्चात् सप्त बालखिल्याः प्राग्लक्षणा उपदधाति । तासां मध्यमा चतुर्थी अनूकस्योपर्युपधीयते । तामभितो द्वे अर्द्धपद्ये । शेषाः पञ्च पद्याः । तत्रोदङ्मुख उत्तरामारभ्य दक्षिणसंस्था उपदधाति । मूर्धाऽसीति प्रथमाम् । ध्रुवाऽसीति द्वितीयाम् । धर्त्र्यसीति तृतीयामर्द्ध-

पद्याम् । आयुषे त्वेति चतुर्थीमनूक्यां पद्याम् । वर्चसे त्वेति पञ्चमीमर्धेप-द्याम् । कृष्यै त्वेति षष्ठीम् । क्षेमाय त्वेति सप्तमीम् । सकृन्निरत्ये ।

ततोऽपरस्यां दिशि पुच्छसन्धौ छन्दस्यानां पश्चात् सप्त बालखिल्याः प्रागूलक्षणाः पद्याः पश्चात् दक्षिणाभिमुखो दक्षिणामारभ्योदक्संस्था उप-दधाति । यन्त्री राडिति प्रथमाम् । यन्त्र्यसीति द्वितीयाम् । ध्रुवाऽसीति तृतीयाम । इषे त्वेति चतुर्थीमनूकस्योपर्युपहिताम् । ऊर्जे त्वेति पञ्चमीम् । रय्यै त्वेति षष्ठीम् । पोषाय त्वेति सप्तमीम् । सकृन्निरत्ये ।

अत्र तृतीयायां चितौ शाखान्तरविहिताश्विनीर्वज्रिण्याद्या यजु-ष्मतीश्चोपदधाति, यदि तासामुपधानस्थानमन्त्रादिकं जानाति । तत उ-त्तरश्रोणेरारभ्य प्रदक्षिणं पूर्वानूकान्तं यावत्प्रथमचित्युक्तप्रकारेण लोकं-पृणा उपदधाति ।

ततः प्रत्यागत्य प्रागनूकस्य दक्षिणत आरभ्योत्तरश्रोण्यदणयादेश-पर्यन्तं लोकंपृणाशेषमुपदधाति । ततो दक्षिणपक्षपुच्छोत्तरपक्षेषु । तत इन्द्रं विश्वा इति पूर्ववत्पुरीषनिवापः । वार्त्रघ्न्यायेत्युपस्थानं च ।

अथ तृतीयायां चितौ लोकंपृणानां विवेको लिख्यते । तृतीयायां प्रथम-चितिवल्लोकंपृणानां चयनं भवति। तत्र विशेष उच्यते। अर्द्धपद्याः षोड-शैव, नाष्टाविंशतिः । पद्याः प्रथमावत् षट्सप्ततिरेव । चतुर्ष्वात्मकोणे-षु एकैका बृहती । सा च दक्षिणांस उत्तरश्रोण्यां च प्रागूलक्षणा । उत्त ऽसे दक्षिणश्रोण्यां चोदगूलक्षणा ।

अथ षट्सप्ततिसंख्यानां पद्यानां स्थानमुच्यते । प्रथमायां येषु येषु लोकेषु प्राणभृत उपहिताः तेषु तेषु स्थानेषु तृतीयायां लोकंपृणाः पद्या उपधीयन्ते ।

तत्र चतुर्ष्वदणयादेशेषु सप्त सप्त पद्या उपधेयाः । कुतः ? दशानां दशानां स्थानानां मध्ये द्वयोर्द्वयोः स्थानयोः सर्वत्र बृहतीभी रुद्धत्वात् । दशानां चतुर्णां स्थानानामेकैकस्य पादभागस्य स्वयमातृण्णया रुद्ध-त्वेन पद्यानामुधानासंभवात् । अतः सप्त सप्तैव स्थानान्यदणयादे-शेष्ववशिष्यन्ते ।

तथा रेतःसिग्वेलायामष्टौ पादमात्र्य उपधेयाः । कुतः ? पश्चादनूक-मभितो द्वयोः स्थानयोरर्द्धपद्याद्वयसहितयाऽपरदिश्या रुद्धत्वात् । एवं षट्त्रिंशदुपहिताः ।

तथा सर्वत्र बृहतीसंलग्ने द्वितीयलोके बृहत्या अन्तर्वर्तिकोणम-भितो द्वे द्वे पद्ये बृहतीसंस्पृष्टे एवोपधेये । एवं ता अष्टौ भवन्ति । पूर्वा-भिः सह चतुश्चत्वारिंशत् ।

जानन् ॥१४॥ उत्तराश्रोणेरधि लोकम्पृणाः पूर्ववत् ॥१५॥९॥

---

तथा पश्चाच्छन्दस्या अभित एकैका पद्या अर्धपद्यया सहिता। तत्र पूर्वं छन्दस्या अभितः संस्पृष्टे प्रागायते अर्द्धपद्ये उपधाय तद्बहिः द्वे पद्ये उपधेये। तथा दक्षिणस्यां दिशि छन्दस्यानां पुरस्तात्पश्चाच्च द्वे द्वे पद्ये सार्धे उपधेये। एवमेवोत्तरस्यां च। अत्राप्यर्धपद्ये छन्दस्यासंलग्ने उदगायते। अर्धपद्यातो बहिः पद्याः। एवं छन्दस्यानां परितो दश पद्या उपहिताः। पूर्वाभिः सह चतुष्पञ्चाशत्।

प्राणभृतां दक्षिणत उत्तरतश्च तिस्रस्तिस्रः पद्या उपधीयन्ते। एवं ताः षट्। बालखिल्यानां दक्षिणत उत्तरतश्चतस्रश्चतस्रः पद्या उपधीयन्ते। अपरस्यां दिशि बालखिल्यानामभितः सार्द्धाश्चतस्रश्चतस्र इति विशेषः। तत्राप्यर्द्धपद्ये बालखिल्यासंलग्ने पद्यावाह्यतः।

एवं ताः षोडश, पूर्वाभिः षड्भिः सह द्वाविंशतिः। चतुष्पञ्चाशच्च पूर्वाः, ताभिः सह षट्सप्ततिः।

अथ षोडशानामर्द्धपद्यानां विवेक उच्यते। पश्चाच्छन्दस्या अभितो द्वे दक्षिणोत्तरे छन्दस्या अभितश्च द्वे द्वे। पश्चाद्वालखिल्या अभितश्च द्वे। एवं ता अष्टौ। चतसृषु दिक्षु दिश्या अभितो द्वे द्वे। एवं ता अष्टौ। पूर्वाभिः सह षोडश। दक्षिणस्यां दिशि प्रागायतयोरर्द्धपद्ययोर्दिश्ययोः।

पुरस्तात्पश्चाच्चार्द्धपद्ये उदगायते एव। उत्तरतश्चोदगायते, पूर्वापरयोः प्रागायते। तृतीयायां विश्वज्योतिषमभितः पश्चाद्वेलायां चार्द्धपद्ये न भवतः। एवमात्मशेषे चतुश्चत्वारिंशदधिकानि नवशतानि पादभागा उपधीयन्ते। अत्र चतुःषष्टिः पद्यालोका यजुष्मतीभिर्व्याप्ताः।

द्वानवतिर्लोकाः पद्या बृहतीभिः। अष्टौ पद्यालोकाः षोडशार्धपद्याभिः षड्त्रिंशदधिकं शतद्वयं पादभागैरिति। अत्र परयोः पुरुषयोश्चत्वारिंशदधिकालोका बृहतीभिर्व्याप्ताः। तयोरेकोनचत्वारिंशदधिकं शतद्वयं प्रतिपुरुषं पादभागा उपधेयाः। पूर्वयोः पुरुषयोः पादोनद्वाचत्वारिंशत्पादोनद्वाचत्वारिंशल्लोका बृहतीभिर्व्याप्ताः। तयोस्त्रयस्त्रिंशदधिकं शतद्वयं पादभागा उपधेयाः। इत्यात्मा पूरितः।

पक्षपुच्छचयनं प्रथमावदेव। इयांस्तु विशेषः। तिस्रस्तिस्रोऽर्द्धपद्या उद्धृत्य तासां स्थाने षट् षट् पादभागानुपदध्यात्। पक्षयोश्चयनं प्रथमावत्। पुच्छे च समानामर्द्धपद्यानां मध्ये आत्मसंलग्ने दक्षिणोत्तरे द्वे उद्धरणीये। यस्मिन् पद्यालोके द्वे स्तस्तस्माल्लोकाद् द्वयोरुत्तरामुद्धरेत् सा तृतीया। अन्यत्सर्वं प्रथमावत्।

चतुर्थ्यामनूकान्तेषु दक्षिणोत्तरे द्वे द्वे ॥१॥ पूर्वाभ्याम-पराश्चतुर्दश ॥२॥ ताभ्यः षट् ॥३॥ पूर्वदक्षिणेऽवान्तरदेश एके ॥४॥ उत्तरा वा दक्षिणाभ्याम् ॥५॥ उत्तरां पूर्वयो-राशुस्त्रिवृदिति ॥६॥ दक्षिणामपरयोर्धरुणऽ एकविꣳशऽ

तदेवं तृतीयायामष्टात्रिंशदधिकं शतद्वयं लोकंपृणाः पद्याः २३८ । विंशतिरर्द्धपद्याः २० । चतस्रो दृहत्यः ४ । अष्टाशीत्यधिकानि षोडशशतानि पादभागाः १६८८ । एवं पञ्चाशदून सहस्रद्वयं भवति ।

इति तृतीया समाप्ता ।

इति सप्तदशे नवमी कण्डिका ॥ ९ ॥

अथ चतुर्थी चितिरुच्यते । तत्र प्रतिदिशमनूकान्तेषु दक्षिणोत्तरे द्वे द्वे यजुष्मत्यौ उपदधाति । पुरस्तादनूकमभितो द्वे जङ्घामाऽयौ पश्चाच्चानूकमभितो जङ्घामाऽय्यावेव । दक्षिणतश्चाऽनूकान्तेऽनूकस्योपर्येका उदक्लक्षणा पद्या । तस्या उत्तरतो द्वितीया पद्यैव । उत्तरतश्चानूकान्तेऽनूकस्योपर्येका पद्या । तस्या दक्षिणतो द्वितीयाऽपि पद्या । तथा पूर्वयोर्जङ्घामाऽयोः ।

पश्चाच्चतुर्दशार्द्धपद्या अनूकमभितः सप्त सप्त प्रागायताः प्राग्लक्षणा उपधेयाः । तासामर्द्धपद्यानां पश्चात् षट् पद्याः प्राग्लक्षणा अनूकमभितस्तिस्रस्तिस्र उपधेयाः ।

अथ चतुर्दशानां षण्णां च विकल्पेन स्थानान्तरे उपधानमुच्यते । एके आचार्याः पूर्वदक्षिणे कोणे जङ्घामाऽयादीनामन्तरतश्चतुर्दशार्द्धपद्या उपधाय तदन्तरतः षट् पद्या उपदधाति । तत्र दक्षिणांसोपहितजङ्घामाऽयाः पश्चात् संलग्ना या अध्यर्द्धा तस्या उत्तरतो नवार्द्धपद्याः प्रागायताः प्राग्लक्षणा उपधेयाः ।

द्वितीयामध्यर्द्धा जङ्घामात्रीं चोत्तरेण पञ्चार्द्धपद्या उदगायता उदग्लक्षणा उपधेयाः । एवं चतुर्दश्यर्द्धपद्या उपधाय तदन्तरतस्तत्संलग्नाः षट् पद्या उपधीयन्ते । ताश्च नवानामर्द्धपद्यानामधश्चतस्रः प्राग्लक्षणाः । पञ्चानामुत्तरतो द्वे उदग्लक्षणे ।

अथ दक्षिणस्यां दिश्यनूकान्तोपहिताभ्यां दक्षिणोत्तराभ्यां पद्याभ्यामुत्तरतश्चतुर्दशार्धपद्या अभितोऽनूकमुपधाय तासामुत्तरतः षट् पद्या अप्यनूकमभित एवोपधेयाः । एवमुपधानस्थानक्रममुक्त्वेदानीं क्रमेण

इति ॥७॥ दक्षिणां दक्षिणयोर्भान्तः पञ्चदश इति ॥८॥ दक्षिणामुत्तरयोर्व्योमा सप्तदश इति ॥९॥ चतुर्दश प्रतिमन्त्रं प्रतूर्त्तिरष्टादश इति ॥१०॥ दक्षिणां पूर्वयोरग्ने-

विधिवदुपधानमुच्यते ।

अथ प्रथमं पुरस्तादुदङ्मुखः पूर्वयोर्मध्ये उत्तरां जङ्घामात्रीमाशुस्त्रिवृदिति मन्त्रेणोपदधाति । ततो नित्ये । ततोऽपरस्यां दिशि दक्षिणाभिमुखोऽपरयोर्जङ्घामात्र्योर्मध्ये दक्षिणामुपदधाति धरुण इति मन्त्रेण । नित्ये च । ततो दक्षिणस्यां दिशि प्राङ्मुखो दक्षिणयोः पद्ययोर्मध्ये भान्त इति दक्षिणां पद्यामुपदधाति । नित्ये च ।

तत उत्तरस्यां दिशि प्रत्यङ्मुखो दक्षिणोत्तरयोः पद्ययोर्मध्ये व्योमा सप्तदश इति दक्षिणां पद्यामुपदधाति । ततो नित्ये । तत उदङ्मुख उत्तरामारभ्य दक्षिणसंस्थाश्चतुर्दशार्द्धपद्या उपदधाति । प्रतूर्तिरष्टादश इति प्रथमाम् । तप इति द्वितीयाम् । अभीवर्त इति तृतीयाम् । वर्च इति चतुर्थीम् । सम्भरण इति पञ्चमीम् । योनिरिति षष्ठीम् । गर्भा इति सप्तमीम् । ओज इत्यष्टमीम् । क्रतुरिति नवमीम् । प्रतिष्ठेति दशमीम् । ब्रध्नस्येत्येकादशीम् । नाक इति द्वादशीम् । विवर्त इति त्रयोदशीम् । धर्त्र चतुष्टोम इति चतुर्दशीमिति । सकृन्नित्ये । ततः पूर्वयोर्मध्ये दक्षिणां जङ्घामात्रीमग्नेर्भागोऽसीत्युपदधाति ।

ततोऽपरयोर्मध्ये उत्तरां जङ्घामात्रीं मित्रस्य भागोऽसीत्युपदधाति । ततो दक्षिणयोर्मध्ये उत्तरां पद्यां नृचक्षसामित्युपदधाति । तत उत्तरयोर्मध्ये उत्तरां पद्यामिन्द्रस्य भागोऽसीत्युपदधाति । प्रत्येकं नित्ये करोति । तत उदङ्मुख उत्तरामारभ्य दक्षिणसंस्थाः षट् पद्या उपदधाति [ वसूनां भागोऽसीति प्रथमाम् । आदित्यानामिति द्वितीयाम् । अदित्या इति तृतीयाम् । देवस्योत चतुर्थीम् । यवानामिति पञ्चमीम् । ऋभूणामिति षष्ठीम् । ततः सकृन्नित्ये ]

ततः पूर्ववद् द्वे ऋतव्ये उपदधाति सहश्च सहस्यश्चेति मन्त्रेण । नित्ये च पूर्ववदेव । ततः सर्वासु दिक्षु रेतःसिग्वेलायां सप्तदश स्तृष्टीरुपदधाति । प्रतिदिशं चतस्रश्चतस्रः । दक्षिणतः पञ्च । तत्र मध्यमाऽनूकस्योपरि । तामभितो द्वे अर्द्धपद्ये । शेषाः पञ्चदश पद्याः । अन्यासु दिक्ष्वनूकमभितो द्वे द्वे । तत्र पूर्वासामुत्तरत आरभ्य प्रदक्षिणं सर्वा उपदधाति ।

[ तत्र पुरस्तादुदङ्मुख एकयाऽस्तुवतेति प्रथमाम् । तिसृभिरिति द्वि-

**भाग इति ॥११॥ उत्तरामपरयोर्मित्रस्य भाग इति ॥१२॥ उत्तरां दक्षिणयोर्नृचक्षसां भाग इति ॥१३॥ उत्तरामु·**

तीयाम् । पञ्चभिरिति तृतीयम् । सप्तभिरिति चतुर्थीम् । सृष्टिषु प्रतिदिशं नित्ये इति रामः ]

( ततः प्राङ्मुखो दक्षिणतः पञ्चोपदधाति ) नवभिरिति पञ्चमीम् । एकादशभिरिति षष्ठीमर्द्धपद्याम् । त्रयोदशभिरिति सप्तमीं पद्यामनूकयाम् । पञ्चदशभिरित्यष्टमीमर्द्धपद्याम् । सप्तदशभिरिति नवमीम् । ततो दक्षिणामुखोऽपराश्चतस्रः । नवदशभिरिति दशमीम् । एकविंशत्येत्येकादशीम् । त्रयोविꣳशत्येति द्वादशीम् । पञ्चविꣳशत्येति त्रयोदशीम् । ततः प्रत्यङ्मुख उत्तरा उपदधाति । सप्तविꣳशत्येति चतुर्दशीम् । उदकाप० इति रामः । नवविꣳशत्येति पञ्चदशीम् । एकत्रिꣳशतेति षोडशीमिति । त्रयस्त्रिꣳ॰ शतेति सप्तदशीमिति ।

ततः परीत्य परीत्य सर्वासु सकृन्नित्ये ] तत उत्तरांसादारभ्य प्रागनूकोत्तरांसादण्यादेशान्तराले लोकंपृणामध्यपर्यन्तमुपधाय प्रत्येत्य प्रागनूकस्य दक्षिणत आरभ्य प्रदक्षिणमुत्तरांसादण्यादेशपर्यन्तं पूर्ववदुपदधाति । ततो दक्षिणपक्षपुच्छोत्तरपक्षेषु च पूर्ववल्लोकम्पृणा उपदधाति । तत इन्द्रं विश्वा इति पूर्ववत्पुरीषनिवपनम् ।

ततो वार्त्रहत्यायेति पुरीषवत्याश्चतुर्थ्या उपस्थानं च । अथ चतुर्थ्यां लोकम्पृणानां विवेक उच्यते । चतुर्थ्यां चितौ द्वितीयचितिवदेव लोकम्पृणानामुपधानं भवति । इयांस्तु विशेषः । पक्षसन्ध्ययोर्यं दक्षिणोत्तरे पद्ये यजुष्मत्यौ उपहिते दक्षिणस्यां दिशि तयोः पद्ययोर्मध्ये दक्षिणस्याः पद्यायाः पुरस्तात् पश्चाच्च चतस्रश्चतस्रोऽर्द्धपद्या उदग्लक्षणा उपधेयाः । उत्तरस्यां चोत्तरस्याः पद्यायाः पुरस्तात् पश्चाच्च चतस्रश्चतस्रोऽर्द्ध पद्या उपधेयाः ।

तथा पुरस्तादनूकान्ते ये जङ्घामात्र्यौ उपहिते तयोर्दक्षिणत उत्तरतश्चैकैकामध्यर्द्धां प्राग्लक्षणामुपदध्यात् । अपरस्यां दिश्यपि अनूकान्तोपहितयोर्जङ्घामात्र्योर्दक्षिणत उत्तरतश्चैकैकाऽध्यर्द्धा प्राग्लक्षणोपधेया ।

एवं सर्वासु दिक्षु वयस्यानां स्थानं पूरितम् । ततोऽमितो वयस्याः सर्वत एकैकामध्यर्द्धामित्यादि सर्वं द्वितीयावत् । तथा चतुर्दशानामर्द्धपद्यानां दक्षिणत उत्तरतश्च द्वे द्वे अर्द्धपद्ये प्राग्लक्षणे प्रागायते उपधेये ।

तथा षण्णां पद्यानां दक्षिणत उत्तरतश्चैकैकाऽर्द्धपद्या प्रागायतोपधेया । तथा दक्षिणश्रोण्यां जङ्घामात्रीसन्निहितयोरध्यर्द्धयोः पुरस्तादेकां

**त्तरयोरिन्द्रस्य भाग इति ॥१४॥ षट् प्रतिमन्त्रं वसूनां भाग इति ॥१५॥ ऋतव्ये सहश्च सहस्यश्चेति ॥१६॥ रेतः**

बृहतीमुदग्लक्षणामुपधाय तस्या उत्तरतः संलग्नां प्रागायतां त्रिग्राहिणीं चोपधाय त्रिग्राहिण्या उत्तरत एकां प्राग्लक्षणां पद्यां जङ्घामात्र्याः पूर्वस्यामुपदध्यात् ।

तथा उत्तरश्रोण्यामध्यर्द्धयोः पुरस्तादेकां बृहतीं प्राग्लक्षणामुपधाय तस्या दक्षिणतः प्रागायतां त्रिग्राहिणीं, त्रिग्राहिण्या दक्षिणतो जङ्घामात्र्याः पुरस्तात्पद्यां चोपदधाति । शेषे आत्मभागे षष्ठ्यधिकानि नव शतानि पादभागा उपधेयाः । चत्वारश्चार्द्धपादभागा द्वितीयावत् ।

अत्र चतुर्थ्यां पूर्वयोः पुरुषयोश्चत्वारिंशत् चत्वारिंशत्पद्यालोका महतीभिर्व्याप्ताः । अपरयोः पुरुषयोश्चत्वारिंशत्पादभागन्यूनाः । पूर्वयोः पुरुषयोः पादभागानां चत्वारिंशदधिकं शतद्वयं पादभागाः प्रतिपुरुषमुपधेयाः । अपरपुरुषयोः द्वौ द्वावर्धपादभागावधिकौ ।

तत्र चतुश्चत्वारिंशत्पद्यालोका यजुष्मतीभिर्व्याप्ताः । एकादशार्धपद्याभिः । चत्वारिंशदधिकं शतत्रयं पादभागैः । द्वाचत्वारिंशल्लोका अध्यर्द्धाभिः । पञ्चचत्वारिंशल्लोका जङ्घामात्रीपक्षसन्धित्रिग्राहिणीभिः । षोडश बृहतीत्रिग्राहिणीपादमात्रीभिः सार्द्धम् । एको लोकः पुच्छत्रिग्राहिणीभ्याम् । अर्द्धो लोकश्चतुर्भिरर्द्धपादभागैरिति । एवं चत्वारि शतान्यपि आत्मनि पद्यालोकाः पूरिताः । पक्षपुच्छपूरणं द्वितीयावत् ॥

अस्मिन् पक्षे चतुर्थ्यां चितौ द्वाविंशतिर्लोकंपृणा जङ्घामात्र्यः २२ । षट्त्रिंशत् त्रिग्राहिण्यः ३६ । एकोनपञ्चाशदध्यर्धाः ४९ । चतुर्विंशतिरर्धपद्याः २४ । द्वे बृहत्यौ २ । द्वे पद्ये २ । षडर्धपादभागाः ६ । अष्टादशशतानि नवाधिकानि पादभागाः १८०९ । एवं पञ्चाशदूनं सहस्रद्वयं लोकंपृणा भवन्ति ॥ १९५० ॥

अथ चतुर्थ्यामेव चतुर्दशानां षण्णां चोत्तरा वा दक्षिणाभ्यामित्यस्मिन् पक्षे लोकंपृणासु विशेष उच्यते । यदि चतुर्दशार्धपद्याः षट् पद्याश्च दक्षिणाभ्यां यजुष्मतीभ्यामुत्तरा उपधीयन्ते तदा आत्मन उत्तरश्रोणौ उत्तरांसे च बृहतीत्रिग्राहिणीपादभागानामुपधानं कर्तव्यम् ।

तत्र चोत्तरश्रोण्यां पूर्ववद् बृहतीमुपधाय तस्याः पुरस्तादुदगायतां त्रिग्राहिणीं जङ्घामात्रीसंलग्नाम्, तस्याः पुरस्तादुदग्लक्षणां त्रिग्राहिणी संस्पृष्टां पद्यां चोपदध्यात । उत्तरांसे च पूर्वाध्यर्धयोः पश्चादुदगग्रां बृहतीमुपधाय तस्याः पश्चादुदगायतां त्रिग्राहिणीं जङ्घामात्रीसंलग्नाम्

सिग्वेलायां च सप्तदश सर्वतो नव दक्षिणेनानूकं सृष्टा रेकया ऽस्तुवतेति प्रतिमन्त्रम् ॥१७॥ उत्तरांऽसादधि लोकम्पृणाः पूर्ववत् ॥१८॥१०॥

पञ्चम्यामन्तेष्वश्वाऽश्वनीवदसपत्नाः ॥१॥ दक्षिणयो-

---

तस्याः पश्चादुदग्लक्षणां पद्यां च त्रिस्राक्तिणीसंस्पृष्टामुपदध्यात् । एतावानेव विशेषोऽन्यत् सर्वं पूर्ववत् ।

अथ पूर्वदक्षिणोऽवान्तरदेश एक इत्यस्मिन्पक्षे विशेष उच्यते । यदि चतुर्दशार्धपद्याः षट् पद्याश्चाग्नेयकोणे उपधीयन्ते तदा दक्षिण श्रोण्यां पूर्ववद् बृहतीमुदग्लक्षणामुपधाय तस्याः पुरस्तादुदगायतां जङ्घामात्रीसंस्पृष्टां त्रिस्राक्तिणीमुपदधाति ।

तस्याः पुरस्तादुदगग्रां पद्यां त्रिस्राक्तिणीसंस्पृष्टामुपदधाति । उत्तर-श्रोण्यंसयोश्च पूर्ववदेवोभयत्रोपदधाति । तस्मिन् पक्षे चतुर्दशानाम-र्धपद्यानां षण्णां पद्यानां चाभितो या लोकंपृणा अर्द्धपद्या उक्तास्ता एकस्मिन्नेवात्मपूर्वपार्श्वे उपधीयन्ते । द्वे चतुर्दशानाम । एका षण्णा-म् । आत्मपूर्वप्रदेशस्य बहिर्भागत्वात् ।

आसां च पादभागापेक्षया महत्त्वात् । ततोऽस्मात्पूर्वदक्षिणपुरुषाद्वा-यव्यकोणस्थान् षड्विंशतिपादाभागानुद्धृत्य द्वापञ्चाशदर्द्धपादभागान्य-थायोगं प्रागायतानुदगायतांश्च विचार्योपदध्यात् । ते च पूर्वदक्षिण-पुरुषस्य वायव्यकोणे तृतीयचतुर्थस्तृष्ट्योः पश्चाच्चतुर्षु लोकेषु ।

तयोरेव स्तृष्ट्योः पुरस्ताद् द्वयोः । ऋतव्याभ्यां दक्षिणलोकस्यापर-स्मिन्नर्धे च । एवं सार्धेषु षट्सु लोकेषु द्वापञ्चाशदर्द्धभागानामु-पधानम् । तेषां मध्ये द्वादशोदगायताः । शेषाः सर्वे प्रागायता इति ॥ इति चतुर्थी चितिः ॥

इति सप्तदशस्य दशमी कण्डिका ॥ १० ॥

---

अथ पञ्चमी चितिरुच्यते । पञ्चम्यां चितौ प्रतिदिशमात्मनः प्रान्तेष्वसपत्ना उपदधाति । तत्र प्रागनूकमुत्तरेण द्वितीये लोके पूर्वा प्राग्लक्षणा । दक्षिणतस्तिर्यगनूकं पूर्वेण द्वितीये लोके दक्षिणाऽसपत्नोद-ग्लक्षणोपधेया । पश्चादनूकं दक्षिणेन द्वितीये लोके अपराऽसपत्ना प्राग्लक्षणा ।

उत्तरस्यामनूकमपरेण द्वितीये लोके उत्तराऽसपत्नोदग्लक्षणा । दक्षिणाया असपत्नाया उत्तरत उत्तरा पद्या लोकद्वयं त्यक्त्वा तृतीये

**रस्त्यन्तरम् ॥२॥ अग्ने जातानिति प्रतिमन्त्रम् ॥३॥ पश्चिमा द्वितीया ॥४॥ विराजो दश दश प्रतिदिशं पुरस्तात्प्रथममेवश्छन्द इति प्रतिमन्त्रम् ॥५॥ गायत्र्यसपत्ना**

---

पद्यालोके प्रागूलक्षणा पञ्चम्यसपत्ना । अस्याश्च पञ्चम्याः पुरीषवतीति संज्ञा । अग्नेः पुरीषमसीति पुरीषशब्दवता मन्त्रेणोपधानात् ।

अस्याः अतिच्छन्दस्याश्चान्तराले अतिच्छन्दस उपधानकाले पुरीषप्रक्षेपाद्वा । एताः सर्वा अपि पद्याः ॥

अथासामुपधानमुच्यते ।

तत्र प्रथमं पुरस्तादुदङ्मुखोऽग्ने जातानिति पूर्वामसपत्नामुपदधाति । ततः पश्चाद्दक्षिणाभिमुखः सहसा जातानित्यपरामुपदधाति । ततो दक्षिणतः प्राङ्मुखः षोडशो स्तोम इति दक्षिणाम् ।

तत उत्तरतः प्रत्यङ्मुखश्चतुश्चत्वारिꣳशः स्तोम इत्युत्तरामसपत्नाम् । ततः प्रत्येत्य प्राङ्मुख उदङ्मुखो वा पञ्चमीमसपत्नामग्नेः पुरीषमिति मन्त्रेण प्राग्लक्षणामुपदधाति । प्रतीष्टकं नित्ये ।

ततः सर्वासु दिक्षु दश दश विराजोऽसपत्नासंलग्ना अनूकमभितोऽर्धाधिकया ऽसपत्नातो मध्यलोकेपूपदधाति । तत्र पूर्वा दश विराजोऽर्धपद्यास्तिरश्चालिखिता उदगायता उष्णिग्भ्योऽपराः प्राग्लक्षणा अनूकमभितः पञ्च पञ्चोपदधाति । अन्यासु दिक्षु पद्या एव ।

तत्र प्रथमं पुरस्तादुदङ्मुख उत्तरामारभ्याभ्यात्मं दक्षिणसंस्था विराज उपदधाति । एवश्छन्द इति प्रथमाम् । वरिव इति द्वितीयाम् । शम्भूरिति तृतीयाम् । परिभूरिति चतुर्थीम् । आच्छदिति पञ्चमीम् । मन इति षष्ठीम् । व्यच इति सप्तमीम् । सिन्धुरित्यष्टमीम् । समुद्र इति नवमीम् । शरीरमिति दशमीम् । सकृन्नित्ये ।

ततो दक्षिणस्यां दिशि प्राङ्मुखः पूर्वामारभ्य प्रत्यक्संस्था उदग्लक्षणा दश विराज उपदधाति । ककुप् छन्द इति प्रथमाम् । त्रिककुबिति द्वितीयाम् । काव्यमिति तृतीयाम् । अङ्कुपमिति चतुर्थीम् । अक्षरपङ्क्तिरिति पञ्चमीम् । पदपङ्क्तिरिति षष्ठीम् । विष्टारपङ्क्तिरिति सप्तमीम् । क्षुर इत्यष्टमीम् । आच्छदिति नवमीम् । प्रच्छदिति दशमीम् । ततः सकृन्नित्ये ।

ततोऽपरस्यां दिशि दक्षिणाभिमुखो दक्षिणामारभ्योदक्संस्थाः प्राग्लक्षणा दश विराज उपदधाति । संयच्छन्द इति प्रथमाम् । वियदिति द्वितीयाम् । बृहदिति तृतीयाम् । रथन्तरमिति चतुर्थीम् । निकाय इति

गणमध्येऽसम्भवात् ॥६॥ दक्षिणाभ्यो वा परा अर्धपद्या उपधाय ॥७॥ असपत्नास्पृशोऽन्यतोऽन्तराः ॥८॥ सर्वतोऽषाढावेलायाᳪ स्तोमभागा रश्मिना सत्यायेति प्रतिमन्त्रम् ॥९॥ पञ्चदश दक्षिणेनानूकम् ॥१०॥ वेषश्रीः क्ष-

---

पञ्चमीम् । विवध इति षष्ठीम् । गिर इति सप्तमीम् । भ्रज इत्यष्टमीम् । सᳪस्तुबिति नवमीम् । अनुष्टुबिति दशमीम् । सकृन्निरये ।

तत उत्तरस्यां प्रत्यङ्मुखोऽपरात आरभ्य प्राक्संस्था उदग्लक्षणा दश विराज उपदधाति । एवश्छन्द इति प्रथमाम् । वरिव इति द्वितीयाम् । वयश्छन्द इति तृतीयाम् । वयस्कृदिति चतुर्थीम् । विष्पर्धा इति पञ्चमीम् । विशालमिति षष्ठीम् । छदिरिति सप्तमीम् । दूरोहणमित्यष्टमीम् । तन्द्रमिति नवमीम् । अङ्काङ्कं छन्द इति दशमीमिति । सकृन्निरये ।

ततः सर्वासु दिक्ष्वषाढावेलायां स्तोमभागा एकोनत्रिंशदुपदधाति । तत्र पुरस्तादष्टौ पद्या अनूकमभितश्चतस्रश्चतस्रः प्राग्लक्षणाः । पश्चादप्यष्टौ तथैव । दक्षिणतः सप्त । तासां मध्यमाऽनूकस्योपरि । तामभितोऽर्धपद्ये । शेषाः पञ्च पद्याः सर्वा उदग्लक्षणाः । उत्तरतः षडुदग्लक्षणाः । पद्या अनूकमभितस्तिस्रस्तिस्रः । तत्र पूर्वासां या उत्तरा तत आरभ्य प्रदक्षिणं सर्वा उपदधाति तिस्रस्तिस्रः । प्रतिपदसीति सप्तदशीम् । अनुपदसीत्यष्टादशीम् । संपदसीत्येकोनविंशीम् । तेजोऽसीति विंशीम् । तत्र पूर्वासां या उत्तरा तत आरभ्य प्रदक्षिणं सर्वा उपदधाति ।

तत्र प्रथमामुदङ्मुखः पुरस्तादुपदधाति । रश्मिना सत्यायेति प्रथमाम् । प्रेतिनेति द्वितीयाम् । अन्वित्येति तृतीयाम् । सन्धिनेति चतुर्थीम् । प्रतिधिनेति पञ्चमीम् । विष्टम्भेनेति षष्ठीम् । प्रवयेति सप्तमीम् । अनुयेत्यष्टमीम् । ततः प्राङ्मुखो दक्षिणाः प्रत्यक्संस्था उपदधाति । उशिजेति नवमीम् । प्रकेतेनेति दशमीम् । तन्तुनेत्येकादशीमर्धपद्याम् । सᳪसर्पेणेति द्वादशीमनूक्यां पद्याम् । पेᳪनेति त्रयोदशीमर्द्धपद्याम् । मत ऊर्ध्वं सर्वाः पद्याः । उत्तमेनेति चतुर्दशीम् । वयोधसेति पञ्चदशीम् ।

ततो दक्षिणामुखोऽपरा उपदधाति । अभिजितेति षोडशीम् । प्रतिपदसीति सप्तदशीम् । अनुपदसीत्यष्टादशीम् । सम्पदसीत्येकोनविंशीम् । तेजोऽसीति विंशीम् । त्रिवृदसीत्येकविंशीम् । प्रवृदसीति द्वाविंशीम् । विवृदसीति त्रयोविंशीम् । ततः प्रत्यङ्मुख उत्तराः स्तोमभागाः प्राक्संस्था उपदधाति । सवृदसीति चतुर्विंशीम् । आक्रमोऽसीति पञ्चविंशीम् । संक्र-

**त्राय क्षत्रं जिन्वेति त्रिᳬशत्तमीमेके ॥११॥ पुरीषमास्वा-वपति मन्त्रेण वा तार्पांश्चतस्य तूष्णीᳬ श्रुतेः ॥१२॥११॥**

**नाकसदोऽनूकेषु पूर्ववर्जमृतव्यावेलायामाश्विनी-वद्राज्ञसीति प्रतिमन्त्रम् ॥ १ ॥ पुरीषमोप्योपर्ययं पुर**

---

मोऽसीति षड्विंशतितमीम् । उत्क्रमोऽसीति सप्तविंशतितमीम् । उत्क्रान्तिरसीत्यष्टाविंशतितमीम् । अधिपतिनेत्येकोनत्रिंशत्तमीमिति । वेषश्रीरिति मन्त्रेण त्रिंशत्तमीं स्तोमभागामेके उत्तरत उपदधति ।

अस्मिन् पक्षे उत्तरतः सप्त तासां मध्यमा अनूके । अनूकयामभितश्च द्वे अर्द्धपद्ये इति विशेषः । ततः परीत्य सर्वासु सकृन्नित्ये । ततः सर्वासु स्तोमभागासु पुरीषं निपेवत् ।

इति सप्तदशस्य एकादशी कण्डिका ॥ ११ ॥

---

ततः सर्वासु दिक्षु ऋतव्यावेलायां पूर्वां वर्जयित्वा अन्यासु दिक्षु अनूकस्योपर्यर्द्धोत्सेधाः पञ्च नाकसद उपदधाति । पूर्वा तु अनूकस्योत्तरतो द्वितीये लोके दक्षिणां दिशि ऋतव्यावेलाया अनूकस्योपर्यकाऽस्मिन्पद्यालोके द्वे अर्द्धपद्ये दक्षिणोत्तरे प्रागायते अर्द्धोत्सेधे तिरश्चालिखिते द्वितीयापञ्चमी उपधेये।

अन्याः सर्वा अर्द्धोत्सेधाः पद्याः पुरस्तात्पश्चाच्च प्राग्लक्षणे । उत्तरोदग्लक्षणा । उपधानानन्तरं नाकसदामुपरि पुरीषं तूष्णीमेव प्रक्षिप्य तासामुपर्येवंविधा एव पञ्च चूडाः पञ्चेष्टका उपदधाति । अथ नाकसदामुपधानमुच्यते । प्रथमं पुरस्तादुदङ्मुखो राज्ञ्यसीति पूर्वां नाकसदमुपदधाति ।

ततः प्राङ्मुखो दक्षिणां तिरश्चालिखितामर्द्धपद्यां विराडसीत्युपदधाति । ततो दक्षिणामुखः संम्राडसीत्यपरामुपदधाति । ततः प्रत्यङ्मुखः स्वराडसीत्युत्तरामुपदधाति। ततः प्रत्यागत्य प्राङ्मुखो दक्षिणामुत्तरेण पञ्चमीमर्द्धपद्यां तिरश्चालिखितामधिपत्न्यसीत्युपदधाति । प्रतीष्टकं नित्ये च करोति ।

ततो नाकसदामुपरि तूष्णीं पुरीषं प्रक्षिप्य तासामुपरि पञ्च चूडा उपदधाति पूर्ववत् । अयं पुरो हरिकेश इति पूर्वामुदङ्मुखः । अयं दक्षिणेति द्वितीयां प्राङ्मुखः । उदकोप० इति शमः । ततोऽयमुत्तरादित्युत्तरां तृतीयां प्रत्यङ्मुखः । ततोऽयमुपरीति दक्षिणामुत्तरेण चतुर्थीमर्द्धपद्यां तिरश्चालिखिताम् । ततोऽयं पश्चादित्यपरां पञ्चमीम् । प्रतीष्टकं नित्ये । एताः सर्वा

इति पञ्च चूडाः प्रतिमन्त्रम् ॥२॥ प्रतिदिशं यथालिङ्गम् ॥३॥ पश्चिमोत्तमा ॥४॥ छन्दस्यास्तिस्रस्तिस्रोऽनूकान्तेषु पुरस्ताद्गायत्रीरग्निर्मूर्धेति प्रत्यृचम् ॥५॥ उत्तराश्च ॥६॥ पुरस्तात्त्रैष्टुभा रेतःसिग्वेलायां भुवो यज्ञस्येति ॥ ७ ॥ जगतीश्च पश्चादयमिहेति ॥८॥ अपरास्ताभ्योऽनुष्टुभः सखायः सं व इति ॥९॥ अषाढावेलायाः पुरस्ताद् बृहतीरेना व इति ॥१०॥ भद्रो न इति ककुभस्ताभ्यो बृहत्यन्तरश्रुतेर्मन्त्रक्रमेण ॥११॥ उद्धृतान्यपकृष्येच्छन्न् ॥१२॥ अपराः गायत्रीभ्य उष्णिहोऽग्ने वाजस्येति ॥१३॥ अनूकान्ते दक्षिणे पङ्क्तीरग्निं नमिति ॥१४॥ उत्तरे पदपङ्क्तीरग्ने नमयेति ॥१५॥ पुरीषवत्याः पूर्वामतिच्छन्दसं प्राच्यौ पुरीषमहिने भद्रा रातिर्वृत्रतूर्येऽवस्थिराऽग्निः

---

अर्द्धोत्सेधा एव । ततः पुरस्तादनूकान्ते तिस्रो गायत्रीरुपदधाति । तासां मध्यमा अनूके तामभितो द्वेऽर्द्धपद्ये । तत उदङ्मुखः उत्तरां प्रथममुपदधाति अग्निर्मूर्द्धेति । अयमग्निरिति द्वितीयाम् । त्वामग्ने पुष्करादिति तृतीयाम् । सकृन्नित्ये ।

ततः पुरस्ताद्रेतःसिग्वेलायां तिस्रस्त्रिष्टुभ उदङ्मुख उपदधाति । आसां मध्यमा अनूके । तामभितो द्वे अर्द्धपद्ये । तत उदङ्मुख उत्तरां प्रथममुपदधाति भुवा यज्ञस्येति । अबोध्यग्निरिति द्वितीयाम् । अबोधामेति तृतीयाम् । सकृन्नित्ये । ततः पश्चाद्रेतःसिग्वेलायां तिस्रो जगतीरुपदधाति । अत्रापि मध्यमाऽनूके पद्या तामभितो द्वे अर्द्धपद्ये । तत्र दक्षिणामुखः प्रथमं दक्षिणामुपदधाति अयमिहेति । जनस्य गोपामिति द्वितीयाम् । त्वामग्ने अङ्गिरस इति तृतीयाम् । सकृन्नित्ये ।

ततस्तासां जगतीनां पश्चात्तिस्रो ऽनुष्टुभस्ताद्दृशीरेवोपदधाति । मध्यमा पद्या तामभितो द्वे अर्द्धपद्ये । दक्षिणामुखः प्रथमं दक्षिणामुपदधाति । सखाय इति प्रथमाम् । सं०समिदिति द्वितीयाम् । त्वामिति तृतीयाम् । सकृन्नित्ये । ततोऽषाढावेलायाः पुरस्तात्तिस्रो बृहतीरुदङ्मुख उपदधाति। मध्यमाऽनूके पद्या अभितो द्वे अर्द्धपद्ये । तत्र प्रथममुत्तरामेना व इत्युपदधाति । विश्वस्य दूतमिति द्वितीयाम् । स दुद्रवदिति तृतीयाम् । सकृन्नित्ये ।

**होतारमिति ॥१६॥ अग्ने त्वामित्यनूकान्तेऽपरे द्विपदाः ॥१७॥ मध्येऽष्टेष्टकं गार्हपत्यम् ॥१८॥ पुनरिचार्ति चोपरि तद्वयेन ऋषय इति प्रत्यृचम् ॥१९॥ पुच्छसन्धावेके ॥२०॥**

---

ततो गायत्रीभ्योऽपरास्तिस्र उष्णिहोऽर्द्धपद्या स्तिरश्चालिखिता उदगायता उपदधाति । आसां मध्यमाऽनूकस्योपरि । उदङ्मुखः प्रथममुत्तरामग्ने वाजस्येत्युपदधाति । स इधान इति द्वितीयाम् । क्षपो राजन्निति तृतीयाम्। ततो बृहतीनां पुरस्तात्तिस्रः ककुभः प्रागलक्षणा उपदधाति। आसां मध्यमा पद्या अनूकस्योपरि तामितो द्वे अर्द्धपद्ये । तत्रोदङ्मुखः प्रथममुत्तरां भद्रो नो अग्निराहुतः सुभग इति मन्त्रेणोपदधाति । भद्रा उत प्रशस्तयो भद्रं मनः कृणुष्व येना समत्सु सासह इति द्वितीयाम् । येना समत्सु सासहस्तनुहि भूरि शर्द्धताम् । वनेमा ते अभिष्टिभिरिति तृतीयाम् । सकृन्नित्ये। सकला अप्येते मन्त्राः प्रयोज्या इति कर्कः ।

भद्रा रातिर्वृत्रतूर्येऽवस्थिरा इत्येतानि चत्वारि चत्वार्यक्षराण्युद्धृत्य वा एताः सर्वा गायत्र्याद्याः ककुप्पर्यन्ताः प्रागलक्षणा अर्द्धपद्याश्चोष्णिग्व्यतिरिक्ताः प्रागायताः । ततो दक्षिणे अनूकान्ते तिस्रः पङ्क्तीरुदगलक्षणाः प्राङ्मुखः प्रत्यक्संस्था उपदधाति । आसां मध्यमा पद्याऽनूकस्योपरि । तामभितो द्वे अर्द्धपद्ये उदगायते ।

अग्निं तमिति प्रथमाम् । सो अग्निरिति द्वितीयाम् । उभे सुश्चन्द्रेति तृतीयाम् । सकृन्नित्ये । तत उत्तरे ऽनूकान्ते तिस्रः पदपङ्क्तीरुदगलक्षणाः प्रत्यङ्मुखः प्राक्संस्था उपदधाति । तत्र मध्यमा पद्या अनूके । तामभितो द्वे अर्द्धपद्ये ।

तत्र अग्ने तमद्येति प्रथमाम् । अधा ह्यग्ने इति द्वितीयाम् । एभिर्न इति तृतीयाम् । सकृन्नित्ये । ततः पुरीषवत्याः पञ्चम्या असपत्नायाः पुरस्तादतिछन्दसं पद्यां प्रागलक्षणामुपदधाति प्राङ्मुख उदङ्मुखो वा । भद्रा रातिर्वृत्रतूर्येऽवस्थिराऽग्निरर्ष० होतारं मन्ये दास्वन्तमिति मन्त्रेण । ततो नित्ये। अस्या उपधानात् पूर्वमेवासपत्नाऽतिछन्दसोरन्तराले पुरीषनिवापः ।

ततः पश्चादनूकान्ते तिस्रो द्विपदा दक्षिणामुख उदक्संस्थाः प्रागलक्षणा उपदधाति । आसां मध्यमा अनूके पद्या । तामभितो द्वे अर्द्धपद्ये सर्वाः प्रागलक्षणाः। अग्ने त्वं न इति प्रथमाम् । वसुरग्निरिति द्वितीयाम् । तं त्वा शोचिष्ठेति तृतीयाम् । सकृन्नित्ये। तत आत्मनो मध्ये अष्टेष्टकं गार्हपत्यं पूर्ववदेवोपदधाति ।

पूर्वार्धे वा ॥२१॥ गार्हपत्यं पुच्छसन्धौ कृत्वा ॥२२॥ ऋतव्ये तपश्च तपस्यश्चेति ॥२३॥ विश्वज्योतिषं पर-

---

इयांस्तु विशेषः । अर्द्धबृहतीनां स्थाने चतस्रोऽर्द्धपद्याः प्रागूलक्षणाः पुरस्तात् पश्चाच्च द्वे द्वे तिरश्च्यौ उदगूलक्षणे पद्ये । तत्र प्रथमं दक्षिणत उदङ्मुख उपविश्य उत्तरत आरभ्य दक्षिणसंस्था अर्द्धपद्या उपदधाति । अयᳪ सो अग्निरिति प्रथमाम् । अग्ने यत्ते इति द्वितीयाम् । अग्ने दिव इति तृतीयाम् । पुरीष्यास इति चचतुर्थीम् । सकृन्निये ।

ततोऽपरेण परीत्योत्तरतो दक्षिणामुख उपविष्टः अपरयोर्मध्ये प्रथमं दक्षिणां पद्यामिडामग्न इत्युपदधाति । तत उत्तरामयं त इति । प्रतीष्टकं नित्ये । ततस्तेनैव पुनः परीत्योदङ्मुखः पूर्वयोरुत्तरां प्रथमं चिदसीत्युप दधाति ।

ततः परिचिदसीति दक्षिणाम् । तत उदङ्मुखो येन ऋषय इति । प्रतीष्टकं नित्ये । एता अष्टौ बार्हतोऽर्धोत्सेधाः । आसामुपर्येवं विधा एवाष्टौ पुनश्चितीरुपदधाति, अनेनैव प्रकारेण प्रथमामुत्तरामर्द्धपद्याम् । तं पत्नीभिरिति द्वितीयाम् । आ वाच इति तृतीयाम् , अयममग्निर्निरिति चतुर्थीम् । सकृन्नित्ये ।

ततो ऽपरेण परिक्रम्य दक्षिणामुखः पश्चिमयोर्दक्षिणां संप्रच्यवध्व मिति । उद्बुध्यस्वेत्युत्तराम् । प्रतीष्टकं नित्ये । ततस्तेनैव प्रतिपरीत्योदङ्मुखः प्रथमपूर्वयोरुत्तरां येन वहसीत्युपदधाति ।

ततो दक्षिणामयं ते योनिरिति । प्रतीष्टकं नित्ये । एता अपि चतस्रोऽर्द्धपद्याः प्रागूलक्षणाः । पुरस्तात्पश्चाच्च द्वे द्वे पद्ये उदगूलक्षणे । अष्टावर्द्धोत्सेधाः इति । अत्र गार्हपत्यस्य पुरस्तात्पश्चाच्च त्रिष्टुब् अगस्त्यन्तराले अर्द्धपादभागानां प्रागायतामेकैकां पङ्क्तिमुपदध्यात् ।

केचित् पुच्छसन्धौ पुनश्चित्युपधानं कुर्वन्ति । अस्मिन् पक्षे द्वितीयास्तिस्रो द्व विराजौ च एता अर्द्धोत्सेधाः षट् पुनश्चितयश्च । पुरस्ताद् द्वे पादमात्र्यौ उदगूलक्षणे पूर्णोत्सेधे । अथवा गार्हपत्यं पुच्छसन्धौ उपधाय पूर्वानूकान्ते पुनश्चितिमुप दध्यात् । अस्मिन् पक्षे गायत्र्यादि ककुप्पर्यन्ताः षट् पद्यालोका अर्द्धोत्सेधाः । प्रथमतृतीययोरुष्णिहोरर्द्धं मर्द्ध सर्द्धोत्सेधे गार्हपत्ये च पूर्वे पादमात्र्यौ पूर्णोत्सेधे । मध्ये एतासां स्थाने ऽष्टाचत्वारिंशदर्धपादभागानामुपधानम् ।

विश्वज्योतिर्वेलायाः पार्श्वत उद्धृत्य तेषां मध्ये अष्टावर्धपादभागा गार्हपत्यपूर्वपादमात्रीभ्यां रुद्रस्थानानामष्टानां पादभागानां

मेष्ठी त्वेति ॥२४॥ दक्षिणांसात्प्रत्यगरत्निमात्रादधि

---

स्थाने संजाताः । शेषाश्चत्वारिंशदधिका भवन्ति । तत्रार्द्धपादभागैर्विश्वज्योतिर्वेलां पूरयित्वा तस्याः पूर्वदक्षिणोत्तरपार्श्वेभ्योऽशीतिमर्द्धपादभागानुद्धृत्य चत्वारिंशत् पादभागानुपदध्यात् ।

तथा च मध्यमे भागे अष्टषष्ट्यधिकानि त्रीणि शतान्यर्धपादभागाः। षडधिकानि षट् शतानि पादभागा इति मध्यमे भागे सैव चतुःसप्तत्यधिकानि तानि नवशतानि लोकम्पृणासंख्या संपद्यते । एवमाद्यन्यदप्यूह्यम् । ततः पूर्वयोर्ऋतव्ययोरुपरि पूर्ववदेव तपश्च तपस्यश्चेत्यृतव्ये प्रागूलक्षणे उपदधाति । सकृन्नित्ये च पूर्ववत् ।

ततः परमेष्ठी त्वेति मन्त्रेण यजमानकृतां तृतीयां विश्वज्योतिषमुपदधाति । नित्ये च प्रथमावत । ततो दक्षिणांसात् पद्यालोकद्वयं त्यक्त्वा तृतीयात् पद्यालोकादारभ्य प्रथमचितिवत् प्रदक्षिणं लोकंपृणा उपदधाति प्रागनूकपर्यन्तम् । ततः प्रत्यागत्य प्रागनूकं दक्षिणेन दक्षिणांसदेशे पद्यालोकद्वयपर्यन्ता अक्ष्णयाऽवधिका उपधेयाः । ततः पक्षपुच्छेषु पूर्ववत् ।

अथ पञ्चम्यां लोकम्पृणानां विवेक उच्यते । तत्र पञ्चम्यां चितौ असपत्ना तो मध्यलोकेषु विराजामुपधानपक्षे पूरणमुच्यते । पुच्छकोणयोरेकैकः पद्यालोकः अष्टौ लोका मध्ये वर्तमाना आत्मनः पूर्वान्तं यावत् । एतावान् मध्यमो भागः । अस्मिन् मध्यमे भागे सर्वा ऋज्वालिखिता इष्टका उपधेयाः । दक्षिणोत्तरभागयोः पक्षसहितयोः वक्रालिखिताः ।

अत्र सर्वस्मिन् सपक्षपुच्छेऽग्निक्षेत्रे सप्तशतानि पञ्चाशदधिकानि पद्यालोकाः सन्ति । तत्रैवं त्रिधा विभागे कृते प्रतिभागं पञ्चाशदधिकं प्रतिद्वयं पद्यालोका भवन्तीति ज्ञेयम् । तत्र मध्यमे भागे चतुःसप्तत्यधिकानि पञ्चशतानि ऋज्वालिखिताः पादभागा उपधेयाः । तथा चत्वारिंशशतानि ऋज्वालिखिता अर्द्धपादभागाः प्रागायताः ।

ते च विश्वज्योतिर्वेलायाः कोणेष्वेकैकं पादभागमुपधाय तेषां पादभागानां मध्ये उपहितेष्टकाव्यतिरिक्ते देशे उपधेयाः । तथा दक्षिणोत्तरभागयोरष्टत्रिंशदधिकान्यष्टावष्टौ शतानि वक्रालिखिताः पादभागा उपधीयन्ते । विंशत्यधिकं शतमर्द्धपादभागा वक्रालिखितोत्तरे भागे ऋतव्याषाढावेलयोरुपधीयन्ते । उत्तरे अषाढावेलायाम् अन्त्यौ पद्यालोकौ वर्जयित्वा । तयोर्हि पादभागानामेवोपधानम् ।

दक्षिणे भागे ऋतव्याषाढावेलयोः समग्रयोरपि षट्त्रिंशदधिकं शतं

**लोकम्पृणाः पूर्ववत् ॥२५॥ प्रच्छाद्य पुरीषे विकर्णस्वयमातृण्णे शर्करे सꣳस्पृष्टे छिद्रे प्रोथदश्व इत्युत्तरां विकर्णीमायोष्ट्वेति स्वयमातृण्णाम् ॥२६॥ सकृन्नित्ये ॥२७॥**

---

वक्रालिखिता अर्द्धपादभागा उपधीयन्ते। उत्तरे भागे षोडश पादभागा उपधीयन्ते। तेषां षोडशानां मध्ये अष्टौ अषाढावेलांसयोर्द्वयोः पद्यालोकयोः उपधीयन्ते। अष्टौ चासपत्नानिच्छन्दसोः स्थाने। उत्तरभागे तयोरभावात्। दक्षिणे भागे उत्तरभागात् षोडशार्द्धपादभागा अधिकाः। तेषां चाषाढावेलान्त्ययोः पद्यालोकयोरुपधानं कार्यमिति।

पञ्चम्यामात्मनि सार्द्धमेकाधिकं शतं लोका यजुष्मतीभिर्व्याप्ताः। द्व्यशीतिः पद्यालोका अर्द्धपादभागैः। शेषाः पादभागैरिति। मध्यमे भागे पुरस्तात् पश्चाच्च या अषाढावेला सा स्तोमभागाभिर्व्याप्ताः। ऋतव्या वेलायां च पुरस्तादष्टानां लोकानां मध्ये नाकसद्भतव्याभिस्त्रयो लोका व्याप्ताः। अतो नाकसद् उत्तरतो द्वौ लोकौ ऋतव्ययोर्दक्षिणतस्त्रयः।

एवं पञ्च परिशिष्यन्ते। तेषु पादभागा एवोपधेयाः। तथा पश्चादृतव्यावेलायामष्टानां लोकानां मध्ये एको लोकोऽपरया नाकसदा व्याप्तः। तां नाकसदमभितस्त्रयस्त्रयो लोकाः परिशिष्यन्ते। एवं ते सप्त लोका भवन्ति। तेष्वपि पादभागा एवोपधेयाः। एवं सर्वेषु मध्यमादि भागेषु प्रतिभागं चतुःसप्तत्यधिकानि नवशतानि लोकम्पृणा भवन्ति। प्रतिभागं च सहस्रसंख्या लोकंपृणा मृग्यन्ते श्रुतौ तथा दृष्टत्वात्।

अथ पञ्चमीं चितिमुपधाय त्रेधाऽग्निं विमिमीते। स मध्यमेऽपि तृतीये सहस्रमृज्वालिखिता इष्टका उपदधाति। अथ सहस्रमित्यालिखिता दक्षिणत उपदधाति। अथ सहस्रमित्यालिखिता दक्षिणत उपदधाति। अथ सहस्रमित्यालिखिता उत्तरत उपदधातीति च। त्रिसाहस्र्युक्तमेति सूत्रकारवचनाच्च। अतश्च प्रतिभागं कथं सहस्रसंख्या वर्तत इति। उच्यते। द्वाभ्यामूनाशीतिर्धिष्ण्येष्विति वचनात् धिष्ण्येष्वष्टासप्ततिर्लोकम्पृणा उपधीयन्ते। ताश्च धिष्णीया उत्तमायामिति वचनात् पञ्चम्यां गण्यन्ते।

ततश्च धिष्ण्यसम्बन्धिन्यः षड्विंशतिर्ऋज्वालिखिता मध्यमभागमध्ये गणनीयाः। षड्विंशतिः षड्विंशतिर्वक्रालिखिता दक्षिणोत्तरभागयोर्गणनीया इति। एवं त्रिष्वपि भागेषु सहस्रं सहस्रं लोकम्पृणाः सम्पद्यन्ते।

**पुरुषाभिहोमवात्तिष्ठन्नग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रꣳ सहस्रस्येति प्रतिमन्त्रम् ॥१८॥१२॥**

---

तत इन्द्रं विश्वा इति मन्त्रेण चितिं प्रथमावत् पुरीषेण प्रच्छादयेत् । ततः पुरीषेण प्रच्छादनानन्तरं आत्मनो मध्ये विकर्णी स्वयमातृण्णां दक्षिणोत्तरे शर्करे छिद्रयुक्ते उदङ्मुख उपदधाति । तत्र प्रोथदश्व इति मन्त्रेणोत्तरतः प्रथमं विकर्णीमुपदधाति । तत आयोष्ट्वेति मन्त्रेण प्रदक्षिणतः स्वयमातृण्णामुपदधाति । ततस्तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतमिति । सकृत्सित्ये ।

ततो यजमानः स्वयमातृण्णायां स्वरिति व्याहृत्यां साम गायति । ततोऽध्वर्युः पुरुषाभिहोमवत्तिष्ठन् हिरण्यशकलसहस्रेणाग्निं प्रोक्षति । तत्र प्रथमं पश्चात् प्राङ्मुखस्तिष्ठन् द्वाभ्यां शताभ्यामपरस्मिन् प्रदेशेऽग्निं प्रोक्षति सहस्रस्य प्रमाऽसीति मन्त्रेण । तत उत्तरतो दक्षिणाभिमुखस्तिष्ठन् द्वाभ्यां शताभ्यां सहस्रस्य प्रतिमाऽसीति मन्त्रेणोत्तरपार्श्वे प्रोक्षति । ततः पुरस्तात् प्रत्यङ्मुखस्तिष्ठन् सहस्रस्योन्माऽसीति मन्त्रेण पूर्वभागे द्वाभ्यां शताभ्यां प्रोक्षति । ततः प्रत्यागत्य दक्षिणत उदङ्मुखस्तिष्ठन् साहस्रोऽसीति मन्त्रेण द्वाभ्यां शताभ्यां दक्षिणभागेऽग्निं तथैव प्रोक्षति ।

ततः पुनरपि पश्चात् प्राङ् तिष्ठन् सहस्राय त्वेति प्रथमवत् पश्चात् प्रदेशे द्वाभ्यां शताभ्यां प्रोक्षति । एवं हिरण्यशकलसहस्रेण प्रोक्षितो भवति । अत्र च केवलैर्हिरण्यशकलैः प्रोक्षणासम्भवादुदकवति पूर्णपात्रे द्वे द्व शते हिरण्यशकलानां प्रक्षिप्योदकमिश्रितैः प्रोक्षणं कर्तव्यम् ॥

इति सप्तदशस्य द्वादशी कण्डिका ॥ १२ ॥

इति श्री सम्राट्स्थपतित्रिरग्निचिन्महायाज्ञिक श्रीप्रजापतिसुतेन याज्ञिकश्रीदेवेन कृतायां कात्यायनसूत्रपद्धतौ सप्तदशोऽध्यायः समाप्तः ॥

# अष्टादशोऽध्यायः ।

**शतरुद्रियहोमऽ उत्तरपक्षस्यापरस्यां स्रक्त्यां परिश्रितस्वर्कपर्णेनार्ककाष्ठेन शतयन्त्रमन्ततं जर्तिलमिश्रान्गवेधु-**

---

अथ शतरुद्रियहोमसंज्ञो जुहोतिरुच्यते। तत्र जङ्घामात्र्यादिषु तिसृषु परिश्रित्सु अग्न्यन्वाधानम् । तत्र तूष्णीमेव समिद्द्वयस्य जङ्घामात्र्यां प्रक्षेपः कार्यः । ततश्चतुरासनम्। सर्वं कर्म तूष्णीं भवति । ब्रह्मोपवेशनं प्रणीतानां दक्षिणतः । ततः पश्चात् यजमान उपविशति । प्रणीताप्रणयनम् । परिश्रितामुत्तरतो निधानम् । परिश्रितामेव परिस्तरणम् ।

ततः पात्रासादनम् । शूर्पाग्निहोत्रहवण्यौ । स्फ्यः कर्परम् । शम्याकृष्णाजिनम् । उलूखलमुसलम्। दृषदुपलम् । पात्री धान्यम। गवेधुका जर्तिलाश्च । पवित्रार्थं धृष्टिः । स्थाली आज्यञ्च । वेदश्च । उदकूतृणमश्रिः । इध्मकाष्ठमेकं बर्हिः । स्रुवो जुहूः । उपभृद्ध्रुवा च । अर्कपर्णम् अर्ककाष्ठञ्च । भृतावदानं याक्त्रम् । यूनकुशाश्च । परिधयः । महापात्री । कर्कमते पूर्णपात्रम् । कर्मापवर्गा चेति ।

ततः स्फ्योपहितपात्रीकरणम् । शूर्पाग्निहोत्रहवण्योरादानम् । पात्रीं प्रति गमनम् । पात्रीधिलस्यालम्भः। गवेधुकानां जर्तिलानां चेक्षणम् । अपद्रव्यनिरसम् । अपद्रव्याभावेऽभिमर्शमम् । गवेधुकानां जर्तिलानां च मिश्रीकृत्यैवासादनम् । आलम्भश्च । पञ्चविंशत्यधिकानि चत्वारिंशशतानि चतुर्मुष्टिकानि गृह्यन्ते । मिश्रीकृत्य ग्रहणम् । शेषाभिमर्शनम् । प्राङ्गीक्षणम् । उत्थानम् । उत्तरतो गमनम् । अपणस्य पश्चाद्धविरासादनम् ।

पवित्रच्छेदनम् । अग्निहोत्रहवण्यामपां निनयनम्। पवित्राभ्यामुत्पवनम् । सव्यहस्ते करणम् । दक्षिणेनोदिङ्गनम् । तासामेव प्रोक्षणम् । हविःप्रोक्षणं सकृदेव । पात्राणां प्रोक्षणम्। असंचरे प्रोक्षणीनां निधानम् । कृष्णाजिनास्तरणम् । अवधूननम् । उदकोपस्पर्शनम् । प्रत्यग्ग्रीवस्यास्तरणम्। सव्याशून्ये उलूखलनिधानम् । चालनेन जर्तिलानां पृथक्करणम् । गवेधुकानामुलूखले आवापः ।

मुसलादानम्। उलूखलमध्ये मुसलावधानम् । कण्डनम् । अग्नीधः कुक्कुटाहननम्। कण्डनम् । शूर्पादानम् । हविरुद्वपनम् । निष्पवनम्। विवेकीकरणम् । पुनः कण्डनम् । तुषनिरसनम् । उदकालम्भः। पात्र्यामोप्याभिमन्त्रणम् । त्रिः फलीकरणम् । कणनिधानम् । कर्पराधिश्रयणम् ।

**कासक्तूनजाक्षीरमेके तिष्ठन्नुदङ् नमस्त इत्यध्यायेन॥१॥ ऽनुवाकान्ते स्वाहाकारो जानुमात्रे ॥ २ ॥ प्रश्नान्ते च**

उपर्यङ्गारनिधानम् । गवेधुकानां कर्परे प्रक्षेपः । पर्यग्निकरणम् । श्रपणम् । आलम्भनम् । उद्वासनम् । कृष्णाजिनादिपेषणं प्रोहणान्तम् । अर्धपिष्टेष्वाज्यनिर्वापः । वेदबन्धः । ततः प्रोक्षणम् । पिष्टानामीक्षणम् । जर्तिलानां च ।

आज्याधिश्रयणम् । पर्यग्निकरणम् । वेदिमानादिसंमर्शनान्तं कृतत्वान्न क्रियते । परिश्रितोऽपरेणार्थवद्वेदिखननम् । प्रोक्षण्या आसादनम् । स्फ्योदक्प्रहरणम् । पाण्योरवनेजनम् । बर्हिषां सादनम् । स्रुवस्रुक्संमार्जनम् ।

जुह्वनन्तरमर्कपर्णस्य संमार्गः । उपभृद्ध्रुवाशृतावदानमहापात्रीणां च । संमार्जनापासनम् । पत्नीसन्नहनम् । आज्योद्वासनम् । पत्न्या अवेक्षणम् । वेद्यामाज्यस्यासादनम् । तस्योत्पवनम् । प्रोक्षण्युत्पवनम् । आज्यावेक्षणम् ।

ध्रुवायामेव चतुर्गृहीतग्रहणम् । नेध्मप्रोक्षणम् । वेदिप्रोक्षणम् । बर्हिषः प्रतिग्रहः । वेद्यासादानम् । बर्हिषः प्रोक्षणम् । मूलावसेकः । बर्हिर्विस्रंसनम् । प्रस्तरादानम् । ब्रह्मणे समर्पणम् । यावत्खातस्य दक्षिणश्रोण्यां सन्नहननिधानम् । तावत एव स्तरणम् । आहवनीयकल्पनोल्मुकोदूहनयोरभावः ।

समित्प्रस्तरादानम् । परिधानम् । प्रथमं परिधिमुस्पृश्येध्मकाष्ठस्य निरसनम् । न द्वितीयाधानम् । परिश्रितामीक्षणम् । आतृन्य विधृत्योः स्तरणं प्रस्तरस्य च । अभिनिधानम् । स्फ्योपग्रहेण समर्पिताया जुह्वाः प्रतिगृह्य प्रस्तरे सादनम् ।

ततोऽर्कपर्णस्य तत उपभृतश्च । वेदोपग्रहेण ध्रुवायाः सादनम् । गार्हपत्यं गत्वा महापात्रीस्थापनम् । उपस्तारः । तत्राभिघारः । पाण्यां सक्त्वावापो जर्तिलावापश्च । मिश्रीकृत्य प्राणदानम् । कर्पराञ्जनम् । उद्वासनम् । आज्यस्थाल्यासादनम् । हविषश्च । सर्वालम्भः । आत्मालम्भः । उदकालम्भः । परिश्रितामुपवाजनम् ।

मुखमाज्यां पूर्वाघारः । परिश्रितां संमार्गः । अञ्जलिकरणम् । आज्यस्थाल्याः सगृद्गृहीतं गृहीत्वा स्रुचोरादानम् । सव्येन पादेन परिधीनपरेणातिक्रमणम् । दक्षिणतस्तिष्ठत एवेन्द्राय स्वाहेत्युत्तराघारः । पत्य ध्रुवासमञ्जनम् ।

नाभिमात्रे ॥३॥ प्राक्च प्रत्यवरोहेभ्यो मुखमात्रे ॥४॥ प्रतिलोमं प्रत्यवरोहाञ्जुहोति प्रमाणेषु नमोऽस्त्विति प्र·

ततो ध्रुवातश्चतुर्गृहीतं गृहीत्वा गृहीत्वा गत्वाऽग्नये स्वाहा, सोमाय स्वाहेत्युपविष्टस्यैवाज्यभागौ । ततोऽर्कपर्णे पात्रान्तरसहाये उपस्तारः । पञ्चाशदधिकान्यष्टौ शतान्यवदानानि गृह्यन्ते । अभिघारः ।

उत्थाय यजतिदेशं गत्वोदङ्मुखस्तिष्ठन्नमस्त इत्यध्यायेन सव्यगृहीतेनार्ककाष्ठेन सन्ततं द्रव्यं स्रावयन् जुहोति । प्रथमं जङ्घामात्र्याम् । नमस्ते रुद्रेत्यारभ्यार्भकेभ्यश्च वो नमः स्वाहेत्यन्तेन होमः । ततो नाभिमात्र्यां नमस्तक्षभ्य इत्यारभ्य सुधन्वे च स्वाहेत्यन्तेन होमः । ततो नमः स्रुत्यायेत्यारभ्यावधन्वानि तन्मसि स्वाहेत्यन्तेन मुखमात्र्यां होमः ।

ततः प्रतिलोमं प्रत्यवरोहान् जुहोति । नमोऽस्तु रुद्रेभ्यो ये दिवीति मुखमात्र्याम् । येऽन्तरिक्ष इति नाभिमात्र्याम् । ये पृथिव्यामिति जङ्घामात्र्याम् । अत्र प्रथममिदमेकरुद्रायेति सप्ततिस्त्यागाः ।

तत इदं हिरण्यबाहवे सेनान्ये। इदं दिशाम्पतये। इदं वृक्षेभ्यो हरिकेशेभ्यः। इदं पशूनाम्पतये । इदं शष्पिञ्जराय त्विषीमते । इदं पथीनां पतये। इदं हरिकेशायोपवीतिने । इदं पुष्टानां पतये । इत्यमुना प्रकारेण इदमानिहतेभ्य इत्यन्ताः शतत्रयं पञ्चचत्वारिंशदधिकं त्यागाः । तत इदमेकरुद्रायेत्येकत्रिंशत्यागाः । तत इदं बहुभ्यो रुद्रेभ्य इत्येकोनाशीतिसंख्यास्त्यागाः ।

न स्विष्टकृत । स्रुङ्निधानम् । पवित्रप्रतिपत्तिः । परिश्रितसंमार्गः । सार्कपर्णं व्यूहनम् । अभ्युदय जुह्वा परिव्यञ्जनम् । जुहोतिषु प्रस्तरहोमाभावः । आत्मालम्भः । उदकोपस्पर्शनम् । परिधिप्रक्षेपः । संस्रवाहुतिर्विश्वेभ्यो देवेभ्यः स्वाहेति । धुरि विमोकः । वेद्यालम्भः । वेदविमोकः । पक्षे योक्त्रस्य । कर्कमते समिष्टयजुर्होमो वाताय स्वाहेति । अन्येषां तु ध्रौवस्य तूष्णीमाहवनीये प्रक्षेपः ।

बर्हिर्होमो दिव्याय नभसे स्वाहेति । प्रणीताविमोकः । राक्षसभागः। समिष्टयजुषः पूर्णपात्रादिकर्मापवर्गान्तस्य चाभावः । समिष्टयजुरेव न जुहोति "नेदिदं दीक्षितवसनं परिधाय पुरा यज्ञस्य संस्थाया अन्तं गच्छानि" इत्यादिना समिष्टयजुरादेः प्राक् उदवसानीयायाः प्रतिषेधात् । कर्कमते तु सर्वं कर्मापवर्गान्तं भवति ।

ततश्चात्वालेऽर्कपर्णार्ककाष्ठयोः प्रक्षेपः । अत्राक्षीरेणैके शतरुद्रियहोमं कुर्वन्ति । अस्मिन् पक्षेऽग्न्यन्वाधानानन्तरं शाखाछेदनादि पवित्रबन्ध·

तिमन्त्रम् ॥५॥ हवने प्रास्यति चात्वाले ॥६॥१॥

चित्यं परिषिञ्चत्यग्नीद्दक्षिणे निकक्षेऽद्रिं कृत्वाऽश्मन्नूर्जमित्यद्रेराधि ॥१॥ अश्मंस्ते क्षुदित्यद्रौ कुम्भं कृत्वा मयि त ऊर्गित्यादाय॥२॥ एवं द्विरपरम् ॥३॥ तावत्प्रतिपर्येति ॥४॥ कुम्भेऽद्रिं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन् दक्षिणाऽस्यति यं द्विष्म इति ॥५॥ अभिन्ने भेत्तवै ब्रूयात् ॥६॥ कुम्भे भेदनं सामर्थ्यात् ॥७॥ अश्मनि वाऽर्थवादात् ॥८॥ वाच्यत्वाच्च ॥९॥ अनपेक्षमेत्यो

नान्तम् । पञ्चविंशत्यधिकानां चतुर्णां शतानां षड्वर्गाणामपाकरणम् । पात्रासादने तावत्य एवोखाः । प्रधानयागे एतावन्ति द्विरवदानानि गृहीत्वा पूर्ववद् होमः । अस्मिन् पक्षेऽर्ककाष्ठस्यानुपयोगादभावः ।

यदा त्वपूर्वा दर्विहोमा इति जैमिनिपक्ष आश्रीयते तदा शतरुद्रियादिषु यावदुक्तं भवति, न दर्शपूर्णमासधर्मित्वेन ग्रहणासादनादि । अजाक्षीरपक्षेऽपि तदा वत्सापाकरणाद्यभावः । दुग्धमात्रमादाय होतव्यमिति ।

इत्यष्टादशस्य प्रथमा कण्डिका ॥ १ ॥

---

ततोऽग्नीदग्निं परिषिञ्चति । तत्र पूर्वं दक्षिणे निकक्षे दक्षिणपक्षस्यापरसन्धौ आत्मनि अद्रिं पाषाणं निदधाति । तत उदकुम्भमादायाश्मन्नूर्जमिति मन्त्रेणाद्रेरारभ्य प्रदक्षिणं सपक्षपुच्छमग्निं कुम्भेन परिषिञ्चति ।

ततोऽद्रिसमीपे आगत्याश्मंस्ते क्षुदिति मन्त्रेणाद्रौ सशेषं कुम्भं निदधाति । ततः कुम्भमर्थात् पुनः पूरयित्वा मयि त ऊर्गित्यनेन मन्त्रेण कुम्भमादत्ते । ततोऽश्मन्नूर्जमित्यनेनैव मन्त्रेण प्रदक्षिणं तथैव कुम्भेन सपक्षपुच्छमग्निं परिषिच्याश्मंस्ते क्षुदिति पाषाणस्योपरि सशेषं कुम्भं निदधाति ।

ततः कुम्भमर्थात्पुनः पूरयित्वा मयि त ऊर्गित्यनेन मन्त्रेण कुम्भमादत्ते। ततः पुनरश्मन्नूर्जमित्यनेनैव मन्त्रेण प्रदक्षिणं तथैव कुम्भेन सपक्षपुच्छमग्निं परिषिच्याश्मंस्ते क्षुदिति पाषाणस्योपरि सशेषं कुम्भं निदधाति । अर्थात्पुनरपि कुम्भं पूरयित्वा मयि त ऊर्गिति कुम्भमादाय पुनरप्यश्मन्नूर्जमित्यनेनैव मन्त्रेण तथैवाग्निं कुम्भेन परिषिच्याश्मंस्ते क्षुदिति पाषाणे रिक्तं कुम्भं निधाय त्रिरेवाप्रदक्षिणं पर्येति । एतावदग्नीध्रः कर्म ।

ततोऽध्वर्युस्तमेवाद्रिं कुम्भमध्ये निधाय दक्षिणस्यां महावेदिश्रोणौ

दङ्प्राङ् तिष्ठन्नात्मन उपरि प्रापणान्ते जपतीमा मऽ इति ॥१०॥ मण्डूकावकावेतसशाखा वेणौ बद्ध्वाऽव-कर्षति मन्त्रकृष्टवत्समुद्रस्य त्वेति त्र्यृचम् ॥११॥ पच्च-पुच्छानि चाभ्यात्ममग्ने पावक रोचिषेति॥१२॥अन्त्यमुत्त-रम्॥१३॥वेणुमुत्करे कृत्वा चित्यमालभ्य तिष्ठन्॥१४॥२॥

हिङ्कृत्य साम गायति ॥१॥ पुरस्ताद्गायत्रम् ॥२॥ दक्षिणे पक्षे रथन्तरम् ॥३॥ उत्तरे बृहद् ॥४॥ आत्मनि वा-मदेव्यम् ॥५॥ पुच्छे यज्ञायज्ञियम् ॥६॥ दक्षिणे निकक्षे प्रजा-पतिहृदयम् ॥७॥ अग्न्युक्थं शंसेत्याह ॥८॥ औपवस-थ्ये विसृष्टवाचि पञ्चगृहीते हिरण्यशकलान् प्रास्यति

---

प्राङ्मुखस्तिष्ठन् बहिर्वेदि दक्षिणस्यां दिशि सार्द्रिकुम्भं यं द्विष्म इति मन्त्रेण प्रास्यति ।

यद्येवं निरसनेनार्द्रिर्न भिद्यते तदाऽध्वर्युर्भिन्त्वा इति प्रतिप्रस्थातारं प्रेष्यति । ततः प्रतिप्रस्थाता पाषाणादिना भिनत्ति । अत्र ब्रह्मयजमान प्रतिप्रस्थातारः प्रथममेव सहाऽऽयन्ति ।

ततोऽद्रिभेदानन्तरं सर्वे पश्चादवलोकनमकुर्वन्तोऽग्निं प्रत्यायन्ति । अपामुपस्पर्शनम् । ततो यजमानोऽग्नेर्दक्षिणश्रोणावुदङ्प्राङ्मीशानाभिमु-खस्तिष्ठन्नग्न्यात्मन उपरि लम्बं हस्तं प्रसार्य यत्र प्रदेशेऽग्निं प्राप्नोति तत्र प्रदेशेऽग्निमालभ्येमा मे अग्न इष्टका इति मन्त्रं स्वरेण जपति ।

ततोऽध्वर्युर्वेणौ वंशे मण्डूकः अवकाः शेवालः वेतसशाखा च एतत्त्र-यमवकर्षति । वंशाग्रेणैव भूमिं स्पर्शयन्नंसपर्यन्तं नयतीत्यर्थः । समुद्रस्य त्वाऽवकयेत्यनेन मन्त्रेण ।

ततो हिमस्य त्वेति मन्त्रेण दक्षिणश्रोणेरारभ्योत्तरश्रोणिपर्यन्तमपक-र्षति । तत उप ज्मन्नित्युत्तरश्रोणेरारभ्य प्राक्संस्थमंसान्तम् । ततोऽपामिदं न्ययनमित्युत्तरांसादारभ्य दक्षिणसंस्थं दक्षिणांसपर्यन्तमवकर्षति । ततोऽग्ने पावकेति दक्षिणपक्षं दक्षिणान्तादारभ्यात्मसन्धिपर्यन्तमभ्यात्ममवक-र्षति । स नः पावकेति पुच्छमपरान्तादारभ्यात्मसन्धिं यावदवकर्षति । ततः पावकयेत्युत्तरं पक्षमुत्तरान्तादारभ्यात्मसन्धिं यावदवकर्षति ।

इत्यष्टादशस्य द्वितीया कण्डिका ॥ २ ॥

पञ्च ॥९॥ दधि मधु घृतं पात्र्याᳫं समासिच्य स्थाल्यां वा महामुख्यां कुशमुष्टिं चोपर्युभयमादाय चित्यारोहणं नमस्त इति ॥१०॥ स्वयमातृण्णायां पञ्चगृहीतं जुहोति नाभिवद्धिरण्यादर्शनं च नृषदे वेडिति प्रतिमन्त्रम् ॥११॥ समासिक्तान्कुशैः प्रोक्षति सपारिश्रितकं बाह्येन च ये देवा इति ॥१२॥ प्राणदा इत्यवरोहति ॥१३॥ एवमारो-

---

ततस्तं वंशमुत्करे प्रतिपति । मण्डूकं च विमुञ्चति । ततोऽध्वर्यु श्चित्यमालभ्य तिष्ठन् हिङ्कृत्य सर्वाणि वक्ष्यमाणानि सामानि गायति । अग्नेः पुरस्ताद् गायत्रं साम गायति ।

ततो दक्षिणे पक्षे रथन्तरं साम गायति। उत्तरे पक्षे बृहत्साम गायति । ततः प्रत्यागत्योत्तरश्रोण्या आत्मनि वामदेव्यं साम गायति । पुच्छे यज्ञायज्ञियं साम गायति । तत आत्मनो दक्षिणे निकक्षे दक्षिणपक्षस्यापरसन्धौ प्रजापतिहृदयं साम गायति ।

ततोऽध्वर्युपथे उत्तरपक्षमपरेण छन्दोगोक्तं श्येतं साम गायति । ततो होतारं प्रत्यगभ्युत्थर्ठ० शंसेति प्रैषः । ततोऽपराह्णे यजमानाय व्रतप्रदानम् । ततः सायंप्रवर्ग्योपसदौ । अग्निपरिणयनम् । वाग्यमनप्रैषः । वाग्यमनम् ।

ततोऽस्तमिते वाग्विसर्गप्रैषः । व्रतकरणप्रैषः । वाग्विसर्जनम् । द्विस्तनं व्रतकरणम् । तत औदुम्बर्य आर्द्रास्तिस्रः समिधो घृतमध्ये प्रक्षिप्यन्ते । ताश्च सर्वां रात्रिं घृतमध्ये एव तिष्ठन्ति । ततोऽपररात्रे व्रतप्रदानम् । विबुद्धवाचनम् । वाग्यन्तप्रैषो वाग्विसर्गान्तम् । एकस्तनं व्रतदुघे इति प्रैषः ।

संवत्सरदीक्षापक्षे चैत्रशुक्लद्वितीयायामुपवसथस्याहनि वाग्विसर्गान्ते अध्वर्युराज्यं संस्कृत्य जुह्वां पञ्चगृहीतमाज्यं गृह्णाति । ततस्तस्मिन् पञ्चगृहीते पञ्च हिरण्यशकलान् प्रास्यति। ततो वारण्यां महापात्र्यां महामुख्यां स्थाल्यां वा दधिमधुघृतान्येकत्रासिञ्चति । कुशमुष्टिं च तस्योपरि निदधाति ।

ततोऽध्वर्युः पञ्चगृहीतं पात्रीं चोभयमादाय नमस्ते हरस इति मन्त्रेण तीर्थेनाग्निमारोहति । ततः स्वयमातृण्णां परिस्तीर्य ब्रह्मयजमानयोः पक्षे दक्षिणेनोपविष्टयोः सतोः स्वयमातृण्णायां नाभिव्याघारणवद्दक्षिणांऽसे उत्तरश्रोण्यां दक्षिणश्रोण्यामुत्तरांसे मध्ये च नृषदे वेडिति प्रतिमन्त्रं प-

हणावरोहणमतः ॥१४॥ उपसदन्ते प्रवर्ग्योत्सादनं यथोक्तमग्नौ परिष्यन्दे वा॥१५॥स्वयमातृण्णास्पृष्टं प्रथमम्॥१६॥ पञ्चगृहीतं जुहोत्याग्निरस्तिग्मेनेत्यृचा षोडशगृहीतार्धमनुवाकशेषेण ॥१७॥ चक्षुषः पितेत्यपरमनुवाकेन ॥१८॥ आर्द्रौदुम्बरीर्घृतोषितास्तिस्र उदेनमित्यादधाति प्रत्यृचम् ॥१९॥ अग्निं प्रणयति ॥२०॥ प्रेष्यत्युद्यच्छेध्ममुपयच्छोपयमनीः॥२१॥अग्नये प्रह्रियमाणायानुब्रूह्यग्नीदेकस्फ्य-

ञ्चगृहीतं जुहोति । प्रतिहोमं चैकैकं हिरण्यशकलं स्वयमातृण्णायां पातयेदिति वासुदेवः ।

अत्र होमं कुर्वन् हिरण्यदर्शनं न करोति।इदमग्नये इति पञ्चानां त्यागः। ततो दर्भमुष्टया समामिक्षादधिमधुघृतान्यादाय तैः कुशमुष्टिदर्भैः सर्वमग्निमीशानकोणादारभ्य प्रदक्षिणं परिश्रित्सहितं परिश्रिद्भ्यो बाह्यप्रदेशे च प्रोक्षति ये देवा इति द्वाभ्याम् ।

ततः सर्वमग्निं प्रदक्षिणं प्रोक्ष्य प्राणदा अपानदा इति मन्त्रेण तीर्थेनाग्नेः सकाशात्प्रत्यवरोहति । अतः पूर्वं विहितकार्यार्थं सर्वेषामारोहणं नमस्ते हरस इति मन्त्रेण । प्राणदा अपानदा इत्यनेन च सर्वेषां प्रत्यवरोहणम् ।

ततः प्रातःकालीनं प्रवर्ग्योपसदं कृत्वा यजमानायार्धव्रतं वा सर्वव्रतं वा दद्यात्। ततः सायंकालीनं प्रवर्ग्योपसदम्। ततो यथोक्तं प्रवर्ग्योत्सादनं कार्यम् । तत्रायं विशेषः । अग्नौ चयनस्योपरि पात्राणामुत्सादनं परिष्यन्दे वा । परिष्यन्दो द्वीपः सर्वत उदकवेष्टित उच्चः प्रदेशः ।

अग्नौ केचित्प्रथमं महावीरं स्वयमातृण्णासंलग्नं चतुःस्रक्तिरिति निदध्यात्। एवमजादानान्तं प्रवर्ग्योत्सादनम्। तत आज्यं संस्कृत्य शालाद्वार्ये परिस्तरणसमिदाधानपूर्वकमग्निस्तिग्मेनेत्येकयर्चा जुहोति। इदमग्नये० ।

ततः पूर्वसंस्कृतादेवाज्यात् षोडशगृहीतं गृहीत्वा तस्य षोडशगृहीतस्यार्द्धं य इमा विश्वा भुवनानीत्यत आरभ्य अयमुग्रो विहव्यो यथाऽसदित्येतत्पर्यन्तेनानुवाकशेषेण जुहोति । इदं विश्वकर्मण इति त्यागः। तथा द्वितीयमर्द्धं चक्षुषः पिता मनसेत्यारभ्य अपां गर्भ व्यदधात्पुरुत्रेत्यन्तेनानुवाकेन जुहोति । इदं विश्वकर्मणे० ।

ततोऽध्वर्युरार्द्रा औदुम्बरीः सर्वां रात्रिं घृतमध्ये धृतास्तिस्र आहवनीयेऽभ्यादधाति । उदेनमिति प्रथमाम् । इन्द्रेममिति द्वितीयाम् । यस्य कुर्म इति तृतीयाम् । ततोऽग्निप्रणयनम् ।

**याऽनूदेहि ब्रह्मन्नप्रतिरथं जपेति॥२२॥ त्रिरुक्तायामुद्यम्यो-दु त्वेति॥२३॥ आग्नीध्रदेशाद्दक्षिणं पृष्ठ्यासहितं पृश्न्य-श्मानमुपदधाति विमानऽ इति ॥२४॥ न नित्ये ॥२५॥ निधायैनमतिक्रामन्तीन्द्रं विश्वाऽ इति ॥ २६ ॥ ३ ॥**

---

तत्र विशेषः। शालाद्वार्ये इध्ममभ्यादधात्यध्वर्युः । उपयमनीरुपकल्पयति । देवदारुपरिध्यादीन् संभारानुपकल्पयति च । पञ्चगृहीतादिहोमान्तं कृतमेव । ततः प्रदीप्ते इध्मे इध्ममनुद्यम्यैवाध्वर्युः प्रेष्यति । उद्यच्छेध्ममुपयच्छोपयमनीरिति प्रतिप्रस्थातारं प्रति । अग्नये प्रह्रियमाणायानुब्रूहीति होतारम् । अग्नीदेकस्फ्ययाऽनूदेहीत्यग्नीधम् । ब्रह्मन्नप्रतिरथं जपेति ब्रह्माणम् ।

ततः प्रथमायामृचि त्रिः पठितायां सत्यां प्रतिप्रस्थाता उदु त्वा विश्वे देवा इत्यनेन मन्त्रेणाग्निमुद्यम्योपयमनीभिरधस्तादुपगृह्णाति । ततो ब्रह्मयजमानाध्वर्युप्रतिप्रस्थातृहोतारश्चित्यं गच्छन्ति। तत्राध्वर्युः सर्वेषां पुरस्तात् स्थितः पञ्च दिश इति पञ्चभिरग्निं प्रति याति। ब्रह्मा सर्वेषां दक्षिणतोऽवस्थितोऽनुगच्छन्नप्रतिरथं जपति। सर्वेषां मन्त्रपाठ इति सम्प्रदायः। अध्वर्योरेवेति हरिस्वामिनः।

"अध्वर्युः पुरस्ताद्यजूंषि जपति" इति श्रुतेः । तत आग्नीध्रदेशाद्दक्षिणं पृष्ठ्यासंलग्नं पृश्न्यश्मानमल्पतनुं पाषाणमुपदधाति विमान इति द्वाभ्याम्। न नित्ये । ततः पृश्न्यश्मानं तस्मात् स्थानादन्यत्र कचित्सुगुप्ते देशे निदधात्याग्नीध्रीये उपधानार्थम्। ततः सर्वे इन्द्रं विश्वा इति चतुर्भिरग्निं प्रति गच्छन्ति । अत्रापि सर्वेषां मन्त्र इति सम्प्रदायः । अध्वर्योरेव मन्त्र इति हरिस्वामिनः ।

इत्यष्टादशस्य तृतीया कण्डिका ॥ ३ ॥

---

ततः क्रमध्वमग्निनेति पञ्चभिः सर्वे तीर्थेनाग्निमारोहन्ति। अत्रापि मन्त्रः पूर्ववत्। ततः प्रतिप्रस्थाता स्वयमातृण्णाया उपर्यग्निं धृत्वा समीप उपविशति। ततोऽध्वर्युः उक्तवत्सापयसा होमार्थं प्रारब्धं करोति। अत्र नाग्न्यन्वाधानं दीक्षणीयायां तत्कार्यस्य कृतत्वात्। शाखाच्छेदः पवित्रबन्धनान्तः। एकस्याः कृष्णाया गोः शुक्लस्य वत्सस्यापाकरणम्। गोः शाखया स्पर्शनम्।

ततश्चतुरासनम्। स्वयमातृण्णां दक्षिणेनाग्निं स्थल एव ब्रह्मयजमा-

क्रमध्वमग्निनेति चित्यमारोहन्ति ॥ १ ॥ स्वयमातृण्णामध्यग्निं धारयञ्छुक्लवत्सायपयसाऽभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णामवसिञ्चन्नक्तोषासेति ॥ २ ॥ पैतुदारवाण्यत्रैके ॥३॥ तस्यामग्निं निदधाति सुपर्णोऽ-

---

नयोरुपवेशनम् । ब्रह्मणः तूष्णीं संस्कारः । ततः प्रणीताप्रणयनम् । इध्माग्नेः परिस्तरणम् । पात्रासादनम् । अग्निहोत्रहवणी वज्रः । शम्या दृषदुपलम् । पवित्रच्छेदनानि पवित्रे । स्थाली आज्यं च । वेदश्च । दोहनचतुष्टयम् । इध्मकाष्ठद्वयम् । बर्हिः । स्रुवः । जुहूः । उपभृत् । ध्रुवा दोहनम् । योक्त्रम् । यूनकुशाः । परिधयः । कर्कमते पूर्णपात्रम् । कर्मापवर्गे चेति ।

ततः प्रोक्षणीसंस्कारादि पात्रप्रोक्षणम् । असञ्चरे निधानम् । कुक्कुटाहननम् । आज्यानिर्वापो वेदवन्त्यः । उपसृष्टादिपरिक्षालनान्तम् । कृष्णाया गोरेकस्या एव दोहनम् । तत आज्याधिश्रयणम् । तस्यैव पर्यग्निकरणम् । दोहस्य श्रपणम् । ततः स्थलेगत्वा ऽर्थवद्वेदेरुत्तरपरिग्रहः । मानादिखननान्तस्याभावः । अनुमार्जनस्य च । प्रोक्षणयासादनम् । स्फ्योद्कृष्टहारः । न पाण्योरवनेजनम् । अपरेण प्रणीतानां स्फ्येध्मबर्हिषां सादनम् ।

स्रुग्जुहूदोहनोपभृद्ध्रुवाणां संमार्गः । संमार्जनप्रतिपत्तिः । पत्नीसन्नहनाद्यन्यतरावेक्षणान्तम् । ध्रुवायामेव चतुर्गृहीतग्रहणम् । इध्मप्रोक्षणम् । वेदिबर्हिषोश्च । मूलावसेकादिप्रस्तराभिन्यासान्ते विशेषः । नोल्मुकोद्दहनम् । जुह्वनन्तरं स्फयोपग्रहेण दोहनस्यासादनम् । उपभृतश्च । वेदोपग्रहेण ध्रुवायाः ।

ततो दोहमभिघार्योद्वास्य प्राणदानम् । स्थले आज्यस्थाल्या वेदोपग्रहेणासादनम् । स्फयोपग्रहेण दोहस्य सर्वालम्भः । आत्मालम्भ उदकालम्भश्च । तत आहवनीयोपवाजनम् । पूर्वाघारः । अग्निसम्मार्गः । अञ्जलिकरणम् । उत्तराघारः । सकृद्गृहीतेन तिष्ठत एवेन्द्राय स्वाहेति । ततो ध्रुवासमञ्जनम् । ततो ध्रुवायाश्चतुर्गृहीताभ्यामुपविष्टस्यैवाज्यभागौ अग्नये स्वाहा सोमाय स्वाहेत ।

ततो दोहनमुपस्तीर्य पयसो द्विरवदानम् । अभिघारः । ततो नक्तोषासेति द्वाभ्यां स्वयमातृण्णामवसिञ्चन् जुहोति । इदमग्नये । ततः स्रुङ्निधानम् । पवित्रप्रतिपत्तिः । अग्निसंमार्गः । दोहनं जुह्वा उपरि कृत्वा व्यूहनम् । अभ्युदय परिध्यञ्जनम् । आत्मालम्भः । उदकालम्भः । परिधिप्रक्षेपः । संस्रवाहुतिर्विश्वेभ्यो देवेभ्यः स्वाहेति । देशे निधानम् ।

**सीति वषट्कारेण ॥४॥ नित्ये च ॥५॥ समिदाधान ँ शमी-लीवैकङ्कत्यौदुम्बर्यस्ता ँ सवितुरिति प्रत्यृचमुत्तमा सकर्णका ॥६॥ कर्णकाऽभावे दधिद्रप्सात्का ॥७॥ स्रुवाहुती जुहोत्यग्ने तमद्येति च प्रत्यृचम् ॥ ८ ॥ स्रुवाहुतिं च सप्त त इति ॥९॥ तिष्ठन्त्समिधः सर्वत्र मध्ये ॥१०॥ अन्तेष्वाहुतीरुपविश्य ॥११॥ अत्र पञ्चम्याः सप्तर्चोप-**

---

घेद्यालम्भः । वेद्योक्तविमोकः । आवेदेः स्तरणम् । समिद्द्वयजुहोमा-भावः । तूष्णीं ध्रौवस्याहवनीये प्रक्षेपः । दिव्याय नभसे स्वाहेति बर्हि-र्होमः । प्रणीताविमोकः ।

पूर्णपात्रादिकर्मापवर्गान्तस्याभावः । पुरा यज्ञसमाप्तेरस्तगमनस्य निषेधात् । कर्कमते भवति । तत्र गार्हपत्योपस्थानाभाव एकाग्नित्वात् । ततो ब्रह्मण आहुतिसमिदाधानोपस्थानानामन्यतरत् । यदा त्वपूर्वा द-र्विहोमा इति पक्षस्तदाऽत्रापि यावदुक्तमेव कर्तव्यम् । न दर्शपूर्णमा सधर्माः ।

ततः स्वयमातृण्णायाः पैतुदारवैः परिधिभिः ध्रुवोऽसीति प्रतिमन्त्रं परिधिपरिधानम् । अग्नेः पुरीषमिति गुग्गुल्वादिनिवापः । ततः सुप-र्णोऽसि गरुत्मान् पृष्ठ इति द्वाभ्यां संभाराणामुपर्यग्निं निदधाति । यज-मानश्च सीदता वौ३षडिति वषट्कारेण । ततः सादनसूददोहसौ च करोति ।

ततोऽध्वर्युः ता ँ सवितुरिति शमीमयीं समिधमादधाति । विधेम त इति वैकङ्कतीं समिधं द्वितीयामादधाति । ततः प्रेद्धो अग्न इति तृतीया-मौदुम्बरीं कर्णवतीम् । कर्णको द्वितीयशाखोद्भेदः । कर्णवती विशा-खेत्यर्थः । दारुस्फोट इत्यपरे । कर्णकाभावे दधिद्रप्सात्का । दधिद्रप्सो घनं दधि । तत आज्यं स्रुवं स्रुचं च संस्कृत्याहवनीये स्रुवेण द्वे आज्या-हुती जुहोति । अग्ने तमद्येति प्रथमाम् । इदमग्नये । चित्तिं जुहोमीति द्वितीयाम् । इदं विश्वकर्मणे । ततः स्रुचा तृतीयां पूर्णाहुतिं सप्त त इति ।

अत्र यावत्स्रुवपूरणं स्रुवेणाज्यग्रहणम् । अनुक्तमपि सर्वत्र तिष्ठता समिदाधानमग्निमध्ये कर्तव्यम् । तत उपविश्य समित्पार्श्वेष्वाहुतयो होतव्याः । नात्रोपस्थानम् । संवत्सरोऽसि परिवत्सरोऽसि इति मन्त्रेणेच्छया-चित्यस्याग्नेरभिमर्शनम् । अस्मिन्मन्त्रे सुपर्णचिदसीत्यस्य स्थाने द्रोणाच-यादौ क्रियमाणे द्रोणचिदसीत्याद्यूहेन प्रयोगः कार्यः ।

**पश्चात् सर्वोपधानात् ॥१२॥ धिष्ण्यान्वा चित्योत्तमसंयोगात् ॥१३॥ अभिमृशेदिच्छन्त्संवत्सरोऽसीति ॥१४॥ एवं यथाचिति ॥१५॥ वैश्वानरमारुतान् निर्वपति यथोक्तम् ॥१६॥ वैश्वानरमधिश्रित्य दक्षिणोत्तरौ मारु-**

---

ततो वैश्वानरमारुतनिर्वापः । सम्प्रदायकर्कमते वैश्वानरो यजतिः । यावदुक्तश्च । ततो वैश्वानरमारुतनिर्वापः । हरिस्वामिमते याज्ञिकानां मते च जुहोतिः । मारुतास्तु सर्वेषां जुहोतय एव । तत्र नाग्न्यन्वाधानम् । चतुरासनम् । अतिप्रणीतं दक्षिणेन ब्रह्मयजमानयोरुपवेशनम् । प्रणीताप्रणयनम् । अतिप्रणीतस्यैव परिस्तरणम् । पात्रासादनम् । शूर्पाग्निहोत्रहवण्यौ । स्फ्यः कपालान्येकषष्टिः ६१ । शम्या कृष्णाजिनम् । पवित्रे पवित्रच्छेदनानि । धृष्टिः संयवनोदकम् । स्थाली आज्यं च । वेदश्च । इध्मद्वयम् । बर्हिः । स्रुवो जुहूः । उपभृद् ध्रुवा । न शृतावदानम् । अष्टौ पात्र्यः । योक्त्रम् । यूनकुशाः । परिधयः । पीठं कुठारस्तीर्णम् । कर्कमते पूर्णपात्रम् । नेतरेषाम् । ततः स्फ्योपहितपात्रीकरणादि हविरालम्भनान्तम् । वैश्वानराद्यष्टानां हविषां चतुर्मुष्टिकानां तूष्णीं ग्रहणम् । शेषाभिमर्शनादि फलीकरणान्तम् ।

कपालोपधाने मध्ये वैश्वानरस्य द्वादशकपालोपधानम् । ततो वैश्वानरस्य कपालानां दक्षिणतः प्रथमं मारुतस्य सप्त कपालानि । उत्तरतश्च द्वितीयमारुतस्य । ततो मारुतकपालचित्योः पश्चात् संकृष्टतरे तृतीयचतुर्थमारुतयोः कपालचिती । तयोः पश्चात् ततोऽपि संकृष्टतमे पञ्चमषष्ठयोर्मारुतयोः कपालचिती । ततः पश्चात् सप्तममारुतस्य कपालचितिः । सर्वेषां मारुतानां सप्त सप्त कपालान्युपधेयानि ।

पेषणादि संयवनान्तम् । वैश्वानरं मध्येऽधिश्रित्य तस्माद्दक्षिणोत्तरौ प्रथमद्वितीयौ मारुतावधिश्रयति । मारुतयोः पश्चात् संकृष्टतरौ तृतीयचतुर्थौ । तयोः पश्चात् संकृष्टतमौ पञ्चमषष्ठौ । पश्चात् सप्तमः । होमे आसादने वा अयमेव क्रमः प्रकारश्च । अधिश्रित्य पर्य्यग्निकरणं सहाज्यम् । अर्पणम् । आलम्भः । शृताभिवासनाद्यास्फ्योदकनिनयनान्तम् ।

ततः पुच्छादपरेणाहवनीयसहितं वा वेदिकल्पनादि । पुच्छादपरेण चेत्खननादि । आहवनीयमपरेण चेत् उत्तरपरिग्रहादि । तत्रानुमार्जनाभावः ।

प्रोक्षण्यासादनम् । स्फ्योदकप्रहारः । न पाण्योरवरेजनम् । अपरेण-

**तौ ॥१७॥ पश्चाच्च संकृष्टतरौ ॥१८॥ एवमपरौ ॥१९॥ पश्चादरण्येऽनूच्यम् ॥२०॥ होमासादनयोश्च॥२१॥ पुच्छादपरान् कुशानास्तीर्याहवनीयसहितान्वा तत्रासादनम् ॥ २२ ॥ वैश्वानरेण प्रचर्य सर्वहुतेन हस्तेन मारुतान्**

---

प्रणीतानां स्फ्येध्मबर्हिषां सादनम् । स्रुवजुहूपभृद्ध्रुवापुरोडाशपात्रीणां क्रमेण सम्मार्गः । सम्मार्जनापासनम् । पत्नीसन्नहनाद्यन्यतरावेक्षणान्तम् । ध्रुवायामेव चतुर्गृहीतग्रहणम् । इध्मवेदिबर्हिषां प्रोक्षणम् ।

मूलावसेकः । सन्नहनविस्रंसनादि । अर्थवद् भूमेः स्तरणम् । समित्प्रस्तरादानम् । आहवनीयकल्पनम् । नोल्मुकोदूहनम् । परिधिपरिधानम् । स्पृश्यानुपस्पृश्ययोराधानादि ध्रुवासादनान्तम् ।

ततः पुरोडाशविभस्मीकरणादि क्रमेणोद्वासनम् । प्रथमं मध्ये वैश्वानरमासाद्य दक्षिणोत्तरौ मारुतौ पश्चाच्च संकृष्टतरौ । एवमपरौ । पश्चादरण्येऽनूच्यमिति क्रमेणासादनम् । सर्वालम्भः । आत्मालम्भः । उदकालम्भः । एहि होतरिति प्रैषः ।

होतृषदनस्थापनम् । आहवनीयोपवाजनम् । पूर्वाघारः । अग्निसंमार्गः । निह्नवः । सकृद्गृहीतेन तिष्ठत एवोत्तराघार इन्द्राय स्वाहेति । ध्रुवासमञ्जनम् । न प्रयाजाः । उपचिष्ट एवाज्यभागौ । ध्रुवातश्चतुर्गृहीताभ्यां जुहोति अग्नये स्वाहा सोमाय स्वाहेति ।

ततोऽग्नये वैश्वानरायाऽनुब्रूहीत्युक्त्वा जुह्वामुपस्तीर्य सर्वं वैश्वानरमवदाय द्विरभिघार्योत्थायाऽतिक्रम्याश्राव्याग्निं वैश्वानरं यजेत्युक्त्वा वषट्कृते मध्ये जुहोति । इदमग्नये वैश्वानरायेति त्यागः ।

सगुण एवात्र वैश्वानरः सर्वत्र शाखान्तरेपूच्यते । निर्गुण इति तु केचित् । ततः स्रुचौ निधाय हस्तेनासादनवत् मारुतान् जुहोति । शुक्रज्योतिश्चेति प्रथमं वैश्वानराद्दक्षिणम् । मन्त्रान्ते स्वाहाकारेण होमः सर्वेषाम् । इदं शुक्रज्योतिषे चित्रज्योतिषे सत्यज्योतिषे ज्योतिष्मते शुक्राय ऋतपसे अत्यंहसे च । १ । ईदृङ् चेति द्वितीयं वैश्वानरस्योत्तरतः । इदमीदृशेऽन्यादृशे सदृशे प्रतिसदृशे मिताय संमिताय भरेभ्यश्च ॥ २ ॥

ऋतश्चेति दक्षिणस्य मारुतस्य पश्चात संकृष्टं तृतीयम् । इदमृताय सत्याय ध्रुवाय धरुणाय धर्त्रे विधर्त्रे विधारयाय च ॥ ३ ॥

ऋतजिच्चेति द्वितीयान्मारुतादपरं संकृष्टं चतुर्थं जुहोति । इदमृतजिते सत्यजिते सेनजिते सुषेणायान्तिमित्राय दूरे अमित्राय गणाय च।४।

**जुहोत्युपविश्य वैश्वानरं पृथुं कृत्वा शुक्रज्योतिरिति प्रतिमन्त्रम् ॥२३॥ विमुखेनारण्येऽनूच्यम् ॥२४॥ इन्द्रं दैवीरिति जपति ॥२५॥ इममूँ स्तनमिति वाचयति वा॥२६॥४॥**

ईदृक्षास इति तृतीयादपरं संकृष्टतरं जुहोति । इदमीदृक्षेभ्य एतादृक्षेभ्यः सदृक्षेभ्यः प्रतिसदृक्षेभ्यो मितेभ्यः संमितेभ्यः सभरोभ्यो मरुद्भ्यश्च ॥ ५ ॥

स्वतवांश्चेति षष्ठं चतुर्थस्य पश्चात् सकृष्टतरं जुहोति । इदं स्वतवसे प्रघासिने सान्तपनाय गृहमेधिने क्रीडिने शाकिने उज्जेषिणे च ॥ ६ ॥

तत उग्रश्च भीमश्चेति विमुखसंज्ञकेन सप्तमं मारुतमरण्येऽनूच्यसंज्ञं सवर्पा पश्चाज्जुहोति । इदमुग्राय भीमाय ध्वान्ताय धुनये सासहुषेऽभियुग्वने विक्षिपाय चेति त्यागः । अथवा वैश्वानरं पुरोडाशं संयवनाधिश्रयणानन्तरमेव प्रयनकालेऽतिपृथुं कृत्वा तादृशमेवेदानीं कृत्वा तदुपर्येनेनैव प्रकारेण मारुतानां होमः कर्तव्यः । ततः पवित्रप्रतिपत्तिः । अग्निसंमार्गः ।

व्यूहनम् । अभ्युदय जुह्वा परिध्यञ्जनम् । आत्मालम्भः । उदकालम्भः । परिधिप्रक्षेपः । संस्रवाहुतिर्विश्वेभ्यो देवेभ्यः स्वाहेति । धुरि निधानम् । वेद्यालम्भः । वेदयोक्त्रविमोकः । आवेदेः स्तरणम् । कर्कमते वाताय स्वाहेति समिष्टयजुर्होमो नान्येषाम् ।

दिव्याय नभसे स्वाहेति बर्हिर्होमः । प्राणीताविमोकः । राक्षसभागः । पूर्णपात्रादिकर्मापवर्गान्तस्याभावः । कर्कमते तु भवति । तत इन्द्रं दैवीरिति जपत्यध्वर्युः । इममूँ स्तनमूर्जस्वन्तमित्यत आरभ्य तमश्याम मधुमन्तं त ऊमिमित्यध्यायसमाप्त्यन्तं यजमानं वाचयति । अथवा अध्वर्युरेव जपति न वाचयति । इति वैश्वानरमारुताः । वैश्वानरस्य यजतिश्वपक्षे कर्कमते विशेषः । यन्मारुतानां वैश्वानरस्य च साधारणं कर्म तन्मन्त्रवत् ।

यथा शूर्पाग्निहवण्योरादानादि हविरासादनान्तम् । पवित्रच्छेदनादि पात्रप्रोक्षणान्तम् । कण्डनम् । पेषणम् । पर्यग्निकरणं च । मन्त्रवद् वैश्वानरस्य ग्रहणप्रोक्षणालम्भनाधिश्रयणप्रतपनादभिरभिमर्शनश्रपणाभिवासनप्राणदानासादनालम्भनानि । मारुतानां सर्वं तूष्णीम् । वैश्वानरस्य यावदुक्तः ।

तेन कुक्कुटाहननस्फ्योदकूप्रहाराघारादि सर्वं तूष्णीम् । एवं साधारणं सर्वं मन्त्रेण । वैश्वानरस्य यदसाधारणं तदपि मन्त्रेण । मारु-

वसोर्धारां जुहोत्यौदुम्बर्या पञ्चगृहीतं सन्ततं यजमानोऽरण्येऽनूच्येऽग्निप्राप्ते वाजश्च म म इत्यष्टानुवाकेन॥१॥ हुत्वा स्रुक्प्रासनम् ॥ २ ॥ अग्नये स्वाहेति षट् पार्थानि

तानां यदसाधारणं तत्तूष्णीमिति ॥४॥

इत्यष्टादशस्य चतुर्थी कण्डिका ॥ ४ ॥

---

अथ वसोर्धाराहोम उच्यते । तत्र यजमानः प्रभूतमाज्यं संस्कृत्य अर्थात्परिमाणं खादिरं स्रुवमर्थात् परिमाणां च महतीमौदुम्बरीं स्रुचं सम्मृज्याहवनीयं परिस्तीर्य समिधमाधाय च पञ्चगृहीतमाज्यं सन्ततमविच्छिन्नं वाजश्च म इत्यष्टभिरनुवाकैः वेट्स्वाहेत्यन्तैर्जुहोति। अग्निमध्ये घृते प्राप्ते सति वाजश्च म इति सूक्तस्यान्तः कार्यः ।

अत्र च चत्वारि शतान्येकाधिकानि होमकर्माणि। अत्रैतावन्तस्त्यागा यजमानेन पूर्वं कार्याः। अत्रेदमग्नय इत्येवं त्रीणि शतानि द्वासप्तत्यधिकानि त्यागाः प्रथमं कार्याः। पृथक्तन्त्रेण वा तत इदं वाजायेत्यादिनामभिस्त्रयोदश त्यागाः । ततः पुनरिदमग्नय इति षोडश । मन्त्रविभागप्रकारस्तु भाष्य एव विलोक्यः । त्यागाः पूर्वं कार्याः ।

ततो होमस्यारम्भः। यथापठितं स्वाहाकारो न प्रतिकल्पम् । विधानाभावात्। तथाच मानवे-"अन्ततः स्वाहाकारं कुर्यादि"ति। हुत्वाऽऽहवनीये स्रुक्प्रक्षेपः। पूर्वसंस्कृतादेवाज्यात् समित्पूर्वकं सकृद् गृहीतेन षट् पार्थानि जुहोति। अग्नये स्वाहा ॥ १ ॥ सोमाय स्वाहा ॥ २ ॥ सवित्रे स्वाहा ॥ ३ ॥ सारस्वत्यै स्वाहा ॥ ४ ॥ पूष्णे स्वाहा ॥ ५ ॥ बृहस्पतये स्वाहा ॥ ६ ॥

इदंशब्दयुक्ताः स्वाहाकारवर्जिताः एत एव त्यागाः ।

अथ वाजप्रसवीयहोमान् जुहोति । तच्च शाखाछेदनाद्युपगूहनान्तम् । सप्तानां षड्वर्गाणामपाकरणम् । चतुरासनम् । ब्रह्मयजमानयोरुपवेशनम् । ब्रह्मणस्तूष्णीमासनसंस्कारः । प्रणीताप्रणयनम् । आहवनीयस्यैव परिस्तरणम् ।

पात्रासादनम् । शूर्पाग्निहोत्रहवणि । स्फ्यः । शम्याद्दृषदुपलम् । पात्री । सर्वाणि ग्राम्यारण्यानि धान्यानि एकवर्जम्। पवित्रार्थः। आज्यस्थाली आज्यं च । उदकस्थाली । इध्मो वेदश्च । दोहनचतुष्टयानि सप्त । इध्मद्वयम् । बर्हिश्च । योक्त्रम् । यूनकुशाश्च । परिधयः । कर्कमते

जुहोति ॥३॥ वाजप्रसवीयानि वप्रावत्सम्भृत्य चमसव-
त्स्रुवेण वाजपेयिकानि वाजस्येममिति ॥४॥ आग्निकानि

पूर्णपात्रं कर्मापवर्गो चेति । नान्येषाम् ।

ततः स्फ्योपहितपात्रीकरणादि । चतुर्दश चतुर्मुष्टिकानि गृह्यन्ते । शे-षाभिमर्शनाद्यसंचरे निधानान्तम् । कुक्कुटाहननम् । औषधानां पाज्या-ज्योत्याभिमन्त्रणम् । आज्यनिर्वाप,नन्तरमुदकस्थाल्यामुदकस्य निर्वापः । वेदबन्धः । उपसृष्टादिपरिद्वात्मनाम्नाः कृत दोहाः । औषधानामवेक्षणम् । आज्योदकयोरधिश्रयणम् । तयोरेव पर्यग्निकरणम् । दोहानां श्रपणम् । स्थले वेदिं परिकल्प्योत्तरपरिग्रहः । खननानुमार्जनयोरभावः । प्रोक्ष-णयासादनम् । स्फ्योदकप्रहारः ।

न पाण्योरवनेजनम् । अपरेण प्रणीतानां स्फ्येध्मबर्हिषां सादनम् । स्रुवजुहूपभृद्ध्रुवाचमसस्रुवाणां संमार्गः । संमार्जन पासनम् । पत्नीस-न्नहनाद्यन्यतरेक्षणान्तम् । आज्योद्वासनानन्तरमुदकस्योद्वासनम् । पत्न्यवेक्षणवेद्योमासः इनोत्पवनावेक्षणानि । ध्रुवायामेव चतुर्गृहीतग्रह-णम् । इध्मवेदिबर्हिः प्रोक्षणादिपरिस्तरणान्तम् । समित्प्रस्तरादानम् । आहवनीयकल्पनम् । उलमकोदूहनाभावः । परिधिपरिधानम् । स्पृश्या-नुपस्पृश्ययोराधानम् । आहवनीयेक्षणम् । आवृत्य विधृत्योः स्तरणम् । प्रस्तरस्तरणम् । जुहूमासाद्यौदुम्बरस्य स्रुवस्यासादनम् ।

तत उपभृतः ध्रुवायाश्च । शालायां गत्वा चमसमुपनीय पयसां त-त्साभिघारः । दोहानामुद्वासनम् । औदुम्बरे पात्रे मध्ये पिष्टादिना तिर्यग-न्तरं कृत्वा एकस्मिन भागे प्रथमे उदकस्थाल्युदकासेकः । तत्रैव दोहा-नां सर्वधान्यानि च विभज्यैकत्र केवलानामावपनम् । अद्धानां दुग्ध-मध्ये आवपनम् । एकरात्रं वर्जयित्वा तस्य यावज्जीवमभोजनसंकल्पः पूर्ववद्यजमानेन कार्यः । उभयत्र प्राणदानम् ।

आज्यस्थाल्या आसादनम् । धान्यचमसस्य च । सर्वालम्भः । आत्मालम्भः । आहवनीयोपवाजनम् । पूर्वाघारः । अग्निसम्मार्गः । निह्नवः । सकृद्गृहीतेनेन्द्राय स्वाहेति तिष्ठत एवोत्तराघारः । ध्रुवास-मञ्जनम् । ध्रुवातश्चतुर्गृहीताभ्यामुपविष्टस्यैवाज्यभागौ । अग्नये स्वा-हा सोमाय स्वाहेति ।

ततः स्रुचौ निधाय स्फ्यं गृहीत्वा औदुम्बरेण स्रुवेण उदकदुग्धमि-श्रसर्वधान्यानां वाजपेयिकानां वाजप्रसवीयानां सप्तानां होमः । तत्र वाजस्येमं प्रसव इति प्रथमामाहुतिं जुहोति । इदं प्रजापतये ॥ १ ॥वाजस्ये-

च वाजस्य निवति ॥५॥ स्रुवं प्रास्य परिश्रित्स्पृक्कृष्णाजिनमास्तीर्य पुच्छादुत्तरत शेषेऽपः कृत्वा ॥६॥ आभिषेकसामर्थ्यात् ॥७॥ क्षीरोदके वा वाजपेयिकानीति श्रुतेः॥८॥ तत्राभिषिच्यते ब्रह्मवर्चसकामाश्चित्यन्वारब्धो देवस्य त्वेति ॥ ९ ॥ तिष्ठन्बुभूषुः ॥ १० ॥ भूत उपविष्टः ॥११॥ वस्तचर्मणि पुष्टिमिच्छुः ॥१२॥ उभयेच्छुरुभयोः ॥१३॥

---

मामिति द्वितीयाम । इदं प्रजापतये ॥ २॥ वाजस्य नु प्रसव आ बभूवेति तृतीयाम् । इदं प्रजापतये ॥ ३ ॥ सोमᳪ राजानमिति चतुर्थीम् । इदं सोमायाग्नय आदित्येभ्यो विष्णवे सूर्याय ब्रह्मणे बृहस्पतये च ॥ ४ ॥

अर्यमणं बृहस्पतिमिति पञ्चमीम् । इदमर्यम्णे बृहस्पतये इन्द्राय वाचे विष्णवे सरस्वत्यै सवित्रे वाजिने च ॥ ५ ॥ अग्ने अच्छेति षष्ठीम् । इदमग्नये ॥६॥ प्र नो यच्छत्विति सप्तमीम् । इदं पूष्णे बृहस्पतये वाचे देव्यै चेति ॥ ७ ॥ ततः केवलैः सप्तधान्यैराग्निकानि सप्त वाजप्रसवीयानि जुहोति । तत्र वाजस्य नु प्रसवे मातरमिति प्रथमाम् ॥ १ ॥ इदमदित्यै सवित्र च ॥१॥ विश्वे अद्येति द्वितीयाम । इदं विश्वेभ्यो देवेभ्यः ॥२॥

वाजो नः सप्तेति तृतीयाम् । इदं वाजाय ॥ ३ ॥ वाजो नोऽद्येति चतुर्थीम । इदं वाजाय ॥ ४ ॥ वाजः पुरस्तादिति पञ्चमीम् । इदं वाजाय ॥ ५ ॥ सं मा सृजामीति षष्ठीम् । इदं वाजाय ॥६॥ पयः पृथिव्यामिति सप्तमीम । इदमग्नय इति ॥ ७ ॥

ततः पवित्रप्रतिपत्तिः । अग्निसंमार्गः । व्यूहनम् । अभ्युक्ष्य परिध्यञ्जनम् । आत्मालम्भोदकालम्भौ । परिधिप्रक्षेपः । विश्वेभ्यो देवेभ्यः स्वाहेति संस्रवाहुतिः । धुरि निधानम् । वेद्यालम्भः । वेदयोक्त्रविमोकः । आवेदेः स्तरणम् । कर्कमते वाताय स्वाहेति समिष्टयजुर्होमः । अन्येषां तु ध्रौवस्य तूष्णीमाहवनीये प्रक्षेपः । दिव्याय नभसे स्वाहेति बर्हिर्होमः । प्रणीताविमोकः । पूर्णपात्रनिनयनादिकर्मापवर्गान्तस्याभावः । कर्कमते तु भवति ।

तत आहवनीये औदुम्बरस्रुवस्य प्रासनम् । ततः पुच्छस्योत्तरतः प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तृणाति । तत्र निष्कामस्य यजमानस्य चित्यन्वारब्धस्य तिष्ठतोऽभिषेकः । अध्वर्युश्चमसस्थेन सर्वौषधेनोदकमिश्रितेन देवस्य त्वेति मन्त्रेण चमसेनैव यजमानमभिषिञ्चति ।

ब्रह्मवर्चसकामस्य चित्यन्वारब्धस्याभिषेकः । भूतिं समृद्धिमिच्छत-

८९ जागदीशीव्यधिकरणम् । न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्यायविभागे २ ) रु० १—०

९० काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ४ ) रु० १—४

९१ वैयाकरणसिद्धान्तचन्द्रिका । श्रीरामाश्रमप्रणीता । श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता । पं० श्रीनवकिशोरशास्त्रिणा-निर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया लिङ्गानुशासनप्रक्रियया उणादिकोषेण च सहिता । ( व्या० वि० ११ ) संपूर्ण । रु० ६—०

९२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) । ( पुराणेतिहास वि० १ ) रु० ५—०

९३ आपस्तम्बधर्मसूत्रम् । श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम् । ( कर्मकाण्डविभागे ७ ) रु० ४—०

९४ अवच्छेदकत्वनिरुक्तिः । श्रीजगदीशतर्कालङ्कारकृता । न्यायाचार्य श्रीशिवदत्त-मिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहिता । ( न्याय वि० १३ ) रु० १—४

९५ (१) संस्कारदीपकः । म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीय विरचितः । गणेशपूजादिग्रहयागान्त-पूर्वाङ्ग निरूपणात्मकः प्रथमोभागः । ( कर्म० वि० ८ ) रु० २—०

९५ (२) संस्कारदीपकः । " " " विवाह-गर्भाधानादिकशाखान्तसंस्कारनिरूपणात्मकः द्वितीयोभागः । " रु० ३—०

९५ (३) संस्कारदीपकः । " तुलादानादि-मूलशान्त्यादि निरूपणात्मकः नाम परिशिष्टदीपकः तृतीयोभागः । " रु० ३—०

९६ वर्षकृत्यदीपकः । कालनिर्णयव्रतोद्यापन सहितः । म० म० पण्डित नित्यानन्द पन्त-पर्वतीय विरचितः । ( कर्म० वि ९ ) रु० ३—८

९७ श्रौतसूत्रम् । श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम । ( कर्म० वि० १० ) रु० २—०

९८ नलचम्पूः अथवा दमयन्तीकथा । महाकविश्रीत्रिविक्रमभट्टविरचिता । विषमपद-प्रकाशाख्यव्याख्यया सहिता । भावबोधिनी टिप्पणी सहिता । ( का० वि० १५ ) रु० १—४

९९ श्रीब्रह्मसूत्रम् । श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभा-ख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येन च सनाथीकृतम् । ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—०

१०० वाग्वल्लभः । श्रीमता दैवज्ञाग्रेसरेणागममर्मामिकेण कविपुङ्गवेन दुःखभञ्जनविदुषा विरचितः, तत्सुतेन बहुशास्त्रपारगेण कविचक्रवर्त्तिना महामहोपाध्यायेन देवीप्रसाद-पण्डितप्रवरेण कृतया वरवर्णिन्या टीकयोपस्कृतः । ( छन्दः शास्त्र वि० ४ ) रु० २—८

१०१ सिद्धान्तलक्षणम् । श्रीजगदीशतर्कालङ्कारकृतम् । न्यायाचार्य श्रीशिवदत्तमिश्र-विरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्याय विभागे ४ ) ) रु० १—८

१०२ वेदभाष्यभूमिकासंग्रहः । ( सायणाचार्यविरचितानां स्ववेदभाष्यभूमिकानां संग्रहः ) । [ वेद० वि० ५ ] रु० २—८

१०३ माधवीयधातुवृत्तिः । श्रीमत्सायणाचार्यविरचिता । ( व्या० वि० १२ ) रु० ५—०

१०४ बौधायनधर्मसूत्रम् । श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम् । [ कर्म० वि० ११ ] रु० ४—०

१०५ ताण्ड्यमहाब्राह्मणम् । सायणाचार्यविरचितभाष्यसहितम् । ( वेद वि० ६ ) रु० १२—०

१०६ न्यायमञ्जरी । जयन्तभट्टकृता । न्याय-व्याकरणाचार्येण पं० सूर्यनारायणशास्त्रिणा कृतया टिप्पण्या समेता । सम्पूर्ण । [ न्या० वि० १५ ] रु० ८—०

१०७ शारदातिलकम् । श्रीमद्राघवभट्टकृतपदार्थादर्शटीकासहितम् । ( तन्त्र० वि० १ ) रु० ५—०

१०८ मन्त्रार्थदीपिका । म० म० श्रीशत्रुघ्नविरचिता । सटीक । ( वेद० वि० ७ ) रु० २—०

१०९ शब्दशक्तिप्रकाशिका । श्रीमज्जगदीशतर्कालङ्कारविनिर्मिता । श्रीकृष्णकान्त-विद्यावागीशकृतया कृष्णकान्तीटीकया श्रीमद्रामभद्रसिद्धान्तवागीशविरचितया रामभद्रीटीकया च समलङ्कृता । पं० ढुण्ढिराजशास्त्रिकृतया छात्रोपयुक्तया विषमस्थलटिप्पण्या मूलकारिकाथन च सहिता । ( न्या वि० १६ ) रु० ४—०

११० योगदर्शनम् ( पातञ्जलदर्शनम् ) भगवत्पतञ्जलिरचितं, राघवानन्दसरस्वतीकृत-"पातञ्जलरहस्याख्य"टिप्पनीयुक्तया द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रविरचितया "तत्त्ववैशारद्या"व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित"योगवार्त्तिक"-समुद्भासितेन मधुपुरीयकापिलमठस्थस्वामिहरिहरानन्दारण्यकृतभास्वतीवृत्त्या सहितेन भगवच्छ्रीकृष्णद्वैपायनव्यासदेवोपज्ञ-"सांख्यप्रवचन" भाष्येणोद्द्योतितम्, प्रदेशविशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य्य-दार्शनिकसार्वभौम-साहित्यदर्शनाद्याचार्य-तर्करत्न-न्यायरत्न गोस्वामिदामोदरशास्त्रिणा विहितया टिप्पन्या "पातञ्जलप्रभा"नामिकया भूमिकया च संवलितम्। ( योग. वि. ३ ) ४—०

१११ सारस्वत व्याकरणम् । अनुभूतिस्वरूपाचार्य्यप्रणीतम् । श्रीचन्द्रकीर्त्तिसूरि प्रणीतचन्द्रकीर्त्तिनाम्न्या सुबोधिकया व्याख्यया, श्रीवासुदेवभट्टविरचितप्रसादाख्यटीकया च समन्वितम् । कवितार्किकोत्कल-यास्क श्रीनवकिशोरशास्त्रिणा निर्मितया मनोरमाविवृत्त्या च समुद्भासितम् । ( व्या. वि. १३ ) सम्पूर्णम् । रु० ३—०

११२ सामान्यनिरुक्ति-गादाधरी-गूढार्थतत्त्वालोकः । पं० कुलपति झोपाख्य-श्रीधर्मदत्त [ श्रीबच्चा झा ] शर्मविरचितः । ( न्या. वि. १७ ) रु० १—८

११३ जागदीशी पक्षता । गंगाख्यव्याख्या टिप्पणीसहिता । ( न्या. वि. १८ ) रु० १—८

११४ मनुस्मृतिः । कुल्लूकभट्टकृतमन्वर्थमुक्तावलीव्याख्यया काशीस्थगवर्नमेन्ट कालेज् व्याकरण-मीमांसा-धर्मशास्त्राध्यापकेन पं० नेने इत्युपाह्व गोपालशास्त्रिसंगृहीतपरिशिष्टटिप्पण्यादिभिरपि सहिता । सम्पूर्णम् । ( धर्म्मशास्त्र. वि. ३ ) रु० २—४

११५ व्युत्पत्तिवादः । श्रीमद्गदाधरभट्टाचार्यचक्रवर्तिविरचितः । वैयाकरणशिरोमणि शुक्ल श्रीवेणीमाधवशास्त्रिरचित [ शास्त्रार्थ-परीक्षोपयोगि ] शास्त्रार्थकला टीका-सहितः । ( न्या. वि. १९ ) रु० २—०

११६ भामती । ब्रह्मसूत्रशाङ्करभाष्यव्याख्या सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविरचिता । न्यायाचार्य पं० ढुण्ढिराजशास्त्रिणा सङ्कलितया विषमस्थलटिप्पण्या समलङ्कृता । सम्पूर्णः । ( वेदान्त वि० ११ ) रु० २—८

११७ जन्मपत्रदीपकः । सोदाहरण-सटिप्पण-हिन्दीटीकासहितः । ज्यौ० पं० श्रीविन्ध्येश्वरीप्रसादद्विवेदिना विरचितः । ( ज्यौ. वि. ५ ) रु० ०—८

११८ गोभिलगृह्यसूत्रम् । सटीकम् । ( कर्म्मकाण्ड वि० १२ ) रु० ३—०

११९ सिद्धान्तकौमुदी । व्याकरणाचार्य नेने पं० गोपालशास्त्रि विरचित सरला टिप्पण्या सहिता । "स्वलेखनप्रकार-पङ्क्तिलेखनप्रकाराख्य परिशिष्ट सहिता च । स्त्रीप्रत्ययान्तो भागः । ( व्या० वि० १४ ) रु० १—४

१२० कात्यायनशुल्बसूत्रम् । कर्कभाष्य-महिधरवृत्ति सहितम् । ( कर्म्म० वि० १४ ) रु० ०—६

१२१ व्यक्तिविवेकः । श्रीराजानकमहिमभट्टकृतः । श्रीराजानकरुय्यककृत व्याख्यया साहित्याचार्य पं० श्रीमधुसूदनशास्त्रिरचित मधुसूदनीविवृत्या च समुद्भासिता रु० ४—८

१२२ श्राद्धविवेकः । श्रीरुद्रधरकृतः । वेदाचार्य पं० अनन्तरामशास्त्रि कृत टिप्पणी सहितः । ( कर्म० वि० १३ ) रु० १—०

१२३ सांख्यतत्त्वकौमुदी । पण्डितराज श्रीराजेश्वरशास्त्रिद्राविड महोदयनामाज्ञया न्यायाचार्य श्रीहरिराम शुक्ल विरचितया "सुषमाख्य" कौमुदी व्याख्यया समलङ्कृता । ( सांख्य वि० २ ) रु० १—८

१२४ वाक्यपदीयम् । श्रीमर्तृहरिमहावैयाकरण विरचितम् । न्याय-व्याकरणाचार्य पं० श्री सूर्यनारायण शर्म शुक्लेन विरचितया भावप्रदीपाख्य व्याख्यया टिप्पणेन च सम्पादितम् । ( ब्रह्मकाण्डम् ) । ( व्या० वि० १५ ) रु० १—०

**एके दक्षिणतश्चित्यै वा ॥१४॥ प्रास्य चमसमिन्द्राय स्वाहेति षड् जुहोति प्रतिमन्त्रम् ॥१५॥ द्वादशगृहीतं विग्राहं जुहोत्यृताषाडिति प्रतिस्वाहाकारं राष्ट्रभृतो वाट्कारा-**

स्तिष्ठतोऽभिषेकः । ग्रामसमृद्धिकस्योपविष्टस्याभिषेकः । पुष्टिमिच्छितो बस्तचर्मणि महाजस्य चर्मण्युपविष्टस्याभिषेकः । एकेऽग्निचयनं दक्षिणेनाभिषेकं कुर्वन्ति । एके चयनरथोपरि । तत आहवनीये चमसप्रक्षेपः ।

ततः पूर्वसंस्कृतादेवाज्यात् समिवजं षट् पार्थानि सकृद्गृहीतेन जुहोति-इन्द्राय स्वाहा इदमिन्द्राय० १ घोषाय स्वा० इदं घोषाय २ श्लोकाय स्वा० इदं श्लोकाय ३ अꣳशाय स्वा० इदमꣳशाय ४ भगाय स्वा० इदं भगाय० ५ अर्यम्णे स्वा० इदमर्यम्णे ६ ।

ततोऽप्यवधानात्पूर्वसंस्कृतादेवाज्याद् द्वादशगृहीतमाज्यं गृहीत्वा तेनैवैकेन द्वादशगृहीतेन विभज्य विभज्य द्वादश राष्ट्रभृतो जुहोति । तत्र ऋताषाडृतधामाऽग्निर्गन्धर्वः स नऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् । इदमृतासाहे ऋतधाम्नेऽग्नये गन्धर्वाय० १ । तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा । इदमोषधिभ्योऽप्सरोभ्यो मुद्भ्यः । २ एवं गन्धर्वलिङ्गः पुंलिङ्गपदयुक्तो वाट्कारान्तः प्रथमः प्रथमो मन्त्रः । स्त्रीलिङ्गपदयुक्तः स्वाहाकारान्त उत्तर उत्तरः । सꣳहितो विश्वसामा सूर्यो गन्धर्वः स न० वाट् । इदꣳ० सꣳहिताय विश्वसाम्ने सूर्याय गन्धर्वाय ३ । तस्य मरीचमोऽप्सरसऽ आयुवो नाम ताभ्यः स्वाहा । इदं मरीचिभ्योऽप्सरोभ्य आयुभ्यः ॥ ४ ॥

सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः स न इदं ब्रह्म क्षत्रं० वाट् । इदं सुषुम्णाय सूर्यरश्मये चन्द्रमसे गन्धर्वाय० ५ तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वा० । इदं नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यः ।६। इषिरो विश्वव्यचा वातो गन्धर्वः स न० वाट् । इदमिषिराय विश्वव्यचसे वाताय गन्धर्वाय० ७ । तस्यापोऽ अप्सरसऽ ऊर्जो नाम ताभ्यः स्वा० इदमद्भ्योऽप्सरोभ्यऽ ऊर्ग्भ्यः ८ ।

भुज्युः सुपर्णो यज्ञो गन्धर्वः स न इदं० वाट् । इदं भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय० ९ । तस्य दक्षिणाऽ अप्सरसस्तावा नाम ताभ्यः स्वा० इदं दक्षिणाभ्योऽप्सरोभ्यस्तावाभ्यः ।१०। प्रजापतिर्विश्वकर्मा मनो गन्धर्वः स न० वाट् । इदं प्रजापतये विश्वकर्मणे मनसे गन्धर्वाय० ११ । तस्यऽ ऋक्सामान्यप्सरसऽ एष्टयो नाम ताभ्यः स्वा० इदमृक्सामेभ्योऽप्सरोभ्यऽ एष्टिभ्यः । १२ ।

न्तः पूर्वः पूर्वो मन्त्रः ॥१६॥ पञ्चगृहीतं च रथशिरस्यध्य-ध्याहवनीयं ध्रियमाणे पञ्चकृत्वः स नो भुवनस्येति ॥१७॥ प्रदक्षिणः रथनीडपरिहारः ॥१८॥ पुरुषाहुतिवद्वा ॥१९॥ अध्वर्युरभिमुखो रथशिरः ॥२०॥ ॥५॥

---

ततोऽभ्यवधानात् पूर्वसंस्कृतेनैवाज्येन पञ्चगृहीतं गृहीत्वाऽध्वर्यु-राहवनीयस्य पश्चात् प्राङ्मुख उपविष्ट एवाहवनीयस्योपरि समीप एव नीचैस्तरां प्रत्यङ्मुखे रथशिरसि प्रतिप्रस्थात्रादिभिर्ध्रियमाणे स नो भुवनस्येति मन्त्रेण पञ्चगृहीतस्य पञ्चमांशं जुहोति । इदं प्रजापतय इति त्यागः ।

ईषाग्रयोरुपरि यत्र युगबन्धनं क्रियते तद्रथस्य शिर इत्युच्यते । नीडं च रथस्योपस्थं धान्याद्यावपनस्थानं पाश्चात्यो भागः । अत्र च प्रतिहोमं प्रदक्षिणं नीडस्य परिहरणं क्रियते । रथशिरस्त्वग्न्युपरि धृत मेव नीडस्य प्रदक्षिणनयनेनैव तत्तद्दिङ्मुखं क्रियते । अतः प्रतिप्रस्था-त्रादयो रथनीडस्य प्राच्याः सकाशात्प्रदक्षिणतो नयनेनाग्नेरुपरि धृतमेव शिर उदङ्मुखं कुर्वन्ति ।

तत्राध्वर्युरुत्तरतो दक्षिणाभिमुख उपविष्टो जुहोति । ततो नीडं प्रद-क्षिणं पश्चान्नीत्वा शिरः प्राङ्मुखं कुर्वन्ति । अध्वर्युः पुरस्ताद्गत्वा प्रत्य-ङ्मुखो जुहोति । ततो नीडस्योत्तरतो नयनेन रथशिरो दक्षिणामुखं कुर्वन्ति ।

अध्वर्युः प्राच्याः सकाशादप्रदक्षिणं प्रत्यागत्य दक्षिणस्यामुदङ्मुख उपविष्टो रथशिरस उपरि जुहोति । ततः प्रदक्षिणं रथनीडं प्राच्यां नी-त्वा शिरः पुनः प्रत्यङ्मुखं कुर्वन्ति । अध्वर्युः पश्चादागत्य प्राङ्मुख उपविष्टः प्रत्यङ्मुखस्य रथशिरस उपरि जुहोति । सर्वहोमेषु स नो भुवनस्येत्ययमेव मन्त्रः । इदं प्रजापतय इति त्यागश्च ।

पुरुषाहुतिवद्वा रथनीडपरिहारः कर्तव्यः । तदा च प्रथमं पश्चा-त्प्राङ्मुखं शिरो धारयन्ति । ततो रथनीडस्योत्तरतो नयनेन दक्षिणामु-खम् । ततो नीडस्य प्राच्यां नयनेन प्रत्यङ्मुखम् । ततोऽप्रदक्षिणं प्रत्या-हृत्य दक्षिणतो नीडनयनेनोदङ्मुखम् । ततः प्रत्यागत्य पश्चान्नीडस्य नयनेन प्राङ्मुखं शिरो धारयन्तीति सर्वत्र क्षेमम् ।

अध्वर्युः सर्वत्र रथशिरसोऽभिमुख उपविष्टो जुहोति । पुरस्ताद्दक्षि-णतः पश्चादुत्तरतः पुनः पुरस्तात्प्रदक्षिणमेव गत्वा गत्वा ॥ ५ ॥

इत्यष्टादशस्य पञ्चमी कण्डिका ॥ ५ ॥

**वातहोमान् जुहोत्यञ्जलिनाऽऽहृत्य पुरस्ताद् बहिर्वेदेरधो दक्षिणस्यां दक्षिणतो दक्षिणाप्रष्टेः समुद्रोऽसीति प्रतिमन्त्रम् ॥ १ ॥ योक्त्रपरिहरणं च सर्वत्र ॥२॥ प्रगृह्याध्वर्योरावसथहरणम् ॥३॥ दक्षिणाकालेऽध्वर्यवे ददाति ॥४॥ अश्वांश्च ॥५॥ नव जुहोति यास्त इति प्रतिमन्त्रम् ॥६॥ जानन्ब्राह्मणोक्ता जुहुयाद्वा ॥७॥ हविर्धानप्र-**

---

ततो वातहोमान् जुहोति । ततो रथमग्नेरवतार्य वेदिमध्ये प्राङ्मुखं युगयोक्त्राद्युपेतमवस्थाप्याध्वर्युर्बहिर्वेदेः प्राच्या दिशः सकाशादञ्जलिना वायुमाहृत्य रथयुगस्य दक्षिणाया धुरोऽधः प्रदेशे धूःसमीप एव समुद्रोऽसि नभस्वानिति मन्त्रेण तमञ्जलिनैव जुहोति । इदं वायवे ।

ततो होमानन्तरं तस्य हुतस्य वायोरश्वस्थानीयस्य योक्त्रपरिहरणं योक्त्रेण योजनं च करोति । ततो बहिर्वेदेरुत्तरस्या दिशः सकाशादञ्जलिना वायुमाहृत्य युगस्योत्तराया धुरोऽधःप्रदेशे धूःसमीप एव मारुतोऽसीति मन्त्रेण तथैव वायुं जुहोति । इदं वायवे ।

ततः पूर्ववदेव योक्त्रपरिहरणम् । ततो बहिर्वेदेर्दक्षिणस्या अञ्जलिना वायुमाहृत्य प्रलम्बस्य युगस्य प्रान्ते वर्तमानाया धुरोऽधःप्रदेशे समीप एव दक्षिणाप्रष्टेः स्थाने अवस्यूरिति मन्त्रेणाञ्जलिना वायुं जुहोति । इदं वायवे ।

पूर्ववदेव तस्य योक्त्रस्य परिहरणम् । एवं त्रिभिर्वाजहोमैर्युक्तं रथं यजमानपुरुषा उत्थाप्याध्वर्योर्गृहे नयन्ति । दक्षिणाकाले तस्य रथस्याध्वर्यव दानं कर्तव्यम । प्रत्यक्षाणां त्रयाणामश्वानां च ।

ततस्तेनैवाज्येनाध्वर्युर्नवाहुतीराहवनीये जुहोति सकृत् सकृज्जुह्वां गृहीत्वा । यास्तेऽग्न इति प्रथमाम् । इदमग्नये १ । या व इति द्वितीयाम् । इदमग्नये २ । रुचं न इति तृतीयाम् । इदमग्नये ३ । तस्येति चतुर्थीम् । इदं वरुणाय ४ । स्वर्ण घर्म इति पञ्चमीम् ५ । स्वर्ण घर्म इति षष्ठीम् ६ । स्वर्ण शुक्र इति सप्तमीम् ७ । स्वर्ण ज्योतिरित्यष्टमीम् ८ । स्वर्ण सूर्य इति नवमीम् ९ । पञ्चानामपि इदमग्नय इति त्यागः ।

शाखान्तरविहितानामप्याहुतीनामस्मिन्नवसरे होमः कर्तव्यो यदि तासामाहुतीनां मन्त्रादिविधिर्ज्ञायते । अथ प्राकृतं हविर्धानप्रक्षालनादि वैश्वदेवमसीति मन्त्रेणाग्नीध्रस्य निष्पन्नस्यालम्भनान्तं निर्विशेषं करोति ।

ततो निवापपूर्वकं धिष्ण्यानां चयनम् । पूर्वमाग्नीध्रीयस्य पूर्वव-

**च्चालनाद्याग्नीध्रालम्भनात्कृत्वा धिष्ण्यांश्चिनोत्यष्टेष्ट-काँल्लोकम्पृणाभिश्चतुः स्रक्तींस्तिरश्चो न्युप्य न्युप्य ॥८॥ पृश्न्यश्मा चाग्नीध्रीये ॥९॥ सकृन्मन्त्रवचनम् ॥१०॥ होत्रीये त्रिरेकविंशत्या ॥११॥ ब्राह्मणाच्छंस्ये द्विरेकाद-**

त्सिकताप्रकिरणान्तं निवापं कृत्वा ततश्चयनम्। तत्र धिष्ण्येषु सर्वेषु नव पादभागलोका भवन्ति। पञ्चमीचितिवद्धिष्ण्यं प्राञ्चं त्रेधा विभज्य द्विप्रकाराणि इष्टकानां लक्षणानि भवन्ति। मध्यमे भागे ऋजूनि। दक्षिणोत्तरयोर्वक्राणि।

तत्राग्नीध्रीये मध्यमे भागेऽर्द्धपद्यां प्राग्लक्षणामुपधाय तस्याः पश्चादेकः पादभागः प्राग्लक्षण उपधीयते। दक्षिणभागे त्रयो वक्रालिखिताः पादभागाः। उत्तरभागे च। एवमुदङ्मुखोऽष्टाविष्टका उपधाय लोकम्पृणेति मन्त्रेण सकृत्सहैवाभिमन्त्रयते। ताऽ अस्येति सादयति च। पुरीषनिवापानन्तरं पृश्न्यश्मा चाग्नीध्रीये तूष्णीमुपधीयते।

ततः सदसि पूर्ववद्धोतृधिष्ण्यस्य सिकताप्रकिरणान्तं निवापं कृत्वा ततश्चयनम्। तत्राऽर्द्धपद्यास्थाने अष्टौ चतुर्भागान् प्राग्लक्षणानुपधाय तेषां पश्चादेक ऋजुलक्षणः पादभाग उपधेयः। तमभितो द्वौ वक्रालिखितौ पादभागौ। अंसयोर्द्वौ द्वौ वक्रालिखितौ प्रागायतावर्द्धपादभागौ। अंसापरलोकयोश्च बाह्यभागे एकैकोऽर्द्धपादभागः प्रागायतो वक्रालिखितः। मध्यभागे द्वौ द्वौ चतुर्भागौ वक्रालिखितौ। एवं होतृधिष्ण्ये एकविंशतीष्टकाः। प्रत्यङ्मुखस्य चयनम्। त्रिर्वारं लोकम्पृणेति मन्त्रः। द्विर्दशसु दशसु। तत एकस्यामिति। सूददोहाश्चैवम्।

ततो मैत्रावरुणधिष्ण्यस्य पूर्ववन्निवापं कृत्वा आग्नीध्रीयवदुदङ्मुखस्य चयनम्। एवं सर्वेषां निवापपूर्वकमेव चयनम्। ब्राह्मणाच्छंसिधिष्ण्ये अर्द्धपद्यायाः स्थाने चत्वारोऽर्द्धपादभागा ऋज्व्यालिखिताः प्रागायताः। शेषाः सप्त पादभागा आग्नीध्रीयवत्। एवमेकादशेष्टकं ब्राह्मणाच्छंसिधिष्ण्यम्। तत्र द्विर्लोकम्पृणेति मन्त्रः। पूर्वं दशसु। तत एकस्याम्।

उदङ्मुखश्चिनोति। ततः पोतृनेष्ट्रच्छावाकानां धिष्ण्यान्याग्नीध्रीयवदष्टेष्टकान्युदङ्मुख एव चिनोति। सकृन्मन्त्रवचनं च। ततो मार्जालीये निवापं कृत्वा मध्ये प्राचीमर्द्धपद्यामुपधाय तामभितो द्वे अर्द्धपद्ये प्राच्यौ वक्रालिखिते उपधेये। पश्चादाग्नीध्रीयवत् त्रयः पादभागाः। एवं षडिष्टका मार्जालीये दक्षिणामुखश्चिनोति।

अथवा प्रत्यङ्मुखः सर्वान् धिष्ण्यांश्चिनोतीति केचित्। ततः सर्वेषु

**शसु षण्मार्जालीये ॥१२॥ शेषा अष्टेष्टकाः ॥१३॥ याव-दिष्टकं परिश्रितः परिनिधाय ॥१४॥ पुरीषं च तूष्णीम्**

धिष्ण्येषु निवापक्रमेणेष्टकाम्भङ्ख्या परिश्रितः परितो निदधाति न नि-खनति । होत्रीये एकविंशतिः । ब्राह्मणाच्छंसिधिष्ण्ये एकादश । षण्मा-र्जालीये । इतरेषु धिष्ण्येष्वष्टावष्टौ ।

ततः सर्वेषु धिष्ण्येष्वाग्नीध्रीयादिक्रमेण तूष्णीं पुरीषनिवापः । आग्नीध्रीयेषु पुरीषनिवापानन्तरमेव पृश्न्यश्मन उपनिधानम् । ततः सदसः पश्चात् स्थित्वा धिष्ण्यसहितायाः पुरीषवत्या पञ्चम्या वार्त्रघ्-न्यायेत्युपस्थानम् । संवत्सरोऽसीत्याभिमर्शनमेके कुर्वन्ति । ततो ऽधिकेष्टका भित्त्वोत्करे प्रक्षिप्यन्ते ।

ततः सदोद्वारं पूर्वेण तिष्ठन् अनुदिशत्याहवनीय-बहिष्पवमानदेशे-ऽयत आरभ्याग्नीषोमीयस्य पशुपुरोडाशस्विष्टकृत्पर्यन्तं राजसूयिकाभि-षेचनीयसंज्ञकसोमवद् भवति । अभिषेचनीयवदित्येतद्देवसूहविषां वि-धानार्थमुच्यते । तेनाऽऽग्नीषोमीयपशुपुरोडाशानन्तरं तद्वदेवाष्टानां देव-सूहविषां निर्वापः । तानि लिख्यन्ते—

प्लाशुकानामेकधारं छेदनानन्तरं पुनः प्ररूढानां व्रीहीणां सवित्रे स-त्यप्रसवाय द्वादशकपालोऽष्टाकपालो वा पुरोडाशः प्रथमं हविर्भवति । आशूनां वापानन्तरं पक्षत्रयेण शीघ्रपचनशीलानां व्रीहीणामग्नये गृह-पतयेऽष्टाकपालः पुरोडाशो द्वितीयं हविर्भवति । सोमाय वनस्पतये श्यामाकानां चरुस्तृतीयम् । बृहस्पतये वाचे नीवाराणां स्वयंजातव्रीहीणां चरुस्तुरीयम् । इन्द्राय ज्येष्ठाय हायनानां स्वभावतो रक्तवर्णानां संवत्सर-पक्वशालीनां चरुः पञ्चमम् । रुद्राय पशुपतये गवेधुकानां चरुः षष्ठम् । नाम्बानामनुगुप्तानां स्वयमेवाकृष्टजातानां व्रीहीणां मित्राय सत्याय चरुः सप्तमम् । वरुणाय धर्मपतये यवानां चरुरष्टमं हविः । एवमेतान्यष्टौ हवींषि नानाबीजधर्मेण भवन्ति ।

तत्र पशुपुरोडाशे चतुरासनम् । प्रणीताप्रणयनम् । पात्रासादने शूर्पम् एकत्रिंशत् कपालानि सप्तविंशतिर्वा । चरुस्थाल्यः षट् । कृष्णा-जिनम् । उलूखलमुसलम् । पात्री । नानाविधानि धान्यानि । उपवेषः । बहु संयवनोदकम् । शृतावदानं मेक्षणं च । पात्र्यस्तिस्रः । एतावदा-साद्य स्पयोपहितपात्रीकरणादि । सर्वेषामुरु वातायेतीक्षणम् । अपद्रव्य-निरसनं तन्त्रेण । यच्छन्तामित्याभिमर्शनं भेदेन ।

ततोऽग्नीषोमाभ्यां जुष्टमिति पशुपुरोडाशार्थं प्राकृतं द्रव्यं गृहीत्वा

॥१५॥ अनुदेशाद्या पुरोडाशस्विष्टकृतोऽभिषेचनीयवत् ॥१६॥ अग्नियोजनम्प्रातरनुवाकमुपाकरिष्यन्परिधीनाल· म्भ्य यथापूर्वमग्निं युनज्मीति प्रत्यृचम् ॥१७॥ आग्निमा·

सवित्रे सत्यप्रसवाय जुष्टं गृह्णामि इति प्लाशुकानां ग्रहणम्।१। अग्नये· ये गृहपतये जुष्टं० आशूनाम् । २ ततः सोमाय वनस्पतये जुष्टम्० श्यामा· कानाम् ३ बृहस्पतये वाचे जुष्टम्०नीवाराणाम् ४ इन्द्राय ज्येष्ठाय जुष्टम्० हायनानाम् ५ रुद्राय पशुपतये जुष्टम्० गवेधुकानाम् ६ मित्राय सत्याय जुष्टम्०नाम्बानाम्, ७। वरुणाय धर्मपतये जुष्टम्० यवानां ग्रहणमिति ८ ।

शेषाभिमर्शनं भेदेन । प्राक्प्रोक्षणाद्यासादनान्तम्। पात्रान्तरात्प्रोक्षणी रग्निहोत्रहवण्यां कृत्वा ग्रहणम् । प्रोक्षणे–अग्नीषोमाभ्यां त्वा जुष्टं प्रो· क्षामि ।१। सवित्रे सत्यप्रसवाय त्वा जुष्टम् ।२। अग्नये गृहपतये त्वा जु· ष्टम् ।३। सोमाय वनस्पतये त्वा जुष्टम् ।४। बृहस्पतये वाचे त्वा जुष्टम् ।५। इन्द्राय जेष्ठाय त्वा जुष्टम् ।६। रुद्राय पशुपतये त्वा जुष्टम् ।७। मित्राय सत्याय त्वा जुष्टम् ।८। वरुणाय धर्मपतये त्वा जुष्टमिति ।९।

ततो ग्रहणक्रमेणैकैकस्य हविरावपनादि फलीकरणान्तम् । पर्यायेण कण्डनम्। तत्र हविरावपन–मुसलयोजन–कण्डन–हविरुद्वपन·निष्पवन· ·विवेकीकरण·पुनःकण्डन–पात्र्यामोप्याभिमन्त्रण·फलीकरणानि भेदेनात्र भवन्ति । उलूखलनिधान–मुसल·शूर्पयोरादानं सकृदेव । अन्त्यबीजावापे वाग्विसर्गः। अपहतमिति तुषनिरसनम । अन्त्यबीजस्य पुनः कण्डनान· न्तरं सर्वबीजानां तन्त्रेण ।

कपालोपधानेऽग्नीषोमीयस्यैकादश कपालानि । सवितुः सत्यप्रसव· स्य द्वादशाष्टौ वा । गृहपतेरष्टौ । प्राणदाने अग्नीषोमौ गच्छ, मित्रं सत्यं गच्छ । सवितारं गच्छ। सत्यप्रसवं गच्छ । अग्निं गृहपतिं गच्छ । सोमं वनस्पतिं गच्छ । बृहस्पतिं वाचं गच्छ । इन्द्रं ज्येष्ठं गच्छ । रुद्रं पशुपतिं गच्छ । वरुणं धर्मपतिं गच्छेति । ततोऽअनपूर्वकं कपालानामुद्वासनम् । हविषामासादनालम्भौ । एतर्ह० होतृमैत्रावरुणाविति तयोरामन्त्रणम् ।

ततः स्रुचौ गृहीत्वा यजप्रैषावाज्यभागौ ।पशुपुरोडाशयागे–जुह्वामे· वावदानं नोपभृति । अग्नीषोमाभ्यां पुरोडाशस्यानुब्रूहि, अग्नीषोमा· भ्यां पुरोडाशं प्रेष्येति प्रैषौ । इदमग्नीषोमाभ्याम् ।

तत उपांशु देवसूहविषां यागाः । सवित्रे सत्यप्रसवाय उपांशु अनुब्रू· हि इति उच्चैः । सवितारं सत्यप्रसवम उपांशु यजेत्युच्चैः । एवं सर्वेषु । इदं सवित्रे सत्यप्रसवाय १। अग्नये गृहपतये अनु० । अग्निं गृहपतिं यज ।

**एनस्तोत्रस्य पुरस्ताद्विमोचनं परिषिषन्त्योर्दिवो मूर्धेति**

इदमग्नये गृहपतये ।२। सोमाय वनस्पतयेऽनु० । सोमं वनस्पतिं यज । इदं सोमाय वनस्पतये ।३। बृहस्पतये वाचे ऽनु ब्रूहि । बृहस्पतिं वाचं यज । इदं बृहस्पतये वाचे ।४। इन्द्राय ज्येष्ठायानुब्रूहि । इन्द्रं ज्येष्ठं यज । इदमिन्द्राय ज्येष्ठाय ।५। रुद्राय पशुपतयेऽनु ब्रूहि । रुद्रं पशुपतिं यज । इदं रुद्राय पशुपतये ।६। मित्राय सत्यायानुब्रूहि । मित्रं सत्यं यज । इदं मित्राय सत्याय ।७। वरुणाय धर्मपतयेऽनुब्रूहि । वरुणं धर्मपतिं यज । इदं वरुणाय धर्मपतये ।८।

उत्तमेन हविषा प्रचर्याध्वर्युर्यजमानसमीपे गत्वा स्रुचौ सव्ये हस्ते कृत्वा दक्षिणेन हस्तेन यजमानस्य दक्षिणं बाहुं गृहीत्वा सविता त्वा सवानामिति कण्डिकाद्वयं जपति । अत्रेमं देवा इत्यस्मिन् मन्त्रे इममुष्य पुत्रममुष्यै पुत्रमित्यत्र इममित्यस्य स्थाने दीक्षितस्य नाम द्वितीयान्तमुच्चारणीयम् । अमुष्येत्यस्य स्थाने यजमानपितुर्नाम षष्ठ्यन्तमुच्चार्यम्। अमुष्या इत्यस्य स्थाने यजमानस्य मातुर्नाम षष्ठ्यन्तमुच्चारणीयम् ।

तच्चैवम्–इमममुकगोत्रं विष्णुदत्तशर्माणम् अमुकगोत्रस्यामुकशर्मणः पुत्रम् अमुकगोत्रायाः अमुकि देव्याः पुत्रम्। अस्यै विश एष व इत्यादि यथापठितमेवोच्चारणीयम्. नान्यथा इत्यादौ कस्यापि पदस्य नामान्तरोच्चारणम् । ततः प्रत्यागत्याग्नये स्विष्टकृतेऽनुब्रूहि इति प्रैषः । जुह्वामुपस्तारः ।

तत्रैव पुरोडाशादीनामुत्तरार्द्धादेकप्रत्यवायमवदानम् । द्विरभिघारः। आश्राव्याग्नये स्विष्टकृते प्रेष्येति प्रैषो माध्यन्दिनानाम् । काण्वानां च यजप्रैषः । सर्वेषां चतुर्द्धाकरणादि सर्वम् । पशुपुरोडाशस्य चतुर्धाकरणाभावः । अन्यत्सर्वं भवति ।

व्यूहने–अग्नीषोमयोः सवितुः सत्यप्रसवस्याग्नेर्गृहपतेः सोमस्य वनस्पतेर्बृहस्पतेर्वाच इन्द्रस्य ज्येष्ठस्य रुद्रस्य पशुपतेर्मित्रस्य सत्यस्य वरुणस्य धर्मपतेरग्नीषोमयोर्वनस्पतेरुज्जितिमिति जुह्वाः। अग्नीषोमौ सविता सत्यत्यप्रसवोऽग्निर्गृहपतिः सोमो वनस्पतिर्बृहस्पतिर्वागिन्द्रो ज्येष्ठो रुद्रः पशुपतिर्मित्रः सत्यो वरुणो धर्मपतिरग्नीषोमौ वनस्पतिस्तमपनुदन्त्वित्युपभृतो व्यूहने ।

अत्र देवसूहविषां व्यवधानात् प्रथमं पशुपुरोडाशदेवताया भेदेनोच्चारणम् । ततो देवसूहविर्देवतानाम् । ततः पशुदेवतावनस्पत्यारिति संप्रदायकारमतम् । अपरे तु पशुपुरोडाशे देवसूहविर्देवतानां व्यूहने

**प्रत्यृचम् ॥१८॥ प्रायणीयातिरात्रे युक्तोदयनीये विमोकमेके ॥१९॥ अध्वरसमिष्टयजुरन्तऽ इष्टो यज्ञ इति प्रत्यृचमपरे ॥२०॥ पशुपुरोडाशमन्वनूबन्ध्यस्य देविकाहवीꣳषि निर्वपति यजप्रैषाणि ॥२१॥ अनुमतिराकासिनीवालीकुहूभ्यश्चरवो धात्रे द्वादशकपालः सर्वहुतः ॥२२॥ हृदयशू-**

संकीर्तनं नेच्छन्ति । "न पशुतन्त्रे हवींषि चोद्यमानानि निगमान् लभन्ते" इति शाङ्खायनोक्तेः । तेनावाहनादिवदेषां व्यूहनस्याप्यभाव एव उक्तः । तेनाग्नीषोमयोर्वनस्पतेरुज्जितिमिति पशुदेवतावनस्पतिभ्यामेव व्यूहनं कर्तव्यं नान्यैः । प्रस्तरहोमे चैषां त्यागो न भवति । दक्षिणाग्नौ पिष्टलेपाहुतौ तु सर्वेभ्यस्त्यागाः ।

सुत्यायां विशेषः-प्रातरनुवाकोपाकरणात्प्रागग्नियोजनं कर्तव्यम् । तत्राध्वर्युर्मध्यमं परिधिमुपस्पृश्याग्निं युनज्मीति स्वरेण जपति । ततो दक्षिणं परिधिमुपस्पृश्येमौ ते पक्षाविति जपति । तत उत्तरं परिधिमालभ्येन्दुर्दक्ष इति जपति । सर्वत्र होमाद्यर्थं ननस्त इति मन्त्रेण सर्वेषामग्न्यारोहणम् । प्राणदा इत्यवरोहणम् । चमसाध्वर्यूणामप्ययं नियमः ।

दक्षिणाकाले प्राकृतदक्षिणादानानन्तरं सीरसम्बन्धिनां षडादिसंख्यानामनडुहां वातहोमसम्बन्धिनो रथस्यान्येषां प्रत्यक्षाणां त्रयाणामश्वानां चाध्वर्यवे दानाम् । तत्र प्रयोगः । अमुकस्य साग्निचित्यस्य क्रतोः समृद्ध्यर्थं सीरे युक्तान् षड् बलीवर्दान् वातहोमोपयुक्तं रथं चान्यांस्त्रीनश्वांश्चाध्वर्यो तुभ्यमहं संप्रदद इति । आग्निमारुतस्तोत्रस्य यज्ञायज्ञियस्योपाकरणात् प्रागग्निविमोचनं कर्तव्यम् ।

तत्राध्वर्युर्दक्षिणपश्चिमपरिध्योः सन्धिमालभ्य दिवो मूर्द्धेति जपति । उत्तरपश्चिमसन्धिमालभ्य विश्वस्य मूर्द्धन्निति जपति । अध्वरसमिष्टयजुषां नवानां होमान्ते इष्टो यज्ञ इति प्रत्यृचं द्वे अन्ये समिष्टयजुषी अग्निसम्बन्धिनी जुहोति । इष्टो यज्ञ इति प्रथमम् । इदं यज्ञाय । इष्टोऽग्निरिति द्वितीयम् । तत्रेदमग्नय इति । एवमेकादश समिष्टयजूꣳषि साग्निचित्ये सोमे भवन्ति । अन्यत्सर्वं प्रकृतिवत् । अवभृथानन्तरमुदयनीयेष्टिः ।

ततो नियमेन मैत्रावरुणी वशाऽनूबन्ध्या । तत्र विशेषः । पशुपुरोडाशनिर्वापानन्तरं पञ्च देविकाहवींषि भवन्ति । अनुमत्यै चरुः । राकायै चरुः । सिनीवाल्यै चरुः । धात्रे द्वादशकपालः पुरोडाशः सर्वहुतः । तत्र पात्रासादने त्रयोविंशतिः कपालानि । चतस्रः स्थाल्यः । शृतावदानमेक्षणं । द्वे पात्र्यौ इति विशेषः ।

लान्ते स्रुवाहुतीर्जुहोति यदाकूतादिति प्रत्यृचमष्टौ ॥२३॥ चित्रोऽसीति चित्यनाम कृत्वोपतिष्ठते येऽग्नय इति ॥२४॥ पयस्या मैत्रावरुणी तूपरामिथुनदक्षिणोदवसानीयाऽन्ते ॥२५॥ वर्षत्यसरणमतः ॥२६॥ पक्ष्यभोजनम् ॥२७॥

---

मित्रावरुणाभ्यामिति पशुपुरोडाशार्थं निर्वापानन्तरमनुमत्यै जुष्टम् । राकायै जुष्टम् । सिनीवाल्यै जुष्टम । कुह्वै जुष्टम् । धात्रे जुष्टम् । प्रोक्षणे त्वा जुष्टम् । पक्वबीजपक्षे कणान्ते विभज्यालम्भः । इदं मित्रावरुणयोर्धातुश्च । इदमनुमत्या राकायाः सिनीवाल्याः कुह्वाश्च ।

ईक्षणान्ते विभज्य पुनरालम्भः । संयवनान्ते पुरोडाशयोः । प्राणदाने मित्रावरुणौ गच्छ, अनुमतिं गच्छ राकां गच्छ, सिनीवालीं गच्छ, कुहूं गच्छ, धातारं गच्छेति । आज्यभागौ यजप्रैषौ । पशुपुरोडाशयागे जुह्वामेवावदानं नोपभृति । मित्रावरुणाभ्यां पुरोडाशस्यानुब्रूहि । अनुमतिं यज । इदमनुमत्य । राकायै अनुब्रूहि । राकां यज । इदं राकायै । सिनीवाल्यै अनुब्रूहि । सिनीवालीं यज । इदं सिनीवाल्य । कुह्वै अनुब्रूहि । कुहूं यज । इदं कुह्व । धात्रेऽनुब्रूहि । उपस्तीर्य सर्वमवदाय द्विरभिघार्याश्राव्य धातारं यज । इदं धात्रे ॥

ततोऽग्नये स्विष्टकृतेऽनुब्रूहि इति प्रैषः । जुह्वामुपस्तारः । पशुपुरोडाशादीनां पञ्चानामुत्तरार्द्धादेकप्रत्यवायमवदानम् । द्विरभिघारः । आश्राव्याग्नये स्विष्टकृते प्रेष्येति प्रैषो माध्यन्दिनानाम । काण्वानां यजप्रैषः । पशुपुरोडाशवर्जं सर्वेषां चतुर्द्धाकरणादि सर्वम् ।

ऊहने मित्रावरुणयोरनुमत्या राकायाः सिनीवाल्याः कुह्वा धातुर्मित्रावरुणयोर्वनस्पतेरुज्जितिम् । मित्रावरुणावनुमती राका सिनीवाली कुहूर्धाता मित्रावरुणौ वनस्पतिरस्तमपनुदन्त्विति ।

देविकाहविर्भिर्व्यवधानात् पशुपुरोडाशदेवताया भेदेनोच्चारणं प्रथमम । ततो देविकाहविषाम । ततोऽन्ते पशुदेवताया इति सम्प्रदायकारमते । अन्ये तु मित्रावरुणयोर्वनस्पतेरुज्जितिमिति पशुदेवतावनस्पतिसङ्कीर्त्तनमात्रेण ऊहनं कुर्वन्ति । तद् युक्तमिति देवसूहविःषूक्तम् । हृदयशूलसमिदाधानान्तेऽध्वर्युराज्यं संस्कृत्य यदाकूतादिति प्रत्यृचमष्टभिर्ऋग्भिरष्टौ स्रुवाहुतीर्जुहोति । इदमग्नय इत्यष्टानां त्यागः ।

ततः कर्मापवर्गान्ते चित्रोऽसीति चित्यस्य नाम कृत्वाऽध्वर्युरग्नेरुत्तरतोऽवस्थाय ये अग्नयः पाञ्चजन्या इत्यग्निचयनमुपतिष्ठते । इत्यनुबन्ध्या समाप्ता ॥

**सवर्णोपायी ॥२८॥ द्वितीये स्वामेव ॥२९॥ तृतीये न कांचन ॥३०॥ यावज्जीवं व्रतान्यविशेषात् ॥३१॥ सम्वत्सरं वा कालस्यानवस्थितत्वात् ॥३२॥ तद्व्रतश्रुतेश्च ॥३३॥**

---

ततः प्राजहित एव समारोपः। "उपस्थायाग्निᳬ समारोप्ये"त्येकवचनात् सर्वेषु अग्निषु समारोप इति चेत् आहवनीयं तृणप्रक्षेपादिनोपायेन ज्वलन्तमग्नेः स्तीर्णप्रदेशे आहवनीये समारोपः कार्य्यः।

ततो गार्हपत्यस्य मन्थनं स्थापनम्। तत उदवसानीयेष्टिः सकला। पञ्चकपालेनाग्नेयेन पुरोडाशेन। नात्र पशुवदाहुतिरिति पक्षः। "उपस्थायाग्निᳬ समारोप्य निर्मन्थ्येोदवसानीयया यजतेऽथ मैत्रावरुण्या पयस्यया यजत" इति श्रुतेः। अत्र हिरण्यं दक्षिणाऽनड्वान्वा अग्निष्टोमवत्।

ततो मैत्रावरुणी पयस्या सकला। पुनरुद्धरणादिकर्मापवर्गान्ते प्रधानयागे देवता उपांशु। अग्नावित्यनुवर्त्तमाने "मैत्रावरुणी चे"ति सूत्रणात्। "उपांशु भवती"ति श्रुतेश्च। अस्यां मित्रावरुणाभ्यामनुब्रू० मित्रावरुणौ यज। इदं मित्रावरुणाभ्याम्। तूपरमिथुनौ दक्षिणा। शृङ्गहीनौ मिथुनार्हौ गावौ। छागावित्यन्ये। तूपरत्वेन लिङ्गेन छागावित्यवगमात्।

तत्र प्रजापतेर्भागोऽस्यूर्जस्वानुदानव्यानौ मेपाहितूपरमिथुनमस्यूर्जं माय धेहि, इति विशेषः। अस्या मैत्रावरुण्याः पयस्यायाः समृद्ध्यर्थं तूपरमिथुनं दक्षिणां ब्रह्मणे होत्रे, इत्यादि। ब्राह्मणा इदं तूपरमिथुनं च प्रतिगृह्णीतेति वा। वाजिनयागादिर्दाक्षायणयज्ञवत्।

ततः सायमाहुतिः। आदीप्य प्रवेशनम्। आगामिनि यजनीयेऽहनि सौत्रामणीयज्ञोऽग्न्यङ्गभूतोऽवश्यं कर्तव्यः। आदीपनान्ते वर्षत्यसरणादिसङ्कल्पो यजमानस्य। ततोऽग्निचिद् देवे वर्षति सति इतस्ततो गमनं न कुर्यात्। पक्षिणो मांसं नाश्नीयात्। प्रथमेऽग्निचयने कृते शूद्रां भार्यां नोपेयात्। द्वितीये चयने कृते स्वसमानवर्णाया एव सम्भोगः कर्तव्यो न वर्णान्तरभार्य्यायाः। तृतीये चयने कृते स्वसमानवर्णामपि न गच्छेत्।

अथवा द्वितीये चयने कृते स्वामेव भार्यामुपेयात्। देवरः पुत्रकाम्ययेति प्राप्तमन्यभार्यागमनं न कुर्यात्। तृतीयचयनान्तरं ब्रह्मचार्येव भवेत्। यज्ञसमाप्तेरारभ्य संवत्सरपर्यन्तमेतानि व्रतानि कर्तव्यानि यावज्जीवं वा।

एकवारं साग्निचित्ये सोमे कृते पुनः सोमेज्यायां चयनस्याशक्तौ तिस्रोऽपि स्वयमातृण्णा व्याघारितायामुत्तरवेदौ तस्या उपरि उपदधा-

चित्याशक्तौ पुनः सोमेज्यायां स्वयमातृण्णाविश्वज्यो-
तिर्ऋतव्यानामन्यतमा ॥१४॥ पुनश्चितिम् ॥१५॥ अच-
यनं वा ॥१६॥ चित्यस्याहवनीयाभिसम्पत्तेश्चित्यस्याहव-
नीयाभिसम्पत्तेः ॥१७॥ ॥६॥

## एकोनविंशोऽध्यायः ।

ब्राह्मणयज्ञः सौत्रामण्यृद्धिकामस्य ॥१॥ अग्निचि-
त्सोमयाजिसोमातिपूतसोमवामिनाम् ॥२॥ राज्ञोपरुद्ध-
स्य च ॥३॥ अलम्पशोरपशोः ॥४॥ आदित्यश्चरुः ॥५॥
अन्ते च ॥६॥ आमिक्षायाः पूर्वः ॥७॥ धेनुर्दक्षिणा ॥८॥

---

ति । ततः स्वयमातृण्णादीनामपि चयनं न भवति । उत्तरवेदावेवाग्निं प्रणीय यागोऽनुष्ठेयः ।

शाङ्खायनसूत्रे "पूर्वकारिणश्छन्दोगा अध्वर्यवस्ते चेदनुपदिष्टं कुर्य्युः, एतावत्त्वेवेष्टीनाम्, आनुपूर्व्यं हविषां दैवतमुच्चैरुपांशुतायां चाध्वर्य्युमनु विदधीत, छन्दोगा अध्वर्यवश्च यदि असमच्छ्रुतिकल्पा स्तोत्रिये छन्दोगम- हर्योगे स्तोमविकारे पृष्ठे संस्थायांच । ते चेत्पादं वाऽद्धर्चं वा । विपर्यस्ये- दूनं वा रिक्तं वा कुर्दुनं तदाद्रियेगुर्विपर्यासमनु विदधीत उपदिष्टं कुर्युस्ततः कथमिति । इत्थम् । इष्टीनामेतावत्त्वे शंयवन्तेडान्तादिपरिमाणे हविषां यागक्रमे दैवतक्रमे शब्दे सगुणनिर्गुणे उच्चैरुपांशुतायां च मन्द्रादेः शब्द- स्य । यजेताध्वर्युमनुविदधीत तदुक्तं कुर्य्यात् । आत्मीयमुपदिष्टमुपेक्षेत यजमानः । आध्वर्यवत्वादस्ये"ति शाङ्खायन भाष्ये । मैत्रावरुण्याः पय- स्याया उपांशुत्वं देवसूहविषां क्रमश्चाध्वर्युसूत्रादवगन्तव्यः ॥ ६ ॥

इत्यष्टादशस्य षष्ठी कण्डिका ॥ ६ ॥

इति त्रिरग्निचित्सम्राट् स्थपति त्रिशत् क्रतुकृन्महायाज्ञिकप्रजापतिसुतेन महाया- ज्ञिकदेवेन कृतायां कात्यायनसूत्रपद्धतौ, अष्टादशोऽध्यायः ॥ १८ ॥

समाप्तश्चायं चयनयज्ञः ॥

अथ सौत्रामण्याः पद्धतिर्लिख्यते । त्रयाणां वर्णानामभ्यङ्गभूता सौत्रा- मणी भवति । ऋद्धिकामस्य ब्राह्मणस्यैव नेतरयोः । केवलाग्निरहितस्यापि सोमस्य सौत्रामणीयज्ञो भवतीति हरिस्वामी । तथा सोमातिपूतस्य सोमवामिनश्च प्रायश्चित्तार्था सौत्रामणी भवति । स्वराज्यात् च्यावितस्य

**वत्सः पूर्वे ॥९॥ मातोत्तरे ॥१०॥ अभ्यादधामीति प्रत्यृचमाहवनीये तिस्रः समिधोऽभ्यादधाति ॥११॥ सत्यवादी ॥१२॥ हुतोच्छिष्टभक्षः ॥१३॥ चतूरात्रम् ॥१४॥ अग्निहोत्रं जुहोति ॥१५॥ ऐन्द्रः पशुः ॥१६॥ चरूपस्वोर्विपर्यासमेके ॥१७॥ अन्तःपात्यस्थाने चर्माणि सुरासो·**

---

राज्ञः स्वराज्यप्राप्त्यर्थं च । पशुप्राप्तियोग्यस्य पशुरहितस्य तत्प्राप्त्यर्थं च यदा सा सौत्रामणी नित्या हविर्यज्ञमध्यपठिता क्रियते काम्या च, तदा मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं तस्या आदौ कर्त्तव्यम् ।

यदा च सोमाद्यङ्गभूता तदा श्राद्धाभावः । तत्र सौत्रामण्या इष्टिविकारित्वात् यस्यां कस्यांचिदमावास्यायां पौर्णमास्यां वाऽनुष्ठानमिति शावरभाष्ये । तत्र द्वादश्यां प्रातःशेषस्य स्थापनम् । ततः पूर्वाह्णे ऋत्विग्वरणम् । त्रयस्त्रिंशद्गवाश्वशिशुवडवधेनुदक्षिणया सौत्रामण्या अहं यक्ष्ये । तथा अग्न्यङ्गभूतया नित्यहविर्यज्ञरूपयेति यथायथं विशेषणं प्रयोज्यम् ।

एवं ब्रह्महोत्रध्वर्युमैत्रावरुणप्रतिप्रस्थात्रग्नीधः षड् ऋत्विजो वृत्वा यथाशक्ति तानर्चयेत् । ततस्त्रिपशुदेशस्य दक्षिणत ऐन्द्रः पशुः कर्तव्यो निरूढवत् । अत्र वा पशुपुरोडाशपशुषु देवतापदमुपांशु भवति । "ऐन्द्रः सौत्रामण्यां प्रथम" इति वचनात् । अत्र च उद्धरणादिकर्मापवर्गान्तं सर्वं निरूढवत् । नियोजनम् । इन्द्राय जुष्टं नियुनज्मीति । प्रोक्षणे त्वा जुष्टमिति । इन्द्राय छागस्य वपायै मेदसोऽनुब्रूहीति । वपां मेदः प्रेष्येति । अष्टाकपाल ऐन्द्रः पशुपुरोडाशः । इन्द्राय पुरोडाशस्यानु० । इन्द्राय पुरोडाशं प्रेष्येति च । इन्द्राय छागस्य हविषोऽनु० । इन्द्राय छागस्य हविः प्रेष्येति च । भागावदाननियमः । व्यूहने इन्द्रस्य वनस्पतेरुज्जितिम् । इन्द्रो वनस्पतिस्तमपनुदताम् । अन्ते शतसंकल्पाभावः । ततस्तस्य पशुदेशस्य पश्चाद्देशे आदित्येष्टिः । तत्रादित्येष्ट्यर्थमित्युद्धरणे । आदित्येष्ट्याऽहमिति ब्रह्मवरणे । पात्रासादने कपालस्थाने चरुस्थाली । विंशतिरिध्मकाष्ठानि । उपवेषपुरोडाशपात्र्योरभावः । शृतावदानस्थाने मेक्षणम् । दक्षिणार्थे वत्सः । ग्रहणे । अदित्यै जुष्टं० । प्रोक्षणे त्वा जुष्टं० । अदितिं गच्छेति प्राणदाने । सप्तदशेन वज्रेणेत्यववाधने । इदमग्नये सोमयादित्यै देवेभ्य इत्युत्तमप्रयाजे । प्रधानयागे देवतापदमुपांशु । 'उपांशु देवसुहविःष्विति वचनात् । अदित्यै अनु० । अदितिं यज । इदमदित्यै । स्विष्टकृदादिप्राशित्रादि सर्वम् । दक्षिणायां प्रजापतेरिति मन्त्रे वत्सोऽस्यूर्जमिति विशेषः । अस्या इष्टेः समृद्ध्यर्थं वत्सं दक्षिणां ब्रह्मण

**मविक्रयिणः सीसेन शष्पक्रयस्तोक्मानामूर्णाभिर्लाजानां सूत्रैः सुरासोमविक्रयिन् क्रय्यास्ते सुरासोमा ३ इत्यामन्त्र्यामन्त्र्य सर्वेषु ॥१८॥ क्लीबादेके ॥१९॥ दाक्षि-**

---

इत्यादि । व्यूहने अदित्या उज्जितिम् । अदितिस्तमपनुदत्विति । शेषं पौर्णमासवत् । ततोऽर्थात्परिमाणां पूर्वद्वारां शालां कृत्वा तन्मध्ये गार्हपत्यादीनां खरान् साधयित्वा पञ्चभूसंस्कारपूर्वकं त्रिपश्वर्थमित्याहवनीयदक्षिणाग्नी विरहरेत् ।

ततोऽग्न्यन्वाधानं त्रिषु । चतुरासनम् । ब्रह्मवरणम् । त्रिपशुनाऽहं यक्ष्य इति ब्रह्मणः समन्त्रकमासनं संस्कृत्योपवेशनम् । अत्र वा व्रतग्रहणम् । ततो यजमान आहवनीये तिस्रस्तिस्रः समिध आदधाति । अग्न्यादधामीति प्रथमाम् । यत्र ब्रह्म चेति द्वितीयाम् । यत्रेन्द्रश्चेति तृतीयाम् । ततो यजमानः समाप्तिपर्यन्तं सत्यमेव वदेत् ।

ततः सुराक्रयः । तत्रान्तःपात्यस्थाने आनडुहे चर्मणि सुरासोमविक्रयिणः सकाशात्सीसैर्विरूढानां व्रीहीणां शष्पसंज्ञानां क्रयणम् । विरूढानामेव यवानां तोक्मसंज्ञानामूर्णाभिः । सूत्रैर्लाजानां भृष्टव्रीहीणाम् । आनयतेन गुडादिद्रव्येण सर्जत्वगाद्यौषधजातस्य किण्वनग्नहुपर्यायस्य ।

तानि चौषधानि लिख्यन्ते —

"सर्जत्वक् त्रिफला चैव शुण्ठी चैव पुनर्नवा ।
चतुर्जातकसंयुक्ता पिप्पली गजपिप्पली ॥
वंशोऽवका बृहच्छत्रा चित्रकं चेन्द्रवारुणी ।
अश्वगन्धा समुत्पाट्य मूलान्येतानि निर्दिशेत् ॥
धान्यकं च यवानी च जीरकं कृष्णजीरकम् ।
द्वे हरिद्रे वचा चैव विरूढा व्रीहयो यवा" इति ॥

तत्र प्रथमं सुरासोमविक्रयिन् क्रय्यास्ते सुरासोमाः ३ इति सुरासोमविक्रयिणं प्रति प्रश्नः । क्रय्या इति विक्रयी प्रत्याह । सीसेन शष्पाणि क्रीणामि इत्युक्त्वा सीसं विक्रयिणे समर्प्य विरूढानां व्रीहीणां ग्रहणम् । चर्मणि निधानम् । ततः पुनरपि सुरासोमेत्यामन्त्र्य ऊर्णाभिस्तोक्मानि क्रीणामि इत्युक्त्वा सोमविक्रयिणे ऊर्णाः समर्प्य तोक्मानां विरूढानां यवानां ग्रहणम् । चर्मणि निधानम् । ततः पुनरप्येवमेव सुरासोमेत्यामन्त्र्य सूत्रैर्लाजान् क्रीणामीत्युक्त्वा सूत्राणि विक्रयिणे समर्प्य लाजानां भृष्टव्रीहीणां ग्रहणम् । ततश्चर्मणि निधानम् ।

**णेन हृत्वा नग्नहुचूर्णानि कृत्वा तांश्च व्रीहिश्यामाकौद-नयोः पृथगाचामौ निषिच्य चूर्णैः सꣳसृज्य निदधाति तन्मासरम् ॥२०॥ ओदनौ चूर्णमासरैः सꣳसृज्य स्वाद्वीं त्वाऽꣳशुना त इति ॥२१॥ त्रिरात्रं निदधाति ॥२२॥ एक-**

ततः पुनरपि सुरासोमेत्यामन्त्र्य तूष्णीमेव गुडं विक्रयिणे समर्प्य सर्जत्वगाद्योषधानि गृहीत्वा चर्मणि निदधाति। ततश्चर्म गृहीत्वा दक्षिणेन द्वारेण शालां प्रविशेत्। तूष्णीं सर्जत्वगादि नग्नहुसहं दृषदुपलाभ्यां चूर्णयेत्। शष्पतोक्मलाजांश्च पृथक्पृथक् चूर्णीकुर्यात्।

ततो द्विरासनम्। ब्रह्मयजमानयोः संवेशनम्। ब्रह्मणः समन्त्रक आसनसंस्कारः। न प्रणीताप्रणयनमदृष्टार्थत्वपक्षे। संयवनार्थत्वसर्वार्थत्वपक्षयोर्भवत्येव प्रणीताप्रणयनम्। अत्र वा व्रतग्रहणम्। पात्रासादनम्। शूर्पाग्निहोत्रहवणी, स्फ्यः, स्थालीद्वयम्। कृष्णाजिनम्। उलूखलमुसलम्। पात्रीधान्यम्। व्रीहयः। श्यामाकाश्च। पवित्रच्छेदनानि पवित्रे। बहुलंयवनोदकम्। आचामभाण्डे। महाकुम्भीति।

ततः स्फ्यापहितपात्रीकरणम्। शूर्पाग्निहोत्रहवण्योरादानादि। नानाबीजधर्मेणालम्भनान्तम्। व्रीहीन् श्यामाकांश्च मिश्रीकृत्य ग्रहणम्। चालनेन पृथक्कृत्य कण्डनादि कुर्यात्। सिद्धा एवात्र तण्डुला यदा गृह्यन्ते तदा व्रीहीन् श्यामकान् वा लघुवस्त्रान्तरितान् प्रतिमुष्टि गृहीत्वा पात्रान्तरे पृथक्स्थापयेत्।

तत्र त्रीणि चतुर्मुष्टिकानि गृह्यन्ते। अश्विभ्यां जुष्टं गृह्णामीति प्रथमम्। सरस्वत्यै जुष्टं गृह्णामीति द्वितीयम्। इन्द्राय सुत्राम्णे जुष्टं गृह्णामीति तृतीयम्। प्रतिमुष्टि श्यामाकानां व्रीहीणां चार्द्धाधिकया ग्रहणम्। शेषाभिमर्शनादि।

प्रोक्षणे—अश्विभ्यां त्वा जुष्टम्। सरस्वत्यै त्वा जुष्टम्। इन्द्राय सुत्राम्णे त्वा जुष्टमिति। अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे जुष्टं गृह्णामीति मन्त्रेणैकस्यैव चतुर्मुष्टिकस्य ग्रहणमिति सम्प्रदायः। ततो नानाबीजधर्मेण कण्डनम्। कुक्कुटाहननवर्जं फलीकरणान्तम्। स्वयमेवोपसर्जन्यधिश्रयणम्। तत उभयेषामोक्षणम्। स्थाल्योः सपवित्रयोः संवापः। त्रिः प्रक्षालनम्।

अग्नीदुपसर्जनीरुद्वास्यानीय निनयति। समाप ओषधीरिति प्रतिग्रहणं द्वयोः। मन्त्रेण गार्हपत्येऽधिश्रयणम्। पर्यग्निकरणम्। श्रपणं च। मा भेरित्यालम्भ उभयोः। तत आचामपात्रयोः पृथगाचामनिषेकः। चर्वोरु-

**स्याः पयसाऽपाकृतेनाश्विनेन परिपिञ्चति परीतो षि-ञ्चतेति ॥२३॥ शष्पचूर्णानि चावपति ॥२४॥ सारस्वतेन द्वयोः प्रातः ॥२५॥ तोक्मचूर्णानि च ॥२६॥ ऐन्द्रेणोत्तमे**

---

द्वासनम् । समन्त्रका एते सर्वे पदार्थाः । ततः शष्पतोक्मलाजचूर्णानां त्र-याणामपि क्रमेण तृतीयांशमादाय तस्य तृतीयांशस्यार्द्धमर्धमाचामयोः प्रक्षिपेत् ।

ततः किण्वचूर्णस्यार्द्धमर्द्धमादाय तस्यार्द्धमुभयोराचामयोः प्रक्षि-पेत् । ततः पुनरपि शष्पादीनां त्रयाणां क्रमेण द्वितीयांशमादाय तस्या-स्यर्द्धमर्द्धमुभयोरोदनयोः प्रक्षिपेत् । किण्वस्यावशिष्टमर्द्धं समग्रमप्या-दाय तस्यार्द्धमर्द्धमोदनयोः प्रक्षिपेत् । ततः कुम्भ्यामोदनयोः प्रक्षेप आचामयोश्च ।

ततः शालायां नैर्ऋत्यां दिशि गर्तं खात्वा स्वाद्वीं त्वाऽऽ०शुना त इति द्वाभ्यां मन्त्राभ्यां कुम्भीं गर्तमध्ये निदधाति । अथवा कुम्भीमतिरिक्ते महति पात्रान्तरे ओदनौ चूर्णैर्मासराभ्यां च सह स्वाद्वीं त्वाऽऽ०शुना त इति मन्त्राभ्यामेकत्र संसृज्य तत्संसृष्टं कुम्भ्यां प्रक्षिपेत् इति केचित् । एतदेव युक्तं "सुराँ सन्दधाती"ति श्रुतेः । चरकसौत्रामण्यां च 'परिस्रुतऽऽ० सन्दधाती'ति श्रुते 'रश्विभ्यां पच्यस्वेति सऽऽ०सृजती'ति सूत्रणाच्च । ततस्तूष्णीं गर्ते निधानान्तम् ।

त्रयाणां शष्पादिचूर्णानामवशिष्टानां त्रयाणामंशानां यत्नेन स्थापनं प्रतिदिनमेकैकस्य कुम्भ्यां प्रक्षेपणार्थम् । अपराह्णे प्रातरग्निहोत्रोच्छिष्ट-स्याशनं पत्नीयजमानयोः । केचिद्"धुनोच्छिष्टभक्ष" इत्येकवचनात्पत्न्या अनियतस्य हविष्यस्याशनमिच्छन्ति । रात्रौ स्वयमेवाग्निहोत्रहोमः । हुतशेषस्थापनम् ।

ततो हस्तेनैवाश्विभ्यामपाकरोमीति मन्त्रेणैकां गामपाकरोति । तत-स्तां दुग्ध्वा परीतो षिञ्चता सुतमिति मन्त्रेण तस्या दुग्धं कुम्भ्यां निषिञ्च-ति । ततः स्थापितस्य शष्पचूर्णतृतीयांशस्य कुम्भ्यां तूष्णीं प्रक्षेपः । अपिधानम् । यत्नेन रक्षणम् । समर्थश्चेत् हुतशेषस्य सायाशनं करोति । प्रातः स्वयमेवाग्निहोत्रहोमः । हुतशेषस्थापनम् । अपराह्णे तस्य हुतशेष-स्याशनं पत्नीयजमानयोः । रात्रौ स्वयमेवाग्निहोत्रहोमः । हुतशेषस्थापनम् ।

ततोऽध्वर्युः सरस्वत्या अपाकरोमीति मन्त्रेण हस्तेनैव गोद्वयम-पाकृत्य दुग्ध्वा परीतो षिञ्चतेति मन्त्रेण दुग्धद्वयमेकीकृत्य कुम्भ्यां मध्ये आसिञ्चति । ततस्तोक्मचूर्णानि कुम्भीमध्ये प्रक्षिपति । दम्पत्योर्हुतशेष-

तिसृणाम् ॥२७॥ लाजचूर्णानि च ॥२८॥१॥

वेदी मिमीते वरुणप्रघासवत् ॥१॥ प्रक्रमतृतीयेनावृ-सेनोत्तराम् सोमवत् ॥२॥ तयोः पश्चात्खरौ करोति ॥३॥

इध्मः प्रणयनीयाधानादि करोत्याऽऽज्यासादनात् स्फ्यादि

प्राशनमिच्छया। प्रातः स्वयमेवाग्निहोत्रं हुत्वा हुतशेषस्थापनम् । शाखा-च्छेदपवित्रबन्धनान्तं मन्त्रेण । उपवेषनिष्पत्तिश्च तूष्णीम् । तत आज्यं संस्कृत्य यूयाहुत्यादिस्वरुनिष्पत्त्यन्तम् । पालाशो यूपो वक्रः श्यरत्निश्च-तुररत्निर्वा । ततः षड्ढोत्तराहुतिः। कर्कमते तु खादिरो यूपः समः पञ्चार-त्निप्रभृति पञ्चदशारत्निपर्यन्तः । 'एकादशिनिधर्माः पशुगणेष्वि'ति वचनात् । नात्र षड्ढोताराहुतिः ।

ततः शालाद्वारमध्यात् त्रिषु प्रक्रमेष्वन्तःपात्ये शङ्कुनिखननम् । ततः षट्कासादनमध्वर्योः । पञ्चकासादनं प्रतिप्रस्थातुः । ब्रह्मयजमानयो-र्दक्षिणवेदिदिशं दक्षिणत उपवेशनम् । समन्त्रक आसनसंस्कारः । यज-मान वाचं यच्छेति प्रैषः । तत उभयोः पात्रासादनम् । पवित्रच्छेदनादि त्रिकप्रोक्षणान्तमध्वर्योः । द्विकप्रोक्षणान्तं प्रतिप्रस्थातुः समन्त्रकमेव । ततोऽध्वर्योः आग्निकत्रिपदप्रक्रमपरिमितक्षेत्रतृतीयांशकरणीप्रमाणेन का-ष्ठेन सोमवदुत्तरस्या वेदेर्मानम् । प्रतिप्रस्थातुश्च वरुणप्रघासवत् प्रादे-शमात्रमुत्तरस्या वेदेरन्तरालं पृथमात्रं वा त्यक्त्वा पौर्णमासवद् दक्षिण-स्या वेदेर्मानम् ।

इत्येकोनविंशस्य प्रथमा कण्डिका ॥ १ ॥

प्रक्रमतृतीयकरणी च शुल्बकारेणोक्ता "प्रमाणं तिर्यग्द्विकरण्यायाम-स्तस्याक्ष्णया रज्जुस्त्रिकरणी"ति । तथा "प्रमाणविभागस्तु नवधा, करणीतृतीयं नवभागो, "नव भागास्त्रयस्तृतीयकरणी, सौत्राण्यां प्र-क्रमार्थे"ति च । तथा च परिशिष्टश्लोकः—

"पदस्याक्ष्णा तिरश्चो च तयोरक्ष्णा च या भवेत् ।
सौत्रामण्यां हि मातव्या वेदिः सोमवदुत्तरे"ति ॥

अतः समस्थितोर्ध्वबाहुयजमानप्रमाणां रज्जुं मित्वा तस्या दशमो-भागः पदं, तत्प्रमाणं समचतुरस्रं कृत्वा तस्याक्ष्णयारज्जुं पार्श्वमानीं कृत्वा पदमात्रीमेव तिर्यङ्मानीं कुर्यात् । तस्य दीर्घचतुरस्रस्याक्ष्णया रज्जुरत्र प्रक्रमकरणी ।

करोति दक्षिणस्यां वरुणप्रघासवत् ॥४॥ सौरमेवास्याम् ॥५॥ श्वभ्रं खात्वा खरमपरेण चर्मावधाय परिस्रुतमासिच्य कारोतरमवदधाति कारोतराद्वा चर्मणि मन्त्रलिङ्गात्पूतामादत्ते सिञ्चन्ति परि षिञ्चन्तीति ॥६॥ सते

---

एवं प्रक्रमप्रमाणं निष्पाद्य ततः—

"पञ्चदशमथैकविंशत्रिकमपरं पञ्चत्रिकं चापि ।
द्वादशसु पाश उत्तमः सोमे रज्जुप्रमाणमेतत्" ॥

इत्युपायेनोत्तरस्या वेदेः साधनं सोमवदेव युगमात्री यजमानदशपदप्रमाणा वा उत्तरवेदिश्च साधनीया । तत एवंविधप्रक्रमतृतीयपरिमाणं काष्ठं गृहीत्वा अन्तःपात्याद् दक्षिणस्यां पञ्चदशसु प्रक्रमेषु शङ्कुं निखनेत् । ततोऽन्तःपात्यादुत्तरस्यां पञ्चदशसु प्रक्रमेषु शङ्कुं निखनेत् ।

ततोऽन्तःपात्यात्प्राच्यां षट्त्रिंशत्प्रक्रमेषु यूपावटीयं शङ्कुं निखनेत् । तस्माद्दक्षिणस्यां द्वादशसु प्रक्रमेषु उत्तरस्यां च द्वादशस्वेव शङ्कुं निखनेत । ततो दक्षिणोत्तरपार्श्वयोर्लेखां कुर्यात् । ततो वेद्योः परिसमूहनमुत्तरस्यामुत्करकरणं चाग्नीध्रः कुर्यात् । दक्षिणवेदिश्चोत्करकरणान्तैव तिष्ठति । ततोऽध्वर्युरुत्तरस्यां वेदौ पश्चाद्भागे पयोग्रहाणामासादनार्थं वसाग्रहाणां चासादनार्थं खरं करोति ।

तत्रोल्लिख्याभ्युक्ष्य सिकता उपकिरति । अरत्निमात्रं समचतुरस्रं खरं करोति । ततोऽध्वर्युरेव दक्षिणस्यामपि वेदौ पश्चाद्भागे एवमेव सुराग्रहासादनार्थं खरं समचतुरस्रं करोति । तत उत्तरस्यां पृष्ठ्यामायम्य स्फ्यादानाद्युत्तरवेदिच्छादनान्तमध्वर्युः करोति ।

अपराह्णे पत्नीयजमानौ हुतशेषमश्नीतः । रात्रौ स्वयमेवाग्निहोत्रहोमः । हुतशेषस्थापनं न भवति । तत इन्द्राय सुत्राम्णे अपाकरोमीति मन्त्रेण तिसृणां गवां हस्तेनवापाकरणम् । दुग्ध्वा दुग्धत्रयमेकीकृत्य परीतो षिञ्चतेति मन्त्रेण कुम्भीमध्ये आसिञ्चेत् । ततस्तूष्णीमेव लाजचूर्णतृतीयांशस्य कुम्भीमध्ये प्रक्षेपः । अपिधाय यत्नेन रक्षणम् । अथ रात्रावशनं न भवति "तस्मादुपवसथे नाश्नीयादि"ति प्रतिषेधात् । ततस्त्रयाणां पयोग्रहाणामर्थं ! .णां षड्वर्गाणामपाकरणम् । अश्विभ्यां भागम्, सरस्वत्यै भागम्, इन्द्राय सुत्राम्णे भागमिनि गोरुपस्पर्शनमत्र विशेषः ।

एके त्रयाणामप्यर्थं एकस्यैव षड्वर्गस्यापाकरणं कुर्वन्ति । अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे भागमित्येकमेव दोहं कुर्वन्ति । शा·

**पुनाति गोऽश्ववालधानेन पुनाति ते परिस्रुतमिति ॥७॥ वायोः पूत इति सोमातिपूतस्य ॥८॥ प्राङिति तद्धामिनः ॥९॥ उत्तरस्यां पयो वैतसाऽजाविलोमपवित्रेण ब्रह्म-क्षत्रमिति ॥१०॥ ब्रह्मानुमन्त्रणमध्वर्योऽ अद्भिरिति ॥११॥**

---

खोपगूहनम् । प्रातः स्वयमेवाग्निहोत्रहोमः । प्रतिप्रस्थाता दक्षिणस्यां वेदौ स्फ्यादानादिसंमर्शनान्तं करोति । तत्र पूर्वपरिग्रहे लेखाहरणे च स्वयमेव प्रेष्यति प्रकृतिवत् । तत उभयोरिध्माधानाद्युपयमन्युपनिव-पनान्तं वरुणप्रघासवत् । अग्निभ्यां प्रह्रियमाणाभ्यामिति प्रैषः ।

ततः प्रणीतादि । अध्वर्योर्मध्यमाहवनीयवर्ज्जं परिस्तरणम् । प्रतिस्था-तुः स्वाग्नेः । पात्रासादनम् । अग्निहोत्रहवणी वज्रः, पवित्राणि पूर्ववेदि-नासादितानि प्रोक्षितानि सन्त्येव । शेषमासाद्यते–शम्यादृषदुपलम् । स्थाली आज्यं च । वेदश्च । दोहनचतुष्टयानि त्रीणि, दक्षिणार्थास्त्रयस्त्रि-शद्गावः । अनुशिशुवडवधेनुश्च । अभ्रिः, इध्मचतुष्टयम् । विंशतिकाष्ठक इध्मः । त्रीणि शूलानि, तिस्रा वपाश्रपण्यः । बर्हिश्चतुष्टयम् । स्रुवपञ्चकं, पान्नेजनीसप्तकम् । यूपाष्टकम् । उखापञ्चके तिस्र उखाः । त्रिगुण-रशने द्वे । द्विगुणरशनास्तिस्रः । मन्थनचतुष्टयम् । प्राशित्रहरणे । इडा पात्री यूनकुशाः । पीठं कुशास्तीर्णम् । षडवत्तम् । अन्तर्धानकटः । पूर्णपात्रम् । कर्मापवर्गा चेति । हिरण्यशकलानि चतुर्दश ।

गोचर्म । कारोतरं, पलाशपात्रम्, गोऽश्ववालपवित्रे, अजाविलो-मपवित्रं, वैतसं पात्रं, पयोग्रहपात्राणि, गोधूमकुवलादिचूर्णानि, सुराग्रहस्थाल्यः, वृकादिलोमानि, श्येनपत्रे । पालाशानि पत्राणि, शता-तृण्णा कुम्भी, हिरण्यम्, आसन्दी, कृष्णाजिनं, रुक्मौ । सर्वसुरभ्यु-न्मर्दनं, कृष्णाजिनम् ।

प्रतिप्रस्थातुः पात्रासादनम्–अभ्रिः, इध्माबर्हिः, यूनकुशाः; पालाशाः परिधयः । प्रोक्षणीरादायोभयोः समन्त्रकं पात्रप्रोक्षणम् । अलङ्कारे निधा-नम् । कुक्कुटाहननम् । आज्यनिर्वापो वेदबन्धः । वेदबन्धानन्तरमुप-सृष्टादिपरिक्षालनान्तास्त्रयो दोहाः । ग्रहाणामर्थे एक एव दोह इति सम्प्रदायः ।

आज्याधिश्रयणम् । तस्यैव पर्यग्निकरणम् । उदकालम्भः । दोहानां श्रपणम् । तत उभयोर्वेदिखननम् ,। ब्रह्मन्नुत्तरौ परिग्रहौ परिग्रहीष्याव इति प्रैषः । बृहस्पतौ परिगृह्णीतम् इति वरुणप्रघासवदुभयोरुत्तरपरि-ग्रहः । अन्तःपात्यसंलग्नं वेद्यनुमार्जनम् । अग्नीदुभयोः प्रोक्षणीद्धार-

पयोग्रहान् गृह्णाति कुविदङ्गेति ॥१२॥ पृथगुपायामयोनी ॥१३॥खरयोः सादनम् ॥१४॥ आश्विनमाश्वत्थेन ॥१५॥ गोधूमकुवलचूर्णानि चावपति तेजोऽसीति ॥१६॥ सारस्वतमौदुम्बरेण ॥१७॥ उपवाकबदरचूर्णानि च वीर्यम-

---

यति । प्रतिप्रस्थाता स्वं स्फयमुद्यम्याध्वर्युं प्रेष्यति । प्रोक्षणीरासादयेध्मौ बर्हिषी उपसादय स्रुचः सम्मृड्ढि पत्नीᳬ संनह्याज्येनोदेहीति प्रैषः ।

अध्वर्योरेव स्फयोदकप्रहारः । पाण्योरवनेजनमुभयोः । अग्नीध उभयत्र प्रोक्षण्योः सादनम् । अध्वर्योः स्फयासादनं प्रतिप्रस्थातुश्च । अग्नीधइध्माबर्हिषोः सादनमुभयत्र । ततः पशुवत्पात्रसम्मार्गाद्याज्यग्रहणान्तम् । ततो ब्रह्मन्निध्मौ प्रोक्षिष्याव इति प्रैषः । प्रोक्षतमिति प्रैषः । इध्मप्रोक्षणमुभयोः । वेदिप्रोक्षणमुभयोः । बर्हिःप्रतिग्रहणमुभयोः । ब्रह्मन्बर्हिषी प्रोक्षिष्याव इति प्रैषः । प्रोक्षतमिति वरुणप्रघासवद् ब्रह्मप्रत्युक्तिः । बर्हिःप्रोक्षणमुभयोः । प्रतिस्थातुर्बर्हिरसि जुष्टमिति विशेषः । प्रतिस्थातुर्न प्रस्तरग्रहणम् । उभयोर्वेद्योः स्तरणम् । अध्वर्योः प्लक्षशाखास्तरणम् । अध्वर्योः समित्प्रस्तरादानादि । उभयोराहवनीयकल्पनम् ।

अध्वर्योरुल्मुकोदूहनं न प्रतिप्रस्थातुः । परिधिपरिधानाद्याहवनीयेक्षणान्तमुभयोः । प्रतिप्रस्थातुर्न विधृतिस्तरणादि । अध्वर्योर्विधृत्योः स्तरणादि ध्रुवासादनान्तं पशुवत् । ततो दोहेषु तप्ताभिघारः । उद्वासनम् । प्राणदानम् । अश्विनौ गच्छ, सरस्वतीं गच्छ, इन्द्रं सुत्रामाणं गच्छेति ।

ततः सुरायामपि प्राणदानम्–अश्विनौ सरस्वतीमिन्द्रं सुत्रामाणं गच्छेति । तत आज्यस्थालीमासाद्य उत्तरवेदौ त्रयाणां दोहानां मन्त्रेणासादनम् । दक्षिणस्यामध्वर्योरेव सुराकुम्भ्या आसादनम् । आज्यस्थालीपूर्वकः क्रमेण सर्वालम्भः । दोहानन्तरं सुराया आलम्भः । आत्मालम्भोदकालम्भौ ।

ततो दक्षिणां वेदिमपरेण श्वभ्रखननम् । ततः श्वभ्रस्य मध्ये गोचर्मास्तरणम् । तत्र चर्मणि सर्वायाः सुराया आसेकः । उपरि कारोतरसंज्ञस्य सुरागलनार्थं वंशमयपात्रस्यावधानम् । अथवा पूर्वं कारोतरमवधाय तस्योपरि सुराप्रक्षेपः । ततः कारोतरमपसार्य चर्मणि पतितायाः पूतायः सुरायाः सिञ्चन्ति परि षिञ्चन्तीति मन्त्रेण स्थाल्याद्युदञ्चनेन ग्रहणम् । ततः शतसंज्ञे पालाशे पात्रे गोबालाश्वबालनिर्मितेन पवित्रेण सुरां पुनाति पुनाति त इति । वायोः पूत इति मन्त्रेण सोमातिपूतस्य यज-

सीति ॥१८॥ ऐन्द्रं नैयग्रोधेन ॥१९॥ यवकर्कन्धुचूर्णानि च बलमसीति ॥२०॥ स्थालीभिः सौरान्नाना हि वामिति व्यत्यासम् ॥२१॥ पयोग्रहान्वा पूर्वम् ॥२२॥ सुराग्रहाञ्छ्रीणात्योजोऽसीति वृकव्याघ्रसिꣳहलोमाभिः प्रति-

---

मानस्य सुरां पुनाति । वायोः पूतः पवित्रेण प्राङ् सोम इति मन्त्रेण सोमवामिनो यजमानस्य सुरां पुनाति । एवं सर्वां सुरां रसरूपां सते पुनाति ।

ततः पाणिप्रक्षालनम् । तत उत्तरस्यां वेदौ खरसंनिधाने उपविश्याजलोमाविलोमभिर्निर्मितेन पवित्रेण वेतसवृक्षघटिते पात्रे ब्रह्म क्षत्रमिति पयः पुनाति । ततो ब्रह्मा अध्वर्योऽ अद्रिभिरिति मन्त्रेण पाव्यमानं पयोऽनुमन्त्रयते ।

ततोऽध्वर्युस्त्रीन पयोग्रहांस्त्रीन् सुराग्रहांश्च व्यत्यासेन गृह्णाति । पूर्वमाश्विनः पयोग्रहः, तत आश्विनः सुराग्रहः, ततः सारस्वतः पयोग्रहः, ततः सारस्वतः सुराग्रहः, तत ऐन्द्रः पयोग्रहः, तत ऐन्द्रः सुराग्रहः इति व्यत्यासेन गृह्णाति । तत्राश्वत्थवृक्षघटितेन उलूखलेन पात्रेण कुविदङ्गेति मन्त्रेणाश्विनं पयोग्रहं गृह्णाति । कुविदङ्गेति उपयामगृहीतोऽस्यश्विभ्यां त्वा इति मन्त्रं पठित्वा वैतसपात्रस्थं पयः पात्रान्तरेणाश्वत्थपात्रे निनयति ।

ततो द्वे दर्भतृणे आश्विनपात्रस्योपर्यन्तर्द्धाय गोधूमचूर्णानि कुवलचूर्णानि चाश्विनग्रहस्य मध्ये प्रक्षिपति तेजोऽसि तेजो मयि धेहीति मन्त्रेण कुवलानि चामलकबदराणि । ततः पाणिना मार्जनं ग्रहस्य । खरस्य दक्षिणभागे एष ते योनिस्तेजसे त्वेति सादनम् । ततो दक्षिणवेदिं गत्वा स्थाल्या आश्विनं सुराग्रहं गृह्णाति । तत्र नाना हि वां देवहितं० माविशन्ती उपयामगृहीतोऽस्याश्विनं तेज इति मन्त्रेण पालाशपात्रसकाशात् स्थाल्यैव सुरां गृह्णीयात् । ततो दर्भतृणे अन्तर्द्धाय वृकलोमभिः श्रयणम् ओजोऽस्योजो मयि धेहीति मन्त्रेण ।

ततः श्येनपात्रेण परिमार्जनम् । दक्षिणवेदिस्थे खरे दक्षिणत आसादनम् , एष ते योनिर्मोदाय त्वेति मन्त्रेण । ततः पाणिप्रक्षालनम् । तत उत्तरस्यां वेदौ खरसन्निधौ गत्वा औदुम्बरेण उलूखलेन पात्रेण सारस्वतं पयोग्रहं गृह्णाति । तत्र कुविदङ्ग० यजन्ति उपयामगृहीतोऽसि सरस्वत्यै त्वेति मन्त्रान्ते पयो गृह्णाति ।

ततः कुशावन्तर्द्धायोपवाकचूर्णबदरचूर्णै श्रीणाति । वीर्यमसि वीर्यं मयि

**मन्त्रं मिश्रैः ॥२३॥ एके यथासंख्यम् ॥२४॥ सोमो राजेत्यनुवाकेन ग्रहानुपतिष्ठते युगपत् ॥२५॥ चतुर्भिर्वा पयोग्रहाञ्छेषेण सौरान् ॥२६॥ दीक्षावत्पावयतोऽन्तःपात्ये श्येनपत्राभ्यां या व्याघ्रमिति ॥२७॥ अग्निं प्रेक्षयति यदा**

---

धेहीति मन्त्रेण। उपवाका इन्द्रयवाः, बदराणि चणकबदराणि। ततः परिमृज्यैष ते योनिर्वीर्यायत्वेति खरस्य मध्ये सादनम्। ततो दक्षिणवेदौ गत्वा स्थाल्यां सौरस्य सारस्वतस्य ग्रहणम्। तत्र स्थालीं गृहीत्वा नाना हि० माविशन्तो उपयामगृहीतोऽसि सारस्वतं वीर्यमिति मन्त्रेण स्थाल्यैव पलाश पात्रस्थां सुरां गृह्णाति।

ततः कुशावन्तर्द्धाय व्याघ्रलोमभिः श्रीणाति। मन्युरसि मन्युं मयि धेहीति मन्त्रेण। ततः परिमृज्य खरस्य मध्ये सादयति एष ते योनिरानन्दाय त्वेति मन्त्रेण। पाणी प्रक्षाल्योत्तरवेदौ गत्वा ऐन्द्रं पयोग्रहं वटवृक्षघटितेन उलूखलेन पात्रेण गृह्णाति। ततः पात्रं गृहीत्वा कुविदङ्ग० यजन्ति उपायामगृहीतोऽसीन्द्राय त्वा सुत्रामण इति मन्त्रेण पयो गृह्णाति।

ततः कुशावन्तर्द्धाय बलमसि बलं मयि धेहि इति मन्त्रेण यवचूर्णैःकर्कन्धुचूर्णैः श्रीणाति। कर्कन्धून्यारण्यकबदराणि घांटबदराणीति प्रसिद्धानि। ततः परिमृज्यैष ते योनिर्बलाय त्वेति खरस्योत्तरभागे सादयति। ततो दक्षिणवेदौ गत्वा ऐन्द्रं सुराग्रहं गृह्णाति। तत्र स्थालीमादाय नाना हि वां० विशन्तो उपयामगृहीतोऽस्यैन्द्रं बलमिति मन्त्रान्ते स्थाल्यैव पलाशपात्रात्सुरां गृह्णाति।

ततः कुशावन्तर्द्धाय सहोऽसि सहो मयि धेहीति मन्त्रेण सिंह०हलोमभिः श्रीणाति। ततः परिमृज्यैष ते योनिर्महसे त्वेति खरोत्तरार्द्धे सादयति। अथवा वृकव्याघ्रसिंह०हलोमभिर्मिश्रितैरेव सुराग्रहाणां श्रयणं कर्त्तव्यम्। अत्र पयोग्रहांस्त्रीनपि प्रथमं गृहीत्वा ततः सर्वान् सुराग्रहान् गृह्णीयात्, न व्यत्यासेन।

ततोऽध्वर्युः सोमो राजेत्यनुवाकेन सहैव सुराग्रहान् पयोग्रहांश्चोपतिष्ठते। अथवा सोमो राजेत्याद्यैश्चतुर्भिः पयोग्रहानुपतिष्ठते। ततो रेतो मूत्रमित्याद्यैः शेषैश्चतुर्भिः सौरग्रहानुपतिष्ठते। ततोऽध्वर्युप्रतिप्रस्थातारौ द्वे द्वे श्येनपत्रे गृहीत्वा सहैवान्तःपात्ये स्थितं यजमानं या व्याघ्रमिति मन्त्रेण ताभ्यां श्येनपत्राभ्यामूर्ध्वं चावाञ्चं च दीक्षावत् पावयतः। तत्र त्रिरुपरि नाभ्युन्मार्जनम् सकृदवाङ् "दीक्षावदि"ति सूत्रात्।

पिपेषेति ॥२८॥ पयोग्रहसंमर्शनं सम्पृच स्थेति ॥२९॥२॥

विपृच स्थेति सौराणाम् ॥१॥ अभ्याादि करोति ॥२॥ आश्विनोऽजो धूम्रः ॥३॥ सारस्वतो मेषः ॥४॥ ऐन्द्रऽ ऋषभः ॥५॥ मध्ये यूपः ॥६॥ दक्षिणोत्तरावैन्द्रवायोधस-

ततोऽध्वर्युरग्निं प्रेक्षस्वेति यजमानं प्रत्याह । ततो यजमानो यद्वा पिपेषेति मन्त्रेणातिप्रणीतमग्निमीक्षते । ततोऽध्वर्युः सम्पृच स्थेति पयोग्रहान् संमृशति अभिमृशति । ततो विपृच स्थेति सौरान् ग्रहानभिमृशति ।

इति एकोनविंशस्य द्वितीया कण्डिका ॥ २ ॥

ततोऽध्वर्युः स्फ्यादानादि यूपस्य व्ययणान्तं कृत्वा स्वर्वगूहनोपाकरणमन्त्रणे विकल्पेन करोति । कर्कमते तु परिव्ययणानन्तरं प्रतिप्रस्थातः पशुनेहीति प्रतिप्रस्थारं प्रेष्यति ।

ततः प्रतिप्रस्थाता छागमेषर्षभांस्त्रीन् पशूनानयति । ततः पूर्वां रशनामुदुह्य तदैव पुनः परिवीयमाणायानुब्रूहीति प्रैषमुक्त्वा पुनरपि द्वितीयया रशनया द्वितीयं परिव्ययणं कुर्यात् । उकाकरणमन्थने नियमेन भवतः । तत ऋतस्य त्वेत्यादि । नियोजने अश्विभ्यां जुष्टं नियुनज्मीति अजस्य यूपे बन्धनम् । सरस्वत्यै जुष्टं नियुनज्मीति मेषस्याजगले बन्धनम् । इन्द्राय जुष्टं नियुनज्मीति ऋषभस्य मेषगले बन्धनम् । कलौ ऋषभस्थाने छागमालभन्ते । एकैकस्यान्तरा शृङ्गबन्धनादि नियोजनान्तं काण्डानुसमयेन ।

तत एकैकस्य प्रोक्षणाद्यधस्तादुपोक्षणान्तम् । प्रोक्षणे अश्विभ्यां त्वा जुष्टं, सरस्वत्यै त्वा जुष्टम्, इन्द्राय त्वा जुष्टमिति । ततो होतुरामन्त्रणादि । अग्निभ्यां समिध्यमानाभ्यामनुब्रूहीति प्रैषः । सप्तदशेन वज्रेणेत्यवबाधनम् । उभयोः प्रतिप्रणवमिध्माधानम् । प्रतिप्रस्थातुर्नानुयाजसमित्परिशेषणम् । अग्नी अग्नीत्संमृड्ढीति प्रैषः । द्वयोरग्न्योः क्रमेण संमार्गः । पूर्वमतिप्रणीतस्य । ततो दक्षिणस्य । पूर्वाराघध्वर्योरेव न प्रतिप्रस्थातुः । निन्हवः । उत्तराघारमाघार्य क्रमेण सर्वपशूनां समञ्जनं काण्डानुसमयेन ।

ततो ध्रुवासमञ्जनम् । ततो होतृवरणम् , यजमानस्य च । मैत्रावरुणाय दण्डप्रदानम् । एकादश प्रयाजाः । तत्र प्राकृता एव त्यागाः । न मन्त्रलिङ्गादग्न्यादीनाम् । दशेष्टा शासप्रैषादिशामित्रेऽग्निनिधानान्तम् ।

**योः ॥७॥ वपामार्जनान्ते ग्रहानादाय पूर्ववदनुवाचनः सुरासोमेभ्योऽनुब्रूहीति ॥८॥ सप्रैषं तु ॥९॥ प्रस्थितमिति च ॥१०॥ त्रिपशोः सर्वम् ॥११॥ सुरावन्तमिति जुहोति ॥१२॥**

---

प्रतिपशु वेदेर्द्वे तृणे ग्राह्ये । शामित्रस्य उत्तरोत्तरस्थानत्रये मन्त्रेणैकैकस्य प्रक्षेपः । तत्राश्विनस्य दक्षिणतृणस्योपरि संज्ञपनम् । तमुत्तरेण मेषस्य । मेषमुत्तरेण ऋषभस्य । संज्ञपयान्वगमन्निति प्रैषः ।

परिपशव्याहुत्योर्विकल्पः । कर्कमते परिपशव्याहुत्योर्नियमः । संज्ञप्ताः पशव इति शमितारं प्रति प्रैषः । शेरतां नु मुहूर्तमिति भवति हविर्यज्ञविभ्रम्त्वात् । रशनानां प्रासने माऽहिर्भूत मा पृदाकुरिति विशेषः ।

ततः प्रतिप्रस्थातः पत्नीमुदानयेति प्रैषः । पत्न्यानयनम् । पशोः प्राणशोधनादि पश्चात् पशोर्निषेकान्तम् । तत उत्तानपशुकरणाद्येकैकस्य लोहितेन तृणाञ्जनान्तम् । सर्वेषां तृणमूलानां सहैवोत्करे प्रक्षेपोऽभिष्ठानं च । ततो वपोत्खेदनाद्येकैकस्य परिवासनान्तम् । ततश्चात्वालावसेकादि शृता प्रचरेत्यन्तम् । सर्वासां तत्राभिघारः ।

उत्तरतः प्रत्याहृत्य प्राणदानम् । तत्राश्विनौ गच्छ, सरस्वतीं गच्छ, इन्द्रं गच्छेति विशेषः । तत आसादनालम्भौ । ततः स्रुचावादायोत्तमं प्रयाजं हुत्वा प्रथमं ध्रुवायामभिघारः । तत आज्यस्थालीवपापृषदाज्यानां, निरूढविकारत्वात् । अत्र विकल्पेनाज्यभागौ प्रेष्यप्रैषौ । जुह्वामुपस्तीर्य हिरण्यमवधाय छागस्य वपामवद्यन्नश्विभ्यां छागस्य वपाया मेदसोऽनुब्रूहीति प्रैषः ।

उपरि हिरण्यावधानम् । सकृदभिघारणम् । कर्कमते नात्राज्यभागौ । तेन वपानां प्रथममभिघारः । द्विरभिघारणं च । उत्थायाश्राव्याश्विभ्यां छागस्य वपां मेदः प्रस्थितं प्रेष्येति प्रैषः । होमः । इदमश्विभ्यामिति त्यागः । एवमेवेतरयोर्वपाप्रचारः । सरस्वत्यै मेषस्य वपायै मेदसोऽनुब्रूहि । सरस्वत्यै मेषस्य वपां मेदः प्रस्थितं प्रेष्य । इदं सरस्वत्यै । इन्द्राय ऋषभस्य वपायै मेदसोऽनुब्रूहि । इन्द्राय ऋषभस्य वपां मेदः प्रस्थितं प्रेष्य । इदमिन्द्रायेति विशेषः ।

प्रतिनिधेरजस्यालम्भेऽपि ऋषभशब्दस्यानूह एव । "शब्देऽविप्रतिपत्तिः"रित्युक्तेः । ततो वपाश्रपणीनां सहैव प्रासनम्, स्वाहाकृताऽ ऊर्ध्वनभसं मारुतं गच्छतेति । ततः स्रुचोर्निधानम् । सर्वेषां सपत्नीकानां चात्वालेमार्जनम् । ततो ग्रहाणां यागः । तत्र कर्मते वपामार्जनान्ते व्रतग्रहणम् ।

**पालाशैः सौरान्मृन्मयमाहुतिमानश इति श्रुतेर्यस्त इति ॥१३॥ अध्वर्युः प्रतिप्रस्थाताऽग्नीध्रमश्विनेत्याश्विनं भक्षयन्ति द्विर्द्विरावर्त्तम् ॥१४॥ होतृब्रह्ममैत्रावरुणाः सा-**

---

तत आज्यभागौ यजप्रैषौ । अस्माकमपि वपायागकालात् प्राक्कृतौ चेत् अत्राज्यभागौ भवतः ।

ततोऽध्वर्युः सर्वान् पयोग्रहानादत्ते । प्रतिप्रस्थाता पालाशेषु उलूखलेषु त्रिषु पात्रेषु स्थालीस्थान् सौरान् प्रक्षिप्य तानि पात्राण्यादत्ते । ततोऽध्वर्युरश्विभ्याᳬ सरस्वत्या इन्द्राय सुत्राम्णे सुरासोमेभ्योऽनुब्रूहीति मैत्रावरुणं प्रेष्यति । आश्राव्याश्विभ्याᳬ सरस्वत्या इन्द्राय सुत्राम्णे सुरासोमान् प्रस्थितान् प्रेष्येति प्रैषः । अध्वर्युप्रतिप्रस्थातारौ युगपत् ग्रहान् जुहुतः ।

अध्वर्युः छरावन्तं बर्हिषदमिति मन्त्रेणातिप्रणीते पयोग्रहान् जुहोति । यस्ते रसः सम्भृत इति मन्त्रेण प्रतिप्रस्थाता दक्षिणेऽग्नौ पालाशैरुलूखलैः सौरान् जुहोति । इदमश्विसरस्वतीन्द्रेभ्यः । ततोऽनुवषट्कारे चोभौ सशेषान् जुहुतः । इदमग्नये । तत उदकोपस्पर्शनम् । ततोऽध्वर्युः प्रतिप्रस्थाता अग्नीध्रश्च एते त्रयः क्रमेणैकवारमाश्विनग्रहं भक्षयित्वा पुनः क्रमेणैव द्वितीयवारमाश्विनं भक्षयन्ति । तत्राध्वर्युराश्विनपात्रात् पयो हस्ते कृत्वा प्रतिप्रस्थातारमग्नीधं च पृष्ट्वा यमश्विनेति मन्त्रेण भक्षयति । सर्वेषामयमेव पयोग्रहभक्षणे मन्त्रः ।

ततः प्रतिप्रस्थाता हस्ते पयः कृत्वा अध्वर्युमग्नीधं च पृष्ट्वाऽध्वर्युवद् भक्षयति । ततोऽग्नीद्धस्ते पयः कृत्वाऽध्वर्युं प्रतिप्रस्थातारं च पृष्ट्वा भक्षयति । पुनरप्येवं भक्षयति । ततोऽध्वर्युराश्विनशेषं सारस्वतेऽवनयति । ततो होतृब्रह्ममैत्रावरुणा आश्विनवदेवोपहूयोपहूय यमश्विनेति सारस्वतं क्रमेण द्विर्भक्षयन्ति ।

तत्र प्रथमं होता सारस्वतपात्राद् हस्ते पयः कृत्वा ब्रह्माणं मैत्रावरुणं च पृष्ट्वा भक्षयति । ततो ब्रह्मा होतारं प्रशास्तारं च पृष्ट्वा । ततः प्रशास्ता होतारं ब्रह्माणं च पृष्ट्वा पुनरप्येवमेव क्रमेण भक्षयन्ति । ततोऽध्वर्युः सारस्वतशेषमैन्द्रग्रहेऽवनयति । ततो यजमान एकाक्येवानुपहूयन्नेव ऐन्द्रं ग्रह यमश्विनेति भक्षयति पयो हस्ते गृहीत्वा ।

ततो यदत्रेति मन्त्रेण सर्वे सौरग्रहान् पयोग्रहवदेव विहाराद्दक्षिणस्यां दिश्युपविष्टाः प्राचीनावीतिनो भक्षयन्ति । अध्वर्यु प्रतिप्रस्थात्रग्नीध आश्विनं द्विवारं होतृब्रह्ममैत्रावरुणास्तथैव सारस्वतम् । ऐन्द्रं यज-

रस्वतमाश्विनवत् ॥१५॥ शेषं शेषमासिञ्चत्युत्तरे पूर्व-
स्य ॥१६। ऐन्द्रं यजमानः ॥१७॥ यदत्रेति सौरान्भक्ष-
यन्ति यथाभक्षितं प्राचीनावीतिनो दक्षिणतः ॥१८॥ प्रा-
णभक्षमेके ॥१९॥ परिक्रीतो वा वैश्यराजन्ययोरन्यतरः
॥२०॥ अङ्गारेषु वा बहिष्परिधि दक्षिणतो जुहोत्याश्वि-
नमुत्तरे मध्यमे सारस्वतमैन्द्रं दक्षिणे पितृभ्य इति प्रति
मन्त्रम् ॥२१॥ अक्षन्पितर इति प्रक्षालनेनोपासिञ्चति
॥२२॥ पितरः शुन्धध्वमिति जपति ॥२३॥ कुम्भीमा-
सज्य कुम्भवत् शतवितृण्णां बालपविश्चाहिरण्यान्यन्त-

---

मान उत्तरोत्तरे शेषासेकश्च पूर्ववत् । केचिदाचार्याः सौरग्रहाणां प्राण-
भक्ष एवावघ्राणमात्रमेव भवतीत्याहुः ।

अथवा सुराग्रहभक्षणार्थं क्षत्रियं वा वैश्यं वा मूलेन परिक्रीय तेन सौरग्रहाणां भक्षणं कारयन्ति । अथवा दक्षिणस्याग्नेस्त्रीन् ज्वलतोऽङ्गारान् बहिःपरिधि निष्काश्य दक्षिणस्यां दिशि दक्षिणसंस्थान्निधाय तेषु क्रमेण दक्षिणसंस्थान् सौरग्रहान् जुहोति । तत्र अध्वर्युः प्राचीनावीती दक्षिणाभिमुखः सव्यं जान्वाच्य जुहोति । पितृभ्यः स्वधायिभ्य इत्याश्विनं सौरग्रहमुत्तरेऽङ्गारे । सर्वेऽपि प्राचीनावीतिनो भवन्ति । इदं पितृभ्यः स्वधायिभ्यः ।

ततः पितामहेभ्य इति मन्त्रेण मध्यमेऽङ्गारे सारस्वतं सौरग्रहं जुहोति । इदं पितामहेभ्यः स्वधायिभ्यः । ततः प्रपितामहेभ्यः स्वधायिभ्यः इति मन्त्रेण दक्षिणेऽङ्गारे ऐन्द्रं सौरग्रहं जुहोति । इदं प्रपितामहेभ्यः स्वधायिभ्य इति त्यागः । ततः प्रथमे आश्विनपात्रेऽपो निनीय तस्य प्रक्षालनेनोत्तरमङ्गारमक्षन्पितर इत्युपसिञ्चति ।

ततः सारस्वतपात्रेऽपो निनीय मध्यममङ्गारं तत्प्रक्षालनेनोपसिञ्चति अमीमदन्तेति । तत ऐन्द्रस्य पात्रेऽपो निनीय तत्प्रक्षालनेन दक्षिणमङ्गारमतीतृपन्तेति सिञ्चति ।

ततोऽध्वर्युः पितरः शुन्धध्वमिति मन्त्रं स्वरेण जपति । ततो दक्षिणस्याहवनीयस्य दक्षिणत उत्तरतश्चैकैकां स्थूणां निखाय तयोः स्थूणयोरुपरि तिर्यग् दक्षिणाग्रं काष्ठं निधाय तस्मिन् काष्ठे आहवनीयस्योपरि समीप एव लम्बायमानं मुञ्जमयं त्रिगुणं शिक्यं बद्ध्वा तस्मिन् शि-

धाय नवर्चं वाचयति पुनन्तु मेति ॥२४॥ सोमवतां ब- र्हिषदामग्निष्वात्तानां च ॥२५॥ पूर्ववत् सोमातिपूतश्चेत् ॥२६॥ ये समाना इति यजमानो जुहोति ॥२७॥ उत्तरे च यज्ञोपवीत्युत्तरया ॥२८॥ अन्वारब्धेषु पयो जुहोति द्वे सृती इति ॥२९॥ शेषं यजमानो भक्षयतीदꣳ हविरिति चात्वाले मार्जयन्ते सपत्नीका हिरण्यमन्तर्धाय ॥३०॥३॥

---

अये शतच्छिद्रां कुम्भीं स्थापयित्वा तस्या मध्ये गोऽश्ववालपवित्रं वि- स्तार्य तस्योपर्यजाविलोमपवित्रं चास्तीर्य तस्योपरि हिरण्यं च निधाय पालाशात्पात्राद्दुग्धेनेन तत्र परिशिष्टां सुरां निनयन् पुनन्तु मा पितर इति नवर्चं प्रत्यृचं यजमानं वाचयति ।

ततस्त्वꣳ सोम प्रचिकित इति सोमवतां तृचं प्रत्यृचं वाचयति । ततो बर्हिषदः पितर इति बर्हिषदां तृचम् । तत आ यन्तु नः पितर इति अग्निष्वा- त्तानां तृचम् । एवमष्टादशानामृचां प्रत्येकं वाचनं कारयति । सोमाति- पूतस्तु यजमानः सोमवदादितृचराहवनीयस्योपरि क्षरन्तीं सुरामुपतिष्ठ- ते । ततो यजमानो ऽपसव्येनैव जुह्वां सकृदाज्यं गृहीत्वा दक्षिणामुखः सव्यं जान्वाच्य ये समाना इति समित्पूर्वकं जुहोति । इदं पितृभ्य इति त्यागः ।

ततः सर्वे उपस्पृश्य सव्यं कृत्वोत्तरवेदिं प्रत्यागच्छन्ति । ततः पुनः सकृद्गृहीतं गृहीत्वा यजमान एवातिप्रणीते उत्तरेऽग्नौ द्वितीयेन ये स- माना इति मन्त्रेण जुहोति । इदं श्रियै इति त्यागः । ततोऽध्वर्युस्तदैव पूर्व- शाखया तूष्णीं पशुवर्गस्योपाकरणं कृत्वा दोहनचतुष्टयमासाद्य प्रो- क्षणोपसृष्ट्यादि परिक्षालनान्तं दोहनं कृत्वा तं श्रपयित्वाऽभिघार्योद्वास्य प्राणदानं कृत्वा सादनालम्भौ करोति ।

ततो यजमानो जुह्वामुपस्तीर्य पयसः स्रुवेण द्विरवदायाभिघार्य स र्वेषु ऋत्विक्ष्वन्वारब्धेष्वाहवनीये जुहोति द्वे सृती इति मन्त्रेण । यजमानो जुहोति इति हरिस्वामिनः । अध्वर्युरिति याज्ञिकाः । इदं द्वाभ्यां सृति- भ्यामिति त्यागः । ततः स्थालीस्थं पयःशेषम् इदꣳ हविः प्रजननमिति सर्वं यजमानो भक्षयति ।

ततः सर्वे ऋत्विजः पत्नीयजमानसहिताश्चात्वाले हिरण्मयेन पवि- त्रेण सह ऐहिके पवित्रे समस्य सुमित्रिया न इति मार्जनं कुर्वन्ति । सजलेनेति केचित् ।

इति एकोनविंशस्य तृतीया कण्डिका ॥ ३ ॥

**पशुपुरोडाशान्निर्वपत्यैन्द्रं सावित्रं वारुणं दशकपालम् ॥१॥ एककपालं चावभृथाय ॥२॥ आसाद्यैनानाज्यभागौ यजत्यत्र स्विष्टकृद्वनस्पत्योः प्रैषदर्शनात् ॥३॥ य-**

ततः सवनीयपुरोडाशवत् शेषसमाप्तिः । केवलायाः शाखाया आहवनीये प्रक्षेपः । सौरकर्णापासनम् । मार्जयन्ते हिरण्यमन्तर्द्धाय वाऽद्भिर्मार्जयन्ते तूष्णीमेव ।

ततः पशुपुरोडाशान्निर्वपति । ऐन्द्र एकादशकपालः, सावित्रो द्वादशकपालः वारुणो दशकपालः । अवभृथार्थं द्वितीयो वारुण एककपालः । तत्र चतुरासनम् । कर्कमते प्रणीताप्रणयनं नान्येषाम् । पात्रासादनम्-शूर्पं कपालानि चतुस्त्रिंशत्, कृष्णाजिनम्, उलूखलमुसलम् । पात्री धान्यम्, शाखोपवेषः, संयवनोदकम्, श्रृतावदानम्, चतस्रः पुरोडाशपात्र्यः । एतान्यासाद्य स्फ्योपहितपात्रीकरणम् ।

ततः पात्रान्तरे प्रोक्षणीरुत्सार्य शूर्पाग्निहोत्रहवण्योरादानादि यच्छन्तामित्यालम्भनान्तम् । ग्रहणे इन्द्राय जुष्टं गृह्णामि, सवित्रे जुष्टं, वरुणाय जुष्टमिति । ततोऽवभृथार्थं वरुणाय जुष्टमिति । शेषाभिमर्शनाद्यासादनान्तम् । पात्रान्तरात्प्रोक्षणीरुन्नीय प्रोक्षणम् । इन्द्राय त्वा जुष्टं, सवित्रे त्वा जुष्टं, वरुणाय त्वा जुष्टं, वरुणाय त्वा जुष्टमिति । ततः पात्राणां प्रोक्षणम् ।

ततः कृष्णाजिनादानादि स्फ्योदकनिनयनान्तम् । तत्सम्बद्धानां श्रृतावदानपुरोडाशपात्रीणां संमार्गः । संमार्जनापासनम् । ततः कर्कमते अत्र पात्रसंमार्गान्ते पशुविशसनादि शमित्रनुशासनान्तम् । तत्र त्रिः प्रच्यावयतात् त्रिः प्रच्युतानां हृदयान्युत्तमानि कुरुतादिति विशेषः । एकैकस्य हृदयप्रतर्दनाद्युखायामवदानप्रक्षेपान्तं काण्डानुसमयेन ।

ततः शमित्रनुशासनम् । ततः पुरोडाशविभस्मीकरणाद्यालम्भनान्तम् । इन्द्रं गच्छ, सवितारं गच्छ, वरुणं गच्छ, वरुणं गच्छेति प्राणदाने विशेषः ।

तत एतर्ह० होतृमैत्रावरुणाविति तावामन्त्र्य स्रुचावादाय जुह्वामुपभृति च उत्तरार्द्धादेकप्रत्ययायमवदानम् । नाभिघारः । उपस्तीर्य प्रथमपुरोडाशस्यावद्यन्निन्द्राय पुरोडाशस्यानुब्रूहीति प्रेष्यति ।

तत उपरिष्टादभिघारः । दलाभ्यङ्गः । उपभृतमादाय गत्वाऽऽश्राव्येन्द्राय पुरोडाशं प्रस्थितं प्रेष्येति प्रैषः । वषट्कृते होमः । इदमिन्द्रायेति । त्रिपशोः सर्वमिति सर्वग्रहणात् पशुपुरोडाशयागेष्वपि प्रस्थितशब्दो भवति इति याज्ञिका वासुदेवदीक्षितश्च । नेति कर्कसम्प्रदायकारादयः । एवमेव

**थोक्तं वा मन्त्राणामविधानात् ॥४॥ त्रयस्त्रिंशतं दक्षिणा ददात्यनुशिशुं च वडवधेनुम् ॥५॥ एकादशिनिधर्माः पशुगणेषु ॥६॥ शमित्रनुशासनप्रभृति वनस्पत्यन्तं कृत्वा**

---

द्वितीयस्य पुरोडाशस्य यागः। सवित्रे पुरोडाशस्यानुब्रूहि। सवित्रे पुरोडाशं प्रस्थितं प्रेष्य। इदं सवित्रे इति त्यागः। ततस्तृतीये वरुणाय पुरोडाशस्यानुवाचनम्। अभिघारः। क्षताभ्यङ्गः। तृतीयपुरोडाशस्यो-त्तरार्द्धादवदानम्। द्विरभिघारः।

आश्राव्य वरुणाय पुरोडाशं प्रस्थितं प्रेष्येति प्रैषः। इदं वरुणाय। समानीय निर्गुणः स्विष्टकृद्यागः। ततोऽपामुपस्पर्शनम्। स्रुचोर्निधानम्। नात्र सञ्चराभ्युक्षणम्। प्राशित्रादि सर्वं सर्वेषाम्। भागपरिहरणान्ते द-क्षिणादानम्। प्रजापतये भागोऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाहि त्रयस्त्रिंशद्गवानुशिशुवडवधेन्वस्यूर्जं मयि धेह्यक्षितिरसि मा मे क्षेष्ठा अमुत्रेति विशेषः।

अस्याः सौत्रामण्याः समृद्ध्यर्थं त्रयस्त्रिंशद्गा अनुशिशुवडवधेनुं च दक्षिणां ब्रह्मणे होत्रे अध्वर्यवे मैत्रावरुणाय प्रतिप्रस्थात्रेऽग्नीधे समविभा-गेनाहं संप्रददे। ब्रह्मन्यस्ते भाग इति प्रकृतिवत्।

ततोऽध्वर्युरेव पशुविशसनादारभ्य हृदयाद्यभिघारणान्तं सर्वमेव-निरूढवत् करोति। कर्कमते तु प्रथमशमित्रनुशासनान्तं प्राकृतम्। इदानीं प्रतिप्रस्थाता पशौ संवदस्वेति प्रेष्यति।

ततः प्रतिप्रस्थाता यत्वा पृच्छेत्यादि द्वितीयं शमित्रनुशासनं करोति। ततो जुह्वा पृषदाज्यस्यादाय चात्वालोत्करावन्तरेण निष्क्रम्य शृतं हवि-रित्यादि करोति। ततो हृदयाभिघारणाद्यध्वर्योः। सर्वेषामुद्गुद्वासनम्। प्राणदानं वपावत्। वसां च पश्ववदानानामसिसहितानां चात्वालम-परेण कृत्वाऽन्तरेण यूपाग्नी हरणम्। प्रत्येकं बर्हिषि मन्त्रवदासादनम्। आलम्भः।

ततो जुह्वामुपभृति वसाहोमहवन्यां प्राशित्रे इडापात्र्यां चोपस्तारः। जुह्वामुपभृति च हिरण्यावधानम्। मनोताप्रैषः। प्रथमपशोर्हृदयादीनां जौहवमवदानम्। उपभृतानामुपभृति। जुह्वामेव उपरि हिरण्यावदानम्। अभिघारः। वसाग्रहणम्। द्विरभिघारः। पार्श्वेनासिना वा चालनम्। प्राशित्रे इडायां चावदानम्। नोपर्यभिघारः। जाघनीगुदयोर्निधानम्। अश्विभ्यां छागस्य हविषोऽनुब्रूहीति प्रैषः। उत्थायातिक्रम्याश्राव्याश्विभ्यां छागस्य हविः प्रस्थितं प्रेष्येति प्रैषः। अर्द्धर्चान्तरे वसाहोमः। वषट्कृते-ऽवदानहोमः। इदमश्विभ्यामिति त्यागः।

**सोमासन्दीवदासन्दीं जानुमात्रपादीं वेद्योर्निदधाति क्षत्रस्य योनिरिति ॥७॥ कृष्णाजिनमस्यामास्तृणाति मा त्वेति ॥८॥ तस्मिन्नास्ते यजमानो नि षसादेति ॥९॥ पादयो रुक्मावुपास्यति राजतꣳ सव्ये मृत्योरिति ॥१०॥ सौवर्णꣳ शिरस्येके विद्योदिति ॥११॥ खुरैर्वसाग्रहान्**

---

वसां पात्रान्तरे कृत्वा प्रत्यागत्य पुनर्जुह्वां वसाहोमहवन्यां चोपस्तारादि पूर्ववज्जाघनीगुदनिधानान्तं कृत्वा सरस्वत्यै मेषस्य हविषोऽनुब्रूहीत्याह । तत उत्थायाश्राव्य सरस्वत्यै मेषस्य हविः प्रस्थितं प्रेष्येति प्रैषः । अर्द्धर्चान्तरे वसैकदेशस्य होमः । वषट्कृते जौहवस्य होमः । इदं सरस्वत्या इति त्यागः । ततो वसां पात्रान्तरे कृत्वा प्रत्यागत्य जुह्वां वसाहोमहवन्यां चोपस्तारः । जुह्वामेव हिरण्यावधाम् । तृतीयस्य पशोर्हृदयादीनां जौहवानां जुह्वामवदानम् । सोविकृष्टतानाम्युपभृति द्विर्द्विरवदानम् ।

ततो जुहूपभृतोर्हिरण्यावधानम् । अभिघारः । वसाग्रहणम् । द्विरभिघारः । आडुवालनम् । तृतीयपशौ जौहवेभ्यः प्राशित्रावदानम् । अभिघारः । इडायां सर्वपशुवसासेकः ।

तृतीयपशुसम्बन्धिनां क्रोडानस्थिमतां प्रासनम् । द्विरभिघारः । सर्वेषां जाघनीनां गुदानां च निधानम् । पाश्विकं पशुसंमर्शनम् । इन्द्राय ऋषभस्य हविष इत्यनुवाचनम् । आश्राव्येन्द्रायर्षभस्य हविः प्रस्थितं प्रेष्येति प्रैषः। अर्द्धर्चान्तरे वसैकदेशस्य होमः । वषट्कृते ऽवदानानाम् । इदमिन्द्रायेति त्यागः ।

ततो वनस्पतियागान्तं कृत्वा प्राक् स्विष्टकृतः स्रुचः कस्य चित्सावधानस्य हस्ते समर्पयति । तत औदुम्बरीमासन्दीं जानुमात्रपादीमरत्निमात्राङ्गीं त्रिवृतां मुञ्जरज्ज्वा व्यूतां क्षत्रस्य योनिरिति मन्त्रेण वेद्योर्निदधाति । तस्या द्वौ पादौ दक्षिणस्यां वेद्यां द्वौ पादौ उत्तरस्यां वेद्यां यथाभवतस्तथा द्वयोर्वेद्योर्मध्ये प्राङोपाया आसन्द्या निधानम् ।

ततोऽध्वर्युरस्यामसन्द्यां प्राग्ग्रीवमुत्तरलोम कृष्णाजिनं मा त्वा हिꣳसीदित्यास्तृणाति। ततो निषसादेति मन्त्रेण यजमानस्तस्याधस्तलस्य कृष्णाजनस्योपर्यास्ते उपविशति । ततोऽध्वर्युर्यजमानस्य सव्यपादस्योपरि राजतं रुक्मं निदधाति मृत्योः पाहीति मन्त्रेण । ततो यजमानस्य दक्षिणपादे शिरसि वा सौवर्णं रुक्मं निदधाति विद्योत्पाहीति मन्त्रेण । पादयोः उप समीपे रुक्मौ अस्यति अधो भूमौ क्षिपतीति हरिस्वामिनः ।

**द्वात्रिंशं० शतं जुहोति सीसेनेति प्रत्यृचम् ॥१२॥ द्वौ द्वौ हुत्वा शेषान्त्सन्ते करोति ॥१३॥ सर्वसुरभ्युन्मृदितः शेषैरभिषिञ्चत्या मुखादवस्रावयन्प्रतिदिशं सर्वत्र सावित्रमश्विनोः सरस्वत्या ऽइन्द्रस्येति प्रतिमन्त्रम् ॥१४॥ सर्वाभिश्चतुर्थम् ॥१५॥ महाव्याहृतिभिरेके ॥१६॥ उत्तमेन वा**

---

ततोऽध्वर्युर्ऋषभखुरैः पर्यायेण सर्वैर्वसाग्रहान् जुहोति । तत्र सर्वपशूनां वसा एकीकृत्य पयोग्रहं खरसन्निधौ पात्रान्तरे स्थापयति । ततोऽध्वर्युः ऋषभस्य खुरौ गृहीत्वा ताभ्यामुपयामगृहीतोऽसीति सहैव द्वावार्षभग्रहौ गृह्णाति । ततः परिमृज्यैष ते योनिरिति पयोग्रहं खरे सादयति । ततः खुरौ गृहीत्वाऽऽहवनीये सीसेन तन्त्रमिति जुहोति ।

ततो ग्रहयोः शेषं वैतसे पात्रे प्रतिहोमं निनयति । इदमश्विसरस्वतीन्द्रेभ्य इति त्यागः । ततः प्रत्यागत्य पुनरपि तथैव गृहीत्वा परिमृज्यासाद्य तदस्य रूपमित्यारभ्याऽध्यायसमाप्तिपर्यन्ताभिः प्रत्यृचं जुहोति । इदमश्विसरस्वतीन्द्रेभ्य इति षोडशानामपि होमानां त्यागः ।

खुरांश्चाग्निना तप्तान् कृत्वा तन्मध्यान्मांसं निष्काश्य ग्रहयोग्याः कर्त्तव्याः । एवं षोडशभिर्ऋग्भिर्द्वात्रिंशद्वसाग्रहाणां होमः। ततो यजमानस्य सर्वैः सुगन्धद्रव्यैश्चन्दनकर्पूरागरुकस्तूरिकादिभिरुद्वर्त्तनं कृत्वा वैतसपात्रस्थैर्वसाग्रहशेषैर्यजमानशिरस्येकस्मिन्नेव पूर्वप्रदेशे वक्ष्यमाणैः सर्वैर्मन्त्रैरभिषिञ्चति । यजमानस्य उरःपर्यन्तं वसावस्रापनम् ।

ततोऽध्वर्युः प्रथमं पुरस्तात् प्रत्यङ्मुखः स्थित्वा देवस्य त्वा स०भ्याम् अश्विनो० भिषिञ्चामीति मन्त्रान्ते यजमानशिरसः पूर्वभागे निषिञ्चति । ततो दक्षिणभागे उदङ्मुखः स्थित्वा देवस्य० भ्याम् । सरस्वत्यै भै० भिषिञ्चामीति शिरसस्तस्मिन्नेव भागेऽभिषिञ्चति। ततः पश्चात् प्राङ्मुखः स्थित्वा देवस्य० भ्याम् । इन्द्रस्येन्द्रियेण० भि षिञ्चामीति शिरसस्तस्मिन्नेव भागेऽभिषिञ्चति । तत उत्तरतो दक्षिणाभिमुखो देवस्य०भ्याम्। अश्विनोर्भैषज्येन सरस्वत्यै इन्द्रस्येन्द्रियेणेति सर्वाभिस्तत्रैवाभिषिञ्चति ।

अथवा महाव्याहृतिभिर्भूर्भुवः स्वरित्येताभिश्चतुर्थवारमभिषिञ्चति । देवस्येति पठित्वा इन्द्रस्येन्द्रियेणेत्युत्तमेन वा । महाव्याहृतिपक्षे पूर्वमन्त्राणां महाव्याहृतीनां च समुच्चयं केचिदिच्छन्ति । "तदुँ. हैक एताभिश्च देवताभिरभिषिञ्चन्ति भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिरि"ति श्रुतत्वात् । केचिदुन्मर्दनं सर्वसुरभिद्रव्यं वसाशेषमध्येऽवनीय तन्मिश्रे

॥१७॥ उन्मर्दनमाभिषेके ऽवनीयेके ॥१८॥ यजमानमाल-
भते कोऽसीति ॥१९॥ सुश्लोकेत्याल्भ्यो ह्वयति ॥२०॥
अङ्गानि चालभते यथालिङ्गꣳ शिरो मऽ इति प्रतिमन्त्रम्
॥२१॥ उध्वच्छन्त्स्येनꣳशतकाद्रियवत्प्रमाणेषु॥२२॥ कृष्णा-

ण वसांशेनाभिषेकं कुर्वन्ति । ततोऽध्वर्युः कोऽसीति मन्त्रेण यजमान मालभते ।

ततोऽध्वर्युणाऽऽलब्धो यजमानः सुश्लोकादिनाम्नः पुरुषानाह्वयति सुश्लोक एहि, सुमङ्गल एहि, सत्यराजन्नेहीति । केचित् सुभद्रक एहीति चतुर्थमाह्वयन्ति । ततो यजमानः शिरो म इति प्रतिमन्त्रं यथालिङ्गं स्वकीयान्यङ्गान्यालभते । तत्र शिरो मे श्रीरस्तु इति शिर आलभते । एवं सर्वत्र ज्ञेयम् । यशो मे मुखमस्तु इति मुखम् । त्विषिर्मे केशाः सन्तु इति मस्तकस्थान् केशान् । त्विषिर्मे श्मश्रूणि सन्तु इति मुखरोमाणि । राजा मे प्राणोऽ अमृतमस्तु इति नासिकास्थान् प्राणान् । सम्राण्मे चक्षुरस्तु इति चक्षुषी । विराण्मे श्रोत्रमस्तु इति श्रोत्रे । मन्त्रावृत्तिः । जिह्वा मे भद्रमस्तु इति जिह्वाम् । वाङ् मे महोऽस्तु इति जिह्वामेव ।

मनो मे मन्युरस्तु इति हृदयम् । उदकोपस्पर्शनम् । स्वराण्मे भामोऽस्तु इति भ्रुवोर्मध्यम् । मोदाः प्रमोदा मे अङ्गुलीः सन्तु इति हस्ताङ्गुलीः पादाङ्गुलीश्च । मोदाः प्रमोदा मे अङ्गानि सन्तु इतिसर्वाङ्गानि । मित्रं मे सहोऽस्तु इति स्वशरीरगतं बलम् । बाहू मे बलमिन्द्रियꣳ स्ताम् इति बाहू । हस्तौ मे कर्म वीर्यꣳ स्ताम् इति हस्तौ । आत्मा मे क्षत्रमस्तु इति हृदयम् । उदकालम्भः ।

उरो मे क्षत्रमस्तु इति हृदयम् । पृष्ठीर्मे राष्ट्रमस्तु इति पृष्ठवंशम् । उदरं मे राष्ट्रमस्तु इति उदरम् । अꣳसौ मे राष्ट्रꣳ स्ताम् इति अंसौ । ग्रीवाश्च मे राष्ट्रꣳ सन्तु इति ग्रीवाः । श्रोणी मे राष्ट्रꣳ स्ताम् इति कटिद्वयम् । ऊरू मे राष्ट्रꣳ स्ताम् इति ऊरू । अरत्नी मे राष्ट्रꣳ स्ताम् इत्यरत्नी । जानुनी मे राष्ट्रꣳ स्ताम् इति जानुनी । अत्रांसौ मे राष्ट्रमस्त्वित्यादि जानुनी मे राष्ट्रमस्तु इत्यन्तेषु सर्वत्रास्त्वित्येवाध्याहार इति केचित् ।

विशो मे ऽङ्गानि सर्वतः सन्तु इति सर्वाण्यङ्गानि । नाभिर्मे चित्तमस्तु इति नाभिम् । नाभिर्मे विज्ञानमस्तु इति नाभिमेव । पायुर्मेऽपचितिरस्तु इति पायुं गुदम् । भसन्मेऽपचितिरस्तु इति पायुमेव । आनन्दनन्दावाण्डौ मे स्ताम् इत्याण्डौ । भगो मे पसोऽस्तु इति लिङ्गम् ।

जिनेऽवरोहति प्रतिक्षत्र इति॥२३॥त्रयस्त्रिꣳशं वसाग्रहं गृह्णाति यो भूतानामिति॥२४॥आज्यग्रहमाश्वत्थेनैके॥२५॥४

साम प्रेष्यति ॥१॥ ऐन्द्र्यां बृहत्यां गायति ॥२॥ सꣳश्रवसे विश्रवसे सत्यश्रवसे श्रवस इति सर्वे निधनमुपयन्ति ॥३॥ सञ्जित्यै विजित्यै सत्याजित्यै जित्या इति क्षत्रियस्य ॥४॥ सम्पुष्ट्यै पुष्ट्या इति वैश्यस्य ॥५॥

---

सौभाग्यं मे पसोऽस्तु इति लिङ्गमेव। जङ्घाभ्यां धर्मोऽस्मि इति जङ्घे। पद्भ्यां धर्मोऽस्मि इति पादौ। राजा प्रतिष्ठित इति सर्वदेहम्।

आहूताः सुश्लोकादयो हस्तैरुद्यम्य धारयन्ति एवं यजमानम्। प्रथमं जानुमात्रे उच्चं, ततो नाभिमात्रे, ततो मुखमात्रे। ततो यजमानः प्रतिक्षत्र इति मन्त्रेण कृष्णाजिनेऽवरोहति। पूर्वं कृष्णाजिनं भूमावास्तरणीयम्। ततो यजमाने कृष्णाजिने उपविष्टे एवाध्वर्युः खरसमीपे उपविश्य स्रुवेणैव यो भूतानामिति मन्त्रेण इन्द्राय त्वा बृहत्वते इत्यन्तेन त्रयस्त्रिंशं वसाग्रहं गृह्णाति। ततः परिमार्जनम्। प्रदक्षिणावर्तनम्। इतरथाऽऽवर्तनं च।

केचिदाचार्या आश्वत्थेन पात्रेण त्रयस्त्रिंशमाज्यग्रहमिच्छन्ति न वसाग्रहम्। तस्मिन् पक्षे ध्रुवाया आज्यग्रहणं सकृदनेनैव मन्त्रेण। आहवनाययजतित्वाद् ध्रुवाया ग्रहत्वात्सकृदनेन मन्त्रेण। आप्यायतामिति ध्रुवाया आप्यायनं च। एष ते योनिरश्विभ्यां त्वेत्यादिना खरे आसादयति।

इत्येकोनविंशस्य चतुर्थी कण्डिका ॥ ४ ॥

ततः साम गायेति ब्रह्माणं प्रेष्यति। ततो ब्रह्मा पूर्ववदन्तरेणागत्य वेदिमध्ये सामगानस्थाने पृष्ठतो दक्षिणत उदङ्मुख उपविश्यैन्द्रदेवत्यायां बृहतीच्छन्दस्यायां बृहदिन्द्राय गायतेत्यस्यामृचि साम गायति। यजमानोऽपि तत्रागत्य समीपे उपविशति। तत्र सꣳश्रवसे विश्रवसे सत्यश्रवसे श्रवस इति चत्वारि निधनानि। एतेषामेकैकसामान्ते सर्वे ऋत्विजो निधनं पठन्तो यजमानस्य मूर्द्धानमालभेरन्। संजित्यै विजित्यै सत्यजित्यै जित्यै इत्येतानि चत्वारि क्षत्रियस्य यजमानस्य निधनानि। संपुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्या इति वैश्यस्य यजमानस्य चत्वारि निधनानि। ततः सामान्ते होता ब्रह्मण उत्तरतः पृष्ठत उत्तरेणोपविष्टोऽश्विना तेजसेत्यनुवाकं शंसति।

**सम्पुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्या इति वैश्यस्य ॥५॥ यथाम्नातं वा सर्वेषाम् ॥६॥ आस्ते प्रतिगारिष्यन् ॥७॥ त्रया देवा इति शस्त्रान्ते जुहोति ॥८॥ शेषमृत्विजः प्राणभक्षं भक्षयन्ति प्राणपा म इति ॥९॥ प्रत्यक्षभक्षं यजमानो लोमानि प्रयतिरिति ॥१०॥ स्विष्टकृत्प्रभृत्या बर्हिर्होमात्कृत्वा परिस्रुच्चोपलिप्तान्यादायावभृथवद्गमनम्**

अध्वर्युः प्रथमं होतुरग्रे प्राङ्मुख उपविशति । पृष्ठतो दक्षिणतः शोंसावेत्यभिहुत आवृत्य प्रणवावसानयोरोथामो दैवेति प्रति गृणाति । शस्त्रान्ते ॐमिति प्रतिगरः । प्रदक्षिणावृत्तिः । इतरथावृत्तिश्च । ग्रहोपादानम् । अश्विभ्याᳬ सरस्वत्या इन्द्राय सुत्राम्णेऽनुब्रूहीत्यनु वाचनम् । तत आश्राव्याश्विनौ सरस्वतीमिन्द्रं सुत्रामाणं यजेति प्रैषः । वषट्कृते त्रया देवा इति मन्त्रेण भूः स्वाहेत्यनेन होमः । अनु वषट्कारे तूष्णीं सशेषस्योत्तरार्द्धे होमः । इदमश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्ण इति त्यागः ।

प्रदक्षिणावृत्तीतरथावृत्ती । इदमग्नय इत्यनुवषट्कारः । ततो ग्रहशेषमृत्विजः प्राणभक्षं भक्षयन्ति प्राणपा म इति मन्त्रेण । यजमान ऋत्विज उपह्वयध्वमित्येवमृत्विक्षूपहवं प्रार्थयित्वा लोमानि प्रयतिरिति प्रत्यक्षं भक्षयति । ब्रह्मन्नुपह्वयस्व, होतरुपह्वयस्व, अध्वर्यो, मैत्रावरुण, प्रतिप्रस्थातः, अग्नीदुपह्वयस्वेत्येवम् । ततः स्रुचावन्यहस्तादादाय स्विष्टकृद्यागः । उदकोपस्पर्शनम् ।

पात्रान्तरस्थौ वसाशेषौ वसाहोमहवन्यां समासिच्य दिग्व्याघारणम् । स्रुङ्निधानम् । सञ्चराभ्युक्षणम् । अत्रवा सर्वपशूनां संमर्शनम् । प्राशित्रसमर्पणम् । इडासमर्पणम् । सर्वपशूनां क्लोमादीनां समुच्चयेन दानम् । भक्षणम् । समस्य मार्जनम् । सर्वपशुगुदतृतीयैरुपयड्ढोमः । व्यूहने-अश्विनोः सरस्वत्या इन्द्रस्य वनस्पतेरुज्जिति० । अश्विनौ सरस्वतीन्द्रो वनस्पतिस्तमप नुदन्त्विति । एतावदेव युक्तम् । इतरेषां प्रासङ्गिकत्वात् ।

व्यूहने-अश्विनोः सरस्वत्या इन्द्रस्याश्विनोः सरस्वत्या इन्द्रस्य सुत्राम्ण इन्द्रस्य सवितुर्वरुणस्याश्विनोः सरस्वत्या इन्द्रस्य वनस्पतेरुज्जिति० । अश्विनौ सरस्वतीन्द्राश्विनौ सरस्वतीन्द्रः सविता वरुणोऽश्विनौ सरस्वतीन्द्रो वनस्पतिस्तमपनुदन्त्विति सम्प्रदायः ।

दे० प० ८०

॥११॥ आशूलाभिमन्त्रणात्कृत्वोदकाधिष्ठानप्रभृत्याऽवभृथेष्टेः ॥१२॥ मासरकुम्भं प्लावयति यद्देवा इति ॥१३॥ पूर्ववन्मज्जनम् ॥१४॥ सुमित्रिया न इत्यपोऽञ्जलिनाऽऽदाय दुर्मित्रिया इति द्वेष्यं परि षिञ्चति द्वौ विक्रमा उदङ्गत्वा

---

सह शाखया प्रस्तरानुप्रहरणम् । नोपवेषहोमः । अशाखासंबन्धात् । अत एव तूष्णीं परिवासनम् । सर्वजाघनीभिः पत्नीसंयाजाः । त्रीणि समिष्टयजूंषि । प्रतिप्रस्थाताऽध्वर्युणा सह परिधिप्रक्षेपबर्हिर्होमौ करोति । बर्हिर्होमानन्तरं चात्वालोत्करयोः समीपे वेदिमध्ये स्थित्वा उरुꣳ० हीति वाचनम् । साम गायेति ब्रह्माणं प्रति प्रैषः । ब्रह्मणः सामगानम् । सर्वेषां निधनपाठः ।

ततो वारुणं पुरोडाशमाज्यस्थालीं स्रुक्स्रुवं श्रुतावदानं समिधं दर्भमुष्टिं सुरालिप्तानि पात्राणि क्षीरलिप्तानि च शूलानि परिधानार्थानि वासांसि चादाय चात्वालोत्करावन्तरेण निष्क्रम्यावभृथं कर्तुमपः प्रति गच्छन्ति ।

अर्द्धमार्गे पुनः साम गायेति प्रैषः । सामगानम् । सर्वेषां निधन पाठः । पुनश्चोदकान्त एवमेव सामगानम् । ततः पूर्वशूलान्यादायाध्वर्युरेव जलमध्ये प्रविश्य शुष्कार्द्रसन्धौ सर्वेषां शूलानामुपगूहनं करोति । शुच स्थ तमभि शोचत योऽस्मान् द्वेष्टि यं च वयं द्विष्मो माऽपो मौषधीर्हिꣳ सिष्टेति च विशेषः । ततोऽपामभिमन्त्रणम् । ततो वरुणायेति वाचनादारभ्यावभृथेष्टिसमाप्तिपर्यन्तं सोमवत् कृत्वाऽध्वर्युर्यद्देवा देवहेडनमित्यत आरभ्य ततो वरुण नो मुञ्चेत्यन्तेन सार्द्धेन कण्डिका चतुष्टयेन मासरहुतमप्सु प्लावयति ।

ततोऽवभृथ निचुम्पुणेत्यत आरभ्य सं त्वा विशन्त्वोषधीरुताप इत्यन्तेन मासरकुम्भमुदकमध्ये मज्जयति वोडयति । ततो द्वौ विक्रमा उदीच्यां दिशि गत्वा सुमित्रिया न इति मन्त्रेणाञ्जलिनोदकं गृहीत्वा दुर्मित्रिया न इति मन्त्रेण द्वेष्यं वैरिणं प्रति निषिञ्चति । यस्यां दिशि द्वेष्यो भवति तां दिशं प्रति निषिञ्चतीत्यर्थः ।

ततोऽवभृथवज्जायापत्योरमज्जयतोः स्नानम् । अन्योन्यं पृष्ठप्रक्षालनम् । परिस्रुतलिप्तानामुदके प्रक्षेपः । अन्यवाससः परिधानम् । द्रुपदादिवेति मन्त्रेण परिहितस्य वाससोऽप्सु प्रक्षेपः । उद्वयमित्यग्नीदुन्नयति जलमध्यान्निष्कासयति सर्वान् । अपाम सोममिति जपन्तः पश्चाद्वदलोकनमकुर्वन्तश्चावभृथप्रदेशात् त्रिपशुपूर्वदेशं प्रति सर्वे प्रत्याग-

॥१५॥ अवभृथवत्स्नात्वा वासोऽपासनं द्रुपदादिवेति ॥१६॥ सोमवदुत्क्रमणमागमनं च ॥१७॥ आहवनीयमुपतिष्ठते ऽपोऽ अद्येति ॥१८॥ एधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति॥१९॥ जुहोति च समाववर्त्तीति ॥२०॥ उदवसाय पयस्या मैत्रावरुणी ॥२१॥ तदन्ते पशुरिन्द्राय वयोधसे ॥२२॥ ५ ॥

---

च्छन्ति । ततश्चात्वालोत्करावन्तरेण प्रविश्य यजमानः अपो ऽअद्येति मन्त्रेणाहवनीयमुपतिष्ठते ।

तत एधोऽसीति मन्त्रेण समिधमादाय समिदसीति मन्त्रेण तां समिधमाहवनीयेऽभ्यादधाति । शूलावभृथाङ्गमपि समिदाधानं पृथग् भवतीति याज्ञिकाः । तच्च युक्ततरम् । अतश्च पुनर्देवानामित्याहवनीये समिदाधानम् । पत्न्याश्च गार्हपत्ये तूष्णीं समिदाधानम् । ततः प्रणीताविमोकः । सुराकणानां पशुपुरोडाशकणानां चापासनं तन्त्रेण । ततः पूर्णपात्रनिनयनादि व्रतविसर्गानन्तरं वैष्णव्याहुतिश्चतुर्गृहीतेन मध्यमाहवनीये । तत्र यथाशक्ति दानम् । भागभक्षणादि कर्मापवर्गान्तम् । ततो यजमानः संस्कृत्याज्यं जुह्वा सकृद् गृहीत्वाऽतिप्रणीते समाववर्तीति मन्त्रेणाज्याहुतिं जुहोति । इदमग्नय इति त्यागः ।

तत उत्तरस्या वेदेरुत्तरतः पुनरुद्धृत्यादित्येष्टिः पूर्ववत् । उपांशु देवता । वत्सस्य माता दक्षिणा इति विशेषः । तत्र पूर्वमादित्येष्ट्यां दत्तस्य वत्सस्य मातरं दक्षिणां ब्रह्मण इत्यादि संकल्पः । तत उदवसाय वायोधसपशुदेशस्य पश्चाद्देशे पुनरुद्धृत्याग्न्यन्वाधानं कृत्वा शाखाच्छेदनादि कर्मापवर्गान्ता सकला मैत्रावरुणी पयस्येष्टिः कर्तव्या । तत्राग्न्यन्वाधानानन्तरं शाखाच्छेदपवित्रबन्ध-वत्सापाकरणादि । मित्रावरुणाभ्यां भागमिति विशेषः ।

अत्र प्रोक्षणान्ते प्रोक्षणीरसञ्चरे निधाय कुक्कुटाहननाज्यनिर्वापवेदबन्धनानि कृत्वाऽऽज्यमधिश्रित्य तथैव पर्यग्निकरणं कृत्वा दोहं प्रतापयित्वा तप्ते पयसि दधि प्रक्षिप्यान्वाहार्यमधिश्रित्य वेदिमानादि करोति । प्राणदाने मित्रावरुणौ गच्छ । मित्रावरुणाभ्यामनु० मित्रावरुणौ यजेति प्रधानयागे । मित्रावरुणयोरुज्जितिम् । मित्रावरुणौ तमपनुदताम् । देवतापदमुपांशु । अन्वाहार्यो दक्षिणा । आत्मालम्भोपस्पर्शान्ते वाजिनयागो भक्षान्तः । स्रुग्विमोकानन्तरं वा ।

इत्येकोनविंशस्य पञ्चमी कण्डिका ॥ ५ ॥

सौत्रामण्यामिष्टिपशवो भिन्नतन्त्राः कालभेदात् ॥१॥ सप्तदश सामिधेन्यः ॥२॥ वार्त्रघ्नावाज्यभागौ ॥३॥ वृधन्वन्तौ वा पशुषु सान्नाय्यविकारात् ॥४॥ आमिक्षायां च ॥५॥ उपांꣳशुदेवतेष्टिषु ॥६॥ विराजौ संयाज्ये अविशेषोपदेशात् ॥७॥ वसिष्ठशुनकानां नाराशꣳसः ॥८॥ अत्रीणां चैके ॥९॥ प्राकृताः प्रथमोत्तमयोः प्रयाजानुयाजप्रैषाः ॥१०॥ ऐन्द्रानेके प्रथमस्य वायोधसानुत्तमस्य ॥११॥ समिद्धऽ इन्द्र इत्याप्रियः प्रथमस्य ॥१२॥ याज्यानुवाक्याश्च वपापुरोडाशपशूनामायात्विन्द्र इति ॥१३॥ होता यक्षत्समिधाग्निमिति प्रयाजप्रैषास्त्रिपशोः॥१४ आप्रियश्च समिद्धोऽ अग्निरश्विनेति ॥१५॥अश्विना हविरिति तिस्रो वपानां याज्यानुवाक्याः ॥१६॥ प्रथमामनूच्य द्वितीया याज्या द्वितीयामनूच्य तृतीया याज्या तृतीयामनूच्य प्रथमा याज्या ॥१७॥ यऽ इन्द्र इति पुरोडाशानां पूर्ववत् ॥१८॥ अश्विना गोभिरिति च हविषाम् ॥१९॥ ग्रहाणां युवꣳ सुरामं पुत्रमिवेति ॥२०॥ पशुस्विष्टकृतो यस्मिन्नश्वासोऽहाव्यग्न इति॥२१॥होता यक्षदश्विनाविति त्रयो वपानां याज्या यथालिङ्गम् ॥२२॥ ग्रहाणां चतुर्थः ॥२३॥ हविषामुत्तरे यथालिङ्गम्॥२४॥ उत्तमौ वनस्पतिस्विष्टकृतोः॥२५॥प्रतिगरिष्यत्युपविष्टेऽध्वर्यो शोꣳसावेत्याहूयाश्विना तेज-

---

तस्याः पयस्याया अन्ते त्रिपशुदेशमुत्तरेण इन्द्राय वयोधसे पशुर्भवति । तत्र सर्वं निरूढपशुवत् । तत्र वायोधसपश्वर्थमित्युद्धरणे । वायोधसपशुनाऽहमिति वरणे । नियोजने इन्द्राय वयोधसे जुष्टम् । प्रोक्षणे च । इन्द्रं वयोधसं गच्छेति प्राणदाने । सर्वत्र देवतापदमुपांशु । "ऐन्द्रः सुत्रामणः प्रथमो वायोधसश्च"इत्युक्तत्वात् । इन्द्राय वयोधसे छागस्य वपायै, छागस्य वपां मेदः प्रस्थित प्रैषौ । अष्टाकपालः पशुपुरो-

सेत्यनुवाकः शास्ति ॥२६॥ त्रिः प्रथमान्त्ये ॥२७॥ तृचादिष्वाहूय॥२८॥ उत्तमां शिष्ट्वा प्राङ् नवम्या दशम्या वा त्रया देवा इति निवित्सप्तदशावसावसानोङ्कार ऋगन्ते ॥२९॥ अन्त्येऽक्षरे स्वरप्रभृति प्रणवे लोपः ॥३०॥ तस्मिन्प्रणवान्तं चैके ॥३१॥६॥

अश्विना तेजसाऽश्विना पिबतामिति याज्यानुवाक्ये सशस्त्रस्य ॥१॥ अनुवाचनप्रैषौ समस्याऽनुयाजप्रैषा देवं बर्हिरिति ॥२॥ याज्याश्च ॥३॥ अग्निमद्येति सूक्तवाकप्रैषः ॥४॥ प्राकृतः सूक्तवाकप्रभृति प्रागवभृथेष्टेः ॥५॥ अनुक्तं च ॥६॥ इमं मे तत्त्वेत्येककपालस्य ॥७॥ अग्नीवरुणयोस्त्वन्नः स त्वमिति ॥८॥ आदित्यस्य सुत्रामाणं महीमू षु मातरमिति ॥९॥ आ नः प्र बाहवेति पयस्यायाः ॥१०॥ वाजिनस्य शन्नो ञ्वाजे वाज इति॥११॥ अनवानं याज्या ॥१२॥ वायोधसाग्रियः समिद्धोऽ अग्निः समिधेति ॥१३॥याज्यानुवाक्याश्च वपापुरोडाशपशूनां वसन्तेनऽ ऋतुनेति ॥१४॥७॥

---

डाशः । तद्यागे इन्द्राय वयोधसे पुरोडाशस्यानु० पुरोडाशं प्रेष्येति । हविषां यागे इन्द्राय वयोधसे छागस्य हविषोऽनु० । छागस्य हविः प्रेष्येति । इदमिन्द्राय वयोधस इति वपादिषु त्यागः । व्यूहने-इन्द्रस्य वयोधसो वनस्पतेरुज्जिति० । इन्द्रो वयोधा वनस्पतिस्तमपनुदतामिति । निरूढवद्दक्षिणा । शेषं च सर्वम् । ततः कर्मापवर्गान्ते षट् शतानि ब्राह्मणान् भोजयेत् । "षट् शतानि सुराक्रये" इति वचनात् । तत्र प्रयोगः । अस्याः सौत्रामण्याः समृद्ध्यर्थं यथासम्पन्नेन तृप्तिपर्यन्तभोजनपर्याप्तेनान्नेन षट् शतानि ब्राह्मणानहं तर्पयामि । कर्मसमृद्धिरस्तु ।

इत्येकोनविंशस्य षष्ठी सप्तमी च कण्डिका ॥ ६ ॥ ७ ॥

इति याज्ञिकदेव कृतायां कात्यायनपद्धतौ सौत्रामणी समाप्ता ॥

समाप्तश्चैकोनविंशोऽध्यायः ॥ १९ ॥

# अथ विंशोऽध्यायः ।

राजयज्ञोऽश्वमेधः सर्वकामस्य ॥१॥ अष्टम्यां नवम्यां वा फाल्गुनीशुक्लस्य ॥२॥ ग्रीष्मऽ एके ॥३॥ ब्रह्मौदनं पचति चतुर्णां पात्राणामञ्जलिप्रसृतानां च ॥४॥ अक्त्वैनमाद्यर्त्विग्भ्यः प्रयच्छति ॥५॥ तेभ्यश्चत्वारि सहस्राणि ददाति शतमानांश्च तावतः॥६॥ अक्त्वाऽऽज्यशेषेण रशनां द्वादशारत्निं त्रयोदशारत्निं वा निदधाति ॥७॥ आदानकाले वाऽञ्जनम् ॥८॥ निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति ॥९॥ वाचं यच्छेति ॥१०॥ आ वरदानाद्वाग्यमनम् ॥११॥ पत्न्यश्चायन्त्यलङ्कृता निष्किण्यो महिषी वावाता परिवृक्ता पालागली सानुचर्यः शतेन शतेन ॥१२॥ राजदुहितरः प्रथमायाः ॥१३॥ राजन्यानां द्विती-

---

श्रीगणेशायनमः ।

अथाश्वमेधपद्धतिलिख्यते ।

सर्वकामस्य राज्ञोऽश्वमेधयज्ञो भवति । तस्य प्रारम्भः फाल्गुनशुक्लाष्टम्यां नवम्यां वा भवति । ग्रीष्मऋतौ वा शुक्लाष्टम्यां नवम्यां वा । तत्र प्रथमं मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम् । ततो गार्हपत्ये ब्रह्मौदनपचनम् । तत्र प्रथममध्वर्युः कस्मिंश्चित्पात्रे आनडुहे चर्मणि वा तण्डुलानां चत्वारि पात्राणि निर्वपति । ततश्चतुरोऽञ्जलीन् निर्वपति । ततश्चतुरः प्रसृतान्निर्वपति । प्रसृतश्चैकैकहस्ताङ्गुलिकोशः ।

ततः स्थाल्यां तण्डुलानाप्य त्रिः प्रक्षाल्य गार्हपत्येऽधिश्रित्य श्रपयित्वोद्वास्याज्येन तमनक्ति । आज्यशेषस्य रशनाञ्जनार्थं यत्नेन रक्षणम् । ततस्तमक्तं ब्रह्मौदनमाद्यर्त्विग्भ्यो ब्रह्मोद्गातृहोत्रध्वर्युभ्यो यजमानः प्रयच्छति ।

ततस्ते महर्त्विजश्चत्वारोऽपि यजमानार्पितं तं ब्रह्मौदनं प्राश्नन्ति । ततः प्राशनानन्तरं यजमानस्तेभ्यश्चतुर्भ्यश्चत्वारि सहस्राणि गा ददाति । प्रत्यृत्विजमेकैकं सहस्रम् । तथा चत्वारि सुवर्णानि शतमानानि । प्रत्येकमेकैकम् । रक्तिकाशतेन शतमानम् । आज्यशेषेणाश्वरशनाया आदानकाल एवाञ्जनम् ।

यायाः ॥१४॥ सूतग्रामण्यां तृतीयायाः ॥१५॥ क्षात्रसंग्रहीतॄणां चतुर्थ्याः ॥१६॥ अग्न्याधेयवत्प्रविश्य हुतेऽग्निहोत्रेऽपरेण गार्हपत्यमुदक्शिराः संविशत्यूर्वन्तरे वावातायां ब्रह्मचारी ॥१७॥ इतराश्चानवक् ॥१८॥ प्रातराहुत्याꣳ हुतायां पूर्णाहुत्यन्ते वरदानं ब्रह्मणे ॥१९॥ अध्वर्यवे च प्रतिमुक्तं निष्कम् ॥२०॥ पुरोडाशोऽग्नये पथिकृते ॥२१॥ शतमानं दक्षिणा सौवर्णम् ॥२२॥ हिरण्यपरिमाणोऽन्यत्रापि ॥२३॥ पौष्णं चरुं निर्वपति वासःशतं दक्षिणा ॥ २४ ॥ देवस्य त्वेति रशनामादाय ब्रह्मन्नश्वं भन्त्स्यामीत्याह ॥२५॥ तं बधानेति ब्रह्माऽ-

---

ततोऽध्वर्युर्यजमानकण्ठे निष्कप्रतिमोकं कुर्वन् तेजोऽसि शुक्रममृतमायुष्पा आयुर्मे पाहीत्यन्तं मन्त्रं यजमानं वाचयति । चतुर्भिः सुवर्णैरेको निष्कः । ततोऽध्वर्युः वाचं यच्छेति यजमानं प्रेष्यति । अत आरभ्य प्रातर्वरदानपर्यन्तं यजमानस्य वाग्यमनं भवति ।

ततोऽनुचरीभिर्दासीभिः सहिताश्चतस्रः पत्न्योऽलङ्कारयुक्ता निष्कं बिभ्राणास्तत्र यजमानसमीपे आयान्ति । प्रथमा महिषी प्रथमपरिणीता स्त्री । द्वितीया वावाता यजमानस्य वल्लभा । तृतीया परिवृक्ता यजमानस्यावल्लभा । चतुर्थी पालागली । पालागलो दूतः तस्य पुत्री । चतसृणामपि प्रत्येकं शतं शतमनुचर्यो भवन्ति ।

तासां विवेकः । शतं राजपुत्र्यो महिष्या अनुचर्यः । क्षत्रियजातिमात्रपुत्र्यो वावातायाः । सूतग्रामण्या दुहितरस्तृतीयायाः परिवृक्तायाः । क्षत्रियात् ब्राह्मण्यां जातः सूतोऽश्वसारथिर्वा । अश्वपोषको वा । ग्रामणीर्महत्तरः । क्षात्रसंग्रहीतॄणां दुहितरश्चतुर्थ्याः पालागल्याः । क्षत्ता प्रतिहारो दूतो वा । संग्रहीता सारथिः । एवं सानुचरीणामलङ्कृतानां निष्काभरणयुक्तानां पत्नीनामागमनानन्तरं यजमानस्ताभिः पत्नीभिः सहाग्न्यागारं प्रविशति । तत्र यजमानः पूर्वद्वारेण प्रविशति । दक्षिणेन पत्न्यः ।

ततः सायमग्निहोत्रे हुते गार्हपत्यस्य पश्चाद्वावातोदक्शिराः शेते । वावाताया ऊर्वोरन्तराले यजमान उदक्शिराः शेते । तत्र एवंविधस्थाने

नुज्ञातोऽभिधाऽ असीति बध्नात्यश्वं त्रिरूपम् ॥२६॥ सर्वरूपं वा ॥२७॥ शीघ्रम् ॥२८॥ दक्षिणधुर्यसमम् ॥२९॥ साहस्रम् ॥३०॥ ललामम् ॥३१॥ कृत्तिकाञ्जि वा ॥३२॥ पूर्वकायकृष्णः शुक्लापरम् ॥३३॥ कृष्णसारङ्गं वा ॥३४॥ स्थावरा अपो गत्वा प्रजापतये त्वेति प्रोक्षत्यश्वं प्रतिमन्त्रम् ॥३५॥ आयोगवमाह श्वानं चतुरक्षमभिहन्यस्वेति ॥३६॥

---

कामोद्दीपकस्थाने सुप्तोऽपि ब्रह्मचारी भवति। इतराः पत्न्यः परितः शेरते। एवं रात्रिमतीत्य प्रातरग्निहोत्रं जुहोति।

ततोऽध्वर्युः पूर्णाहुत्यर्थमाहवनीयमुद्धृत्याज्यं संस्कृत्य परिस्तरणसमिदाधानपूर्वकमाहवनीये पूर्णाहुतिं जुहोति। मन्त्रान्तरानुपदेशात् स्वाहाकारमात्रेण। "एवं सर्वत्र स्वाहे"त्याधाने उक्तत्वात्। देवता चात्र प्रजापतिः। अनिरुक्तत्वात्। ततो यजमानो ब्रह्मणे वरं ददाति वरं ददामि ब्रह्मण इति मन्त्रेण।

ततो वाग्विसर्गः। पूर्वदिने यः कण्ठे प्रतिमुक्तो निष्कस्तमध्वर्यवे ददाति। ततः पुनरुद्धृत्याग्नये पथिकृतेऽष्टाकपालः पुरोडाशोऽग्न्यन्वाधानादिकर्मापवर्गान्तः। अत्र सौवर्णं शतमानं दक्षिणा। रक्तिकाशतेन शतमानं भवति।

ततस्तदानीमेव पुनरुद्धृत्य पौष्णश्चरुरग्न्यन्वाधानादिकर्मापवर्गान्तः। तत्र शतं वासांसि दक्षिणा। ततो ब्रह्मौदनाञ्जनावशिष्टेनाज्येनाश्वस्य रशनामनक्ति। रशना च द्वादशारत्निस्त्रयोदशारत्निर्वा दर्भमयी भवति। ततोऽध्वर्युः देवस्य त्वा स० "भ्यामाददे" इमामगृभ्णन्रशनामित्यनेन मन्त्रेण तामक्तां रशनामादत्ते।

ततो ब्रह्मन्नश्वं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति ब्रह्माणं पृच्छति। ततो ब्रह्मा तं बधान देवेभ्यः प्रजापतये तेन राध्नुहीति। ततो ब्रह्मणाऽनुज्ञातोऽध्वर्युरभिधाऽ असि भुवनमसीति मन्त्रेण स्वगा त्वा देवेभ्यः प्रजापतय इत्यन्तेन रशनायामश्वं बध्नाति। कीदृशमश्वम्। त्रिरूपम्। पूर्वार्द्धः कृष्णः। अपरार्द्धः शुक्लः। ललाटे कृत्तिकाशकटाकाराणि पौण्ड्राणि इत्येवं वर्णत्रयोपेतम्। सर्वरूपं वा नानाविधवर्णम्। शीघ्रमतिशयितवेगयुक्तम्। तथा दक्षिणधुर्यसमम्। यस्मिन् दक्षिणस्यां धुरि युक्ते सति सव्यधुरि योजनार्थमन्यः पृथिव्यामश्वो न भवति स दक्षिणधुर्यसमः।

पुँश्चलूमेके ॥३७॥ सिध्रकमुसलेनैनर्ठं० हन्ति ॥३९॥१॥

योऽ अर्वन्तमिति वाचयति ॥१॥ वेतसकटे-नाधाऽश्वं प्लावयति परो मर्त इति ॥२॥ अग्नि-समीपमानीयाऽग्नये स्वाहेति जुहोत्यनुवाकेन प्रतिमन्त्रम् ॥३॥ सहस्रं वाऽऽवर्तम् ॥४॥ आऽश्वस्रवणनिरमणाद्वा ॥५॥ द्वादश कपालान्निर्वपति भिन्नतन्त्राञ्छतमानदाक्षि-

---

अथवा दक्षिणधुर्येण समः सदृशस्तुल्यबलः सव्यधुरि योजनार्हः द-क्षिणधुर्यसमः तम्। तथा साहस्रम् गवां सहस्रमूल्यभूतेन लभ्यम्। तथा ललामम् । नीलवर्णलाञ्छनयुक्तम् । तथा कृत्तिकाञ्जिम् । कृत्तिका शक-टमिव यस्य ललाटे पौण्ड्रम् । तथा पूर्वकायकृष्णम् । शरीरस्य पूर्व-भागे कृष्णवर्णम् । तथा शुक्लापरम् । शरीरस्यापरभागे शुक्लवर्णम् । कृष्णसारङ्गं वा । कृष्णं वर्णं वर्णान्तरेण मिश्रितम् । एवंविधमश्वं रशनया बध्नाति ।

ततस्तडागादिस्थाः स्थावरा अपो गत्वा प्रजापतये त्वेति प्रतिमन्त्र-मश्वं पञ्चकृत्वः प्रोक्षति । ततोऽध्वर्युः श्वानं चतुरक्षं हन्यस्वेत्यायो-गवं प्रत्याह । "शूद्रादायोगवं वैश्या जनयामास वै सुतमि"ति याज्ञवल्क्यो-क्तेः शूद्राद्वैश्यायां जात आयोगवः । शुनश्चतुरक्षत्वं गर्त्तचतुष्टययोगे-नेति याज्ञिकाः । चतुरक्षस्याभावाद्यस्याक्षिसमीपे पौण्ड्राणि स गुणवृत्त्या चतुरक्ष इति कर्कः ।

एकेऽनेन प्रैषेण पुंश्चलूं प्रेषयन्ति । पुंश्चलुः स्त्रीलोलुप उच्यत इति कर्को याज्ञिकाश्च । ततः प्रेषित आयोगवः पुंश्चलूर्वा सिध्रकवृक्षोद्भवेन मुसलेन श्वानं हन्ति मारयति ।

इति विंशस्य प्रथमा कण्डिका ॥ १ ॥

---

ततोऽध्वर्युर्योऽर्वन्तमित्यमुं मन्त्रं यजमानं वाचयति । ततो वेत-सकटेन तमश्वस्याधस्ताज्जलमध्ये परो मर्त इति मन्त्रेण मारिताश्वानं प्ला-वयति तारयति । ततोऽश्वमग्निसमीपमानीयाहवनीयमुद्धृत्याज्यं संस्कृ-त्य परिस्तरणसमिदाधाने कृत्वा अग्नये स्वाहेत्यनुवाकेन प्रतिमन्त्रं सकृ-द् गृहीतमाज्यमाहवनीये जुहोति । एवं दशाहुतयो भवन्ति ।

अथवेममनुवाकं पुनः पुनरावृत्य सहस्रमाहुतीर्जुहोति । अथवा सहस्रस्य न नियमः। अश्वस्रवणविरमणं यावदाहुतीनामावृत्तिः कार्या । यावत्कालं क्लिन्नादश्वादुदकं स्रवति तावदित्यर्थः ।

णान्मध्यमस्य राजतः, सावित्रे प्रसावित्रे, सावित्र आसवित्रे, सवित्रे सत्यप्रसवायेति ॥६॥ प्रयाजेषु दक्षिणतो ब्राह्मणो यजमानस्य यज्ञदानयुक्ताः स्वयंकृतास्तिस्रो गाथा गायत्युत्तरमन्द्रायाम् ॥७॥ राजन्यो धृतिषु युद्धजययुक्ताः ॥८॥ अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतो विभूर्मात्रेति ॥९॥ पशुवदुत्सर्जनं निरष्टे ऽश्वशते ॥१०॥ देवा आशापाला इति रक्षणोऽस्यादिशत्यनुचरीजातीयांस्तावतस्तावतः कवाचिनिषङ्गिकलापिदाण्डिनो यथासंख्यम् ॥११॥ वडवाभ्यो वारणम् ॥१२॥ प्रस्तेयाच्चोदकात् ॥१३॥ ब्राह्मणोऽश्वमेधेऽविद्वान्धृतिः स वः ॥१४॥

---

ततः पुनरुद्धृत्य सवित्रे प्रसवित्रे द्वादशकपालः पुरोडाशोऽग्न्यन्वाधानादिकर्मापवर्गान्तः। तत्र सौवर्णं शतमानं दक्षिणा।

ततः प्रयाजेषु हूयमानेषु विहारस्य दक्षिणत उपविष्ट एको ब्राह्मणोऽवृत एवर्त्विग्व्यतिरिक्तोऽयं यजमान इत्थं यज्ञैरिष्टवान् इत्थमदात् इत्थं तुलादीनि दानानि दत्तवानित्येवं यजमानस्य यज्ञकरणात् धनादिदानकीर्तियुक्ताः स्वयंकृतास्तिस्रो गाथा उत्तरमन्द्रासंज्ञायां गायनप्रसिद्धायां वीणायां गायति। उत्तरमन्द्राशब्देन गायनप्रसिद्धा वीणोच्यते।

ततः पुनरुद्धृत्य सवित्रे प्रसवित्रे द्वादशकपालोऽग्न्यन्वाधानादिकर्मापवर्गान्तः। तत्र राजतशतमानं दक्षिणा। प्रयाजेषु गानं पूर्ववत्। ततः पुनरुद्धृत्य सवित्रे सत्यप्रसवाय द्वादशकपालोऽग्न्यन्वाधानादि कर्मापवर्गान्तः। तत्र प्रयाजेषु ब्राह्मणस्य पूर्ववद्गानम्। सुवर्णशतमानं दक्षिणा।

ततस्तृतीयायाः सावित्र्याः समाप्त्यनन्तरमध्वर्युयजमानावुत्थाय विभूर्मात्रेति मन्त्रमश्वस्य दक्षिणे कर्णे स्वरेण जपतः। तत उभौ ईशान्यां दिशि स्थापितस्य निरष्टस्य निरमणस्याश्वशतस्य मध्येऽश्वमुत्सृजतः। अश्वस्य दन्तगतानि वयोव्यञ्जनानि भवन्ति। तेषामेकैकं त्रीणि वर्षाण्यनुवर्तन्ते। तान्यष्टौ व्यञ्जनानि गतान्यस्मादिति निरष्टम्। अतीतचतुर्विंशतिवर्षमित्यर्थः। निरयते रमतेऽस्मिन्निति निरमणम्।

ततोऽध्वर्युर्देवा आशापाला इति मन्त्रेणाश्वस्य चतुःशतसंख्यान् रक्षकानादिशति। कीदृशान् अनुचरीजातीयान्। तथा क्रमेण कवचिनिषङ्गि-

**पक्वान्नं च सर्वेषु ॥१५॥ रथकारगृहवासाश्च ॥१६॥ अभिषेक्या भविष्यत समाप्नुवन्त इत्याह राजपुत्रान् ॥१७॥ दक्षिणतो वेदेर्हिरण्मयेषूपविशन्ति ॥१८॥ अध्वर्युयजमानौ कूर्चयोः ॥१९॥ फलकयोर्वा ॥२०॥ होतृब्रह्मोद्गातारः कशिपुषु ॥२१॥ होतर्भूतान्याचक्ष्व भूतेष्विमं यजमानमध्यूहेति ॥२२॥२॥**

---

कलापि दण्डिनः। तेषां विवेकः। शतं राज्ञः पुत्राः कवचिनः सन्नाहयुक्ताः। शतं क्षत्रियजातीनां पुत्रा निषङ्गिणः। खड्गिन इति हरिस्वामिनः। खड्गपाणय इति वासुदेवः।

तथा शतं सूतग्रामण्यां पुत्राः कलापिनः इषुपर्षिणः। इषुं साधु पर्षन्ति अस्यन्तीति इषुपर्षिणः। तथा शतं क्षात्रसंगृहीतॄणां पुत्रा दण्डिनः दण्डधारिणः। क्षत्तारः आयव्ययाध्यक्षास्तेषां समूहः क्षात्रम्। संगृहीतारः स्वभृताः। क्षात्रं च संगृहीतारश्च तेषां पुत्राः। एवंविधा रक्षिण उपदिशति। युष्माभिरश्वस्य वडवाभ्यो वारणं कर्त्तव्यम्।

तथा प्रस्नेयात्स्नानार्हादुदकाच्चाश्वस्य वारणं कार्यम्। तथा यो ब्राह्मणोऽश्वमेधविषयेऽविद्वान् अश्वमेधयज्ञविषयमाध्वर्यव हौत्रौद्गात्रादिकं किमपि न जानाति स ब्राह्मणो वो युष्माकं वृत्तिर्जीवनोपायः। बलात्कारेण तद्गृहात् धनान्नादि गृहीत्वा युष्माभिरशनादिकं कर्तव्यमित्यर्थः। पक्वान्नमोदकादि यूपसक्तुतण्डुलपिष्टादिकमश्वमेधविद्भ्योऽपि ग्राह्यम्।

तथा यूयं रथकारगृहवासाश्च भवत। युष्माभिः अश्वसहितः सूत्रकारस्य गृहे रात्रौ वासः कर्त्तव्य इत्यर्थः। तथा समाप्नुवन्तः एवंविधनियमजातं परिपालयन्तो यूयमभिषेक्या भविष्यथ। पट्टाभिषेकार्हा राजानो भविष्यथेत्येवमध्वर्युस्तान् राजपुत्रान् प्रति ब्रवीति।

ततस्तैः सर्वै रक्षकैः निरष्टाश्वशतमिश्रोऽश्वः संवत्सरं यावदप्रत्यावर्त्तयद्भिर्महता प्रयत्नेन रक्षणीयः। वडवागमनादिभ्यो वारणं च कार्यम्। अभिषेक्या भविष्यथ समाप्नुवन्त इत्ययमध्वर्यो राजपुत्रान् प्रति प्रैषः।

ततः सावित्रवेदेर्दक्षिणतोऽध्वर्य्वादयः सुवर्णमयेष्वासनेषूपविशन्ति। तत्र व्यक्तिः। अध्वर्युयजमानौ सौवर्णयोः कूर्चयोरुपविशतः। सौवर्णयोः फलकयोर्वा। सपादमासनं कूर्चः। अपादमासनं फलकम्। होतृब्रह्मोद्गातारः कशिपुषूपविशन्ति। कशिपुर्मसूरकः।

इति विंशस्य द्वितीया कण्डिका ॥ २ ॥

पारिप्लवं प्रेष्यति ॥१॥ हवै होतरिति प्रतिगृह्णाति तदन्ते प्रेष्यति वीणागणगिनो राजर्षिभिर्यजमानꣳ सङ्गायतेति ॥२॥ दक्षिणाग्नौ जुहोति हिङ्काराय स्वाहेति प्रक्रमान् ॥३॥ आहवनीयेऽस्तमिते चतस्रो धृतीरिह रन्तिरिति ॥४॥ वावातासम्वेशनसावित्र्युत्तरमन्द्रागानपारिप्लवधृतीः सम्वत्सरम् ॥५॥ अर्धमासमासत्रैमास्यष-

---

ततो होतर्भूतान्याचक्ष्व भूतेष्विमं यजमानमभ्यूहेति प्रैषेण पारिप्लवशस्त्रशंसनार्थं होतारं प्रेष्यति । तत्रैवं प्रेषितो होता पारिप्लवमाख्यानं कथयिष्यन्नध्वर्यो इत्येवमध्वर्युं प्रति ब्रवीति । अध्वर्युरेवमुक्तो हविर्होतरिति गृणाति । तस्य पारिप्लवाख्यानस्यान्तेऽध्वर्युः समीपोपविष्टान् वीणागणगिनः प्रेष्यति । वीणागणगिनो राजर्षिभिर्यजमानं संगायतेत्येवम् ।

शतपथे तु पुराणैरिमं यजमानं राजभिः साधुकृद्भिः सङ्गायतेत्येवं प्रैष आम्नातोऽस्ति । ततस्ते प्रेषितास्तथैव गायन्ति । ततोऽध्वर्युः प्रक्रमहोमार्थं दक्षिणाग्निमुद्धृत्याज्यं संस्कृत्य परिस्तरणं समिदाधानं च कृत्वा सकृत्सकृदाज्यं गृहीत्वा हिंकाराय स्वाहेति प्रतिमन्त्रं दक्षिणाग्नौ जुहोति ।

ततोऽस्तमिते सूर्ये अग्निहोत्रहोमात् प्राक् आज्यं संस्कृत्य परिस्तरणं समिदाधानं च कृत्वा अग्निहोत्रार्थमुद्धृत एवाहवनीये सकृद् गृहीत्वा गृहीत्वेह रतिरित्यादिभिः प्रतिमन्त्रं चतस्रो धृतीर्जुहोति । इह रतिः स्वाहेति प्रथमाम् । इह रमध्वं स्वाहेति द्वितीयाम् । इह धृतिः स्वाहेति तृतीयाम् । इह स्वधृतिः स्वाहेति चतुर्थीमिति । इदमग्नय इति सर्वत्र त्यागाः ।

इह रतिराग्नेयानि चत्वारीत्युक्तत्वात् । एतासु धृतिषु हूयमानासु राजन्यः क्षत्रियो दक्षिणत उपविश्यायं राजा इत्ययुध्यत एवं युद्धं कृतवान् इत्येवममुं संग्रामं जितवानित्येव यजमानस्य युद्धजये युक्ताः स्वयं कृतास्तिस्रो गाथा उत्तरमन्द्रासंज्ञायां वीणायां गायति ।

ततः सायमग्निहोत्रहोमः । पूर्णाहुत्याद्येतत्पर्यन्तं कर्मैकस्मिन्नहनि क्रियते ।

अथ संवत्सरपर्यन्तं प्रतिदिनं कर्त्तव्यमुच्यते । वावातायाः सह यजमानस्य पूर्वोक्तप्रकारेण शयनम् । सावित्र्यस्तिस्र इष्टयः । उत्तरम-

**णमास्याग्निं चैके ॥६॥ वीणागाथिभ्यां पृथक् शते ददाति ॥७॥ राजर्षिभिः सञ्ज्ञायनमा दीक्षणीयायाः ॥८॥ दीक्षान्ते देवैरौपवसथ्यात् ॥९॥ पश्वादौ प्रजापतिना सुत्यासु ॥१०॥ अन्ते च ॥११॥ अश्वापदीज्या चरुभिः सावित्र्यन्ते ॥१२॥ पौष्णः स्रामे ॥१३॥ सौर्योऽक्ष्यामये ॥१४॥ वारुणोऽप्सु मृते ॥१५॥ भूमिकपालो वैश्वानरोऽरिष्टया-**

---

न्द्रागानं पारिप्लवाख्यानं धृतिहोमश्च । एतानि सर्वाणि संवत्सरं यावत् क्रियन्ते ।

तत्राश्वमेधस्याष्टम्यां प्रारम्भपक्षे वावातासंवेशनसावित्र्युत्तरमन्द्रागानानामागामिनि वर्षे सप्तम्यां समाप्तिः । नवम्यां प्रारम्भपक्षे चाष्टम्यां समाप्तिः । पारिप्लवाख्यानधृतिहोमयोः सावनसंवत्सरः । "षट्त्रिंशतं दहानाचष्ट" इति श्रुतेः । धृतिहोमेषु "संवत्सरमाहुतीर्जुहोति षोडश नवतीरि"ति श्रुतेश्च ।

अतस्तयोस्त्रयोदश्यां चतुर्दश्यां वा परिसमाप्तिरिति कर्क सम्प्रदायकारौ । साहचर्यात् सर्वेषामपि सावन एव संवत्सर इति हरिस्वामिनः । सम्वत्सरश्चात्राश्वोत्सर्गदिनादारभ्य गणनीयो न ब्रह्मौदनदिनात् । कुतः "सम्वत्सरमश्वं रक्षन्ती"ति अश्वस्य प्रकृतत्वात् ।

केचिदर्द्धमासमेव वावातासंवेशनादीनि कुर्वन्ति मासं वा । मासत्रयं वा । षण्मासान्तं वा । ततो वीणागाथिभ्यां ब्राह्मणक्षत्रियाभ्यां पृथक् पृथक् गवामेकैकं शतं ददाति । ब्राह्मणस्य सावित्रीष्ट्यन्ते, राजन्यस्य धृतिहोमान्ते । पारिप्लवस्य सम्वत्सरे पूर्णेऽपि षष्ठदीक्षणीयापर्यन्तं यजमानस्य राजर्षिभिः सह सञ्ज्ञायनप्रैषो भवति । पञ्चमीपर्यन्तं प्रत्यहं तस्मिन्नेव काले सञ्ज्ञायनं च ।

अथाश्वस्य रोगोत्पत्त्यादौ प्रायश्चित्तान्युच्यन्ते । तत्र सावित्रीष्टिमध्येऽपि निमित्तपरिज्ञाने सावित्रीष्ट्यन्त एव नैमित्तिकानि भवन्ति । तत्राश्वस्य स्रामे उत्पन्ने पौष्णश्चरुरुद्धरणादिकर्मापवर्गान्तः प्रकृतिवद्भवति । स्रामः सिंघाणकसंज्ञोऽश्वरोगविशेषः शालिहोत्रे प्रसिद्धः । तथाऽक्ष्यामये अक्षिरोगे सौर्यश्चरुर्भवति । तथा उदकमध्येऽश्वे मृते वारुणो यवमयश्चरुर्भवति । तथा भूमिकपालो वैश्वानरोऽरिष्टयामये । अरिष्टयामयोऽन्तामयो व्राण्यामयसंज्ञोऽश्वचिकित्साशास्त्रे शालिहोत्रे प्रसिद्ध इति कर्कः ।

मये ॥१६॥ लोष्टकपालं जातूकर्ण्यो भेदात् ॥१७॥ नाशे तन्त्रेण द्यावापृथिव्यः पयो वायव्यः सौर्यः ॥१८॥ अन्यत्रापि ॥१९॥ प्रजाते वायव्यम् ॥२०॥ ॥ ३ ॥

मृतादर्शनयोरन्यस्य रशनादानादि करोत्यश्वयुक्तम् ॥१॥ पश्वालम्भनाद्याऽऽध्वरदीक्षणीयायाः कृत्वा चत्वार्यौदूग्रभणानि जुहोत्याध्वरिकाणि ॥२॥ काय

---

हरिस्वामिनस्तु अक्षतस्यैवाश्वस्यामयो रोगो ज्वरादिस्ततामय इत्याहुः । रिष्टिरायुधं प्रहरणं तत्कृत आमयो रिष्टयामयः । न रिष्टयामयोऽरिष्टयामयो ज्वरादिरिति याज्ञिकाः । अत्र पुरोडाशो भूमौ श्रप्यते । तत्र च तत्प्रदेशे हस्तं स्पृष्ट्वा द्वादशकपालान्युपधीयन्ते "वैश्वानरं द्वादशकपालं भूमिकपालमि"ति वचनात् ।

तत्र चाङ्गाराणां प्राचः करणं सव्याशून्येऽङ्गारनिधानमभ्यूहनं चेत्येतावद्भवति । भूमिकपाल एवेति सम्प्रदायः । भूमिकपालो लोष्टकपालो वेति हरिस्वामिनः । लोष्टकपाल एवेति याज्ञिकाः । तथाऽश्वस्य नाशे एकतन्त्रेण त्रीणि हवींषि भवन्ति । द्यावापृथिवीय एककपालः पुरोडाशः वायव्यं पयः सौर्यश्चरुः । तत्र शाखाच्छेदनादयो विशेषाः सान्नाय्येष्टिवत् ।

तथाऽश्वे प्रजाते वडवायोनौ कृतरेतःस्कन्दने वायव्यं पयो भवति । अत्रापि शाखाच्छेदनानि सान्नाय्येष्टिवत् ।

इति विंशस्य तृतीया कण्डिका ॥ ३ ॥

---

अत्राश्वे मृते नष्टे चान्यं तादृशमेवाश्वमानीय रशनादानाद्यश्वयुक्तं सर्वं कर्म करोति । तत्र प्रथमं रशनाञ्जनं लौकिकाज्येन । ततो मन्त्रेणादानम् । ब्रह्मन्नश्वमिति प्रैषः ।

ब्रह्मानुज्ञातस्याश्वबन्धनम् । अपः प्रतिनयनम् । प्रोक्षणम् । श्वानहननम् । प्लावनम् । अग्नये स्वाहेति होमः । कर्णे जपः । उत्सर्गः । प्रक्रमहोमः । धृतिहोमा यावन्तो गतास्ते सर्वे आवर्तन्ते । इति प्रायश्चित्तानि ।

अथ सम्वत्सरे पूर्णे इष्टकापश्वादिकरणम् । तत्र फाल्गुनारम्भपक्षे आगामिनि वर्षे फाल्गुन्यां पौर्णमास्यां प्राजापत्य एवेष्टकापशुः । "प्राजापत्यमालभ्योत्सीदन्तीष्ट्य" इति पुनरुपादानस्य पक्षान्तरनिवृत्त्यर्थत्वात् । ग्रीष्मे प्रारम्भपक्षे ज्येष्ठ्यां पौर्णमास्यामाषाढ्यां वा पशुः । तदहरेवोखाभरणादि कृत्वा ऋत्विग्वरणादि सर्वं कर्म कुर्यात् । अर्द्धमासस्य मासस्य त्रैमा-

स्वाहेति चाश्वमेधिकानि त्रीणि ॥३॥ कृष्णाजिनदीक्षाऽतः ॥४॥ अध्वरदीक्षणीयायाश्चत्वारि त्रीणि त्रीणि चाश्वमेधि-

सस्य षण्मासस्य पत्ने चैत्र्यां पुरस्तादर्द्धमासादीनां ग्रहणम्। चैत्र्यां पौर्णमास्यामिष्टकापशुरुखासम्भरणं च । ततस्तस्मिन्नेवाहन्यृत्विग्वरणादि । संवत्सरे दीक्षा । पर्यवेते दीक्षा इति हरिस्वामिनः ।

एवकाल एवोत्तरस्यां फाल्गुन्यां प्राजापत्य एव पशुः । अष्टम्यामुखासम्भरण इष्टकाकरणम् । अमावास्यायामावास्येनेष्टा आरब्धव्या । ततः प्रतिपदमारभ्य प्रत्यहमेकैका दीक्षणीया सप्तमीपर्यन्ता। सप्तमीत आरभ्य चैत्रकृष्णतृतीयायां दीक्षां समाप्य चैत्रामावास्यायामुपवसथः । वैशाखशुक्लप्रतिपदादिषु तिसृषु तिथिषु सुत्याः । ततो ब्रह्मौदनम् ऋतुपशवश्च कार्या इति ।

कर्कादयस्तु चैत्र्यां पश्वालम्भनादि। चैत्रकृष्णषष्ठ्यां सप्तमी दीक्षणीया। षष्ठीमारभ्य द्वादश दीक्षाः। वैशाखशुक्लतृतीयायां क्रयः। वैशाखशुक्ल चतुर्दश्यामग्नीषोमीयः। वैशाख्यां प्रथमा सुत्येति । तत्र ऋत्विग्वरणे विशेषः ।

अश्वमेधेनाहं यदय इति । यस्य पुरस्तान्नित्यं नदीगङ्गादिस्थमुदकं भवति तस्मिन्देशे देवयजनजोषणं कुर्वन्ति । तत उद्धृतौषधिमूलदेशे नियमेन शालाकरणम् । साग्निचित्यस्त्वाद्गार्हपत्यात् सप्तसु प्रक्रमेष्वर्द्धव्यामे वाऽऽहनीयस्योद्धरणम् । ततो दीक्षणीयायामाग्नावैष्णव एकादशकपाल एव पुरोडाशो भवति । नान्यद् द्वितीयादिकं हविः ।

तत्र वेदयोक्तविमोकान्ते कृते नवनीतेनाभ्यञ्जनादिवाग्यतप्रवेशनान्तं षट् दीक्षासु न भवति। अतो वेदयोक्तविमोकान्त एव चत्वार्यौद्ग्रभणान्याग्निष्टोमिकानि हुत्वा स्थाल्याः स्रुवेणैव काय स्वाहेत्यादीनि त्रीण्याश्वमेधिकान्यौद्ग्रभणानि जुहोति । सप्त सप्तौद्ग्रभणानि प्रत्यहं जुहोति । ध्रौवस्य प्रत्यहं पात्रान्तरे स्थापनम्। औद्ग्रभणान्ते दीक्षणीयाशेषसमाप्तिः।

ततो दक्षिणेनाहवनीयं कृष्णाजिनास्तरणादि तस्योपरि दक्षिणजानुनोपवेशनान्तं कुर्यात् । पौर्णमास्यामेतत्पर्यन्तं कर्म कृतम् । प्राकृतमेव यजमानस्य व्रतोपायनीयाशनं भवति । न सौमिकं यवाग्वादि ।

ततः प्रतिपदि पुनर्द्वितीया दीक्षणीयेष्टिरेव भवति । औद्ग्रभणहोमे प्राकृतानि चत्वारि हुत्वा स्वाहाऽऽधिमाधीतायेति त्रीण्याश्वमेधिकानि जुहुयात् । द्वितीयायां तृतीया दीक्षणीयेष्टिस्तस्यामप्येवम् । तत्र प्राकृतानि चत्वारि हुत्वा अदित्यै स्वाहेति त्रीण्याश्वमेधिकान्यौद्ग्रभणानि हुत्वा कृष्णाजिनोपवेशनान्तं कुर्यात् । तृतीयायां चतुर्थी दीक्षणीयेष्टिस्तस्यामप्येवम् ।

कानि ॥५॥ कृष्णाजिनान्तमन्वहं प्राकृतव्रतोऽकृतत्वात् ॥६॥ आग्निके च सप्तम्यां निर्वपति ॥७॥ अभ्यञ्जनप्रभृति करोति ॥८॥ षडाग्निकानि चतुःस्थाने ॥९॥ दशमं विश्वो देवस्येति ॥१०॥ कृष्णाजिनाद्या समिदाधानात्कृत्वाऽऽब्रह्मन्निति जपति ॥११॥ उत्सर्गकाल एके ॥१२॥ दीक्षा द्वादशोपसदश्च॥१३॥ नित्योदकं देवयजनं पुरस्तात्॥१४॥ आद्योऽग्निर्द्विगुणस्त्रिगुण एकविंशतिविधो वा ॥१५॥

---

तत्र प्राकृतानि चत्वारि हुत्वा सरस्वत्यै स्वाहेति त्रीण्याश्वमेधिकानि औदुम्बरभक्षणानि हुत्वा कृष्णाजिनोपवेशनान्तं कुर्यात् । चतुर्थ्यां तिथौ पञ्चम्यां दीक्षणीयायां प्राकृतानि चत्वारि हुत्वा पूष्णे स्वाहेति त्रीण्याश्वमेधिकानि हुत्वा पूर्ववत्कुर्यात् । पञ्चम्यां तिथौ षष्ठ्यां दीक्षणीयेष्टावप्येवम् । प्राकृतानन्तरं त्वष्ट्रे स्वाहेति त्रीण्याश्वमेधिकानि इति विशेषः । एवं षट्सु दिनेषु दीक्षणीयादि कृष्णाजिनोपवेशनान्तं प्रत्यहं कर्म भवति।

ततः षष्ठ्यां तिथौ सप्तम्यां दीक्षणीयायामाग्नावैष्णवानन्तरं वैश्वानरो द्वादशकपाल आदित्यानां घृते चरुश्चेति द्वे आग्निके हविषी निर्वपति । अस्यां सप्तम्यां दीक्षणीयायां वेदयोक्रविमोकान्ते शालां पूर्वेण कुशेषु तिष्ठतो नवनीतेनाभ्यञ्जनादि प्रपादनान्तं कर्म भवति । औदुम्बरभक्षणहोमेषु चाध्वरिकाणां चतुर्णां स्थानेषु आकूतिमग्निमित्यादीनि षडाग्निकान्यौदुम्बरभक्षणानि जुहोति ।

ततो विष्णव इत्यादीनि त्रीण्याश्वमेधिकानि जुहोति । एवं नव हुतानि । ततः सप्तानामप्यन्हां ध्रौवं सर्वं जुह्वामासिच्य स्रिश्च स्थाल्येत्यादि कृत्वा विश्वो देवस्येति मन्त्रेण दशममौदुम्बरभक्षणं जुहोति । ततो दीक्षणीयाशेषसमाप्तिः ।

ततः कृष्णाजिनास्तरणादि दण्डोच्छ्रयणान्तं कृत्वोखाधिश्रयणादि समिदाधानान्तं कुर्यात् ।

ततोऽध्वर्युरेवाब्रह्मन्निति मन्त्रं स्वरेण जपति । आशीरूपत्वादस्य यजमानस्य वीरो जायतामिति लिङ्गाच्च । ततो रुक्मप्रतिमोचनादि वात्सप्रोपस्थानान्तम् । तत उद्वादनप्रैषः । वाग्यमनम् ।

ततोऽस्तमित उखाया भस्मोद्वापः । ततो वाग्विसर्गप्रैषः । ततो यजमानस्य व्रतकरणप्रैषः । वाग्विसर्गः । ततो रात्री रात्रिमिति उखायां समिदाधानं दीक्षितस्य । ततोऽध्वर्योर्यवाग्वादिव्रतसम्पादनम् । वाग-

**एकादशिनीवदेकविंशतिर्यूपाः ॥१६॥ राज्जुदालो मध्ये**

विसर्गानन्तरं देवैरिमं यजमानं० सङ्गायतेति प्रैषः । सङ्गानं च । रात्रौ मेहनस्वापव्रतकरणादि प्रकृतिवत् । प्रातर्वाचं विसृज्याहरहरित्युखायां समिदाधानम् । ततो रुक्मप्रतिमोचनादि प्रागूर्ध्वप्राद्विष्णुक्रमाः कार्याः ।

अत्र दीक्षा द्वादश भवन्ति । तासु यूपच्छेदनमहावीरसम्भरणवनीवाहनवकलिपकभस्मापोऽभ्यवहरणानि कस्मिंश्चिदहनि कार्याणि । तत्र यूपच्छेदने तन्त्रेण यूपाहुतिः । एकविंशतिर्यूपाः । सर्वे एकविंशत्यरत्नयो नानाजातीयाः । एको राज्जुदालः । द्वौ पैतुदारवौ देवदारुवृक्षोद्भवौ । षड् बैल्वाः षट् खादिराः षट् पालाशा इत्येवमेकविंशतिः । सर्वेषां पृथक् पृथक् जोषणादिचषालस्वनिरूपपर्यन्तं कर्त्तव्यम् । दीक्षासूपसत्सु च सर्वासु प्रत्यहं सायंकाले वाग्विसर्गानन्तरं वीणागणगिनो देवैरिमं यजमानं सङ्गायतेति प्रैषेण समीपोपविष्टान् वीणागणगिनः प्रेष्यन्ति । ते च प्रेषिताः प्रत्यहं देवैः सह यजमानं सङ्गायन्ति ।

ततो वैशाखशुक्लद्वितीयायां दीक्षाणामुत्तमेऽहनि वेद्यग्निमानम् । अत्राद्योऽग्निर्द्विगुणो वा त्रिगुणो वा भवति । सार्द्धद्वाविंशतिपुरुषक्षेत्रफलस्त्रिगुणपक्षे । द्विगुणपक्षे च पञ्चदशपुरुषक्षेत्रफलः । इष्टकाप्रमाणान्यपि प्रथमचयनप्रमाणाद् द्विगुणप्रमाणानि त्रिगुणप्रमाणानि वा कार्याणि ।

तत्र द्विगुणपक्षे पक्षक्षेत्रस्याक्ष्णया रज्ज्वा पक्षप्रमाणम् । बृहत्याऽक्ष्णया रज्ज्वा बृहतीप्रमाणम् । त्रिगुणपक्षे च पक्षप्रमाणेन विपुलं पक्षक्षेत्रस्याक्ष्णयाप्रमाणेन दीर्घम् । एवंविधं दीर्घचतुरस्रं साधयित्वा तस्य दीर्घचतुरस्रस्याक्ष्णया रज्ज्वा त्रिगुणस्याग्नेः पक्षप्रमाणम् । एवमेव बृहत्यादीनाम् । एवं सर्वासामिष्टकानां प्रमाणान्यूहयित्वा कार्याणि ।

एवंविधाभिस्तिसृभिः पक्षाभिरेकः प्रक्रमः । तेन वेदिरपि अग्निवद् द्विगुणा त्रिगुणा वा वर्द्धनीया । अथाश्वमेध एकविंशतिविधोऽग्निर्भवति । अस्मिन्पक्षे सप्तपुरुषप्रमाणे प्रथमाग्निक्षेत्रे पुरुषसमासोपायेन चतुर्दशपुरुषाणामावापः कार्यः ।

अधिकेऽर्द्धपुरुषेऽपि चतुर्दशसु सप्तमभागा आवपनीयाः । एवमेकविंशतिविधोऽग्निः सिद्ध्यति ।

अन्तःपात्यगार्हपत्ययोस्तु वृद्धिर्न भवति । न्यग्रोधस्य संस्कारपक्षे पवित्र उक्तान्यूहस्थानानि । तानूनप्त्राभावः । अब्राह्मणस्य हविरुच्छिष्टभक्षणप्रतिषेधात् । तद्धै नाब्राह्मणः पिबेत् । उपसदो द्वादशाहवद् व्रत्य-

॥१७॥ अभितः पैतुदारवौ ॥१८॥ षट् षड् बैल्वखादिर-

सञ्चितिपुरीषाणि । एकादश्यां विकर्णीस्वमातृणोपधानादि । रात्रौ घृतोषितसमित्करणान्तम् । द्वादश्यां पञ्चगृहीतग्रहणादि ।

अत्राग्नीषोमीये एकविंशतिर्यूपाष्टकानि । एकविंशतिस्त्रिगुणरशना द्विगुणरशनाश्च । पशवश्च । अत्रावटपरिलेखनादि पदार्थानुसमयेनावटहोमान्तम् । ततोऽञ्जनादिस्वर्वगूहनान्तमेकैकस्य यूपस्य काण्डानुसमयेन । यूपनिखननकाले मध्ये अग्निष्ठो राज्जुदालो यूपः । राज्जुदालः श्लेष्मान्तकः । गुन्दी इति लोके प्रसिद्धः । तमभित एकैकः पैतुदारवः । एवं द्वौ पैतुदारवौ निखाय तौ पैतुदारवावभितः षड् बैल्वा यूपाः त्रयो दक्षिणतस्त्रय उत्तरतः । तानभितः षट् खादिरा यूपाः सन्निखातव्याः ।

तेषामपि त्रयो दक्षिणतस्त्रय उत्तरतः । ततस्तान् खादिरानभितः षट् पालाशा यूपा निखातव्याः । तेषामपि त्रयो दक्षिणतः त्रय उत्तरत इति । वेदिपूर्वार्द्धस्य समविभागेन वा रथाक्षमात्रान्तराले वा पक्षसम्मितानां वा यूपानामेकादशिनीवद्व्यत्यासेन निखननम् ।

अत्रैकविंशतिरग्नीषोमीयाः पशवो भवन्ति । अतः प्रतियूपमेकैकस्य नियोगो दक्षिणयूपादारभ्योदक्संस्थमिति सर्वेषु भाष्येषु सम्प्रदाये च । उक्तान्यूहस्थानान्येकादशिन्याम् । एक एव पशुपुरोडाशो न प्रतिपशु । पशुदेवतास्मरणार्थत्वात्तस्य च एकेनापि कर्तुं शक्यत्वात् । पशुपुरोडाशमनु देवसूहविषां निर्वापोऽभिषेचनीयवत् ।

तत्राग्नीषोमाभ्यां छागानां वपाभ्यां मेदसोऽनुब्रूहि । अग्नीषोमाभ्यां छागानां वपां मेदः प्रेष्येति प्रैषौ । पशुपुरोडाशे वा । अग्नीषोमाभ्यां पुरोडाशस्य पुरोडाशमिति । अग्नीषोमीयदिने परिहृतासु वसतीवरीषु देवैरिमं यजमानं सङ्गायतेति प्रैषः ।

प्रातर्वैशाख्यां पौर्णमास्यां पक्षान्तरेऽन्यस्यां वाऽग्निष्टोमसंस्थमश्वमेधस्य प्रथममहर्भवति । तस्य गोतमस्य चतुरुत्तरस्तोम इत्यपरा संज्ञा । तत्र विशेषः । परिस्तरणात् पूर्वं वीणागणगिनः प्रेष्यति । प्रजापतिनेमं यजमानं सङ्गायतेति ।

ततस्ते तथैव गायन्ति । ततः परिस्तरणादौ विशेषः । यूपपशुसंख्यया संख्याताः क्रमेण त्रिगुणा द्विगुणा रशना । जातिभेदाभावाद्रूपाश्रपणाशूलाखानां भेदो न भवति इत्यादि यथोपयोगमासाद्यम् । द्वे एकादशिन्यौ सवनीयाः पशवः । तत्र मध्यमेऽग्निष्ठे यूपे द्वावाग्नेयौ नियुज्य दक्षिणोत्तरयोर्द्वौ सारस्वतौ ।

पालाशाः ॥१९॥ त्रयस्त्रयोऽभितः ॥२०॥ प्रतियूपमग्नीषोमीयाः ॥२१॥ प्रातरग्निष्टोमः ॥२२॥ एकादशिन्यौ स-

---

ततश्चतुर्थपञ्चमयोर्द्वौ सौम्यौ । षष्ठसप्तमयोर्द्वौ पौष्णौ । अष्टमनवमयोर्द्वौ बार्हस्पत्यौ दशमैकादशयोर्द्वौ विश्वेदेवौ । द्वादशत्रयोदशयोर्द्वावैन्द्रौ । चतुर्दशपञ्चदशयोर्द्वौ मारुतौ । षोडशसप्तदशयोर्द्वावैन्द्राग्नौ । अष्टादशैकोनविंशयोर्द्वौ सावित्रौ । विंशैकविंशयोर्द्वौ वारुणाविति सम्प्रदायः ।

एवं मध्यमे द्वौ नियुक्तौ । इतरष्वेकैक इति गणधर्मा एकादशिन्यामुक्ताः । वपायागे अग्नये छागयोर्वपाभ्यां मेदसोऽनुब्रूहि । अग्नये छागयोर्वपे मेदः प्रस्थितमिति । सरस्वत्यै छागयोर्वपाभ्यां मेदसोऽनु ब्रूहि । वपे मेदः प्रस्थितमिति । एवं सर्वेषु ज्ञेयम् । एकादशैव पशुपुरोडाशाः । न द्वाविंशतिः ।

एवं सम्प्रदायकाराभिमतैकाशिनी दर्शिता । अत्र सर्वानुक्रमणिकायां विशेषः । समिद्धो अञ्जन्नाश्वमेधिकोऽध्याय इत्यनेन सकलाध्यायस्याश्वमेधत्वमुक्त्वा आग्नेयः कृष्णग्रीव इत्याद्या एकादशिन्योर्द्वयोः पशुदेवता इत्युक्तम् ।

हरिस्वामिभिरपि द्वे त्वेवैते एकादशिन्यौ सवनीया भवन्तीति । अस्मिन्पक्षे पशवोऽभिधीयन्ते । अग्नये कृष्णवर्णकण्ठश्छागः । सरस्वत्यै मेषी । सोमाय बभ्रुः कपिलवर्णश्छागः । मरुद्भ्यः कल्माषः कर्बुरश्छागः । इन्द्राग्निभ्यां संहितः संमिलितश्छागः । सवित्रे अधोरामः श्वेतश्छागः । वरुणाय कृष्णवर्णश्छागः श्वेतैकपादः पीतवर्णः । एवमेकादशिनी ।

अथ द्वितीया एकादशिनी लिख्यते । अग्नयेऽनीकवते रक्तपुण्ड्रोऽनड्वान् । सवित्रे द्वौ पशू अधोरामौ श्वेतवर्णौ छागौ । पूष्णे च एवंविधावेव द्वौ । विश्वेभ्यो देवेभ्यो द्वौ पशू रजतनाभी धृतरजतौ पीतवर्णौ तूपरौ शृङ्गहीनौ । मरुद्भ्यो विचित्रवर्णश्छागः । अग्नये कृष्णश्छागः । सरस्वत्यै मेषी । वरुणाय पेत्वः पीतवर्णश्छाग इति । अस्मिन् पक्षे एकादशिन्योः पशूनां पृथक् पृथक् प्रचारः । न सह । भिन्नदेवत्वात्

दक्षिणादाने दिग्विजयसमये भूमिपुरुषब्राह्मणस्ववर्जितं यावत्प्राच्यां दिशि द्रव्यमुत्पन्नं भवति तावतो द्रव्यस्य तृतीयं भागं प्रथमेऽहनि होत्रे दद्यात । एवमेव दक्षिणदिगुत्पन्नं द्रव्यस्य तृतीयं भागं ब्रह्मणे । प्रतीच्युत्पन्नद्रव्यस्य तृतीयं भागमध्वर्यवे । उदीच्युत्पन्नद्रव्यस्य तृतीयं भागमुद्गात्रे । इतरेषां प्रतिपुरुषाणां स्वस्य मुख्यर्त्विग्दत्तस्य मध्य एव प्रकृतिवत् न्यायेन विभागः ।

**सवनीयाः पशवो भवन्ति ॥२३॥ मध्यम आग्नेयौ ॥२४॥ उत्तरयोश्च ॥२५॥ उत्तमे गावो बहुरूपाः ॥२६॥ विजयमध्याद्धोतुः प्राची दिक् दक्षिणा ब्रह्मणोऽध्वर्योः प्रतीच्युद्गातुरुदीची ॥२७॥ तृतीयं तृतीयमन्वहं ददाति भूमिपुषब्राह्मणस्ववर्जम् ॥२८॥ तृतीयसवन उक्थ्यं गृहीत्वाऽऽग्निमारुतकाले त्रैधं विगृह्णाति ॥२९॥ तच्चमसाननु होम-**

दक्षिणादानक्रमो विभागश्च प्राकृत एव । प्रत्यहमेवमेव दक्षिणादानं भवति। माध्यन्दिने सवने प्रागच्छावाकविग्रहाद्वसतीवरीराध्वनीये ऽत्र-वनीय पुरस्तादारभ्य चतसृभ्यो दिग्भ्यः क्रमेण पृथक् कलशेषु वसतीवरीणां ग्रहणं सादनान्तं करोति । हविर्धाने–अग्नये छागयोर्हविषोऽनुब्रूहि । द्विवचनान्तेनेति सम्प्रदायमते । स्वमते तु पृथक् पृथक् भिन्नदेवत्वात् ।

अग्नये छागयोर्हविः प्रस्थितं प्रेष्येति । सरस्वत्यै छागयोर्हविषोऽनुब्रूहि । सरस्वत्यै छागया हविः प्रस्थितमिति । एवं सर्वेषाम् । द्वयोर्द्वयोः सह प्रचारः । तृतीयसवनेऽग्निष्टोमसंस्थस्याप्ययं विशेषः । आग्रयणानन्तरमुक्थ्यस्थाल्यामुक्थ्यग्रहणम् । तत आग्निमारुतशस्त्रे शस्यमाने त्रिषु पात्रेषु इन्द्रावरुणाभ्यामित्यादिमन्त्रैः प्रतिप्रस्थाता त्रैधं विगृह्णाति त्रिधा विभज्य त्रिषु उलूखलेषु गृह्णाति ।

आग्निमारुतचमसहोमस्य पश्चात्प्रतिप्रस्थातैव त्रीनपि सहैव जुहोति भक्षयति च। ततः पात्रप्रक्षालनान्तेऽनुयाजादि। एकादशिनीवद् व्यूहनम् । हारियोजनान्ते चरुहोमः । अतिप्रेषिते श्वः सुत्यामिति प्रषः । कर्कमते न वेद्यालम्भः । पत्नीसंयाजान्ते वेदयोक्त्रविमोकः । पक्षे योक्त्रस्य । समिदाधानाद्यवभृथेष्टिः ।

कृष्णविषाणादीनां चात्वाले प्रासनं न भवति । वस्त्राणां चाप्सु प्रक्षेपो न भवति । ततः प्रत्यागत्य समिदाधानान्ते बर्हिर्होमादिप्रतिपत्तिः । दक्षिणाग्निहोमः । पूर्णपात्रादीनां कर्मापवर्गान्तानामन्त्येऽहन्येवानुष्ठानं न पूर्वयोः ।

ततः शाखाच्छेदनाद्युपगूहनान्तम् । अत्रवा वसतीवरीणां चतसृभ्यो दिग्भ्यो भेदेन ग्रहणम । अस्तामते सूर्ये चतुर्णां कलशानामुदकमेकत्र महति पात्रे समासिच्य प्रतिप्रस्थाता वसतीवरीणां परिहरणमाग्नीध्रीये सोमनिधानान्तं करोति ।

**भक्ष्यौ ॥३०॥ वसतीवरीर्गृहीत्वा प्रतिदिशः समासिच्य परिहरति ॥३१॥ आज्यसक्तुधानालाजानामेकैकं जुहोति प्राणाय स्वाहेति प्रतिमन्त्रः सर्वरात्रमावर्तम् ॥३२॥**

---

ततो वीणागणगिनः प्रजापतिनेमं संगायतेति प्रैषः । शमितृ स्वाध्यायौ । सुब्रह्मण्याह्वानप्रैषः । तदाह्वानम् । सर्वाग्निषु यजमानस्य सन्निदाधानम् । दोहा आतञ्चनान्ताः । पयस्यार्थं वत्सापाकरणम् । शाखोपमूहनम् । परिहरणाद्येवमन्तमध्वर्योराज्यादिसर्वरात्रहोमे व्यापृतत्वेन विरोधात्प्रतिप्रस्थाता करोति ।

अथ सर्वरात्रं जुहोतिरभिधीयते । तत्र ब्रिरासनम् । प्रणीताप्रणयनम् । परिस्तरणमाहवनीयस्य । पात्रासादनम् । शूर्पाग्निहोत्रवणि । स्फ्यः कर्परद्वयम । शम्या कृष्णाजिनम । उलूखलमुसलम् । दृषदुपलम् । पात्रीधान्यम् । सक्त्वर्थं यवाः । धानार्थं च । लाजार्था व्रीहयश्च । पवित्रच्छेदनानि त्रीणि । पवित्रे । स्थाली आज्यं च । वेदश्च । इध्मकाष्ठद्वयम् । प्रस्तरमात्रं बर्हिः । स्रुवो जुहूः । उपभृद्ध्रुवा । शृतावदानम् । पात्र्यस्तिस्रः । योक्त्रं पत्नी यूनकुशाः । परिधयः । पूर्णपात्रम् । कर्मापवर्गा चेति ।

ततः स्फ्योपहितपात्रीकरणम् । शूर्पाग्निहोत्रहवण्योरादानादि । ग्रहणे विशेषः । प्रहरद्वयस्य चतुर्मुष्टिकानि यवानाम् । एकस्य प्रहरस्य व्रीहीणां चतुर्मुष्टिकानि ।

अत्र च प्रथमं निर्व्यापारे कालेप्रहररूपकालपरिमाणज्ञानार्थं जलकुण्डिकायां घटीपात्रनिधानाद्युपायं कृत्वा अवैधशुष्कहोममुपस्तारावदानाभिघारपूर्वकं प्राणाय स्वाहेत्यादिभिर्मन्त्रैः घृतैः कृत्वा होमसंख्यापरिच्छेदो निर्द्धारणीयः । प्रहरेणैतावत्संख्याका होमा भवन्तीति ।

निर्द्धार्यैवं तत्संख्याकानि प्रतिप्रहरमत्र चतुर्मुष्टिकानि ग्राह्याणि । प्रहरद्वयहोमस्य यवानां चतुर्मुष्टिकानि । एकस्य व्रीहीणाम् । सक्त्वादिहोमसाहचर्यादाज्यहोमोऽप्युपांशुयाजविधिना ध्रुवातश्चतुरवत्तेन कर्तव्य इति कर्कः । पूर्णाहुतिधर्मक इति याज्ञिकाः । ग्रहणं शेषाभिमर्शनादि सादनान्तम् ।

ततः पवित्रकरणादि फलीकरणान्तम् । भर्जनद्वयस्योपधानम् । आज्यनिर्वापवेदबन्धौ । यवानां व्रीहीणां च पृथग्भर्जनयोरधिश्रयणं पर्यग्निकरणं श्रपणं धानाभिमर्शनं च । उद्वासनम् । पृथक् कृत्वाऽर्द्धानां पेषणम् । प्रोक्षणम् । ईक्षणम् । स्फ्योदकप्रहारः । स्फ्येध्मबर्हिरासादनम् । स्रुक्सम्मार्जनाद्याज्योत्पवनान्तम् । अभ्यतरावेक्षणम् । ध्रुवायामेवा-

व्युष्ट्या इति व्युष्टायाम् ॥३३॥ स्वर्गायेत्युदिते ॥३४॥४॥

ज्यग्रहणम् । इध्मप्रोक्षणम् । प्रस्तरबर्हिषः प्रोक्षणम् । बर्हिर्विस्रंसनम् । प्रस्तरग्रहणम् । समर्पणम् ।

सन्नहनविस्रंसनम् । श्रोण्यां निधानम् । अन्यैरवच्छादनम् । आहवनीयकल्पनाद्यात्मालम्भनम् । नोल्मुकोदूहनम् । उपवाजनाद्याज्यभागहोमान्तं जुहोतिधर्मेण सर्वम् । एतावदनस्तमिते कर्म । ततोऽस्तमितमात्रे परिहृतासु वसतीवरीषु प्रतिस्रुवग्रहणम् । ध्रुवामाप्याययन्, ध्रुवातश्चतुर्गृहीतग्रहणम । तूष्णीमाज्यभागवद् गृहीत्वा गृहीत्वा प्रहरपर्यन्तमविच्छिन्नं जुहोति प्राणाय स्वाहेत्यादिभिर्द्वादशानुवाकैः प्रतिमन्त्रम् ।

अत्र प्राणाय स्वाहा अपानाय स्वाहा व्यानाय स्वाहा चक्षुषे स्वाहेत्यारभ्य यज्ञो यज्ञेन कल्पताᳬं स्वाहेत्यन्तैर्मन्त्रैर्हुत्वा तत एकस्मै स्वाहा द्वाभ्याᳬं स्वाहेत्यस्य होमानन्तरं शताय स्वाहेत्येतस्मात् प्राक् त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहा पञ्चभ्यः स्वाहा षड्भ्यः सप्तभ्यः अष्टभ्यः नवभ्यः दशभ्यः एकोनविंशतिये विंशतये एकोनत्रिंशते त्रिंशते एकोनचत्वारिंशते चत्वारिंशते एकोनपञ्चाशते पञ्चाशते एकोनषष्ट्ये षष्ट्ये एकोनसप्ततये सप्ततये एकोनाशीतये अशीतये एकोननवतये नवतये एकनवतये द्वानवतये त्रयोनवतये चतुर्णवतये पञ्चनवतये षण्नवतये सप्तनवतये अष्टनवतये नवनवतये स्वाहेत्येवमन्तरालवर्तिनः सर्वे संख्याशब्दाश्चतुर्थ्यन्ताः स्वाहान्ता मन्त्राः क्रमेणात्रापठिता अपि प्रयोगकाले ज्ञेयाः । "अनुपूर्वं जुहोति एकोत्तरा जुहोति नैकशतमत्येती"त्येवमादि श्रुतेः ।

ततः शताय स्वाहैकशताय स्वाहेत्यन्तैर्हुत्वा पुनरपि प्राणाय स्वाहेत्यादि रात्र्यन्तपर्यन्तं पुनःपुनरावर्तनीयम् । एवं प्रथमप्रहरपर्यन्तमाज्यहोमः । ततो द्वितीये प्रहरे जुह्वामुपस्तारः । सक्तूनां द्विरवदानम् । अभिघारः । चताभ्यङ्गः । एवमवदायावदाय द्वितीयप्रहरान्तं सक्तुहोमः। एभिरेव मन्त्रैः पुनः पुनरावृत्तैः एवमेव चतुरवत्तमवदायावदाय तृतीये प्रहरे धानाभिर्होमः कार्यः । एवमेव चतुरवत्तमवदायावदाय चतुर्थे प्रहरे लाजैर्होमः ।

लाजहोमान्ते व्युष्टयां रात्र्यामाज्यं संस्कृत्य व्युष्ट्यै स्वाहेति सकृद्गृहीतेनाज्याहुतिः । तत उदिते सूर्ये पूर्वसंस्कृतेनैवाज्येन सकृद्गृहीतेन स्वर्गाय स्वाहेति द्वितीयाज्याहुतिहोमः ।

इति विंशस्य चतुर्थी कण्डिका ॥ ४ ॥

**प्रातरुक्थः ॥१॥ महिमानौ गृह्णाति सौवर्णेन पूर्वꣳ हिरण्यगर्भ इति, द्वितीयꣳ राजतेन यः प्राणत इति ॥२॥ बहिष्पवमानाय सर्पणमश्वमाम्भ्य ॥३॥ वडवा दर्शयत्यभिरसाति तत्स्तोत्रम् ॥४॥ स्तुवीरन्वा ॥५॥ शतमानं ददाति ॥६॥ अश्वेनाक्रमयन्त्यास्तावम् ॥७॥ ऐकादशिनानुपाकृत्याश्वादींश्च ॥८॥ होतरश्वमभिष्टुहीति प्रेष्यति॥९॥**

---

एवं सꣳस्थितेऽग्निष्टोमे परिहृतासु वसतीवरीष्वध्वर्युरन्नहोमान् जुहोतीति वचनेनाध्वर्योरन्नहोमे व्यापृतत्वादपररात्रिकम्परिस्तरणपात्रसꣳसादनाद्युपांशुसवनसादनान्तं सर्वं प्रतिप्रस्थातैव करोति। तत्र विशेषः। ऋत्विक्प्रबोधनम्। अपामुपस्पर्शनम्। वीणागणगिनः प्रजापतिनेमं यजमानꣳ सङ्गायतेति प्रैषः।

तेषां तथैव सङ्गानम्। ततः परिस्तरणादि। आहवनीयः परिस्तृत एव। शालाद्वार्यस्य क्रियते। परिधिपरिधानमस्त्येव। पत्नी सन्नद्धैव। इतरत् पाशुकमासाद्यते। तत्र प्रतिजातिभेदं वपाश्रपणीशूलोखानां भेदेनासादनम्। सौवर्णलोहायसाः शासाः। यूपसंख्यास्त्रिगुणरशनाः पशुसंख्याद्विगुणरशनाः। वेतसशाखाः। एकादशिन्यौ पशवः। अश्वादयः पृषतान्ताश्च। मेदः श्रपणार्थं च। अश्वशेषश्रपणार्थं शूलमित्यादि

यद्यदुपयोक्ष्यमाणं तत्सर्वमासाद्यते। पात्रयोजने सौवर्णराजते पात्रे। अन्तर्यामपात्रयोजनानन्तरं तयोर्योजनम्। अन्तर्यामपात्रे प्रयुज्य महिम्नोः पात्रे प्रयुनक्ति। "सौवर्णं दक्षिणं राजतमुत्तरमि"ति मानवे दर्शनात्। सवनीयनिर्वापे प्रणीताः सन्त्येव। पाशुकाज्यासादनालम्भान्ते प्रतिप्रस्थात्रा कृतेऽन्नहोमाभिप्रवृत्तोऽप्यध्वर्युरेवात्मालम्भं करोति। तस्य करिष्यमाणपदार्थाङ्गत्वात्। तेषां च अध्वर्युकर्तृकत्वात्।

सोमोपावहरणाद्युपांशुसवनसादनान्तं निर्विशेषं प्रतिप्रस्थातैव करोति। अध्वर्युश्च। सूर्योदयानन्तरं स्वर्गाय स्वाहेत्याज्याहुतिं हुत्वा परिधिप्रक्षेप–प्रणीताविमोकयोक्त्रविमोकवर्जं प्रतिपत्त्यादिकर्मापवर्गान्तं जुहोत्यङ्गभूतं सर्वं समापयति।

तत उदितेऽन्तर्यामग्रहणादि विप्रुड्ढोमान्तम्। ततोऽश्वमालभ्य तस्य पुच्छं हस्तेन स्पृष्ट्वा तेन सह बहिष्पवमानार्थं समन्वारब्धाः सर्पन्ति। अन्वारम्भः पुच्छे कार्यः। "पुच्छमन्वारम्भत" इति श्रुतेः। वचनादहीनत्वेऽपि बहिष्पवमानम्। ततोऽश्वस्य वडवा दर्शयेत्। एवं वड-

युनक्त्येनं युञ्जन्ति ब्रध्नमिति ॥१०॥ इतरांश्च युञ्जन्त्य-स्येति ॥११॥ अश्वाः सौवर्णालङ्काराः ॥१२॥ रथश्च ॥१३॥ अपो यात्वाऽवगाढेषु वाचयति यद्वात इति ॥१४॥ आ-याय विमुक्तमश्वं महिषी वावाता परिवृक्ताऽऽज्येनाभ्य-ञ्जन्ति पूर्वकायमध्यापरकायान् यथादेशं वसवस्त्वेति प्र-तिमन्त्रम् ॥१५॥ अभ्रंशयमानान्मणीन्त्सौवर्णानेकश-तमेकशतं केसरपुच्छेष्वावयन्ति भूर्भुवः स्वरिति प्रतिम-हाव्याहृति ॥१६॥ अनुचर्यश्च तूष्णीमेकेषाम् ॥१७॥ अ-श्वाय रात्रिहुतशेषं प्रयच्छति लाजी३ञ्छाची३निति

---

वानां दर्शनाद्यदश्वो ऽभिरमति हिंकरोति तदेव बहिष्पवमानस्तोत्रम् । अथवोद्गातारो बहिष्पवमानं पृथक् स्तुवीरन् ।

अयमेव पक्षः स्वश्रुत्युक्तः । ततः स्तोत्रानन्तरं यजमान उद्गातृभ्यः शतमानं ददाति । ततोऽध्वर्य्वादयोऽश्वेनास्तावं चात्वालस्य दक्षिणतो वेदिमध्ये वर्तमानं बहिष्पवमानदेशमाक्रमयन्ति । ततः पशूपाकरणकाले त्रयोः एकादशिन्योः पशुनुपाकृत्य अश्वादीनुपाकरोति । ततो होतरश्व-मभिष्टुहीति होतारं प्रेष्यति । ततोऽश्वस्य सौवर्णालङ्कारैरलङ्करणम् । अन्येषां च त्रयाणामश्वानां सौवर्णालङ्कारैरलङ्करणम् । एकस्य रथस्य च सौवर्णालङ्कारैरलङ्करणम् ।

ततो युञ्जन्ति ब्रध्नमिति मन्त्रेण तमुपाकृतं मुख्यमश्वं रथे युनक्ति । ततो युञ्जन्त्यस्येति मन्त्रेणेतरानश्वानुपाकृतानेव त्रीनश्वान् रथे युनक्ति । प्रत्यश्वं मन्त्रावृत्तिः । तत एवं रथं युक्त्वा अपः प्रति गत्वोदकमध्ये प्र-विष्टेष्वश्वेषु यद्वातोऽ अप इत्यमुं मन्त्रं यजमानं वाचयति ।

ततो जलादुत्तीर्य देवयजनं प्रत्यागत्याश्वान्विमुञ्चति । ततो विमुक्त-मश्वं प्रथमा पत्नी महिषी अश्वशरीरस्य पूर्वभागं वसवस्त्वाऽञ्ज-न्त्विति मन्त्रेण लौकिकेनाज्येनानक्ति । ततो वावाता रुद्रा स्त्वा-ऽञ्जन्त्विति मन्त्रेणाश्वशरीरस्य मध्यभागमाज्येनानक्ति । ततः परि-वृक्ता आदित्यास्त्वेति मन्त्रेणाश्वशरीरस्य पश्चाद्भागमाज्येनानक्ति । तत एतास्तिस्रः पत्न्योऽश्वस्य शिरोग्रीवापुच्छरोमसु चाभ्रंशयमानान्त्सौ-वर्णान्मणीन्प्रत्येकमेकाधिकशतसंख्यानावपन्ति । तेषु रोमसु प्रवयन्ति प्रोतयन्ति इत्यर्थः ।

भूर्भुवः स्वरिति प्रतिमन्त्रमेकैका एकशतमेकशतं मणीन् केसरपुच्छेषु

॥१८॥ अप्स्ववहरणमश्वादाति ॥१९॥ ब्रह्मा पृच्छति होतारं यूपमभितः कः स्विदेकाकीति ॥२०॥ सूर्य ऽइत्याचष्टे ॥२१॥ होता ब्रह्माणं का स्विदासीदिति ॥२२॥ द्यौरिति प्रत्याह ॥२३॥५॥

अग्निमन्थनादि करोति ॥१॥ अग्निष्ठेऽश्वतूपरगोमृगान्नियुनक्ति ॥२॥ यथोक्तमश्वादौ देवताः ॥३॥ पर्यङ्ग्यानश्वे ॥४॥ पञ्चदश पञ्चदश रोहितादीन्त्सौर्यान्तानित

प्रवयन्ति । आवध्नन्तीति हरिस्वामिनः । प्रतिपत्नि एकैको व्याहृतिमन्त्रः । यथाक्रमं शिरोग्रीवापुच्छनालेष्विति वासुदेवः । ततश्च भूरिति महिषी अश्वस्य शिरो रोमसु मणीन्प्रवयति । भुव इति वावाताऽश्वग्रीवारोमसु । स्वरिति परिवृक्ता पुच्छरोमस्विति । अनुचर्योऽपि मणान् प्रवयन्ति केषाञ्चिदाचार्याणां मते ।

ततोऽश्वाय रात्रिहुतशेषद्रव्यं सक्तुधानालाजादिकं प्रयच्छति लाजीञ्छाचीनिति मन्त्रेण । यद्यश्वो हुतशेषं न भक्षयति तदा हुतशेषमप्सु प्रक्षिपेत् । ततो ब्रह्मा यूपं दक्षिणेनोदङ्मुख उपविशति । होता च यूपमुत्तरेण दक्षिणाभिमुखः ।

एवमुपविश्य ब्रह्मा कः स्विदेकाकी चरतीति मन्त्रेण होतारं पृच्छति। होता सूर्य एकाकीति ब्रह्माणं प्रत्याचष्टे , प्रतिवचनं ददाति । ततो होता का स्विदासीदिति मन्त्रेण ब्रह्माणं पृच्छति । ततो ब्रह्मा द्यौ रासीदिति मन्त्रेण प्रतिवचनं ददाति ।

इति विंशस्य पञ्चमी कण्डिका ॥ ५ ॥

ततोऽग्निमन्थनादि कर्म करोति । पूर्वदिनवदेकादशिनीद्रव्यं नियोगान्तम् ।

ततोऽग्निष्ठयूपेऽश्वतूपरगोमृगान्नियुनक्ति। अश्वस्तु यः सम्वत्सरमेवं संस्कृतः स एव । तूपरः शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनः । गोमृगो गवयः । प्रजापतये जुष्टं नियुनज्मीति प्रत्येकं त्रयाणामपि क्रमेण नियोजनम् । इतरान् कृष्णग्रीवादीन् द्वादश पर्यङ्ग्यानश्वे नियुनक्ति यथादेवं यथास्थानम् ।

ततोऽग्नये जुष्टं नियुनज्मीति मन्त्रेण कृष्णग्रीवं कृष्णवर्णगलमजमश्वस्य पुरस्ताल्ललाटे उपायेन नियुनक्ति । ततः सरस्वत्यै जुष्टमिति

रेषु ॥५॥ कपिञ्जलादीन्पृषतान्तांस्त्रयोदश त्रयोदश यू-

हन्वोरधस्तान्मेषीम् । अश्विभ्यां जुष्टमिति द्वावधोरामौ पशू अश्वबाह्वोः पूर्वपादयोरेकैकं नियुनक्ति ।

ततः सोमापूषभ्यां जुष्टमिति श्यामं शुक्लकृष्णरोमाणं पशुमश्वस्य नाभ्यामालभते। ततः सूर्याय जुष्टमिति श्वेतं पशुमश्वस्य दक्षिणपार्श्वे नियुनक्ति । ततो यमाय जुष्टमिति कृष्णं पशुं सव्येऽश्वपार्श्वे नियुनक्ति । ततस्त्वष्ट्रे जुष्टमिति द्वौ लोमशसक्थौ बहुलोमयुक्तसक्थिकौ अश्वस्य सक्थ्योरूर्वोः पश्चात्पादयोरेकैकमालभते । ततो वायवे जुष्टमिति श्वेतवर्णं पशुमश्वस्य पुच्छे बध्नाति ।

तत इन्द्राय स्वपस्याय जुष्टमिति वेहतं गर्भघातिनीं पुच्छ एवालभते। ततो विष्णवे जुष्टमिति वामनं पशुं पुच्छ एवालभते । एवं पञ्चदशाश्वादिभिः सह भवन्ति । एते पर्यङ्ग्या इत्युच्यन्ते । अत्राश्वस्य शरीरन्तरणाय तुम्बीफलवद्रज्जुं बद्ध्वा गुम्फनीयम् । ततः कृष्णग्रीव आग्नेयो रराट इत्यादयोऽश्वस्य शरीरे यथोक्तस्थाने सम्बद्धया रज्ज्वा बन्धनीयाः । ततो रोहितो धूम्ररोहित इत्यादीन द्वादशसंख्याकान् शितिबाहुरन्यतःशितिबाहुः समन्तशितिबाहुस्ते बार्हस्पत्या इत्यन्तान् मध्यमे यूप एव नियुनक्ति । "सप्तदशैव पशून् मध्यमे यूप आलभत" इति श्रुतेः ।

तत्र त्रयोऽश्वतूपरगोमृगाः, द्वौ वाग्नेयावेकादशिनौ, द्वादश रोहितादयः । एवं सप्तदश मध्यमे यूपे १७। ततः पृषती क्षुद्रपृषती स्थूलपृषती इत्यादीनां श्वेताः सौर्याः इत्यन्तानां शतत्रयसंख्यकानां पशूनां मध्ये पञ्चदश पशूनेकैकस्मिन्यूपे नियुनक्ति । एवमितरेषु यूपेषु पञ्चदश पञ्चदशैते· पशवः, एकैकश्चैकादशिनः । एवं मध्यमयूपव्यतिरिक्तेषु विंशतियूपेषु षोडश षोडश पशवो भवन्ति । "षोडश षोडशेतरेष्वि"ति श्रवणात् ।

सप्तदशैव पशून मध्यमे यूप आलभत इत्यत्र हरिस्वामिनः । पञ्चदश पर्यङ्ग्याः । द्वौ चाग्नेयौ एकादशिनौ एते सप्तदश मध्यमे । इतरेषु यूपेषु पञ्चदश पञ्चदश रोहितादयः, एकैकश्चैकादशिनः, एवं षोडश षोडश भवन्तीत्येवं कात्यायनो मेने । एवं वर्ण्यमाने द्वादश पशवोऽतिरिच्येरन् । तत्र सप्तदशैव पशून्मध्यम इति मध्यमस्य गौणभावो द्वादशसु गौणः स्यात् । तस्मादेवमगच्छामः । त्रयोऽश्वादयः, द्वादश रोहितादयः, द्वौ चाग्नेयौ इत्येते सप्तदश मध्यमे नियुज्यन्त इति ।

तत्र रोहितः सर्वरक्तः, द्वितीयो धूम्ररोहितः—धूम्रवर्णमिश्रो रक्तः तृतीयः कर्कन्धुरोहितः—बदरसदृशरक्तः, एवं विधास्त्रयः पशवः सौम्याः सोमदेवत्याः सोमाय जुष्टं नियुनज्मीत्येवं प्रत्येकं मध्यमे यूप

एव नियोज्याः । ततो बभ्रुः-कपिलवर्णः, द्वितीयोऽरुणबभ्रुः-अस्पष्टरागो बभ्रुवर्णः, अरुणवर्णमिश्रः कपिलः, तृतीयः शुकबभ्रुः, शुकेन पक्षिणा समानवर्णः कपिलश्च, एवं विधास्त्रयः पशवो वारुणाः वरुणदेवताकाः वरुणाय जुष्टमिति प्रत्येकं मध्यमे यूपे बन्धनीयाः ।

एवं सर्ववाक्यानामर्थो वर्णनीयः । शितिरन्ध्रः, अन्यतः शितिरन्ध्रो द्वितीयः, समन्तशितिरन्ध्रस्तृतीयः, शितिः कृष्णवर्णं रन्ध्रं छिद्रं यस्मिन् स तथा । अन्यत इत्येकपार्श्वे कृष्णं रन्ध्रं छिद्रं यस्य स तथा । समन्तः सर्वतः शितिरन्ध्राणि यस्य स तथा । "शितिर्धवलमेचकावि" त्यमरः । एते सवितृदेवत्याः सवित्रे जुष्टमिति मध्यमे यूप एव नियोज्याः । शितिबाहुः श्वेतपूर्वपादः । अन्यतः शितिबाहुः । एकस्मिन्नेव पार्श्वे शितिपादः द्वितीयः समन्तशितिबाहुः श्वेतबाहुस्तृतीयः । एते बार्हस्पत्याः बृहस्पतये जुष्टमिति प्रत्येकं मध्यम एव नियोज्याः ।

अथ द्वितीये यूपे नियुज्यन्ते । पृषती विचित्रवर्णा विन्दुयुक्तशरीरा । क्षुद्रपृषती सूक्ष्मविचित्रबिन्दुयुक्ता । स्थूलपृषती स्थूलविचित्रबिन्दुयुक्ता । एते त्रयः स्त्रीपशवः । ताः स्त्रियो मैत्रावरुण्यः मित्रावरुणदेवताः मित्रावरुणाभ्यां जुष्टमिति प्रत्येकं द्वितीये यूपे नियोक्तव्याः । अत्र द्वितीयादियूपेषु एकादशिनीवदुच्छ्रयणक्रमेण प्रत्येकं पञ्चदशानां पञ्चदशानां नियोगः ।

तत एकः शुद्धवालो निर्दिष्टवालः शुभ्रवालः, द्वितीयः सर्वशुद्धवालः, तृतीयो मणिवालः, एते त्रयोऽश्विदेवताः । अश्विभ्यां जुष्टमिति प्रत्येकं द्वितीययूपे नियोगः । एकः श्वेतः रक्तवर्णः श्वेतवर्णो वेति केचित् । द्वितीयः श्येताक्षः श्वेतनेत्रो वा रक्ताक्षः । तृतीयोऽरुणः अव्यक्तरागः रुद्राय पशुपतये जुष्टमिति । एते त्रयो द्वितीये यूपे । कर्णाः त्रयः पशुविशेषाः यामाः यमदेवता यमाय जुष्टमिति प्रत्येकं द्वितीये नियोगः ।

ततः अवलिप्ता अवलेपमवगणनां प्राप्तास्त्रयः पशवो रौद्रा रुद्रदेवताः रुद्राय जुष्टमिति प्रत्येकं द्वितीये नियोगः । एवं द्वितीये पञ्चदश पशव आलब्धव्याः ।

अथ तृतीये यूपे-नभोरूपा आकाशवन्नीलवर्णास्त्रयः पशवः पार्जन्याः पर्जन्यदेवताः पर्जन्याय जुष्टमिति प्रत्येकं तृतीये यूपे नियोज्याः । पृश्निः तिरश्चीनपृश्निः । उद्ध्र्वपृश्निः विचित्रवर्णः । तिरश्चीनानि पृश्नीनि विचित्राणि यस्य। एवमूद्ध्र्वानि पृश्नीनि यस्य स तथा। एवंविधवर्णा एते त्रयः पशवो मारुताः मरुद्देवताः, मरुद्भ्यो जुष्टमिति प्रत्येकं तृतीये यूपे नियोज्याः । फल्गूः अपुष्टपुच्छा १ लोहितोर्णा रक्तरो-

मवती २ पलक्षी अजा ३ एतास्तिस्रः सारस्वत्याः सरस्वत्यै जुष्टमिति। तृतीये-प्लीहाकर्णः प्लीहाख्यातकर्णः१ अष्टाकर्णो ह्रस्वकर्णः। २ अध्यालोहकर्णो रक्तवर्णकर्णकः।३ ते त्वाष्ट्राः त्वष्ट्रे जुष्टमिति तृतीये।

कृष्णग्रीवः१शितिकक्षः श्वेतकक्षः २ अञ्जिसक्थः ३ एते त्रय ऐन्द्राग्नाः इन्द्राग्निभ्यां जुष्टमिति तृतीये। एवं तृतीये पञ्चदश पूर्णाः।

अथ चतुर्थे यूपे—कृष्णाञ्जिः अल्पाञ्जिः महाञ्जिः। कृष्णमञ्जि पुच्छं यस्य, अल्पमञ्जि यस्य, महदञ्जि यस्य स तथेति एते त्रयः पशवः उषस्याः उषो देवताः उषसे जुष्टमिति प्रत्येकं चतुर्थे यूपे नियोज्याः। शिल्पाः विचित्रवर्णास्तिस्रः स्त्रीपशवो वैश्वदेव्यः विश्वेभ्यो देवेभ्यो जुष्टमिति चतुर्थे। रोहिण्यो रक्तवर्णास्त्र्यवयस्तिस्राऽवयो वाचे जुष्टमिति चतुर्थे। अविज्ञाता यथोक्तकृष्णादिचिन्हविज्ञानशून्यास्त्रयः पशवः अदित्यै जुष्टमिति चतुर्थे। सरूपाः समानरूपास्त्रयः पशवो धात्रे जुष्टमिति चतुर्थे।

अथ पञ्चमे यूपे—तिस्रो वत्सतर्यो देवानां पत्नीभ्यो जुष्टमिति पञ्चमे यूपे। कृष्णग्रीवाः कालकण्ठास्त्रयः पशव आग्नेयाः अग्नये जुष्टमिति पञ्चमे। शितिभ्रवः श्वेतभ्रूयुक्तास्त्रयः पशवो वसूनाम् वसुभ्यो जुष्टमिति पञ्चमे। रोहिता रक्तवर्णास्त्रयो रुद्राणां रुद्रेभ्यो जुष्टमिति पञ्चमे। श्वेता अवरोकिणोऽवलोकनस्त्रय आदित्यानां जुष्टमिति पञ्चमे।

अथ षष्ठे यूपे—नभोरूपा आकाशवन्नीलवर्णास्त्रयः पर्जन्याय जुष्टमिति षष्ठे यूपे। उन्नतः उच्चः १ ऋषभः २ वामनः ३ बह्वन्यपि वयसि गते वृद्धिरहितः एते त्रयः ऐन्द्रा वैष्णवा इन्द्राविष्णुभ्यां जुष्टमिति षष्ठे। उन्नत उच्चः शितिबाहुः श्वेतपूर्वपादः २ शितिपृष्ठः श्वेतपृष्ठः ३। एते त्रयः ऐन्द्राबार्हस्पत्याः इन्द्राबृहस्पतिभ्यां जुष्टमिति षष्ठे। शुकरूपाः शुकेन पक्षिणा समानरूपास्त्रयः पशवो वाजिनाः वाजिभ्यो जुष्टमिति षष्ठे। कल्माषाः कुर्बुरास्त्रयः पशवः आग्निमारुताः अग्निमरुद्भ्यो जुष्टमिति षष्ठे १५।

अथ सप्तमे यूपे—श्यामाः शुक्लकृष्णवर्णास्त्रयः पौष्णाः पूष्णे जुष्टमिति सप्तमे ३। एताः कुर्बुरवर्णास्त्रय ऐन्द्राग्नाः इन्द्राग्निभ्यां जुष्टमिति सप्तमे ६। द्विरूपा वर्णद्वयोपेताः त्रयोऽग्नीषोमीयाः अग्नीषोमाभ्यां जुष्टमिति सप्तमे ९। वामनाः ह्रस्वा अनड्वाहस्त्रय आग्नावैष्णवाः अग्नाविष्णुभ्यां जुष्टमिति सप्तमे १२।

अथाष्टमे यूपे—अन्यत एकस्मिन्पार्श्वे कर्बुरवर्णास्तिस्रो गावो मैत्र्यो मित्राय जुष्टमित्यष्टमे यूपे। कृष्णग्रीवास्त्रय आग्नेया अग्नये जुष्टमित्यष्टमे। बभ्रवः कपिलवर्णास्त्रयः सौम्याः सोमाय जुष्टमित्यष्टमे।

श्वेतवर्णास्त्रयो वायव्याः वायवे जुष्टमिति अष्टमे। अविज्ञाताः चिह्नविशेषेणाऽज्ञातास्त्रयः पशवाऽदित्यै जुष्टमित्यष्टमे १५।

अथ नवमे यूपे—सरूपाः समानरूपास्त्रयो धात्रे जुष्टमिति नवमे यूपे। तिस्रो वत्सतर्यो देवानां पत्नीभ्यः देवानां पत्नीभ्यो जुष्टमिति नवमे। कृष्णा भौमा भूमिदेवता भूम्यै जुष्टमिति नवमे। धूम्रा धूम्रवर्णास्त्रय आन्तरिक्षाः अन्तरिक्षदेवता अन्तरिक्षाय जुष्टमिति नवमे। बृहन्तो महान्तो दिव्याः द्युदेवतास्त्रयः दिवे जुष्टमिति नवमे।

अथ दशमे यूपे—शबलाः कर्बुरास्त्रयः वैद्युता विद्युद्देवता विद्युते जुष्टमिति दशमे। सिध्माः सिध्माख्यरोगवन्तः त्रयः पशवस्तारकाः नक्षत्रदेवताः तारकाभ्यो जुष्टमिति दशमे। धूम्रान् धूम्रवर्णान् त्रीनजान् वसन्ताय जुष्टमिति दशमे। श्वेतान् श्वेतवर्णान् त्रीन् ग्रीष्माय जुष्टमिति दशमे। कृष्णवर्णान् त्रीन् वर्षाभ्यो जुष्टमिति दशमे।

अथैकादशे यूपे—अरुणान् अरुणवर्णान् त्रीन् शरदे जुष्टमिति ३। पृषतान्नानावर्णबिन्दुयुक्तान् हेमन्ताय जुष्टमिति ६। पिशङ्गान् लोहितमिश्रकपिलवर्णान् त्रीन् शिशिराय जुष्टमिति ९। त्र्यवयः त्र्यविसंज्ञिकाः त्रयाणामविस्त्र्यविः पशुजातिविशेषास्त्रयो गायत्र्यै जुष्टमिति १२ पञ्चावयवः पञ्चाविसंज्ञास्त्रयः त्रिष्टुभे जुष्टमिति। पञ्चानामवयः पञ्चावय इति १५।

अथ द्वादशे यूपे-दित्यं खण्डनाहं वहन्तीति दित्यवाहस्त्रयः पशुविशेषा जगत्यै जुष्टमिति ३ त्रिवत्सास्त्रिवर्षास्तिसृणां वत्सा वा त्रयः अनुष्टुभे जुष्टमिति ६। तुर्यं वहन्तीति तुर्यवाहस्त्रयः उष्णिहे जुष्टमिति ९। पष्ठं वहन्तीति पष्ठवाहः। "पष्ठवाड् युगपार्श्वग" इत्यमरः। ते त्रयो विराजे जुष्टमिति १२। उक्षाणो महान्तो वृषभास्त्रयो बृहत्यै जुष्टमिति १५

अथ त्रयोदशे यूपे-ऋषभास्त्रयो वत्साः ककुभे जुष्टमिति ३। अनड्वाहस्त्रयः पङ्क्त्यै जुष्टमिति ६ धेनवस्तिस्रो गावोऽतिच्छन्दसे जुष्टमिति॥९॥

अथ चातुर्मास्यदेवतापशवः—श्वेताः सौर्या इत्यन्ताः। तत्र प्रथमं वैश्वदेवपर्वपशव उच्यन्ते। कृष्णग्रीवा अग्नये जुष्टमिति १२ बभ्रवः कपिलास्त्रयः सोमदेवताः सोमाय जुष्टमिति १५।

अथ चतुर्दशे यूपे—उपध्वस्ताः उपध्वंसनगुणविशिष्टाः वर्णान्तरमिश्रिता वा त्रयः सवितृदेवताः सवित्रे जुष्टमिति ३ तिस्रो वत्सतर्यः सरस्वतीदेवताः सवित्रे जुष्टमिति ६ श्यामाः शुक्लकृष्णवर्णास्त्रयः पौष्णाः पूषदेवताः पूष्णो जुष्टमिति ९ पृश्नयः तनुकायाः विचित्रवर्णाः त्रयः मरुद्देवताः मरुद्भ्यो जुष्टमिति १२ बहुरूपास्त्रयो विश्वदेवताः

विश्वेभ्यो देवेभ्य इति १५।

अथ पञ्चदशे यूपे—वशा बन्ध्यास्तिस्रो द्यावापृथिवीदेवताः द्यावापृथिवीभ्यां जुष्टमिति ३।

अथ वरुणप्रघासपशव उच्यन्ते—उक्ताः सञ्चरा इति। सञ्चरशब्देन कृष्णग्रीवा आग्नेया इत्यादयः पूर्वकण्डिकोक्ताः पञ्चदश पशव उच्यन्ते। पञ्च सञ्चराणि हवींषि भवन्तीतिवत्। यथा चातुर्मास्येषु चतुर्ष्वपि पर्वसु आग्नेयादीनि पञ्च हवींषि समानानि। एवमत्रापि चतुर्णां पर्वणां सम्बन्धिनामाद्यानां पञ्चानां देवानामाद्या एते पञ्चदश पशवः समाना एव भवन्तीत्यर्थः। तेन सञ्चराः उक्ताः आग्नेयादयः पञ्चदश पशव उक्ता इत्यर्थः। त्रयः कृष्णग्रीवा अग्नये जुष्टमिति ६। त्रयः कपिलवर्णाः सोमाय जुष्टमिति ६। उपध्वस्ताः सवित्रे जुष्टमिति १२। तिस्रो वत्सतर्यः सरस्वत्यै जुष्टमिति १५।

अथ षोडशे यूपे—त्रयः श्यामाः पूष्णे जुष्टमिति ३। एताः कर्बुरास्त्रय इन्द्राग्निदेवताः इन्द्राग्निभ्यां जुष्टं ६ कृष्णवर्णास्त्रयो वरुणदेवताः वरुणाय जुष्टम् ६ पृश्नयस्तनुशरीरास्त्रयो मरुद्देवता मरुद्भ्यो जुष्टम् १२ त्रयस्तूपराः शृङ्गहीनाः कायाः कदेवताः काय जुष्टम् १५।

अथ सप्तदशे यूपे—साकमेधपशवः त्रीन् प्रथमजान् मात्रापूर्वजातान् अजान् अग्नयेऽनीकवते जुष्टम् ३ वात्या वातसमूहः। सह वात्यया वर्तन्त इति सवात्याः तान् त्रीनजान् मरुद्भ्यः सान्तपनेभ्यो जुष्टम् ६। वष्किहान् चिरप्रसुतान् त्रीनजान् मरुद्भ्यो गृहमेधिभ्यो जुष्टम् ६। संसृष्टान् त्रीनजान् मरुद्भ्यः क्रीडिभ्यो जुष्टम् १२। अनुसृष्टान् अनुक्रमेण जातान् त्रीनजान् मरुद्भ्यः स्वतवद्भ्यो जुष्टमिति १५।

अथाष्टादशे यूपे—महाहविःपशवः उक्ताः सञ्चरा इति कृष्णग्रीवा आग्नेया इत्यादयः पञ्चदश पूर्ववत्।

अथैकोनविंशतितमे यूपे—एताः कर्बुरा इन्द्राग्निदेवताः त्रयोऽजाः इन्द्राग्निभ्यां जुष्टम् ३ त्रयः प्राशृङ्गाः प्रकृष्टशृङ्गयुक्ता महेन्द्रदेवताः महेन्द्राय जुष्टमिति ६ त्रयो बहुरूपा अजा विश्वकर्मदेवताः विश्वकर्मणे जुष्टम् ६

अथ पित्र्येष्टिदेवताः पशवः—धूम्राः कृष्णमिश्रलोहितवर्णाः बभ्रुनीकाशाः कपिलवर्णसदृशास्त्रयः पशवः सोमवद्भ्यः पितृणाम्भवन्ति। अपसव्यं कृत्वा पितृभ्यः सोमवद्भ्यो जुष्टम् १२। बभ्रवः कपिलाः धूम्रनीकाशाः धूम्रा इव नितराङ्काशन्त इति धूम्रनीकाशाः पितृणां बर्हिषदाम्भवन्ति। पितृभ्यो बर्हिषद्भ्यो जुष्टम् १५।

अथ विंशतितमे यूपे—कृष्णा बभ्रुनीकाशाः कृष्णवर्णाः कपिलवर्णसदृशाः

अथ एते पितृभ्योऽग्निष्वात्तेभ्यो जुष्टम् ३ सव्यम्। उदकालम्भः।

अथ त्रैयम्बकेष्टिदेवताः पशवः—कृष्णाः पृषन्तो बिन्दुयुक्ताः एते त्रयस्त्रैयम्बकाः त्रैयम्बकाय जुष्टम्। उदकोपस्पर्शः। अथ शुनासीरीयाः पशवः—तत्र उक्ताः सञ्चराः आग्नेयादयः पञ्चदश पशव उक्ताः, तेन कृष्णग्रीवा आग्नेयाः ६ बभ्रवः सौम्याः १२ उपध्वस्ताः सावित्राः १५।

अथैकविंशतितमे यूपे। वत्सतर्यः सारस्वत्यः ३ श्यामाः पौष्णाः ६। एताः कर्बुरास्त्रयः शुनासीरदेवताः शुनासीराभ्यां जुष्टम् ६। श्वेतवर्णास्त्रयो वायुदेवताः वायवे जुष्टमिति। १२। श्वेतवर्णास्त्रयः सूर्यदेवताः सूर्याय जुष्टमिति १५। अश्वादयः सौर्यान्ताः सप्तविंशत्यधिकं शतत्रयं ग्राम्याः पशवः सर्वे उक्ताः।

अथारण्याः पशव उच्यन्ते—अत्र एकविंशतिर्यूपाः। तेषां यूपानां विंशतिरन्तरालानि, तेषु अन्तरालेषु अन्तरालोत्पत्तिक्रमेण कपिञ्जलादयस्त्रयोदश त्रयोदश पशव आलम्भनीयाः। अत्र यूपान्तरालेष्वारण्यपशूनां बन्धनोपाय उक्तो मानवसूत्रे। नाडीषु प्लुषि मशकान्, करण्डेषु सर्पान्, पञ्जरेषु मृगव्याघ्रहिंसान्, कुम्भेषु मकरमत्स्यमण्डूकान्, जलेषु पक्षिकारासु हस्तिनो, नौषु चौदकानि, यथार्थमितरानिति। ये पशवो येनोपायेन यूपान्तरालेषु तिष्ठन्ति ते तेनोपायेन स्थापनीया इति तात्पर्यम्।

अत्र येषामारण्यजीववाचिपदानामर्था न ज्ञायन्ते ते निगमनिरुक्तनिघण्टुव्याकरणोणादिवृत्त्यभिधानग्रन्थेभ्यो विलोक्यावगन्तव्याः। तत्र प्रथमोत्पन्ने यूपान्तराले त्रीन् कपिञ्जलान् वसन्ताय जुष्टं नियुनज्मि इति प्रत्येकं नियुज्यन्ते ३ त्रीन् कलविङ्कान् चटकान् ग्रीष्माय जुष्टम् ६ त्रीन तित्तिरीन् वर्षाभ्यो जुष्टम् ६। तिस्रो वर्तिकाः पक्षिविशेषान् शरदे जुष्टम् १२। ततः हेमन्ताय जुष्टमिति त्रयाणाङ्ककरसंज्ञकानां मध्ये एकङ्ककरम् १३।

अथ द्वितीये अवकाशे—हेमन्ताय जुष्टमिति द्वौ अवशिष्टौ ककरौ २। ततस्त्रीन्विककरान् शिशिराय जुष्टमिति ५ त्रीन् शिशुमाराय जलचरजन्तून्त्समुद्राय जुष्टम् ८। त्रीन् मण्डूकान् पर्जन्याय जुष्टम् ११। ततस्त्रयाणां मत्स्यानां मध्ये द्वौ मत्स्यौ अद्भ्यो जुष्टम् १३।

अथ तृतीये आकाशे—अद्भ्यो जुष्टमित्यवशिष्टमेकं मत्स्यम् १ त्रीन कुलीपयान् जलजान् मित्राय जुष्टम् ४ त्रीन् नाकान् नक्रसम्बन्धिनो जलचरान् वरुणाय जुष्टम्। ७। त्रीन् हंसान् सोमाय जुष्टम्। १० तिस्रो बलाकाबकपत्न्यः वायवे जुष्टम् १३।

पान्तरेषु ॥६॥ अश्वप्रोक्षणमद्भ्यस्त्वा ऽवायुष्ट्वेति॥७॥ उ॰

---

अथ चतुर्थे अवकाशे--त्रीन् कुञ्चान् पक्षिणः इन्द्राग्निभ्यां जुष्टम् ३ । मद्गून् त्रीन् जलकाकान् मित्राय जुष्टम् ६ । त्रीन् चक्रवाकान् वरुणाय जुष्टम् ९ त्रीन् कुटरून् कुक्कुटान् अग्नये जुष्टम् १२ । ततस्त्रयाणामुत्र॰ कानां मध्ये एकमुलूकं वनस्पतिभ्यो जुष्टम् १३ ।

अथ पञ्चमे अवकाशे--वनस्पतिभ्यो जुष्टमिति द्वौ उलूकौ । उलूका वा॰ यसशैरिणः २ । त्रीन् चाषान् किकिदीवीन् अग्नीषोमाभ्यां जुष्टम् । ५ । त्रीन् मयूरान् बर्हिणः अश्विभ्यां जुष्टम् ८ । त्रीन् कपोतान् मित्रावरुणा॰ भ्यां जुष्टम् ११ । ततस्त्रयाणां लवानां मध्ये द्वौ लवौ लघुपक्षिणौ सो॰ माय जुष्टम् १३ ।

अथ षष्ठे अवकाशे—ततः सोमाय जुष्टम् एकम् १ अवशिष्टलवम् । त्रीन् कौलीकान् पक्षिणः त्वष्ट्रे जुष्टम ४ । तिस्रो गोषादीः देवानां पत्नीभ्यो जुष्टम् ७ । तिस्रः कुलीकसंज्ञाः देवजामिभ्यो जुष्टम् १० । त्रीन् पारु॰ ष्णसंज्ञान् गृहपतये अग्नये जुष्टम् १३ ।

अथ सप्तमे अवकाशे—त्रीन् पारावतान् कलरवान् अन्हे जुष्टम् ३। तिस्रः सीचापूः पक्षिणः रात्र्यै जुष्टं,६।जतूपत्राख्याः पक्षिणः तिस्रः अहो॰ रात्रयोः सान्धभ्यो जुष्टम् ६ । त्रीन् दात्योहान् कालकण्ठान मासेभ्यो जुष्टम् १२ ततस्त्रयाणां महतां सुपर्णानां महापक्षिणां मध्ये एकं महान्तं सुपर्णं सम्वत्सराय जुष्टमित्यालभते १३ ।

अथाष्टमे अवकाशे । अवशिष्टौ द्वौ महान्तौ सुपर्णौ सम्वत्सराय जुष्टम् २। त्रीनाखून मूषकान् भूम्यै जुष्टम ५ त्रीन् पाङ्क्त्रान् मूषकजातिविशेषान् अन्तरिक्षाय जुष्टम् ८ । त्रीन् कशान् तद्भेदानेव दिवे जुष्टम ११ त्रीन् न कुलान् सर्प्परिपून् तेषां द्वौ नकुलौ दिग्भ्यो जुष्टम् १३ ।

अथ नवमे अवकाशे—दिग्भ्यो जुष्टमित्यवशिष्टमेकं नकुलम् १ । त्रीन् बभ्रुकान् अवान्तरदिशाभ्यो जुष्टम् ४ । त्रीन् ऋक्षान् रोहितः वसुभ्यो जुष्टम ७ । रुरून् गौरमृगान् त्रीन् रुद्रेभ्यो जुष्टम १० । उदकस्पर्शः । न्यङ्कून् मृगविशेषान् आदित्येभ्यो जुष्टम् १३ ।

अथ दशमे अवकाशे—त्रीन् पृषतान् विश्वेभ्यो देवेभ्यो जुष्टम् ३ । तत॰ स्त्रीन् कुलुङ्गान् कुरङ्गान् हरिणान् साध्येभ्यो जुष्टम् ६ त्रीन् परस्वतो मृगविशेषान् ईशानाय जुष्टम ६ त्रीन् गौरमृगान् मित्राय जुष्टम् १२ । ततस्त्रयाणां महिषाणां मध्ये एकं महिषं वरुणाय जुष्टम् १३ ।

अथैकादशेऽवकाशे—द्वौ महिषौ अवशिष्टौ वरुणाय जुष्टम् ११ त्रीन् गव॰

पगृह्यास्यपाम्पेरुराग्निः पशुरिति ॥८॥ कपिञ्जलादीनुत्सृ-
जन्ति पर्यग्निकृतान् ॥९॥ हिरण्यवासोऽधीवासेऽश्वस्य सं-
ज्ञपनम् ॥१०॥ परिपशव्ये हुत्वा प्राणाय स्वाहेति ति-

यान् गोसदृशानारण्यपशून् बृहस्पतये जुष्टम्। ५ त्रीन् उष्ट्रान् क्रमेल-
कान् त्वष्ट्रे जुष्टम् ८ त्रीन् पुरुषान् हस्तिनः प्रजापतये जुष्टम् ११ त्रीन्
प्लुषीन् वक्रतुण्डान् तेषां मध्ये द्वौ प्लुषी वाचे जुष्टम्। १३।

अथ द्वादशावकाशे। अवशिष्टम् एकं प्लुषिं वाचे जुष्टम्। त्रीन् मशकान्
चक्षुषे जुष्टम् ४। त्रीन् भृङ्गान् भ्रमरान् श्रोत्राय जुष्टम् ७। एको गौ-
मृगो गवयः प्रजापतये च वायवे च जुष्टम् ८ आरण्य एको मेष अविः
वरुणाय जुष्टम् ९ एकः कृष्णो मेषः यमाय जुष्टम् १० एको मर्कटः
मनुष्यराजाय जुष्टम् ११ रोहित ऋषभः एकः शार्दूलाय जुष्टम् १२ एका
गवयी गोसदृशी ऋषभाय जुष्टम् १३

अथ त्रयोदशे आकाशे। एका वर्तिका क्षिप्रश्येनाय जुष्टम्। एकः क्रिविः
नीलङ्गवे जुष्टम् २। एकः शिशुमारो जलचरः समुद्राय जुष्टम्। ३।
एको हस्ती हिमवते जुष्टम् ४। तुरङ्गवदनः अश्वमुखः किन्नरः स प्रजा-
पतिदेवताकः प्रजापतये जुष्टम् ५। उलः मृगविशेषो, हलिक्ष्णः सिंहविशेषः
वृषदंशो बिडालः ते त्रयो धात्रे जुष्टम् ८ एकः काकः पक्षी दिशां दिग्भ्यो
जुष्टम् ९ एका धुङ्क्षा पक्षिविशेषः आग्नेयी अग्निदेवत्या अग्नये जुष्टम् १०
कलविङ्कश्चटकः ११ लोहिताहिः रक्तवर्णः सर्प्पः १२। पुष्करसादः पक्षि-
विशेषः ते त्रयः त्वाष्ट्राः त्वष्टृदेवताः त्वष्ट्रे जुष्टम् १३

अथ चतुर्दशे आकाशे। एकः कुञ्चः वाचे जुष्टम् १ एकः कुलुङ्गः कुरङ्गो
हरिणः सोमाय जुष्टम् २ आरण्योऽजश्छागः १ नकुलः सर्पारिः २। शका
शकुन्तिः। एते पौष्णाः पूषदेवत्याः पूष्णे जुष्टम् ५। क्रोष्टा शृगालो मा-
योः सम्बन्धी मायवे जुष्टम् ६। एको गौरवर्णो मृगः इन्द्रस्य सम्बन्धी
इन्द्राय जुष्टम ७। पिक्वः १ न्यङ्कुमृगविशेषः २ कर्कटः ३ ते त्रयः पशव
अनुमत्यै जुष्टम् १०। एकश्चक्रवाकः प्रतिश्रुत्कायै जुष्टम्। ११। एका
वलाका बकस्त्री सौरी सूर्यदेवत्या सूर्याय जुष्टम् १२। सूर्यतिष्यागस्त्ये
ति ङ्यां परतो यलोपः सौरीत्यत्र। शार्ङ्गः पक्षिविशेषो मित्राय जुष्टम् १३

अथ पञ्चदशे आकाशे। एकः सृजयः पक्षिविशेषः शयाण्डको द्वितीयः।
एतौ द्वौ मित्राय जुष्टम् २। एकः शारिः शुकः कीदृशः पुरुषवाक् सर-
स्वत्य जुष्टम् ३ श्वाविस्त्सेधाऽसौ भौमी भूमिदेवत्या भूम्यै जुष्टम् ४
शार्दूलो व्याघ्रः वृकः चित्रकः पृदाकुः सर्पः ते एते पशवो मन्यवे जुष्टम्

स्तोऽपराः ॥११॥ वाचयति पत्नीर्नयन्नमस्तेऽम्बऽइति ॥१२॥ अश्वं त्रिस्त्रिः परियन्ति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति ॥१३॥ प्रक्षालितेषु महिष्यश्वमुपसंविश-त्याऽहमजानीति ॥१४॥ अधीवासेन प्रच्छादयति स्वर्गे लोकऽ इति ॥१५॥ अश्वशिश्नमुपस्थे कुरुते वृषा वाजी-ति ॥१६॥ उत्सक्थ्या ऽइत्यश्वं यजमानोऽभिमन्त्रयते

---

७ एकः पुरुषवाक् शुकः सरस्वते जुष्टम् ८। सुपर्णो गरुत्मान् पर्जन्य-देवतः पर्जन्याय जुष्टम् ६ आतिर्वाहसो दर्विदा ते एते त्रयः पक्षिणो वा-यवे जुष्टम् १२। पैङ्गराजः पक्षिविशेषः बृहस्पतये वाचस्पतये जुष्टम् १३

अथ षोडशे आकाशे क्रमेण तिसृभ्यो देवताभ्यः त्रयः पशवः एको लजः आन्तरिक्षदेवतः अन्तरिक्षाय जुष्टम् १ प्लवः मद्गुः, कारण्डवः जल-चरः २ मत्स्यः ३ ते नदीपतये जुष्टम् ४ एकः कूर्मः कच्छपो द्यावापृथि-वीयः द्यावापृथिवीभ्यां जुष्टम् ५ एकः पुरुषमृगः चन्द्रमसो देवतायाः चन्द्रमसे जुष्टम् ६ गोधाः १ कालका २ पक्षिविशेषः दार्वाघाटः शत-पत्रकः एते त्रयो वनस्पतीनां पशवः वनस्पतिभ्यो जुष्टम् ६। एकः कृकवाकुः ताम्रचूडः सावित्रः सवितृदेवतः १० एको हंसो वातस्य पशुः वाताय जुष्टम् ११। एको नाक्रः द्वितीयो मकरः तृतीयः कुलीपयः ते त्रयः एतेषां मध्ये नाक्रो मकरः इत्येतौ अकूपारस्य अकूपाराय जुष्टम् १३

अथ सप्तदशे आकाशे। अवशिष्टः एकः कुलीपयः अकूपारस्य अकूपा-राय जुष्टम् १ एकः शल्यकः ह्रियै जुष्टम् २ एका एणी। कर्बुरवर्णा। अजा अन्ह आलभ्या अन्हे जुष्टम् ३। एको मण्डूकः द्वितीया मूषिका तृतीयः तित्तिरिः एते त्रयः सर्पाणाम्। सर्पेभ्यो जुष्टम् ६ एको लोपा-शसंज्ञः अश्विदेवतः अश्विभ्यां जुष्टम्। ९। एकः कृष्णवर्णोऽजः रात्र्यै जुष्टम् ८। एकः ऋक्षः भालुकः, जतूका द्वितीयः, सुषिलीका पक्षि-विशेषस्तृतीयः एते त्रयः पशवः इतरजनानाम्भवन्ति इतरजनेभ्यो जुष्टम् ११। एका जहका वैष्णवी विष्णुदेवता विष्णवे जुष्टम् १२। अन्य वापो मृगविशेष एकः अर्द्धमासानां पशुः अर्द्धमासेभ्यो जुष्टम् १३।

अथाष्टादशे आकाशे। एकः ऋष्यः रोहितः द्वितीयो, मयूरो बर्हो तृतीयः सुपर्णो गरुत्मान्। एते त्रयो गन्धर्वाणां पशवः। गन्धर्वेभ्यो जुष्टम् ४ एको रुरुः प्राणिविशेषः अपां पशुः अद्भ्यो जुष्टम्। एकः कश्यपसंज्ञो मासानां पशुः मासेभ्यो जुष्टम् ५। एको रोहितः

॥१७॥ अध्वर्युर्ब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकाऽसकाविति दशर्चस्य द्वाभ्यां द्वाभ्याᳪं हये हयेऽसावित्यामन्त्र्यामन्त्र्य ॥१८॥ सानुचर्यः प्रत्याहुः

ऋश्यः कुरङ्गणाची पात्रं पशुर्द्वितीयः। गोलत्तिका तृतीयः । एते त्रयोऽप्सरसां पशवः अप्सरोभ्यो जुष्टम् ८। एकः सितः श्वेतः पशुर्मृत्यवे जुष्टम् ६ एको वर्षाभूर्ऋतूनां पशुः ऋतुभ्यो जुष्टम् १० एक आखुः, द्वितीयः कशः, तृतीयो मान्थालः । ते त्रयाणां पितॄणां पशवः पितृभ्यो जुष्टम् १३

अथैकोनविंशतिमे आकाशे । एको ऽजगरो वृहत्सर्पः बलाय जुष्टम् १ । एकः कपिञ्जलो वसूनां पशुः वसुभ्यो जुष्टम् ३ एकः कपोतः । द्वितीय उलूकः । तृतीयः शशः । ते त्रयोऽपि निर्ऋत्यै जुष्टम् ५ एक आरण्यो मेषः वरुणाय जुष्टम् ६ । एकश्वित्रः श्वेतवर्ण आदित्यानां पशुः । आदित्येभ्यो जुष्टम् ७ एक उष्ट्रः दीर्घग्रीवः । द्वितीयो घृणीवान । वार्ध्रीणसस्तृतीयः इति त्रयो मर्त्यै जुष्टम् १० एकः सृमरो गवयः अरण्याय जुष्टम् ११ रुरुर्महाकृष्णसारः गौरभृङ्गो वा स रौद्रो रुद्रदेवतः रुद्राय जुष्टम् १२ उदकस्पर्शः । ततः एकः कपिर्वाजिभ्यो जुष्टम् १३

अथ विंशतितमे आकाशे । कुटरुः कुक्कुटः एकः दात्यौहः कालकण्ठो द्वितीयः एतावपि वाजिभ्यो जुष्टमिति नियोज्यौ २ । एकः पिकः कोकिलः कामाय जुष्टम् ३ एकः खड्गरूङ्गो विश्वेदेवदेवतः विश्वेभ्यो देवेभ्यो जुष्टम् ४ । एकः श्वा सारमेयः कृष्णवर्णः द्वितीयः कर्णो गर्दभः । तृतीयस्तरक्षुर्मृगादनः । ते त्रयो रक्षसां पशवः रक्षोभ्यो जुष्टम् ३ । उदकस्पर्शः । एकः सूकरः इन्द्राय जुष्टम् ८ । ततः एकः सिंहो मारुतो मरुद्देवतः मरुद्भ्यो जुष्टम् ६ । तत एकः कृकलासः सृगः पिप्पका द्वितीयः शकुनिः पक्षी । ते त्रयः शरव्यायै जुष्टम् १२ । एकः पृषतो मृगविशेषो विश्वेषां देवानां सम्बन्धी पशुर्भवति । ततश्च विश्वेभ्यो देवेभ्यो जुष्टं नियुनज्मीति नियोज्यः १३

एवं षष्ट्यधिकं शतद्वयमारण्याः पशव उक्ताः । अत्र द्वाविंशतिरेकादशिनाः सप्तविंशत्यधिकानि त्रीणि शतानि अश्वादयः सौर्यान्ताः । षष्ट्यधिकं शतद्वयं कपिञ्जलादयः पृषतान्ता आरण्याः पशवः । सर्वे मिलिताः षट् शतानि नवाधिकानि पशवो भवन्ति । श्लोकश्च—

"षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि ।
अश्वमेधस्य यज्ञस्य नवभिश्चाधिकानि हि ॥"

तत ऐकादशिनान्सवनीयान्प्रोक्ष्य यजमानेऽन्वारब्धे अद्भ्यस्त्वौष-

धीभ्य इति प्राकृतं मन्त्रं पठित्वा वायुष्ट्वा पचतरवत्वित्यादि तत्र त्वा देवः सविता दधात्वित्यन्तं कण्डिकाचतुष्टयात्मकमाश्वमेधि मन्त्रं पठित्वा प्रजापतये त्वा जुष्टं प्रोक्षामीत्युपांश्वश्वं प्रोक्षति। ततोऽपां पेरुरस्यापो देवीरित्यनेन प्राकृतेनाग्निः पशुरित्यनेन वैकृतेन च प्राश्नणीरश्वस्य मुखे उपगृह्णाति। एवं प्रोक्षणीभिस्तर्पयित्वा पुनः प्रोक्षणीः संस्कृत्येतरान् पशूनश्वतूपरगोमृगरोहितादीन् पृषतान्तान् सर्वान् यथादेवतं प्रकृतिवत् प्रोक्षति। तत्रैकस्याश्वस्यादुपेक्षणान्तं कार्यम्। उपाकरणनियोजनप्रोक्षणानि यथासम्भवं क्रमेण सर्वेषां कुर्यात्।

तत इध्मप्रैषादि पर्यग्निकरणान्ते इदं वसन्ताय इदं ग्रीष्माय इदं वर्षाये इदं शरदे इदं हेमन्तायेत्येवमिदं विश्वेभ्यो देवेभ्य इत्यन्तान् कपिञ्जलादीन् पृषतान्तान् देवतोद्देशेनालम्भक्रमेण यजमान उत्सृजति। ततस्ते कपिञ्जलादयः पञ्जरादेर्निष्काश्य मुच्यन्ते। ततो यथेच्छं गच्छन्ति।

अश्वसंज्ञपनकाले वासोऽधीवासहिरण्यानि शामित्रस्य पश्चाद् भूमेरुपर्यास्तीर्य तेषामुपर्यश्वसंज्ञपनं शामितारः कुर्वन्ति। तेषां त्रयाणामुपरि प्राकृतं वेदितृणमपि प्रासनीयम्। "प्राकृतञ्चान्यार्थत्वादितरेषामि"ति न्यायानुसारात्। गणश्रमा ऊहाश्च सर्व एकादशिन्यामुक्ताः। परिपशव्ये हुत्वा प्राणाय स्वाहेत्याद्या अपरास्तिस्र आहुतयो होतव्याः। ततो नेष्टा सर्वाः पत्नीः पशुशोधनाय नयन् नमस्त इति प्राकृतम् अम्बेऽ अम्बिक इति वैकृतञ्चैवं मन्त्रद्वयं वाचयति।

ततः सर्वाः पत्न्यो गणानां त्वेति मन्त्रेण त्रिः प्रदक्षिणमश्वं परियन्ति सकृन्मन्त्रेण द्विस्तूष्णीम्। ततः प्रियाणामिति मन्त्रेण प्रदक्षिणं त्रिः परियन्ति सकृन्मन्त्रः। ततो निधीनां त्वेति मन्त्रेण पुनः प्रदक्षिणं त्रिः परियन्ति सकृन्मन्त्रः। अन्ते सकृदितरथावृत्तिः। वसो ममेत्यत्र त्रिष्वप्यनुषङ्गः। तत एकादशिनादीनां सौर्यान्तानां सर्वेषां पशूनां शोधनम्। ततो महिषी अश्वसमीपे शेते आऽहमजानीति मन्त्रेण।

ततोऽध्वर्युरध आस्तृतेनैवाधीवासेनाश्वमहिष्याच्छादनसमर्थेन वस्त्रेण स्वर्गे लोके प्रोर्णुवाथामिति मन्त्रेणाश्वमहिष्यौ प्रच्छादयति। ततो वृषा वाजी रेतोधा इति मन्त्रेण महिषी स्वयमश्वस्य शिश्नं स्वकीये उपस्थे कुरुते योनिप्रदेशे स्थापयति। ततो यजमानस्तयोरेवं शयानयोर्मध्ये उत्सक्थ्या अवेति मन्त्रेणाश्वमभि मन्त्रयते।

ततोऽध्वर्युः कुमारीं प्रति सम्वादं करोति। कुमारि हये हये कुमारि इत्यामन्त्र्य यकाऽसकौ शकुन्तिकेति मन्त्रेण। ततः कुमारी अध्वर्युं प्रति वदति। अध्वर्यो हये हये अध्वर्यो इत्यामन्त्र्य यकोऽसकौ शकुन्तक इति

॥१९॥ अनुचर्य ऽएकेषाम् ॥२०॥ महिषीमुत्थाप्य पुरुषा दधिक्राव्णऽ इत्याहुः ॥२१॥६॥

तिस्रः पत्न्योऽसिपथान्कल्पयन्त्यश्वस्य सूचीभिर्लौहराजतसौवर्णाभिर्मणिसंख्याभिर्गायत्री त्रिष्टुबिति॥१॥ रजतसुवर्णसीसाभिर्वा मन्त्राम्नानात् ॥२॥ सौवर्णा·

मन्त्रेण । ततो ब्रह्मा महिषीं प्रति सम्वादं करोति । महिषि हये हये महिषि इति महिषीमामन्त्र्य माता च ते पिता च त इति मन्त्रेण ।

ततः सानुचरी महिषी ब्रह्मन् हये हये ब्रह्मन्निति ब्रह्माणमामन्त्र्य माता च ते पिता च तेऽग्रे वृक्षस्येति मन्त्रेण ब्रह्माणं प्रति सम्वादं करोति । उद्गातारं प्रति सम्वादं करोति । उद्गातर्हये हय उद्गातरिति तमामन्त्र्य ऊर्ध्वमेनमुच्छ्रयतादिति मन्त्रेण ।

ततो होता परिवृक्ते हये हये परिवृक्ते इति परिवृक्तामामन्त्र्य तां प्रति यदस्या अंहुभेद्या इति मन्त्रेण सम्वादं करोति । ततः सानुचरी परिवृक्ता होतर्हये होतरिति होतारमामन्त्र्य तम्प्रति यद्देवासो इति मन्त्रेण प्रति सम्वादं करोति । ततः क्षत्ता प्रतिहारः पालागलि हये हये पालागलि इत्येवं पालागलीमामन्त्र्य तां प्रति यद्धरिणो इति मन्त्रेण सम्वादं करोति । सानुचरी पालागली क्षत्तर्हये हये हये क्षत्तरिति मन्त्रेण क्षत्तारमामन्त्र्य तं प्रति यद्धरिणो यवमत्ति न पुष्टं बहु मन्यत इत्यन्तेन मन्त्रेण प्रति सम्वादं करोति । सर्वे सम्वादेषु पत्न्योऽनुचरीसहिताः प्रत्याहुः ।

एकेषां मतेऽनुचर्य एव प्रत्याहुर्न पत्न्य इति । शतपथे चायमेव पक्षोऽस्ति । ततः सानुचर्यः पत्न्यो महिषीमश्वसमीपे सुप्तामुत्थापयन्ति । ततस्ता महिष्यादयो यथेतं प्रत्यागच्छन्ति । ततोऽध्वर्य्वादयः पुरुषा दधिक्राव्ण इति इमाम् ऋचं पठेयुः ।

इति द्विशस्य षष्ठी कण्डिका ॥ ६ ॥

ततो महिषी एकाधिकशतसंख्याभिः सीसमयीभिस्ताम्रमयीभिर्वा सूचीभिर्गायत्री त्रिष्टुबिति द्वाभ्यामृग्भ्यामश्वस्य त्वचि असिपथान् असेर्मार्गान् कल्पयन्ति सूचीः प्रवेश्य प्रवेश्यासिप्रवेशार्थं त्वचं जर्जरीं कुर्वन्तीत्यर्थः ।

ततो वावाता महानाम्न्य इति द्वाभ्यामृग्भ्यामेकाधिकशतसंख्याभी रजतमयीभिः सूचीभिरश्वस्य शरीरेऽसिपथान्करोति । ततः परिवृक्ता

सिरश्च ॥३॥ लौहाः पर्यङ्ग्याणाम् ॥४॥ आयसाऽ इतरेषाम् ॥५॥ अश्वं विशास्त्यनुवाकेन कस्त्वाऽऽच्छ्यतीति ॥६॥ मेदोऽस्योद्धरन्ति वपार्थे ॥७॥ लोहितं चास्य श्रपयन्ति ॥८॥ प्राजापत्यवपानामुत्तरतः श्रपणं होमो हविषश्च ॥९॥ प्राग्वपाहोमाद्धोताऽध्वर्यू च सदसि संवदेते चतसृभिः कः स्विदेकाकीति पूर्ववत् ॥१०॥ ब्रह्मोद्गातारौ च पृच्छामि त्वेति ॥११॥ पुनः पूर्वावपरेणोत्तरवेदिं का स्विदासीदिति ॥१२॥ उत्तरौ च कत्यस्येति॥१३॥

---

रजता हरिणीरिति द्वाभ्यां मन्त्राभ्यामेकाधिकशतसंख्याभिः सौवर्णीभिः सूचीभिरश्वस्य शरीरेऽसिमार्गान्करोति । अश्वस्य विकर्तनाद्यर्थं सौवर्णोऽसिर्भवति । सुवर्णपरिष्कृत इति हरिस्वामिनः । इतरेषां पर्यङ्ग्याणां लौहास्ताम्रमया असयो भवन्ति । ताम्रपरिष्कृता इति हरिस्वामिनः । सुवर्णताम्रधारैश्छेदनस्यासम्भवात् । अन्येषां रोहितादीनां सौर्यान्तानामायसा असयो भवन्ति ।

तत उत्तानकरणादि सर्वेषाम् । अश्वस्य विशसनेन वपाकालीने स्वधित इत्यभिधानानन्तरं छेदने कस्त्वा ऽऽच्छ्यतीत्यनुवाको मन्त्रः शम्यस्तु तन्त्रै तव इत्यन्तः । अश्वस्य वपा न भवति । तेन वपास्थानेऽश्वस्य मेद उद्धरेद्वपाकार्यार्थम् । मेदो घनीभूतमाज्यसदृशं श्वेतं मांसम् । तच्च न वपाश्रपणीभ्यां श्रपयितुं शक्यते । तेन सामर्थ्यात्काष्मर्यशूलाभ्यां विशाखा ऽविशाखाभ्यां श्रप्यत इति याज्ञिकाः ।

अतस्तत्पात्रस्य वपाश्रपणीवत्प्रोक्षणासादने भवतः । मेदसः प्राजापत्यवपानां चाहवनीयस्योपरि उत्तरतः श्रपणम् । वपानां हविषां होमोऽप्युत्तरत एव भवति । अश्वस्य लोहितमपि श्रपयन्ति । लोहितस्याग्रेहोमविधानाज्जुहोतिधर्माः प्रवर्तन्ते । ततो वपासु शृतासु प्राणदानानि यथास्वं कृत्वा आसाद्य स्वाहाकृतियागं च कृत्वा स्रुचावन्यहस्ते समर्प्य प्रत्यञ्चः सदसि गत्वा पूर्वया द्वारा सदः प्रविश्य यथास्वं स्वस्थानेषूपविश्य सदसि ब्रह्मोद्यं वदन्ति ।

तत्र प्रथमं कः स्विदेकाकीति होताऽध्वर्युं पृच्छति । अध्वर्युः सूर्य एकाकीति प्रतिवक्ति । ततोऽध्वर्युः किᳬ स्वित्सूर्यसममिति होतारं पृच्छति । होता ब्रह्म सूर्यसममिति प्रत्याह ।

**यजमानोऽध्वर्युं पृच्छामि त्वेति ॥१४॥ इयं वेदिरित्य-ध्वर्युः ॥१५॥ सर्वहुतेन महिम्ना चरति यस्ते ऽहन्निति जुहोति ॥१६॥ अत्र वा ग्रहणम् ॥१७॥ वपाभिश्चरति ॥१८॥ छागोस्रमेषाः पश्वभिधानाद्यथालिङ्गम् ॥१९॥ गुणवचनाच्चोदनाशब्दस्य ॥२०॥ प्रकृतौ चावचनात् ॥२१॥ एकाविंशतिप्रदानानेकेऽन्वष चातुर्मास्यदेवताः पि-**

---

ततो ब्रह्मा पृच्छामि त्वा चितय इत्युद्गातारं पृच्छति। उद्गाता अपि तेषु त्रिषु इति प्रत्याह। तत उद्गाता केष्वन्त इति ब्रह्माणं पृच्छति। ब्रह्मा पञ्चस्वन्त इति तं प्रति वदति। ततः सर्वे सदस्यो निष्क्रम्योत्तरेण हविर्द्धानं गत्वोत्तरवेदिमपरेणोपविष्टं यजमानं प्रति यान्ति। तत उत्तरवेदेः पश्चादेव यथायतनं पर्युपविश्य ब्रह्मोद्यं वदन्ति।

तत्र प्रथमं होता का स्विदासीदित्यध्वर्युं पृच्छति। ततोऽध्वर्युर्द्यौरासी-दिति तं प्रत्याह। ततोऽध्वर्युः का ऽईमरे इति होतारं पृच्छति। होता अजाऽरे इति तं प्रति वक्ति। ब्रह्मा कत्यस्येत्युद्गातारं पृच्छति। उद्गाता षडस्येति तं प्रत्याह। तत उद्गाता कोऽ अस्येति ब्रह्माणं पृच्छति। ब्रह्मा वेदाहमस्ये-ति तं प्रत्याह। ततो यजमानः पृच्छामि त्वा परमन्तमित्यध्वर्युं पृच्छति।

अध्वर्युश्चेयं वेदिरिति यजमानं प्रत्याह। ततोऽध्वर्युर्हविर्द्धानं प्रविश्य हिरण्मयेन पात्रेण द्रोणकलशात् पूतभृतो वा हिरण्यगर्भ इति मन्त्रेण प्रथमं महिमानं ग्रहं गृह्णाति। परिमृज्यैष ते योनिः सूर्यस्त इति सादयति। ततो ग्रहमादाय प्रजापतये महिम्ने इत्युपांशु अनुब्रूहि इत्युच्चैः। तत आश्राव्य प्रजापतये महिम्ने उपांशु प्रेष्येत्युच्चैः। यस्तेऽहन्त्संवत्सर इति मन्त्रेण वषट्कृते सर्वस्य होमः। नानु वषट्कारः।

तत एकादशिनानां पूर्ववद्वपाप्रचारः। अथाश्वादिपशूनां यथादेवतं क्रमेण वपाप्रचारः कर्तव्यः। तत्र प्रथमः पक्षः। अश्वादीनां सौर्यान्तानां सर्वपशूनां यथादेवतं क्रमेण वपाप्रचारः कर्तव्यः। समानदेवतानां त्रयाणां त्रयाणां सह प्रचारः। इतरसर्वपशुवपाभ्य उत्तरतः प्राजापत्यवपानां होमः। नानैव चरेयुरित्ययमर्थं पक्षः श्रूयते।

अथ द्वितीयः पक्ष उच्यते। अश्वस्तूपरो गोमृग इत्यादीनां बहुरूपा वैश्वदेवा इत्येतच्चातुर्मास्यदेवतापशुवैश्वदेवपर्यन्तानां वपानां क्रमेण प्रचारं कृत्वा वैश्वदेवस्य वपायां हुतायां तत ऊर्ध्वानां पशूनां सौर्या-न्तानां सर्ववपास्तूष्णीमेवाहवनीये सहैव जुहोति। अनुक्रमेण सर्वा

**तृत्रैयम्बकपुनरुक्तवर्जम् ॥२२॥ ऐन्द्राग्नवैश्वदेवकायाने-के ॥२३॥ देवता तन्त्रेण तु ॥२४॥ न कालभेदात् ॥२५॥**

उद्दिश्य त्यागश्च कार्यः। एवं वक्ष्यमाणेष्वप्यनुहोमपक्षेषु ज्ञेयम्। "अथातो वपानाᳪ होमो नानैव चरेयु" रित्यस्यां कण्डिकायामस्य पक्षस्य श्रुतेः।

अथ तृतीयः पक्षः। अथवा ऽश्वादीनां पशूनाम् एता ऐन्द्राग्ना इति वारुणप्रघासिकैन्द्राग्नपर्यन्तानां क्रमेण वपाचारं कृत्वा ऐन्द्राग्नस्य वपाहोमानन्तरं तदूर्ध्वानां सर्ववपानां सहैवानुहोमः कार्यः। 'ऐन्द्राग्नस्य वपायां हुतायां तदन्वितरा जुहूयुरि'ति श्रवणात्।

अथ चतुर्थः पक्षः। अथवाऽश्वादीनां पशूनां कायास्तपरा इति काय-पर्यन्तानां क्रमेण वपाप्रचारं कृत्वा तदूर्ध्वानां सर्ववपानां सहैवानुहोमः कार्यः। "कायस्य वपायां हुतायां तदन्वितरा जुहूयुरि' ति श्रवणात्।

अथ पञ्चमः पक्षः। पूर्वं त्रयाणां प्राजापत्यपशूनामश्वादीनां पृथक् वपा-प्रचारं कुर्यात्।

ततः कृष्णग्रीव आग्नेयो रराटे पुरस्तादित्यादीनां सौर्यान्तानां सर्व-पशूनांवपानामेकविंशति भागान् कृत्वा पितृ त्रैयम्बकपुनरुक्तवर्जितानामे-कविंशतिसंख्यानां चातुर्मास्यदेवतानामेकविंशतिः प्रदानानि कार्याणि। ततः सर्ववपानां प्रथममेकविंशतितमं भागं सर्वमवदायाग्नेययाज्यान्ते-ऽग्निमुद्दिश्य तस्य सर्वस्य होमः कार्यः। अग्निमेवोद्दिश्य तस्य भागस्य त्यागः कार्यः।

एवं सौम्यादि सौर्यपर्यन्ता यागा अनुष्ठेयाः। वचनादेवं विधो वपा-प्रचारो भवति। किमिव न कुर्याद्वचनम्। एकविंशतिश्चातुर्मास्यदेव-ता अनुहूत्यैकविंᳪशतिधा कृत्वा प्रचरेयुरि' त्यन्तस्य पक्षस्य श्रुतत्वात्। "एतावन्तो वै सर्वे देवा यावत्यश्चातुर्मास्यदेवतास्तदेवैनान्यथादेवतं प्रीणाती"त्युक्तिबलात्सर्वपशुवपानां चातुर्मास्यदेवताभ्यो होमे कृते स-र्वाभ्यो देवताभ्यो यथास्वं प्रदानं कृतं भवति।

अत्र क्रमेणैकविंशतिश्चातुर्मास्यदेवता उच्यन्ते। अग्निः ।१। सोमः ।२। सविता ।३। सरस्वती ।४। पूषा ।५। मरुतः ।६। विश्वेदेवाः ।७। द्यावापृथिव्यौ ।८। चेत्येता अष्टौ वैश्वदेवपर्वणो देवताः। इन्द्राग्नी ।९। वरुणः ।१०। मरुतः ।११। कः ।१२। एताश्चतस्रो वरुणप्रघासानाम्। अ-ग्निरनीकवान् ।१३। मरुतः सान्तपनान् ।१४। मरुतो गृहमेधिनः ।१५। मरुतः क्रीडिनः ।१६। महेन्द्रः ।१७। विश्वकर्मा ।१८। चेति षट् साकमे-धानाम्। शुनासीरौ ।१९। वायुः ।२०। सूर्यश्चेति तिस्रः शुनासीरीयस्येति।

# वपान्ते द्वितीयेन पूर्ववद्यस्ते रात्राविति जुहोति ॥२४॥

नन्वत्र कृष्णग्रीवा आग्नेया इत्यत आरभ्य श्वेताः सौर्या इत्येतत्पर्यन्ता द्वाचत्वारिंशद् देवताः सन्ति। तत्र पितृत्र्यम्बकपुनरुक्तवर्जिता द्वाविंशतिरेव शिष्यन्ते। तिस्रः पितृदेवताः, एकः त्र्यम्बकः, पञ्चदश सञ्चराः साकमेधैन्द्राग्नश्चेत्येवं षोडश पुनरुक्ताः, पूर्वैः सह विंशतिर्भवन्ति। नन्वेतदयुक्तम्? कुतः पितृणामपि देवतात्वात्। त्र्यम्बकस्याप्रधानदेवतात्वात् पुनरुक्तानामनन्यत्वात्। अतो द्वाचत्वारिंशन्मध्ये विंशतेरपसारणाद् द्वाविंशतिरवशिष्यन्त एव। तत्कथमुच्यते एकविंशतिरिति—उच्यते। मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टानित्यस्यास्मिन् क्रमे चातुर्मास्यदेवतामध्ये पाठाभावात्। तत्र मरुद्भ्यः स्वतवद्भ्यः सप्तकपालो मारुतो वेति। अनयोः पक्षयोर्मारुतो वेति पक्षोपादानेनेतरपक्षस्य निवर्तितत्वात्। अतस्तस्यात्राचातुर्मास्यदेवतात्वात्सोऽत्र न गण्यते। अदितेश्चात्र पशुविधानं नारूनुपमस्त्येव। एकपादिकायान्तस्याः पाठाभावात्। अतः साधूक्तमेकविंशतिमिति।

अथ स्वश्रुतिसूत्रसिद्धान्ततः शाखान्तराविरुद्धः षष्ठः पक्षोऽभिधीयते। प्रथममश्वादीनां त्रयाणां प्राजापत्यानां तन्त्रेण वपाप्रचारः। तत्र प्रजापतये उपांशु। अश्वस्य छागस्य गोमृगस्य मेदो वपाया मेदसोऽनुब्रूहीत्यनुवाचनम। आश्राव्य प्रजापतये उपांशु। अश्वस्य छागस्य गोमृगस्य मेदो वपां मेदः प्रस्थितं प्रेष्येति प्रैषः। एवं त्रयाणां प्राजापत्यानां सह यागः।

ततः कृष्णग्रीवादिसौर्यान्तानां सर्वपशुवपानां तन्त्रेणैको वपाप्रचारः। तत्र जुह्वामुपस्तीर्य हिरण्यमवधाय सर्वपशुवपानामकत्रैवावदानम्। विश्वेभ्यो देवेभ्यश्छागानां मेषाणामुस्राणां वपाभ्यो मेदसोऽनुब्रूहीत्युक्त्वा सर्वा वपा जुह्वामवदायोपरि हिरण्यमवधाय द्विरभिघार्यातिक्रम्याश्राव्य प्रस्थितं०। विश्वेभ्यो देवेभ्यश्छागानां मेषाणामुस्राणां वपानां मेदसः प्रस्थितं प्रेष्येति प्रचरतीति।

तथा च काठके—"त्रयाणां वपा उपस्तीर्याभिघारिताः कृत्वा प्रजापतयेऽश्वस्य तूपरस्य गोमृगस्य वपानां मेदस इति सम्प्रेष्य हुतासु राजतेन द्रोणकलशादुत्तरं महिमानं गृह्णाति यः प्राणतस्तस्य ते पृथिवी महिमेति हुत्वा प्रतिप्रस्थाता इतरेषां पशूनां वपा उपस्तीर्णाभिघारिताः कृत्वा जुह्वां पर्यस्यन्ति विश्वेभ्यो देवेभ्यश्छागानां मेषीणामुस्रियाणां वपानां मेदस इति सम्प्रैषाविति।

**शूलेऽश्वशेषश्रपणम् ॥२७॥ सर्पणप्रभृत्याप्रत्यासादना- त् कृत्वा ॥२८॥ ॥७॥**

**लोहितमवद्याति गोमृगकण्ठाश्वशफयोरयस्मये चरौ ॥१॥ वेतसशाखासु प्राजापत्यानाम् ॥२॥ अश्वस्य**

---

आश्वलायनश्च—"अश्वो यस्तूपरो गोमृग इति प्राजापत्या वैश्वदेवी क्लृप्तिरेषां पशूनामि"ति । कात्यायनेनाप्यस्य पक्षस्य पक्षान्तरेभ्यो- विशेषस्तुशब्देन ज्ञापितः । "देवता तन्त्रेण त्वि"ति । एवं वारत्रयेणा- श्वादिसर्वपशूनां वपाप्रचारं कृत्वा सर्वावपाश्रपणीरनुप्रास्य स्रुचौ नि- धाय चात्वाले मार्जनम् ।

ततोऽध्वर्युः पुनर्हविर्धानं प्रविश्य राजतेन पात्रेण यः प्राणत इति मन्त्रेण द्रोणकलशात्पूतभृतो वोत्तरं महिमानं ग्रहं गृह्णाति । ततः परिमृ- ज्यैष ते योनिश्चन्द्रमास्ते महिमेति सादनम् । ततः पुनरादाय प्रजापतये महिम्ने । उपांशु । अनुब्रूहि । आश्राव्य प्रजापतये महिम्ने उपांशु प्रेष्ये- त्युच्चैः । यस्ते रात्रौ सम्वत्सर इति सकृत्सर्वस्यैव होमः । नानुवषट्कारः ।

ततः सर्पणादिकर्म । प्रतिदेवतं सवनीयाः पुरोडाशा भवन्ति । अश्वा- वदानग्रहणान्तेऽश्वलोहितस्य पात्रेण ग्रहणम् । ततोऽवदानातिरिक्तस्या श्वशेषस्य ग्रहणम् । तस्य श्रपणार्थं शूले प्रतर्दनम् । अवदानानां श्रप- णान्ते लोहिताश्वशेषयोरधिश्रयणम् । लोहितभागडशूलयोः केचिदुखाव- न्मन्त्रेणादानाधिश्रयणमिच्छन्ति । प्रतिदेवतं पशुपुरोडाशाः, तेषां प्रचा- रेऽपि वपावत् षट् पक्षाः । प्रथमाहवद्दक्षिणादानम् ।

इति विंशस्य सप्तमी कण्डिका ॥ ७ ॥

---

तृतीयसवने—आग्रयणादनन्तरमुक्थ्यग्रहणम् । अवदानानामा- लम्भनान्ते गोमृगस्य गवयस्य कण्ठे गले अश्वशफे अयस्मये चरौ चो- पस्तीर्य लोहितमवदायोपरिष्टादभिघारणं कार्यम् । लोहितपात्राणां जु- होतिवत्संस्कारा भवन्ति ।

तत ऐकादशिन्योर्हविःप्रचारं प्रथमसुत्यावत् कृत्वा प्राजापत्यानां त्रयाणामपि जौहवान्यौपभृतानि च वेतसशाखासूत्तरतोऽवखण्डयति । अश्वस्यैव वा नेतरयोः । प्राजापत्यहविषां स्रुगादिभ्योऽप्युत्तरत आसा- दनमवदानं च आहवनीयस्योत्तरार्द्धे होमश्च । पूर्वं त्रयाणां प्राजापत्या- नां तन्त्रेण प्रचारः । तत्र प्रजापतये उपांशु । अश्वस्य छागस्य गोमृगस्य

**वा ॥३॥ स्विष्टकृद्वनस्पत्यन्तरे शूल्यꣳ हुत्वा देवताऽश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदैवतꣳ शादप्रभृतित्वगन्तेभ्यः ॥४॥ विमुखाच्च परेभ्यः ॥५॥ मानो मित्र इति च प्रत्यृचमनुवाकाभ्याम् ॥६॥ अन्त्यां द्यावापृथिवीयाम् ॥७॥ स्विष्टकृदन्तेऽग्निभ्यः स्विष्टकृद्भ्यः स्वाहेति लोहितं जुहोति**

---

हविषो हविरिति प्रेषौ ।

तत आग्नेयादीनां सौर्यान्तानां तन्त्रेण प्रचारः । विश्वेभ्यो देवेभ्यश्छागानां मेषाणामुस्राणां हविषोऽनुब्रूहि । हविः प्रस्थितमिति प्रैषौ । अत्रापि वपाप्रचारवत् षट् पक्षाः सन्ति । परन्तु अयमेव पक्षः सर्वसम्मतत्वात्सुकरत्वात् श्रुत्यभिमतत्वाच्चादरणीय इति ।

ततो वनस्पतियागानान्तरं स्विष्टकृतः प्राक् जुह्वामुस्तीर्य शूलस्थमश्वरूपं सर्वमवधायाभिघार्य प्रजापतये स्वाहेति अध्वर्युर्जुहोति ।

तत आज्यस्थाल्याश्चतुर्गृहीत्वा गृहीत्वा शादन्दद्भिरित्यस्मात् शादादारस्य पृथिवीं त्वचेत्येतत् त्वक्पर्यन्तेभ्यो देवताश्वाङ्गेभ्यो होमः कार्यः । देवताभ्योऽश्वाङ्गेभ्यश्चेति कर्कादयः । तेनैवं शादाय स्वाहा । दद्भ्यः स्वाहा । अवकायै स्वाहा । दन्तमूलेभ्यः स्वाहा । मृदे स्वाहा । वर्स्वेभ्यः स्वाहा । तेगायै स्वाहा । दꣳष्ट्राभ्याꣳ स्वाहा । सरस्वत्यै स्वाहा । अग्रजिह्वाय स्वाहा । जिह्वायै स्वाहा । उत्सादाय स्वाहा इत्यादि । पृथिव्यै स्वाहा त्वचे स्वाहेत्येतत्पर्यन्तं देवताभ्योऽश्वाङ्गेभ्यश्च जुहोति ।

तत्र शादावकामृदादयो देवताः । दन्तमूलादीन्यश्वाङ्गानि । प्रत्येकं चतुर्गृहीतहोमः, ततो विमुखसंज्ञादुग्रश्च भीमश्चेत्यस्मात्परेभ्यो देवताश्वाङ्गेभ्यश्च प्रत्येकं चतुर्गृहीतमाज्यं जुहुयात् । अग्नये स्वाहा । हृदयाय स्वाहा । अशनये स्वाहा । हृदयाग्राय स्वाहा । पशुपतये स्वाहा । कृत्स्नहृदयाय स्वाहेत्यादि विश्वेभ्यो देवेभ्यः स्वाहेत्येतत्पर्यन्तं हुत्वा मा नो मित्रो वरुण इति द्वाभ्यामनुवाकाभ्यां प्रत्यृचश्चतुर्गृहीतमाज्यं जुहुयात् ।

ततो द्यावापृथिवीभ्याꣳ स्वाहेति जुहोति । केचिच्छादादिभ्यो होमं सकृद्गृहीतेनेच्छन्ति । अत्र हरिस्वामिनः-आज्यमेवाश्वाङ्गरूपत्वेन मनसा सञ्चिन्त्य शादन्दद्भिः स्वाहा । अवकां दन्तमूलैः स्वाहेत्येवं जुहुयादिति ।

तथा च मानवे—'आहवनीये प्रत्याहुत्याज्यं गृहीत्वा समानाय सादयत्येवमुत्तरं शादन्दद्भिः स्वाहाऽवकां दन्तमूलैः स्वाहेति जुम्बकवर्जं पु-

यथावत्तम्॥८॥ अश्वशफेन वाऽनुयाजान्ते॥९॥ अयस्मयेन वा पत्नीसंयाजान्ते॥१०॥ इमा नु कमिति च द्विपदाः॥११॥ अतिरात्र उत्तमः॥१२॥ सर्वस्तोमो ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतमप्तोर्यामो वा॥१३॥ अप्तोर्यामे तिरोऽह्नीयेभ्यो रात्रिपर्याय उत्तमः॥१४॥ अग्निष्ठे प्राजापत्यौ च॥१५॥ अवभृथेष्ट्यन्तेऽप्सु मग्नस्य पिङ्गलखलतिविक्लिधशुक्लस्य मूर्द्धनि जुहोति जुम्बकाय स्वाहेति॥१६॥ उत्क्रान्ते यजमाने पापकृतोऽभ्यवयन्त्यचरित्वा व्रतानि॥१७॥ अश्व-

रस्तात् द्यावापृथिवीयस्यारण्याधीतेनानुवाकेन मा नो मित्रो वरुण इत्यश्वस्तोमीयं षोडशाहुतीर्जुहोतीति। ततः स्विष्टकृद्यागः। ततोऽवदानक्रमेणाग्निभ्यः स्विष्टकृद्भ्यः स्वाहेति मन्त्रेण लोहितं जुहोति।

अनुयाजान्ते वाऽश्वशफेनानेनैव मन्त्रेण लोहितस्य होमः। अस्मिन् पक्षे अयस्मयेन पात्रेण पत्नीसंयाजान्ते आहवनीय एवाग्निभ्यः स्विष्टकृद्भ्य इति मन्त्रेणैव लोहितं जुहोति। ततः पत्नीसंयाजान्त एव पूर्वसंस्कृतेनैवाज्येन पूर्ववदिमानु कमिति षड् द्विपदाभिश्चतुर्गृहीतमाज्यं प्रत्यृचं जुहुयात्। व्यूहने ग्राम्यपशुदेवतासंकीर्तनम्, आरण्यसम्बन्धिकर्मणामुत्सृष्टत्वात्। पत्नीसंयाजान्तमहः। श्वः सुत्याप्रैषः। पूर्ववदवभृथेष्टिप्रभृति। प्रतिपदि परिसमापनान्तम्।

ततोऽह्नः सन्धानम्। शाखाच्छेदः। वसतीवरीग्रहणम्। अत्र वा निधानान्तम्। ततो व्युत्क्रामतेत्यादिवसतीवरीपरिहरणम्। ततो वीणागणगिनः प्रजापतिनेमं यजमानं सङ्गायतेति प्रैषः। तेषां तथा सङ्गानम्। प्रातर्द्वितीयायामतिरात्रमहः।

अत्र विकल्पाः। सर्वस्तोमातिरात्रो वा उत्तमस्तृतीयमहर्भवति। ज्योतिरतिरात्रो वा गौरतिरात्रो वा अभिजिदतिरात्रा वा। विश्वजिदतिरात्रो वा। महाव्रतातिरात्रो वा। अप्तोर्यामातिरात्रो वेति। तत्र परिस्तरणादौ प्रजापतिनेममिति प्रैषः। तद्गानम्। चतुर्विंशतिर्गावो बहुरूपाः सवनीयाः पशवः। तेषां मध्ये द्वाविंशतिरैकादशिन्योर्द्वयोः। तत्र प्रथममग्निष्ठे आग्नेयौ नियुज्य प्रथमदिनवदेव शेषाणां नियोगः।

ततोऽग्निष्ठे त्रयोविंशे चतुर्विंशौ प्राजापत्यौ गावौ। यागोऽप्यनेनैव क्रमेण। अत्र सर्वं षोडशिग्रहणादिकमतिरात्रवत्। पूर्ववद्दक्षिणा। अप्तोर्यामपक्षे सर्वाणि पृष्ठ्यषडहसम्बन्धीनि रथसंसारणाद्युपाकरणा-

**मेधपूताख्यास्ते ॥१८॥ नानाऽवभृथानि वा ॥१९॥ कुम्भोपमारणान्तं पूर्वयोः ॥२०॥ शेषे दीक्षाव्रताभावात् ॥२१॥ सर्वं वा श्रुतेः ॥२२॥ एकविंशतिरनूबन्ध्याः ॥२३॥ उदवसानीयान्ते भार्या ददाति यथासम्वादं सानुचरीः २४ कुमारीं पालागलीं चाध्वर्यवे ॥२५॥ अनुचरीर्वा फलाधिकारादितरासाम् ॥२६॥ अनारम्भत्वाच्च ॥२७॥ द्वाद-**

---

नि पृष्ठेषु भवन्ति । होतृप्रत्ययाः प्रतिगराश्च । आश्विनशस्त्रस्य चमसप्रक्षालनान्ते चतुर्थो रात्रिपर्यायो भवति, रात्रिपर्यायश्चतुः स्तोत्रश्चतुः शस्त्रश्च ।

तत्र च छन्दोगवशात्प्रतिस्तोत्रं सर्पणमिति रात्रिपर्यायाद्विशेषः । श्वः सुत्यामिति प्रैषस्याभावः । समिष्टयजूंष्येकादश । अवभृथे कृष्णविषाणादीनां प्रासनं भवति पात्राणाञ्च । अवभृथेष्ट्यन्ते आज्यं संस्कृत्य पिङ्गलखलतिविक्लिधशुक्लस्य पिङ्गलस्य खलतेः शिरोरोमरहितस्य विक्लिधस्य दन्तुरस्य शुक्लस्यातिगौरस्य कुलमध्ये क्रीडितस्य मूर्द्धनि जुम्बकाय स्वाहेति सकृद्गृहीतमाज्यं जुहोति ।

ततः समुद्रे त इत्यृजीषकुम्भप्लावनादि सवनीयशेषसमाप्त्यन्तम् । उत्क्रान्ते यजमाने पापकृतोऽवभृथेष्ट्यनुष्ठानदेशे स्नानं कुर्वन्ति । तेषां ब्रह्महत्यादिपापनिबर्हणप्रायश्चित्तानि विनैव स्नानमात्रेण पापक्षयो भवति । उदयनीयान्ते एकविंशतिरनूबन्ध्या भवन्ति । तत्र सप्त मैत्रावरुण्यः सप्त वैश्वदेव्यः सप्त बार्हस्पत्या इति । तत्र प्रतियूपं नियोगोऽग्नीषोमीयवत् । मध्यमयूप एव सर्वासां नियोग इति सम्प्रदायः । त्रय एव पशुपुरोडाशाः । उदवसानीया त्रैधातवी । तदन्ते कुमार्याः पालागल्यनुचरीणाञ्चाध्वर्यवे दानम् । महिष्यनुचरीणां ब्रह्मणे दानम् । वावातायाः अनुचरीणामुद्गात्रे दानम् । परिवृक्ताया अनुचरीणां होत्रे दानम् । वीणागणगिनः प्रजापतिनेमं यजमानं सङ्गायतेति प्रैषः । तेषां तथा सङ्गानम् ।

तत आग्निकी मैत्रावरुणी पयस्या । ततः सायमाहुतिः । आदौ गृहप्रवेशनम् । अद्यप्रभृति गृहेषु द्वादशाहपर्यन्तं प्रत्यहमेकैक आग्नेयः पुरोडाशो भवति । अथवा प्रत्यहं ब्रह्मौदनो द्वादशाहपर्यन्तं प्रथमदिनवद् भवति । ततो वसन्तमारभ्याश्वमेधादनन्तरसम्वत्सरे प्रत्यृतु षट् षट् पशुयागास्तन्त्रेण भवन्ति ।

तत्र वसन्ते षडाग्नेयाः । ग्रीष्मे षडैन्द्राः । वर्षासु षट् पार्जन्याः ।

शाहमाग्नेयः पुरोडाशः ॥२८॥ ब्रह्मौदनो वा ॥२९॥ प्रत्यृतु पशूनालभते षट् षड् वसन्तायाग्नेयानैन्द्रान्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्रावैष्णवानैन्द्राबार्हस्पत्यान् ॥३०॥८॥२०॥

# एकविंशोऽध्यायः ।

पुरुषमेधस्त्रयोविंशतिदीक्षोऽतिष्ठाकामस्य ॥१॥ ब्रा-

---

मारुता वा । शरदि षट् मैत्रावरुणाः । हेमन्ते षडैन्द्राग्नैष्णवाः । शिशिरे च षडैन्द्रा बार्हस्पत्याः । एतेषामेकादशिनिधर्मेणाऽनुष्ठानम् । याज्ञिकानां मते यूपैकादशिनीवदित्यत्र ये वैशेषिका धर्मा उक्तास्त एवैतेषु पशुष्वेकादशिनीवद्भवन्ति । तद्व्यतिरिक्तास्तु निरूढधर्मा इति गणधर्मा ऊहाश्चैकादशिनीवत् । कर्कमते सर्वेष्वन्वाहार्यो दक्षिणा । याज्ञिकानां मते निरुढवत् पशुवरधेनूनामन्यतरदक्षिणाः ।

इति विंशस्याष्टमी कण्डिका ॥ ८ ॥

इति श्रीसम्राट्स्थपति त्रिराग्निचिन्महायाज्ञिक श्रीप्रजापतितनयेन याज्ञिक देवेन कृतायां कात्यायनसूत्रपद्धतौ विंशोऽध्यायः ।

इति अश्वमेधपद्धतिः समाप्तिमगमत् ।

---

अथ पुरुषमेधस्य पद्धतिर्लिख्यते । ब्राह्मणराजन्ययोरतिष्ठाकामयोः पुरुषमेधसंज्ञो यज्ञो भवति । सर्वाणि भूतान्यतीत्य अतिक्रमस्थानमतिष्ठा। तत्र चैत्रशुक्लदशम्यां मातृश्राद्धम् । पुरुषमेधेनाहं यक्ष्य इति वरणे। अत्र त्रयोविंशतिर्दीक्षा भवन्ति, द्वादशोपसदः, पञ्च सुत्या इति । एवं चत्वारिंशद्दिनैरयं सिध्यति ।

अत्र यूपैकादशिनी भवति । एकादश यूपा भवन्तीत्यर्थः । उभयमप्यनेनैव विधीयते । एकादशिनीवद्यूपास्तद्वत्सवनीयाश्च । तेषामेकादशानां यूपानाम् उपशयपत्नीयूपसहितानां छेदनादि निखनान्तः सर्वो विधिर्यूपैकादशिनीवत् । एकादशाग्नीषोमीयाः पशवो भवन्ति । तेषां च प्रतियूपं मध्यमे वा यूपे यथेच्छं नियोजनम् । एक एव तेषां पशुपुरोडाशः । सुत्यासु अग्निष्टोमसंस्थं प्रथममहः । द्वितीयमुक्थसंस्थम् । तृतीयमतिरात्रसंस्थम् । चतुर्थमुक्थसंस्थम् । पञ्चममग्निष्टोमसंस्थम् । इति पञ्च सुत्याहानि ॥

ह्मणराजन्ययोः ॥२॥ अग्निष्टोमावन्तरेणातिरात्र उक्थ्यपक्षः ॥३॥ यूपैकादशिनी भवति ॥४॥ तावन्तोऽग्नीषोमीयाः ॥५॥ पशूनुपाकरिष्यन्नतिरात्रे देव सवितरिति प्रत्यृचं तिस्रो जुहोति ॥६॥ एकादशिनानुपाकृत्य ब्राह्मणादींश्च ॥७॥ नियोजनकालेऽष्टचत्वारिंशतमाद्यानाग्निष्ठे ॥८॥ इतरेष्वे

---

तेषु प्रत्यहमैकादशिनाः पशवो भवन्ति । "एकादशिनाः सुत्यासु पशवो भवन्तीति श्रुतेः" ॥ द्वादशाहिकोऽत्र विधयन्तः । तेनाग्न्युपर्जानामन्हां पत्नीसंयाजान्तता । श्वः सुत्यामिति प्रैषः । माध्यन्दिनेऽवनीय वसतीवरीणां ग्रहणम् । अस्तमिते सर्वेष्वग्निषु समिदाधानमित्यादयः सर्वे गणधर्माः भवन्ति ।

अत्रापि राज्ञः पुरुषमेधे अश्वमेधवद्दक्षिणा । पुरुषैः सहिता दिग्विजयसमये प्राच्यां दिशि भूमिब्राह्मणस्ववर्जितं यावद् द्रव्यं पुरुषसहितमानीतं तत्पञ्चधा विभज्य प्रत्यहमेकैकं भागं होत्रे दद्यात् । एवं दक्षिणदिगुत्पन्नं द्रव्यं पञ्चधा विभज्यैकैकं भागं प्रतिसुत्यमध्वर्यवे । उत्तरदिगुत्पन्नं द्रव्यं सपुरुषं पञ्चधा विभज्यैकैकं भागं प्रतिसुत्यमुद्गात्रे दद्यात् । प्रतिपुरुषाणां महर्त्विग्दक्षिणामध्ये प्राकृतो विभागः । ब्राह्मणस्य पुरुषमेधे सर्वस्वं दक्षिणा । ततस्तदेव पञ्चधा विभज्य प्रत्यहमृत्विग्भ्य एकैकस्य भागस्य दानम् । सर्वस्वदानके पुरुषमेधे अंशवदाभ्यग्रहणं प्रतिसुत्यं भवति ।

अत्रातिरात्रसंस्थे मध्यमेऽहनि विशेषः । ऐकादशिनामुपाकरणानन्तरमाज्येन सकृद्गृहीतेन देव सवितरिति प्रत्यृचं तिस्र आहुतीराहवनीये जुहोति । ततो ब्राह्मणादीनामुपाकरणम् । ततोऽग्निमन्थनम् ।

ततः प्रतियूपमेकैकमेकादशिनन्नियुज्य ब्राह्मणादीनष्टाचत्वारिंशत्संख्यान्पुरुषान् प्रकामोद्यायोपसदमित्यन्तानग्निष्ठे यूपे नियुनक्ति । इतरेषु यूपेष्वेकादश पुरुषान् "वर्णायानुरुधम्" इत्यादीन्नियुनक्ति । तत्र वर्णायानुरुधमित्येवमादीनेकादश द्वितीये । २ "मर्यादायै प्रश्नविवाकम्" इत्यादींस्तृतीये ३ । "भायै दार्वाहारम्" इत्यादींश्चतुर्थे ४ । "वैरहत्याय" इत्यादीन् पञ्चमे ५ । योगाय योक्तारमित्यादीन् षष्ठे । परिवत्सरायाविजातानित्यादीन्सप्तमे ७ । पाराय मार्गारमित्यादीनष्टमे ८ । पश्चादोषाय ग्लाविनमित्यादीन्नवमे ९ । आस्कन्दाय सभास्थाणुम् इत्यादीन्दशमे १० । महसे वीणावादमित्यादीन् ग्रामण्यं गणकमभि क्रोशकन्तान्महस इत्यन्तानेकादशे ११ ।

**कादशैकादश ॥९॥ द्वितीयोच्छ्रिते शेषान् ॥१०॥ नियु·**

---

एवम्प्रतियूपमेकादशस्वेकादशसु नियुक्तेषु येऽधिका अवशिष्टा· स्तान् द्वितीयोच्छ्रिते यूपे नियुनक्ति । तांश्च वीणावादम्पाणिघ्नम् इत्यादीं· श्चतुर्दश राज्यै कृष्णं पिङ्गाक्षमित्यन्तान् ।

ततोऽथैतानष्टौ विरूपानुत्तमानालभते इति दर्शनार्थोऽनुवादः । माग· धादयस्तु पूर्वोक्ता एव गुणार्थं पुनः पुनः पठिता नापूर्वाः । ते वै प्राजा· पत्यानामिति मन्त्रपाठात् प्राप्तानामनुवादो दर्शनार्थः इति हरिस्वामिनः ॥

श्री अनन्तयाज्ञिकास्त्वाहुः—मागधादयोऽप्येवंविधाः प्रजापतेरेव चत्वारः । एवं षड्विंशतिः । शेषाः पूर्वोक्तैरेकादशभिः सह सप्तत्रिंशद्द्वितीयोच्छ्रिता भवन्ति । एतच्च युक्ततरमिवाभाति । प्राजापत्या इति पुनर्दैवतासम्बन्धविधानात् । पूर्वं विहितेष्येव मागधादिषु गुणविधाने चैतन्नोपपद्यते । तेषां देवतान्तरसम्बन्धस्य पूर्वमेव विहितत्वात् इति ।

तत्र ब्रह्मणे जुष्टन्नियुनज्मि इत्यग्निष्ठे ब्राह्मणं प्रथमं नियुनक्ति । १ स· र्वेषामपि यूप एव बन्धनम् । क्षत्राय जुष्टमिति क्षत्रिम् । २ मरुद्भ्यो जुष्टमिति वैश्यम । ३ तपसे जुष्टमिति शूद्रम् ४ । तमसे जुष्टमिति तस्करं-चौरम् । नारकाय जुष्टमिति वीरहणम ६ । पाप्मने जुष्टमिति क्लीबन्नपुंसकम् ७ । आक्रयायै जुष्टमिति अयोगूम् अयसो गन्ता· रम् । ८ । कामाय जुष्टमिति पुँश्चलम् ९ । अतिक्रुष्टाय जुष्टं माग· धम् १० । नृत्ताय जुष्टं सूतम । ब्राह्मण्यां क्षत्रियाज्जातः सूतः । ११ ॥ गीताय जुष्टं शैलूषं-नृत्तादि शिक्षाकरम् १२ । धर्माय जुष्टं सभा· चरम् ( सभायां चरतीति ) १३ । नरिष्ठायै जुष्टं भीमलं-भयकरम् ।१४। नर्माय जुष्टं रेभं--पुरुषम । १५ । हसाय जुष्टं कारिं करणविशिष्टम् १६ । आनन्दाय जुष्टं स्त्रीसखम स्त्रियाः सखायम् १७ । प्रमदे जुष्टं कुमारीपुत्रं कन्ययैव वाऽपरिणीतयैव जातम् । १८ । मेधायै जुष्टं रथ· कारम् । १९ । धैर्याय जुष्टं तक्षाणम् । २० । तपसे जुष्टं कौलालं कुला· लापत्यम् २१ । मायायै जुष्टं कर्मारं कर्मकरणदक्षम् । २२ । रूपाय जुष्टं मणिकारं रत्नमणिकर्त्तारम् । २३ । शुभे जुष्टं वपं पुरुषम् वपतीति वपः २४ । शरव्यायै जुष्टम् इषुकारं—शरकर्तारम् । २५ । हेत्यै जुष्टं धनुष्कारं धनुष्कर्तारम् २६ । कर्म्मणे जुष्टं ज्याकारं प्रत्यञ्चाकर्तारम् २७ । दिष्टाय जुष्टं रज्जुसर्ज्जम्— रज्जोः स्रष्टारं निर्मातारम् २८ । मृत्यवे जुष्टं मृगयुं मृगग्राहकम् २९ । अन्तकाय जुष्टं श्वनिनम् ३० ।

नदीभ्यो जुष्टं पौञ्जिष्टं पुञ्जिष्ठस्यापत्यम् ३१ । ऋक्षीकाभ्यो जुष्टं

# क्तान् ब्रह्माऽभिष्टौति होतृवदनुवाकेन सहस्रशीर्षेति ११

नैषादं—निषादापत्यम् ३२ । पुरुषव्याघ्राय जुष्टं दुर्म्मदम् ३३ । गन्धर्वाप्सरोभ्यो जुष्टं व्रात्यं—सावित्रीपतितम् ३४ । प्रयुग्भ्यो जुष्टम् उन्मत्तम ३५ । सर्पदेवजनेभ्यो जुष्टम् अप्रतिपदम्—प्रतिपदरहितं पुरुषम् ३६। अयेभ्यो जुष्टं कितवं—द्यूतकर्तारम् ३७ । ईर्यतायै जुष्टम् अकितवम्-अद्यूतकरम ३८ । पिशाचेभ्यो जुष्टं विदलकारीम् ३९ । यातुधानेभ्यो जुष्टं कण्टकीकारीम् । ४० । सन्धये जुष्टं जारम् ४१ । गेहाय जुष्टम् उपपतिम् ४२ । आर्त्यै जुष्टं परिवित्तं—परिवेदनकर्तारम् ४३ । निर्ऋत्यै जुष्टं परिविविदानम ४४ । अराध्यै जुष्टम् एदिधिषुः पतिम् ४५ । निर्ऋत्यै जुष्टं पेशस्कारीं—रूपकारीम ४६ । संज्ञानाय जुष्टं स्मरकारीम्—कामकारिणीम ४७ । प्रकामोद्याय जुष्टम् उपसदम्—उपसीदतीत्युपसत् ४८ । एतानश्विष्टे नियुनक्ति ॥

अथ द्वितीये यूपे—वर्णाय जुष्टम् अनुरुधम् १।४९ । बलाय जुष्टम् उपदाम्-उपददातीत्युपदाः ताम् । २।५० । उत्सादेभ्यो जुष्टं कुब्जम् अतिवक्रम ३।५१। प्रमुदे जुष्टं वामनम ४।५२। द्वार्भ्यो जुष्टं स्रामम् ५।५३। स्वप्नाय जुष्टम् अन्धम् ६।५४। अधर्माय जुष्टं बधिरम् ७।५५। पवित्राय जुष्टं वैद्यम् ८।५६। प्रज्ञानाय जुष्टं नक्षत्रदर्शम् । नक्षत्राणि दर्शयतीति गणकम् । आशिक्षायै जुष्टम् प्रश्निनं प्रश्नवन्तम् । १०।५८। उपशिक्षायै जुष्टम् अभिप्रश्निनम् ११।५९।

अथ तृतीये यूपे मर्यादायै जुष्टम् प्रश्नविवाकं प्रश्नविवेचकम् १।६०। अर्म्मेभ्यो जुष्टम् हस्तिपं गजपालकम् २।६१। जवाय जुष्टम् अश्वपं अश्वपालकम् ३।६२। पुष्ट्यै जुष्टं गोपालम् ४।६३। वीर्याय जुष्टम् अविपालम् ५।६४। तेजसे जुष्टम् अजपालम् ६।६५। इरायै जुष्टं कीनाशम् ७।६६। कीलालाय जुष्टम् सुराकारम् ८।६७। भद्राय जुष्टम् गृहपं गृहपालकम् ९।६८। श्रेयसे जुष्टम् वित्तधम् वित्तानि धीयन्ते यत्र स वित्तधः १०।६९। आध्यक्षाय जुष्टम् अनुक्षत्तारम् ११।७०।

अथ चतुर्थे यूपे-भायै जुष्टम् दार्वाहारं काष्ठानामाहर्तारम् १।७१। प्रभायै जुष्टम अग्न्येधम्—अग्नेर्वर्धकम् २।७२। ब्रध्नस्य विष्टपाय जुष्टम् अभिषेक्तारम ३।७३। वर्षिष्ठाय नाकाय जुष्टम परिवेष्टारं परिवेषणकर्तारम् ४।७४। देवलोकाय जुष्टं पेशितारम् ५।७५ मनुष्यलोकाय जुष्टम् प्रकरितारम् ६।७६ सर्वेभ्यो लोकेभ्यो जुष्टम उपसेक्तारं उपसेचनकर्तारम् ७।७७। अवऋत्यै वधाय जुष्टम् उपमन्थितारम् उपमन्थनकर्तारम् ८।७८।

**कपिञ्जलादिवदुत्सृजन्ति ब्राह्मणादीन् ॥१२॥ स्विष्टकृत्**

मेधाय जुष्टम् वासःपल्पूलीं वाससां प्रक्षालनकर्त्रीम् ९।७९। प्रकामाय जुष्टम् रजयित्रीं रञ्जनकारिणीं स्त्रियम् १०।८०।

अथ पञ्चमे यूपे—ऋतये जुष्टं स्तेनहृदयं तस्करस्येव हृदयं यस्य वैरहत्याय जुष्टं पिशुनम् ११।८१। विविक्त्यै जुष्टम् क्षत्तारं प्रतिहारम् १२।८३। औपद्रष्ट्र्याय जुष्टम् अनुक्षत्तारं प्रतिहारसेवकम् ३।८४। बलाय जुष्टम् अनुचरम् ४।८।। भूम्ने जुष्टं परिष्कन्दं परितः स्कन्दति स्रवतीति तथा ५।८६। प्रियाय जुष्टम् प्रियवादिनम् ६।८३। अरिष्ट्यै जुष्टम् अश्वसादम् अश्वारोहणकर्तारम् ७।८८। स्वर्गाय लोकाय जुष्टम् भागदुधं परिवेषकम् ८।८९। वर्षिष्ठाय नाकाय जुष्टं परिवेष्टारम् ९।९० मन्यवे जुष्टम् अयस्तापं लोहतापकरम् १०।९१। क्रोधाय जुष्टम् निसरं नितरां सर्तारम् ११।९२।

अथ षष्ठे यूपे—योगाय जुष्टम् योक्तारं योजनकर्तारम् १।९३। शोकाय जुष्टम् अभिसर्तारं सम्मुखमागच्छन्तम् २।९४। क्षेमाय जुष्टम् विमोक्तारं विमोचनकर्तारम् ३।९५। उत्कूलनिकूलेभ्यो जुष्टम् त्रिष्ठिनं त्रिषु स्थानेषु स्थितिमन्तम् ४।९६। वपुषे जुष्टम् मानस्कृतम् पूजाया अभिमानस्य वा कर्तारम् ५।९७। शीलाय जुष्टम् आञ्जनीकारीम् ६।९८। निर्ऋत्यै जुष्टम् कोशकारीम् ७।९९। यमाय जुष्टम् असूम् न सूते इत्यसूः बन्ध्या ताम् असूम् ८।१००। यमाय जुष्टम् यमसूं यमप्रसविनीम् ९।१०१। अथर्वभ्यो जुष्टम् अवतोकां निकृष्टप्रजां स्त्रियम् १०।१०२। सम्वत्सराय जुष्टम् पर्य्यायिणीं पर्यायो विद्यते यस्यां सा पर्यायिणी ताम् ११।१०३।

अथ सप्तमे यूपे—परिवत्सराय जुष्टम् अविजाताम् अप्रसूताम् १।१०४। इदावत्सराय जुष्टम् इत्वरीम् अतित्वरया गमनशीलाम् २।१०५ इद्वत्सराय जुष्टम् अतिष्कद्वरीम् ३।१०६ वत्सराय जुष्टम् विजर्जराम् ४।१०७ सम्वत्सराय जुष्टम् पलिक्नीं पलिताम् ५।१०६ ऋभुभ्यो जुष्टम् अजिनसन्धम् ६।१०८ साध्येभ्यो जुष्टम् चर्मम्नं चर्माभ्यासकरम् ७।११० सरोभ्यो जुष्टम् धैवरं धीवरस्यापत्यं धीवरो दासः। "कैवर्ते दासधीवरौ" इत्यमरः॥ ७।१११ उपस्थावराभ्यो जुष्टम्। दाशं "दाश्व दाने" क्विप् ददातीति दाश् तं दाशम ८।११२ वैशन्ताभ्यो जुष्टम् वैन्दं विन्दोरपत्यम् ९।११३ नड्वलाभ्यो जुष्टम् शौष्कलम्१०।११४।

अथाष्टमे यूपे पाराय जुष्टम् मार्गारम् १।११५ अवाराय जुष्टम्

नरपत्यन्तरे पुरुषदेवताभ्यो जुहोति ॥१३॥ सपुरुषमश्व·

कैवर्तं कैवर्तस्यापत्यम् २।११६ तीर्थेभ्यो जुष्टम् आन्दम् ३।११७ विष·मेभ्यो जुष्टम् मैनालम् ४।११८ स्वनेभ्यो जुष्टम् पर्णकम् ५।११६ गुहा·भ्यो जुष्टं किरातम् ६।१२० सानुभ्यो जुष्टम् जम्भकम् ७।१२१ पर्व·तेभ्यो जुष्टम् किंपूरुषम् ८।१२२ ।

बीभत्सायै जुष्टम् पौल्कसम् ६।१२३ वर्णाय जुष्टम् हिरण्यकारम् १०।१२४ । तुलायै जुष्टम् वाणिजम् ११।१२५ ॥

अथ नवमे यूपे—पश्चादोषाय जुष्टम् ग्लाविनम् १।१२६ विश्वेभ्यो भूतेभ्यो जुष्टम् सिध्मलम् २।१२७ भूत्यै जुष्टम् जागरणं पुरुषं जाग·रूकम् ३।१२८ अभूत्य जुष्टम् स्वपनं स्वापशीलम् ४।१२६ आर्त्यै जु·ष्टम् जनवादिनम् ५।१३० व्यृद्ध्यै जुष्टम् अपगल्भम् ६।१३१ सर्ठशराय जुष्टम् प्रच्छिदम् प्रच्छेदनकर्त्तारम् ७।१३२ अक्षराजाय जुष्टम् कितवम् ८।१३३ कृताय जुष्टम् आदिनवदर्शम् ९।१३४ त्रेतायै जुष्टम् कल्पिनम् १०।१३५ द्वापराय जुष्टम अधिकल्पिनम् ११।१३६ ।

अथ दशमे यूपे—आक्रन्दाय जुष्टम् सभास्थाणुम । १।१३७ मृ·त्यवे जुष्टम् गोव्यच्छम् २।१३८ अन्तकाय जुष्टम् गोघातं गोहन्तारम् ३।१३६ क्षुधे जुष्टम् यः पुरुषो गामभोक्तमाणो याचमानो विकृन्तन्तं छेदनं कुर्वाणमुपतिष्ठति समीपे तिष्ठति तं स्वयं बुभुक्षितं पुरुषं क्षुधे देव·तायै आलभते ४।१४० दुष्कृताय जुष्टम् चरकाचार्यम् । ५।१४१ पाप्मने जुष्टम् सैलगं सैलगापत्यम् ६।१४२ प्रतिश्रुत्कायै जुष्टम् अर्त्तनम् ७।१४३ घोषाय जुष्टम् भषम् ८।१४४ अन्तकाय जुष्टम बहुवादिनम् ६।१४५ अनन्ताय जुष्टम् मूकं पुरुषम् १०।१४६ शब्दाय जुष्टम् आडम्बरा·घातम् ११।१४७ ।

अथैकादशे यूपे—महसे जुष्टम् वीणावादम् १।१४८ क्रोशाय जु·ष्टम् तूणवध्मम् २।१४६ अवरस्पराय जुष्टम शङ्खध्मम् शङ्खवादनक·र्तारम् ३।१५० वनाय जुष्टम् वनपम् ४।१५१ अन्यतोरण्याय जुष्टम् दावपम् ५।१५२ नर्माय जुष्टम् पुंश्चलूम् ६।१५३ हसाय जुष्टम् कारिम् करणशीलम् ७।१५४ यादसे जुष्टम् शाबल्याम् ८।१५५ एकं ग्राम·ण्यम् ६।१५६ द्वितीयं गणकम् १०।१५७ । तृतीयमभिक्रोशकम् ११।१५८ तानेतान् त्रीन्पशून्महसे जुष्टम् आलभते ।

अथावशिष्टानध्यायसमाप्तिपर्यन्तान्द्वितीयोच्छ्रिते यूपे आलभते । एकं वीणावादम् १।१५६ द्वितीयं पाणिघ्नम् २।१६० तृतीयं तूणवध्मम्

**मेधवद्दक्षिणा ॥१४॥ सर्वस्वं ब्राह्मणस्य ॥१५॥ प्रतिदैवतं-तिस्रस्तिस्रोऽनूबन्ध्याः पश्चोत्तमायाम् ॥१६॥ त्रैधातव्यन्ते**

३।१६१ तान् त्रीन् नृत्ताय जुष्टम् इत्यालभते । आनन्दाय जुष्टम् तलवम् ४।१६२ अग्नये जुष्टम् पीवानम् स्थूलम ५।१६३ पृथिव्यै जुष्टम् पीठस-र्पिणम ६ १६४ वायवे जुष्टम् चाण्डालम् चाण्डालकर्माणम् साक्षा-च्चाण्डालस्याऽयुक्तत्वात् ७।१६५ अन्तरिक्षाय जुष्टम् वंशवर्त्तिनं, वंशं गृहीत्वा नर्तनशीलम् ८।१६६ दिवे जुष्टम् खलतिम् अलोमकशिरस्कम् ९।१६७ सूर्याय जुष्टम् हर्यक्षं हरिताक्षम् १०।१६८ नक्षत्रेभ्यो जुष्टम् किर्मिरम् कर्बुरवर्णम् ११।१६९ चन्द्रमसे जुष्टम् किलासम् १२।१७० अह्ने जुष्टम् शुक्लं शुक्लवर्णम् पिङ्गाक्षं पुरुषम् १३।१७१ रात्र्यै जुष्टम् कृष्णवर्णं पिङ्गाक्षम् १४।१७२ ।

अथानन्तरम् एतानष्टौ विरूपान् परस्परं विरुद्धरूपान् पशूनालभते, अतिदीर्घम् १।१७३ अतिह्रस्वम् २।१७४ अतिस्थूलम् ३।१७५ अतिकृशम् ४।१७६ अतिशुक्लम् ५।१७७ अतिकृष्णम् ६।१७८ अतिकुल्वं रोमरहितम् ७।१७९ अतिलोमशं सर्वशरीरेऽप्यधिरोमयुक्तम् ८।१८० एतावष्टावशूद्रा अ ब्राह्मणाः पशवो भवन्ति । ते एते अष्टावपि प्राजापत्याः प्रजापतिदेवता-काः । अष्टा उत्तमानालभते इति प्रकृत्य "ते वै प्राजापत्या भवन्तीति" श्रुतेः ।

अत्र जातिनियमात्पूर्वेषु जातेरनियमः। वीणावादमित्यादीश्चतुर्दश। अतिदीर्घादयोऽष्टौ । एवं द्वाविंशतिः शेषाः । एको मागधः । १८१ पुंश्चली द्वितीयः १८२। कितवस्तृतीयः १८३। क्लीबश्चतुर्थः १८४। एते चत्वारोऽपि अशूद्रा अब्राह्मणाः शूद्रव्यतिरिक्ताः ब्राह्मणाः ते चत्वारः प्राजापत्याः प्रजापतिदेवताः, पूर्वैः सहैते षड्विंशतिर्भवन्ति । एते सर्वे द्वितीयाच्छिते नियोज्याः ॥

सर्वेषां नियोगानन्तरं तान्नियुक्तान्पुरुषान् "सहस्रशीर्षा पुरुषः" इति षोडशर्चेनानुवाकेन होतृवदभिष्टौति दक्षिणत उपविष्ट एव । होतृवदिति प्रथमोत्तमयोस्त्रिर्वचनं ऋगन्तानां प्रणवेन सन्धानं च । सहस्रशीर्षा० पुरुष ए३० तो३मेतावात्यादि-एवं शंसनधर्मेणाभिष्टौति ।

तत आलम्भनक्रमेण यथादेवतप्रोक्षणादि ॥ सर्वेषां ब्राह्मणादीनां पर्यग्निकरणानन्तरम इदं ब्रह्मणे, इदं क्षत्राय, इत्येवं सर्वेषां यथास्वं देवतोद्देशेन त्यागः । सर्वान् ब्राह्मणादीन् यूपेभ्यो विमुच्य उत्सृजति ।

तत एकादशिनैः पशुभिः संज्ञपनादि-प्रधानयागान्तम् । वनस्पति-यागं कृत्वा प्राक् स्विष्टकृतः अध्वर्युराज्यं संस्कृत्य सकृद् गृहीतमाज्यं

समारोप्यात्मन्नग्नी सूर्यमुपस्थायाऽऽद्ध्यः सम्भृत इत्यनुवा·

गृहीत्वा पुरुषदेवताभ्यो ब्रह्मादिभ्य आहवनीये जुहोति। ओं ब्रह्मणे स्वाहा १ ओं क्षत्राय स्वाहा २ ओं मरुद्भ्यः स्वाहा३ओंतपसे स्वाहा४ तमसे ५नारकाय ६पाप्मने ७आक्रयायै ८कामाय ९अतिकुष्टाय १०नृत्ताय ११गीताय १२धर्माय १३नरिष्ठायै १४नर्माय १५हसाय १६आनन्दाय १७प्रमदे १८मेधायै १९धैर्याय २०तपसे २१मायायै २२रूपाय २३शुभे २४शरव्यायै २५हेत्यै २६कर्मणे २७दिष्टाय २८मृत्यवे २९अन्तकाय ३०नदीभ्यः ३१ऋक्षीकाभ्यः ३२पुरुषव्याघ्राय ३३गन्धर्वाप्सरोभ्यः ३४प्रयुग्भ्यः ३५सर्प्पदेवजनेभ्यः ३६अयेभ्यः ३७ईर्ष्यतायै ३८पिशाचेभ्यः ३९यातुधानेभ्यः ४०सन्धये ४१गेहाय ४२आर्त्यै ४३निर्ऋत्यै ४४अराध्यै ४५निष्कृत्यै ४६संज्ञानाय ४७प्रकामोद्याय ४८वर्णाय ४९बलाय ५०

उत्सादेभ्यः ५१प्रमुदे ५२द्वाभ्यः ५३स्वप्नाय ५४अधर्माय ५४पवित्राय ५५प्रज्ञानाय ५६आशिक्षायै ५७उपशिक्षायै ५९मर्यादायै ६०अर्मेभ्यः ६१जवाय ६२पुष्ट्यै ६३वीर्याय ६४तेजसे ६५इरायै ६६कीलालाय ६७भद्राय ६८श्रेयसे ६९आध्यक्षाय ७०

भायै ७१ । ७२प्रभायै ७१ब्रध्नस्य विष्टपाय ७३वर्षिष्ठाय नाकाय ७४देवलोकाय ७५मनुष्यलोकाय ७६सर्वेभ्यः ७७अवऋत्यै वधाय ७८मेधाय ७९प्रकामाय ८०

ऋतये ८१ वैरहत्याय ८२विविक्त्यै ८३औपद्रष्ट्र्याय ८४बलाय ८५भूम्ने ८६प्रियाय ८७अरिष्ट्यै ८८ स्वर्गाय लोकाय ८९वर्षिष्ठाय नाकाय ९०मन्यवे ९१क्रोधाय ९२योगाय ९३शोकाय ९४क्षेमाय ९५उत्कूलनिकूलेभ्यः ९६वपुषे ९७शीलाय ९८निर्ऋत्यै ९९

यमाय यमाय १००, १०१ अथर्वभ्यः १०२संवत्सराय ३परिवत्सराय ४इदावत्सराय ५इद्वत्सराय ६वत्सराय ७संवत्सराय ८ऋभुभ्यः ९साध्येभ्यः १०सरोभ्यः ११उपस्थावराभ्यः १२वैशन्ताभ्यः १३नड्वलाभ्यः १४पाराय १५अवाराय १६तीर्थेभ्यः १७विषमेभ्यः १८स्वनेभ्यः १९गुहाभ्यः १९सानुभ्यः २०पर्वतेभ्यः २१

बीभत्सायै २२वर्णाय २३तुलायै २४पश्चादोषाय २५विश्वेभ्यो भूतेभ्यः २६भूत्य २७अभूत्यै २८आर्तय २९वृद्ध्यै ३०सर्ठ०शराय ३१अक्षराजाय ३२कृताय ३३त्रेतायै ३४द्वापराय ३५आस्कन्दाय ३६मृत्यवे ३७अन्तकाय ३८क्षुधे ३९दुष्कृताय ५०पाप्मने ४१प्रतिश्रुत्कायै ३२घोषाय ४३अन्तकाय ४४अनन्ताय ५५शब्दाय ४५महसे ५७क्रोशाय ४८अवरपराय ४९वनाय

**केनानपेक्षमाणोऽरण्यं गत्वा न प्रत्येयात् ॥१७॥ ग्रामे वा विवत्सन्नरण्योः ॥१८॥१॥**

५०अन्यतोऽरण्याय५१

नर्माय ५२हसाय ५३यादसे ५५त्रिः ५६-५७, महसे त्रिः ५८,५९, ६०नृत्ताय ६१आनन्दाय ६२अग्नये ६३पृथिव्यै ६४वायवे ६५ अन्तरिक्षाय ६६दिवे ६७सूर्याय ६८ नक्षत्रेभ्यः ६९चन्द्रमसे ७० अह्ने ७१रात्र्यै ७२अष्ट-कृत्वः प्रजापतये ( इति )। चतुष्कृत्वः प्रजापतय इति १८४

एता आज्याहुतीर्जुहोति । एतः स्वाहाकारान्तैर्मन्त्रैः । ततः स्विष्ट-कृदादि । यज्ञायज्ञियवदुक्थविग्रहाः । ततः षोडशी ।

ततस्त्रयो रात्रिपर्यायाः । तत आश्विनम् । पात्रप्रक्षालनान्तेऽनुया-जादि । पत्नीसंयाजान्ते व्यूहने एकादशिनीदेवतानां सङ्कीर्तनम् । पुरुष-सम्बन्धिकर्मणामुत्सृष्टत्वात् ।

ततश्चतुर्थेऽहन्युक्थः। पञ्चमेऽहन्यग्निष्टोमः। तत्र श्वः सुत्याद्यभावः। तत्र पत्नीसंयाजान्ते दक्षिणाग्निहोमाद्यवभृथानन्तरं समिदाधानम्। तत एकवृ-द्बर्हिर्होमादिपूर्णपात्रविष्णुक्रमकर्मापवर्गान्तम्। बर्हिर्होमान्तमेवेति केचित्।

ततः स्रुवाहुत्याद्युदयनीयान्तम् । एकादशानूबन्ध्याः । तासाम्मध्ये तिस्रो मैत्रावरुण्यः । तिस्रो वैश्वदेव्यः । पञ्च बार्हस्पत्याः । त्रय एव पशुपुरोडाशाः। एकदेवतानां सह प्रदानम्। त्रैधातव्युदवसानीया। तदन्ते यजमान आत्मन्यग्नी अयन्ते योनिरिति मन्त्रेण समारोह्याद्भ्यः सम्भृत इत्य-नुवाकेनाध्यायसमाप्तिपर्यन्तेन सूर्यमुपस्थाय पश्चादवलोकनमकुर्वन् अ-रण्यं गच्छेत् । न ग्रामं प्रति यावज्जीवमागच्छेत्। सर्वं साङ्गपरित्यागं कृत्वा चतुर्थमाश्रमाश्रयेदित्यर्थः ।

अत्र शाङ्खायनः-"गार्हपत्येऽधरारणिमनुप्रहृत्याऽऽहवनीय उत्तरारणि-मात्मन्यग्नी समारोप्यारण्यं व्रजेत्" इति ।

अथ पुरुषमेधानन्तरं यदि पुनर्ग्रामवासेच्छा भवति न संन्यासे-च्छा तर्हि त्रैधातव्यन्ते सायमाहुतिं हुत्वाऽरण्योरग्नी समारोह्याद्भ्यः सम्भृत इत्युत्तरनारायणेनादित्यमुपस्थाय देवयजनमादीप्य गृहेषु प्र-त्यागच्छेत्।

ततः पुनर्येषां यज्ञानां करणे इच्छा भवति तान्कुर्यात् । इमं पुरुषमेधं ज्ञातिप्रियानूचानेभ्य एव पाठयेद् ग्रन्थतोऽर्थतश्च न सर्वेभ्यः। गृहं समा-गत्य निर्मथ्याऽग्निस्थापनं कुर्यात्।

इत्येकविंशस्य प्रथमा कण्डिका ॥ १ ॥

इति पुरुषमेधः समाप्तः ॥ * ॥

**सर्वमेधः सर्वकामस्य ॥१॥ दशरात्रः ॥२॥ अग्निष्टुत्त्वमः ॥३॥ अग्निष्टुत्त्रयऽउक्थ्या इन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तु·**

अथ सर्वमेधस्य पद्धतिर्लिख्यते । सर्वकामस्य यजमानस्य सर्वमेधसंज्ञको यज्ञो भवति । तत्र च द्वादशाहस्य धर्मा भवन्ति अहर्गणत्वात् । तेन द्वादश दीक्षाः, द्वादश सुत्याः, द्वादशोपसदः । तत्र प्रथमोऽग्निष्टुदग्निष्टोमः । तत इन्द्रस्तुत्, ततः सूर्यस्तुत्, ततो वैश्वदेवस्तुत३। एते त्रय उक्थ्याः४। ततो महाव्रतम्५। ततो वाजपेयः६। तत अप्तोर्यामः ७। ततस्त्रिणवस्तोम उक्थ्यः ८। ततस्त्रयस्त्रिंशस्तोम उक्थ्यः ९। ततो विश्वजित्सर्वपृष्ठोऽतिरात्रो दशमः १०इति । अथ वा महाव्रतस्य स्थाने विकल्पेन पुरुषमेधस्य मध्यममहरतिरात्रसंस्थं सर्वं कर्तव्यम् । अत्र चैत्रशुक्लषष्ठ्यां मातृश्राद्धं, प्राजापत्य इष्टकापशुः । तत उखासम्भरणं च । चैत्रशुक्लषष्ठ्यामेवर्त्विग्वरणम् । सर्वमेधेनाहं यक्ष्य इति वरणम् । एकशतविधोऽग्निरत्र भवति । आग्निकं द्वादशाहिकं च सर्वं कर्म द्वादशाहवद्भवति । न्यग्रोधश्चोत्पविश्च ऊहा व्याख्याताः । उपसद्याग्नेयी । सुब्रह्मण्या अग्निष्टोममुख्यत्वेन तद्धर्मानुग्रहात् ।

अग्न आगच्छ रोहिताभ्यां बृहद्भानो धूमकेतो जातवेदो विचर्षणे । आङ्गिरस ब्राह्मणाऽङ्गिरस ब्रुवाण । द्वादशाहे सुत्यामागच्छ मघवन्नग्ने ब्रह्माण आगच्छतेति ।

एको यूपः स च सप्तदशारत्निः वाजपेयस्य षष्ठाहःपक्षे । तस्य सप्त दशारत्नियूपनियमात् । इतरेषामह्नामपरिमितपक्षाऽऽश्रयणेनाऽविरोधात् । पक्षान्तरे तु प्राकृत एव ।

आश्वमेधिकं मध्यमं व्रतस्थाने इत्यस्मिन् पक्षेऽश्वमेधे एकविंशतिर्यूपाः । तत्र मध्यमः खदिरो बहूनामनुग्रहादिति विशेषः । इतरे विंशतिरश्वमेधवत् । मध्यमस्यापि प्रमाणमश्वमेधवदेव भवति, अविरोधात् । अग्नीषोमीयदिने सर्वयूपादानावटहोमान्तं पदार्थानुसमयेन ।

ततो मध्यमस्य स्वर्वग्रूहनान्तं कृत्वा पार्श्वयूपानामभ्यञ्जनादि—चषालोत्क्षणान्तमद्य कर्तव्यम् । दक्षिणोत्तराणां यूपानां परिव्ययणादि श्व एव, अद्य पश्वालम्भाऽभावात् । अद्य सर्वेष्वहःसु स्तोमायनं चेत्यनेनैव पक्षेण सवनीया भवन्ति । शतपथे चाऽऽश्वमेधिके मध्यमे पञ्चमेऽहनि-तस्मिन्नश्वं मेध्यमालभेतेति पौरुषमेधिके मध्यमे षष्ठेऽहनि तस्मिन्मेध्यान्पुरुषानालभत इति पश्वन्तरविधानादैन्द्राग्नैकादशिनीपक्षयोरस·

दृ व्रतं वाजपेयोऽप्तोर्यामः सर्वमस्मिन्नालभते ॥४॥ अवपा·

म्भवात् । तेन संस्थानुसारेण यथास्वं प्रतिसुत्यं स्तोमायनपशवः सव· नीया भवन्ति ।

वैशाख्यां पौर्णमास्याम् अग्निष्टुदग्निष्टोमः । तत्र आग्नेयः सवनीयः । अत्र सर्वे ग्रहा आग्नेया भवन्ति । सर्वाः पुरोरुचः ऋग्रूपा ग्रहग्रहणम· न्त्रा अस्याजरास इत्याद्याः सप्तदश आग्नेयाः प्राकृतमन्त्रस्थाने भवन्ति । इतरमन्त्रेषु प्राकृतदेवतापदस्थाने अग्निपदप्रयोगः । शाङ्खायनवचनात् सवनीयपुरोडाशादीनामप्याग्नेयत्वम् ।

ततश्च वत्सापाकरणान्तं च न । निर्वपण-प्रोक्षण-विभज्याऽऽलम्भ- प्राणदानेष्विन्द्रपदस्थानेऽग्निपदप्रयोगः । वत्सापाकरणेऽग्नये सरस्व- तिवते भागम् । अग्नेः सरस्वतिवतस्त्वा भागमित्यातञ्चनम् । निर्वा· पः अग्नये जुष्टमिति पुरोडाशस्य । अग्नये हरिवत इति धानानाम् । अग्नये पूषण्वत इति करम्भस्य । एवं सर्वत्रोह्यम् । तत्र ग्रावादानमन्त्रे—गभी रमिमध्वरं कृधि अग्नये सुपूतमंमिति ।

सोममानमन्त्रेषु-अग्नये त्वा वसुमते रुद्रवते' अग्नये त्वाऽऽदित्य· वते, अग्नये त्वाऽभिमातिघ्ने ।

प्रागपावाचने—न त्वदन्योऽग्नेऽस्ति मर्डिताऽग्ने ब्रवीमि इति ।

सोमाप्यायने—अꣳ॰शुरꣳ॰शुष्टे देव सोमाप्यायतामग्नय एकधनविदे । आ तुभ्यमग्निः प्यायतामा त्वमग्नये प्यायस्वेति । उपांशुग्रहहोममन्त्रे स्वाहा त्वा सुभवाऽग्नये इति । इदमग्नय इति त्यागः ।

अपमार्जने—अग्निभ्यस्त्वा मरीचिपेभ्य इति ।

अन्तर्यामग्रहे—उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि । सोमे अन्तर्यामे मघवन्मादयस्व स्वाहा त्वा सुभवाग्नय इति ।

ऐन्द्रवायवग्रहणे—आ वायवित्यस्याः स्थाने अस्याजरास इत्येका । न सोमाग्नये त्वेति गृहीत्वा अपगृह्य पुनर्ग्रहणे हरयो धूमकेतवो॰ गम्नयः। उप- यामगृहीतोऽस्यग्नयेऽग्निभ्यां त्वा। एष ते योनिः सजोषोभ्यान्त्वेति साद- नम् । ततो मैत्रावरुणपात्रमादाय यजा नो मित्रावरुणा॰मम् । उपयाम॰त्यग्नी- भ्यान्त्वा । तृणेऽन्तर्धाय राया वयमिति पयस्याश्रयणम् ।

अत्र मन्त्रे तां धेनुमग्नि युनावित्यूहः । परिमार्जनम् । एष ते योनिरग्नि- भ्यां त्वेति सादनम् । ततः शुक्रग्रहणम् । द्वे विरूपे॰ वर्चाः । उपया॰ शा॰ ण्डाय त्वा परिमार्जनम् । एष ते योनिर्वीरतां पाहि । ततो मन्थिग्रह- णम् । अयमिह॰ विशे । उपया॰ मर्काय त्वा । मनो न येष्विति सक्तुभिः श्रय·

कानां त्वचो जुहोति ॥८॥ ओषधिवनस्पतीनाथं संप्रक्ष-

णम् । एष०पाहि इत्यासादनम् । तत आग्रयणग्रहणम् । त्रीणि ब्रता०दयन्त । उप०स्याग्रयणोऽसि० सुभूताय ०वते विश्वेभ्यस्त्वाऽग्निभ्यः । परिमार्जनम् । एष०निर्विश्वेभ्यस्त्वाऽग्निभ्य इति सादनम् । तत उक्थ्यग्रहणम् । उपया० स्यग्नये त्वा बृहद्व्रते०मि । यत्तेऽग्ने बृहद्वयस्तस्मै त्वा विष्णवे त्वा । एष ते योनिरुक्थेभ्यस्त्वेति सादनम् । ध्रुवग्रहणम् मूर्धानमिति प्रकृतिवत् ।

आश्विनग्रहणे—युद्वा हि देव० सदः । उपयाम० स्यग्निभ्यान्त्वा । एष ते योनिरग्निभ्यान्त्वेति सादनम् ।

अवकाशवाचने—वाचे मे वर्चो-ब्रुवन्नाग्नेयमीक्षस्वेति । एवं त्रिषु द्विदेवत्येषु । अन्यत्प्रकृतिवत् ।

होत्रादिवरणे—अग्निर्होत्रात् । अग्नी अध्वर्यू आध्वर्यवात् । अग्नी प्रशास्तारौ प्राशास्त्रात् । अग्निर्ब्रह्मा ब्राह्मणात् । अग्नयः पोत्रात् । अग्निर्नेष्ट्रात् । सवनीयपुरोडाशयागे प्रातः प्रातः सवनस्याग्नये पुरोडाशानामनुब्रूहि । अग्नये पुरोडाशान्प्रस्थितान्प्रेष्येति । इदमग्नय इति त्यागः । सवनीयपुरोडाशादिष्वपि शाङ्खायनवचनादूह एव युज्यते । द्विदेवत्यप्रचारे अग्नये अग्निभ्यामनु ब्रू० । अग्नयेऽग्निभ्यां प्रेष्य । शेषासेके अग्निभ्यस्त्वेति । एवं सर्वशेषासेकेषु । मैत्रावरुणाश्विनयोरग्निभ्यामनुब्रू० । अग्निभ्यां प्रेष्येति । शुक्रामन्थिप्रचारे प्रातः प्रातः सवस्य शुक्रवतो मधुश्चुतोऽग्नये सोमान्प्रस्थितानिति प्रैषः । होममन्त्रे सा प्रथमा इत्यत्रैतस्मा अग्नये सुतमा जुहोत स्वाहेति विशेषः । इदमग्नय इति सर्वत्र त्यागः । प्रशास्तृचमसत्यागे इदमग्निभ्याम् । पोतृचमसत्यागे इदमग्निभ्यः । अच्छावाकस्येदमग्निभ्याम् । शेषे त्विदमग्नय इति ।

ऋतुयागेष्वपि वचनानि प्रकृतिवत् । प्रातिपदिकं सर्वत्राग्निपदम् ।

तत ऐन्द्राग्नग्रहणे—अग्निर्वृत्रा० आहुतः । उपयाम० स्यग्निभ्यां त्वा । परिमार्जनं प्रदक्षिणावृत्तिः । एष० निरग्निभ्यां त्वेति सादनम् । इदमग्निभ्याम् । अन्यत् प्रकृतिवत् ।

वैश्वदेवग्रहणे—विश्वेभिः सो० मभिः । उपया० सि विश्वेभ्यस्त्वाऽग्निभ्यः । एष ते योनिर्विश्वेभ्यस्त्वाऽग्निभ्य इति सादनम् । इदं विश्वेभ्योऽग्निभ्यः । उक्थ्यविग्रहेषु देवेभ्यस्त्वेति पक्षे अग्निभ्यस्त्वा देवाव्यमिति । पक्षान्तरे अग्निभ्यां त्वा देवाव्यमिति प्रथमे । अग्नये त्वा देवाव्यमिति द्वितीये । अग्निभ्यामिति तृतीये । तथैव त्यागाः ।

विश्वे देवा मरुत इत्यत्र विश्वेऽग्नयोऽग्निरस्मानस्मिन्वयमग्नीनां

म् ॥६॥ अन्नमन्नं जुहोति वपान्ते ॥७॥ तृतीयसवने च हु·

---

सुमतौ स्यामेति ऊहः । माध्यन्दिनेऽप्यभिषवे प्रातःसवनवत् । द्वे विरूप इति शुक्रग्रहणम् । अयमिहेति मन्थिनः । त्रीणि शतेति आग्रयणस्य । एवु प्रातःसवनवत्सर्वम् ।

ततो मरुत्वतीयस्य ग्रहणम् । आ यदिषे नृपतिं० यत्र । उप० स्यग्नये त्वा मरुत्वते । एष ते योनिरग्नये त्वा मरुत्वत इति । प्रातःसवनवदुक्थ्य· ग्रहणम् ।

सवनीययागे प्रस्थितयागे च प्रातः सवनवत् । प्रशास्त्रादि—चमस· यागे इदमग्नय इत्येव त्यागः । मरुत्वतीयानुवाचने अग्नये मरुत्वतेऽ· नुब्रूहि । अग्नये मरुत्वते प्रेष्येति ।

महामरुत्वतीयग्रहणे—अग्ने शर्ध० महाँ असि । उपया० स्यग्नये त्वा मरु· त्वते । एष ते योनिरग्नये त्वा मरुत्वते । कुण्डमरुत्वतीयग्रहणेऽपि अग्नीनां त्वौजस इति । तथैव त्यागाः ।

माहेन्द्रग्रहणे—त्वां हि मं० तमाः । उप० स्यग्नये त्वा एष० निरग्नये त्वेति । सौम्यचित्तादित्यस्य स्थाने आग्नेयस्य चित्तादिति । ततश्चाग्न· ये जुष्टमिति तद्ग्रहणे । वारुणः प्राकृतिवत् । उक्थ्यविग्रहणेषु सर्वेषु अग्नये त्वेति । आदित्यग्रहणे त्वेऽ अग्ने स्वा० गोनामग्निभ्यस्त्वा । अपगृह्य पुनर्ग्रहणे श्रुधि श्रुत्कर्ण० अध्वरमग्निभ्यस्त्वा । ततस्तृणे अन्तर्धाय दध्ना श्रयणे विश्वेषामदितिः० जातवेदा अग्निभ्यस्त्वा ।

उपांशुसवनेन मिश्रणे--विवस्वन्नग्न एष ते सोमपीथ इति ।

अनुवाचने--अग्निभ्योऽनुब्रूहि । अग्निभ्यः प्रेष्येति । प्रियेभ्य इति प्रकृतिवत् । त्यागे चाग्निभ्य इति ।

तृतीयसवने--त्रीणि शतेत्याग्रयणग्रहणं प्रातः सवनवत् । प्रस्थितयागे तीव्राँ आशीर्वतोऽग्नये सोमानिति । सवनीययागे प्रातःसवनवत् । प्रशा· स्त्रादिचमसयागेषु प्रातःसवनवत्त्यागाः प्रातिपदिकमात्रोहेन ।

सावित्रग्रहणे--महो अग्ने० वृणीमहे । उपया० स्याग्नेयोऽसि० वतो० देवाय त्वाऽग्नये । देवायाऽग्नयेऽनु० । देवायाग्नये प्रेष्येति । त्यागेऽप्येवम् ।

महावैश्वदेवग्रहणे--उपया०सि सुशर्मा० नमः । विश्वेभ्यस्त्वाऽग्निभ्य एष ते योनिर्विश्वेभ्यस्त्वाग्निभ्यः । घृतयागे सौम्ययागे च शांखायनसूत्रादाग्ने· यत्वम् । आग्नेयस्य यजेति प्रैषः सौम्यस्य यजेत्यस्य स्थाने ।

आग्निमारुते-इदमग्निभ्य इति त्यागः ।

व्यूहने—अग्नेर्वनस्पतेरग्नेर्वसुमत इति विश्वदेव्यावतोऽग्नेरुज्जिति·

तेषु हविःषु ॥८॥ आश्वमेधिकं मध्यमं व्रतस्थाने ॥९॥ पौ-

म् । अग्निर्वनस्पतिरग्निर्वसुमानित्यादि—देऽआवन्नग्निस्तमेति ।

हारियोजनग्रहणे-उपया० हरि० हारि० । हर्योः सोमा अग्नय इति । एत-त्पर्यन्तं सर्वत्र देवतापदस्थानेऽग्निपदप्रयोगः । अत्र सर्वेष्वहःसु दिग्वि-जयसमये सर्वाभ्यो दिग्भ्यो यद् द्रव्यमानीतं भूमिपुरुषसहितं ब्राह्मणस्व-वर्जितं तद्दशधा विभज्याश्वमेधवत्प्रत्यहं दशमविभागस्य दक्षिणात्वेन दानम् । प्राचीदिग्द्रव्यस्य दशमं भागं होतुः । दक्षिणदिग्द्रव्यस्य दशमं भागं ब्रह्मणः । अपरदिग्द्रव्यस्य दशममध्वर्योः । उदीचिदिग्द्रव्यस्य दशमं भागमुद्गातुरिति । प्रतिपुरुषाणां मुख्यभागमध्ये प्राकृतो विभागः । अत्र द्वादशाहवदन्त्यवर्जितानां सर्वेषाम् अह्नां पत्नीसंयाजान्तता ।

एकं माध्यन्दिनेऽवनीयवसतीवरीणां ग्रहणम् । अनुक्रामताद्यन्वहम् । अस्तमिते सर्वेष्वहःसु यजमानकर्तृकं समिदाधानम् । हारियोजनान्ते श्वः सुत्यामिति प्रैषः । प्रथमान्त्यवर्जं बहिष्पवमानानां सदस्युपाकरण-मित्यादि भवति । इत्यग्निष्टुत ।

अस्य चैकाहरूपस्य पृथक् प्रयोगे सोमक्रयणाभिमन्त्रणे पूषाऽध्वन-स्पात्वग्नयेऽध्यक्षाय । अनु त्वा० मच्छेह्यग्नये सोमामित्यूहः । इन्द्रस्य योनिरसि इन्द्रस्योरुमित्यत्र चोहाभावः । इन्द्रपदस्य देवतावाचित्वा-भावात् अर्ठ०शुरित्यत्र उक्तः ।

उपरवपरिलेखे—बृहस्पतिमग्नये वाचं वदेति । प्रातवशाखकृष्णप्र-तिपदि—इन्द्रस्तुदुकुथ्यसंस्थो द्वितीयमहः । आग्नेयैन्द्राग्नौ द्वौ सव-नीयौ पशू । अत्र सर्वे ग्रहाः ऐन्द्राग्नास्तद्ग्रहणमन्त्राश्च । प्राकृतम-न्त्राणां स्थाने आपश्चित्पिप्युरित्याद्याः सप्तदशैन्द्रा भवन्ति । तत्र येषु स्वभावत इन्द्रपदं नास्ति तत्रोहो भवति । स्वाहा त्वा सुभवेन्द्राय। इदमिन्द्राय । इन्द्रेभ्यस्त्वा मरीचिपेभ्यः । एवमन्तर्यामेऽपि ।

ऐन्द्रवायवग्रहणे-आपश्चित्पिप्यु० विवाजानिन्द्राय त्वा । अपगृह्य पुनर्ग्रहणे । गाव उपावता० व्यया । उपया० न्द्राय त्वेन्द्राभ्यां त्वा । एष ते योनिः सजोषेभ्यान्त्वा ।

मैत्रावरुणग्रहणे-यद्य सुर० मगः । उप० सेन्द्राभ्यान्त्वा ।

शुक्रग्रहणे-तान्धेनुमिन्द्रौ युवं न इति । एष ते योनिरिन्द्राभ्यां त्वा । शुक्रस्य तं प्रत्नथा । मन्थिनमयस्त्वेन इति प्रकृतिवत् । आग्रयणस्य आति-ष्ठन्तं परि० तस्थौ । उपयामगृहीतोऽस्याग्रयणो० सुभूताय पवते विश्वे-भ्यस्त्वेन्द्रेभ्यः । एषते योनिर्विश्वेभ्यस्त्वेन्द्रेभ्यः ।

ध्रुवग्रहणे-प्र वो महे मन्दमानायां० सपर्यतः । उपया० सि ध्रुवोसि इति प्रकृतिवत् । एष ते योनिरिन्द्राय त्वेति सादनम् । आश्विनस्य । आ घते सिञ्चत० षभम् । उप० सोन्द्राभ्यां त्वा । एष० रिन्द्राभ्यान्त्वा । द्विदेवत्येष्विति ब्रुवन् ऐन्द्रमीचस्वेति प्रयोगः ।

द्विदेवत्यप्रचारे इन्द्रायेन्द्राभ्याम्० इन्द्रायेन्द्राभ्यां प्रेष्य । शेषासेके इन्द्रेभ्यस्त्वा । मैत्रावरुणाश्विनयोरिन्द्राभ्यामनुब्रूहि । इन्द्राभ्याम्प्रेष्येति । प्रशास्त्रादि—चमसेषु यागेषु त्यागे देवतापदमात्रस्य विपरिणामो वचनानाम् । अद्य यो ब्रह्माण आगच्छतेति छन्दोगसूत्रे दर्शनात् । ऋतुयाजेष्वप्येवम् ।

ऐन्द्राग्नग्रहणे—बृहन्निदिध्म० सखा । उप० सोन्द्राभ्यान्त्वा ।

वैश्वदेवग्रहणे—इन्द्रेहि मत्स्यं० रोजसा । उपया० सि विश्वेभ्यस्त्वेन्द्रेभ्यः । एष ते योनिर्विश्वेभ्यस्त्वेन्द्रेभ्यः । उक्थ्यविग्रहेषु देवेभ्यस्त्वेति । पत्ने इन्द्रेभ्यस्त्वा देवाव्यम् इति ।

पक्षान्तरे प्रथमे--इन्द्राभ्यान्त्वा देवाव्यमिति । द्वितीये तु प्राकृतम् । तृतीये इन्द्राभ्यान्त्वेति । माध्यन्दिनेऽपि शुक्रामन्थिनोः प्रकृतिवत् । आग्रयणस्याविष्ठन्तमिति । मरुत्वतीयस्येन्द्रो वृत्रमवृणोदिति । महामरुत्वतीयस्य कुतस्त्वमिति । माहेन्द्रस्य महां २ इन्द्रो य ओजसेति विशेषः । न तु महां २ इन्द्रो नृवदिति । उपया० सि महेन्द्राय त्वेति ग्रहणाऽऽसादने । इदं महेन्द्राय ।

आदित्यग्रहणे--प्रकृतिवद् द्वौ मन्त्रौ अन्ते इन्द्रेभ्यस्त्वेति विशेषः । श्रयणे तु आतत्त इन्द्राय० दुधुक्षन्निन्द्रेभ्यस्त्वा ।

उपांशुसवनेन मिश्रणे--विवस्वन्निन्द्रैष इति । अनुवाचने इन्द्रेभ्योऽनुब्रू० इन्द्रेभ्यः प्रेष्य ।

तृतीयसवनेऽप्यातिष्ठन्तमित्याग्रयणग्रहणम् । प्रातःसवनवदुक्थ्यग्रहणम् । प्रशास्त्रादिचमसेषु प्रातिपदिकमात्रोहेन त्यागाः ।

सावित्रग्रहणे--इमान्ते धियं० नतु । उप० सोन्द्राऽसि च० देवाय त्वेन्द्राय । देवायेन्द्रायाऽनुब्रू० । देवायेन्द्राय प्रेष्य ।

महावैश्वदेवग्रहणे—उप०सि सुशर्मा० मः । विश्वेभ्यस्त्वेन्द्रेभ्यः । एष० विश्वेभ्यस्त्वेन्द्रेभ्यः । आग्निमारुते त्यागे इदमिन्द्रेभ्यः ।

पात्नीवतग्रहहोमे । इन्द्राऽ३इ पत्नीवन्त्सजूर्देवेनेति । इदमिन्द्राय । अन्यद्दक्षिणादानादि सर्वं प्रथमसुत्यावत् । इतीन्द्रस्तुत् ।

ततो वैशाखकृष्णद्वितीयायां सूर्यस्तुदुक्थ्यस्तृतीयमहः । आग्नेयैन्द्राग्नौ द्वौ पशू । सुब्रह्मण्या सौरी सूर्यागच्छ हरिव आगच्छेति । अत्र

ऋषमेधिकं वाजपेयस्य ॥१०॥ त्रिणवत्रयस्त्रिंशा उ-

सर्वे ग्रहाः सौर्याः । तद्ग्रहणमन्त्राश्च विभ्राड् बृहदित्याद्याः सप्तदश सौर्याः प्राकृतमन्त्राणां स्थाने भवन्ति । अन्यत्र सर्वत्र देवतापदस्थाने सूर्यपदं प्रयोज्यम् । आवाहनमन्त्रे गभीरमिममध्वरं कृधि सूर्याय सुषुतममिति । सोममानमन्त्रेषु सूर्याय त्वा वसुमते रुद्रवते सूर्याय त्वाऽऽदित्यवते सूर्याय त्वाऽभिमातिघ्ने इति । वाचने न त्वदन्यः सूर्योऽस्ति मर्डिता सूर्यस्य ब्रवीमि इति । सोमाप्यायने प्यायताम्° सूर्यायैकधनविदे । आतुभ्यं सूर्यः प्यायतामा त्वं सूर्याय प्यायस्वेति । स्वाहा त्वा सुभव सूर्यायेति प्रकृतिवत् । सूर्येभ्यस्त्वा मरीचिपेभ्य इति च ।

ऐन्द्रवायवस्य ग्रहणे-विभ्राड् बृहत्पि० राजति । सूर्याय त्वा० अपगृह्य पुनर्ग्रहणे । उदुत्यं० सूर्यं उपया० सूर्याय सूर्याभ्यां त्वा । एष ते० सजोषोभ्यां त्वा । मैत्रावरुणस्य । येना पावक० पश्यसि उपया० सूर्याभ्यां त्वा । श्रयणे-तान्धेनुं सूर्यो युवन्न इति । एषते योनिः सूर्याभ्यान्त्वा । शुक्रामन्थिनोः प्रकृतिवत् । आग्रयणस्य चित्रं देवाना० पश्च । उपयामगृहीतोस्याग्रयणोऽसि० पवते । विश्वेभ्यस्त्वा सूर्येभ्यः । एष० विश्वेभ्यस्त्वा सूर्येभ्यः ।

उक्थ्यग्रहणे—उपया० सूर्याय त्वा बृहद्वते व० मि । यत्ते सूर्य बृहद्वय इति । ध्रुवस्य । आ नऽ इडाभि० नीपा । उपया० सि ध्रुवोसि इति । आसादने—एष ते योनिः सूर्याय त्वा ।

आश्विनग्रहे—दैव्यावध्वर्यू० जाथे । उप० सि सूर्याभ्यां त्वा । एष ते योनिः सूर्याभ्यान्त्वा । द्विदेवत्येषु ध्रुववत्सौर्यमीत्स्वेति ।

द्विदेवत्यप्रचारे—सूर्याय सूर्याभ्यां इति । शेषाऽऽसेचने सूर्येभ्यस्त्वेति । मैत्रावरुणाश्विनयोः प्रचारे सूर्याभ्यामिति प्रैषौ । प्रस्थितप्रैषे मधुश्च्युतः सूर्याय सोमानिति । प्रशास्तृचमसहोमे इदं सूर्याभ्यामिति । अच्छावाकचमसे च । पोतृचमसे सूर्येभ्य इति । अन्येषु सूर्यायेति । तृतीयसवनेऽप्येवम् । माध्यन्दिने च सूर्यायेति सर्वचमसेषु । ऋतुग्रहेष्वपि वचनानामविपरिणामस्त्यागेषु । ऐन्द्राग्नग्रहणे—यद्य कच्च० वधे । उप० सि सूर्याभ्यां त्वा । एष० सूर्याभ्यान्त्वा ।

वैश्वदेवग्रहणे—तरणिर्वि० चनम् । उप० विश्वेभ्यस्त्वा सूर्येभ्यः । एष० निर्विश्वेभ्यस्त्वा सूर्येभ्यः । उक्थेषु सूर्येभ्यस्त्वा देवाव्यमिति देवेभ्यस्त्वेति मन्त्रपक्षे । पक्षान्तरे तु सूर्याभ्यां त्वा देवाव्यमिति प्रथमान्त्ययोः सूर्याय त्वेति मध्यमे । तथैव त्यागा अपि । माध्यन्दिनेऽभिषवे पूर्ववत् । शुक्रामन्थिनोर्ग्रहणं प्रकृतिवत् ।

आग्रयणे—चित्रन्देवानामिति प्रातः सवनवत् । मरुत्वतीयस्य ग्रहणे—तत्सूर्यस्य० मस्मै । उप० सि सूर्याय त्वा । बृहद्वते सूर्य बृहद्वय इति । प्रस्थितयागे मन्थीवतः सूर्याय सोमानिति । मरुत्वतीयानुवाचनादौ सूर्याय मरुत्वतेऽनुब्रूहि । सूर्याय मरुत्वते प्रेष्येति ।

महामरुत्वतीयग्रहणे । तन्मित्रस्य व० भरन्ति । उपयामगृहीतोऽसि सूर्याय त्वा मरुत्वन्तम् । सादनेऽप्येवम् ।

कुण्ठमरुत्वतीये—उपया० सूर्याणां त्वौजस इति । माहेन्द्रे-बण्महा२ असि० असि । उप० सि सूर्याय त्वा । तथैव सादनम् । उकूथेषु सूर्याय त्वा देवाव्यमिति ।

आदित्यग्रहे—बट् सूर्य० रदाभ्यम् सूर्येभ्यस्त्वा । अपगृह्य आयन्त इव० दीधिम सूर्येभ्यस्त्वा ।

अयणे—अद्या देवा० द्यौः । सूर्येभ्यस्त्वा । मिश्रणे—विवस्व० सूर्यैष त इति । सूर्येभ्योऽनुब्रूहि । सूर्येभ्यः प्रेष्य । तृतीयसवनेऽपि । चित्रन्देवाना-मित्याग्रयणग्रहणं प्रातःसवनवत् । उकूथ्यं च । तीव्राँ आशीर्वतः सूर्याय् सोमान्प्रस्थितानिति प्रैषः ।

सावित्रग्रहणे—आ कृष्णेन रजसा० पश्यन् । उप० सि सूर्योऽसि । देवाय त्वा सूर्याय । देवाय सूर्यायाऽनुब्रूहि । देवाय सूर्याय प्रेष्य ।

महावैश्वदेवग्रहणे—विश्वेभ्यस्त्वा सूर्येभ्य इति । पात्नीवतहोमे—सूर्याय पत्नीवन्निति । इदं सूर्याय पात्नीवते । आग्निमारुते इदं सूर्येभ्य इति । उकूथ्यसूर्यविग्रहणेषु—सूर्याभ्यान्त्वा । देवाव्यमिति सर्वेषु । त्यागाश्च । हरिरसि हारियोजनो हरिभ्यां त्वा । हर्योर्धाना स्थ सहसोमाः सूर्यायेति । दक्षिणादि सर्वं प्रथमसुत्याहर्वत् । इति सूर्यस्तुत ॥

अस्य चैकाहस्य स्वतन्त्रप्रयोगे—सोमक्रयण्यभिमन्त्रणे- पूषाऽध्व-नस्पातु सूर्यायाध्यक्षायेति । अच्छेहि सूर्याय सोममिति चोहः ।

उपरवपरिलेखने—बृहतीं सूर्याय वाचं वदेति विशेषः ।

ततो वैशाखकृष्णतृतीयायां वैश्वदेवी सुब्रह्मण्या सुब्रह्मण्यों विश्वे-देवा आगच्छतेति । अत्र ग्रहाः सर्वे वैश्वदेवा भवन्ति । तद्ग्रहण मन्त्राश्च प्रवाव्रज इत्याद्याः सप्तदश वैश्वदेवा न प्राकृताः । अन्येषु मन्त्रेषु देवतापदस्थाने विश्वेदेवपदप्रयोगः ।

तत्र ग्रावादाने—गभीरमिममध्वरं कृधि विश्वेभ्यो देवेभ्यः सुपू-तममिति ।

सोममाने—विश्वेभ्यस्त्वा देवेभ्यो वसुमद्भ्यो रुद्रवद्भ्यो मिमे । विश्वेभ्यस्त्वा देवेभ्य आदित्यवद्भ्यो मिमे । विश्वेभ्यस्त्वा देवेभ्योऽभि-

मातभ्यो मिमे ।

अन्तिमे—विश्वेभ्यस्त्वा देवेभ्यो रायस्पोषदेभ्य इति । वाचने—युष्मदन्यो विश्वे देवा अस्ति मर्डिता विश्वे देवा ब्रवीमि वो वच इति ।

सोमाऽऽप्यायने—अंशु०गुरंशु०शुष्टे देव सोमाप्यायतां विश्वेभ्यो देवेभ्य एकधनविद्भ्यः । आ तुभ्यं विश्वे देवाः प्यायन्तामा त्वं विश्वेभ्यो देवेभ्यः प्यायस्वेति । हे मे स्वाहा त्वा सुभव विश्वेभ्यो देवेभ्यः । विश्वेभ्यो देवेभ्यस्त्वा मरीचिपेभ्यः ।

ऐन्द्रवायवग्रहणे-प्र वावजे सु०नियुत्वान्विश्वेभ्यस्त्वा देवेभ्यः। अपगृह्य पुनर्ग्रहणे—इन्द्रवायू बृहस्पतिं० तं गणम् । उप०सि विश्वेभ्यस्त्वा देवेभ्यः । सादने—एष० विश्वेभ्यस्त्वा देवेभ्यः ।

श्रयणे—तान्वेतुं विश्वेभ्यस्त्वा देवा यूयं नो विश्वाहेति। सादनं सर्वत्र सदृशमेव । शुक्रामन्थिग्रहणे—प्रकृतिवदाग्रयणे च ।

आदित्यग्रहणे—उप०सि विश्वेभ्यो देवेभ्यो बृहद्भ्यो वयस्वद्भ्य उक्थाव्यं गृह्णामि । यद्वो विश्वे देवा बृहद्वय इति ।

ध्रुवग्रहणे—आ नऽ इडाभिः । सादने—विश्वेभ्यस्त्वा देवेभ्य इति । आश्विनग्रहणे—अवकाशवाचने ध्रुवं वैश्वदेवमीत्तस्वेति ।

द्विदैवत्ययागेषु-विश्वेभ्यो देवेभ्योऽनु ब्रूहि । विश्वेभ्यो देवेभ्यः प्रेष्येत्येवं सर्वत्र । विश्वेभ्यस्त्वा देवेभ्य इति शेषासेके ।

प्रस्थितयागे मधुश्चुतो विश्वेभ्यो देवेभ्यः प्रैषान् इति प्रैषः । इदं विश्वेभ्यो देवेभ्य इति सर्वत्र त्यागः । ऐन्द्राग्नग्रहे विश्वेभिः सोम्यमिति । वैश्वदेवग्रहे—ओमास इति प्रकृतिवत् । उक्थ्येषु विश्वेभ्यस्त्वा देवाव्यमिति सर्वेषु ।

माध्यन्दिने मरुत्वतीयग्रहणे-अमऽ इन्द्र वरुण० जुषन्त । उप०सि विश्वेभ्यस्त्वा देवेभ्यो मरुत्वद्भ्य इति। सादनेऽप्येवम् । उक्थ्ये प्रातः सवनवत् । मरुत्वतीयाऽनुवाचने विश्वेभ्यो देवेभ्यो मरुत्वद्भ्योऽनुब्रूहीति । विश्वेभ्यो देवेभ्यो मरुत्वद्भ्यः प्रेष्येति । महामरुत्वतीयग्रहणे—इन्द्राग्नी मित्रावरुणा० मृतये। उप०सि विश्वेभ्यस्त्वा देवेभ्यो मरुद्भ्यः। सादने चैवम् । उक्थ्येषु विश्वेभ्यस्त्वा । विश्वेषां त्वा देवानामोजस इति कुण्ठमरुत्वतीयग्रहणम् ।

माहेन्द्रग्रहणे—अस्मे रुद्रा० देवाः । उपया०सि विश्वेभ्यस्त्वा महावैश्वदेवेभ्यः । सादनमप्येवम् । उक्थ्येषु विश्वेभ्यस्त्वा देवेभ्यो देवाव्यमित्येव सर्वेषु । आदित्यग्रहणे—अर्वाञ्चोऽ अद्या० यजत्राः । विश्वेभ्यस्त्वा देवेभ्यः ।

कथ्यौ ॥११॥ अतिरात्रो विश्वजित् ॥१२॥ पुरुषमेधवद्-

अपगृह्य पुनर्ग्रहणे–विश्वेऽ मद्य मरुतो० अस्मे । विश्वेभ्यस्त्वा देवेभ्यः । श्रयणे—विश्वे देवाः शृणु० मादयध्वम्, विश्वेभ्यस्त्वा देवेभ्यः । मिश्रणे—विवस्वन्ना० विश्वे देवा एष वः सोमपीथस्तस्मिन्मादयध्वम् इति । विश्वेभ्यो देवेभ्य इति प्रैषौ ॥

तृतीयसवने प्रकृतिवदाग्रयणग्रहणम् । उक्थ्यस्य प्रातः सवनवत् । आशीर्वतो विश्वेभ्यो देवेभ्यः सोमान् प्रस्थितानिति प्रैषः ।

सावित्रग्रहणे—देवेभ्यो० षेभ्यः । उप० सि चनोधा० चनो मयि धेहि । जिन्व० गाय विश्वेभ्यस्त्वा देवेभ्यः । विश्वेभ्यो देवेभ्योऽनुब्रूहि, विश्वेभ्यो देवेभ्यः प्रेष्येति प्रैषौ । महावैश्वदेवे प्रकृतिवत् । पात्नीवतहोमे विश्वे देवाः पात्नीवतः सजुषो देवेन त्वष्ट्रा सोमं पिब स्वाहेति । इदं विश्वेभ्यो देवेभ्यः पात्नीवद्भ्यः । इदं विश्वेभ्यो देवेभ्य इति आग्निमारुते त्यागः । उक्थ्यविग्रहेषु विश्वेभ्यस्त्वा देवेभ्यो देवाव्यमिति ग्रहणमन्त्रः । त्यागश्च हारियोजने—उप०सि हरिरसि विश्वे देवा स्थ हारियोजनो हरिभ्यां त्वा । हर्योर्धाना स्थ सहसोमा विश्वेभ्यो देवेभ्य इति । इति वैश्वदेवस्तुतु ।

अस्मिन् स्वतन्त्रे एकाहे सोमक्रयण्यभिमन्त्रणे पूषाध्वनस्पातु विश्वेभ्यो देवेभ्योऽध्यक्षेभ्यः अच्छेहि विश्वेभ्यो देवेभ्यः सोमरुं० रुद्र इति ।

उपरवपरिलेखने—बृहतीं विश्वेभ्यो देवेभ्यो वाचं वदेति । प्रातश्शाखकृष्णचतुर्थ्यां महाव्रतमग्निष्टोमसंस्थं पञ्चममहर्भवति । तत्राऽऽग्नेयः सवनीयः प्राजापत्य उपालभ्यः । विन ऽइन्द्र इति अतिग्राह्यवद् ग्रहणम् । बाणेन शततन्तुना पृष्ठोपाकरणम् । सर्वं महाव्रतधर्माः । प्रातर्वाजपेयः षष्ठमहर्भवति । तत्र सर्वं ग्रहग्रहणादिकं अतिरिक्तस्तोत्रान्तं वाजपेयवत् । सोमक्रयकाले सुराद्रव्याणां वा क्रयणादि निष्पादनां च । व्रतस्थाने आश्वमेधिकमध्यमपक्षे सर्वं तद्धर्मा रशनादानाश्वालम्भनादयो भवन्ति ।

वाजपेयस्थाने पौरुषमेधिकमध्यमपक्षे पुरुषालम्भनादिकं सर्वं तदीयं भवति । ततः प्रातरप्तोर्यामः सप्तममहर्भवति । अत्र अतिरात्रिकाश्चत्वारः स्तोमायनपशवः आग्नेयैन्द्राग्नैन्द्रसारस्वतौ । अत्र प्रातःसवने आतिरात्रिकाणां चतुर्णां पशूनां वपाहोमान्ते सर्वहोमो भवति । तत्र सर्वं वसुजातं प्राणिमात्रं अन्नमात्रं च । न प्रतिषिद्धं होमार्थमुपकल्पयति । तत्र जुहोतिधर्मेण सर्वे तूष्णीं पदार्थाः । प्राणिनां मध्ये येषां प्राणिनां वपा न भवति तेषां त्वच उत्कृत्योत्कृत्य जुहोति । नावदा-

क्षिणा सभूमि ॥१३॥२॥

नानि। वपावतां वपा एव जुहोति न हृदयाद्यवदानानि। तेन पशून्मारयित्वैवाङ्गुष्ठपर्वमात्रं त्वग्वपाग्रहणं कर्तव्यम्। ओषधिवनस्पतीनां संव्रश्च्य। ओषधयो व्रीहियवाद्याः। वनस्पतयश्च अश्वत्थवटौदुम्बराद्याः। तेषां संव्रश्च्य चूर्णाः। तमौषधिवनस्पतीनां संव्रश्चमाहवनीये प्रकिरन्ति। कीदृशीनामौषधिवनस्पतीनाम् शुष्काणामार्द्राणां च। सर्वप्रकारमन्नं व्रीहियवगोधूममुद्गादिकं च जुहोति। सर्वासां स्थावरजङ्गमानामेकैकां व्यक्तिं जुहोति। सूक्ष्माणां चान्नानामवदानमात्रं जुहोति। न सर्वा व्यक्तिरशक्यत्वात्। तत्र पात्रासादनम्। शूर्पाग्निहोत्रहवण्यौ। धान्यसंख्याकाः पाव्यः। प्रतिषिद्धवर्जितयज्ञियसर्वप्राणिजातीयमेकैकम्। औषधिवनस्पतिचूर्णः। प्रतिषिद्धवर्जितानि सर्वधान्यानि च। ओषधिचूर्णस्य वनस्पतिचूर्णस्य धान्यानां च प्रतिव्यक्त्यैकैकं चतुर्मुष्टिकग्रहणम्। प्रोक्षणम्। ईक्षणम्। पात्रीणां सम्मार्गः। वपावतां पशूनां केवलानां वपानां ग्रहणम्। उदरमध्याद्वपाकानां त्वगुत्कर्तनम्।

ततो वपानां त्वचां संव्रश्च्य धान्यानां च प्राणदानम्। वेद्यामासादनम्। आलम्भः। जुहोतिवदाज्यभागौ। नेत्यपरे। प्रधानहोमे उपस्तीर्य वपानामदानम्। त्वचां च ओषधिवनस्पतीनां सम्व्रश्चस्य सर्वान्नानां चैकत्रैवावदानम्। प्रत्युपस्तरणम्। 'तदेवाग्निस्तदादित्य' इत्यध्यायेन होमः। इदमात्मने इति त्यागः। कुत एतत् तदेव सर्वमेधोऽध्याय आत्मदैवतः सप्तमेऽहनि सर्वहोमे विनियुक्त इति कात्यायनोक्तेः। सम्प्रदायोक्तप्रकारस्तु निर्मूल इव दृश्यते।

ततः सर्पणादि। ओषधिवनस्पतीनां संव्रश्चस्य सर्वहोमात्पूर्वमाहवनीये प्रकिरणमेव कुर्वन्ति न होमम्। होमसाधनभूतेषु वपाभागान्नादिषु प्रकिरन्तीत्यपरे। तद् युक्तम्। आतिरात्रिकपशूनां तृतीयसवनेऽपि अतिरात्रिकपशूनां हुतेषु वनस्पतियागात् प्राक् पात्राऽऽसादनादि। प्रातः सवनवदेव पुनः सर्वहोमं कुर्यात्।

अत्र यज्जाग्रतो दूरमित्यनेन सर्वहोमः कार्य इति हरिस्वामिनः। ततो वनस्पतियागादि।

अथ कठसूत्रम्—"यदहरप्तोर्यामस्तदहः सर्वाश्चौषधीः सर्वांश्च वनस्पतीः संवृश्चमाहवनीये तदेवाग्निरिति प्रत्यृचं प्राक् समिष्टयजुषो जुहोतीति"। यज्ञायज्ञियान्ते उक्थ्यानि। ततः षोडशी। ततस्त्रयोऽरत्निप-

पितृमेधः संवत्सराऽस्मृतौ ॥१॥ अयुग्मेषु वा ॥२॥ एकनक्षत्रे ॥३॥ अमावास्यायाम् ॥४॥ निदाघशरन्माघेषु

---

र्याया यथोक्ताः। तत आश्विनशस्त्रकचमसयागाः। ततस्तिरोह्नीयेभ्य ऊर्ध्वं चतुर्थः पर्यायो रात्रिपर्यायवत्। ततस्त्रिणवत्रयस्त्रिंशावष्टमनवमावुक्थ्यसंस्थौ। तत्र पशुः द्वौ द्वावाग्नेयैन्द्राग्नौ सवनीयौ। ततो विश्वजिदतिरात्रो दशममहः। तत्र चत्वारोऽतिरात्रपशव आग्नेयैन्द्राग्नैन्द्रसारस्वताः सवनीयपशवः। अत्र च बहिष्पवमानं बहिर्भवति अग्निष्टुति च। छन्दोगवशात्। "अहीनबहिष्पवमानः सदसि स्तुवीरन् प्रथमादह्नोऽन्यत्रे"ति छान्दोग्यसूत्रम्। आश्वमेधिकवर्जं शेषेषु सदसि। तिस्राऽनूबन्ध्याः। त्रैधातव्युदवसानीया। तत आग्निकी पयस्या। तदन्ते सायमाहुतिः। आरोप्य प्रवेशनं चेति। कर्कसम्प्रदायमते पुरुषाश्वगोऽव्यजाः पञ्च पञ्च पशवः प्रत्येकं स्तोमायनदेवताभ्य आलभ्यन्ते। वपाप्रचारकाले आलभ्यपशूनां मध्ये ये वपावन्तो गोऽव्यजाः तेषां वपाहोमः कार्यः। ये च अवपाकाः पुरुषाऽश्वास्तेषां वपास्थाने त्वच उत्कृत्योत्कृत्य जुहोति।

प्रैषश्चैवम्—अग्नये पुरुषस्याश्वस्य मेषस्य छागस्य त्वग्वपाभ्यो मेदसोऽनुब्रूहीत्येवं प्रतिदेवतमुच्चारणीयम्। सम्वश्वस्य वेदिमध्ये प्रकिरणम्। सर्वान्नेनैव केवलेन सर्वहोमो जुहोतिः। तत्रापि चतसृभ्यः स्तोमायनदेवताभ्यश्चत्वारि चतुर्मुष्टिकानि गृहीत्वा, "अग्नये स्वाहा, इन्द्राग्निभ्यां स्वाहा, इन्द्राय स्वाहा, सरस्वत्यै स्वाहा" इत्येवमुक्तकाले होमः। एतत्तु यथा न घटते तत्सर्वं भाष्ये प्रपञ्चितम्। इति सर्वमेधः समाप्तः॥

इत्येकविंशस्य द्वितीया कण्डिका ॥ २ ॥

---

अथ पितृमेधस्य पद्धतिर्लिख्यते—मृतस्य मरणसम्वत्सरबहुकालव्यवधानादिना विस्मरणे सति पितृमेधो भवति। अथवा मृतस्य मरणसम्वत्सरादारभ्य तृतीयपञ्चमसप्तमादिषु अयुग्मेषु सम्वत्सरेषु भवति। यदा बहुकालव्यवधानेनाऽपि कुर्वतो मरणसम्वत्सरः स्मर्यत एव तदाऽयं पक्ष इति हरिस्वामिनः।

तथा एकनक्षत्रे पितृमेधो भवति। एकैव तारका यस्मिन् नक्षत्रे तदेकनक्षत्रम् हस्तस्वातीचित्रारेवत्यादिकम्। अथवा अमावास्यायां

॥५॥ यावन्तो धुविष्यन्तः स्युस्तावतः कुम्भानादाय छत्राणि चापरिमितानि ॥६॥ शरीराणि ग्रामसमीपमाहृत्य कुम्भेन तल्पे कृत्वाऽहतपक्षेण परितत्यायसेषु वाद्यमानेषु वीणायां चोद्धतायाममात्यास्त्रिस्त्रिः परिक्रामन्त्युत्तरीयैरुपवाजनैर्वोपवाजयन्तः ॥७॥ स्त्रियो वा ॥८॥ पूर्वरात्रमध्यापररात्रेषु च ॥९॥ दिफल्कान्नमहरेतत् ॥१०॥

पितृमेधो भवति । नैकनक्षत्रे । तथा निदाघे ग्रीष्मर्त्तौ शरदि वा माघमासे वा पितृमेधो भवति । ततश्चैवं सिद्धम् ।

मृतस्य वर्षाऽस्मरणे-स्मृतौ त्वयुग्मेषु वर्षेषु वा । तत्रापि निदाघशरन्मासेषु । तत्राऽप्यमावास्यायां वा एकनक्षत्रे वा पितृमेधो भवति । तत्र पूर्वेद्युः प्रथममध्वर्योरेकस्य वरणम् । पितृमेधकर्मणि त्वमध्वर्युर्भव । अत्र पितृत्वात्सर्वं कर्माऽपसव्येन दक्षिणाऽभिमुखेन च कर्तव्यम् । ततो यजमानस्य पुत्रपौत्रादिसंख्यया कुम्भानामुपकल्पनम् । कुम्भसंख्यातोऽधिकसंख्यानां छत्राणामुत्तरीयाणामहतानामुपवाजनानां च उपकल्पनम् । एकस्या नूतनायाः खट्वायाः लोहमयानां पटहादिवादित्राणां वीणायाश्चोपकल्पनम् । एतत्सर्वं कुम्भाद्यपहारमादाय ग्रामान्निष्क्रम्य दक्षिणस्यां दिशि ग्रामसमीपे शुद्धायां भूमौ निधेयम् । अस्मिन् अहनि बह्वन्नं देयम् । नृत्यगीतवादित्राणि वाऽनवरतं करणीयानि । ततोऽपराह्णेऽध्वर्युररण्ये भूमिमध्ये कुम्भे स्थापितानि अस्थीनि कुम्भेनैव ग्रामसमीपे आनयति ।

ततः पूर्वमेवाऽऽस्तृतायां खट्वायां तान्यस्थीनि कुम्भस्थान्येव स्थापयति । ततोऽहतवस्त्रस्य पक्षेणैकदेशेन तमस्थिकुम्भं सर्वतो वेष्टयति । घटस्योपरि छत्राणां धारणम् । स्रक्चन्दनपुष्पमालादिभिर्घटस्याऽलङ्करणम् ।

ततो यजमानस्यामात्याः पुत्रपौत्रादयः स्त्रियो वा आयसेषु वादित्रेषु वाद्यमानेषु उत्कटायां वीणायां च वाद्यमानायां सत्यामुत्तरीयैरुपवाजनैर्वा तान्यस्थीनि कुम्भस्थान्युपवाजयन्तस्त्रिस्त्रिः परिक्रामन्ति । प्रदक्षिणमप्रदक्षिणं च परियन्ति । प्रथमपरिगमनानन्तरमस्थिकुम्भस्यान्नमुपहरन्त्येके । नैके । एवमेव रात्रेः पूर्वभागे रात्रेर्मध्यभागे च । रात्रेःपरभागे च परिगमनं कुर्वन्ति ।

ततोऽरुणोदयवेलायां खट्वायाः सकाशात् अस्थिकुम्भं गृहीत्वा

नृत्यगीतवादित्रवच्च ॥११॥ अन्नमस्मा ऽउपसंहरन्त्येके ॥१२॥ उपव्युषसं सशरीरा दक्षिणा गच्छन्ति ॥१३॥ यथाकुर्वतोऽभ्युदियात्सूर्यः ॥१४॥ कक्षेऽवतापिनि ॥१५॥ ऊषरऽ उदक्प्रवणे समे वा ॥१६॥ दक्षिणाप्रवणऽ एके॥१७॥ अदर्शनाद् ग्रामात् ॥१८॥ आरात्पथः ॥१९॥ न्यग्रोधाश्वत्थ-तिल्वक-हरिद्रु-स्फूर्जक-बिभीदक-पापनामभ्यश्च ॥२०॥ चितिवच्च ॥२१॥ शम्वति कम्वति वा ॥२२॥ चित्रं पश्चात् ॥२३॥ तदभाव उदकमुत्तरतो वा ॥२४॥ कर्षूवीरण-

---

ग्रामसमीपादस्थिकुम्भसहिताः सर्वेऽध्वर्युयजमानामात्या दक्षिणस्यां दिशि गच्छन्ति। तत्राऽस्थिनिवापकर्मणि क्रियमाणे यथा सूर्योदयो भवति तथा यत्नः कर्तव्यः। ग्रामतस्तेजनीं तृणपूलकं वंशाऽग्रे बध्वा ध्वजवदुत्थितं हस्तधृतमेव ग्रामादाहृत्य कर्मसमाप्तिं यावदुत्तरतोऽमात्या अन्ये वा धारयन्ति।

ततः कर्मसमाप्त्यनन्तरं गृहमागच्छन्तोऽपि तथैव तेजनीं धारयन्त एव आगत्य गृहेपूच्छ्रयन्ति। मध्ये तत्र वा। भूमौ न निरस्यन्ति।

अथ श्मशानस्य प्रदेशो मध्याह्न एवोपरिष्टात्सूर्यस्तपति नान्यदीयाऽवस्थः। तथा ऊषरे ऊषाः क्षारमृत्तिकास्ता विद्यन्ते यत्र तदूषरम्। "ऊष सुषिमुष्कमघोरः" इति मत्वर्थीयो रप्रत्ययः। उदक्प्रवणे समे वा।

एके दक्षिणाप्रवणे देशे गच्छन्ति। यत्र स्थितग्रामो न दृश्यते तत्र श्मशानं कर्तव्यम्। मार्गाद्विप्रकृष्टं च। तथा न्यग्रोधाऽश्वत्थ-बिल्वक-हरिद्रा-स्फूर्जक-बिभीदक-पापनामभ्यश्च वृक्षेभ्यो विप्रकृष्टं श्मशानं कर्तव्यम्। तथा चितिवच्चात्र प्रदेशो भवति। एतेनोद्धृत्य क्षीरिणीः पुरुषाह्वतीर्विशाखशराश्मगन्धापृश्निपर्ण्यश्चाण्डाश्चेत्यतिदिश्यन्ते। तथा शंवति सुखनीये प्रदेशे। कम्वति स्वर्गतुल्ये रमणीये प्रदेशे। तथा चित्रमनेकप्रकारवृक्षकं वनं यस्य पश्चाद् भवति तस्मिन् प्रदेशे। पश्चाच्चित्रालाभे यस्य प्रदेशस्योत्तरतः पश्चाद्वा उदकं भवति तस्मिन् प्रदेशे वा। तथा कर्षूवीरणवति प्रदेशे। कर्षूः कोसारः। तद्युक्ते उशीरयुक्ते ग्रामसमीपाद्दक्षिणस्यां दिशि गत्वा एवं लक्षणयुक्ते प्रदेशे श्मशानं कुर्यात्। तत्र दिक्स्रक्ति पुरुषमात्रं मिमीते। तच्च एवं कर्तव्यम् " पैतृक्यां द्विपुरुषं समचतुरस्रं कृत्वा करणीमध्येषु शङ्कवः स समाधिरिग्ंति।

वति ॥२५॥ ग्रामतस्तेजनीमुच्छ्रित्य न न्यस्येद् गृहेपूच्छ्र-
येत् ॥२६॥ दिक्स्रक्ति पुरुषमात्रं मिमीते ॥२७॥ उत्तरतः
पृथु, पश्चाच्च ॥२८॥ विहृत्य स्रक्तिषु शङ्कूनाहन्ति २९
पालाशं पुरस्ताच्छामील-वारण-देहशङ्कूनन्यासु ॥३०॥
देहशङ्कुर्वृत्रशङ्कुः ॥३१॥ अपसलाविसृष्टया रज्ज्वा परि-

तथा तत् पुरुषमात्रं क्षेत्रमुत्तरपार्श्वं पश्चिमपार्श्वं च पृथु कार्यम् । तत्राऽयमुपायः—"पुराऽवान्तरदिक्स्रक्ति विहृत्येत्य तिरेकतः, सार्धषड्भागहीनेन पुरुषेणैव सेत्स्यति उत्तरतः पृथु पश्चाच्च स्रक्त्यर्थविकर्णगात्" तस्मिन् दिक्स्रक्ति कर्तव्यम् । तासु शङ्कून् क्रमेण तान्" इति वासुदेवः। तत्रैवं जीर्णः सम्प्रदायः । पुरुषस्य प्रमाणं विंशतिशताऽङ्गुलानि । तानि त्रयोदशधा विभज्यन्ते ।

नव नव एकैकस्मिन् भागे अङ्गुलानि भवन्ति । एवं सप्तदशाधिकशतमङ्गुलानि विभक्तानि भवन्ति । त्रीण्यङ्गुलान्यवशिष्यन्ते । तान्यपि त्रयोदशधा विभज्यन्ते । एकैकस्मिन् भागेऽङ्गुलस्य चतुर्थो भागस्तत् त्रयोदशांशोनो भवति ।

एवं त्रयोदशधा विभक्ते अर्धसहिताः षड् भागा भवन्ति । एकैकस्मिन् भागेऽष्टादशाङ्गुलानि सार्द्धानि त्रयोदशांशत्रयन्यूनानि भवन्ति । अर्धभागे नवाङ्गुलानि स्वत्रयोदशांशानामङ्गलचतुर्थभागसहितानि भवन्ति । अतः पुरुषस्य चतुरस्रस्य दिक्स्रक्तेः प्राणभृदुपधानवत् पूर्वदक्षिणोत्तरपार्श्वयोर्नवाऽङ्गुलानि स्वत्रयोदशांशेनाङ्गुलचतुर्थभागसहितानि पुरुषप्रमाणमध्ये न्यूनानि कार्याणि । ११० ।




पश्चिमोत्तरपार्श्वयोः तावन्ति पुरुषप्रमाणादधिकानि कार्याणि । १२९ । एवंविधं क्षेत्रं मित्वा चतुर्षु स्रक्तिषु एकैकं शङ्कुं निखनति । पालाशं शङ्कुं पुरस्तात् देहशङ्कुं वृत्रस्य देहरूपं पाषाणशङ्कुं दक्षिणतः ।

तत्यापेतो यन्त्विति पलाशशाखया व्युदूहति ॥३२॥ दक्षिणा शाखां निरस्य परिश्रिद्भिः परिश्रयति पूर्ववदपरिमिताभिः॥३३॥ औदुम्बरसीरऽ उत्तरतो वा षड्गवे युज्यमाने युङ्क्तेति सम्प्रेष्य सविता त इति जपति॥३४॥३॥

अनुरज्जु चतस्रः सीताः कृषति वायुः पुनात्विति प्रतिमन्त्रम् ॥१॥उत्तरतः प्रतीचीं प्रथमाम् ॥२॥ अपरिमिता मध्ये तूष्णीम् ॥३॥ अनडुहो विमुच्य विमुच्यन्ता-

---

एवं शङ्कुन्निखायाऽपसलवि सूत्र्याऽप्रदक्षिणनिर्मितया रज्ज्वा तत्क्षेत्रमप्रदक्षिणं सर्वतो वेष्टयित्वा, "अपेतो यन्तु" इति मन्त्रेण मध्ये पलाशशाखया व्युदूहति ।




ततो दक्षिणस्यां दिशि शाखां निरस्येत् । ततो गार्हपत्यपरिश्रिद्वेदयाऽपरिमिताभिः परिश्रिद्भिस्तूष्णीं पूर्ववत्परिश्रयति । पूर्ववदित्यनेन ऊर्ध्वाः शर्कराः खाते बही रज्जु इत्येतदतिदिश्यते । ततो यजमान उत्तरतो दक्षिणामुखस्तिष्ठन् अध्वर्युं प्रेष्यति युङ्क्तेति ।

ततोऽध्वर्युरुत्तरस्यां दिशि दक्षिणस्यां दिशि वा प्रत्यङ्मुखं सीरं षड्भिर्बलीवर्दैर्युनक्ति । सीरेऽध्वर्युणा युज्यमाने यजमानः सविता त इति जपति ।

इत्येकविंशस्य तृतीया कण्डिका ॥ ३ ॥

---

ततोऽध्वर्युरनुरज्जु लक्ष्यीकृत्य चतस्रः सीताः कृषति । प्रथममुत्तरतः प्रतीचीं सीतां वायुः पुनात्विति मन्त्रेण कृषति । ततः सविता पुनात्विति पश्चिमायां दक्षिणासंस्थां द्वितीयाम् ।

ततोऽग्नेर्भ्राजसेति दक्षिणतः प्राचीम् । ततः सूर्यस्य वर्चसेति पुरस्तादुदीचीम् । ततो मध्ये तूष्णीमपरिमिताः सीता अग्निक्षेत्रवत्कृषति ।

तत उत्तरस्यां दिशि विमुच्यन्तामुस्रिया इत्यनेन मन्त्रेण कृष्टे सर्वौषधं वपति । ततः सूर्योदयसमकालमेव सविता ते शरीराणि इति द्वाभ्यां मन्त्राभ्यां क्षेत्रस्य मध्ये कुम्भेनैव शरीराण्यस्थीनि निवपति । ततोऽध्वर्युरुत्तरतस्तिष्ठन्दक्षिणामुखोऽन्यं कञ्चन पुरुषं प्रेष्यति । एतां दिशमनवानं सृत्वा कुम्भं प्रक्षिप्यानपेक्षमाण एहीति ।

मिति दक्षिणा सीरं निरस्यापरस्थे व इति सर्वौषधं वपति ॥४॥ सविता त इति शरीराणि निवपति मध्ये ॥५॥ तूष्णीमन्यः कुम्भमाक्ष्णोति दक्षिणाऽनवानन्नस्त्वा ॥६॥ प्रत्यागते पर मृत्याविति जपति ॥७॥ शं वात इति यथाङ्गं कल्पयित्वेष्टकां निदधाति मध्ये तूष्णीम् ॥८॥ प्रतिदिशमन्तेषु पराचीस्तिस्रस्तिस्रो ऽलक्षणाः पादमात्रीः ॥९॥ प्रदरात्पुरीषमाहृत्य परिकृष्य वा सर्वतो ऽपुरस्तात् ॥१०॥ शर्करा अनाग्निचितः ॥११॥ उर्द्धप्रमाणमास्यं ब्राह्मणस्य ॥१२॥ उरः क्षत्रियस्य ॥१३॥ ऊर्द्धबाहु वा ॥१४॥ ऊरू वैश्यस्य ॥१५॥ उपस्थः स्त्रियाः

---

तत एवं प्रेषितोऽन्यो रिक्तमस्थिकुम्भं गृहीत्वा श्वासग्रहणं कुर्वन् दक्षिणां दिशं गत्वा दक्षिणस्यां दिशि कुम्भं प्रक्षिपति ।

ततोऽनपेक्ष्य प्रत्याऽऽगते कुम्भक्षेप्तरि यजमानः परं मृत्यविति मन्त्रं स्वरेण जपति ।

ततोऽध्वर्युः शं वात इति द्वाभ्यां मन्त्राभ्यां मध्ये न्युप्तान्यस्थीनि यथाऽङ्गं कल्पयित्वा यस्याङ्गस्य यदस्थि तत्र अङ्गकल्पनेन पुरुषाकृतिं कृत्वा पुरुषाकृति कल्पितस्य मध्ये एकामिष्टकां प्राचीं तूष्णीं निदधाति ।

ततस्तिस्रस्तिस्रः पादमात्र्योऽलक्षणाः प्रतिदिशमन्तेषु पराच्य उपधेयाः । मध्यमं पुरस्तादस्थिभिः कल्पितस्य पुरुषाकारस्य मूर्धसंहितामस्तकलग्नाः पूर्वाऽपराः प्राक्संस्थास्तिस्रा उपदधाति नाभ्यात्मम् । अपरेण परिक्रम्य परिक्रम्य तूष्णीमुपधानम् । अनग्निचितः संस्कार्यस्य । एवं त्रयोदशानां पद्यानामुपधानम् । अग्निचितः संस्कार्यस्येष्टकानां स्थाने त्रयोदश त्रयोदश शर्करा उपदधाति । ततः प्रदरात् कोशादेः पुरीषमाहृत्य श्मशाने निवपति ।

अथवा पुरस्ताद्वर्जमन्याभ्यो दिग्भ्यः परिकृष्य श्मशाने पुरीषं निवपति । एतत् श्मशानं ब्राह्मणस्य यजमानमुखमुच्चं कुर्यात् ।

क्षत्रियस्योरः प्रमाणं कुर्यात् । ऊर्ध्वबाहुप्रमाणं वा । ऊरुमात्रं वैश्यस्य । स्त्रियाः संस्कार्याया उपस्थप्रमाणं श्मशानं कुर्यात् । शूद्रस्य रथकारस्य जानुदघ्नं स्यात् ।

अथवा ब्राह्मणादीनां सर्वेषामधोजानुप्रमाणमूर्द्ध्वं श्मशानं कुर्यात् ।

॥१६॥ जानुशूद्रस्य ॥१७॥ सर्वेषां वाऽधोजानु ॥१८॥ अवकाभिः कुशैश्च प्रच्छाद्य ॥१९॥ परिकृष्टं चेद्यवान्वपेत् ॥२०॥ दक्षिणतः कुटिले कर्षू खात्वा क्षीरोदकाभ्यां पूरयन्ति सप्तोतरतः प्राचीरुदकस्य ॥२१॥ त्रींस्त्रीनावपन्त्यश्मनः ॥२२॥ अध्यधिगच्छन्त्यश्मन्वतीरिति ॥२३॥ अपाघमित्यपामार्गैरपमृजते ॥२४॥ सुमित्रिया न इति स्नात्वाऽहतवाससोऽनुडुत्पुच्छमन्वारभ्यानड्वाहमित्युद्वयमिति गच्छन्ति ॥ २५ ॥ ग्रामश्मशानान्तरे मर्यादालोष्टं निदधातीमं जीवेभ्य इति ॥ २६ ॥ अञ्जनाभ्यञ्जने कृत्वौपासनं परिस्तीर्य वारणान्परिधीन्परि-

---

ततः सर्वं श्मशानमवकाभिः शैवालैः प्रच्छाद्योपरि कुशैः प्रच्छादयेत् । पूर्व पुरीषं परिकृष्य चेद्यदि सर्वतः परिकृष्य पुरीषनिवापः कृतो भवेत् ।

ततो यवान्वपेत् । ततोऽवकाभिः कुशैश्च प्रच्छादयेत् । ततोऽऽमात्याः श्मशानस्य दक्षिणः कुटिले वक्रे द्वे कर्षू खात्वा पूर्वदिनोपक्लृप्तैः घटैः क्षीरोदकाभ्यां पूरयेदिति ।

ततस्तासु सप्तस्वपि कर्षूषु प्रत्येकं त्रीन् त्रीनश्मनः पाषाणानमात्या आवपन्ति । ततोऽश्मन्वतीरित्यनेन मन्त्रेण कर्षूरध्यधि गच्छन्ति । अश्मसु पादान्निदधतः कर्षूणामुपरि सर्वे ग्रामं प्रति स्नानार्थं तडागादिस्थमुदकं प्रति आगच्छन्तात्यर्थः ।

ततो यज्ञोपवीतिनो भूत्वोदकं स्पृष्ट्वा अपाघमपेति मन्त्रेणापामार्गबीजोद्वर्त्तनेनाऽध्वर्युयजमानाऽऽमात्याः शरीरोद्वर्त्तनं कुर्वन्ति । अथवाऽपामार्गैर्हस्तगृहीतैः परम्मृत्यो इत्यात्मानं पावयन्तीत्यर्थः ।

ततः सर्वे सुमित्रिया न इति मन्त्रेण अञ्जलिनोदकमादाय दुर्मित्रिया इति द्वेष्यं प्रति निषिच्य, ततः स्नात्वाऽहतवासः परिधानं कृत्वा अनड्वाहमन्वारभामहे इत्यनेनानडुत्पुच्छमन्वारब्धा उद्वयमित्यनेन मन्त्रेण ग्रामं प्रत्यागच्छन्ति अन्वारब्धा एव ।

ततोऽध्वर्युर्ग्रामश्मशानयोर्मध्ये इमं जीवेभ्य इति मन्त्रेण मर्यादालोष्टं निदधाति । ततो गृहमागत्याऽक्ष्णोरञ्जनं पादयोरभ्यञ्जनं च तैलादिना कृत्वा औपासनमावसथ्याग्निं परिस्तीर्य वारणांश्चतुरः परिधींश्चतसृषु

-धाय वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्न आयूꣳष्यायु-
ष्मानग्न इति ॥२७॥ अथैषां परिदां वदति परीमे गाम-
नेषतेति ॥२८॥ अद्वारेणौपासनं निरस्यति क्रव्यादमिति
॥२९॥ इहैवायमिति जपति ॥३०॥ आसन्दी सोपधाना
दक्षिणाऽनड्वान्यवाश्च सर्वं पुराणं भूयसीश्चेच्छन्॥३१॥४॥

## द्वाविंशोऽध्यायः ।

अथैकाहाः ॥१॥ अवचने ऽग्निष्टोमः ॥२॥ भूर्धेनुद-

दिक्षु परिधायाऽऽज्यं संस्कृत्य वारणेन स्रुवेण अग्न आयूꣳष्यायुष्मानग्न इति द्वाभ्यां मन्त्राभ्यामेकाहुतिमावसथ्येऽध्वर्युर्जुहुयात् । इदमग्नय आयुष्मते ।

अथ यजमानो यज्ञोपवीती एषाममात्यानां परिदां वदति परीमे गामनेषतेति ।

ततः क्रव्यादमग्निमिति मन्त्रेणाद्वारेणौपासनस्यैकदेशं निरस्यति । औपासनाऽग्निः प्रेतस्यैव न यजमानस्य । स ह्येवमर्थमेवाऽवधारणीयः । आहुतिं हुत्वाऽद्वारेण चाभिनिरसनीयः इति हरिस्वामिनो वासुदेवभट्टा याज्ञिकाश्चाहुः । यजमानस्यैवोपासने आहुतिं हुत्वा तस्यैवैकदेशं निरस्यतीति कर्कः ।

याज्ञिकैरपि पुनरेव स्थिरीकृत्योपसंहृतम् । तस्मात्कर्तुरेवैकदेशस्य त्यागः । एकदेशस्य स्थापनमिति । तत इहैवायमिति मन्त्रमध्वर्युर्जपति। ततोऽस्य कर्मणः समृद्ध्यर्थं सोपधाना पुराणी जीर्णाऽऽसन्दी दक्षिणा । उपधानमुच्छीर्षकं तदपि पुराणमेव । तथा पुराणोऽनड्वान् दक्षिणा । पुराणा यवाश्च । इच्छया भूयस्यश्च देयाः ।

इत्येकविंशस्य चतुर्थी कण्डिका ॥ ४ ॥

इति पितृमेधः ॥

इति सम्राट्-स्थपतिस्त्रिरग्निचित् महायाज्ञिकश्रीप्रजापतिसुनुना याज्ञिकदेवेन कृतायां कात्यायनपद्धतौ एकविंशतितमोऽध्यायः ॥ २१ ॥

अथैकाहानां पद्धतिर्लिख्यते ।

तत्र उदगयने पूर्वपक्षे पुण्याहे प्रतिपदि वा शोभने नक्षत्रे अनुकूले चन्द्रे वा एकाहानां दीक्षा भवन्ति । तेषामनादेशे एका दीक्षा तिस्रो वा

क्षिणः ॥३॥ ज्योतिः ॥४॥ गोऽआयुषी उक्थ्यौ ॥५॥ अभिजिद्विश्वजितौ ॥६॥ सहस्रमाभिजितो दक्षिणा ॥७॥

---

चतस्रो वा द्वादश वा अपरिमिता वा दीक्षा भवन्ति। तिस्र उपसदः। एका सुत्या। तथा च छन्दोगसूत्रम्—"उदगयन-पूर्वपक्ष-पुण्याहसन्निपाते यज्ञकालोऽनादेशे"। तथा प्रथमायां पूर्वपक्षस्य दीक्षेत दृष्ट्वा वा नक्षत्रयोगम्। एका दीक्षाऽनादेशे तिस्रश्चतस्रोऽपरिमिता वा तिस्र उपसद इति।

सर्वेषामेकाहानां प्रारम्भे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धम्। तथा अग्निष्टोमसंस्थे आग्नेयः सवनीयः पशुः। उक्थ्यसंस्थे आग्नेयैन्द्राग्नौ द्वौ। षोडशिसंस्थे आग्नेयन्द्राग्नाश्रयः। अतिरात्रसंस्थे आग्नेयैन्द्राग्नैन्द्रसारस्वताश्चत्वार इति।

मानवे-"आम्नातं विधानमेकाहानां साग्नयः सर्वेऽन्यत्षोडशिनीवत्"। तत्र ऋत्विग्वरणाद्यादीपनान्तं सर्वमग्निष्टोमवत्। चातुर्मास्येभ्यो येषामाग्नेयो दीक्षोपसदः कामा येषु प्रजापशवः प्रजातिर्वाऽप्रवर्ग्यास्ते इति।

तत्र प्रथम एकाहो भूर्नामा अग्निष्टोमसंस्थः। धेनुरेका दक्षिणा। अन्यस्या हिरण्यादिदक्षिणाया निवृत्तिः। तेनाश्वाहुतेरभावः। भुवा अग्निष्टोमसंस्थेन धेनुदक्षिणेनाहं यक्ष्य इति वरणे। गोरभिमन्त्रणे रूपेण ते रूपमभ्यागां तुथस्ते विश्ववेदा विभजतु। ऋतस्य पथा प्रेहि चन्द्रदक्षिणे इति। अन्यत्सर्वमग्निष्टोमवत्।

काठके—"भूरग्निष्टोमः स्वर्गकामस्य धेनुदक्षिणेति"। अत्र दाक्षिणहोमेषु वासःप्रबद्धहिरण्यनिधानाभावः। तयोरत्र दानाभावात्। ज्योतिरग्निष्टोमसंस्थः प्राकृतदक्षिणः। गौरुक्थ्यसंस्थः प्राकृतदक्षिणः।

तत्र सर्वमुक्थ्यसंस्थं ज्योतिष्टोमवत्। आयुरुक्थ्यसंस्थमेव भवति। इन्द्रस्य त्रिकद्रुकाः प्रजापतेर्वा तेषां ज्योतिषाऽग्निष्टोमेन यजेतेमं लोकमभिजिगीषम्। गवाऽन्तरिक्षलोकमायुषा दिवमग्नेरभिजिताऽभिजिगीषम्। नैकादशिनो यूपपशवः। वराणां द्वादश शतं दक्षिणाऽश्वरथस्य। तिस्राऽनूबन्ध्या इति।

अभिजिदग्निष्टोमसंस्थम्। तत्र गवां सहस्रं दक्षिणा शताधिकं गोसहस्रं वा। तत्र सहस्रगवदक्षिणेनाग्निष्टोमसंस्थेनाभिजिताऽहं यक्ष्य इति शताश्वाधिकगोसहस्रगवदक्षिणेन वेति वरणे।

अत्रापि हिरण्याद्यन्यदक्षिणानिवृत्तिः। तत्र सहस्रपक्षे अश्वदाभ्यग्रहणम्। नाश्वाहुतिः। तिस्रोऽनूबन्ध्याः। त्रैधातव्युदवसानीया। शतमश्वा यस्मिन् गवां सहस्रे तच्छताश्वम्। शताश्वातिरिक्तमिति वासुदे-

**शताश्वं वा ॥८॥ सहस्रं सर्ववेदसं विश्वजितः ॥९॥ ज्येष्ठं पुत्रमपभज्य भूमिशूद्रवर्जं योगाविशेषात्सर्वेषाम् ॥१०॥ शूद्रदानं वा दर्शनाविरोधाभ्याम् ॥११॥ द्रव्याभावः।**

अस्मिन् पक्षे अश्वाहुतभेवात । नाश्वदाभ्यौ । तिस्रोऽनूबन्ध्या भवन्ति । त्रैधावती च विश्वजिदग्निष्टोमसंस्थः । तत्र सहस्रं गवां दक्षिणा सर्वस्वं वा ।

तत्र सहस्रदक्षिणेनाग्निष्टोमसंस्थेन सर्वपृष्ठेन विश्वजिताऽहं यक्ष्य इति । वरणे सर्वदक्षिणेनेति वा । अत्रापि हिरण्यादेर्निवृत्तिः । सहस्रपक्षे सर्ववेदसपक्षे चाश्वदाभ्यौ तिस्रोऽनूबन्ध्यास्त्रैधातवी च । अश्वाहुतेरभावः । अत्र सर्वेऽतिग्राह्याः । माहेन्द्रमनु तेषां होमः ।

सर्वेषु पृष्ठेषु रथसंसारणादीन्युपाकरणानि । होतृप्रत्ययः प्रतिगरश्च । मानवे विशेषः । "पुरा प्रातरनुवाकाद्यजमानः सौवर्णीं शतमानीं द्वादशपुण्डरीकां मालां प्रतिमुञ्चते पृष्ठ्यानतिग्राह्यान् गृह्णातिताननु पृष्ठं जुहोति । क्रियन्ते च पृष्ठशिल्पानि । दक्षिणाकाले सर्ववेदसं मालां च ददाति । वैराजं होतृसाम बृहद्वर्णमवभृथादुदेत्य सकर्णपुच्छां सर्वकालां रोहिणीं वत्सत्वचमाच्छादयते संस्थाप्योदवसानीयामुष्णीषी"ति ।

सर्वस्वपक्षे ज्येष्ठस्यपुत्रस्य विभागं पृथक् कृत्वा भूमिदासभूतं शुश्रूषोपनतं शूद्रं च वर्जयित्वाऽन्यत् सर्वस्वं कुप्याकुप्यधान्यशयनासनादिकं सर्वं धनं देयम् ।

कर्मारम्भे सर्वस्य धनस्य त्रिधा विभागः कार्यः । एको भागो जीवनार्थः । अपरः क्रतुसिध्यर्थः । तृतीयो दक्षिणार्थः । अत्र सर्वस्वदाने विहिते दक्षिणार्थो भागः सर्वोऽपि देयः । नान्यौ विभागाविति मीमांसकाः।

अत्र विश्वजिति नियमेन सहस्रादधिकमेव सर्वस्वं न सहस्रात्पम् । कोऽर्हति मनुष्यः सर्ववेदसं दातुम । सहस्रं देयम् इति श्रुतिवचनात् । अन्यत्र प्रतिहस्तपच्छेदादौ च यस्य यावत् स्वं सहस्रान्न्यूनमधिकं वा तावत्सर्ववेदसमिति । विश्वजिति सर्ववेदसदक्षिणापक्षे अयं विशेषः । अवभृथादुदेत्य पत्नीयजमानौ रोहिण्यौ वत्सच्छव्यौ रक्तवर्ण वत्सत्वचौ अच्छाते अछिन्ने परिदधाते । तत उदवसानीयान्ते वैणवीमौदुम्बरीं वा कल्माषीं सुषिरामुभयतस्तीक्ष्णां प्रदेशात्रीमरत्निमात्रीं धारयन्नुष्णीषं शिरोवेष्टनवस्त्रं च शिरसि धारयन् द्वादशरात्रं परिवसति ।

मानवे—"संस्थाप्योदवसानीयामुष्णीष्यधःशाय्युभयतस्तीक्ष्णामभ्रिं बिभ्रदि"ति । काठके—"उष्णीषं च वेष्टयति" । तत्र द्वादशानां रात्रीणां

**भावात्तदन्तः ॥१२॥ समाप्तिर्वा चोदितावभृथश्रुतेः॥१३॥ दीक्षासु चोपदेशात् ॥१४॥ न समत्वात् ॥१५॥ परिमाणे सर्वमविशेषात् ॥१६॥ अधिकं वा प्रकृत्यनुग्रहात्॥१७॥ नानित्यत्वात् ॥१८॥ कर्मशब्दाच ॥१९॥ अवभृथादुदेत्य**

---

मध्ये तिस्रा रात्रीरौदुम्बरे वसति ।

अरण्ये रात्रौ यत्रोदुम्बराणां समूहो भवति तत्र वसति । तत्रौदुम्बराणां फलानि अन्यानि वा फलानि भक्षयेत् । तथा खनित्रेण जीवतीति श्रुतत्वात्स्वयं कन्दमूलादि खात्वा तद्द्रव्येण जीवेत् ।

अत्र छन्दोगसूत्रम् । "अरण्ये तिस्रो वसतीत्युदुम्बरे वसेत् । अरण्ये य उदुम्बरस्तत्र वसेदित्यर्थः । उदुम्बराभावेऽप्युदुम्बरशाखां निखानयेयुः । उदुम्बराभावे उदुम्बरशाखामरण्ये निखाय तस्यां वसेदिति । तथा खनित्रेण जीवतीति यत्खान्यं स्यात्तेन जीवेत् । खान्यं कन्दमूलादि ।

खान्याभावे धान्यपात्राणि निखाय तैरुत्खानं जीवेत् । यदि तस्मिन्नरण्ये कन्दमूलानखान्यं न स्यात्ततो धान्यपात्राणि भूमिमध्ये निखाय ततः खनित्रेणाभिरूपेणोत्खाय तैर्जीवेदिति ।

ततश्चतुर्थ्याद्यास्तिस्रो रात्रीर्निषादानां निवासमध्ये वसीत । तत्र वसन् ग्राम्यमन्नं न भुञ्जीत । मृन्मयेन पात्रेण च पिबेत् । काठके "इन्द्रस्य विश्वजिता विश्वं जिगीषंस्तुल्योऽभिजिता विश्वजिति पृष्ठ्या निग्राह्या क्रतुशेषावशिष्टं सर्वस्वं दक्षिणा त्वभृथादुदेत्य रोहिते सकर्णपुच्छे वत्सत्वच आच्छाते । पुंसो यजमान उष्णीषं च वेष्टयत उदवसानीयां कृत्वेष्टिं निर्वपत्यग्नये जातवेदसेऽष्टाकपालमग्नये दधिक्राव्ण एकादशकपालमग्नये वैश्वानराय द्वादशकपालमुप्त्वा सन्तिष्ठते ।

औदुम्बरं चमसमादायोभयतः क्ष्णुतं च औदुम्बरीमग्निं तिस्र उदुम्बरे वसेदित्यादि । छन्दोगसूत्रे—"निषादे तु तिस्रो वसतीति पार्श्वतो निषादग्रामस्य वसेत्तेषां काममारण्यं भुञ्जीत नैवारं श्यामाकं मार्गमिति । तेषां निषादानां सम्बन्धि यदारण्यादिकम् । मार्गं मृगमांसम् । कामशब्दात्कामं न भुञ्जीतेति ।

अत्रारण्यग्रहणं यद्यारण्यं नैवारादि लभेत तद् भुञ्जीत न निषादेभ्यो गृह्णीयादित्येवमर्थम् । मानवे—"निषादेषु तिस्रस्तेषामारण्यं भुञ्जीत" इति । ततः सप्तम्याद्यास्तिस्रो रात्रीर्जने वसति ततो दशम्याद्यास्तिस्रो रात्रीः समाने वसति । जनशब्देन वैश्योऽभिधीयते ।

**रोहिण्यौ वत्सच्छव्यौ सकर्णपुच्छावच्छाते परिदधाते ॥२०॥ द्वादशरात्रं परिवसत्युखावदाग्निं बिभ्रत् ॥२१॥**

क्षत्रियः समानजनशब्देन । छन्दोगसूत्रे "जने तिस्रो वसतीति राजन्यबन्धुजनो ब्राह्मणः समानजन इति शाण्डिल्यः । विवाह्यो जनः प्रतिवेशः । समीपे वर्त्तमानः । एते धर्माः सर्ववेदसदक्षिणानां सर्वेषामिति । सर्वग्रहणं शाखान्तरीयाणामपि सर्वस्वदक्षिणानामेते धर्मा यथा स्युरिति ।

समाप्तेरूर्ध्वं संवत्सरं किञ्चिदपि कुतोऽपि न याचेत । स्वश्रद्धया केनचिदयाचितमेव दीयमानं न प्रत्याचक्षीत न निराकुर्यात् । काठके-"तिस्र उदुम्बरे वसेदश्नन् खननं नाभिगच्छेत्तत्रसौ नद्ये तिस्रो निषादे तस्यारण्यं तिस्रो वैश्ये तस्य क्षीरौदनं तिस्रो राजनि तस्य मांसौदनं ब्राह्मणे वा तस्य यथालाभं परिवासे समाप्ते विश्वजिल्लिङ्गानि निधाय संवत्सरं न याचेत् । न दीयमानं प्रत्याचक्षे समाप्ते भिक्षित्वा पृष्ठ्यशमनीयेन यजेतेति ॥ इति विश्वजित् ॥

अत्र छन्दोगसूत्रे—"विश्वजिदभिजिद्भ्यां यमाभ्यां यक्ष्यमाणः पूर्वापराभ्यां यजेत युगपदिति शाण्डिल्य इति" । अथवा विश्वजिदभिजिद्भ्यां यमाभ्यां युगपत्सहैव यजेत । तत्र विशेषः । वरणे अभिजिद्विश्वजिद्भ्यां सहस्रदक्षिणाभ्यां युगपदहं यक्ष्य इति ।

तत्र दक्षिणोत्तरे द्वे देवयजने कर्त्तव्ये । दक्षिणमभिजितो देवयजनं विश्वजित उत्तरम् । पत्नीशाला उत्तरे एव देवयजने कार्या न दक्षिणे । षोडशर्त्विजः साधारणा भवन्ति नतु प्रत्येकम् । आन्तर्वेदिकान्यग्नीषोमीयादीनि पृथक् पृथक् भवन्ति ।

उभयवेदिसम्बन्धिकर्मसन्निपाते प्रथमं प्रथममभिजितः कर्म कर्त्तव्यम् । ततो विश्वजितः । यथा सयजमाना धिष्ण्यानुपतिष्ठन्ते हुतशेषं धर्मर्त्विजः सयजमानाः अभितो देवयजनाध्यवसानम् इत्यादि । एवं सर्वेषु सयजमानकेषु कर्मसु ज्ञेयम् । पृथक् सहस्रे दक्षिणा । प्रत्येकं गवां सहस्रमित्यर्थः ।

दक्षिणे देवयजनाध्यवसानं पूर्वम् । तत उत्तरे । उपरवदेशे सोमद्वयस्य निधानम् । विरोधे सति विभज्याण्वी ऋत्विज उभयत्र यथासम्भवं पदार्थान् कुर्वन्ति । तत्रोत्तरे देवयजने आध्वर्यवं प्रतिप्रस्थाता करोति । मैत्रावरुणो हौत्रम् । ब्राह्मणाच्छंसी ब्रह्मत्वम् । प्रस्तोता औद्गात्रम् । एते प्रतिप्रस्थात्रादयः स्वपदार्थांश्च कुर्वन्ति ।

औदुम्बरीं वा ॥२२॥ उष्णीषं च ॥२३॥ तिस्रस्तिस्रः ॥२४॥ औदुम्बरे मूलफलभक्षः ॥२५॥ निषादे ॥२६॥ जने ॥२७॥ समाने जने ॥२८॥ वैश्यो जनो राजन्यः समानजनः श्रुतेः ॥२९॥ आम्याभोजनं निषादानां मृन्मयापानं च ॥३०॥ संवत्सरं न याचेत् ॥३१॥ दीयमानं न प्रत्याचक्षीत ॥३२॥ यमाभ्यां वा यजेत पूर्वापराभ्याम् ॥३३॥

---

दक्षिणे देवयजने तृतीयाः पातृप्रातहर्तृस्त्रच्छावाकनेष्टारो द्वितीयानां प्रतिप्रस्थात्रादीनां पदार्थान् कुर्वन्ति स्वपदार्थांश्च। उत्तरे देवयजने चतुर्था अग्नीत्सुब्रह्मण्यग्रावस्तुदुन्नेतारस्तृतीयानां पदार्थान् कुर्वन्ति स्वपदार्थांश्च। पदार्थानां यौगपद्ये विरोधादेव कर्तृत्वम्। यत्र तु कथञ्चिदयौगपद्यं तत्र मुख्यानामेव कर्तृत्वम्।

चतुर्गृहीतं गृहीत्वाऽन्वारभस्व यजमानेत्यादि सोमविक्रय्याहननान्तं दक्षिणे कृत्वोत्तरे कर्त्तव्यम्। एवमेवोभयत्र क्रमेण सोमहरणं प्रवेशनान्तम्। हविर्द्धानप्रक्षालनादि वैष्णवमसीत्यालम्भनान्तं दक्षिणे प्रथमं तत उत्तरे। उपरवखनने चैवम्। धिष्ण्यानिवापश्च।

अग्नीषोमप्रणयने सोमहरणान्ते भेदः। सोमस्य हविर्द्धाने स्थापने च भेदः। उत्तरेऽङ्गुलिविसर्गः। यूपान्वारम्भचषालेक्षणयोर्भेदः। पशुनयने शोधने च। एकः शामित्र उत्करश्चात्वालश्च बाहिर्वेदिकत्वात्। एवं यत्र यत्र सन्निपातस्तत्र तत्र भेदः। इतरत्र यौगपद्यम्। अंशवदाभ्ययोर्ग्रहणमुभयत्र।

ऋतुयाज्यावरणे यो यावन्ति कर्माणि करोति तस्य तावन्ति वरणानि। स्तोत्रे सन्निपातः। उभयत्र मुख्यकर्तृणामेव दक्षिणा न विरोधकर्तृणाम्। एकोऽवभृयः। प्रत्येकं तिस्रस्तिस्रोऽनूबन्ध्याः। उदयनीये एका बाहिर्वेदिकत्वात्। पत्नीसंयाजा अप्युत्तर एव। दक्षिणाग्निहोमश्च। उभयत्र नव नव समिष्टयजूंषि। त्रैधातव्युदवसानीयैकैव। बाहिर्वेदिकत्वात्। आग्निकौ चेदिमौ तदाऽन्तर्वेदिकत्वेऽपि न पञ्चपशुभेदः। शिरांसि साङ्ग्रामिकाणि। भेदेनाषाढादीनां करणम्।

काठके—"समाप्ते संवत्सरे भिक्षित्वा पृष्ठ शमनीयेन यजेतेति"। इत्यभिजिद्विश्वजितौ।

अथ सर्वजिदुच्यते। स समहाव्रतः संवत्सरदीक्षोऽग्निष्टोमसंस्थो भवति। संवत्सरानन्तरं सप्ताहेऽतीते सुत्या भवति। सप्ताहमध्ये

कुलपद्दा ॥३४॥ दक्षिणोत्तरे देवयजने ॥३५॥ दक्षिणमभिजितः ॥३६॥ पर्णशालमुत्तरे ॥३७॥ नानर्त्विजः॥३८॥ त एव वा प्रभुत्वात् ॥३९॥ बाहिर्वेदिकानि समानानि ॥४०॥ नानेतराणि ॥४१॥ कर्मसन्निपाते पूर्वं पूर्वमभिजितः ॥४२॥ पृथक्सहस्रे दक्षिणा ॥४३॥ सर्वजित्समहाव्रतः संवत्सरदीक्षः सप्ताहाभिषवस्तिस्र उपसदः षड्वा ॥४४॥ अग्निवद्वा दीक्षाः ॥४५॥१॥

---

तिस्र उपसदः। शेषास्तस्रो दीक्षाः। अथवा सप्ताहमध्ये षडुपसदः। एका दीक्षा।

अथवाऽग्निवत्संवत्सरमेव दीक्षा भवन्ति। तत्र स्वकाले पशुः उखासम्भरणं च। चैत्रशुक्लाष्टम्यामृत्विग्वरणादि। तत्र वरणे साग्निचित्येन समहाव्रतेन सहस्रगवदक्षिणेन पञ्चदशस्तोमेनाग्निष्टोमसंस्थेन सर्वजिताऽहं यक्ष्य इति। पुनः पर्यवेते संवत्सरे न वरणप्रभृति। षडुपसदः। तिस्रो वेति पक्षे द्वादशीप्रभृति तिस्र उपसदः। अग्निवद् दीक्षापक्षे नवम्यामेकादश्यां वा आरम्भः। वैशाखशुक्ले वा। षण्मासदीक्षापक्षे स्वकाले इष्टकापशुरुखासम्भरणं च। आश्वयुक्शुक्लनवम्यामेकादश्यां वा दीक्षा कार्तिकस्य वा।

सर्वेषु पक्षेषु षडुपदस्तिस्रो वा। षडुपसत्पक्षे प्रत्युपसदमेकैका सचुतीया चितिः। पञ्चगृहीताद्युत्तमा। त्र्युपसत्के द्वे प्रथमायां तिस्रो मध्यमायां पञ्चगृहीताद्युत्तमेति। छन्दोगसूत्रे—"व्रतवत्सु सर्वेऽमावास्यायां दीक्षित्वोखामाबध्नन्ति सांवत्सरिकेभ्योऽन्यत्रेति गौतमः। सर्वग्रहणं सत्रेऽपि व्रते प्राप्त्यर्थम्।

तथा सह सुत्याभिः षडहानि संवत्सरादधिकानि कृत्वोत्सिष्ठेयुः। समाप्ते वा संवत्सररात्रिसत्रेषु राजानं क्रीणीयुः यथाजाति तु प्रथमे पञ्चदशरात्रे दीक्षेरन्। प्रथमे पञ्चदशरात्रे व्रतवत्यपि सति यथाजाति दीक्षेरन् या या सूत्रेषु जातिः।

तद्यथाजाति तेषां द्वादश दीक्षास्तथोपसदोऽनादेशे इति। सर्वत्र वा यथाजात्यन्यत्र चेदुपेतमिति धानञ्जय्य आह—"सर्वेषु व्रतवत्सु यथाजाति दीक्षेरन् यद्येतदन्यत्र कर्मणि पूर्वं व्रतकृतं स्यात्। वा विकल्पे अनुपेतं वेदजातिशाण्डिल्यः।

शाण्डिल्य एवमाह। यद्येतद् व्रतमन्यत्रोपेतमनुपेतं वा भवतु सर्वत्रैव यथाजाति दीक्षेरन्निति। तथा तिस्र उपसदो व्रतस्यैकाहिकस्य गौतमीयेन विधानेन क्रियमाणस्य षड् वा द्वादश वा।

इति द्वाविंशस्य प्रथमा कण्डिका ॥ १ ॥

शताश्वरथमध्वर्यवे ददात्यग्नौ चीयमाने ॥१॥ उद्गात्रे व्रतकाले ॥२॥ होत्रे शस्त्रकाले ॥३॥ ततो ब्रह्मणे ॥४॥ दक्षिणाकाले सर्वेभ्यः सहस्रम् ॥५॥ साहस्राश्चत्वारः सहस्रदक्षिणाः ॥६॥ तृतीय उक्थ्यः ॥७॥ ज्योतिर्विश्वज्योतिः सर्वज्योतिस्त्रिरात्रसम्मितः ॥८॥ षट् साद्यस्क्राः ॥९॥ स्वर्गकामपशुकामभ्रातृव्यवतां प्रथमः ॥१०॥ रुक्म-

---

अत्र चीयमानेऽग्नौ प्रथमोपधानादारभ्यानिधानादर्वागध्वर्यवे गवां शतमेकमश्वं रथं च ददाति। एवमेवोद्गात्रे महाव्रतस्तोत्रकाले शताश्वरथं ददाति। तथा होत्रे महदुक्थाख्यशस्त्रकाले शताश्वरथं ददाति।

ततः शस्त्रानन्तरमेव प्राङ् माहेन्द्रहोमात् ब्रह्मणे शताश्वरथं दद्यात्। दक्षिणाकाले सर्वेभ्यः षोडशभ्योऽप्यृत्विग्भ्यो गवां शतं विभज्य दद्यात्। अत्रांश्वदाभ्यौ तिस्रोऽनूबन्ध्यास्त्रैधातवी च भवति। अत्राध्वर्यवे शताश्वरथदानात् प्राक् अपकृष्याश्वाहुतिर्होतव्या दास्यन्निति वचनात्। तदा चाग्नीध्रीयाभावादाहवनीये होतव्येति सम्प्रदायः।

आग्नेयः सवनीयः प्राजापत्य उपालभ्य इत्यादयो मार्जालीये पूर्णाग्निं दधातीत्येतत्पर्यन्ताः सर्वे महाव्रतधर्मा गवामयनगतमहाव्रतवदत्र भवन्ति। त्विषः संवृगिति दधिघर्मशेषस्य भक्षणम्। मानवे— "इन्द्रस्य सर्वजितः पञ्चविंशो महाव्रतः संवत्सरमुख्यं बिभर्ति सहस्रं दक्षिणा इति"। इति समहाव्रतः सर्वजिदेकाहः।

अथ चत्वारः साहस्राः। तेषु प्रत्येकं गवां सहस्रं दक्षिणा। तत्र प्रथमो ज्योतिरग्निष्टोमः। द्वितीयः सर्वज्योतिरग्निष्टोमः। तृतीयो विश्वज्योतिरुक्थ्यसंस्थः। चतुर्थस्त्रिरात्रसंमितोऽग्निष्टोम इति। एतेषु चतुर्ष्वपि साहस्रेष्वंश्वदाभ्यौ तिस्रोऽनूबन्ध्यास्त्रैधातव्युदवसानीया चेति।

कठसूत्रे विशेषः—"चत्वारः सहस्राः सहस्रदक्षिणाः सर्वत्रैव यूप एकादशिनाः सवनीयास्तिस्रस्तिस्रोऽनूबन्ध्यास्तेषां वसूनां ज्योतिषाऽग्निष्टोमेन यजेतेमुं लोकमाजिजिगीषन् रुद्राणां विश्वज्योतिषाऽन्तरिक्षमादित्यानां सर्वज्योतिषा दिवं विश्वेषां देवानां त्रिरात्रसंमितेन दिशो विजिगीषन् पृष्ठ्यातिग्राह्या विंशतिमाशिरे दुहन्तीति"।

मानवे—"चत्वारः साहस्रा वसूनां प्रथमो रुद्राणां द्वितीय आदित्यानां तृतीय उक्थ्यो विश्वेषां देवानां चतुर्थः सूर्ये सहस्रदक्षिणा यो गर्गत्रिरात्रे कामः स एतेष्वेकविंशतिमेकविंशतिमाशिरे दुहन्त्युभयसा-

**ललाटोऽश्वः श्वेतो दक्षिणा ॥११॥ अश्वाभावे गौः॥१२॥**

मानेष्विह पृष्ठाः ।

अथ षट् साद्यस्काः । तेषु प्रथमः साद्यस्कः स्वर्गकाम पशुकाम भ्रातृव्यवतां भवति । अत्र रुक्मललाटोऽश्वः श्वेतो दक्षिणा । रुक्मः सौवर्ण आभरणविशेषो यस्यासौ रुक्मललाटः। रुक्मं ललाटे बद्ध्वा देय इत्यर्थः । अश्वाभावे रुक्मललाटः श्वेतो गौर्दक्षिणा । तमश्वं गां वो द्गात्रे ददाति । अन्येषामृत्विजां प्रकारान्तरेण सन्तोषणं कर्त्तव्यम् । हिरण्यादिप्राकृतदक्षिणाया अभावः ।

छन्दोगसूत्रम्—"अश्वः श्वेत एतस्य दक्षिणा तमुद्गात्रे दद्यात् किञ्चि- च्चेतरेभ्य" इति । तत्र यस्मिन्संवत्सरे साद्यस्कः क्रियते ततः पूर्वस्मिन् संवत्सरे लाङ्गलीष. हलस्येषा यत् खादिरी च खलेवाली क्रियते तस्याः परितो व्रीहीणां यवानां वा वपनमर्थात्प्रथमं कर्तव्यम् । यथा पक्वेषु तेषु देवयजनं क्रियते ।

तत्र वसन्ते शुक्लचतुर्दश्यामृत्विग्वरणम् । मधुपर्कः । ततस्तस्मिन्नेव दिने प्रतिदिशं महर्त्विजो वसन्ति । प्राच्यां दिशि योजनमात्रे ऽध्वनि होता वसति । उत्तरस्यां दिशि क्रोशत्रये उद्गाता वसति । अपरस्यां दिशि क्रोशद्वये अध्वर्युर्वसति। दक्षिणस्यां दिशि क्रोशमात्रे ब्रह्मा वसति ।

ततो यजमानो महारात्रे प्रातरग्निहोत्रं हुत्वा साद्यस्को म इति ऋ- त्विजो ब्रवीत । ततः प्राच्यां दिशि चतुर्दिगवस्थितानाहर्त्विज आनेतुम् । सोमप्रवाकाः सोमस्य प्रवक्तारः कथयितारो यजमानपुरुषा अश्वयुक्तेषु रथेषु सद्योदुग्धेन क्षीरेण पूर्णा दृतीरारोप्य चतसृषु दिक्षु यान्ति ।

तत्र होतुरानयनार्थं रथे चत्वारोऽश्वा योजनीयाः । उद्गातुस्त्रीन् , अ- ध्वर्योर्द्वौ, ब्रह्मण एकोऽश्व इति । सोमप्रवाकास्तु तत्र तत्र गत्वा महर्त्वि- जो होत्रादीन् प्रत्येकं सोमं प्रब्रूयुः। असौ सद्यःक्रिया यजते तदहं ब्रवी- मीन्द्राय विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोम्येभ्यः सोमपेभ्य इति । एवं तान्प्रत्युक्त्वा तत्रस्थान् होत्रादीन् रथे आरोप्य रथं देवयजनं प्रति धावयन्ति ।

एवं रथप्रधावनेन गच्छतामागच्छतां च दृतिषु चर्ममयीषु भस्त्रासु निक्षिप्ताद् दुग्धात् यन्नवनीतं फेनो वा जायते तत्साद्यःक्रेषु आज्यं भवति । अन्यस्मिन्नाज्ये तन्मिश्रयेदिति छन्दोगसूत्रे—

सक्षीरदृतयो रथा भवन्ति । ततो यन्नवनीतमुदियात फेनो वा जा- येत तदाज्येऽपिसृजेयुरिति । तदन्यस्मिन् घृते मिश्रयेयुरित्यर्थः । ते चर्त्विजो देवयजनमागत्योदिते सूर्ये देवयजनजोषणादि आदीप्य प्र-

समुद्गात्रे ददाति ॥१३॥ प्राकृतस्याग्निष्टुद्विरुद्गातृयोगा·

---

वेशनान्तं सद्य एकस्मिन्नहनि प्रागस्तमयात्सर्वे कुर्वन्ति । पूर्वाह्ण एव दीक्षणीयेष्टिर्भवति । "पूर्वाह्णे दीक्षणीयाभ्यङ्गकर्माणि वर्त्तन्त"इति शाङ्खायनः ।

दृतिषु दधि वनीवाह्यते । ततो यत्सर्पिरुदेति तेन प्रचरन्तीति च । उद्गावनप्रैषानन्तरं यजमानस्याङ्गुष्ठतत्सहितयोरुत्सर्गकाले यताया वाचो विसर्गः । न व्रतकरणम् , नच तदर्थं प्रैषः । वाग्यन्त्रवाग्विसर्गप्रैषयोरभावः कालाभावात् । छेदनाभावाद्यूपाहुतेरभावः । सोमक्रयण्याः स्थाने त्रिवत्सः साण्डः सोमक्रयण ऋषभो भवति । त्रिवत्सस्त्रिवर्षः । अथवा तिसृणां गवां वत्सस्त्रिवत्सः । साण्ड आण्डयुग्मसहितः ।

अत्र छन्दोगसूत्रम् । "त्रिवत्सः साण्ड" इति । बहुत्रिवर्षस्य जानपदी· त्रिवत्स" इति ब्राह्मणम् । ईषदसमाप्तत्रिवर्षो बहुत्रिवर्षः। तस्य बहुत्रिवर्षस्य जानपदी जनपदे भवो जानपदी स त्रिवत्स इति । यो वा तिस्रो धयेत् । अथवा यो वत्सस्तिस्रो गा धयेत् पिबेत् स त्रिवत्सः । तिसृणां वत्सस्त्रिवत्स इति । त्रिवर्षो वा एव स्यात् । सम्पूर्णत्रिवर्ष एव वा त्रिवत्स इति ।

तत्राभिमन्त्रणमन्त्रे ऊहः । चिदसि मनोऽसि धीरसि दक्षिणोऽसि क्षत्रियोऽसि यज्ञियोऽस्यदितिरस्युभयतः शीर्षा । स नः सुप्राङ् सुप्रत्यङ् एधीति स देव देवमच्छेहीति । "चतस्रः पराचीरुपसद" इति शाङ्खायनसूत्रे कठसूत्रे च । पराचीरनावृता इति तद्भाष्ये ।

"उपसत्सु रात्रिस्थाने संमील्य प्रचरन्ती"ति माधवे । "अर्थलुप्तः प्रवर्ग्य" इति शाङ्खायनः । "असम्भाव्यमानत्वात् प्रवर्ग्यस्याभाव"इति तद्भाष्ये । सम्प्रदायकारमते षडुपसदः षट् प्रवर्ग्याश्च भवन्ति । एकस्मिन्नुपसत्प्रयोगे कृते यजमानाय तानूनप्त्रं देयम् । त्रिषूपसत्प्रयोगेषु गतेषु वेदिमानं कुर्यात् । प्रवर्ग्योत्सादनशेषं तूत्सादनानन्तरमेव यजमानेन भक्षणीयम् । तत्र प्रवर्ग्यो न भवत्येवेति युक्तम् । सूत्रान्तरेषु तथैव दर्शनात् ।

तिस्रः पराचीरेवोपसदः । उपसदन्तरालेषु सम्मीलनम् । प्रथमायां संस्थितायां तानूनप्त्रप्रदानम् । मध्यमायां समाप्तायां वेदिमानम् । तृतीयां समाप्याग्निप्रणयनम् । अग्निप्रणयनादि । अत्र वेदिरुर्वरा भवति । उर्वरेति पक्वधान्यक्षेत्रस्य संज्ञा । सा व्रीह्युर्वरा यवोर्वरा वा भवति ।

त् ॥१४॥ निवृत्तिः क्रतुयोगात् ॥१५॥ वचनादेकस्य ॥१६॥

अत एवोक्तं सूत्रकृता "व्रीहीन्यवान्वा पक्वानध्यवस्यति"। एत योः पक्वयोरन्यतरस्य क्षेत्रे वेदिं करोतीत्यर्थः। खल उत्तरवेदिर्भवति। खलो धान्यराशिः। ये वेदिमभितो व्रीहयो यवा वा सन्निकृष्टा भवन्ति तानुत्तरवेदिर्न्न धान्यखलः। लाङ्गलस्य हलस्येषा खलेवाली मेढिरिति या प्रसिद्धा सा।

तत्र पूर्वनिखातैव यूपस्य कार्यं भवति। तस्याः पूर्वनिखाताया अनुरोधेन वेद्यादिकं साधनीयम्। तां यूपस्थाने निखातां विचिन्त्य। तथा कलापी सफलयवतृणपूलको व्रीहितृणपूलको वा चषालार्थे भवति। यवकलापी चषाल इति शाङ्खायनः। धिष्ण्यानुदेशान्ते वेदिखननमुत्तरपरिग्रहोऽनुमार्जनम्।

ततः प्रोक्षणीरासादय बर्हिरुपसादयेति प्रैषः। वेदिबर्हिषोः प्रोक्षणम्। स्तरणम्। ततः शाखाच्छेदनाद्युपगूहनान्तम्। ततः प्रणयनीयाधानाद्यङ्गुलिविसर्गान्तम्। अग्नीषोमीयः पुरोडाशश्चेदस्मिन्नवसरे ब्रह्मोपवेशनप्रणीताप्रणयनपरिस्तरणपात्रासादनग्रहणप्रोक्षणपात्रप्रोक्षणकण्डनकुक्कुटाहननफलीकरणकपालोपधानपेषणाज्यनिर्वपण वेदबन्धसंयवनपुरोडाशाज्याधिश्रयणपर्यग्निकरणश्रपणालम्भाभिवासनान्त्यान्ते इध्मं बर्हिरित्यादिप्रैषपूर्वं स्रुक्संमार्गादि ध्रुवासादनान्तं प्रकृतिवत् कृत्वा पुरोडाशविभस्मीकरणाद्यात्मालम्भान्तं कृत्वा होतारमामन्त्र्य सामिधेनीप्रैषादि पूर्वाघारोत्तराघारहोतृवरणपञ्चप्रयाजाज्यभागानन्तरं प्रधानस्विष्टकृद्याणप्राशित्रेडामार्जनपवित्रप्रतिपत्तिभागपरिहारोत्स्रुकसमाससंमार्गानुयाजपत्नीसंयाजदक्षिणाग्निहोमान्तं कृत्वा प्रतिपत्तिसमापनं भागप्राशनान्तं कुर्यात्।

ततो वसतीवरीर्गृह्णाति। निधानान्ते सुब्रह्मण्याह्वानाभावः। यजमानगृहादेव वसतीवरिग्रहणम्। "ईजानकुलाद्वसतीवर्य" इति शाङ्खायनः। ईजानस्य तस्यैव यजमानस्येति तद्भाष्ये। ततो व्युष्टामतेत्यादि वसतीवरिपरिहरणमाग्नीध्रे सोमनिधानान्तं कृत्वा यथोपाकृतं दोहान्कुर्यात्। ततो बहुलेन दध्ना। अस्यम्लेन तानातच्य पयस्यार्थं वत्सानपाकुर्यात्।

ततः सुत्या। उदकोपस्पर्शनादिसौत्यं कर्म प्रारभन्ते। पात्रासादने अनूबन्ध्याया जातिभेदाद्वपाश्रपणीशूलोखानां द्विगुणत्वम्। अन्यदर्थवदासाद्यते। ध्रुवगोपं कृत्वा निखाताया एव खलेवाल्याः यथोऽसीत्यग्नु यवानोप्याग्रमध्यमूलेषु प्रकृतिवत्प्रोक्षणम्। शेषावनयनाभावः। ततः

दीर्घव्याधिप्रतिष्ठाकामान्नाद्यकामानां द्वितीयः ॥१७॥ अश्वैकविंशा दक्षिणाऽश्वो वा ॥१८॥ हीनस्यानुक्तौ ॥१९॥

---

प्रकृतिवदेवाञ्जनम् । चषालस्थाने धान्यतृणमुष्टिः । पर्यूषणं भवत्येव दार्ढ्यर्थत्वात् । उच्छ्रयणाभावः ।

एकवारं परिवीय तदैव सम्प्रैषं द्वितो परिव्ययणं खलेवालीसजातीयस्य शकलस्य स्वरुं कृत्वाऽवगूहनं तस्य कर्तव्यम् । सवनीयमाग्नेयं नियुज्य ततोऽग्नीषोमीयं नियुञ्ज्यात् । ततोऽनूबन्ध्याम् । अत्र गणधर्मा एकादशिनीवत्। शाङ्खायनः-"सवनीयकाले समानतन्त्राः पशव" इति । सवनीय एव प्रस्थितशब्दो नेतरयोः । श्वेतोऽश्वो रुक्मललाटो दक्षिणा । अश्वाभावे श्वेतो रुक्मललाटो गौर्दक्षिणा । अश्वपक्षे अर्थं न इत्याहुतिर्भवति न गोपक्षे । अत्र दक्षिणाभिमन्त्रणमन्त्रे ऊहः । रूपेण ते रूपमभ्यागां रूप्यस्ते विश्ववेदा वि भजतु । ऋतस्य पथा प्रेहि चन्द्रदक्षिणेति ।

अनूबन्ध्यायाः शूलेन शूलावभृथो नेतरयोः । अनस्तमितेऽवभृथः । तथाच कठसूत्रे—"अनूबन्ध्यायाः शूलकर्मानस्तमितेऽवभृथं यन्तीति । शाङ्खायने—"आश्विनीवशानूबन्ध्यायाः स्थाने मैत्रावरुण्या वा पयस्यया यजेते"ति । अत्र मानवसूत्रे—"महारात्रे क्षीरदृतीनश्वरथे बद्ध्वा रथेष्वाधाय ऋत्विजः समानयन्ति पुरस्ताच्चतुःक्रोशा चतुर्युजा होतारमुत्तरतस्त्रिक्रोशा त्रियुजोद्गातारं पश्चाद् द्विक्रोशा द्वियुजा होतारं दक्षिणतः क्रोशा स्थूरिणा ब्रह्माणं दृतिनवनीतमाज्यमुर्वरा वेदिरुदिते दीक्षयन्ति सद्यः सर्वं कुर्वन्ति साण्डस्त्रिवत्सः सोमक्रयण उपसत्सु रात्रिस्थाने संमील्य प्रचरन्ति चात्वालदेशे लाङ्गलीं खलेवालीं निहत्य यवाः क्लिश्नन्ति तेषामुत्तरवेदिं धिष्ण्यांश्च निवपन्ति विवृह्य खलेवालीं प्रोक्षणप्रभृति यूपं कुर्वन्ति यवकलापिनं चषालमग्नीषोमीयकालेऽग्नीषोमीयेण पुरोडाशेन प्रचर्य वसतीवरीर्गृह्णाति सवनीयकाले यूपसंमित्या पशूनुपाकरोत्यग्नीषोमीयं सवनीयमानूबन्ध्यं दक्षिणाकालेऽश्वं श्वेतं रुक्मप्रतिममङ्गिरसायोद्गात्रे दद्यादनूबन्ध्याकाले मैत्रावरुण एककपालः पयस्या वा संवत्सरं नाश्नीत नाभ्यञ्जीत नोपरिशयीत पादौ प्रधावयन्तीति" ।

अत्र स्थूरिणेत्येकाश्वयुक्तेन रथेनेत्यर्थः । अन्यत्सुगमम् । छन्दोगसूत्रे विशेषः "उर्वरा वेदिरिति प्रथमे यवोर्वरा वा पक्का स्याद् व्रीह्युर्वरा वा तत एव समुत्कर्त्तं खल उत्तरवेदिं कुर्युः । तस्यामुर्वरायां पक्वा व्रीहियवा यस्मिन्स्थाने स्तम्बेभ्यो विविच्यन्ते स खल उत्तरवेदिः। तथा

साश्वं शतं दक्षिणाऽश्वो वा ॥२०॥ विश्वजिच्छिल्पः ॥२१॥ यथाद्रव्ये जनपदे यजेत तेषां यथोत्साहं दद्यात्

खलेवाली यूपो भवतीति। लाङ्गलेषा यूपः स्यात् । कलापी चषालभागो यावन्तं यूपस्य देशं चषालो भजते तावन्तं कलापो भजत इति चषाल भागेत्यस्यार्थः । तथा अतीतायां चैत्रवेलायां व्रीहिवेलायां वा यजेत धान्यपात्राणुप्त्वाऽभिकृष्येयुः । धान्यपात्रा उत्तरवेदिर्मूतश्चषालभागेति ।

यदि यवेषु व्रीहिषु च लूनेषु यजेत तदा धान्यपात्राणुप्त्वाऽभिकृषेयुः सा वेदिः स्यात् । धान्यपात्राणि विन्यस्योत्तरवेदिः कार्या मृतश्चषाल-प्रतिनिधिरिति । कठसूत्रे "आदित्यानां सद्यःक्रीस्तेन यजेत ब्रह्मवर्चस-कामः प्रजाकामः पशुकामः पुरोधाकामो वा पूर्वेद्युरादित्येभ्यो घृते चरुं निर्वपति पशुं वाऽऽलभेत । सद्यः समूढा ऋत्विजः कुर्वन्त्यनस्तमिते परिवाप्यौपवस्तं भुक्त्वा रुक्मबद्धोऽत्यहे वा संयच्छति पत्नी च महा-रात्रे वाग्यतस्याग्निहोत्रं हुत्वा योजनमात्रेभ्य ऋत्विजः समावहन्ति पुरस्तादध्वर्युं दक्षिणतो ब्रह्माणं पश्चाद्धोतारमुत्तरत उद्गातारमश्वरथैः सक्षीरदृतिभिस्ततो यन्नवनीतमुदियात्तदाज्ये कुर्याद्दृढेषूद्यन्तमादित्यमुप-तिष्ठत आदित्येभ्यः सद्यः सुत्यां प्रब्रवीमि मित्रावरुणाभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोम्येभ्यः सोमपे-भ्यो ब्राह्मणाय दीक्षयलमिति षट्स्थूणायां दीक्षितशालायामग्नीन्विहृत्य रुक्मं निधाय सप्तहोत्रा हुत्वा तुल्यमावाप उद्यमनात्तस्य प्रायणीयं चरुं निर्वपति तुल्यमोपसदस्तस्य हविष्कृता वाचं विसृजते धेन्वा राजानं क्रीणाति ।

अजां हिरण्यं चाधिकं ददाति त्रिहायनेन साण्डेनेत्येके तिस्रः परा-चीरुपसद उपयन्त्युपसदन्तरालेषु संमीलयन्ति । प्रथमायां संस्थितायां यूपकर्म मध्यमायां संस्थितायां तुल्येन सोत्तरवेदिकायां यवोर्वरायां वेदिं मिमाय मध्य उत्तरवेद्यां यूपं निहत्य तस्मिन् तन्त्रीं बध्वा तन्त्र्या-मनडुहो बद्ध्वा प्रदक्षिणं पर्याणयन्ति मृदितेषु प्रवृह्य यूपं यवैर्गर्त्तं सम्पूर्य कुलायान्तमुत्तरे वेद्यां कृत्वा खलेवाल्या कृतं कलापिचषालं यूपं कुर्वन्ति इत्येके । उत्तमायां संस्थितायामग्निप्रणयनादि तुल्यम् । स्वरूपगूहनम् । स्तरणकाले प्राचो यवान् प्रश्रयति यवा बर्हिर्भवति दर्भैःपृष्ठ्यां स्तृणाति स्वर्वन्तं कृत्वा कुम्भाद् वसतीवरीर्गृहीत्वा सादयि-त्वा श्यावास्याश्वस्यानुच्छ्रायं वसतीवरीः परिहरतीध्माबर्हिः सन्नह्य तुल्यमाश्विनस्य ग्रहणादाश्विनं गृहीत्वा सह पशूनुपाकरोत्यग्नीषोमीयं

॥२२॥ आजानेयानपरजने ॥२३॥ प्राच्येषु हस्तिनः ॥२४॥ अश्वतरीरथानुदीच्येषु ॥२५॥ सर्वस्वप्रतिनिधिर्वा ॥२६॥

सवनीयं मैत्रावरुणीव शामनूबन्ध्यामग्नीषोमीयस्य स्थाने अग्नीषोमीयं पुरोडाशं निर्वपेदनुबन्ध्यायाः स्थाने मैत्रावरुणामिक्षया यजेत दक्षिणावेलायामश्वं रुक्मबद्धं ब्रह्मणे दद्यात्याङ्गिरसो ब्रह्मा नीयमानमायाः सामभिरुपतिष्ठते द्वादशन्तु सर्वेभ्यस्तुल्यमनूबन्ध्यायाः शूलकर्मानस्तमितेऽवभृथं यन्ति"—इति । इति प्रथमः साद्यस्कः ।

अथ द्वितीयः साद्यस्कः दीर्घव्याधिप्रतिष्ठाकामान्नाद्यकामानां भवति । एकोऽश्वो विंशतिर्गावश्च दक्षिणाः । अन्यत् सर्वं प्रथमवत् । अथ तृतीयानुक्रीर्नाम साद्यस्क्रो हीनस्य भवति । यो यजमानो हीनो निकृष्ट इव स्यात् स एतेन यजेत उत्कृष्टत्वप्राप्त्यर्थम् । अत्र गवां शतमेकेनाश्वेन सहितं दक्षिणा केवल एकोऽश्वो वा । अन्यत्सर्वं प्रथमवत् ।

अत्र छन्दोगसूत्रे विशेषः । "एकरात्रीयो द्व्यहीनो ऽनुक्रीस्त्वाङ्गिरसादित्येभ्यः श्वः सुत्यामित्याह एकया रात्र्या निर्वर्त्यंत इत्येकरात्रीणः । द्वाभ्यामहोभ्यां निर्वर्त्यते द्व्यहीनोऽङ्गिरसादित्येभ्यः । श्वः सुत्यामिति ब्राह्मणमाह । यदि द्वितीयां रात्रिमापद्यते तदा कालातिक्रमः स्यादित्येवं ज्ञापनार्थमेकरात्रीण इति । "तस्य क्रयणप्रभृत्युत्तरमहः स्यादि"ति । गौतमः । "अपरे द्विक्रयणान्वानुक्रीरित्याख्या । "उपवसथान्तं पूर्वमिव स्यात्"इति धानञ्जय्यः । सुत्यामिति ह्याहेति श्वः क्रयं प्राप्नुवन्नित्यभविष्यत् । तं सद्यः परिक्रीयेति प्रथमस्य सद्यस्त्वं दर्शयति । द्व्यहीनत्वात्तु दिनान्तरेऽङ्गिरसोऽक्रीणंस्तस्मादनुक्रीरित्याख्यातिः । इत्यनुक्रीः ।

अथ चतुर्थो विश्वजिच्छिल्पः साद्यस्क्रः । तत्र यथाद्रव्ये जनपदे यजेत् तत्र तेषां यथोत्साहं दद्यात् । यस्मिन्देशे यानि यान्युत्कृष्टानि द्रव्याणि तस्मिन् देशे यागे क्रियमाणे तेषां तेषां द्रव्याणां यथोत्साहं यावानस्य यजमानस्योत्साहो यथोत्साहं दानं कर्त्तव्यम् । अपरजने प्रत्यग्देशे विश्वच्छिल्पे यागे क्रियमाणे आजानेयान् कुलीनाश्वान् दक्षिणां दद्यात् । तत्र ह्युत्कृष्टाश्वा भवन्ति । "आजानेयाः कुलीनाश्वाः विनीताः साधुवाहिन" इत्यभिधानात् । प्राच्येषु देशेषु विश्वजिच्छिल्पे क्रियमाणे हस्तिनो दद्यात् । तत्र ह्युत्कृष्टा हस्तिनो भवन्ति ।

उत्तरदेशेषु विश्वजिच्छिल्पे क्रियमाणे यथोत्साहमश्वतरीरथान् वत्सरीयुक्तान रथान् दक्षिणां दद्यात् । अथवा सर्वदेशेषु विश्वजिच्छिल्पे सर्वस्वप्रतिनिधिर्वा दक्षिणा भवति । तमेवाह—धेन्वनडुत्सीरधान्यपल्य-

धेन्वनड्वुत्सीरधान्यपल्यदासमिथुनमहानसारोहणविमितशयनानि ॥२७॥ ॥२॥

श्येनोऽभिचरतः ॥१॥ यत्रौषधयो न जायेरंस्तद्देवयजनम् ॥२॥ विदाहि वा ॥३॥ वृक्षस्तम्बाच्छिन्नम् ॥४॥ वा निर्व्रस्कम् ॥५॥ दक्षिणाप्रवणम् ॥६॥ अचषालो यूपः स्फ्याग्रः ॥७॥ तैल्वको बाधको वा ॥८॥ इध्मो वैभीदकः ॥९॥ शरमयं बर्हिः ॥१०॥ अधिषवणे शवनभ्ये ॥११॥

---

दासमिथुनमहानसारोहणविमितशयनानि । धेनुर्नवप्रसुता गौः । अनड्वान्बलीवर्दः । सीरं हलम् । धान्यं व्रीहियवगोधूममुद्गादि । पल्यं पलादिमानार्थं पात्रम् ।

अथवा धान्यपल्यो धान्यपूर्णः कोष्ठः । दासमिथुनं दासीदासौ । महानसोपयोगि ताम्रचर्वादि सर्वं द्रव्यं महानसशब्देनोच्यते । आरोहणं यानं रथादिनिर्मितं गृहम् । शयनं खट्वापर्यङ्कादि । पल्यदासमिथुनमिति । पल्यः पलायनशालः । स चासौ दासश्चेति पल्यदासस्तयोर्मिथुनमिति वासुदेवः । काठके—"यथा सर्वपृष्ठो विश्वजित्तथाऽयमपीति । अन्यत्सर्वं प्रथमवत् । अत्र छन्दोगसूत्रे विशेषः । "एतेनानुक्रिया विश्वजिच्छिल्प उक्ता द्विरात्रीणस्त्र्यहीन" इति । शाण्डिल्यः । "रैवतं प्रथममहः क्रयप्रभृत्युपवसथान्तं द्वितीयं सौम्यमुत्तरमि"ति । इति चतुर्थो विश्वजिच्छिल्पः ।

इति द्वाविंशस्य द्वितीया कण्डिका ॥ २ ॥



अथ पञ्चमः श्येनसंज्ञकः साद्यस्कः । स चाभिचारं कुर्वतो यजमानस्य भवति । यत्रोषरादावोषधयो नोत्पद्यन्ते तत्र श्येनस्य देवयजनं भवात । अथवा प्रतिवर्षं यत्रावश्यं दावाग्निरोषधीर्दहति तत्र वा देवयजनं कर्तव्यम् । यत्र शरकाशकुशवीरिणादीनां स्तम्भवृत्ताश्च बहुला भवन्ति तत्र स्थित्वा तन्मूलाग्राण्यपि भूमिमस्पाश्निष्काश्य अनिष्काश्य वा तत्र देवयजनं कुर्यात् ।

छन्दोगसूत्रम् । "यत्र स्तम्भा वृत्ता वा बहुला जाताः स्युस्तांश्छित्वा देवयजनं कुर्युरिति । तथा दक्षिणाप्रवणं दक्षिणस्यां दिशि प्रवणं निम्नमुत्तरस्यामुच्चम् । एवंविधं देवयजनं कुर्यात् । तथा यूपश्चषालरहितः स्फ्याग्रः । वज्राग्रसदृशं यूपस्याग्रं कर्त्तव्यम् । तैल्वको बाधको वा यूपो

रथौ हविर्धाने ॥१२॥ लोहितः सवनीयोऽग्नये रुद्रवते ॥१३॥ लोहितवाससो लोहितोष्णीषाः प्रचरन्त्यृत्विजः ॥१४॥ निवीताः ॥१५॥ उज्ज्यधन्वानः ॥१६॥ कलापिनः ॥१७॥ काणखोरकूटषण्डाह्रुतमिश्रा नव-नव दक्षिणा ददाति लिङ्गानाम् ॥१८॥ पुरुषाणां वा दानाधिकारात् ॥१९॥ प्राकृतस्य वा नयनं भेदेन ॥२०॥ दक्षिणाकाले

---

भवति । तैल्वकस्तणिसः । वाधको गिरिमालकः । तयोरन्यतरवृक्षस्य यूपोऽत्र कार्यः । तथा इध्मो वैभीदकः । अत्र दीक्षणीयादिषु बहेडकस्येध्मो भवति । तथा शरमयं बर्हिर्भवति ।

अत्र प्रणीताप्रणयनं कांस्येन । कपालोपधानवज्राभिमर्शनपुरीषनिरसनस्फ्योदकप्रहारानुयाजानुमन्त्रणप्रोक्षणीशेषस्योत्तरवेद्यंसदेशे निनयनादिषु वैरिणो नामग्रहणम् । अन्येऽप्येवमादयोऽभिचरतो विशेषा उक्तास्ते सर्वे अत्र भवन्ति । शाङ्खायने "अनुस्तरण्या गोश्चर्माधिषवणम् । तथा श्मशाने य आपः अस्तुताः स्यन्दिन्यस्ताभिरद्भिर्वसतीवरीरामिश्रयन्ति ।

तथा—अधिषवणे शवनभ्ये भवतः शवं मृतशरीरं येनानसा शकटेनोढं दाहार्थं नातं भवति तच्चक्रस्य नाभिफलकनिर्मिते शवनभ्ये अधिषवणफलके अत्र कार्ये। रथौ हविर्द्धाने महान्तौ नानसी। रक्तवर्णश्छागोऽग्नये रुद्रवते । आग्नेयो वा भवति । ऋत्विजो रक्तवस्त्राणि उत्तरीयाण्यपि रक्तान्येव परिधाय रक्तान्येवोष्णीषाणि मस्तके बद्ध्वा देवयजनजोषणाद्युदवसानीयान्तं कर्म कुर्वन्ति । तथा निवीताः कण्ठावलम्बितयज्ञोपवीताः कण्ठावलम्बितोत्तरीया वा भवेयुः । उज्यधन्वानः । उज्यानि आरोपितज्यानि आरुढानि धनूंषि येषां ते उज्यधन्वानः । तथा कलापिनः धृतशरपूर्णभस्त्राः ।

आश्वलायनः "सन्नद्धलोहितोष्णीषास्त्रिशिनो याजयेयुः शरमयं बर्हिर्मौसलाः परिधयो वैभीदक इध्मो वा वाधको वाऽवगूर्याश्रावयेत् प्रत्याश्रावयेच्च भिन्दन्निव वषट्कुर्यात् । वर्षन्निव जुहुयादिति । अत्र षड्विंशे सादयन्त्युपांश्वन्तर्यामौ इति श्रूयते । अत्र प्रकृतितः प्राप्तानां शतसंख्यानां गवामेवंविधलिङ्गयुक्तानां नवभिर्नवभिर्नयनं कर्त्तव्यम् । नव काणा एकाक्षविहीनाः । नव खोराः पादेन खञ्जाः नव कूटा भग्नशृङ्गाः । नव षण्डाश्छिन्नपुच्छाः हुतमिश्राः । काणाद्या एव ज्वरिताभिरामिश्रिताः ।

कण्टकैरेना विरुजेयुः ॥२१॥ उपतप्तास्वनुपतप्तानामा-
ज्यम् ॥२२॥ साद्यस्क्रधर्मा हिरण्मस्रग्वत् ॥२३॥ एक-
त्रिके दक्षिणा षष्टिशतं षट् च ॥२४॥ साद्यस्क्रधर्माः
॥२५॥ दीक्षादिः सद्यः सर्वं क्रियते ॥२६॥ सह पशुना-
लभते ॥२७॥ पुरोडाशो वाऽग्नीषोमीयस्थाने ॥२८॥ वपा-
न्ते सुब्रह्मण्यानिवृत्तिः ॥२९॥ प्रतिदिशं वसन्त्यृत्विजः
॥३०॥ पुरस्ताद्योजने होता ॥३१॥ इतरे क्रोशप्रत्यवायेन
क्रोशप्रत्यवायेन ॥३२॥ उद्गातोत्तरतः ॥३३॥ अध्वर्युः

---

प्राकृतस्यैव गवां शतस्यैवंविधैर्नवभिर्नवभिर्भेदेन नयनं दानाय कर्तव्यम्। दक्षिणाकाले कण्टकैरेना गा विरुजेयुः। कण्टकैः शरीरे वितुद्य लोहितमुत्पादयेयुः । ज्वरादिरोगपीडिते यूथे या गावो ज्वरादिपीडा-रहिता भवन्ति तासां गवामाज्यं दृतिभ्य उत्पाद्य श्येने ग्राह्यमाज्यका-र्यार्थम् । एते पूर्वोक्ताः लोहितवाससो लोहितोष्णीषा इत्यादयः साद्यः-क्रधर्मा हिरण्यस्रग्वद्भवन्ति । यथा वाजपेययागे ऋत्विग्भिः कण्ठे प्रति-मुक्ता हिरण्यस्रज उदवसानीयान्ते यथोपयुक्तमृत्विग्भ्यो दीयन्ते एवम् अपि लोहितवस्त्रादीनि यानि येन येन धृतानि तानि तानि यथास्वमुद-वसानीयान्ते तस्मै तस्मै देयानीत्यर्थः । अन्यत्सर्वं प्रथमसाद्यस्क्रवत् ।

मानवे "विश्वेषां देवानां विश्वजिच्छिल्पः सर्वपृष्ठः सर्वकामो यजेत यथा विश्वजिदिति प्रकृत्य मन्थ्यग्रा ग्रहा विदद्यदीत्याग्रयणस्य पुरोरुक् खड्गपाण्य ऋत्विज इत्यादि गोरनुस्तरण्याश्चर्माधिषवणमिति च ।

काठके । श्येनं प्रकृत्य "एतेन वाऽभिचरन् प्रत्यग्दक्षिणा ग्रामात् प्रत्य-ग्दक्षिणाप्रवणं देवयजनं स्वकृतमीरिणमध्यवसाय यजेत नवभिरिध्म उदकमिश्रमाज्यमग्नये रुद्रवते रोहितः सवनीयः शरमयं बर्हिर्वैभीतक इध्मः कृष्णा व्रीहयः पुरोडाश्या अभिषूयमाणं संस्कन्नमुपरिप्लुता भङ्गेन फडसौ हत इति प्रत्याहरेत्सादयित्वोपांश्वन्तर्यामौ जुहोति मन्थ्यग्रा ग्रहा रोहितोष्णीषा रोहितवसना उपवीतकपाला ऋत्विग्यजमाना निवीता ऋत्विजः प्रचरन्ति प्रारुषन्त इव जुह्वति निघ्नन्त इव वषट् कुर्व-न्त्यसौ हतोऽसौ हत इति ध्याायन्तो हीनाङ्गा गा नव नव संपदो ददाति वैष्णवारुण्यनूबन्ध्येन्द्रस्य विश्वजिच्छिल्पेन स्वर्गकामो यजेत सर्वपृष्ठो यथा विश्वजिदिति ।

शाङ्खायने "शिखरैः सदश्छन्नं भवति कार्मुकाण्युपशेरते वाणवद्भि-

पश्चाद् ब्रह्मा दक्षिणतः ॥३४॥ चतुर्भिरश्वरथैः सक्षीरदृतिभिरावहन्त्येनान् ॥३५॥ यथाक्रोशमश्वाः ॥३६॥ ततो नवनीतमाज्यम् ॥३७॥ सोमक्रयणास्त्रिवत्सः साण्डः ॥३८॥ वेदिरुर्वरा ॥३९॥ व्रीहीन्यवान्वा पक्वानध्यवस्यति ॥४०॥ खल उत्तरवेदिः ॥४१॥ धान्यखलः प्रत्ययात् ॥४२॥ ये वेदिमभितस्तानुत्तरवेदिदेशो मृध्नन्ति ॥४३॥ पांसुखलो वा प्रत्ययाविशेषात् प्रकृत्यनुग्रहाच्च ॥४४॥ खलेवाली यूपो लाङ्गलेषा ॥४५॥ कलापी चषालार्थे ॥४६॥ निर्वृत्तग्रहणात प्राकृतनिवृत्तिः ॥४७॥ आवेशादनिवृत्तिः ॥४८॥ उर्वरादि वा द्वितीयस्य संनिधेः ॥४९॥ ॥३॥

व्रात्यस्तोमाश्चत्वारः ॥१॥ द्वितीय उक्थ्यः ॥३॥

---

राग्नीध्रं धान्वनान्युपशेरते शरमयं बर्हिर्वाधक इध्मः परिधयश्च वैभीतको यूप उपताविनीनां गवामाज्यमनुस्तरण्या गोश्चर्माधिषवणं शवनध्येऽधिषवणफलके शवचर्म्यामापः संस्तुतास्ताभिर्यसतीवरीः सिञ्चन्त्युपेतपरुषा अधिज्यधन्वानो लोहितोष्णीषा असिवद्ध्वा प्रचेरर्युन हैतं कश्चनेशते यत्स द्वादशाहं जीवेन्न ह वैतं कश्चन स्तृणुते एतैः प्रत्यभिचरति स पाप्मानं द्विषतश्चापि जिघांसमान” इति । इति पञ्चमः साद्यस्कः श्येनसंज्ञः ॥

अथ षष्ठ एकत्रिकः साद्यस्कः । तत्र गवां षट्पञ्चाशदधिकं शतं दक्षिणात्वेन देयम् । अत्र छन्दोगसूत्रे—“अत्रैकत्रिके सद्यः सर्वं कुर्युरेकदीक्षस्त्र्युपसत्क इति गौतमः । काठके “एकत्रिकेन प्रजाकामोऽमावस्यायामावास्येनेष्ट्वा दीक्षेत एका दीक्षा तिस्र उपसदोऽप्रवर्ग्यो बार्हस्पत्य उपालभ्यो बार्हस्पत्यानूबन्ध्येति । इत्येकत्रिकः षष्ठः साद्यस्कः । उक्ताः षडपि साद्यस्काः ॥

इति द्वाविंशस्य तृतीया कण्डिका ॥ ३ ॥



अथ चत्वारो व्रात्यस्तोमा गणयज्ञा उच्यन्ते । तेषां चतुर्णां मध्ये द्वितीय उक्थ्यसंस्थोऽन्ये अग्निष्टोमसंस्थाः । ते च लौकिकेऽग्नौ भवन्ति इति कर्कसंप्रदायकारौ । अत्र छन्दोगसूत्रे विशेषः । “व्रात्यस्तोमैर्यक्ष्यमाणाः पृथगग्नीनाधाय यज्ञोपकरणानि चेष्ट्वाय एतेषामध्ययनेनाभिक्रान्ततमः स्याद्-

**व्रात्यगणस्य ये सम्पादयेयुस्ते प्रथमेन यजेरन् ॥३॥ द्वितीयेन निन्दिता नृशंसाः ॥४॥ तृतीयेन कनिष्ठाः ॥५॥ ज्येष्ठाश्चतुर्थेन ॥६॥ अपेतप्रजनना स्थविरास्तदाख्याः॥७॥ तेषां यो नृशंसत्तमः स्याद् द्रव्यवत्तमो वाऽनूचानतमो**

---

भिजनेन वा तदभावेऽपि भोगकालेन तस्य गार्हपत्ये दीक्षेत भक्तांश्चानुभक्तयेयुरिति ।

मानवेऽपि । "अग्नीनाधाय गृहपतेरग्निषु संस्तुप्य यजेरन्निति । कठसूत्रे "व्रात्यं चरित्वा चरिष्यन्तो व्रात्यस्तोमैरग्नीन् समोप्य शुद्ध्यर्थाः सह यजेरन्निति । अतो व्रात्यस्तोमार्थमेवाधानेनोत्पादितानां गार्हपत्याहवनीयदक्षिणाग्नीनां तादृशेष्वेव गृहपतेरग्निषु प्रक्षेपं कृत्वा तेषु साधारणीकृतेषु अग्निषु व्रात्यस्तोमा अनुष्ठेयाः ।

वचनादनधीतवेदानामभार्याणां च व्रात्यस्तोमेषु तदर्थाधाने चाधिकारः । तथा चाह गृह्यकारिकाकारः "अभार्यस्यानधीतस्य स्यादाधानं तदर्थत" इति । षोडशवर्षा अप्यनुपनीतास्त्रयः पुरुषा येषां ते सावित्रीपतिता व्रात्याः । अन्येऽपि ये द्विजातिकर्म परित्यज्य हीनकर्माचरणशीलास्ते तथाविधा व्रात्या एव कथ्यन्ते । ते च चतुर्विधाः निन्दिताः कनिष्ठा ज्येष्ठाः एतत्रितयव्यतिरिक्ता हीनाचाराश्चेति ।

तत्र निन्दितादीनां त्रयाणां क्रमेण द्वितीयतृतीयचतुर्था व्रात्यस्तोमा भवन्ति । एतत्त्रितयव्यतिरिक्तानामयं प्रथमो व्रात्यस्तोमो भवति ये व्रात्या नृत्यगीतवाद्यशस्त्रधारणादौ प्रवीणाः सन्तः स्वां विद्यां व्रात्यगणस्य सम्पादयन्ति शिक्षयन्ति ते प्रथमेन व्रात्यस्तोमेन यजेरन् ।

अत्र श्रूयते "हीना वा एते हीयन्ते ये व्रात्यं प्रवसन्ति नहि ब्रह्मचर्यं चरन्ति न कृषिं न वणिज्यां षोडशो वा एष स्तोमः समाप्तुमर्हती"ति । अस्यार्थः । ये पुरुषाः व्रात्यां व्रात्यतां विहिताकरणप्रतिषिद्धनिषेवणरूपां प्राप्य वसन्ति एते हीना निकृष्टा एव सन्तो हीयन्ते निकृष्टतमा भवन्ति। तत्कस्य हेतोः न खल्वेते ब्रह्मचर्यं ब्राह्मणोचितं कर्म चरन्ति ततो हीनाः सम्पन्नाः यस्माच्च कृषिं वाणिज्यां वणिजः क्रियां क्रयविक्रयादिरूपां च न कुर्वन्ति ततो वैश्यजातेरपि हीनास्तस्मादेते निकृष्टतमा भवन्तीत्यर्थः । तथाविधानेनान्स एष षोडशस्तोमो यज्ञः समाप्तुमर्हति श्रेष्ठ्यं प्रापयितुं योग्यो भवति ।

काठके । "व्रात्यं चरित्वा चरिष्यन्तो व्रात्यस्तोमैरग्नीन्समारोप्य शुद्ध्यर्थाः सह यजेरन् देवपुत्राणां प्रथमेनानुशंस्यं कुलीनमावास्यया-

वा तस्य गार्हपते दीक्षेरन् ॥८॥ तस्य भक्षमनुभक्षयन्त आसीरन् ॥९॥ व्रात्यधनानि भवन्ति ॥१०॥ तिर्यङ्नद्धमुष्णीषम्प्रतोदः ॥११॥ ज्याह्रोडोऽयोग्यं धनुस्तदाख्यम् ॥१२॥ वासः कृष्णशं कद्रु ॥१३॥ अकृष्णं कृष्णदशं वा तदाख्यम् ॥१४॥ फलकास्तीर्णो विपथः ॥१५॥ अश्वाश्वतराभ्यां कम्प्राभ्यां युक्तः स्यादित्येके ॥१६॥ निष्को राजतः ॥१७॥ अजिने पार्श्वसहिते कृष्णवलक्षे आविके ॥१८॥ तद् गृहपतेः॥१९॥ एवमेवाजिनानीतरेषाम् ॥२०॥

---

मावास्येनेष्ट्वा स्थपतिप्रथमा दीक्षेरन्नप्रवर्ग्यश्चतुर्वैश्वदेव उपालभ्यो वैश्वदेव्यनूबन्ध्या प्रातःसवनीयाननु गायत्रीं निर्वपति"—इत्यादि । इति प्रथमः ।

द्वितीयो व्रात्यस्तोम उक्थ्यसंस्थः ॥ अनेन ये व्रात्या नृशंसा निन्दिता भवन्ति ते यजेरन् नृभिर्मनुष्यैरभिशंसनेन पापाध्यारोपेण ये गर्हिताः ज्ञातिभिर्बहिष्कृतास्तेषामेतत्पापनिवृत्त्यर्थमयं भवति । तृतीयेन व्रात्यस्तोमेन कनिष्ठा व्रात्या यजेरन्—अपेतप्रजनना वृद्धत्वात् अपगतप्रजननेन्द्रियसामर्थ्याः स्थविरा वृद्धा ज्येष्ठा इत्युच्यन्ते ।

काठके "मरुतां गृहमेधिनां द्वितीयेन समानकुलीनास्तुल्यं पूर्वेण मरुतां क्रीडिनां तृतीयेन सजातकुलीनास्तुल्यं द्वितीयेन द्वादशं शतं दक्षिणा देवज्येष्ठानां चतुर्थेन श्रेष्ठाः कुलीनास्तुल्यं प्रथमेनैकादशिनी पूर्वसु तिस्रोऽनूबन्ध्या इति। एवं चतुर्षु व्रात्यस्तोमेषु क्रमेण चतुर्विधाः पृथक् पृथक् अधिकारिण उक्ताः ।

तानन्ये ब्राह्मणा ऋत्विजो याजयेयुः । तेषां चतुर्विधानां व्रात्यानां मध्ये यो नृशंसतमः स्यात् अत्यन्तं क्रूरकर्मा स्यात् द्रव्यवत्तमो वा अतिशयेन धनवान्वा अनूचानतमो वा विद्वान्वा स गृहपतिर्भवति ।

भागचमसादि पूर्वं गृहपतिर्भक्षयति । तमन्वितरे व्रात्या भक्षयन्ति। अत्र सर्वमनेकयजमानकाहीनद्वादशाहवद् बहुवचनान्ताः सर्वे ग्रहाः। चतुर्द्धाकरणं च ।

अथ गृहपतिना दक्षिणार्थं सम्पाद्यानि व्रात्यधनान्युच्यन्ते । तिर्यङ्नद्धमुष्णीषम्। तस्योष्णीषस्य दशाप्रदेशौ न सङ्कोचनीयौ। किन्तु कुटीकृत्य तिर्यग् बन्धनीयौ, एवंविधमुष्णीषम् शिरोवेष्टनवस्त्रं, प्रतोदः तोदनाग्रः शलाकयग्रो वंशादिदण्डः, प्रतोदः प्राजनः । ज्याह्रोडो ह्रोड-

दामतूषाणि वल्कान्तानि द्विचूडान्याविकानि वासांᳪसि लोहितान्तानि कृष्णान्तानि वा तदाख्यानि ॥२१॥ दामनी द्वे द्वे ॥२२॥ उपानहौ च कर्णिन्यौ कृष्णे स्याता-

---

तिर्गत्यर्थः ज्या प्रत्यञ्चा ह्रोडा गता यस्यासौ ज्याह्रोडः । इषुर्ज्या रहितः केवलो धनुर्दण्डः अयोग्यं स्वकार्यस्य साधनायोग्यं धनुस्तदाख्यं ज्याह्रोडसंज्ञम् ।

तथा कृष्णं वासः कद्रुसंज्ञम् । एवमकृष्णं कृष्णदशं च तदाख्यं कृष्णशसंज्ञं कृष्णं कपिशमिश्रमिति शाण्डिल्यः । शुक्लं कृष्णदशमिति गौतमः । कृष्णमित्येव धानंजय्य इति ।

छन्दोगसूत्रे---तथा फलकास्तीर्णो विपथः । फलकैरास्तीर्णो विस्तारितो रथः स च विपथः विविधं कुटिलं पथो गच्छतीति विपथः । यो मार्गेण न चलतीति । अथवा अश्वाश्वतराभ्यां कम्प्राभ्यां कम्पनशीलाभ्यां यो रथो युक्तः स विपथ इत्युच्यते । कंप्रमिश्राभ्यामश्वाश्वतराभ्यां युक्तः स्यादिति शाण्डिल्य इति सूत्र पाठः । अश्वाश्वतरयोर्मध्ये एकः कंपनशीलो भवति । एकश्च न भवति ।

एवंविधाभ्यां युक्ताभ्यामवश्यमेव रथ उत्पथः क्रियते गतिवैषम्यात् पथं समो विषमो भवति याभ्यां काभ्यां वाऽश्वाभ्यामश्वतराभ्यां वेति धानंजय्यः । स्वभावादेव ताभ्यामुत्पथः क्रियत एव । तथा राजतो निष्कः । रजतनिर्मितं कण्ठाभरणम् । तथा अजिने पार्श्वसहिते कृष्णवलक्षे आविके अजिने मेषयोश्चर्मणी पार्श्वसहिते पार्श्वतस्तन्तुभिः स्यूते कृष्णवलक्षे कृष्णशुक्लवर्णे भवतः ।

वलक्षशब्देन श्वेतो वर्ण उच्यते । द्वाभ्यामविभ्यां य एकैको विक्रीतो भवति । एवंविधयोर्मेषयोरजिने भवतः ।

अत्र छन्दोगसूत्रे । "यौ चाविकौ द्वाभ्यामविभ्यामेकैकतः स्यात्तयोः पार्श्वसंहिते कृष्णवलक्षे अजिने स्याताम्" । वलक्षमिति श्वेताख्येति । एत स्तिर्यङ्नद्धमुष्णीषमित्याद्यजिनान्तं सर्वं गृहपतेर्व्रात्यस्य धनं दक्षिणार्थम् ।

इतरेषामपि व्रात्यानामेवंविधान्येवाजिनानि सर्वेषां भवन्ति । तथा दामरूषाणि वलूकान्तानि द्विचूडान्याविकानि वासांᳪसि लोहितान्तानि कृष्णानि च तदाख्यानि । आविकानि वासांसि मेषरोमनिर्मितानि वस्त्राणि गृहपतितोऽन्येषां व्रात्यानां भवन्ति । कीदृशानि तानि वासांसि ।

दामरूषाणि रूषशब्देन वस्त्रदशोच्यते । दामाकारा रज्जुरूपा दशा-

**मित्येके ॥२३॥ मागधदेशीयाय ब्रह्मबन्धवे दक्षिणाकाले व्रात्यधनानि दद्युः ॥२४॥ अविरतेभ्यो वा व्रात्यचरणात् ॥२५॥ तेष्वेव मृजाना यन्तीति श्रुतेः ॥२६॥ त्रयस्त्रिꣳशतं त्रयस्त्रिꣳशतं दक्षिणा दद्युः ॥२७॥ द्विगुणा गृहपतिरित्येके ॥२८॥ व्रात्यस्तोमेनेष्ट्वा व्रात्यभावाद्विरमेयुः ॥२९॥ व्यवहार्या भवन्ति ॥३०॥ अग्निष्टुद् ब्रह्मवर्चसवीर्यान्नाद्यप्रतिष्ठाकामानां यश्चापूत इव मन्येत ॥३१॥ यज्ञाविभ्रष्टस्य च ॥३२॥ यस्माद्वा विभ्रꣳशेरन् ॥३३॥ ॥४॥**

---

येषां तानि दामरूषाणि । तथा वलूकान्तानि वलूकः कृष्णो लोहितो वा वर्णो येषां तानि वलूकान्तानीत्येवसंज्ञानि भवन्ति । तथा द्विचूडानि । द्वे चूडे द्वे दामनी एकैकस्य वाससो भवतः । उभयोरपि प्रान्तयोरेकैकदाम्नो गोर्वन्धनार्थानि दामानि तत्प्रकारेण दामनी स्याताम् । एकस्मिन् पार्श्वे ग्रन्थिः अपरस्मिन् पार्श्वे ग्रन्थिप्रवयणस्थानमिति । तथा एकैकस्य व्रात्यस्य द्वे द्वे उपानहौ कर्णिन्यौ । गोकर्णाकारश्चर्मावयवो ययोः ते कर्णिन्यौ । कृष्णो वर्ण इति केचित् । कृष्णाः कर्णिन्य इति शाण्डिल्यो याः काश्चनेति धानंजय्यः । इत्येतानीतरेषां व्रात्यानां धनानि । एते सर्वे व्रात्या दक्षिणाकाले सर्वाणि व्रात्य धनानि मागधदेशीयाय मगधदेशनिवासिने ब्रह्मबन्धवे जातिमात्रोपेतब्राह्मणाय दद्युः। अथवा व्रात्यचरणादविरतेभ्यो व्रात्यधनानि दद्युः। नन्वेवंविधेष्वयोग्येषु दानं कस्मात् । तेष्वेव मृजाना यन्तीति श्रुतेः । तेष्वेव पापिष्ठेष्वेव पापं मृजानाः शोधयन्तीति श्रवणात् । त्रयस्त्रिंशतं त्रयस्त्रिंशतं गाः सर्वे व्रात्याः पृथक् पृथगृत्विग्भ्यो दक्षिणात्वेन दद्युः । गृहपतिर्द्विगुणास्त्रयस्त्रिंशद्गाः षट्षष्टिसंख्या ऋत्विग्भ्यो ददातीत्येके । एवं व्रात्यस्तोमेनेष्ट्वा व्रात्यभावात्पापाचरणाद्विरमेयुर्निवर्त्तेयुः । व्रात्यस्तोमेनेष्ट्वा त्रैविद्यवृत्तिं समातिष्ठेयुरिति । छन्दोगसूत्रं "ततस्ते व्रात्या व्रात्यस्तोमानुष्ठानेन व्यवहार्याः" । शिष्टभोजनव्यवहारयोग्या भवन्ति । ततस्तैः सह व्यवहारसंसर्गितादोषो न भवति । इति व्रात्यस्तोमाः ।

इति द्वाविंशस्य चतुर्थी कण्डिका ॥ ४ ॥

छान्दोग्ये विशेषो यथाकामम् ॥१॥ सुब्रह्मण्याग्नेयी ॥२॥ एवं यथास्तुत् ॥३॥ सर्वमेके ॥४॥ यथोत्साहं दद्यात् ॥५॥ आग्नेयानामनडुद्धिरण्याश्वाजानाम् ॥६॥ त्रिवृतश्चत्वारः ॥७॥ अनिरुक्तप्रातःसवनः प्रथम ईप्सुयज्ञः॥८॥ ग्रामकामस्य वा ॥९॥ दक्षिणाश्वरथश्चतुर्युक् श्यावोऽन्यतमः ॥१०॥ तेजोब्रह्मवर्चसपुरोधाकामस्य बृहस्पतिसवः॥११॥

अथाग्निष्टुदुच्यते। ब्रह्मवर्चसवीर्यान्नाद्यप्रतिष्ठाकामानां यजमानानामग्निष्टुदग्निष्टोमसंस्थो भवति ! तथा यो ब्रह्महत्यादिपापेनात्मानमपूतमिव पापिष्ठमिव मन्यते तस्याप्यग्निष्टुद्भवति। अत्र प्रतिकामं भिन्न एवाग्निष्टुत्। तथा यज्ञविभ्रष्टस्याप्यग्निष्टुद्भवति। अग्निष्टोमादियज्ञं प्रारभ्य ततो यजमानस्य कुतश्चिन्निमित्तात्समाप्त्यभावेन यज्ञो विच्छिन्नः स्यात् तदा यजमानो यज्ञविभ्रष्टो भवेत्। तस्य प्रायश्चित्तत्वेन ज्योतिष्टोमोऽग्निष्टुद्भवति। अथवा यस्मात् क्रतोर्भ्रंशेरन् यजमाना विभ्रष्टा भवेयुः। तमेव क्रतुं कुर्वन्तीति कर्कः। अत्र पञ्चविंशब्राह्मणे श्रूयते—'ज्योतिष्टोमेनाग्निष्टुता यज्ञविभ्रष्टो यजेत' इति। यज्ञविभ्रष्टस्येति सूत्रस्यार्थः। प्रारभ्य समाप्यमाने च सोमयागेऽनुष्ठेयानां प्रधानयागानामैन्द्रवायवादीनां बहिष्पवमानादिस्तोत्राणाञ्च मध्ये यदि किञ्चित्प्रमादाद्विस्मृतं स्यात्तदाप्ययं प्रायश्चित्तत्वेनानुष्ठेय इत्याह।

यस्मिन् वा क्रतौ विभ्रंशेतेति। अथवा यस्मिन् यज्ञक्रतौ सोमयागे प्रधानैकदेशविस्मरणाद्विभ्रंशेत अनुष्ठेयाद्विभ्रष्टो भवेत् तत्राप्यनेन यजमानोऽग्निष्टुता यजेतेति माधवाचार्यः। एतेषु कामनाभेदाद्भिन्नेष्वग्निष्टुत्सु यथाकाममुद्गातृहोतॄणां विशेषोऽस्ति। सर्वेष्वग्निष्टुत्स्वाग्नेयी सुब्रह्मण्या। अनडुहामश्वानामजानामिति यथोत्साहं दद्यात्तथा हिरण्यस्येति। अनडुहामित्यादि बहुवचनं बहुत्वविशिष्टानां दानविधानार्थम्। इन्द्रस्तुदादिषु प्राकृती दक्षिणा॥

इत्यग्निष्टुदिन्द्रस्तुत्सूर्यस्तुद्विश्वदेवस्तुतः॥

अथ त्रिवृत्स्तोमकाश्चत्वार एकाहाः। तत्र प्रथम ईप्सुयज्ञः। कञ्चिदर्थमर्हन् यो न प्राप्नुयात्स त्रिवृता प्रथमेन यजेतेति छन्दोगसूत्रम्। कंचिदर्थमीप्सोः प्राप्तुमिच्छोर्यज्ञ ईप्सुयज्ञः। ग्रामकामस्य वा। अत्र चतुर्भिरश्वैर्युक्तोऽश्वरथो दक्षिणा। तेषां चतुर्णामश्वानामेकः श्यावः स्यात्। 'श्यावः स्यात्कपिश इत्यमरः। अस्य प्रातःसवनमनिरुक्तं भवति।

देवसूहवींᳪषि निर्वपति ॥१२॥ अतिग्राह्यवदु ग्रहं गृह्णाति बृहस्पते अति यदर्य इति ॥१३॥ उपालम्भ्यो बार्हस्पत्यः ॥१४॥ निहितेषु नाराशᳪसेषु प्रातःसवनेऽनपाकुर्वन्नेकादश दक्षिणा व्यादिशति ॥१५॥ अश्वद्वादशा माध्यन्दिने ॥१६॥ अपाकरोत्युभयीः ॥१७॥ एकादश तृतीयसवने ॥१८॥ अनूबन्ध्यवपाहोमान्तेऽपाकरणम् ॥१९॥ अतिक्रमणं च सर्वासाम् ॥२०॥ एकादशैकादश वा शतानि स्युः ॥२१॥ सहस्राणि वा ॥२२॥ अश्वस्त्वेव माध्यन्दिनेऽधिकः ॥२३॥ वाजपेयवदाज्येनाभिषिच्यते कृष्णाजिने ॥२४॥ शुक्रामन्थिसᳪस्रवेण वा ॥२५॥ अन्यतस्त्वभिवाद्यः ॥२६॥ अप्रत्यवरोही स्यात् ॥ २७ ॥ स्थपतिरित्येनं ब्रूयुः ॥२८॥ सराजानो ब्राह्मणा यं पुरस्कुर्वीरन्स एतेन यजेत ॥२९॥ इषुः श्येनवदसद्यः ॥३०॥ ॥५॥

---

बहिष्पवमानादिषु प्रातःसवनिकेषु पञ्चसु स्तोत्रेषु गायत्रं सामानिरुक्तं गेयमित्यर्थः। उद्गाता स्वरभक्तिमुपगीथमुपद्रवं च मनसा प्रयुञ्जानः स्वरं स्वभक्तिसदृशमोङ्कारं कृत्वा तं वाचा ब्रूयादित्यनिरुक्तस्य लक्षणम् । तथा च सूत्रकारेणोक्तम् । "मनसा तु स्वशक्तिमोङ्कारं तथा स्वरं च वाचेति । तथा इन्द्रशक्तेति ब्रूयात् । सोममिन्दुमिति चेति ॥

द्वितीयस्त्रिवृत्स्तोमको बृहस्पतिसवः । अयं च वाजपेयप्रकरणे विस्तारेणोक्त इतीह न लिख्यते । सराजानो राज्ञा सहिता ब्राह्मणा यं पुरस्कुर्वीरन् मुख्यत्वेनाङ्गीकुर्वीरन् स एतेन बृहस्पतिसवेन यजेतेति ॥

तृतीयस्त्रिवृत्स्तोम इषुर्नाम । स श्येनवद्भवति । श्येनोऽभिचरतो यत्रौषधयो न जायेरंस्तद्देवयजनमित्यादिवत् श्येने उक्तं तत्सर्वमत्र भवति । असद्यः । दीक्षादि आदीक्ष्य प्रवेशनान्तं सर्वं सद्यो भवति । अत्र तु न तथा । किन्तु एका दीक्षा, तिस्र उपसद एका सुत्येति । त्रयस्त्रिवृतः तेषां प्रथमेन यः कामयेत न यत् किञ्चन पूर्वᳪस्याम प्रवर्ग्य इत्यौदवाहिः प्रवर्ग्यवानिति लौगाक्षिर्बृहस्पतिसवो द्वितीयः स उक्तो जमदग्नेरिषूणामभिचरन्दुर्गं देवयजनमध्यवसाय समीकारयेत्तुल्यं श्येनेन पत्नीशालावर्जमिति ।

इति द्वाविंशस्य पञ्चमी कण्डिका ॥ ५ ॥

**मरणकामस्य सर्वस्वारः ॥१॥ कृतान्नदक्षिणः ॥२॥ दीक्षाद्यवजिघ्रत्येव भक्षान् ॥३॥ अप्स्ववहरणमसोमानाम् ॥४॥ आर्भवे स्तूयमाने दक्षिणेनौदुम्बरीं कृष्णाजिने संविशति दक्षिणाशिराः प्रावृतः ॥५॥ तदेव म्रियते ॥६॥ जीवेच्चेद्दैर्घश्रवसं स्वासु यज्ञायज्ञियस्थाने कुर्युः ॥७॥ मृते तदन्तमर्थाभावात् ॥८॥ यजमानपात्रजीवहवीं**-

---

मरणकामस्य चतुर्थस्त्रिवृत्स्तोमः सर्वस्वारसंज्ञकः । य इच्छेत्सद्यः प्रेत्य स्वर्गं लोकमियामिति स एतेन यजेतेति । मानवे-"यः कामयेतानामयः स्वर्गं लोकमियमिति स एतेन यजेतेति श्रुतिः । तत्र ऋत्विग्वरणादौ विशेषः । सर्वस्वारेणाहं यक्ष्य इति वरणे । सर्वेषां सोमभक्षाणामवघ्राणमात्रं, सोमव्यतिरिक्तानां पुरोडाशादिभक्षाणामप्सु प्रासनम् । दक्षिणाहोमेषु नाश्वाहुतिः । कृतान्नसोदनापूपादिकमत्र दक्षिणा । आर्भवे स्तूयमाने औदुम्बरीं दक्षिणेन कृष्णाजिने दक्षिणाशिरा यजमानः प्रावृते कृष्णाजिने संविशति शेते । ब्राह्मणाः समापयत मे यज्ञमिति ब्राह्मणान्प्रत्युक्त्वा तदेव म्रियते । एवं मरणार्थं कृष्णाजिने सुप्तोऽपि यदि जीवेत्तदा स्वासु ऋक्षु परीतो षिञ्चतेत्यासु दैर्घश्रवसं साम यज्ञायज्ञियस्थाने कुर्युः । मृते यजमाने समिष्टयजुरन्ते उद्गातृणां सन्त्वा हिन्वन्तीति दार्वाहरणम् । आसन्दीनिष्पादनार्थानां काष्ठानामाहरणम् ।

सं त्वा ततक्षुरिति साम्ना तेषां दारूणां तक्षणं स्थूलानां काष्ठानां तनूकरणम् । ईषोपलपादानां घटनेनासन्दीनिष्पादनं कर्तव्यम् । ततः सन्त्वा रिणन्तीत्यासन्द्याः प्रक्षालनम् । सन्त्वा शिशन्तीत्यासन्दीविधानं त्रिवृता मुञ्जरज्वा वयनं कर्तव्यम् । तत आसन्द्या एनं यजमानमवभृथार्थं हृत्वोदकेन यजमानमभ्युदय सोमोपनहनेन प्रच्छाद्य अपोऽवक्रमणादि सर्वमवभृथकर्म कुर्यात् । आनुबन्ध्यवपाहोमान्ते दक्षिणस्यां वेदिश्रोणौ यजमानस्य सर्वकेशश्मश्रुलोमवपनम् । उदवसानीयान्ते सन्दीपनवत्यधिश्रयणादि सर्वं मृताग्निवत्कर्म भवति ।

वेदिमध्ये आग्नीध्रस्य दक्षिणतः सन्तापजानग्नीन्स्थापयित्वा अन्तराग्नौ चितिं काष्ठैश्चिनुयात् । तत्र मृतं यजमानं दक्षिणाशिरसं चितायामुत्तानं स्थापयेत् । ततः सर्वेषां पात्राणां प्रतिपत्तिः । तत उद्गाता यामेन साम्ना त्रिः प्रगायेत् । नाके सुपर्णमुपयत्पतन्तं तमित्येतस्यामृचि । ततो धूमप्राप्तं यजमानं स्वेषस्ते धूमरिण्वतीति साम परिगायेत् । ततोऽ-

**ण्याहवनीये प्रास्य यथार्थं गच्छेयुः ॥९॥ समाप्तिर्वोभयचोदनात् ॥१०॥ समिष्टयजुरन्ते सं त्वा हिन्वन्तीति दार्वाहरणम् ॥११॥ सं त्वा ततक्षुरिति तक्षणम् ॥१२॥ सं त्वा रिणन्तीति प्रक्षालनम् ॥१३॥ सं त्वा शिशान्तीत्यासन्दीविधानम् ॥१४॥ आसन्द्यैनमवभृथं हृत्वाऽभ्युक्ष्य सोमोपनहनेन प्रच्छाद्यानुबन्ध्यवपाहोमान्ते द-**

ग्निप्राप्ते अग्निषु प्रज्वलितेषु अग्ने मृड महां असीत्येतयोरन्यतरेण साम्नोद्गाता परिगायेत । मृतश्चेदयं समिष्टयजुरन्ते दार्वाहरणादिविधिर्भवति । जीवेच्चेदेतनैव पुनः सर्वस्वारारम्भेण मुमूर्षेत् मर्तुमिच्छेत् जिजीविषेद्वा जीवितुमिच्छेद्वा ।

अत्र मानवसूत्रम्—“शुनः कर्णः स्तोमः सर्वस्वारो य इच्छेत्सद्यः प्रेत्य स्वर्गं लोकमियामिति स एतेन यजेताजः सवनीयः कृतान्नं दक्षिणा वामदेव्यं पृष्ठमार्भवे स्तूयमाने ब्राह्मणाः समापयत मे यज्ञमित्युक्त्वा दक्षिणत औदुम्बर्या दक्षिणशिराः प्रावृतो निषद्यते तत एव सम्पिछते तस्य भक्षान्मार्जालीये निनयन्त्यवभृथवेलायां तीर्थेन निर्हृत्यावभृथे प्रप्लाव्यान्येन वाससा प्रच्छाद्य यथाशय्यं संवेशयन्ति पर्यायणवेलायामाहवनीयाद्वहन्ति जीवन्नवभृथं गच्छेदिति’ ।

छन्दोगसूत्रे विशेषः—‘सर्वस्वारेण यक्ष्यमाणो दीक्षाप्रभृति प्रयतते यथा सौत्येऽहनि प्रेयामिति प्राणभक्षं सर्वभक्षान भक्षयेत् । सर्वग्रहणाद् व्रतस्यापि प्राणभक्षणमेव तानपाऽभ्यवहारयेद्व्रतं वाऽनुषेचयेत् । सोमभक्षैः संमृज्य मार्जालीयस्य देशे निनयेयुः । सोमं प्राणभक्षं भक्षितमद्भिः संमृज्य मार्जालीये उत्कृष्टदेशे निनयेयुः । आर्भवे स्तूयमाने औदुम्बर्यां दक्षिणाप्रावृतो निपद्येत कृष्णाजिनमुपस्तीर्य दक्षिणाशिरास्तदेव सङ्गच्छते तदेव म्रियत” इति । एवं मृतं यजमानं हविर्भिः सहजीवं यज्ञपात्रैश्चाहवनीये प्रव्रजेयुरिति शाण्डिल्यः । समापयेयुः शेषमिति धानञ्जय्यः । समापयेयुश्चेदिति शाण्डिलयायनो नेदिष्ठो तत्कृष्णाजिनं प्रतिमुच्य याजमानं कुर्याद्भक्षांश्च भक्षयेत् । ऋत्विजो याजमानं कुर्युः । सर्वहुतान् भक्षान् जुहुयुरिति धानञ्जय्यः ।

संस्थितेऽहनि सन्त्वा हिन्वन्तीत्यासन्द्यङ्गानि समाहरेयुः सन्त्वा रिणन्तीति प्रक्षालयेयुः । सन्त्वा ततक्षुरिति तक्ष्णुयुः । सन्त्वा शिषन्तीति चिवयेयुस्तयैनमवभृथं हृत्वा सोमोपहननेन प्रच्छाद्यानूबन्ध्यवपायां हुतायां

क्षिणस्यां वेदिश्रोणौ सर्वकेशश्मश्रुलोमवपनम् ॥१५॥ मृताहिताग्न्यावृच्च ॥१६॥ अनूबन्ध्यान्तेऽग्नीनाहृत्य वेदिमध्यमाग्नीध्राद्दक्षिणं दक्षिणाशिरसं चितावाहितमुद्गाता त्रियामेन परिगायन्नाके सुपर्णमित्येतस्याम् ॥१७॥ धूमप्रासं त्वेषस्ते धूम ऋण्वतीति ॥१८॥ अग्निप्रासमग्ने मृड महाँ२ असीत्यन्यतरेण ॥१९॥ उदवसानीयान्ते वा

---

दक्षिणे वेद्यन्ते श्मश्रूण्यस्य वापयेयुरनूबन्ध्यशेषं समाप्य मध्ये देवयजनस्य चितां चिनुयुः । पश्चाद्गार्हपत्यमुपदध्युः । पुरस्तादाहवनीयं पश्चिमेन गार्हपत्यं दक्षिणेनाग्नीध्रीयं हरेयुर्गार्हपत्यस्य पश्चिमेन प्रदेशेन परिहृत्य चितायाः दक्षिणे प्रदेशे आग्नीध्रीयमग्निं निदध्युस्तं दक्षिणशिरसं चितावाहितं यज्ञपात्रैः प्रकल्पयेत् । शिरसि कपालं नियुञ्ज्यात् ।

इडापात्रं ललाटे प्राशित्रहरणं नासिकयोः स्रुचौ आस्ये हिरण्यमवधायानुस्तरिण्या गोर्मुखं वपया प्रच्छाद्य तत्राग्निहोत्रहवणीं तिरश्चीं प्राग्ग्रां दक्षिणे पाणौ जुहूं सव्य उपभृतं तथा वृक्कावुरसि ध्रुवामुदरे पात्रीमुपस्थे कृष्णाजिनमन्तरेणाभ्रिं शम्यां दृषदुपले दक्षिणस्योलूखलस्य दक्षिण उलुखलं कटिसन्निकृष्टो जघनप्रदेश उखः । अनुसक्तं मुसलं पादयोः शूर्पं सर्वाण्युत्तानानि पृषदाज्यवन्ति कृत्वा सर्वेभ्योऽग्निभ्य उपलराजीः स्तृणुयुराहवनीयाच्चेत्प्रथममेयात् ब्रह्मलोकमेष्यतीति विद्याद्गार्हपत्याद्देवलोकं दक्षिणाग्नेः पितृलोकं क्लृप्तेषु यज्ञपात्रेषु त्रिश्छन्दोगः परिगायेन्नाके सुपर्णमिति धूम उदिते त्वेषस्ते धूम ऋण्वतीति प्रज्वलत्यग्ने मृडमहाँ असीत्येतयोरन्यतरेणैवावृत्सर्वाहिताग्नीनां जीवेच्चेद्यजेतोदवसानीयया मृते तूदवसानीयान्तमिति । मभाजनेन तत ऊर्ध्वं मुमूर्षेत । भुञ्जीत जिजीविषेदेवेति धानंजय्यः तस्य कृतान्नं दक्षिणेति ।

काठके—'शुनः कर्णस्तोमेन मरणकामो यः कामयेतापरिपन्थी स्वर्गं लोकमियामिति याम्यः शुक्रहरिरुपालम्भ्यः क्रतुशेषे च शिष्टं सर्वस्वं दक्षिणा यज्ञायज्ञिये पूर्वेण स्रुचां कृष्णाजिने पादतो दशेत्यहतेन वाससा प्रच्छाद्य दक्षिणशिराः संविशति संस्थिते हविःशेषानग्नौ प्रास्य सदो हविर्धानैर्दहेयुर्यदि न म्रियेत क्रतुशेषं संस्थाप्यानाशकमुपेयादिति ।

इति सर्वस्वारः ।

अथ ऋत्विगपोहनीयसंज्ञाख्य एकाहः ॥ तत्र प्रथमः सर्वस्तोमसंज्ञोऽग्निष्टोमसंस्थः प्रकृतिवत् । द्वितीयः छन्दोगानां मध्ये चतुश्चत्वारिंशस्तोम

सर्वस्य समाप्तेः ॥२०॥ जीवेच्चेदेतेनैवारम्भेण मुमूर्षेत ॥२१॥ जिजीविषेद्वा ॥२२॥ ऋत्विगपोहनीयास्त्रयः ॥२३॥ सर्वस्तोमः ॥२४॥ अहनी चोत्तमे छान्दोमिके पृथक् कृत्वा ॥२५॥ वाचस्तोमाश्चत्वारः ॥२६॥ छान्दोग्ये विशेषः ॥२७॥ पृष्ठ्यस्तोमास्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः ॥२८॥ ॥६॥

चातुर्मास्याः सोमास्त्रिषु पर्वस्थानेषु पार्ष्ठिकानि पृष्ठ्यानि विहृत इति श्रुतेः ॥१॥ वैश्वदेवस्थाने प्रथमम् ॥२॥ अयूपम् ॥३॥ परिधौ पशुनियोजनम् ॥४॥ द्वितीये द्वि-

---

उक्थ्यसंस्थः । तृतीयश्छन्दोगानामेव तृतीयोऽष्टाचत्वारिंशस्तोम उक्थ्यसंस्थः ॥ अनयोश्छन्दोगयोः पृथक् पृथक् द्वादश दीक्षोपसत्त्वं भवतीति संप्रदायः । एकाहवदेवेत्यपरे । इत्यृत्विगपोहनीयाः ।

अथ चत्वारो वाचस्तोमसंज्ञा एकाहाः । एषु बह्वृचानां छन्दोगानां च विशेषोऽस्ति नाध्वर्यूणाम् । अथ षट् पृष्ठ्याः स्तोमसंज्ञा एकाहाः । ऋत्विग्वरणाद्यादीक्ष्य प्रवेशनान्ताः । तत्र प्रथमस्त्रिवृत्स्तोमः । द्वितीयः पञ्चदशस्तोमः । तृतीयः सप्तदशस्तोमः । चतुर्थ एकविंशस्तोमः । पञ्चमस्त्रिणवस्तोमः । षष्ठस्त्रयस्त्रिंशस्तोम इति । इमानि विहृतानि पृष्ठ्याहान्येवेति शाङ्खायनः ।

इति द्वाविंशे षष्ठी कण्डिका ॥ ६ ॥

---

अथ सौमिकानि चातुर्मास्यान्युच्यन्ते । तत्र छन्दोगसूत्रम् । "फाल्गुन्यां पौर्णमास्यां चातुर्मास्यानन्वारभेत । उक्तं कालान्तरं ब्राह्मणेन । वरुणप्रघासादीनां कालं कालान्तरं ततश्चतुर्षु मासेष्वित्यादिना । यजनीयेऽहनि वैश्वदेवशुनासीर्यौ स्याताम् उत्तरं च वारुणप्रघासिकम् । पर्वण्युत्तमं साकमेधानां द्वादशशतं शुनासीयस्य दक्षिणा पञ्चाशदितरेषामैन्द्राग्नेकैकस्येति ।

मानवसूत्रे । "पशुमद्भिश्चातुर्मास्यैर्यजते तेषां व्रतं कालदक्षिणं यथाहविर्यज्ञियानामिध्माबर्हिः पूर्णमासीनिवर्तनं च तस्य तस्य पर्वणः पुरस्तात्पाशुकयारम्भणीया वैश्वदेवेन पशुना यजेत चात्वालप्रभृति व्याघारणान्तं लुप्यते श्वोभूते वैश्वदेवः पशुः सिद्धमानियोजनात् मध्यमे परिधौ पशून्युनक्ति परिधिशकले स्वरुं मतिकरे चात्वालकर्म

दिव्याख्यो द्व्यहः ॥६॥ अग्निष्टोमं प्रथममेके ॥७॥ तृतीये त्र्यहोऽतिरात्र उत्तमः ॥८॥ अग्निष्टोमं प्रथममेके ॥९॥ ज्योतिष्टोमः शुनासीरीयस्थाने ॥१०॥ पञ्चसु सवनीया

---

शंय्वन्ते वाजिनेन चरित्वा वपनकाले निवर्तयति । चतुरो मासान्न मांसमश्नातीति व्याख्यातम् ।

वरुणप्रघासेषु पूर्वां पौर्णमासीमुपोष्य मारुतीं मेषीमालभेतोत्तरवेदिं करोति मिनोति यूपे यूपं नियुनक्ति संमृष्टेऽनः परिध्यङ्गारान् दक्षिणाऽपोह्य करम्भपात्राणि जुहोति हुतायां वपायां चात्वाले मार्जयित्वा वारुण्यै वत्सानपाकरोति न स्वरुं जुहोति न यूपमनुदिशत्यौत्तरवेदिकेऽग्निहोत्रं जुहोति श्वोभूते वारुणो मेषः पशुरवभृथादुदेत्य वारुणप्रघासिकेन चरित्वा यूपमनुदिशति वापनकाले निवर्तयति चतुरो मासान्न मांसमश्नातीति व्याख्यातम् ।

साकमेधेषु पूर्वस्यां पौर्णमास्यामाग्नेयः पशुरुत्तरस्यामैन्द्राग्नो यजनीये प्राजापत्य एकादशिना वा पशवोऽवभृथादुदेत्य पितृयज्ञेन चरन्त्यत एकोल्मुकेन त्र्यम्बकान्यन्ति प्रत्येत्यापरस्मिन्नग्नितन्त्र आदित्येन चरित्वा यूपमनुदिशति वापनकाले निवर्तयति चतुरो मासान्न मांसमश्नातीति व्याख्यातम् ।

शुनासीर्यो वायव्यः पशुरूपांशुदेवतो वैश्वदेवेन व्याख्यातः प्रतिपर्व हवींषि पुरोडाशेऽन्वातयति यथादेविकासुच्चरुपांशुतया प्रचरति । वरुणप्रघासेषु सप्त पूर्वस्मिन्वारुण्यैककपालावुत्तरस्मिन्साकमेधेष्वनीकवतसान्तपनौ प्रथमे यथाकालं गृहमेधीयः पूर्णदर्वी मध्यमे क्रीडिनमुत्तमे महाहवींषि शुनासीर्यं वाऽऽम्नातः पशुसोमो वा सौम्यैश्चातुर्मास्यैर्यजेत वैश्वदेवस्य लोके त्रिवृदग्निष्टोमो दश दीक्षास्तिस्र उपसदो यूपोत्तरवेदी निवर्तयति धिष्ण्येषु लक्षणान्येव करोति । ऊर्ध्वं हारियोजनात्कार्ष्णाजिनेन चरन्त्यहतं वासो वसानोऽवभृथादुदेत्य बार्हस्पत्यानूबन्ध्या वापनकाले निवर्तयति चतुरो मासान्न मांसमश्नातीति व्याख्यातम् ।

वरुणप्रघासानां लोके द्व्यहः षोडश दीक्षा द्वादशोपसदो ज्योतिरग्निष्टोमः पूर्वधिष्ण्येष्वोत्तरवेदिं निर्वपति । मिनोति यूपं युनक्ति प्रातःसवनधिष्ण्येषु विहृतेषु मार्जालीयेऽग्निमुपधारयेत्करम्भपात्रेभ्यः श्वोभूत उक्थ्यश्चतुर्दश्यां वारुणतुषनिष्काषेण वरुणं यजेति प्रेष्यति मैत्रावरुण्यनूबन्ध्या वापनकाले निवर्तयति चतुरो मासान्न मांसमश्नातीति व्याख्यातम् ।

साकमेधानां लोके त्र्यहः पञ्चदश दीक्षा द्वादशोपसदोऽग्निष्टोम

**वैश्वदेववारुणमारुताग्नेयैन्द्राग्नाः ॥११॥ षष्ठे चैकादशिनाः ॥१२॥ वायव्यः सप्तमे ॥१३॥ पञ्चाशतं पञ्चाशतं**

---

उक्थ्योऽतिरात्रश्चतुर्दश्यां तृतीयसवने धिष्ण्येषु विहृतेषु मार्जालीयेऽग्निमुपधारयेत्पितृयज्ञायोदयनीयादूर्ध्वं पितृयज्ञेन चरन्त्यत एकोल्मुकेन त्र्यम्बकान्यन्ति प्रत्येत्य सौर्यनूबन्ध्या वशा पुरोडाशमादित्यं चरुमन्वायतत इति यूपमनुदिशति । वापनकाले निवर्तयति चतुरोमासान्न मांसमश्नातीति व्याख्यातम् ।

शुनासीर्यस्य लोके त्रिवृदग्निष्टोमो ज्योतिरग्निष्टोम आश्विन्यनूबन्ध्या वैश्वदेवेन व्याख्यातः प्रतिपर्व हवींषि प्रातःसवनेऽन्वातयति यथा पशुमत्सु पुरा वसतीवरीणां परिहरणाद् गृहमेधीयः पुरा प्रातरनुवाकात्पूर्णदर्वो यथा पशुमत्सु ये पशवस्तेऽन्वहं सवनीयाः पञ्चाशत्पञ्चाशद्दक्षिणोत्तमे द्वादशं शतमुत्तमे द्वादशं शतम्" ।

काठकसूत्रे विशेषः । न चातुर्मास्यानां सोमानां ब्राह्मणोक्ताः कामा वैश्वदेवस्थाने वैश्वदेवोऽग्निष्टोमः फाल्गुन्यां पौर्णमास्यां दीक्षते तस्यापरपक्षे दीक्षा वैश्वदेवः पशुर्वैश्वदेवे यूपोत्तरवेदी परिधौ पशुं नियुञ्जन्ति । बार्हस्पत्याऽनूबन्ध्या सर्वत्राहतं वसानोऽवभृथादुदेत्य ब्रह्मचारिव्रता भवन्त्यासमापनाद् वरुणप्रघासे त्रिदिव आषाढ्यां पौर्णमास्यां दीक्षते तस्य द्वादश दीक्षास्तिस्र उपसदस्तस्याग्निष्टोमः प्रथममहो मारुतः पशुरुक्थ्यो द्वितीये वारुणः पशुर्मैत्रावरुण्यनूबन्ध्या साकमेधस्थाने साकमेधस्त्र्यहो यथा त्रिदिवस्यैवं दीक्षोपसदः कार्तिक्यां पौर्णमास्यां दीक्षते तस्याग्निष्टोमः ।

प्रथममहराग्नेयः पशुरुक्थ्यो द्वितीय ऐन्द्राग्नः पशुरतिरात्रस्तृतीयः प्राजापत्यः पशुरैकादशिना वा सौर्यनूबन्ध्या शुनासीरीयस्थाने शुनासीर्योऽग्निष्टोमो यथा वैश्वदेवस्यैवं दीक्षोपसदो वायव्यः पशुराश्विन्यनूबन्ध्या चातुर्मास्यानां सोमानामाग्नावैष्णवो वैश्वानरपार्जन्येनेष्ट्वा वैश्वदेवोऽग्निष्टोमः प्रातःसवनीयान्वैश्वदेवहवींषि अनुप्रवृत्तेरनुपुरस्ताद्धारियोजनस्य वाजिनमुन्नीय सदसि वाजिनभक्षेण भक्षयित्वा हारियोजनमुन्नयन्ति वरुणप्रघासेषु मारुतीसप्तमानि पूर्वस्यान्हः प्रातःसवनीयाननु प्रवर्तेरन् ।

पुरस्तात्संमार्गाणां करम्भपात्राणि वारुण्यैककपालश्चोत्तरस्याह्नः प्रातः सवनीयाननु प्रवर्तयातामवभृथे निष्काषस्यैककपालेन सहावद्यति स्विष्टकृतं वा ततः कुर्वन्ति साकमेधेष्वनीकवती पूर्वस्याह्नः प्रातः

प्रत्यहं दद्यात्युत्तमे द्वादशं शतम् ॥१४॥ वत्सा वा

---

सवनीयाननु प्रवर्तते सान्तपनीया माध्यन्दिनीया परिहृतासु वसतीवरीषु गृहमेधीयेन चरन्ति पुरस्तात्प्रातरनुवाकस्य दर्विहोमेन क्रीडनीया प्रातः सवनीयानन् प्रवर्त्तेत महाहविर्माध्यन्दिनीयास्तृतीयस्याह्नः पुरस्तात्सौम्यपरीज्यायाः आग्नीध्रीयं मार्जालीय आपाद्यास्मिन् पितृयज्ञेन चरन्ति केवलवेदिः पितृयज्ञो भवति पुरस्तादवभृथस्य त्रैयम्बकैर्मभ्युदवसानीयेन सहादित्यायाः शुनासीर्योऽग्निष्टोमे प्रातः सवनीयाच्छुनासीर्यहर्वीष्यनु प्रवर्तेरंश्चातुर्मास्यानां सोमानामन्वहं पञ्चाशतं पञ्चाशतं दक्षिणा ददाति द्वादशशतं शुनासीर्ये इति ।

आश्वलायनः । "उक्तानि चातुर्मास्यानि सोमान्वक्ष्यामः पर्वणां स्थाने यूपकानेके परिधौ पशुं नियुञ्जन्ति वैश्वदेव्याः स्थाने प्रथमं पृष्ठ्याहं जनिष्ठा उग्रो जज्ञ इति माध्यन्दिन एकाहिका होत्राः सर्वत्र प्रथमाः सह्वातिकेष्वहःस्वेकाहीनवत्सवैश्वानरपार्जन्ये हविषी अग्नीषोमीयस्य पशोः ! पुरोडाशेन्वायातयेयुः प्रातः सवनिकेषु पुरोडाशेषु वैश्वदेव्याहवींष्यन्वायातयेयुर्वैश्वदेवः पशुर्बार्हस्पत्याऽनूबन्ध्या वरुणप्रघासस्थाने द्व्यह उत्तरस्याह्नः प्रातः सवनिकेषु पुरोडाशेषु वरुणप्रघासहवींष्यन्वायातयेयुर्मारुतौ वारुणौ पशू मैत्रावरुण्यनूबन्ध्याऽग्निष्टोमसाकमेधस्थाने त्र्यहोऽतिरात्रान्तो द्वितीयस्यान्होऽनुसवनं पुरोडाशेषु पूर्वेद्युर्हवींषि तृतीयेऽह्न्युपांश्वन्तर्यामौ हुत्वा पौर्णदर्वः प्रातः सवनेषु क्रैडिनं माध्यन्दिनेषु माहेन्द्राण्यन्तरेण घृतयाज्ये दक्षिणा मार्जालीये पित्र्या तत्रोपस्थानं यथामति प्रणीयानुबन्ध्यः पशुपुरोडाशः आदित्यमन्वायातयेयुराग्नेयैन्द्राग्नैकादशिनाः पशवः सौर्यनूबन्ध्याऽग्निष्टोमः शुनासीरीयस्थाने प्रातः सवनिकेषु पशुपुरोडाशेषु शुनासीरीयाया हविष्यान्वा यातयेयुः वायव्यः पशुराश्विन्यनूबन्ध्यान्वहं पञ्चाशद् गावो दक्षिणा ।

शाङ्खायन सूत्रे-वैश्वदेवेन प्रजातिकामो यजेत,, वैश्वदेवः पशुरुपालम्भ्यः सवनीयस्य द्यावापृथिवीया वशाऽनूबन्ध्यामुपालम्भैवंविधा अत्र सवनीयस्तु यथाप्राप्तो ऽन्यो भवत्येव वैश्वदेवस्तूपालंभ्यो द्वितीयः । एवं विधेत्यनूबन्ध्यायदस्या अपि विधिः ।

ततो न पयस्यापत्ते । एवं विधेति वचनात् पयस्यापत्ते पयस्यैव भवति इति शाङ्खायनभाष्ये । अवभृथादुदेत्योदवसानीययेष्ट्वा मुनिस्तुष्ट्या यजमान आस्तेऽहरहश्चतुरो मासानन्तरालेषु । तत एतं प्रजापतिश्चतुर्थे मासि द्विरात्रं यज्ञक्रतुमपश्यद्वरुणप्रघासम् । उक्थ्यौ भवतः ।

**पञ्चशतो यथर्तुजाः ॥१५॥ प्रतिपर्वावभृथाः ॥१६॥ पर्वा-**

---

वारुणः पशुरुपालंभ्यः । सवनीयस्य पूर्वस्मिन् मारुत उत्तरस्मिन् कायो वशाऽनूबन्ध्या उपालम्भैवंविधेति । तत एतं प्रजापतिश्चतुर्थे मासि त्रिरात्रं यज्ञक्रतुमपश्यन् साकमेधमग्निष्टोम उक्थ्योऽतिरात्रः ।

अग्नयेऽनीकवते प्रथमः पशुरुपालंभ्यः सवनीयस्य मरुद्भयः सान्तपनेभ्यो द्वितीये माहेन्द्रस्तृतीये वैश्वकर्मणो वशाऽनूबन्ध्याया उपालंभ्यैवं विधा पृष्ठ्यैवाविहृतः । तत एतं यज्ञक्रतुमपश्यत् यच्छुनासीरीयं शुनासीरीयः पशुरुपालभ्यः सवनीयस्य सौरी वशाऽनूबन्ध्याया उपालभ्यैवं विधा । विंशतिर्वैश्वदेवे ददाति त्रिशतं वरुणप्रघासेषु पञ्चाशतं साकमेधेषु विंशति शुनासीरीये तद्विंशतिशतं ददाति ।

अथ कात्यायनसूत्रानुसारेण सौमिकानि चातुर्मास्यानि लिख्यन्ते ।

तत्र वैश्वदेवस्थाने प्रथमं पार्ष्ठिकमहः । तत्र विशेषो मैत्रसूत्रे-"दश दीक्षास्तिस्र उपसदः कठानाम्" फाल्गुन्यां दीक्षते तस्यापरपक्षे दीक्षा । संप्रदायकारकर्कमते द्वादश दीक्षा द्वादशोपसदः । श्रीअनन्तयाज्ञिकास्तु अग्निष्टोमवद्दीक्षोपसदो भवन्तीत्याहुः । अत्र यूपो न भवति । तेन यूपाऽहुत्यादितत्संबद्धाभावः । उत्तरवेदिरप्यत्र न भवति । उत्तरवेदिप्रमाण एवाहवनीयखरः कर्तव्यः । अत्र चात्वालमानप्रभृति नाभिध्याघारणान्तं सर्वं लुप्यते ।

खरे पञ्चभूसंस्कारान् कृत्वा पैतुदारवाज्यपरिधिपरिधानादिमेषरोमनिधानान्तमत्र भवति । अग्न्यर्थत्वात् । चात्वाले मार्जयन्ते । अग्नीध्राचात्वाले वसतीवरीभिरित्येवमादीनि चात्वालसंबद्धानि सर्वकर्माण्युत्तरे कर्तव्यानि । मध्यमे परिधौ पशुनियोजनम् । स च परिधिः पशुनियोजनक्षमः स्थूलः कार्यः । तत्राविरोधिनः प्रोक्षणाञ्जनपरिव्ययणादयो यूपधर्माः कर्तव्याः । स्वरुकार्यं परिधिशकलेन कर्त्तव्यम् । यूयायाज्यमानायेत्येव प्रैषो न परिज्यमानायेति ।

आहवनीयखर एव प्रवर्ग्योत्सादनं परिष्यन्दे वा । शुक्रामन्थिनोः खरश्रोण्योरेवासादनम् । अन्यान्यप्युत्तरवेदिकार्याणि खर एव कर्तव्यानि । अग्नीषोमीयपशुपुरोडाशमनु वैश्वानरपार्जन्ययोरनु निर्वाप इति आश्वलायनसूत्रे । "अग्नीदुत्करे वसतीवरीभिः प्रत्युपक्षिष्ठासे इत्यूहः मानवे । उत्करस्य चात्वालस्थाने विधानार्थः पुनरुक्त देशः । यूपाभावेपि शुक्रामन्थिनोरपमार्जनाभिधानार्थं यज्ञियवृक्षशकलानामुपादानम् । चातुर्मास्येषु चौक इति वचनात् प्रातः सवनीयानन्तु वैश्वदेवहविषामष्टानां

**न्तरेष्वहतं वस्ते ॥१७॥ अस्त्र्युपायी ॥१८॥ अमांसा-**

निर्वापः । तत्र पूर्वेद्युः रात्रौ सवनीयपयस्यानन्तरं वैश्वदेवपयस्याया अपाकरणम् । वैश्वदेवः पशुः ।

कर्कसम्प्रदायमतेऽतिग्राह्यग्रहणं नान्येषाम् । पञ्चाशद्गावो दक्षिणा । अश्वहिरण्यवासःसादीनां निवृत्तिः । नेन नात्राश्वाहुतिः । शिशिरर्तुजाताः पञ्चाशद्वत्सा वा दक्षिणाः । पुरस्ताद्वारियोजनस्य वाजिनयागः । चातुर्मास्यानां भागप्राशनादि पशुपुरोडाशभागाभ्यां सहेति याज्ञिकाः । सवनीयाननु विधानात्तैः सह सर्वं कार्यमिति तु युक्तम् । बार्हस्पत्याऽनूबन्ध्या भवति । एषु यजमानोऽहतं वासः परिधत्ते । स्त्रियं च नोपगच्छेत् । मांसं च नाश्नीयात् । इति वैश्वदेवसोमः ।

अथाषाढ्यां वरुणप्रघासः सोमः । तत्र त्रिदिवसञ्ज्ञको द्व्यहो भवति । अत्र मैत्राणां षोडश दीक्षाः द्वादशोपसदः । कठानामाषाढ्यां दीक्षितत्वाद् द्वादश दीक्षास्तिस्र उपसदः । अन्येषां वैश्वदेववत् । अत्र द्वितीयतृतीये पार्ष्ठिके अहनी उक्थ्यसंस्थे । प्रथममग्निष्टोमसंस्थमिति केचित् । अत्र यूपोत्तरवेद्यादि सर्वमग्निष्टोमवद्भवति । तत्र प्रथमेऽहनि प्रातः सवनीयाननु आग्नेयादीन्यैन्द्राग्नान्तानि षड् वारुणप्रघासिकानि हवींषि । सप्तमी मारुती पयस्या शाखान्तरात् । पूर्वेद्युर्वसतीवरीपरिहरणसुब्रह्मण्याह्वानानन्तरं दक्षिणाग्नौ करम्भपात्रमेषमेषीकरणम् । ततो दोहादिसवनीयपयस्यार्थं वत्सापाकरणानन्तरं मारुत्याः पयस्याया वत्सापाकरणम् । अत्र मारुतः सवनीयः पशुः । प्रातः सवनेऽग्नीध्रा मार्जालीये विहृतमग्निं धारयित्वा अग्निसंमार्गान्तं पूर्वम् ।

ततः करम्भपात्रहोमः । मानवे दर्शनात् । अविरोधाच्च । उत्तरवेदावेवेति याज्ञिकाः । मारुत्यां शमीपलाशमिश्रकरीरावपनम् मेषस्य च । प्रचरणकाले निकाष्य मेष्याः पयस्यामध्ये मावापः । मेषस्य सुगुप्ते देशे स्थापनम् । ततः पयस्यायाः प्रचारः । अध्वर्योरेवोत्तरवेदौ होमः । अनुनिर्वापविधानात् । वैश्वदेवसोमवद्दक्षिणा वत्सा ग्रीष्मर्तुजाता इति विशेषः ।

वाजिनयागादि वैश्वदेववत् । अतिप्रैषिते श्वः सुत्यामिति प्रैषः । पत्नीसंयाजान्तमहः । प्रतिपत्तिसमाप्त्यन्ते शाखाच्छेदनादि । वसतावरीग्रहणं निधानान्तम् । माध्यन्दिनेऽवनीय वा । ततो व्युत्क्रामतादिसुब्रह्मण्याह्वानान्ते सर्वेष्वग्निषु यजमानस्य समिदाधानम् । यथोपाकृतं दोहाः ।

शी ॥१९॥ अनुबन्ध्या बार्हस्पत्यामैत्रावरुणीसौर्याश्विष·

---

सवनीयपयस्यार्थं वत्सापाकरणान्ते वारुणीपयस्यार्थं षड्गवापाकरणम् । प्रातरुक्थ्यः । प्रातः सवनीयाननु वारुणीपयस्याकार्यैककपालयोरनु निर्वापः । वारुणः पशुः । द्वितीयेऽहन्येव प्रातः सवनीयाननु सर्वेषां वारुणप्रघासिकानामनु निर्वाप इत्याश्वलायनसूत्रे ।

वैश्वदेवसोमवद्दक्षिणा वत्सो ग्रीष्मर्त्तुजात इति विशेषः । वाजिन यागादि वैश्वदेववत् । अवभृथे वारुणीनिष्काषमेककपालेन सहावद्येत् । अथ वारुणं वारुणयाग एव सर्वहुतं कृत्वा स्विष्टकृदर्थं निष्कापेण कुर्यात् । मैत्रावरुण्यनूबन्ध्या भवति । नियमास्तु वैश्वदेवान्ते ये उक्तास्त एवात्रापि भवन्ति । इति वरुणप्रघासाख्यः सोमः ।

कार्त्तिक्यां साकमेधसोमाः । तत्र पाष्ठिकानि त्रीण्युत्तराण्यहानि । तत्र प्रथमं षोडशिसंस्थम् । अग्निष्टोमसंस्थमिति केचित् । षोडशिसंस्थपक्षे शुण्ठाधी लोहाकर्णी सोमक्रयणी गौर्भवति । द्वितीयमुक्थ्यसंस्थं, तृतीयमतिरात्रसंस्थम्, द्वादश दीक्षोपसद इति कर्कसंप्रदायकारौ । अग्निष्टोमवदिति याज्ञिकाः । मैत्राणां पञ्चदश दीक्षा द्वादशोपसदः । कठानां द्वादश दीक्षास्तिस्र उपसदः । तत्र प्रथमेऽहनि प्रातःसवनीयाननु अनीकवतस्यानु निर्वापः । आग्नेयः सवनीयः पशुः । माध्यन्दिनसवनीयाननु सान्तपनीयचरोरनुनिर्वापः । अत्रापि पञ्चाशतं गावो दक्षिणा शरदृतुजाताः पञ्चाशद्वत्सा वा ॥ श्वः सुत्यामिति प्रैषः । पत्नीसंयाजान्तमहः । प्रतिपत्तिपरिसमाप्त्यनन्तरं शाखाच्छेदः । वसतीवरिग्रहणं सादनान्तम् । माध्यन्दिनेऽवनीय वा । सुब्रह्मण्याह्वानान्ते सर्वेष्वग्निषु समिदाधानम् ।

ततो गृहमेधीया पैष्टिकवत् । ततो यथोपाकृतं दोहः । अप उपस्पर्शनादि । द्वितीयेऽहनि प्रातरनुवाकोपाकरणाद्दर्विहोमः । प्रातः सवनीयाननु मरुद्भ्यः सप्तकपालः अदित्यै चरुश्च । ऐन्द्राग्नः सवनीयः पशुः । माध्यन्दिनसवनीयाननु महाहविषामष्टानां निर्वापः । प्रथमाहर्वद्दक्षिणा । श्वः सुत्याप्रैषः । पत्नीसंयाजान्तमहः । पूर्वदिनवद्वसतीवरिग्रहणम् । व्युत्क्रामतादि ।

तृतीयमहरतिरात्रसंस्थम् । तच्च संस्थामात्रविकृतं पृष्ठ्यस्य षष्ठमहः । तत्र ऐकादशिना आग्नेयाद्यो वारुणान्ताः पशवः । मैत्राणां कठानां च प्राजापत्य एकादशिना वेति विकल्पः । अत्र स्वयमृतुयाजेज्या । होतृप्रत्ययः प्रतिगरः । त्रिष्वहःसु चतुर्थेऽरणिभ्यामित्यादीनि पृष्ठोपाकरणानि च ।

अत्र मानवे । "तृतीयस्याह्नस्तृतीयसवने धिष्ण्येषु विहृतेषु मार्जाली·

न्यो यथाऽवभृथम् ॥२०॥ प्रतिकर्म सोमाः ॥२१॥ अग्न्य

येऽग्निमुप धारयेत् । पितृयज्ञायेऽद्यनीयादूर्ध्वं पितृयज्ञेन चरन्ति एवोल्मुकेन त्र्यंबकान्यजन्ति । प्रत्येत्य सौरी वशाऽनूबन्ध्या । पशुपुरोडाशमन्वदित्यै चरुर्भवति । दक्षिणा प्रथमाहवत् ।

कठसूत्रे—प्राक् सौम्यपराज्याया आग्नीध्रीयमग्निं मार्जालीये निधाय तत्र पितृयज्ञः । अवभृथस्य पुरस्तात् त्र्यम्बकहोमः । उदवसानीयेन सहादित्यै चरुरिति । आश्वलायनमते त्र्यहमध्ये द्वितीयेऽहनि अनुसवनं सवनीयेषु पूर्वेद्युर्हवींषि । तृतीयसवने सवनीयाननु गृहमेधीयः तृतीयेऽहन्युपांश्वन्तर्यामौ हुत्वा दर्विहोमः । प्रातः सवनेषु कैडिनं माध्यन्दिने माहेन्द्राणि । सकलं महाहविरित्यर्थः । अन्तरेण यूपमाज्ये दक्षिणा मार्जालीये पित्र्या अनूबन्ध्यायाः पुरोडाशमन्वदित्यै चरुः । तृतीयेऽहनि श्वः सुत्याद्यहर्गणधर्माभावः इति साममेधसोताः ।

शुनासीर्यस्य स्थाने ज्योतिष्टोमः ॥ ऋत्विग्वरणाद्यादापनान्तः ॥ तत्र वायव्यः सवनीयः प्रातः सवनीयाननु शुनासीरीयहविषां निर्वापो विकल्पेन । द्वादशाधिकं गवां शतं दक्षिणा । शिशिरर्तुजाताः पञ्चाशद्वत्सा वा । आश्विन्यनूबन्ध्या । दीक्षादिकं सर्वेषां मते वैश्वदेवसोमवत् । इति शुनासीरीयसोमः । इति सौमिकानि चातुर्मास्यानि ।

अथ प्रतिकर्मसोमा उच्यन्ते । तत्र प्रथमोऽग्न्याधेयसोमोऽग्निष्टोमसंस्थ ऋत्विग्वरणाद्यादापनान्तोऽग्निष्टोमवत् । तत्र विशेषः । अग्नये पवमानाय सवनीयः पशुः । प्रातः सवनीयाननु अग्न्याधेयहविषामग्नये पवमानायाग्नये पावकायाग्नये शुचये ऽदित्यै चरुरित्येतेषां निर्वापः । आदित्याऽनूबन्ध्या ।

शाङ्खायने विशेषः । "अग्न्याधेयेन ब्रह्मवर्चसकामो यजेत चतुर्विंशतिर्गावो दक्षिणा तस्याग्नये पवमानायाग्नये पावकायाग्नये शुचय" इति । पशव उपालम्भ्याः सवनीयस्य । सवनीयस्त्वग्नये पव । आदित्या वशाऽनूबन्ध्यैवंविधा । एवंविधेत्यनूबन्ध्यावदस्या अपि विधिः । ततो न पयस्यापत्ते । एवंविधेति वचनात् पयस्यापत्ते पयस्यैवेति तद्भाष्ये । तस्य प्रातः सवनीयाननु पुरोडाशानग्नये पवमानायाष्टाकपालं पुरोडाशं निर्वपति माध्यन्दिनीयाननु पुरोडाशानग्नये पावकाय तृतीयसवनीयाननु पुरोडाशानग्नये शुचये । एवं पशवः पुरोडाशाश्चान्वायातन्ते हविर्यज्ञेषु सोमेष्विति ॥ इत्यग्न्याधेयः सोमः ॥

अथ पुनराधेयसोमोऽग्निष्टोमसंस्थः । तत्राग्नेयः सवनीयः प्रातः सवनी-

यपुनराधेयाग्निहोत्रदर्शपूर्णमासदाक्षायणाग्रयणाः ॥२२॥

---

'' पञ्चकपालस्याग्नेयस्यानुनिर्वापः । आग्नेयी अनूबन्ध्या । पुनरा- धेयेनान्नजस्कामो यजेतेति शाङ्खायनः ।

सायमग्निहोत्रसोमोऽग्निष्टोमसंस्थः । तत्र प्रातः सवने पयस्यार्थं षड्वर्गापाकरणानन्तरमाग्नेयस्य पयसोऽर्थं षड्वर्गापाकरणम् । अग्नये भागमिति । आग्नेयः सवनीयः । प्रातः सवनीयाननु आग्नेयपयसोऽनु- निर्वापः । प्राजापत्याऽनूबन्ध्या । प्रातरग्निहोत्रसोमोऽप्यग्निष्टोमसंस्थः । अत्रापि रात्रौ पयस्यार्थं षड्वर्गापाकरणानन्तरं सौर्यस्य पयसोऽर्थं षड्वर्गस्यापाकरणम् । सूर्याय भागमिति । सौर्यः सवनीयः । सौर्यस्य पयसोऽनुनिर्वापः । प्राजापत्या अनू बन्ध्येति । शाङ्खायने । "एतेनाग्निहोत्र होमौ व्याख्यातौ । आग्नेयं पयः पूर्वस्मिन् सौर्यमुत्तरस्मिन् । पशू चो- पालम्भ्यौ । आग्नेयः पूर्वस्मिन् सौर्य उत्तरस्मिन् प्राजापत्याऽनूबन्ध्या उपालम्भ्यधर्मविधा इति ।

अथ पौर्णमाससोमोऽग्निष्टोमसंस्थः ॥

आग्नेयः सवनीयः । अग्नीषोमीया अनूबन्ध्या । प्रातः सवनीयाननु त्रयाणामाग्नेयादीनां पौर्णमासहविषामनु निर्वापः । दर्शसोमोऽग्निष्टोम- संस्थस्तत्राग्नेयः सवनीयः । ऐन्द्र्यनूबन्ध्या प्रातः सवनीयानन्वाग्नेया- दीनां त्रयाणां दर्शहविषां निर्वापः । तत्र पूर्वेद्युर्दध्न उत्पत्तिः । प्रातः स- वनदध्यर्थदोहानन्तरं दार्शिकदधिदोहश्च । पयस्यार्थापाकरणानन्तरं दा- र्शिकेन्द्रपयस्यार्थं षड्वर्गस्यापाकरणम् । दर्शपूर्णमासावन्नाद्यकामस्ये- ति शाङ्खायनः ।

"चत्वारो दाक्षायणसोमाः । दाक्षायणयज्ञाश्चत्वारः सर्वकामस्येति । शाङ्खायनः । तत्र प्रथमे पौर्णमाससोमे अग्नीषोमीयः सवनीयः । अ- ग्नीषोमीयस्यैवानुनिर्वापः । अग्नीषोमीयाऽनूबन्ध्या । एकदेवतेपूभयाम- त्युक्तत्वात् द्वितीये आग्नेयः सवनीयः । ऐन्द्री अनूबन्ध्या आग्नेयपुरो- डाशदधिपयसां प्रातः सवनीयाननु निर्वापः । तृतीये ऐन्द्राग्नसवनीयः पशुः । ऐन्द्राग्नस्यैवानुनिर्वापः । ऐन्द्राग्न्येवानूबन्ध्या । एकदेवतेपूभयमि- त्युक्तत्वात् । चतुर्थ आग्नेयः सवनीयः । मैत्रावरुण्यनूबन्ध्या । आग्नेयपु- रोडाशमैत्रावरुणपयस्ययोः प्रातः सवनीयाननु निर्वापः । अत्र सम्प्रदा- योक्तदक्षिणयां पक्षद्वयं निर्मूलम् । शाखान्तरे चतुर्णां शुक्लत्वात् इति । इति दाक्षायणसोमाः ।

अथाग्रयणसोमोऽग्निष्टोमसंस्थः । तत्रैन्द्राग्नः सवनीयः । द्यावापृथिवीया-

उक्थ्यं पशुबन्धमेके ॥२३॥ ॥७॥

प्रातःसवनीयाननु हवींषि निर्वपति ॥१॥ पयसी अग्निहोत्रयोः ॥२॥ अन्त्यदेवताऽनूबन्ध्याऽध्या सवनी-

ऽनूबन्ध्या। ऐन्द्राग्नपुरोडाशवैश्वदेवचरुद्यावापृथिवीयपुरोडाशानां त्रया-णामाग्रयणहविषां प्रातः सवनीयाननु निर्वापः। इडाद्याग्रयणः सोमेष्टि-श्चाप्रवर्ग्य इति शाङ्खायनः।

सौम्याग्रयणे सौम्यः। सवनीयसौमी अनूबन्ध्या। सौम्यस्य श्यामाक-चरोः श्यामाकाग्रयणसोमे अनुनिर्वापः। वैणवस्य च वैणवाग्रयणसोमः।

अथ पशुबन्धसोमोऽग्निष्टोमसंस्थ उक्थ्यो वा। तत्रैन्द्राग्नो वा सौर्यो वा प्राजापत्यो वा सवनीयः पशुः। यद्देवत्यः सवनीयस्तद्देवत्यैवानूबन्ध्या। अत्र पशोरेव हविष्ट्वात्प्रातःसवनीयानन्वपरात्र एव पशोरालम्भः। तत्र सवनीयपुरोडाशानां पृथिव्यास्त्वेति सादनान्तं कृत्वा परिव्ययणादि यूपे पशुनियोजनम्। ततः सकृदेव ब्रह्माणमामन्त्र्य सवनीयात्प्रोक्ष्यपशोः प्रो क्षणम्। ततः पात्राणां वपाश्रपणीशूलोखं सवनीयपशुसम्बन्ध्येव गृह्यते। सवनीयानामासयान्तं कृत्वा पशुसमञ्जनम्। स्वर्वेस्त्रिभ्यां ललाटोपस्पर्श-नम्। शामित्रस्य परिलेखनादिसंस्काराः। पशुमात्रस्य पर्यग्निकरणम्।

पुनरुल्मुकादानादि। रेवति यजमान इति वाचनान्तवर्जितं परिपश-व्याहुतिवर्जितं च स्तोत्रप्रेषान्तम्। प्राणदानात्पूर्वं शृता प्रचरति प्रैषः॥ सवनीयपुरोडाशानां प्रथमम्। ततो वपायाः सवनीयानां प्रधानयागान्ते वपाप्रचारो मार्जनान्तः। नात्र वपाश्रपण्योरासादनम्। ततः सवनीय-स्विष्टकृदादि होतृधिष्ण्य इडानिधानान्तं सवनीयान्तं कृत्वा निर्वपणादि। पशुपुरोडाशयागो भागपरिहरणान्तः। ततः पशुविशसनादि पशुयागः पश्विडामार्जनान्तः। ततो द्विदेवत्यप्रचारादि प्रकृतिवत्। व्यूहने च प्राकृतस्तोमपदान्यपशुदेवतावानस्पत्योच्चारणमिति। इति पशुबन्धसोमः। इति प्रतिकर्मसोमास्समाप्ताः।

इति द्वाविंशस्य सप्तमी कण्डिका॥ ७॥

---

अथ पञ्च एकाहाः सप्तदशाः सप्तदशस्तोमका अग्निष्टोमसंस्थाः। तत्र प्रथम उपहव्यसंज्ञो ग्रामकामस्य भवति। अनृतमभिशस्यमानस्य वा भवति। अन्यैर्मिथ्यादोषारोपेण निन्द्यमानस्येत्यर्थः। निरुक्तो भवति। अनिरुक्तत्वं च पञ्चविंशब्राह्मणे उक्तम्-"देवाश्च वा असुराश्च प्रजाप-तेर्द्वयाः पुत्रा आसंस्तेऽसुरा भूयांसो बलीयांस आसन्कनीयांसो देवास्ते

या ॥३॥ एकदेवतेषूभयम् ॥४॥ चातुर्मास्येषु चैके ॥५॥ सप्तदशाः पञ्च ॥६॥ उपहव्योऽनिरुक्तो ग्रामकामस्य ॥७॥ अनृतं वाऽभिशस्यमानस्य ॥८॥ श्यावोऽश्वो दक्षिणा तं ब्रह्मणे ददाति ॥९॥ स्वर्गकामस्यर्तपेयः ॥१०॥ दीक्षोपसदो द्वादश ॥११॥ तिस्र उपसदः ॥१२॥ षड् वा ॥१३॥

---

देवाः प्रजापतिमुपाधावंस्त एतमुपहव्यमपश्यत् यन्निरुक्तमाहरिष्यामस्य सुरास्ते यज्ञं हनिष्यन्तीति सोऽनिरुक्तमाहरति" । आहरणं कार्त्स्न्येन प्रयोगः ।

एतदनिरुक्तत्वं सूत्रकारः स्पष्टीकरोति "उपहव्ये देवतानामति परोक्षं ब्रूयुः स्वस्थानामिति । उपहव्यग्रहणमनिरुक्तोपलक्षणम् । अनिरुक्तेषु क्रतुषु स्वस्थानासु देवतासु तन्नामधेयं परोक्षं ब्रूयुः पर्यायेणेत्यर्थः । परोक्षत्वमेवानिरुक्तत्वमिति । प्रत्यक्षमस्वस्थानास्विति । स्वस्थानात् स्थानान्तरेषु प्रत्यक्षमेव वचनम् । तत्र तावत्सर्वे पवमानाः सोमस्य स्वस्थानम् । तेषां सोमदेवत्यत्वात् । सर्वाणि पृष्ठानीन्द्रस्य स्वस्थानम् । अग्नेरग्निष्टोमस्तोत्रमित्यादि द्रष्टव्यम् इति । देवत्वशब्दं सर्वत्र वर्जयेयुरिति । सर्वेष्वपि स्तोत्रेषु देवशब्दं च वर्जयेयुर्देवमान इत्यादौ ।

होता देवामहो मित्रस्येत्येते होता यज्ञो मही यज्ञस्येति ब्रूयुरिति । प्रथमतृतीययोराज्ययोर्देवमित्रशब्दस्थाने यज्ञशब्दं ब्रूयुरित्यर्थः । तत्र केचित्पर्यायेणानिर्देशे वाक्यनियममाह । इन्द्रमिति सोममिति । सुषाव- सोममद्रिभिरित्यादौ सुषावेन्दुमिति ब्रूयुः । अत्राग्नेरिन्द्रस्य च स्तोत्रेषु सोमे निरुक्तमाहरेदिति ब्राह्मणानुरोधेन प्रत्यक्षनामरहिता एव स्तोत्रीयायां कल्पकारेण क्लृप्ताः । तेन प्रत्यक्षनामधेयाभावादेव तत्पर्याय उक्तः ।

उत्तमस्तोत्रे यज्ञायज्ञा वोऽ अग्नय इति प्रत्यक्षनामधेयं ब्राह्मणेनानुज्ञातम् । देवशब्दोऽपि तत्र प्रयोज्य एवेत्यादिः । सुत्यायां विशेषः । तथा सुब्रह्मण्यायाम् इन्द्रं शक्रेति ब्रूयात् । विश्व इति देवानामनिरुक्तेष्वनिरुक्तः प्रातः सवनीयश्चेति । इत्याद्यनिरुक्तत्वम् । अनिरुक्त इति उपांशु भवतीत्यर्थः इति वासुदेवः । अत्र श्यावोऽश्वो दक्षिणा "श्यावः कपिशः" इत्यमरः । कपिशः कपिलवर्णः । तं श्यावमश्वं ब्रह्मणे ददाति दक्षिणाकाले । "इतरेभ्यश्च किञ्चिद्दद्यादि"ति छन्दोगसूत्रे । तेनेतरेभ्य ऋत्विग्भ्यः किञ्चिद् द्रव्यं देयम् ।

मानवे । "प्रजापतेरुपहव्यो निरुक्तः सप्तदशानां प्रथमो भ्रातृव्यो वोत्स-

**उभयत्र वा द्वादशता गुणत्वात् ॥१४॥ घृतं व्रतयति ॥१५॥**

र्गकामः पशुकामो वा यजेताऽश्वः श्यावो दक्षिणा देयो ब्रह्मणे देय" इति । काठके "इन्द्रस्योपहव्येनातिशस्यमान उपहवकामो वा पञ्चाशद्दक्षिणाऽश्वं च ब्रह्मणे ददाति । इत्युपहव्यः ।

अथ द्वितीयः सप्तदशपेयोऽग्निष्टोमसंस्थः स्वर्गकामस्य भवति । तत्र कृष्णषष्ठ्यामृत्विग्वरणम् । दीक्षा द्वादश । उपसदश्च द्वादश । अत्र यजमानः पयःस्थाने घृतस्य व्रतं करोति । सोऽयमृतपेयो बृहत्पृष्ठः प्रतिष्ठाकामो यजेत नव दीक्षास्तिस्र उपसदोऽप्रवर्ग्या घृतव्रतो भवतो वर्षिष्ठेनाङ्गुलिपर्वणा सममाज्यं चतुःस्तनस्थाने व्रतयतो ह्रसिष्ठेतरासु सिद्धमासर्पणादेवमुक्त्वा प्रसर्पन्ति सिद्धमादक्षिणाकालादिति ।

मानसूत्रे—"ऋतपेये तस्य द्वादश दीक्षोपसद" इति । तिस्र उपसदः । शेषा नव दीक्षा इति छन्दोगसूत्रे । भारद्वाजस्तु प्रत्येकं द्वादशेति व्याख्यातवान् । तथा घृतव्रतो भवतीति यथोत्साहं घृतस्य प्राश्नीयात् । एतद्दीक्षासु मध्ये यथोत्साहं यथाबलं घृतं प्राश्नीयात् । यावताऽस्य शरीरं नापरुध्यते ।

उपसत्सु तु विशेषः । तत्र त्रयश्चमसा भिन्नप्रमाणाः कर्त्तव्याः । एकः सर्वतस्तर्जन्या मूलपर्वप्रमाणस्तावन्मात्रखातः । द्वितीयस्तर्जन्या मध्यपर्वप्रमाणखतः । तृतीयस्तर्जन्या अग्रपर्वप्रमाणखातः इति । पर्वशब्दः काण्डवचनः । तत्र प्रथमोपसदि प्रथमाङ्गुलिकाण्डप्रमाणं चमसं घृतेन पूरयित्वा प्राश्नीयात् ।

एवं द्वितीयं मध्यमकाण्डप्रमाणं चमसं घृतेन पूरयित्वा द्वितीयायामुपसदि व्रतं कार्यम् । उत्तमकाण्डप्रमाणं चमसं घृतेन पूरयित्वा तृतीयायामुपसदि तेन घृतेन व्रतं कार्यम् । अत्र छन्दोगसूत्रे पक्षान्तरम् । "उत्तरोत्तरेण काण्डेनोपैतीति पृथगुपसत्स्वङ्गुलिपर्वभिः प्रतिलोमभिः प्राश्नीयात् इति शाण्डिल्यः । अङ्गुल्या उत्तमेन काण्डेन घृतमादाय प्रथमायामुपसदि तावन्मात्रं घृतं प्राश्नीयात्ततो मध्यमेन ततः प्रथमेनेत्येवं प्रतिलोमैः पर्वभिः प्राश्नीयादित्यर्थः ।

अत्र प्राशनेऽङ्गुलिपर्वविधानात्प्राकृतचमसनिवृत्तिरिति । तथा एकाङ्गुल्या पृथक् पृथक् पर्वभिः सर्वान्देशांश्चमसा मिताः स्युस्तैरनुलोमैरिति शौचिवृक्षिरिति । अयमर्थः । प्राकृतचमसबाधो न कार्यः । अबाधेनापि शास्त्रस्य संभवात् । कथं चमसस्यैव पृथक् पृथक् परिमाणविधिरयम् । चमसप्रान्ताः सर्वत ऊर्ध्वप्रमाणेन पृथक् पृथगङ्गुलिकाण्ड-

**चमसं पूर्णमङ्गुलिपर्वणा मौल्येन सर्वतः प्रमितमाद्यायामुपसदि ॥१६॥ द्वितीयेन द्वितीयायाम् ॥१७॥ तृतीयेन तृतीयायाम् ॥१८॥ भक्षयिष्यन्तः सत्यं ब्रूयुः ॥१९॥ सदो वा स्रप्स्यन्तः ॥२०॥ सोमचमसो दक्षिणौदुम्बरः सगोत्राय ब्रह्मणे देयः ॥२१॥ पूतभृतः सर्वार्थत्वात् ॥२२॥ अंशुचमसमेके तेन स यजेतेति श्रुतेः ॥२३॥ अंशुव**

---

वृद्धाः स्युः । तेनार्थाच्चमसत्रयं सम्पद्यते तथा । अत्र सोमं भक्षयिष्यन्तः सर्व ऋत्विजः सत्यं ब्रूयुः । अग्निरुष्णो जलं शीतं वर्षति वर्षा इत्यादि । अथवा सदः प्रस्रप्स्यन्तः सत्यं ब्रूयुः ।

अत्र छन्दोगसूत्रम् । "ऋतमुक्त्वा प्रसर्पन्तीति प्रस्रप्स्यन्तः सदो भक्षयिष्यन्तश्च देवसत्यानि ब्रूयुरियं भूमिरसावादित्य उदेता प्रातरादित्य इति । अयमर्थः । सदःप्रसर्पणं सोमभक्षणं च करिष्यन्तो देवसत्यान् ब्रूयुरियं भूमिरित्येकं सत्यमसावादित्य इत्यपरम् । उदेता उदेष्यतीत्यर्थः । मत्रौदुम्बरसोमचमसो दक्षिणा मानवे । सोमचमसमक्रीतस्य राज्ञोंऽशूनां पूर्णं दक्षिणाभिः सहातिहृत्य सगोत्राय ब्रह्मणे देयः ।

अत्र छन्दोगसूत्रम् । सोमचमसो दक्षिणेत्यभिषुतस्य स्यात्तं माध्यन्दिने सवनमुखीयैः सहोन्नयेयुर्जुहुयुश्चास्य हुतो देय इति ब्राह्मणम् । दक्षिणावेलायां पूर्वेणाहवनीयमनिर्हरन्तो वेदेर्दक्षिणेन सदोहविर्द्धानानि हारयित्वा पूर्वया द्वारा सदः प्रविशेयुः । संस्थितेऽहन्यृत्विग्भ्यः किञ्चिद्दद्यादिति । सोमचमस एव ऋतोर्दक्षिणा ।

तथापि ऋत्विगानत्यर्थं किञ्चित्तेभ्यो दद्यात् इति । अस्य चमसस्य पूतभृत एवोन्नयनं कार्यम् । पश्चाद्धुतेरभावः । दानानन्तरं मरुत्वतीयेन सह तं चमसं ब्रह्मा जुहुयात् इति कर्कसंप्रदाययाज्ञिकाः । माध्यन्दिनप्रस्थितयागे चमसाननु तस्यैकदेशहोमः । हुतस्य दानमिति छन्दोगसूत्रे । शाङ्खायनः "ऋतपेयेन तेजस्कामो यजेत द्वादश दीक्षा द्वादशोपसदः । मध्यमेनाङ्गुष्ठपर्वणौदुम्बरं चमसं घृतस्य व्रतयेत् । अयुक्षासु क्षीरौदनं दीक्षासु सोमचमसो दक्षिणाऽभिषुतस्य ऋतं सत्यं वदन्तो भक्षयेयुर्भूर्भुवः स्वः इति वा सगोत्रो यं ब्रह्मणे दद्यात् ।

काठके—"ऋतपेयेन स्वर्गकामः फाल्गुनिकस्य षष्ठ्यां व्रतोपायनीयमश्नात्येकामनशित्वाऽश्नाति एवमभ्युच्चयेन दशाशितोऽनशित्वाऽश्नाति तस्य नव दीक्षाः । यावद्धीनस्य घृतस्य चतसृभिरङ्गलिभिरुपा-

**वत् ॥२४॥ पशूपवादाच्च ॥२५॥ द्विनामोत्तरो बहुहिरण्यो दूणाशश्च ॥२६॥८॥**

**दीक्षणीयायाᳬ हिरण्यं द्वादशमानं ददाति ॥१॥ उत्तरेषु च द्विगुणं पूर्वं पूर्वम् ॥२॥ प्रायणीयातिथ्योपस-**

---

दुत्ते तावद्दीत्तासु व्रतमुपसत्स्वङ्गुल्यपचयस्तत्स्थाने भक्षयन्ति प्रवर्ग्यभक्षांस्त्रिः सत्यमुक्त्वा सद्यः प्रसर्पान्ते माध्यन्दिनीयानन्वौदुम्बरं चमसमुन्नीय तस्मिन् तुल्यं दक्षिणान्तं कर्म कृत्वा संचरेण हुत्वा तं सगोत्राय ब्रह्मणे ददाति । अंशूनां वा चमसं पूरयित्वा तेन ब्रह्मा यजेत । यदि ब्रह्मा यजेत यजमानोऽस्मै द्वितीयां दक्षिणां दद्यादिति । इति ऋतपेयः ।

तृतीयः सप्तदशस्तोमकः । तस्य नामद्वयम् । बहुहिरण्य इत्येकम् । दूणाश इति द्वितीयम् । अग्निष्टोमसंस्थः ।

इति द्वाविंशस्याष्टमी कण्डिका ॥ ८ ॥

---

अत्र दीक्षणीयायामिष्टौ आगन्तुकत्वात्समाप्तायां तदृत्विग्भ्य एव द्वादशमानं ददाति ; मानशब्देन रक्तिकोच्यते । द्वादशरक्तिकापरिमितं हिरण्यं ददातीत्यर्थः । तत उत्तरेषु प्रायणीयादिपूदयनीयान्तेषु षोडशिसंस्थेषु कर्मसु पूर्वं पूर्वमिति—

पूर्वपूर्वदक्षिणापेक्षया द्विगुणं द्विगुणं देयम् । तान्युत्तराणि दानस्थानान्युच्यन्ते । प्रायणीयाम् । आतिथ्यायाम् । प्रातरुपसदि । सायमुपसदि । द्वितीयायां प्रातरुपसदि । द्वितीयायां सायमुपसदि । तृतीयायां प्रातरुपसदि । तृतीयायां सायमुपसदि । अग्नीषोमीयपशोर्वपान्ते ।

प्रातः सवनीयपशोर्वपान्ते । प्रातः सवने सवनमुखीयेषु चमसेषु हविर्द्धानमध्ये निहितेषु । एवं माध्यन्दिनसवने च । तृतीयसवने च । उदयनीयायाम् । अनूबन्ध्यायाम् । उदवसानीयायाम् । इयं न क्रतुदक्षिणेति नेष्टिदक्षिणाप्रतिप्रसवः, किं तर्ह्यपूर्वत्वाद्दक्षिणान्तरम् । ततश्चात्र दक्षिणाधर्मो न भवति । अन्ते च दानमङ्गदक्षिणेति । अत्र प्रायणीयादिषु तत्तत्कर्मयुक्तेभ्य एव दानं न सर्वेभ्यः । तथा माध्यन्दिने सवने दक्षिणाकाले हिरण्मयीं स्रजमुद्गात्रे दद्यात् । होत्रे सरुक्मं सौवर्णमाभरणं दद्यात् । अनडुहां शतं च सर्वेभ्यो विभज्य दद्यात् । अत्राप्यन्यदक्षिणानिवृत्तिः । अश्वाहुतेरभावश्च ।

अत्र ताण्ड्ये श्रूयते—"सप्तदशोऽग्निष्टोमस्तस्य दीक्षणीयायामिष्टौ द्वा-

त्सु पशुवपान्ते प्रतिसवनं निहितेषु सवनमुखीयेषूदयनीयायामनूबन्ध्यायामुदवसानीयायाᳪ स्रजं चोद्गात्रे॥३॥ रुक्म होत्रे ॥४॥ अनडुच्छतं काले सर्वेभ्यः ॥५॥ वैश्यपशुकामयोर्वैश्यस्तोमः ॥६॥ सवनान्याशीर्वन्ति ॥७॥प्रातः

---

दशमानं हिरण्यं ददाति चतुर्विंशतिमानं प्रायणीयायां द्वे चतुर्विंशतिमाने आतिथ्यायां चत्वारि चतुर्विंशतिमानानि प्रातः प्रथमायामुपसद्यष्टौ चतुर्विंशतिमानान्यपराह्णे प्रथमायामुपसदि षोडश चतुर्विंशतिमानानि प्रातर्मध्यमायामुपसदि द्वात्रिंशतं चतुर्विंशतिमानान्यपराह्णे मध्यमायामुपसदि चतुः षष्टिचतुर्विंशतिमानानि प्रातरुत्तमायामुपसदि अष्टाविंशतिशतं चतुर्विंशतिमानान्यपराह्णे उत्तमायामुपसदि द्वे अष्टाविंशतिशतमाने अग्नीषोमीयस्य पशोर्वपायां चत्वार्यष्टाविंशति शतमानानि प्रातः पशोर्वपायामष्टावष्टाविंशति शतमानानि प्रातः सवने सत्रेषु नाराशंसेषु षोडशाष्टाविंशतिशतमानानि माध्यन्दिने सवनेऽनडुच्छतं च रुक्मो होतुः स्रगुद्गातुर्हौत्रे द्वात्रिंशन्मानानि तृतीयसवने सत्रेषु नाराशंसेषु चतुः षष्टिमष्टाविंशति शतमानान्युदयनीयायामिष्टावष्टाविंशति शतमष्टाविंशति शतमानानि वशावपायामि"ति । वशा अनूबन्ध्या ।

अत्रोपसदन्ते अष्टाविंशतिशतं चतुर्विंशतिशतं चतुर्मानानि इत्युक्तम् । ब्राह्मणे तावत्पर्यन्तं चतुर्विंशतिमानमारभ्योत्तरोत्तरं द्वे चतुर्विंशतिमाने इत्यादि द्वैगुण्यनिर्देशः स्पष्टः । तत ऊर्ध्वमग्नीषोमीयप्रभृति द्वे अष्टाविंशतिशतमाने चत्वार्यष्टाविंशति शतमानानीत्येवं द्विगुणाभ्यासः कृतः । तत्र मानशब्दः चतुर्विंशतिमानं लक्षणयाऽऽह । यथा भामेत्येकदेशोक्तावपि सत्यभामाऽवगम्यते तद्वत् ।

तेन द्वे अष्टाविंशति शतमाने इत्यादौ तत्संख्याविशिष्टानि चतुर्विंशतिमानान्येव देयानीत्यर्थः । कुत एतत् । पूर्वेषु स्थानेषु द्विगुणाभ्यासस्य प्रक्रान्तत्वात् । यथाश्रुतमानमात्रग्रहणे कनीयस्त्वप्रसङ्गाच्च । तेनाग्नीषोमीयप्रभृतिषु च मानशब्दश्चतुर्विंशतिमानलक्षणार्थ इति सिद्धम् । अनडुच्छतस्य रुक्मेण समुच्चयः ।

अत्र छन्दोगसूत्रम् । "रुक्मो होतुरिति निष्को नामालङ्कारस्तं दद्याम् स्रगुद्गातुरिति हिरण्मयी स्यादि"ति । काठके । "अग्नेर्दूणाशेन पशुकामोऽमावास्यायाममावास्येनेष्ट्वा सौर्यं घृते चरुं निर्वपति तस्यां दशमानं सौवर्णं रुक्मं ददाति सायमप्सु चन्द्रमसे चरुं तस्यां द्वादशमानं राजतं

**सवने प्रतिदुहा श्रयणम् ॥८॥ शृतेन माध्यन्दिने ॥९॥ तृतीयसवने दध्ना दक्षिणा वत्सतराः पञ्चवर्षाःपृश्नयः ॥१०॥ वत्सतर्यश्च त्रिहायण्योऽप्रवीताः पञ्चवर्षा राजीवपृश्नयो नवनीतपृश्नयोऽरुणाः पिशङ्ग्यः सारङ्ग्यश्च इति ॥११॥**

---

रुक्मे ददात्यन्वाहार्यो दक्षिणा अत ऊर्ध्वं पिष्टिरमावास्यायामावास्येनेष्ट्वा दीक्षते दीक्षणीयायां तस्यां द्वादशमानठ० रुक्मं ददाति द्विस्तावत्प्रायणीयायामेवं द्विगुणातिथ्यायां सप्रवर्ग्योपसत्सु च दक्षिणावेलायाम् , तच्च हिरण्यं द्विश्च तावत्तावद्ददात्यगद्दुच्छ्रुतं चे"ति ।

मानवे विशेषः । "अग्नेर्दूणाशः स्वर्गकामो यजेताग्नेयमष्टाकपालं पूर्वाह्णे निर्वपेत्सौर्यं चरुमहन्यहन्यग्नये वैश्वानराय द्वादशकपालमपराह्णे चन्द्रमसे चरुं नक्तं नक्तमर्द्धमासं पुरस्तात्परियजति दीक्षणीयायां द्वादशमानमित्यादि समानम् । इति तृतीयः सप्तदशो बहुसुवर्णदूणाश इति नामद्वयवान् ।

अथ चतुर्थः सप्तदशो वैश्यस्तोमसंज्ञकः । स वैश्यस्य भवति । पशुकामस्य त्रैवर्णिकस्यापि अग्निष्टोमसंस्थः । अत्र सवनान्याशीर्वन्ति । आशीःशब्देन श्रयणद्रव्यं पया दधि चोच्यते । तद्वन्ति सर्वाणि सवनानि भवन्तीत्यर्थः ।

तत्र प्रातःसवने प्रतिदुहा धारोष्णेन दुग्धेन सोमानां मिश्रणं कर्तव्यम् । अत्र छन्दोगसूत्रे-"वैश्यस्तोमे सद्योदुग्धेन पयसा सोमं मिश्रं कुर्युः प्रातःसवने शृतेन । माध्यन्दिने दध्ना । तृतीयसवने तस्य द्वादशं शतं दक्षिणाः सहस्रं वा यथारूपाः पञ्चशारदीये पशव आलभ्यन्ते" इति । एतच्च सर्वेष्वपि सवनेषु अभिषवानन्तरं श्रयणं न ततो ग्रहणादि इति सम्प्रदायः । मानवे तु विशेषः । "धेनुशतमाशिरे दुहन्ति ता एव दक्षिणास्तासामुपवसथे चतुस्त्रिंशता दधि करोति प्रातःसवन उपधाय कपालानि षट्षष्टि दोहयन्त्यर्द्धं अपयन्ति सम्भृतं राजानं ग्रहांश्च प्रतिदुहा परिषिञ्चति शृतेन माध्यन्दिने दध्ना तृतीयसवने कण्वरथन्तरं पृष्ठमिति । वैश्यस्तोमे न्यग्रोधस्य सोमवत्संस्कारपक्षे पवित्रे ऊहादिविशेषा उक्ताः ।

अत्र पञ्चवर्षा वत्सतराः पृश्नयो विचित्रवर्णा दक्षिणाः । तथा त्रिहायण्यस्त्रिवर्षा वत्सतर्यो दक्षिणाः । कीदृश्यः अप्रवीताः ऋषभेणानाक्रान्ताः । तथा पञ्चवर्णाः । तथाहि-काश्चिद्राजीवपृश्नयः पञ्चवर्णानि पृश्नीनि मण्डलानि शरीरे यासां तास्तथाविधाः । काश्चिन्नवनीतपृ-

**उभयस्य सहस्रं द्वादशं वा शतम् ॥१२॥ सोमातिपूतस्य तीव्रसुदुक्थ्यः ॥१३॥ अपरुद्धराजन्यस्य ॥१४॥ दीर्घव्याधिग्रामकामप्रजाकामपशुकामानां वा ॥१५॥ पूर्ववत्सोमाः ॥१६॥९॥**

---

श्नयः । नवनीतवर्णानि चित्राणि यासां तास्तथा । अरुणाः अव्यक्तरागास्तथा पिशङ्ग्यः तथा सारङ्ग्यो वर्णान्तरोपेता इति । उभयस्य वत्सतरगणस्य वत्सतरीगणस्य च मिलितं सहस्रं दद्यात् । पञ्चशतानि वत्सतरान् पञ्च शतानि वत्सतरीरिति । अथ चोभयस्य मिलितस्य द्वादशाधिकं शतं दद्यात् । अथ सहस्रदक्षिणापक्षे अश्वदाभ्यौ तिस्रोऽनूबन्ध्यास्त्रैधातवी चेत्येतावद्भवति । इति वैश्यस्तोमः ।

अथ पञ्चमः सप्तदश उक्थ्यसंस्थस्तीव्रसुदेकाहः । तत्र एकादशिनीवत्प्राची यूपपङ्क्तिः । अत्र च "द्वादशाङ्गुलं पुरस्तादपच्छिद्य यूपावट्याच्छङ्कोः पुरस्तात्प्राञ्चमवधाय तस्मिन्यूपान्मिनोति पार्श्वयोऽर्वाऽर्द्धमन्तर्वेदीतिश्रुतेरर्द्धकानि"त्युपायेन यूपानां निखननं कर्त्तव्यम् । अयं च सोमातिपूतस्य यजमानस्य भवति । तल्लक्षणं च छन्दोगसूत्रे मतभेदेन बहुधोक्तम् ।

"तीव्रसुति सोमातिपवितं याजयेदिति यदिष्ट्वा पापीयान्स्यात्स सोमातिपवित इति शाण्डिल्य इति । यं सोमोऽतिपवते स सोमातिपवितः । सोमयागोत्तरकालं यो नष्टश्रीकः स एवमुक्त इति । तथा । यः सोमं पीत्वा छर्दयेत विरिच्येत वेति धानञ्जय्य इति । वमनं विरेको वा अतिपवनम् इति अर्थः । तथा । ज्येष्ठो वाऽनिष्टी कनीयसीष्टीति । अथवा यः कनीयसि भ्रातरीष्टवति न स्वयं सोमेनेष्टवान् स सोमातिपवित इति । तथाऽपरुद्धराजन्यस्यायं तीव्रसुद्भवति । राजानमवरुद्धं याजयेदिति श्रुतेः ।

यो राजा अवरुध्यते राष्ट्रेण परित्यज्यते तस्यायं भवति । तथा दीर्घरोगिणः ग्रामकामस्य प्रजाकामस्य पशुकामस्य चायं तीव्रसुत् उक्थ्यो भवति । अत्रापि पूर्ववद्वैश्यस्तोमवत्सोमाः सर्वेषु सवनेष्वाशीर्वन्तो भवन्तीत्यर्थः । तत्र चायं विशेषः । धेनुशतमाशिरे दुहन्तीति ।

इति द्वाविंशस्य नवमी कण्डिका ॥ ९ ॥

धेनुशतमाशिरे दुहन्ति ॥१॥ तदेव दक्षिणा ॥२॥ अच्छावाकाविग्रहेषु भक्षणम् ॥३॥ अवघ्राणमितरेषु ॥४॥ तेष्वेवोन्नयनम् अभ्यभि सोमानुन्नयन्तीति श्रुतेः ॥५॥ अध्वर्यू चमसाध्वर्यवश्च सर्वे प्रतिगृणन्त्यच्छावाकाय ॥६॥ द्वन्द्वाना प्रथमो राड् राजन्यस्य राज्यकामस्य ॥७॥

---

अत्र छन्दोगसूत्रे विशेषः । शतमाशिरे दुहन्तीति धेनुशतं दोहयित्वा तत्त्रेधं विभज्य सोमं मिश्रं कुर्युर्यथा वैश्यस्तोम इति । अत्र मानवसूत्रे विशेषः ॥ "इन्द्रस्य तीव्रसुदुक्थ्या रथन्तरपृष्ठः सोमातिपूतो राष्ट्राऽपरुध्यमानो ग्रामकामो भूतिकामः प्रतिष्ठाकामो वा यजेत सिद्धमावेदिकालाद् यावद्यूपं वेदिमुद्धरति प्राचीमेकादशिनीं सम्मिनोति गर्भिणीशतमाशिरे दुहन्ति यथा यथा वैश्यस्तोमे वडवा च गाभिण्यभक्षयन्तश्चमसानुपोद्यच्छुन्त्यभ्युन्नायं जुह्वतः प्रचरन्त्यध्वर्युश्चमसाध्वर्यवश्चाच्छावाकाय प्रतिगीर्य सर्वभक्षान्भक्षयन्त्यध्वर्युश्चमसाध्वर्यवश्चमसमुत्तरयोः सवनयोरिति ।

काठके— "इन्द्रस्य तीव्रसुता सोमातिपवितः प्राचीमेकादशिनीं मिन्वन्त्यैन्द्रमृषभमालभ्य ऋषभाणां द्वादशं शतं दक्षिणा गर्भिणीनां धेनुशतस्य वत्सानपाकरोति । प्रातः सवने सम्भृतं सोमं त्रयस्त्रिंशतो दुग्धेन श्रीणातीत्यादिसमानम् । अत्र चमसानामच्छावाकविग्रहेष्वेव सवनेषु सोमस्य भक्षणं कर्तव्यम् । इतरेषु सर्वेषु अवघ्राणमेव भक्षणविधिना कार्यम् । तेष्वेव घ्रातेष्वेव सोमेषु उत्तरोत्तरं यागार्थं सोमोन्नयनं कर्त्तव्यम् । तथा—

अध्वर्युप्रतिप्रस्थातारौ चमसाध्वर्यवश्च सर्वे प्रतिसवनमच्छावाकाय प्रतिगृणन्ति ॥ अत्र छन्दोगसूत्रे—"अभ्यभि सोममुन्नयेयुरिति तानभिजिघ्रेयुस्तेष्वेवाभ्युन्नयेयुरिति । अस्यार्थः । यांश्चमसानवजिघ्रेयुस्तानपरित्यज्यैव तेषामुपर्युपर्युत्तरयागेभ्यः सोमानुन्नयेयुः । अवघ्रातोऽपि भक्षित एवेति मत्वा त्याज्य इत्यर्थः । तथा तत्र भक्षावृता चमसानवजिघ्रेयुरिति । तथा तांश्चमसानच्छावाकस्य स्तोत्रे भक्षयेयुरेवं सर्वेषु सवनेष्विति इति तीव्रसुत् ।

अथ द्वन्द्वसोमा उच्यन्ते । तत्र प्रथमो राट्संज्ञोऽग्निष्टोमसंस्थः । स राज्ञः पुत्रस्य राजकामस्य भवति । अत्र न्यग्रोधे पवित्रवत्सर्वम् । तत्र यज्ञारम्भात्पूर्वस्मिन्यजनीये इन्द्रदेवत्ये ऋषभः पशुः परियज्ञो भवति उद्धरणादिकर्मापवर्गान्तः । याज्ञिकानां निरूपढवत् । अन्येषां

**यथाशक्त्येकविंशतिवर्गान्दद्यात् ॥८॥ ऋषभ ऐन्द्रः परियज्ञः ॥९॥ अन्नाद्यकामस्य विराट् ॥१०॥ यथाशक्ति दशवर्गान्दद्यात् ॥११॥ पशुराग्नेयः परियज्ञः ॥१२॥ प्रजातिकामस्यौपशदः ॥१३॥ दक्षिणा चतुर्विंशं शतम्**

---

त्वग्नीषोमीयवत् । एकविंशतिसङ्ख्य भिर्गोभिरेको वर्गः । एवं विधान् वर्गान् त्रिप्रभृति यथाशक्तिसङ्ख्यान्दक्षिणां दद्यात् । अत्राश्वाहुतेरभावः। एवं सर्वत्राश्वाभावे ज्ञेयम् । उपरिष्टाच्चानन्तरे यजनीयेऽहनि ऋषभ ऐन्द्रः परियज्ञः पूर्ववद्भवति । अत्र छन्दोगसूत्रं-"राजन्य एकविंशं० शतिवर्गान्यथोत्साहं दद्यादिन्द्र ऋषभस्तेन पुरस्तादुपरिष्टाच्च यजेतेति । इति विराट् एकाहः ।

अथ विराट् । स चाग्निष्टोमोऽन्नाद्यकामस्य भवति । अत्र यथाशक्ति गवां दशवर्गान्दद्यात् । पुरस्तादुपरिष्टाच्चानन्तरे यजनीये आग्नेयः पशुर्भवति । अत्र छन्दोगसूत्रम् । विराजि दशवर्गान्यथोत्साहं दद्यात् । आग्नेयेन तु पशुना पुरस्तादुपरिष्टाच्च यजेतेति । इति विराट् ।

अथौपशदोऽग्निष्टोमसंस्थः प्रजातिकामस्य भवति । प्रजातिः प्रजाः। चतुर्विंशाधिकगवां शतमत्र दक्षिणा। पुरस्तादुपरिष्टाच्चानन्तरे यजनीयेऽहनि वैश्वदेवः पशुः परियज्ञो भवति । छन्दोगसूत्रम्—'वैश्वदेवेनौपशदस्य चतुर्विंशतिशतं दक्षिणा इति। काठके-"गन्धर्वाप्सरसामुपसदा अप्रवर्ग्या इति इत्यौपशदः ।

अथ पुनस्तोम उक्थ्यसंस्थ एकाहः । यो बहु प्रतिगृह्य मेषीकृष्णाजिनादिनिषिद्धप्रतिग्रहं नानाविधं परिगृह्य गरगीरिव मन्यते प्रत्यवायरूपेण गरेण विषेणात्मानं गलितमिव मन्यते नरकाद्भीतो विषभक्षीव निर्विण्णो नष्टोऽस्मीति यश्चिन्तयन्ति तस्यायं पुनस्तोमो भवति । अत्र छन्दोगसूत्रम् । "पूर्वे वयस्युच्चावचान्याजयित्वोपनीय वा तेभ्यः समावर्त्स्यन्पुनस्तोमेन यजेत" । उच्चा उत्कृष्टाः । अवचा निकृष्टाः अधमाः । तानेवंविधान् उपनयनयोग्यतारहितान्याजयित्वोपनीय वा तेभ्यः समावर्त्स्यन् निवृत्तिमिच्छन् । अत्र गवां द्वादश मिथुनानि दक्षिणा द्वादश गावो द्वादश ऋषभाश्च । तथा पुनर्दत्तां च यथाशक्ति । पुनः संस्कृतो रथः पुनरुत्स्यूतं वासः पुनरुत्सृष्टा वत्सः पुनर्धेनुरित्यादीनि यथाशक्ति यावन्ति दातुं शक्यन्ते तावन्ति देयानि ।

अत्र छन्दोगसूत्रम् । "तस्य द्वादश मिथुना दक्षिणा इति धानञ्जय्यः ।

॥१४॥ पशुर्वैश्वदेवः परियज्ञः ॥१५॥ बहु प्रतिगृह्य गरगीरिव यो मन्येत तस्य पुनस्तोम उक्थ्यः ॥१६॥ दक्षिणा द्वादशमिथुना पुनर्वतां च यथाशक्ति ॥१७॥ पशुकामयज्ञौ चतुष्टोमौ ॥१८॥ षोडश्युत्तरः । पूर्वस्मिन्यथाशक्त्येकशफान्दद्यात् ॥१९॥ उभयानुत्तरस्मिन् ॥२०॥ उद्भिद्बलभिदौ चाहरतः संयुक्तौ ॥२१॥ पूर्वेणेष्ट्वोत्तरेणावरयम् ॥२२॥ इषुरिष्टिरन्तरेणनावाग्नेयः पुरोडाशः

---

पुनः संस्कृतो रथः पुनरुत्स्यूतं शामूलं पुनश्छेनुः पुनर्वत्स इति शाण्डिल्य इति । शीर्णो रथः पुनः संस्कृतः । जीर्णं शामूल पुनः सूत्रेण संस्कृतम् । शामूलमित्यौर्शं वासः । इति पुनस्तोमः । काठके । "पुनस्तोमेनाप्रतिगृह्यं प्रतिगृह्णोति" ।

अथ पशुकामस्य यजमानस्य द्वौ चतुष्टोमसंज्ञावेकाहौ यज्ञौ भवतः । तयोर्मध्ये पूर्वोऽग्निष्टोमसंस्थः । अत्र यथाशक्ति एकशफानेकखुरानश्वादीन्दक्षिणां दद्यात् । मानवे विशेषः-"गोस्तोमस्य चतुष्टोमः पशुकामो यजेतान्तरुक्थ्यः पूर्वस्तृतीयसवन उक्थ्यं गृहीत्वाऽऽग्रयणं गृह्णाति सिद्धमाग्निष्टोमचमसेभ्योऽग्निष्टोमचमसानुन्नीयाद्यवत् । ग्रहणासादनैर्होतृचमसेऽवनयति षोडश्युत्तर इति ।

काठके च । "पूर्वश्चतुष्टोमोऽन्तर उक्थ्यस्तस्मिन्नग्निष्टोमचमसानुन्नीय त्रिषु पात्रेषूक्थ्यं विगृह्य तैः सह प्रचरेदिति" । द्वितीयश्चतुष्टोमः षोडशिसंस्थः । तत्र एकशफानश्वादीन्नानाशफानश्वगवादीन्यथाशक्तिसङ्ख्यान्दद्यात् । अत्र छन्दोगसूत्रम् । "चतुष्टोमयोरेकखुराणां पूर्वस्मिन्यथोत्साहं दद्यादुभयेषामुत्तरस्मिन्नि"ति । उभयेषामित्येकखुराणाम् । एकखुरा अश्वाश्वतरीगर्दभाः । काठके विशेषः "गोतमस्य चतुष्टोमावप्रवर्ग्यौ साग्निचित्यौ पशुकामस्ये"ति ।

अथ उद्भिद्बलभित्संज्ञौ यज्ञौ संयुक्तौ चकारात्पशुकामस्य भवतः । तत्रोद्भिदा इष्ट्वा अवश्यं बलभिदा यष्टव्यमित्येवं संयुक्तौ कर्त्तव्यौ । तत्र उद्भिदा इष्ट्वा बलभिद आरम्भात्पूर्वमर्द्धमासं वा मासं वा संवत्सरं वा अन्तराले इषुसंज्ञेष्टिर्भवति । अत्र चाग्नेयः पुरोडाशः । प्रस्तरश्चोद्वृढो बर्हिर्भारमध्यादूर्ध्वं निष्काशितोऽग्रमार्गेण निष्काशितोऽत्र भवति । परिधयो वाणवन्तो भवन्ति । वाणास्तीक्ष्णाः शरा एव वाणवन्त इत्युच्यन्ते । द्वौ बाणवन्तौ सपत्नादि व्याधिताविति दर्शनात् ।

॥२३॥ उद्बृढः प्रस्तरः ॥२४॥ बाणवन्तः परिधयः ॥२५॥ अर्धमासं मासꣳ संवत्सरं वा ॥२६॥ दक्षिणा गायत्री चतुर्विꣳशतिवर्गा यथाशक्ति ॥२७॥ अपचितिकामस्यापचिती ॥२८॥ राजयज्ञावित्येके ॥२९॥ दक्षिणाऽश्वरथश्चतुर्युगुभयतः ॥३०॥ काꣳस्यकवचः ॥३१॥ शतार्हा अश्वाः ॥३२॥ साग्निचित्यावग्नेस्तोमौ सर्वजिद्दीक्षौ ॥३३॥ पूर्वः

---

चतुर्विंशतिसङ्ख्याभिर्गोभिरेको वर्गः । एवं विधान् त्रिप्रभृति यथाशक्ति सङ्ख्यान् चतुर्विंशतिवर्गान् ददाति । अस्या दक्षिणाया गायत्रीति सञ्ज्ञा । अत्र छन्दोगसूत्रम् । "उद्भिद्बलभिद्भ्यामविप्रयोगेण यजेत । तावुभौ समापवर्गौ स्यातां वसन्ते । अर्द्धमास एनावन्तरेण स्यान्मासो वा संवत्सरो वा तयोः पृथक्चतुर्विंशतिवर्गान्यथोत्साहं दद्यादि"ति । अत्र काठके विशेषः—

"बृहस्पतेरुद्भिद्बलभिदावप्रवर्ग्यौ पशुकामस्यामावस्यायामामावास्येनेष्ट्वोद्भिदा दीक्षते एका दीक्षा उपसद उदवसानीयां कृत्वेष्टिं निर्वपत्याग्नेयमष्टाकपालं सौम्यं चतुष्कपालं वैष्णवं त्रिकपालमनड्वान् बभ्रुर्वामन इत्येतत्त्रयं दक्षिणाऽन्वाहार्यं दक्षिणत ऊर्ध्वमिष्टिरमावास्यायामामावास्येनेष्ट्वा बलभिदा दीक्षेत । तुल्यमुद्भिदा कर्म बलभित्पूर्वमित्येक इति मानवे । बृहस्पतेरुद्भिद्बलभिदौ । पशुकामो यजेत पूर्वेणेष्ट्वोत्तरेण मासमुद्धरेदिति । इत्युद्भिद्बलभिदौ ।

अथापचितिनामानौ द्वावेकाहावग्निष्टोमसंस्थौ अपचितिकामस्य यजमानस्य भवतः । अपचितिः पूजा । लोकैः संमाननीय राज्ञो यज्ञौ भवत इत्याहुः । अत्रोभयपार्श्वे चतुर्भिश्चतुर्भिरश्वैर्युक्तोऽश्वरथो दक्षिणा । तत्र रथः कांस्यकवचो भवति । कांस्यधातुनिर्मितं कवचं यस्य स तथा । कवचं पञ्जरादीति याज्ञिकाः । अत्र योजनार्थमश्वाः शतारिहा इति । गोशतेन मूल्यभूतेन येषामेकैको लभ्यते एवंविधा भवन्ति ।

अत्र छन्दोगसूत्रम् । "पृथक्चतुर्युजावश्वरथावपचित्योः क्रत्वोः पृथक्नानाचतुर्युजावश्वरथौ स्यात् । चतुर्भिर्युक्ताश्चत्वारोऽश्वा अस्मिन्युक्ता इति वा । उभयतः कांस्यकवचो उभौ रथौ उभयतः कांस्यकवचौ स्याताम् । कांस्यं कवचम् एकैकोऽस्य रथस्योभयतः रथस्योभयतः स्यातां कांस्यविकारः कांस्यकवचं सन्नाहः । एतत्सूत्रानुसारेण दक्षिणाऽश्वरथश्चतुर्युगित्येतदन्त एव सूत्रच्छेदः । रथे च चत्वार एवाश्वा युज्यन्ते दक्षिणतो द्वौ उत्तरतश्च द्वाविति । तत उभयतः काꣳस्यकवच इति ।

पक्ष्युत्तरो ज्योतिः ॥३४॥१०॥

धान्याचितानि चत्वारि–चत्वारि दक्षिणा ॥१॥ पूर्वस्य षड्गवान्युत्तरस्य चतुर्गवानि ॥२॥ ऋषभगोसवौ ॥३॥ पूर्वो राज्ञः ॥४॥ दक्षिण ऋषभसहस्रं द्वादशं वा शतम् ॥५॥ उक्थ्यो गोसवोऽयुतदक्षिणः॥६॥ वैश्ययज्ञ इत्येके ॥७॥

---

द्वितीयं सूत्रम्। अस्य छन्दोगसूत्रव्याख्यानम्। द्विवचनस्थाने एकवचनमिति भेदः। शताग्र्हिाः स्युरश्वाः शतक्रियो वा। तयो रथयोश्चत्वारोऽपि शतारिहा अश्वा युक्ताः स्युः। शतमेकैकोऽर्हति मूल्यमिति शतारिहाः। शतक्रीता चेति। शतेनैव वा एकैकः क्रीतो भवति ते तथा। राजैताभ्यां यजेतेति धानंजय्यो यः कश्चापचितिकाम इति शाण्डिल्य इति। काठके विशेषः–"बृहस्पतेरपचिती अप्रवर्ग्यावपचितिकामस्ये"ति। इत्यपचिती।

अग्नेः स्तोमौ साग्निचित्यौ सर्वजिद्दीक्षौ अग्निष्टोमसंस्थौ भवतः। तयोर्मध्ये पूर्वस्याग्नेः स्तोमस्य पक्षीति संज्ञा। उत्तरस्य ज्योतिरिति संज्ञा।

इति द्वाविंशस्य दशमी कण्डिका ॥ १० ॥

---

अनयोर्यज्ञयोर्धान्याचितानि धान्यैः पूर्णानि चत्वारि चत्वारि शकटानि दक्षिणा। तत्र पक्षिसंज्ञस्य पूर्वस्याग्नेः स्तोमस्य षड्भिर्बलीवर्दैर्युक्तानि शकटानि दक्षिणा। उत्तरस्य ज्योतिःसंज्ञकस्याग्नेः स्तोमस्य चतुर्भिरनडुद्भिर्युक्तानि।

अत्र छन्दोगसूत्रम्–"ऐकाहिकेन व्रतेनोक्त उभयोरग्नेःस्तोमयोः पृथक् चत्वारि धान्याचितानि दक्षिणा। षड्गवानि पूर्वस्य चतुर्गवान्युत्तरस्येति। काठके विशेषः। "अग्नेः स्तोमावप्रवर्ग्यौ पशुकामस्येति। मानवे च। "उभयसामानौ बृहत्पृष्ठावग्नेःस्तोमौ स्वर्गकामो यजेत संवत्सरमुख्यं बिभर्ति सहस्रं दक्षिणा इति। इत्यग्नेःस्तोमौ पक्षिज्योतिषी।

अथ ऋषभगोसवसञ्ज्ञौ इन्द्रसोमौ। तत्र ऋषभोऽग्निष्टोमसंस्थो राज्ञो भवति। अत्र ऋषभाणां सहस्रं दक्षिणा। द्वादशाधिकं शतं वा तेषामेव। अत्र न्यग्रोधचर्माः पवित्रे उक्ताः। सहस्रदक्षिणापक्षे अश्वदाभ्यौ त्रिस्रोऽनूबन्ध्याश्चैधातवी च। द्वादशशतपक्षेऽश्वदाभ्यादि न भवति। अत्र छन्दोगसूत्रम्। "ऋषभाणां द्वादशशतं दक्षिणा सहस्रञ्च ऋषभेषु विद्यमानेषु कतिपया अप्यृषभाः स्युः साण्डा इतरे वत्सतरा इति। मानवे–"सहस्रं दक्षिणा ऋषभगोसवाविन्द्रस्य ऋषभो यः कामयेत ऋषभ इव

**सराजानो विशो यं पुरस्कुर्वीरन्त्स एतेन यजेत ॥८॥ स्थण्डिलेऽभिषिच्यते प्रतिदुहाऽऽहवनीयस्य दक्षिणतः ॥९॥ स्थपतिरित्येनं ब्रूयुः ॥१०॥ वैश्यस्तोमदक्षिणालिङ्गो मरुत्स्तोमो गणयज्ञो भ्रातृणाᳪं सखीनां वा ॥११॥ प्रजाका-**

---

समानानां स्यामिति स एतेन यजेतोभयसामा बृहद्रथन्तरपृष्ठः पूर्व इति। काठके "इन्द्रस्य ऋषभेण यः कामयेत ऋषभ एव समानां स्यामित्यन्द्र ऋषभ उपालभ्य ऋषभाणां द्वादश शतं दक्षिणा" इति । इति ऋषभः ।

द्वितीयो गोसव उक्थसंस्थः। तत्र गवामयुतं दश सहस्राणि दक्षिणा । वैश्यस्य यजमानस्यायं भवतीति केचित् । राज्ञा सहिताः प्रजा यं पुरस्कुर्वीरन् मुख्यत्वेनाङ्गीकुर्वीरन् स एतेन गोसवेन यजेत । अत्र तिस्रोऽनूबन्ध्यास्त्रैधातवी च । महामरुत्वतीयान्ते माहेन्द्रग्रहणात्पूर्वमाहवनीयाद् दक्षिणदेशे स्थण्डिले प्रतिदुहा धारोष्णेन दुग्धेन यजमानस्याभिषेकस्तूष्णीमेव कर्तव्यः ।

"बृहत्स्तोत्रं प्रत्यभिषिच्यत" इति ताण्ड्यश्रुतेः । ततः सर्वे लोका एनं स्थपतिरित्यनेन नाम्ना सर्वदा ब्रूयुः । अत्र छन्दोगसूत्रम् "वैश्यं यं विशः सराजानः पुरस्कुर्वीरन् स गोसवेन यजेत स बृहस्पतिसवेन व्याख्यातोऽयुतं त्वस्य दक्षिणा" इति। काठके। "परमेष्ठिनो गोसवेऽसव उक्त इति मानवे । "गौराङ्गिरसस्तोमो गोसवेन यजेत पारमेष्ठ्यकामः श्रीराज्यकामो वोभयसामा बृहत्पृष्ठोऽयुतं दक्षिणा गावो भगो गावो इन्द्रो मे अच्छात् । गावः सोमस्य प्रथमस्य भक्ष इमा या गावः स जनास इन्द्र इच्छामीन्द्रेदामानसा चिदिन्द्रमिति माहेन्द्रकाले वाचयित्वा प्रतिदुहा परिषिञ्चति प्रजापतिं पारमेष्ठ्यायेति यथाकाममि"ति । इति गोसवः ।

अथ मरुत्स्तोमो गणयज्ञोऽग्निष्टोमसंस्थः । स च भ्रातृणां सह भवति सखीनां वा । अत्र ज्येष्ठस्य गार्हपत्ये इतरगार्हपत्ययोः प्रत्यक्षं कृत्वोद्धृत्य यूपाहुतिः । पुनरुद्धृत्य साधारणीकृतस्य नयस्य ज्येष्ठारण्योः समारोपादि ब्राह्मणतर्पणान्तम् । अन्ते च गार्हपत्यं विभज्य स्वस्वारण्योः समारोप्योदवसाय निर्मन्थ्येनोनोदवसानीया कार्या । अत्र प्राकृतसंख्याकायामेव दक्षिणायां वैश्यस्तोमवद्दक्षिणालिङ्गानि भवन्ति । तानि च दक्षिणा वत्सतराः पञ्चवर्षाः पृश्नयो वत्सतर्यश्च त्रिहायण्योऽप्रवीताः पञ्चवर्णाः राजीवपृश्नयो नवनीतपृश्नयोऽरुणाः पिशङ्ग्यः सारङ्ग्य इति । अत्र बहुयजमानकाहीनद्वादशाहवदहानि । कर्मापि तद्वदेव नात्र

मपशुकामयोरैन्द्राग्नकुलायः कुलदक्षिणः ॥१२॥ द्वियज्ञो भ्रात्रोः सख्योर्वा ॥१३॥ इन्द्रस्तोमो राजयज्ञः सहस्रं दक्षिणा ॥१४॥ उक्थ्यः ॥१५॥ पुरोधाकामस्यैन्द्राग्न्यो-स्तोमः ॥१६॥ राजपुरोहितयोर्वा सह यजमानयोः ॥१७॥ पृथग्वा ॥१८॥ दक्षिणा गायत्रीसम्पन्ना ब्राह्मणस्य ॥१९॥ जगत्या राज्ञः ॥२०॥ त्रिघनो पशुकामस्य ॥२१॥ अभि-

---

पञ्चशरावः, अत्यासंभवस्याभावात् । अत्र सूत्रान्तरम्-"सखायो भ्रातरो वा ये संपादयेयुस्ते मरुतः स्तोमेन यजेरंस्तस्य दक्षिणा यथारूपाः पञ्च-शारदीये पशवो वाऽऽलभ्यन्ते तेषां यथोत्साहं दद्युर्येषां केषां च पशूनां यथोत्साहं दद्युरिति धानञ्जय्य" इति ।

मानवे-"मरुत्स्तोमोऽथैन्द्राग्नकुलायो द्वियज्ञोऽग्निष्टोमसंस्थः । स च प्रजाकामपशुकामयोर्वा द्वयोर्भ्रात्रोः द्वयोः सख्योर्वा सह भवति । अत्र गोः कुलानि तावन्ति दक्षिणा, यावद्भिः प्राकृतो शतं संख्या पूर्यते । अयमपि मरुत्स्तोमवत् अग्नी संयोज्य कार्यः । नोद्वसानीये कार्यं। अत्र द्वियजमानकाहीनद्वादशाहवत्सर्वे ऊहाः ।

छन्दोगसूत्रे-"कुलदक्षिण इन्द्राग्न्योः कुलाय" इति । मानवे । "इन्द्रा-ग्निकुलायो यः कामयेत कुलायमिव प्रजायाः पशूनां स्यामिति स एतेन यजेत तेन द्वौ याजयेदि"ति । इति इन्द्राग्न्योः कुलायो द्वियज्ञः । अथेन्द्रस्तोम उक्थ्यसंस्थः स राज्ञो भवति । अत्र न्यग्रोधे विशेषाः पवित्रे उक्ताः । गवां सहस्रं दक्षिणा । आग्नेयैन्द्राग्नौ सवनीयौ अंश्वदाभ्यौ तिस्रोऽनूबन्ध्या स्त्रैधातवी च । सहस्रमिन्द्रसोमा इति ।

छन्दोगसूत्रम् । मानवे—"इन्द्रस्येन्द्रस्तोम उक्थ्यो बृहत्पृष्ठो राज्यमा-शंस्यमानो यजेत ऋषभाणां द्वादशशतं दक्षिणा इति । इतीन्द्रस्तोमः । अथैन्द्राग्न्योःस्तोमोऽग्निष्टोमसंस्थः पुरोधाकामस्य भवति । पुरोधा राज्ञः पुरोहितः । अयं च राजपुरोहितयोः सह यजमानयोर्द्वियज्ञो वा भवति । पृथग्वा एकैकस्यापि भवति । तत्र पृथक्पक्षे पुरोहितस्य गाय-त्रीसम्पन्नाश्चतुर्विंशतिर्गावो दक्षिणा भवन्ति । राज्ञो जगत्या सम्प-न्ना अष्टाचत्वारिंशद्गावो दक्षिणा भवन्ति ।

द्वियज्ञपक्षेऽप्येषैव दक्षिणा । द्विवचनान्ता ऊहा द्वियजमानकद्वाद-शाहवत् । मरुत्स्तोमवदहानां साधारणं कार्यं नानोद्वसानीये । न्यग्रो-धचमसो राज्ञः पृथक् भवति । अत्र छन्दोगसूत्रम् । "राजपुरोहितौ यजे-यातामिन्द्राग्न्योः स्तोमेन गायत्रीसम्पन्ना दक्षिणाः स्युरिति ।

चरतो वा ॥२२॥ बृहतीसम्पन्नाः पशुकामस्य ॥२३॥ अभिचरतः प्रज्ञाताः ॥२४॥ सन्दंशवज्रावभिचरतः ॥२५॥ षोडशी वज्रः ॥२६॥ शुण्ठाधी लोहाकर्णी षोडशिनः सोमक्रयणी ॥२७॥ अहर्गणेऽप्यविशेषात् ॥२८॥

---

काठके—"इन्द्राग्न्योः कुलायेनाग्नीन्त्समारोप्य राजन्यपुरोहितौ सायुज्यकामौ पूर्वः पुरोहितो नाना यजमानचमसावन्योन्यस्मिन्नुपहवमिच्छमानौ भक्षयित्वा ऋत्विक्षु चैन्द्र ऋषभ उपालभ्य ऋषभाणां द्वादशं शतं दक्षिणा नाना दक्षिणा नानोदवसानीये"ति । मानवे । "अग्नेः स्तोमौ राजपुरोहितौ सायुज्यकामौ यजेयातां पुरोधाकामो वा ब्राह्मण" इति । इति इन्द्राग्न्योः स्तोमः ।

अथ विघनावेकाहावग्निष्टोमसंस्थौ पशुकामस्याभिचरतो वा भवतः । तत्र पशुकामस्य यज्ञो बृहतीसम्पन्ना गावो दक्षिणाः षट्त्रिंशत्संख्या इत्यर्थः । अभिचारं कुर्वतः प्रज्ञाताः प्राकृत्यः शतसंख्या एव गावो दक्षिणाः । छन्दोगसूत्रे—"विघनाभ्यां पशुकामो यजेताभिचरन् वा बृहतीसम्पन्ना दक्षिणाः । पशुकामस्येषुणाऽभिचरतो व्याख्यातौ" इति । मानवे "विघनेन पशुकाम" इति । काठके । "इन्द्रस्य विघनसन्दंशावप्रवर्ग्यौ । पशुकामस्य सप्रवर्ग्यावभिचरत एवं सन्दंशविघनावि"ति । इति विघनौ ।

अथ सन्दंशवज्रौ अभिचारं कुर्वतो यजमानस्य भवतः । तत्र सन्दंशोऽग्निष्टोमसंस्थः । वज्रः षोडशिसंस्थः । तत्र षोडशिनः शुण्ठाधी लोहाकर्णी सोमक्रयणी भवति । शुण्ठाधी पीतमुखी वेष्टितमुखीति केचित् । पीतमुखीत्येके लोहाकर्णी लोहितकर्णी ।

अत्र पूर्वेण सन्दंशाख्येनैकराजमेवैकं राजानमेवाभिचरेत् । अपरेण वज्रसंज्ञकेन जनपदं सकलं देशमभिचरेत् । अथवा व्यत्यासं विपर्यासेन एकं राजानं वज्रेणाभिचरेत् । जनपदं सन्दंशेनेति । ततः शमित्वा-मारणादुपरम्य अथवा शत्रुं स्पृत्वा मारयित्वा पश्चाच्छान्त्यर्थं ज्योतिष्टोमेनाग्निष्टोमसंस्थेन यजेत ।

अत्र छन्दोगसूत्रम् । "इषुणाऽभिचरतो व्याख्यातौ राजानं सन्दंशेनाभिचरेत् । जनपदं वज्रेण सन्दंशवज्रौ च राजानमभिचरन् व्यत्यासमेतौ प्रयुञ्जीत । व्यत्यासश्चैवं सूत्रभाष्यकृता व्याख्यातः । सन्दंशं कृत्वा वज्रं वज्रं कृत्वा सन्दंशमित्यनेन न्यायेन । ततो ज्योतिष्टोमः शान्त्यर्थ इति । मानवे—

**विश्वजित्परिवासाश्च ॥२९॥ न वा स्वसम्बन्धात् ॥३०॥ एकराजमेव पूर्वेणाभिचरेत् ॥३१॥ जनपदं वज्रेण ॥३२॥ व्यत्यासं वेनौ प्रयुञ्जीत ॥३३॥ शमित्वा स्तृत्वा वा प्रतिष्ठामेन यजेत शान्त्यर्थेन शान्त्यर्थेन ॥३४॥११॥**

---

"सन्दंशेनाभिचरत् यजेतेन्द्रवज्रेण षोडशिना राज्ञो विजिगीषमाणो यजेत तीव्रसुता व्याख्याताः सिद्धावेदिकालाद्यावद्यूपं वेदिमुद्धन्ति प्राचीमेकादशिनीं संमिनोति ऋषभाणां द्वादश सहस्रं दक्षिणाऽश्वसहस्रं च । प्रसङ्गादन्येऽपि एकाहा लिख्यन्ते–

मानवे–"अग्निष्टोमा द्वादशाग्निष्टोमा उक्थ्या वा सर्वे अयुतदक्षिणास्तैः श्रीकामो यजेत ऋषिष्टोमाः षोडशासोर्यामाणः सर्वेऽप्ययुतदक्षिणास्तैः सर्वकामो यजेदि"ति । काठके–"इन्द्रस्तोमेन राजन्यो वीर्यकामोऽयुतं दक्षिणा" ।

"इन्द्रवज्रेण स्वाराज्यकामो ब्राह्मणो वा पुरोधाकामो वा बर्हिर्ष्यामवकामिश्रया वोरूपाव्या माहेन्द्रस्तोत्रमुपाकरोति" इति । विश्वेषां देवानां वैश्वदेवेन पशुकामोऽमावास्यायाममावास्येनेष्ट्वा दीक्षत एकादाहा तिस्र उपसदोऽप्रवर्ग्यवांस्तुल्यं पूर्वेण तरुणा शतमुपाकरोति नात्र प्राणभक्षास्तद्धेनुशतं दक्षिणेति ।

काठके–"अथैकाहानां सौमिकं तत्र विकारानानुक्रमिष्यामो गोआयुषी विश्वज्योतिस्तीव्रसुत्पुनस्तोम इन्द्रस्तोम इन्द्राग्न्योः कुलाय ऋषभो गोसवो मृत्युसव इन्द्रसव इत्युक्थ्याः पूर्वश्चतुष्टोमोऽन्तरऽ उक्थ्यस्तस्मिन्नग्निष्टोमचमसानुन्नीय त्रिषु पात्रेषु उक्थ्यं विगृह्य तैः सह प्रचरेदुत्तरश्चतुष्टोम इन्द्रवज्रस्व सर्वज्योतिषश्च षोडशिन्यो ज्योतिरतिरात्रप्रभृतयश्चतुर्दशातिरात्रा अतोऽन्येऽग्निष्टोमा उक्थ्यं षोडशिनं गृह्णीयादग्निष्टोमे राजन्यस्यातिरात्राणां नवसप्तदशप्रभृतयश्चत्वारोऽषोडशिकाः षोडशिमन्तोऽन्य" इति । शाङ्खायनसूत्रे चातिबहव एकाहा उक्ताः सन्ति ते ततोऽवगन्तव्याः । ग्रन्थगौरवभीत्या नेह लिख्यन्ते ।

इति द्वाविंशस्यैकादशी कण्डिका ॥ ११ ॥

इति श्रीमिरग्निचित्सम्राट्स्थपतित्रिंशक्रतु कृष्णमहायाज्ञिकश्रीप्रजापतिसुतयाज्ञिकश्रीदेवकृतायां कात्यायनसूत्रपद्धतौ द्वाविंशतितमोऽध्यायः ॥ २२ ॥

॥ इति एकाहयनयज्ञपद्धतिः सम्पूर्णा ॥

॥ श्रीरस्तु । कल्याणमस्तु ॥

# त्रयोविंशोऽध्यायः ।

**द्वादशोपसत्का अहीना मासापवर्गाः ॥१॥ दीक्षाः सुत्योपसच्छेषेण ॥२॥ द्व्यहप्रभृतयो द्वादशाहपर्यन्ताः ॥३॥ तत्राम्नानादतिरात्रांश्चैके ॥४॥ दाशरात्रिकाण्यहानि द्व्यहादिष्वेकोच्चयेन तद्गुणदर्शनात् ॥५॥ सहस्रदक्षिणाः ॥६॥ चतूरात्रादिष्वधिकम् ॥७॥ प्राकृतं वा**

उक्ता एकाहाः । अथाहीना उच्यन्ते । द्व्यहप्रभृतयो द्वादशाहपर्यन्ता अहीनसंज्ञकाः । तत्र द्व्यहा द्विसुत्यास्त्रयोऽहीनाः सन्ति । त्रिसुत्याः पञ्च । चतुः सुत्याश्चत्वारः । पञ्चसुत्यास्त्रयः । षट् सुत्यास्त्रयः । सप्तसुत्याः सप्त । एकोऽष्टसुत्यः । द्वौ नवसुत्यौ । चत्वारो दशसुत्याः । एकादशसुत्य एकः पौण्डरीकः । द्वादशसुत्या नानाप्रकारा अनन्ता द्वादशाहा इति । एतेषां मध्ये द्वादशाहजामदग्न्यचतूरात्रव्यतिरिक्ताः सर्वे मासापवर्गाः । मासेन त्रिंशद्दिनात्मकेन सावनेन समाप्यन्ते । न न्यूनाधिकेन । सर्वेषां द्वादशोपसदो भवन्ति ।

तत्र त्रिंशद्दिनमध्ये द्विचतुःपञ्चादीनि सौत्यान्यहानि परिगण्य द्वादशोपसदश्च परिगण्य दीक्षोपसत्संख्यया रुद्धेभ्यस्त्रिंशद्दिनात्मकमासमध्ये यावन्त्यहान्यवशिष्यन्ते तावन्त्यो दीक्षा भवन्ति । सर्वेऽहीनाः सहस्रदक्षिणा भवन्ति । चतूरात्रादिषु किञ्चिदधिकं गवां सहस्रं दक्षिणा भवन्ति । अस्मिन् पक्षे हिरण्यादिनिवृत्तिः । अथवा प्रत्यहं प्राकृतं गवां शतं हिरण्यादि च दक्षिणा भवति । पौण्डरीके गवामयुतं दशसहस्रं दक्षिणा ।

सर्वेष्वहीनेषु सहस्रादिका दक्षिणाः प्रत्यहं समविभागेन ददाति । विभागे क्रियमाणे या अधिका भवन्ति ता अन्त्येऽहनि दीयन्ते । अत्र येष्वहीनेषु सहस्रमेव पूर्णं दक्षिणा न न्यूनाधिकं तेषु प्रत्यहमंशवदाभ्यौ भवतो नाधिकसहस्रदक्षिणेषु ।

सहस्रदक्षिणेषु किञ्चिदधिकसहस्रदक्षिणेषु च तिस्रोऽनूबन्ध्यास्त्रैधातव्युदवसानीया च । सहस्रदक्षिणावरेषु चेत्युक्तत्वात् । स यः सहस्रं वा भूयो वा दद्यात्स एनाः सर्वा आलभेतेति । "अथो यः सहस्रं वा भूयो वा दद्यात्तस्याप्युदवसानीया स्यादि"ति श्रुतत्वात् । प्राकृतं वा प्रत्यहमित्यनेन चतूरात्रादिषु प्रत्यहं प्राकृतदक्षिणापक्षे नांशवदाभ्यौ, नैव तिस्रोऽनूबन्ध्याः, नापि त्रैधातव्युदवसानीया ।

प्रत्यहम् ॥८॥ पाण्डरीकेऽयुतम् ॥९॥ समविभक्ताः प्रत्यहं ददाति ॥१०॥ अन्त्येऽहन्यधिका ॥११॥ त्रयोदशातिरात्राः ॥१२॥ चत्वारोऽषोडशिकाः प्रथमाः ॥१३॥ प्रजातिकामस्य नवसप्तदशः ॥१४॥ ज्येष्ठस्य ज्यैष्ठिनेयस्य विषुवान् ॥१५॥ गौर्भ्रातृव्यवतः ॥१६॥ स्वर्गकामस्यायुः

---

अत्र छन्दोगसूत्रम् । "पौर्णमासीदीक्षा मासापवर्गा अहीनास्तेषां द्वादशोपसदः षडिति धानञ्जय्य एकत्रिंशेऽहनि यज्ञपुच्छं त्रिंशतेति । मानवसूत्रे—"उपरिष्टादतिरात्रा द्व्यहप्रभृतयोऽहीना द्वादशाहपर्यन्ताः पौर्णमासीदीक्षा मासापवर्गा उपसत्सुत्यानां शेषेण दीक्षा अन्यत्र वचनादि"ति। अतो वचनादहीनानां पौर्णमास्यां दीक्षा भवन्ति। अत्र सूक्तक्रमवशात्प्रथमं दशातिरात्रा एकाहाः प्राकृतदक्षिणा अभिधीयन्ते ।

छन्दोगसूत्रे चैतेऽपि मासापवर्गाः सहस्रदक्षिणाः । तेषां मध्ये प्रथमद्वितीयतृतीयचतुर्था अषोडशिकाः षोडशिग्रहवर्जिता भवन्ति । तत्र प्रजातिकामस्य नवसप्तदशो नामातिरात्रः षोडशीरहितः प्राकृतदक्षिणो भवति । प्रजातिः प्रजा । ज्येष्ठस्य ज्यैष्ठिनेयस्य विषुवानित्येवं संज्ञोऽषोडशीकोऽतिरात्रो भवति । यस्या योषितो ज्येष्ठो भ्राता विद्यते सा ज्येष्ठिनी तस्याः पुत्रो ज्यैष्ठिनेयः ।

ताद्दशो यः पुमान् भ्रातॄणां मध्ये ज्येष्ठः सोऽत्राधिकारीति माधवाचार्यः ।

"नैश्चिन्त्यमनुजानां यज्ज्यैष्ठिनेयं तदुच्यते ।

"तत्कामस्याग्रजस्यात्र विषुवान्बोध्यते मघौ" इति वासुदेवः ॥२॥

भ्रातृव्यवतो गौरतिरात्रो भवति । अयमषोडशिकः । भ्रातृव्याः शत्रवो विद्यन्ते यस्य स भ्रातृव्यवान् । तस्य भ्रातृव्यवतः ॥ ३ ॥

स्वर्गकामस्यायुरतिरात्रोऽषोडशिको भवति । अथवाऽऽमयाविनो रोगिणो रोगोपशान्तये आयुरतिरात्रो भवति ॥ ४ ॥

अथ सर्वे सषोडशिका अतिरात्राः । तत्र ऋद्धिकामस्य ज्योतिष्टोमोऽतिरात्रो भवति ॥ ५ ॥ पशुकामस्य विश्वजिदतिरात्रो भवति । अत्राश्वदाभ्यग्रहणम् । अयं सर्वपृष्ठश्चेत्सर्वेऽतिग्राह्या गृह्यन्ते । सर्वाणि रथसंसारणादीन्युपाकरणानि च माध्यन्दिने सवने वैराजादिषु चतुर्षु पृष्ठेषु भवन्ति । तत्र रथसंसारणं दुन्दुभिशब्दोऽरणी च । एतानि त्रीणि वैराजानि । अवशिष्टानामेकैकं त्रिषु निष्केवल्ये तृतीयसवनोक्थ्यविग्रहेषु । अप्तोर्यामवद्धोतृप्रत्ययाः प्रतिगराः ॥ ६ ॥

॥१७॥ आमयाविनो वा ॥१८॥ ज्योतिष्टोमविश्वजित्त्रिवृत्पञ्चदशसप्तदशैकविंशा यथासंख्यमृद्धिपशुब्रह्मवर्चसवीर्यान्नाद्यप्रतिष्ठाकामानाम् ॥१९॥ अप्तोर्यामः प्र प्रव यस्मात्पशवो भ्रंशेरन् ॥२०॥ अभिजिद् भ्रातृव्यवतः ॥२१॥

ब्रह्मवर्चसकामस्य त्रिवृदतिरात्रो भवति ॥ ७ ॥ वीर्यकामस्य पञ्चदशस्तोमकोऽतिरात्रो भवति ॥ ८ ॥ अन्नाद्यकामस्य सप्तदशस्तोमकोऽतिरात्रो भवति ॥ ९ ॥ प्रतिष्ठाकामस्यैकोनविंशस्तोमकोऽतिरात्रो भवति ॥ १० ॥ यस्माद्यजमानात्प्रप्रेव प्राप्ताः प्राप्ता इव पशवो भ्रंशेरन् तस्याप्तोर्यामोऽतिरात्रो भवति ॥ ११ ॥

अयं नित्याप्तोर्यामवत् । भ्रातृव्यवतो यजमानस्याभिजिदतिरात्रो भवति ॥ १२ ॥ बुभूषतो भूतिमिच्छतो यजमानस्य सर्वस्तोमोऽतिरात्रो भवति । अस्मिन्नतिरात्रे यूपैकादशिनी भवति । तत्र यूपैकादशिनीवत्सर्वं त्वाष्ट्रपशवन्तं भवति ।

काठके—"प्रजापतेर्ज्योतिरतिरात्रेण प्रजाकाम, इन्द्रस्य सर्वस्तोमेन वीर्यकामः, प्रजापतेरप्तोर्यामः प्रजाकामः पशुकामो वा पशुकामश्चेद्यजेत सहस्रदक्षिणं स्यात्तलुप्येरन्विश्वजिद्व्रतानि प्रजापतेर्नवसप्तदशेन प्रजाकाम, इन्द्रस्य विषुवता ज्यैष्ठ्यो ज्यैष्ठिनी ज्यैष्ठ्यकामो गवाऽन्तरिक्षमायुषा दिवं विश्वजिदभिजितोः सर्वजिता तुल्यमायुकामोऽप्यैष स्तोम अग्नेस्त्रिवृता तेजस्काम इन्द्रस्य पञ्चदशेन वीर्यकामः प्रजापतेः सप्तदशेन प्रजाकाम आदित्यस्यैकविंशेन रुक्कामोऽग्नेः सर्वजिता सदतिरात्रेण सर्वं जिगीषंस्तस्मिन्नग्निचित्या महाव्रतं चाभिगरापगरवर्जं पृथाकर्मणा भूमिदुन्दुभिं निघ्नन्ति ।

दशाष्टाविंशनीर्ददात्येकादशिनाः सवनीयाः स्युरुपालंभ्यो वैष्णवो वैश्वकर्मणः प्राजापत्यो वा तस्यैकादश्यां मनोतायां पार्श्वत उपावदाय नानाप्रचरेन्नैकादशिनीं मनोतां निकामेदि"ति ।

मानवे-"त्रयोदशातिरात्रास्तेषां प्रजापतेः प्रथमो ज्योतिरतिरात्र ऋद्धिकामो यजेतेन्द्रस्य सर्वस्तोमो भूतिकामो यजेत प्रजापतेरप्तोर्यामाः सर्वपृष्ठः सर्वकामो यजेत प्रजापतेर्नवसप्तदशो जातिकामो यजेतैतत्प्रभृतयोऽषोडशिकाश्चत्वार आदित्यानां स्तोमो विषुवान ज्येष्ठो ज्यैष्ठिनेयो ज्येष्ठकामो यजेत गोष्टोमेन पशुकाम आयुष्टोमेन स्वर्गकामोऽभिजिता भ्रातृव्यवान् विश्वजिता पशुकामोऽग्नेस्त्रिवृता तेजस्कामो यजेतेन्द्रस्य पञ्चदशो वीर्यकामो यजेत प्रजापतेः सप्तदशोऽन्नाद्यकामो यजेतादित्य-

**सर्वस्तोमो बुभूषतः ॥२२॥ यूपैकादशिनी चास्मिन् ॥२३॥१॥**

**द्व्यहास्त्रयः ॥१॥ अषोडशिकावतिरात्रा उत्तरयोः ॥२॥ आङ्गिरसचैत्ररथकापिवनाः ॥३॥ द्वितीयमुक्थ्यपूर्वमेके ॥४॥ प्रथमेन यजेत यः पौण्यो हीन इव स्यात् ॥५॥ द्वितीयेन प्रजाकामः ॥६॥ तृतीयेन स्वर्गकामः पशु-**

---

स्त्यैकविंशो बृहत्पृष्ठः प्रतिष्ठाकामो यजेत सर्वत्र पञ्चदशी रात्रिस्त्रिवृत्सन्धिरि”ति ॥ इति अषोडशातिरात्रा उक्ताः ।

इति त्रयोविंशस्य प्रथमा कण्डिका ॥ १ ॥

---

अथाहीना लिख्यन्ते । तत्र द्व्यहास्त्रयः । आङ्गिरसचैत्ररथकापिवन संज्ञाः । तत्र प्रथमेनाङ्गिरससंज्ञकेन यः पौण्यो हीन इव पुण्यवानपि हीन इव श्रौतस्मार्त्तेषु कर्मसु साधुः पौण्यस्तादृशोऽपि सन् यः पुमान् हीन इव स्यात् पुण्यात्मनां सर्वैः पूज्यानां मध्ये हीन इव पूजारहित इव भवेत्स यजेत ।

अत्र ताण्ड्ये—“ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहः सर्वस्तोमोऽतिरात्र उत्तममि”ति । तत्र पौर्णमास्यामृत्विग्वरणादि । चैत्रशुक्लद्वितीयायामिति सम्प्रदायः । दीक्षाः षोडश । उपसदो द्वादश । द्वे सुत्ये । तत्र पार्ष्ठिकं प्रथममहः । द्वितीयः सर्वस्तोमोऽतिरात्रः । अन्वहमैन्द्राग्नः सवनीयः स्तोमायनं वा यथास्वम् । अश्वदाभ्यग्रहणम् । सहस्रं दक्षिणा । प्रत्यहं पञ्च शतानि दीयन्ते । नाश्वाहुतिः । श्वः सुत्यामिति प्रैषः । समित्स्वाध्यायार्थं गमनम् । पत्नीसंयाजान्तमहः । माध्यन्दिने प्रागच्छावाकविग्रहादिदं तृतीयसवनमिति मन्त्रेणाधवनीयेऽवनयनानन्तरं द्वितीयं सुत्यार्थं पुनर्वसतीवरिग्रहणं परिहरणात्पूर्वं वा ।

सुब्रह्मण्याह्वानानन्तरं सर्वेष्वग्निषु यजमानस्य समिदाधानम् । यद् द्वादशाहे उक्तं तत्सर्वं चोदकेनेह प्राप्यते । अतिरात्रे तु श्वः सुत्या स्वाध्यायश्च न भवतः । अनुबन्ध्यास्तिस्रस्त्रैधातव्युदवसानीया च । इति प्रथमो द्व्यहः ।

मानवे—“आङ्गिरसो द्व्यहानां प्रथमस्तेन यजेत यः पौण्यो हीन इव यजेत प्रजाकामः पशुकामो वा यजेत । ज्योतिरग्निष्टोमः पूर्वं सर्वस्तोमोऽतिरात्रः षोडशिमानुत्तरमि”ति । काठके—“चत्वारो द्व्यहा आङ्गिरसः पूर्वपुरुषैर्हीनस्य ज्योतिरग्निष्टोमः प्रथममहरायुरतिरात्र उत्तरमि”ति । द्वितीयश्चैत्ररथो द्व्यहः प्रजाकामस्य । अत्र प्रथमोऽग्निष्टोमो

कामो वा ॥७॥ त्र्यहाः पञ्च ॥८॥ गर्गवैदच्छन्दोमान्तर्व-
सुपराकाः ॥९॥ द्वितीये अग्नृनोऽतिरात्राः सर्वे राज्य-

उक्थ्यो वा । "द्वितीय उक्थ्यः पूर्वमेक" इति वचनात् ।

अत्र ताण्ड्य "अथ यस्य ज्योतिरुक्थ्यं पूर्वमहर्भवत्यायुरतिरात्र उत्त(म)" इति । अयमुक्थ्यो नापूर्वः, किन्तु पार्ष्ठिकस्यैव प्रथमस्य संस्थान्तरम् । द्वितीयोऽषोडशिकोऽतिरात्रः । "अषोडशिकावतिरात्रा उत्तरयो-रि"ति वचनात् । अन्यत्सर्वं प्रथमवत् । मानवे—"चैत्ररथेन राजा विजिगीषमाणो यजेत ज्योतिरुक्थ्यः पूर्वमायुरतिरात्रः षोडशिमानुत्तरमिति ।

तृतीयः कापिवनसंज्ञो त्र्यहः सर्वकामस्य पशुकामस्य वा । तत्र प्रथमं पार्ष्ठिकमग्निष्टोमसंस्थं तद्धर्मकं द्वितीयोऽषोडशिकोऽतिरात्रः । मानवे—"कापिवनेन यजेत य इच्छेद्रूक्षः पशुमान्स्यामिति यो वा पशुमान् रूक्ष इव मन्येत प्रजाकामः पशुकामो वा त्रिवृत्पञ्चदशोऽग्निष्टोमः पूर्वं सर्वस्तोमोऽतिरात्रः षोडशिमानुत्तरमि"ति ॥

काठके—"अरूक्षताय कापिवनस्त्रिवृत्पञ्चदशोऽग्निष्टोमः प्रथममहरायुरतिरात्र उत्तममिति चतुथ्र्युष्टिद्विरात्रे वृष्टिकामो यजेत चतुर्विंशा उक्थ्यौ बृहत्सामानावि"ति । अथ यस्य त्रिवृत्पञ्चदशोऽग्निष्टोमः पूर्वमहरायुरतिरात्र उत्तममि"ति ताण्ड्ये श्रुतत्वात् । अषोडशिकावतिरात्रावित्युक्तेः । इति तृतीयो त्र्यहः ।

काठके—"चैत्ररथः प्रजाकामान्नाद्यकामयोर्ज्योतिरुक्थ्यः प्रथममहरायुरतिरात्र उत्तममि"ति ।

तृतीयः कापिवनसंज्ञो त्र्यहः स्वर्गकामस्य पशुकामस्य वा । तत्र प्रथमं पार्ष्ठिकमग्निष्टोमसंस्थं तद्धर्मकम् । द्वितीयोऽषोडशिकोऽतिरात्रः । मानवे-"कापिवनेन यजेत य इच्छेद्रूक्षः पशुमान्स्यामिति यो वा पशुमान् रूक्ष इव मन्येत प्रजाकामः पशुकामो वा त्रिवृत्पञ्चदशोऽग्निष्टोमः पूर्वं सर्वस्तोमोऽतिरात्रः षोडशिमानुत्तममि"ति ।

अथ पञ्चाहीनास्त्रिसुत्याः । गर्गवैदच्छन्दोमान्तर्वसुपराकसंज्ञाः । तत्र प्रथमो गर्गत्रिरात्रः । तत्र पौर्णमास्यामृत्विग्वरणादि । चैत्र शुक्लतृतीयायामिति सम्प्रदायः । पञ्चदश दीक्षाः । द्वे प्रथमे अहनी पार्ष्ठिके तद्धर्मके । प्रथममग्निष्टोमसंस्थं द्वितीयमुक्थ्यसंस्थम् । तृतीयोऽतिरात्रः । प्रत्यहमैन्द्राग्नः सवनीयः यथास्वं स्तोमायनं वा । अंशवदाभ्यग्रहणम् । आद्ययोरन्होः पक्षेऽतिग्राह्यग्रहणम् । सहस्रं दक्षिणा । तेन तिस्रोऽनूबन्ध्याः त्रैधातवी च ।

**कामस्य ॥१०॥ अन्तर्वसुः पशुकामस्य ॥११॥ पराकः स्वर्गकामस्य ॥१२॥ चतुरहाश्चत्वारः ॥१३॥ अत्रिचतु-**

मानवे—"विश्वेषां देवानां गर्गत्रिरात्रेण सर्वकामो यजेतामुं च लोकमभिजिगीषं दशरात्रस्यादितस्त्र्यहस्तस्योत्तरे अहनी विपरीते तस्मिन् रात्रिः सषोडशिका समान्वहं साशिरं दुहन्ति दक्षिणाकाले त्रिरूपां पष्ठौहीं रूपसम्पन्नां सहस्रमुत्काल्य त्रयस्त्रिंशतं त्रीणि च शतानि ददाती"त्यादि।

काठके "षट् त्रिरात्रा गर्गत्रिरात्रः प्रजायाः पशूनां भूमानमिच्छतोऽग्निष्टोम उक्थ्योऽतिरात्र" इति। अत्र सहस्रदक्षिणे त्रिरात्रे सहस्रं त्रिधा विभज्य प्रत्यहं गवां त्रीणि शतानि त्रयस्त्रिंशदधिकानि दानार्थं नयन् रोहिणीं रक्तवर्णामुपध्वस्तां वर्णान्तरेण मिश्रितामपवीतामृषभेणाभुक्तामेवंविधां साहस्रीं गामतिरेचयति। अथवा त्रिरूपां वर्णत्रयोपेतां साहस्रीं तां प्रथमं नयेत्। अथवा ऽन्त्येऽहनि तासां गवां पश्चान्नयेत्। ततो हविर्धानाग्नीध्रयोरन्तराले समागतामेतां साहस्रीं गामध्वर्युरा जिघ्रेति मन्त्रेण द्रोणकलशमाघ्रापयति।

ततो यजमानोऽस्याः साहस्र्या गोर्दक्षिणे कर्णे इडे रन्त इति मन्त्रं स्वरेण जपति। अस्य मन्त्रस्यान्ते ब्रूतादित्यस्य पदस्य स्थाने वोचेरित्येतत्पदं वा प्रयोज्यम् देवेभ्यो मा सुकृतं वोचेरित्येवम्। साहस्र्या गोः प्रथमेऽहनि नयनपक्षे एतावदद्य कर्त्तव्यम्। यदा द्वितीयेऽहनि गवां पश्चात्साहस्री नीयते तदा द्रोणकलशाघ्रापणादि तदेव कुर्यात्। उभयपक्षेऽप्यस्या दानमनूबन्ध्यवपाहोमान्ते उदवसानीयान्ते वा भविष्यति।

प्रथमेऽहनि चेत्साहस्री नीता तदाऽस्याः कर्णे जपान्तं कृत्वा तद्व्यतिरिक्ता गावो न्यूनाधिकेन दशकेनर्त्विग्भ्यो देयाः। तत्र विभागप्रतिपादकः श्लोकः—

"दशभ्यो दशकौ दत्वा चतुर्भ्योऽष्टौ च पञ्चकान्।
द्विकेन पूरयेत्षड्भ्यः षड्भ्यो द्विकमिति स्थिति"रिति॥

अस्यार्थः। तत्र प्रथमं क्रमेण ब्रह्मादिभ्यो दशभ्यः प्रतिहर्तृपर्यन्तेभ्य एकं दशकं दशधा विभज्यैकां गां दद्यात्। ततो द्वितीयं दशकं दशधा विभज्य तेभ्य एकैकां दद्यात्। ततस्तृतीयं दशकं पञ्चधा विभज्य ब्राह्मणाच्छंस्यादिभ्यः पञ्चभ्यः पञ्चभ्यः पोतृपर्यन्तेभ्यो द्वे द्वे दद्यात्। ततश्चतुर्थं दशकं पञ्चधा विभज्य ब्राह्मणाच्छंसि प्रस्तोतृ मैत्रावरुण प्रतिप्रस्थातृ प्रतिहर्तृभ्यो द्वे द्वे दद्यात्। ततः पञ्चमं दशकं विषमं त्रेधा विभज्याच्छावाकाय चतस्रो दत्वाऽग्नीत्सुब्रह्मण्याभ्यां तिस्रस्तिस्रो दद्यात्।

र्वीरजामदग्न्यवसिष्ठसाृसर्पविश्वामित्राः ॥१४॥ जाम-

ततः षष्ठं दशकं विषमं त्रेधा विभज्य चतस्रो नेष्ट्रे दत्वा ग्रावस्तुदुन्नेतृभ्यां तिस्रस्तिस्रो दद्यात् । ततः सप्तमं दशकं समं द्वेधा विभज्य ब्रह्मोद्गातृभ्यां पञ्च पञ्च दद्यात् । ततोऽष्टमं दशकं द्वेधा विभज्य ताभ्यामेव पञ्च पञ्च दद्यात् । ततो नवमं दशकं द्वेधा विभज्य होत्रध्वर्युभ्यां पञ्च पञ्च दद्यात् । ततो दशमं दशकं विभज्यैताभ्यामेव पञ्च पञ्च दद्यादिति ।

एवमेकं शतं प्राकृतविभागेन सर्वेषां दत्तं भवति । एवमेव द्वितीयं शतं देयम् । एवमेव तृतीयमपि शतं देयम् । अथ त्रयस्त्रिंशन्मध्यादेकं दशकं विभज्य ब्रह्मादिभ्यो दशभ्य एकैकां गां दत्वा द्वितीयं दशकमेतेभ्य एकैकमेव दद्यात् । ततस्तृतीयं दशकं पञ्चधा विभज्य ब्राह्मणाच्छंस्यादिभ्यः पोत्रन्तेभ्यः पञ्चभ्यो द्वे द्वे दद्यात् । तिस्रस्त्ववशिष्यन्ते । ता अद्य न दीयते ।

ततो द्वितीयेऽहन्येवमेव शतत्रयं दत्वा त्रयस्त्रिंशन्मध्यादेकं दशकं पञ्चधा विभज्य ब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृप्रतिहर्तृभ्यो द्वे द्वे दद्यात् । ततो द्वितीयं दशकं विषमं त्रेधा विभज्याच्छावाकाय चतस्रो दत्वाऽग्नीत्सुब्रह्मण्याभ्यां तिस्रस्तिस्रो देयाः ।

ततस्तृतीयं दशकं विषमन्त्रेधा विभज्य नेष्ट्रे चतस्रो दत्वा ग्रावस्तुदुन्नेतृभ्यां तिस्रस्तिस्रो देयाः । तिसृणामवशेषणम् । ततस्तृतीयेऽहनि शतत्रयं प्रथमाहर्दत्वा त्रयस्त्रिंशन्मध्यादेकं दशकं द्वेधा विभज्य ब्रह्मोद्गातृभ्यां पञ्च पञ्च दद्यात् । ततो द्वितीयं दशकं द्वेधा विभज्य ताभ्यामेव पञ्च पञ्च दद्यात् ।

ततस्तृतीयं दशकं द्वेधा विभज्य पञ्चाध्वर्यवे दत्वा पुनरपि पञ्चाध्वर्यव एव दद्यात् । ततस्तिस्रोऽवशिष्यन्ते । ततः सर्वेषामन्हामवशिष्टाः तिस्रस्तिस्र उपादाय तासु नवसु साहस्रीं दशमीं कृत्वा तं दशकमनूबन्ध्यवपाहोमान्ते उदवसानीयायां वा होत्रे दद्यात् । एतद्दशकदानानन्तरमन्यदपि युक्तरथादिकं यद्दास्यन्भवति तदपि तद्देवेच्छया ददाति। अथवा यस्मिन् यज्ञे द्वावुन्नेतारौ कार्यौ तौ चाश्रावणं विभागेन कुरुतः। आग्रयणस्य च विभागासंभावात्परार्थत्वादेक एवाश्रावणं कुर्यात् ।

तत्र य आश्रवणं न करोति एनां साहस्रादशतं तस्मै उन्नेत्रे वा दद्यात् पूर्वोक्त एव काले । अस्मिन्पक्षे प्रथमेऽह्नि शतत्रयदानानन्तरं त्रयस्त्रिंशन्मध्ये ये द्वे गावौ होत्रे दातव्ये भवतस्ते उन्नेत्रे देये न होत्रे । द्वितीयेऽहन्यपि त्रयस्त्रिंशन्मध्यात् यास्तिस्र उन्नेतुर्भागे आयन्ति ता होत्रे देया

दभ्रो विंशतिदीक्षः पुष्टिकामस्य ॥१८॥ उपसदः पुरो-

नोन्नेत्रे। तृतीयेऽहनि त्रयाणां शतानां मध्ये प्रतिशतमुन्नेतुर्भागे याश्चित-स्वस्तिस्रो गावो भवन्ति ता दात्रे देया इति। एवं सर्वेषु ज्ञेयम्। इति गर्गत्रिरात्रः।

अथ द्वितीयो वैदत्रिरात्रो राज्यकामस्य भवति। तत्र सर्वे त्रिवृत्स्तोमका अतिरात्रा भवन्ति। ते चापूर्वाः। अतस्तेषु पाष्ठिकधर्मा अतिग्राह्यादिका न भवन्ति। गवां सहस्रं दक्षिणा। तस्य विभागेन दानप्रकारो गर्गत्रिरात्रवत्। अत्राश्विनयागान्ते प्रतिप्रस्थाता शुक्रामन्थ्यादि कृत्वा मैत्रावरुणाय प्रातरनुवाकमुपाकृत्यान्तर्याम हुत्वा ग्रपोऽंशु पवित्रे द्रोणकलशे निदधाति। सशेषं होतृचमसन्निरोह्यादिकातिपूर्वस्यदाहो ग्रहग्रहणाद्या विप्रडूढोमात्कृत्वा सवनसन्तानं जुहोत्याग्नः प्रातः सवन इत्येवमन्तम्। शतातिरात्रे वक्ष्यमाणमहःसन्धानमत्रापि भवति समानन्यायात्। तथा च साङ्ख्यायनः "-द्विरात्रप्रभृतिष्वहःसङ्घातेषु यत्र होताऽऽश्विनं शंसेत्तत्र मैत्रावरुणः प्रातरनुवाकमनुब्रूयादिति। द्विप्रभृतिष्वतिरात्रगणेष्वित्यर्थः। इति वैदत्रिरात्रः।

अथ छन्दोमत्रिरात्रस्तृतीयः। तत्र प्रथमद्वितीये पाष्ठिके अहनी तद्धर्मके। तृतीयोऽतिरात्रः। गर्गत्रिरात्रवदन्यत्। इति छन्दोमः।

अथ चतुर्थस्त्र्यहोऽन्तर्वसुसंज्ञकः पशुकामस्य भवति। अत्रापि प्रथम द्वितीये अहनी पाष्ठिके। तृतीयोऽतिरात्रो गर्गत्रिरात्रवत्। इत्यन्तर्वसुः।

अथ पराकसंज्ञः। पञ्चमस्त्र्यहः स्वर्गकामस्य भवति। तत्र प्रथमद्वितीये अहनी पाष्ठिके तद्धर्मके। तृतीयोऽतिरात्रः। अन्यत्सर्वं गर्गत्रिरात्रवत्। इति पराकत्र्यहः। मानवे—"द्वितीयः प्रजापतेरश्वत्रिरात्रः स व्याख्यातः। इन्द्राग्न्योर्वैदत्रिरात्रो राजा विजिगीषमाणो यजेत त्रयस्त्रिवृतोऽतिरात्राः सर्वे षोडशिमन्त इति। तथा "आदित्यानां छन्दोमः पवमानः पशुकामो यजेतेन्द्रस्यान्तर्वसुर्वीर्यकामो यजेत देवानां पराकः स्वर्गकामो यजेत गर्गत्रिरात्रेण व्याख्याता येऽन्येऽश्वमेधादि"ति।

काठके च। "उक्तोऽश्वमेधो वैदत्रिरात्रः स्वाराज्यकामस्य त्रयस्त्रिवृतोऽतिरात्राः षोडशिमन्तश्छन्दोमपवमानान्तर्वसुपराकाणां व्यूढो यथा गर्गत्रिरात्रे पूर्वौ पशुकामस्योत्तरोऽन्नाद्यकामस्ये"ति।

अथ चतुःसुत्यावत्वारोऽहीना अत्रिचतुर्वीर जामदग्न्य वसिष्ठ सं ४ सर्प विश्वामित्रसंज्ञाः। तत्र प्रथमोऽत्रिचतुर्वीरः। तस्य पौर्णमास्यामारम्भः। चैत्रशुक्लचतुर्थ्यामारम्भ इति सम्प्रदायः। दीक्षाश्चतुर्दश। द्वाद-

डाशिन्यः ॥१६॥ अनुपसदं जुहोति ॥१७॥ आज्यधर्माः

शेोपसदः । चतस्रः सुत्याः । प्रथमद्वितीयतृतीयानि पार्ष्ठिकान्यहानि । तेषु प्रत्यहमेकैकस्यातिग्राह्यस्य ग्रहणं वा । प्रत्यहमैन्द्राग्नः सवनीयः स्तोमायनं वा । किञ्चिदधिकं गवां सहस्रं दक्षिणा प्रत्यहं वा यथाप्रकृति । सर्वेषु चतूरात्रादिषु अधिकसहस्रदानपक्षे तिस्रोऽनूबन्ध्यास्त्रैधातवी च । सह विभागेन प्रत्यहं दक्षिणादानमधिकानामन्त्येऽहनि दानम् ।

अत्र छन्दोगसूत्रम्–"तत्प्रभृतीनां भूयस्यः सुत्याभ्युच्चयेन" । तत्प्रभृतीनां चतूरात्रप्रभृतीनां भूयस्यः सहस्रादतिशयेन बह्व्यो दक्षिणा देयाः । सुत्याभ्युच्चयेन सुत्यावृद्धौ । यथा यथा सुत्या अभ्युच्चीयेरन् तथा तथा सहस्रं दक्षिणा वर्द्धेरन् । यथा दीयमानासु पौण्डरीकेऽयुतं सम्पद्यते । तथा ताः समं सर्वेष्वहःसु समविभागा दद्यात् । विभज्य विभज्य विभागम् । समानुपपत्तावन्त्येऽहनि भूयिष्ठाः ।

तद्यथा चतूरात्रेषु पञ्चविंशत्यधिकं शतं सहस्रद्वयं च यदा चतुर्द्धा समं विभज्यते तदा एकत्रिंशतं शताधिकानि पञ्च शतान्येकैकस्मिन् भागे भवन्ति । एका परिशिष्यते साऽन्त्येऽहनि देया । पञ्चाहेषु पञ्चाशदधिकानि द्वात्रिंशत् शतानि पञ्चधा विभज्य पञ्चाशदधिकानि षट् षट् शतानि प्रत्यहं ददाति । षडहेषु पञ्चसप्तत्यधिकानि त्रयश्चत्वारिंशत् शतानि षड्धा विभज्यैकान्नत्रिंशदधिकानि सप्त सप्त शतानि प्रत्यहं दीयन्ते । एकाऽधिका परिशिष्यते सान्त्येऽहनि दीयते । सप्ताहेषु च पञ्च पञ्च शतानि सप्तधा विभज्य पञ्चाशीत्यधिकानि सप्त सप्त शतानि प्रत्यहं दीयन्ते । पञ्चाधिकाः परिशिष्यन्ते ता अन्त्येऽनि देयाः । अष्टाहे च पञ्चविंशत्यधिकानि षट् षष्टि शतान्यष्टधा विभज्याष्टाविंशत्यधिकान्यष्टावष्टौ शतानि प्रतिसुत्यं दीयन्ते । एका परिशिष्यते साऽन्त्येऽहनि देया ।

नवरात्रयोस्तु पञ्चाशदधिकानि सप्त सप्ततिशतानि नवधा विभज्य एकषष्ट्यधिकानि अष्टावष्टौ शतानि प्रत्यहं दीयन्ते । एका परिशिष्यते साऽन्त्येऽहनि देया । दशरात्रेषु पञ्च सप्तत्यधिकान्यष्टाशीतिशतानि दशधा विभज्य सप्ताशीत्यधिकान्यष्टावष्टौ शतानि प्रतिसुत्यं दीयन्ते । पञ्चाधिका अन्त्येऽहनि ।

पौण्डरीके तु छन्दोगसूत्रकृतैव विभाग उक्तः—अयुतमेकादशरात्रे दद्यान्नव नव पूर्वेष्वहःसु शतानि सहस्रमुत्तममि"ति । अस्तमिते सर्वेष्वग्निषु यजमानस्य समिदाधानम् । हारियोजनान्ते श्वःसुत्यामिति प्रैषः । अन्त्यवर्जं सर्वाण्यहानि पत्नीसंयाजान्तानि । इत्येवमादि सर्वं द्वादशाहवत् ।

**स्थानापत्तेः ॥१८॥ औषधधर्मा वा द्रव्यसामान्यात् ॥१९॥ अनुहोमाश्च पुरोडाशाः ॥२०॥ प्रत्युपसदमेकोच्चयेन क-**

---

मानवे—“अत्रेश्चतुर्वीरश्चतूरात्राणां प्रथमो य इच्छेच्चत्वारो मे वीरा आजायेरन्निति स एतेन यजेताग्निष्टोम उक्थ्योऽतिरात्र” इति । काठके च । “चत्वारश्चतूरात्रा अत्रेश्चतुर्वीरेण चतुर्वीरकामो यः कामयेत चत्वारो मे पुत्रा ब्रह्मवर्चस्विनः सभेया वीरा जायेरंश्चत्वारि च वीर्याणि कुर्यादिति ब्राह्मणाश्चत्वारो म इषव्याः शूरा महारथा वीराः पुत्रा जायेरंश्चत्वारि च युद्धानि कुर्यादिति राजन्योऽग्निष्टोम उक्थ्यः षोडश्यतिरात्रः” इति ।

अथ जामदग्न्यश्चतूरात्रः पुष्टिकामस्य भवति । अत्र विंशतिर्दीक्षाः द्वादशोपसदः चतस्रः सुत्या एवं षट्त्रिंशदहोभिः समाप्तिं प्राप्नोति । अतः शुक्लचैत्रत्रयोदश्यां प्रारम्भ इति सम्प्रदायः । पौर्णमास्यामिति सूत्रान्तरे । तत्र विशेषः—

उपसदः पुरोडाशिन्यो भवन्ति । उपसदा सहोपक्रमः । तत्र यदौपसदं कर्म तत्सर्वं मन्त्रवत् । साधारणं चामन्त्रवदेव । पुरोडाशानां यदसाधारणं निर्वापकण्डनपेषणकपालोपधानादि तत्सर्वं तूष्णीम् । तत्र यत्कर्मोपसदं नास्ति तत्सर्वं जुहोतिना प्रयुज्यते । तत्राग्नेय एककपालः प्रथमायामुपसदि ।

पात्रासादने दशगणे एकं कपालं विशेषः । पात्री धान्यं पवित्रे, पवित्रच्छेदनानि च । उपवेषः । संयवनोदकम् । स्थाली आज्यश्च । वेदश्च । उदककरणम् । इध्मो बर्हिः । स्रुवो जुहूः । उपभृद्ध्रुवा च । पात्री योक्त्रम् । यूनः कुशाश्च । आतिथ्याप्रस्तरविधृती परिधयः । होतृषदनम् । पूर्णपात्रं कर्मापवर्गा चेति ।

शूर्पादानादि ग्रहणं सादनान्तम् । पवित्रकरणादि पात्रप्रोक्षणान्तम् । पुरोडाशानां तूष्णीं प्रेक्षणम् । कृष्णाजिनादानादि कुक्कुटाहननं कण्डनं पेषणं संयवनं श्रपणं चाप्त्योदकनिनयनान्तं सर्वं तूष्णीम् । ततः स्तम्बयजुर्हरणादि सर्वं समन्त्रकमौपसदम् । ध्रुवायाः पात्र्याश्च तूष्णीं संमार्गः । पत्नीसंनहनाद्यन्यतरावेक्षणान्तम् । ध्रुवायां तूष्णीं चतुर्गृहीतग्रहणम् ।

तत इध्मप्रोक्षणाद्यौपभृतासादनान्तम् । ततस्तूष्णीं ध्रुवाया आसादनम् । ततः पुरोडाशविभस्मीकरणादि तूष्णीं कपालोद्वासनान्तम् । मन्त्रेणाज्यस्थाल्या आसादनम् । तूष्णीं पुरोडाशस्य । यथासादितमाल-

पालान्येककपालप्रभृतीनामाग्नेयाश्विनवैष्णवसौम्यसा-
वित्रधात्रमारुतबार्हस्पत्यमैत्रवारुणैन्द्रवैश्वदेवाः ॥२१॥२॥

तेषाᳪं होमः ॥१॥ अग्ने वेर्होत्रं वेरध्वरमा पितरं वैश्वानरमवसे करिन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥२॥ देवावश्विनौ मधु कशयाऽऽयेमं यज्ञं यजमानाय मिमिक्षतमिन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥३॥ देव विष्ण उर्वस्यास्मिन्यज्ञे यजमानायाधि विक्रमस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ४ ॥ देव सोम रेतोधाऽ अस्यास्मिन्यज्ञे यजमानायेधीन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ५ ॥ देव सवितः सुमावित्रमस्यास्मिन्यज्ञे यजमानाया सुवस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥६॥

---

म्भः । आत्मालम्भः । होतुरामन्त्रणाद्यग्निसमार्गान्तम् । ततस्तूष्णीं निन्हवः । पात्रान्तरे जौहवमुत्सार्य सकृद्गृहीतेन तिष्ठत एव वोत्तराघार इन्द्राय स्वाहेति । ध्रुवासमञ्जनम् । स्रुचौ निधायाश्रावणादि सीद होतरित्यन्तम् ।

ततो जुहोतिवदग्नये स्वाहा सोमाय स्वाहेत्याज्यभागौ । ततः पात्रान्तराज्जौहवं जुह्वामासिच्याग्निसोमविष्णुयागाः । २

इति त्रयोविंशस्य द्वितीया कण्डिका ॥ २ ॥

---

ततो जुह्वामुपस्तारादि सर्वहुतं पुरोडाशमग्नेर्वेहोत्रं वेरध्वरमिति मन्त्रेण जुहोति । उत्तरास्वप्युपसत्सु पुरोडाशाः सर्वहुता एव कर्त्तव्याः ।

ततः सोमाप्यायनादिनिन्हवान्तम् । पवित्रप्रतिपत्तिः । सम्मार्गः । व्यूहनमभ्युदय परिध्यञ्जनाद्यग्नीधे समर्पणान्तम् । आत्मालम्भोदकालम्भौ । संस्रवाहुतिः । धुरि निधानम् । तूष्णीं वेद्यालम्भः । वेदयोक्त्रविमोको मन्त्रेण । तूष्णीं समिष्टयजुर्होमः । बर्हिर्होमो मन्त्रेण । प्रणीताविमोकः । तूष्णीं कणापासनम् । पूर्णपात्रनिनयनादि कर्मापवर्गान्तं गार्हपत्योपस्थानवर्जं सर्वम् ।

ततः सुब्रह्मण्याह्वानम् । अपराह्णेऽप्येवमेव सपुरोडाशोपसत्कार्या । एवमेव द्वितीयायामुपसदि आश्विनो द्विकपालः पुरोडाशः । देवावश्विनाविति तस्य होममन्त्रः । अपराह्णेऽप्येवं तृतीयायां वैष्णवस्त्रिक-

देव धातः सुधातायास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥७॥ देवा ग्रावाणो मधुमतीमद्यास्मिन्यज्ञे यजमानाय वाच वदतेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥८॥ देव्यनुमते ऽन्वद्येमं यज्ञं यजमानाय मन्यस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥९॥ देव्यदिते स्वादित्यमद्यास्मिन्यज्ञे यजमानायासुवस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥१०॥ देव्य आपो नंनम्यध्वमद्यास्मिन्यज्ञे यजमानायेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥११॥ सदःसदः प्रजावान्भुर्जुषाण इन्द्राय देवेभ्यो जुहुता हविः स्वाहाः ॥१२॥ देव त्वष्टः सुरतोधा

पालः । देव विष्णविति होमः । चतुर्थ्यां सौम्यश्चतुः कपालः । देव सोमेति तस्य होमः । पञ्चम्यां सावित्रः पञ्चकपालः । देव सवितरिति होमः । षष्ठ्यां धात्रः षट्कपालः । देव धातरिति होमः । सप्तम्यां मारुतः सप्त कपालः । देव्यदित इति होमः ।

दशम्यां वारुणो बार्हस्पत्योऽष्टाकपालः । देव्य आप इति तस्य होमः । एकादश्यामैन्द्र एकादशकपालः । सदः सदः प्रजावानिति होमः । द्वादश्यामुपसदि वैश्वदेवो द्वादशकपालः । देव त्वष्टरिति होमः । सर्वेषां प्रथमोपसद्वत्सर्वं कर्म भवति । यज्ञसमाप्त्यनन्तरञ्च द्वादशस्वहःसु प्रत्यहमेतेषां द्वादशानां हविषामेकैकेन प्रतिलोमं वैश्वदेवादारभ्य व्युत्क्रमेणाग्नेयपर्यन्तं यजेत् । एता उद्धरणादिकर्मापवर्गान्ताः समन्त्रकाः द्वादश इष्टयः प्राकृतदक्षिणाः प्रकृतिवदनुष्ठेयाः । अन्यत्सर्वमस्मिन्यज्ञेऽत्रिचतुर्वीरवत् ।

मानवे-"जमदग्नेर्द्वितीयोऽपरिमितां पुष्टिमिच्छन्यजेत विंशतिदीक्षा द्वादशोपसदोऽनूपसदं पुरोडाशांस्तूष्णीमुपचरितान् श्रपयित्वाऽलङ्कृत्वाऽऽज्यैः सह सादयत्युपसद्या प्रचर्याग्नेर्वैहोत्रं वेरध्वरमा पितरं वैश्वात्समवसेकमिन्द्राय देवेभ्यो जुहुतां हविरिति ऋजुं प्रतिष्ठितं हुत्वोपसदं जुहोति । तथाऽऽपराह्णिक्यामेतेन धर्मेणोत्तरासु द्विकपालं त्रिकपालमिति कपालाभ्युच्चयेना द्वादशकपालाद्देवावश्विनौ० हुतां हविर्देव विष्ण० तां हविर्देवसोम० देव सवितर्देवधात० देवा वाणो० देव्यनुमते० देव्यदिते० देव्य आपो० । सदः सदः प्र० देव त्वष्ट० । जुहुतां हविरिति स्वाहाकारान्तैरादधात्यग्निष्टोम उक्थ्यावतिरात्र" इति ।

काठके-"जामदग्न्यः पुष्टिकामस्याग्निष्टोमो द्वा उक्थ्यावतिरात्रः पुरो-

**अथास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहेति ॥१३॥ एतैः सुत्यान्ते द्वादशाहं यजते प्रतिलोममेकैकेन॥१४॥३॥**

---

उशिन्य उपसदोऽनुपसद् एकैक आग्नेय एककपाल आश्विनो द्विकपालो वैष्णवस्त्रिकपालः सौम्यश्चतुष्कपालः सावित्रः पञ्चकपालो धात्रः षट्कपालो मारुतः सप्तकपालो बार्हस्पत्योऽष्टाकपालो मैत्रो नवकपालो वारुणो दशकपाल ऐन्द्र एकादशकपालो वैश्वदेवो द्वादशकपालोऽग्ने वेर्होत्रं वेरित्यादि देव त्वष्टरित्यन्तं कात्यायनसूत्रवत् स्वाहेति पुरोडाशानां प्रतिनिगद्य होमा" इति ।

छन्दोगसूत्रे । "त्रयोदश्यामपरपक्षस्य दीक्षेत जामदग्नाय तस्य विंशतिर्दीक्षा द्वादशोपसदस्तत्रोपसत्सु पृथक् होमानध्वर्युर्जुहुयात् पुरोडाशास्तूक्ता ब्राह्मणेन समानदेवतयोः पूर्वाह्णापराह्णयोः अग्न वेर्होत्रमित्ये तत्प्रभृतय एषां होमाः" ।

तस्यावभृथादुदेत्य द्वादशाहमिष्टिभिर्यजेतेत एव प्रतिहोमाः पुरोडाशाः । तेनव विधिना समानावदानौ पूर्वाह्णापराह्णयोरिति तद्भाष्ये । अत्र यजत इति श्रवणाद्यागा एते ।

ततश्चासमाप्तिदिवसं प्रतिदिनमुद्धरणादि कर्मापवर्गान्ता सायं प्रातरेकैका इष्टिः कर्त्तव्या । प्रतिलोममिति वचनात्प्रथमेऽहनि वैश्वदेवो द्वादशकपालः प्रातःकाले सायंकाले च । द्वितीये ऐन्द्र एकादशकपालः । तृतीये वारुणो दशकपालः । चतुर्थे वारुणो नवकपालः । पञ्चमे बार्हस्पत्योऽष्टाकपालः । षष्ठे मारुतः सप्तकपालः । सप्तमे धात्रः षट्कपालः । अष्टमे सावित्रः पञ्चकपालः । नवमे सौम्यश्चरुः । दशमे वैष्णवस्त्रिकपालः । एकादशे आश्विनो द्विकपालः । द्वादशे चाग्नेय एककपाल इति । अत्र स्विष्टकृद्यागाभावः । एककपालस्य सर्वहुतत्वेनार्थलुप्तत्वात् ।

वसिष्ठसंसर्पो विश्वामित्रचतूरात्रश्चात्रिचतुर्वीरवत् । छन्दोगानां बह्वृचानां च विशेषोऽस्ति नाध्वर्यूणाम् ।

मानवे । "विश्वामित्रस्य सञ्जयो राजा विजिगीषमाणो यजेत त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्य एकविंशतिरात्र" इति । वसिष्ठसंसर्पः पठित एव नास्ति । काठके—"वसिष्ठस्य संसर्पः प्रजाकामस्य विश्वामित्रस्य सञ्जयो भ्रातृव्यवतो यः कामयेत सर्वं सञ्जयेयं सर्वासु प्रजासु सर्वेषु लोकेषु सर्वेषु भूतेष्वधिपतिः स्यामिति तयोर्व्यूहो यथा जामदग्न्ये" इति ।

इति त्रयोविंशस्य तृतीया कण्डिका ॥ ३ ॥

**पञ्चाहास्त्रयः ॥१॥ देवानां प्रथमः ॥२॥ द्वितीयः पञ्चशारदीयः ॥३॥ तेन यक्ष्यमाणः पञ्चवर्षाण्याश्वयुजीशुक्लेषु चतुस्त्रिंशतं पशूनालभते मारुतान् ॥४॥ वैश्य-**

---

अथ पञ्चाहा लिख्यन्ते । त्रयः पञ्चसुत्या अहीना भवन्ति । तत्र प्रथमो देवपञ्चाहः । अत्र चैत्रशुक्लपक्षस्य प्रारम्भः । पूर्णमास्यां प्रारम्भ इति सूत्रान्तरे । त्रयोदश दीक्षा द्वादशोपसदः । पञ्च सुत्याः । अत्र पृष्ठ्यकानि प्रथमानि चत्वार्यहानि तद्धर्मकाणि भवन्ति । पञ्चमोऽतिरात्रः । अंश्वदाभ्यग्रहणाभावः । अधिकसहस्रदक्षिणापक्षे पञ्चाशदधिकानि द्वात्रिंशतं शतानि पञ्चधा विभज्य पञ्चाशदधिकानि षट् षट् शतानि प्रत्यहं ददाति । प्रत्यहं गवां शतं वा दक्षिणा । प्रत्यहमैन्द्राग्नः सवनीयः स्तोमायनं वा । अधिकसहस्रपक्षे तिस्रोऽनूबन्ध्यास्त्रैधातवी च ।

पत्नीसंयाजान्तान्यहानि । अस्तमिते समिदाधानं सर्वेष्वित्यादि सर्वं द्वादशाहवत् । मानवे— 'विश्वेषां देवानामभ्याससंग्यः पञ्चाहो भ्रातृव्यवान् स्वर्गकामः पशुकामो वा यजेतादितः पञ्चाहो दशरात्रिकः पञ्चमे रात्रिरि"ति ।

काठके-"चत्वारः पञ्चाहा देवानामभ्याससंग्यो भ्रातृव्यवतोऽग्निष्टोमास्त्रय उक्थ्या अतिरात्र" इति । द्वितीयः पञ्चशारदीयसंज्ञः पञ्चाहः । तेन पञ्चशारदीयेन यक्ष्यमाणो यागात्पूर्वेषु पञ्चवर्षेष्वाश्वयुजीशुक्लेषु आश्विन शुक्लपक्षेषु सप्तम्यामष्टम्यां वा चतुस्त्रिंशतं मारुतान् पशूनाभते । तेषां मध्ये सप्तदशोक्षाणो वृषभाः साण्डा रेतःसेचनसमर्थाः पञ्चवर्षाः पृश्नयो विचित्रवर्णाः सप्तदश वत्सतर्योऽप्रवीतास्त्रिवर्षाः । एवं चतुस्त्रिंशत् ।

तत्र प्रथमे वर्षे वत्सतर्यो राजीवपृश्नयो भवन्ति । राजीवं कमलम् । तत्सदृशानि पृश्नीनि मण्डलानि चित्राङ्गानि शरीरे यासां ता राजीवपृश्नयः । मरुद्भ्यो जुष्टं नियुनज्मीति प्रत्येकभालम्भनम् । गणधर्मा एकादशिनीवत् । प्रथममुक्ष्णामालम्भनम् । ततो वत्सतरीणाम् । पर्यग्निकरणान्तरमुक्ष्णामुत्सर्गः । वत्सतरीभिरारब्धं कर्म परिसमापयन्ति ।

ततो द्वितीयवर्षे आश्विनशुक्लपक्षे तानुत्सृष्टानेवोक्ष्ण आनाय पुनरालभते । नवनीतपृश्नयः सप्तदश वत्सतर्यश्चान्या आनीयालभ्यन्ते । पूर्ववत् कर्म पर्यग्निकरणान्तं कृत्वोक्ष्णामुत्सर्गं कृत्वा वत्सतरीभिरेव समाप्तिं करोति । नवनीतसदृशानि पृश्नीति मण्डलानि शरीरे यासान्ता नवनीत पृश्नय इत्युच्यन्ते ।

स्तोमदक्षिणालिङ्गात् ॥५॥ उक्ष्णो वत्सतरीवर्णानुपूर्व्येण ॥६॥ अर्धा वत्सतर्यः ॥७॥ पर्यग्निकृतानुत्सृजन्त्यु-

ततस्तृतीये सम्वत्सरे आश्विनशुक्ले तानेवोक्ष्ण आनीय तथैव ते आलभ्यन्ते ।

सप्तदश वत्सतर्योऽरुणवर्णा अन्या आलभ्यन्ते । पूर्ववदेव पर्यग्निकरणान्ते उक्ष्णामुत्सर्गो वत्सतरीभिः परिसमाप्तिः । ततश्चतुर्थे वर्षे आश्विन शुक्लपक्षे त एव सप्तदशोक्षाण आलभ्यन्ते । पीतवर्णा अन्याः सप्तदशवत्सतर्यश्चालभ्यन्ते ।

पर्यग्निकरणानन्तरमुक्ष्ण उत्सृज्य वत्सतरीभिः कर्म परिसमाप्यते । ततः पञ्चमे वर्षे आश्विनशुक्लपक्षे त एव सप्तदशोक्षाणः सप्तदश सारङ्गाः कर्बुरा वत्सतर्यश्च मरुद्भ्यस्तथैवालभ्यन्ते । पर्यग्निकरणानन्तरमुक्ष्ण उत्सृज्य वत्सतरीभिः प्रारब्धं कर्म परिसमाप्यते । एवं पञ्च वर्षाणि तानेवोक्ष्णो नियुञ्जन्ति ।

अथ पञ्चवर्षमध्ये यज्ञसमाप्तिपर्यन्तं पशूनामापदि प्राप्तायां सत्यां प्रायश्चित्तान्युच्यन्ते । तत्र प्रथमं चरवोऽभिधीयन्ते । अप्सु उदकमध्ये पशौ मृते अपोनप्त्रियश्चरुर्भवति । अपोनप्त्रे जुष्टमिति याज्ञिकाः । अपोनपाते जुष्टमिति कर्कः । पशौ पलायिते पलाय्य यावत् जीवं गते वायव्यो वायुदेवत्यश्चरुर्भवति ।

यदि श्रवणः काणो वा कूटो वा पशुर्भवति तदा बार्हस्पत्यश्चरुर्भवति । श्रवणो रोगविशेषवान् । माधवीये ताण्ड्यभाष्ये श्रोणो वेति पाठो व्याख्यातः । श्रोणो रक्तवर्णो विद्धाकारस्त्वग्दोष इति । कूटो भग्नशृङ्गः काणः एकाक्षिविहीनः ।

तथा ताण्ड्ये—"यद्यन्धः स्यात्सौर्यं चरुं निरुप्यान्यमालभेतेति । तथा । पशा अवसन्ने अन्ययूथीयः षाण्डैर्युध्यमानस्य शिथिलीभावे नैर्ऋतश्चरुर्भवति । अत ऊर्ध्वं पश्वापद्येव पुरोडाशा अभिधीयन्ते । रुद्राभिमाने ज्वराभिभवे सति आग्नेयं रुद्रवते पुरोडाशो भवति । तथा पशुः संशीर्णश्चेत् अकस्माच्छरीरं कम्पयित्वा भूमौ पतितश्चेत् तदा भूम्यै एककपालः पुरोडाशो भवति स च सर्वहुतः । एककपालत्वात् ।

संशीर्णो रोगान्तरं विनाऽप्याहारापरिपाकेन शरीरपुष्ट्यभावात्क्षयेनावसन्न इति याज्ञिकाः । तथा पशुः प्रासहा हृतश्चेत् । प्रसह्य बलात्कारेण केनचित् धृतस्तदा इन्द्रायाष्टाकपालो भवति । तथा भोजनीयेनान्नाद्यजीर्णेन मृते प्राजापत्यो द्वादशकपालः पुरोडाशो भवति । मृतपशुं ब्राह्मणान्भोजयेत् ।

**क्ष्णो वत्सतरीभिः सꣳस्थापयन्ति ॥८॥ एवं पञ्च वर्षा-ण्युक्ष्णो नियुञ्जन्ति ॥९॥ षष्ठे सवनीया भवन्ति त्र्यस्त्र-**

---

अथवा मृतपशुमप्सु निक्षिपेत् । एतानि पश्वादिविहितानि प्रायश्चित्तानि पञ्चशारदीय एव भवन्ति यज्ञान्तरेषु । अथ प्रकृतमुच्यते । ये उक्षाण एवं पञ्चवर्षाण्यालभ्यालभ्य पर्यग्निकृता उत्सृष्टास्त एव षष्ठे वर्षे कार्त्तिकमासि सुत्यासु विभज्य सवनीयाः पशवो भवन्ति । प्रथमेषु पाष्ठिकेषु चतुर्ष्वहःसु त्र्यस्त्रयः प्रत्यहम् । उत्तमे अतिरात्रसंस्थे पञ्च । इन्द्रःमरुद्भ्यां जुष्टं नियुनज्मीति सर्वेषां नियोजने मन्त्रः ।

प्रत्यहमेकैकः पशुपुरोडाशः । सप्तदशप्राजापत्यवत्तन्त्रेण वपानां हविषाञ्च यागः । अन्यत्सर्वं प्रथमदेवपञ्चाहवत् । यो यजमानोऽहं प्रजया पशुधनादिभिश्च बहुः स्यां महान् स्यामिति इच्छति स एतेन पञ्चशारदीयेन यजेत । छन्दोगसूत्रे-"षष्ठे वर्षके मासि पञ्चशारदीयेन यजेत तस्य द्वादशोपसदः स्युः षडिति धानञ्जय्य" इति ।

अत्र द्राह्यायणः-"पञ्चशारदीये पशुबन्धैर्यजेत त उक्ता ब्राह्मणेन सप्तम्या मष्टम्यां वाऽऽश्वयुजीपक्षस्य वत्सतरीरेवाऽऽलभेरन्नुक्ष्णो विसृजेयुस्तेषां यावन्तो भ्रेषमाऽऽपद्येरंस्तावतोऽन्यान् यजुष्कृतानविसृजेयुस्तथारूपांस्ता-वद्वर्षान् षष्ठ्या शरदि कार्त्तिके मासि यजेत तस्य द्वादशोपसद इति । मानवे-

"पञ्चशारदीयेन भावं प्रेप्सन् यजेत । वैशाख्याममावस्यायां यजनीयेऽहनि पशुबन्धायोपवसति सिद्धमोपाकरणात्सप्तदश पृश्नीस्त्रिवत्सानुपाकरोति सप्तदशपृश्नीनुक्षाणः पञ्च वर्षाननूपरुद्धेति सर्वेषु पशुषूपाकरणं प्रोक्षणमुपायनं पर्यग्निकरणमुक्षणामुत्सर्जनञ्चेत्याभिः संस्थापयन्ति प्रायश्चित्तानि प्रासहा हरेयुरिन्द्राय प्रसह्वान एकादशकपालं निरुप्याज्यं तद्रूपं तद्वर्णन्तद्वयसमुपाकरोति ।

यदि कूटः कर्णःखञ्जो वा बार्हस्पत्यं चरुं यदि काणोऽन्धो वा सौर्यमेकादशकपालं यदि श्वभ्रं गर्तं वा भौममेकादशकपालं यदि प्रपतेद्वायव्यं चरुं यत् सीदेन्नैर्ऋतं चरुं यदन्योऽन्येनोपतापेत प्राजापत्यं द्वादशकपालं निरुप्याज्यं तद्रूपं तद्वर्णन्तद्वयसमुपाकरोति मारुत्यो वत्सतर्यः सम्वत्सरे राजीविन्यो द्वितीये कल्माष्यस्तृतीये नवनीत पृश्नीरूपाश्चतुर्थे पिशङ्गीः पञ्चमे सोमास्तस्मिन्यजनीये दीक्षतेऽष्टादश दीक्षा द्वादशोपसदस्त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदशोक्थ्यः पञ्चदशोक्थ्यः । सप्तदशोऽतिरात्र ऐन्द्रा मारुता उक्षाणः सवनीयाः त्र्यस्त्रय एकैकस्मिन्नहनि पञ्चोत्तम" इति ।

योऽन्वहमैन्द्रामारुताः ॥१०॥ पञ्चोत्तमे ॥११॥ यः कामयेत बहुः स्यामिति स एतेन यजेत ॥१२॥ पश्वापदि चरवः ॥१३॥ अपोनप्त्रियोऽप्सु मृते ॥१४॥ वायव्यः पलायिते ॥१५॥ बार्हस्पत्यः श्रवणकूटकाणश्चेत् ॥१६॥ नैर्ऋतोऽवसन्ने ॥१७॥ पुरोडाशाः परे रुद्राभिमानेऽग्नये रुद्रवते ॥१८॥ सꣳशीर्णश्चेदेककपालो भौमः ॥१९॥ प्रासहा हृतश्चेदिन्द्राय प्रसह्वने ॥२०॥ भोजनीयमृते प्राजापत्यो द्वादशकपालः॥२१॥ मृतं ब्राह्मणान्भोजयेत् ॥२२॥ अप्सु प्रासनम् ॥२३॥ निधानं वाऽदुष्टत्वात् ॥२४॥ अन्य-

---

काठके–"चत्वारः पञ्चाहा देवानामभ्यासंसंग्यो भ्रातृव्यवतोऽग्निष्टोमस्त्रय उक्थ्या अतिरात्रस्तथा पञ्चशारदीये व्यूढो मारुतो पञ्चशारदीयः पशुकामस्तेन यक्ष्यमाणः पञ्चसु कार्तिकीषु पौर्णमासीषु पशुबन्धैर्यजेत सप्तदशवर्गो मारुतीनां वत्सतरीणां प्रथीतानां विप्राह्णिणोनां पृश्नयः प्रथमेऽहनि नवनीतपृश्नयोऽरुणा द्वितीये राजीवास्तृतीये सारङ्गीः चतुर्थे पिशङ्गीः पञ्चमे सप्तदश पृश्नोक्षणः पञ्चवर्षानैन्द्रामारुतान्त्सह वसतीवरीभिरुपालभ्य पर्यग्निकृतानुक्षण उत्सृज्य मारुताभिस्तत्र समायन्त्संवत्सरे सोमास्तत्रैतेषामुक्षणस्त्रींस्त्रीन्सवनीयेष्वन्वहमुपालभेत पञ्चोत्तरे प्रथमादधि पशुबन्धादुक्षणं भ्रेषापत्तौ कृत्यं प्रायश्चित्तानामन्यद्रूपं तद्वयसम्प्रोक्ष्योपालभेत पशुप्रत्यभिमानेऽग्नये रुद्रवतेऽष्टाकपालो वसादनैर्ऋतश्चरुरसुमरणेऽपां नप्त्रीयोऽङ्गव्यापत्तौ बार्हस्पत्यः पलायिते वायव्यः प्रासहायत इन्द्राय प्रसह्वन एकादशकपालः संशारे भौम एककपालोऽन्येन मृत्युना मरणे प्राजापत्यश्चरुरि"ति । इति पञ्चशारदीयः ।

अथ तृतीयः पञ्चाहो व्रतवत्संज्ञो महाव्रतश्च भवति । सर्वजिद्वद्दीक्षा द्वादशोपसदः पञ्च सुत्यानि । तत्र प्रथमं ज्योतिः संज्ञमग्निष्टोमसंस्थम् । द्वितीयं गोसंज्ञमुक्थ्यसंस्थम् । तृतीयं महाव्रतमग्निष्टोमसंस्थम् । तत्र सर्वं गवामयनगतमहाव्रतवत्कर्म भवति । ततो गोसंज्ञमुक्थ्यसंस्थं चतुर्थम् ।

ततः पञ्चममायुः संज्ञमतिरात्रसंस्थमिति । अत्र द्वादशाहवत्सर्वे गणधर्मा भवन्ति । ये अहीना महाव्रतवन्तो भवन्ति ते सर्वे सर्वजिद्दीक्षा भवन्ति न तेषां मासापवर्गतानियमः ।

अपि दोषसंयोगात् ॥२५॥ न प्रकरणात् ॥२६॥ व्रतवानुत्तमः ॥२७॥ ज्योतिर्गौर्महाव्रतं गौरायुः ॥२७॥ अहीना व्रतवन्तः सर्वजिद्दीक्षाः ॥२९॥४॥

षडहास्त्रयः ॥१॥ ऋतूनां प्रथमः ॥२॥ द्वितीये बृहद्रथन्तरपृष्ठः पञ्चाहः पृष्ठ्यावलम्बाख्यः ॥३॥ तृतीये त्रि-

---

मानवे-"प्रजापतेर्व्रतवानन्नाद्यकामो यजेत ज्योतिरग्निष्टोमो गौरुक्थ्यो महाव्रतं गौरुक्थ्य आयुरतिरात्र इति। काठके च—"आयुस्कास्य व्रतं ज्योतिरग्निष्टोमो गौरुक्थ्यो महाव्रतं गौरुक्थ्य आयुरतिरात्र" इति। कठसूत्रे—"अथोक्थ्यः पुरुषमेधस्तेन राजा यजेत यः कामयेतामिस्वर्गं लोकं यजेयं तरेयं गृहस्त्यामिति त्रैधातव्या पुरुषमेधस्य दीक्षणीया भवति त्रिस्तावती वेदिस्त्रिस्तावानग्निस्त्रिवृदग्निष्टोमः पञ्चदश उक्थ्य एकविंशोऽतिरात्रः पञ्चदश उक्थ्यस्त्रिवदग्निष्टोमो मध्यमे ऽहनि यूपान्संमिन्वन्ति यथाऽश्वमेधे पशुकाले ब्रह्मणे ब्रह्माणमुपाकरोति क्षत्राय राजन्यं मरुद्भ्यो वैश्यमि"ति। पञ्चविंशे—"वाचे षड्विंशं द्वयानैकादशिनानुपाकरोति इन्द्राय राज्ञे सूकर इत्येते भवन्ति सोमाय स्वराजे पिशङ्गास्त्रय इति चैते भवन्ति पर्यग्निकृतान्पुरुषानुत्सृज्यावसाय त्रैधातव्या च यजेत चरुणा च पञ्चबिलेन तस्याग्नि पुरस्तात् यजतीन्द्रं दक्षिणतः सोमं पश्चात्सवितारमुत्तरतो बृहस्पतिं मध्यात्" इति पञ्चाहाः।

इति त्रयोविंशे चतुर्थी कण्डिका ४ ॥

---

अथ त्रयः षडहा उच्यन्ते। तत्र प्रथम ऋतुः षडहः। तत्र षष्ठ्यामारम्भ इति सम्प्रदायः। पौर्णमासीदीक्षा इति सूत्रान्तरेषु। द्वादश दीक्षा द्वादशोपसदः षट् सुत्याः। तत्र पाष्ठिकानि पञ्चाहानि तद्धर्मकाणि। प्रत्यहमैन्द्राग्नः सवनीयः स्तोमायनं वा। अधिकसहस्रदक्षिणा पक्षे षडहेषु पञ्च सप्तत्यधिकानि त्रयश्चत्वारिंशतानि षड्धा विभज्य एकोनत्रिंशदधिकानि सप्त सप्त शतानि प्रत्यहं दीयन्ते। एकाऽधिका परिशिष्यते साऽन्त्येऽहनि दीयते।

प्रत्यहं प्राकृतं वा दक्षिणादानम्। अन्यत्सर्वं द्वादशाहवत्। द्वितीयषडहे बृहद्रथन्तरपृष्ठः पञ्चाहः। अस्य पञ्चाहस्य पृष्ठ्यावलम्ब इति संज्ञा। ततः षष्ठो विश्वजितिरात्रः। अन्यत् सर्वं प्रथमषडहवत्। तृतीयषडहे त्रिभ्यः षाष्ठिकेभ्य ऊर्ध्वं त्रयस्त्रिकद्रुका ज्योतिर्गौरायुःसंज्ञा भवन्ति। अन्य आयुरतिरात्रसंस्थो भवति। शेषं प्रथमषडहवत्।

**भ्यस्त्रिकद्रुकाः ॥४॥ सप्त सप्ताहाः ॥५॥ चत्वारो व्रतोत्तमाः प्रथमाः ॥६॥ तृतीयः पशुकामस्य ॥७॥ इन्द्रस्य पञ्चमः ॥८॥ द्वितीयप्रभृति षडेकाहाः॥९॥ सर्वस्तोम उत्तमः ॥१०॥ जनकसप्तरात्रः ॥११॥ चतुर्थ्यो विश्वजिन्महाव्रतम् ॥१२॥ उत्तमे षडहो बृहद्रथन्तरपृष्ठः पृष्ठ्यस्तोमा-**

मानवे—"ऋतूनां षडहः प्रतिष्ठाकामो यजेत पृष्ठ्यः षडहस्त्रयस्त्रिंशस्त्रिरिन्द्रस्य संहितो वीर्यकामो यजेत त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यो ज्योतिर्गौरिति दशानां पृष्ठ्यावलम्बो राजा विजिगीषमाणो यजेताभ्याससङ्ख्यः पञ्चाहो विश्वजिदतिरात्र" इति । काठके— "त्रयः षडहा ऋतूनां पृष्ठ्यः प्रतिष्ठाकामस्यायुष्कामस्य द्वितीयस्त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यो ज्योतिर्गौरायुरतिरात्रः पृष्ठ्यायवलम्बः स्वाराज्यकामस्याभ्याससङ्ख्यः पञ्चाहो विश्वजिदितिरात्र" इति । इति षडहः ।

अथ सप्त सप्ताहा उच्यन्ते। तेषां मध्ये प्रथमेषु चतुर्षु पार्ष्ठिकान्यहानि । सप्तमं महाव्रतमतिरात्रसंस्थं सर्वेष्वपि । तेन चत्वारोऽपि सर्वजिद्दीक्षा द्वादशोपसत्काश्च । अग्निरपि एषु नियमेन भवति । गवां सहस्रं किञ्चिदधिकं दक्षिणाऽस्मिपक्षे । सप्ताहेषु पञ्च पञ्चाशतं शतानि सप्तधा विभज्य पञ्चाशीत्यधिकानि सप्त शतानि प्रत्यहं दीयन्ते । पञ्चाधिकाः परिशिष्यन्ते ता अन्त्येऽहनि देयाः । प्रत्यहं प्राकृतं दक्षिणा वा । एषां मध्ये तृतीयः सप्ताहः पशुकामस्य भवति । छन्दोगानां बह्वृचानां च प्रत्येकं बहवो विशेषाः सन्ति ।

अथ पञ्चम इन्द्रसप्ताहः । सप्तम्यां प्रारम्भ इति सम्प्रदायः । पौर्णमास्यामिति सूत्रान्तरेषु । एकादश दीक्षा द्वादशोपसदः । सप्त सुत्याः । तत्र द्वितीयप्रभृति षडेकाहा भवन्ति । ते च ज्योतिष्टोमः । गौरुक्थ्यः । अभिजिदग्निष्टोमः । विश्वजिदग्निष्टोमः । सर्वजिन्महाव्रतश्च षष्ठः । सप्तमः सर्वस्तोमोऽतिरात्रः । अत्र सर्वजितः समहाव्रतत्वात्सर्वजिद्दीक्षा भवन्ति नियमेनाग्निश्च । अथ षष्ठो जनकसप्तरात्रः । अत्र सर्वजिद्दीक्षाः अग्निश्च नियमेन । तत्र प्रथमानि चत्वारि पार्ष्ठिकान्यहानि । ततो विश्वजिदग्निष्टोमः । ततो महाव्रतम् । ततः सप्तमो ज्योतिष्टोमोऽतिरात्रः । अत्र सर्वे गणधर्मा द्वादशाहवत् । विश्वजिति महाव्रते च स्वस्वधर्मा भवन्ति । उत्तमे सप्ताहे सप्तमे बृहद्रथन्तरपृष्ठः षडहः पृष्ठ्यस्तोमसंज्ञकः ।

रुपः ॥१३॥ विश्वजित्पशुकामस्य ॥१४॥ अष्टाहे षडहा-
न्महाव्रतम् ॥१५॥ नवरात्रे त्रिककुदुकाः ॥१६॥ द्वितीयं

अयं च स्तोत्रमात्रविकृतः पृष्ठ्यः षडह एव । कुतः—"पृष्ठ्यः षडहो बृहद्रथन्तरसामा विश्वजिदतिरात्र" इति मानवे दर्शनात् । तेनात्रातिग्राह्यग्रहणं भवत्येव । ततो विश्वजिदतिरात्रः । अस्य सप्तम्यां प्रारम्भ इति सम्प्रदायः । पौर्णमास्यामिति भन्दादयः । द्वादशोपसदः सप्त सुत्याः । अन्यत्सर्वं द्वादशाहवत् ।

पशुकामस्यायमुत्तमः सप्ताहो भवति । मानवे—"ऋषीणां सप्तरात्र ऋद्धिकामो यजेत पृष्ठ्यः षडहो महाव्रतमतिरात्रभूतं प्रजापतेर्द्वितीयः प्रजातिकामो यजते पृष्ठ्यः षडहः समदशं महाव्रतमतिरात्रभूतमादित्यानां तृतीयः पशुकामो यजते पृष्ठ्यः षडहश्छन्दोमानां महाव्रतमतिरात्रभूतं जमदग्नेश्चतुर्थोऽपरिमितां पुष्टिमिच्छन्यजेताभ्याससंग्यः पञ्चाहस्त्रयस्त्रिंशं षष्ठमहः सप्तदशं महाव्रतमतिरात्रभूतमिन्द्रस्य पञ्चमो वीर्यकामो यजेत त्रिककुदुकस्त्र्यहोऽभिजिद्विश्वजित्सर्वस्तोमोऽतिरात्रः प्रजापतेर्जनकसप्तरात्रः प्रजातिकामो यजते चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि विश्वजिन्महाव्रतं ज्योतिरतिरात्रो देवानां पृष्ठ्यस्तोम उभौ कामाववरुरुक्षमाणो यजते यो यज्ञः सत्रे वा पृष्ठ्यः षडहो बृहद्रथन्तरसमो विश्वजिदतिरात्र" इति ।

काठके च—"सप्ताहाः सप्तऋषीणां प्रथम ऋद्धिकामस्य पृष्ठ्यः षडहः पञ्चदशं महाव्रतमतिरात्रः पशुकामस्य तृतीयः पृष्ठ्यः षडहश्छन्दोमपवमानं महाव्रतमतिरात्रो जामदग्न्यः पुष्टिकामस्याभ्याससंग्यः पञ्चाहस्त्रयस्त्रिंशत् पृष्ठ्यं महाव्रतमतिरात्र इन्द्रं बुभूषत उक्थ्यस्त्रिककुद्कोऽभिजिदग्निष्टोमो विश्वजिदग्निष्टोमः सर्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्रो जनकसप्तरात्रोऽन्नाद्यकामस्य चत्वारि त्रिवृदग्निष्टोममुखानि विश्वजिन्महाव्रतमतिरात्रोऽन्नाद्यकामस्योत्तमः पृष्ठ्यस्तोमः षडहो विश्वजिदतिरात्र" इति । इति सप्ताहाः ।

अथ एकोऽष्टाहः । तत्र सर्वजिद्दीक्षाः । नियमेनाग्निः । पृष्ठ्यः षडहः । ततो महाव्रतं ततोऽतिरात्रः । अन्यत्सर्वं द्वादशाहवत् । चतुरात्रादिष्वधिकं सहस्रं दक्षिणेति पक्षे अष्टाहे पञ्चविंशत्यधिकानि षट्षष्टिशतान्यन्वहं विभज्याष्टाविंशत्यधिकान्यष्टावष्टौ शतानि प्रतिसुत्यं दीयन्ते । एकाऽधिका परिशिष्यते सान्त्येऽहनि देया । पक्षे प्रत्यहं प्राकृती दक्षिणा ।

**त्रिकद्रुकेभ्यः पृष्ठ्यावलम्बः ॥१७॥ दशरात्राश्चत्वारः॥१८॥ प्रथमस्त्रिककुप् ॥१९॥ उक्थ्योऽग्निष्टोमपक्षस्त्रिरावृत्तः**

मानवे—"वसूनामष्टरात्रो देवत्वकामो यजते पृष्ठ्यः षडहो महाव्रतं ज्योतिरतिरात्र" इति। काठके—"देवानामष्टाहो देवत्वकामानां पृष्ठ्यः षडहः सप्तमं महाव्रतं ज्योतिरतिरात्र" इति । इत्यष्टाहः ।

अथ द्वौ नवसुत्यौ । तत्र प्रथमस्य नवम्यां प्रारम्भ इति सम्प्रदायः । पौर्णमास्यामिति सूत्रान्तरेषु । नव दीक्षा द्वादशोपसदो नव सुत्याः । तत्र पृष्ठ्यः षडहः । ततो ज्योतिर्गौरायुरिति त्रयस्त्रिकद्रुकसंज्ञाः । तेषां मध्ये ज्योतिरग्निष्टोमः । गौरुक्थ्यः । आयुरतिरात्रः । अधिकसहस्रदक्षिणापक्षे नवरात्रयोः पञ्चाशदधिकानि सप्त सप्ततिसहस्राणि नवधा विभज्य एकषष्ट्यधिकान्यष्टावष्टौ शतानि प्रत्यहं दीयन्ते । एका परिशिष्यते साऽन्त्येऽहनि दीयते । पक्षे प्रत्यहं प्राकृती दक्षिणा देया । अन्यत्सर्वं द्वादशाहवत् ।

द्वितीये नवरात्रे प्रथमन्त्रिकद्रुकास्त्रयः । ततः पाष्ठिकानि पञ्चाहानि बृहद्रथन्तरपृष्ठ्यानि पृष्ठ्यावलम्बसंज्ञानि । शाखान्तरादभ्याससंज्ञानि पञ्चाहसंज्ञानि वा । ततोऽतिरात्रः । अन्यद् दीक्षादिकं सर्वं प्रथमनवरात्रवत् । मानवे—"देवानां नवरात्र आयुःकामो यजते पृष्ठ्यः षडहो ज्योतिर्गौरायुरतिरात्र आदित्यानां द्वितीयः पशुकामो यजते त्रिकद्रुकस्त्र्यहो ऽभ्याससंज्ञः पञ्चाहो विश्वजिदतिरात्र" इति ।

काठके—"द्वौ नवाहावायुःकामस्य प्रथमः पृष्ठ्यः षडहस्त्रिकद्रुक उत्तरः प्रजाकामस्य द्वितीयो ज्योतिर्गौरायुरभ्याससंज्ञः पञ्चाहो विश्वजिदतिरात्र" इति । इति नवरात्रौ ।

अथ चत्वारो दशसुत्या अहीना उच्यन्ते । सर्वेषां दशम्यां प्रारम्भ इति सम्प्रदायः। पौर्णमास्यामिति सूत्रान्तरेषु। अष्टौ दीक्षाः द्वादशोपसदः दश सुत्याः। तत्र चतूरात्रादिष्वधिकसहस्रदक्षिणेति पक्षे दशरात्रेषु पञ्च सप्तत्यधिकान्यष्टाशीतिशतानि दशधा विभज्य सप्ताशीत्यधिकान्यष्टावष्टौ शतानि प्रतिसुत्यं दीयन्ते पञ्चाधिका अन्त्येऽहनि दीयन्ते । प्रत्यहं प्राकृती दक्षिणा वा । तत्र प्रथमस्त्रिककुप्संज्ञो दशाहः प्रतिष्ठाकामस्य भवति । तत्र प्रथमोऽग्निष्टोमः । द्वितीय उक्थ्यः । तृतीयोऽग्निष्टोमः । चतुर्थोऽग्निष्टोमः । पञ्चम उक्थ्यः । षष्ठोऽग्निष्टोमः । सप्तमोऽग्निष्टोमः । अष्टमः उक्थ्यः । नवमोऽग्निष्टोमः । एते सर्वे अपूर्वाः । दशमोऽतिरात्रः । द्वादशाहवत् सर्वम् ।

॥२०॥ प्रतिष्ठाकामस्य ॥२१॥ कौसुरुबिन्दः ॥२२॥ अग्नि-ष्टोमास्त्रिवृतस्त्रयः ॥२३॥ पञ्चदशाश्चोक्थ्याः ॥२४॥ सप्त-

---

द्वितीयः कौसुरुबिन्दसंज्ञो दशरात्रः । तत्र प्रथमं त्रिवृत्स्तोमकास्त्रयोऽग्निष्टोमाः । ततस्त्रयः पञ्चदशस्तोमका उक्थ्याः । ततः सप्तदशस्तोमकास्त्रय उक्थ्याः । एवं नव । ततो दशम एकविंशस्तोमकोऽतिरात्रः । अन्यद् द्वादशाहवत् ।

तृतीयः पूर्दशरात्रोऽभिचर्यमाणस्य वैरिभिरभिचारकर्मणा मार्यमाणस्य यजमानस्य भवति । तत्र प्रथमोऽग्निष्टोमः । द्वितीय उक्थ्यः । तृतीयोऽग्निष्टोमः । ततो गौरुक्थ्यः । ततोऽभिजिदग्निष्टोमः । ततो गौरुक्थ्यस्ततो विश्वजिदग्निष्टोमः । तत आयुरुक्थ्यः; ततो विश्वजिदग्निष्टोमः । ततो दशमोऽतिरात्रः । प्रथमे पूर्वाः । शेषा उक्थ्यवर्जिता एकाहाः । चतुर्थः छन्दोमदशाहसंज्ञको दशरात्रः पशुकामस्य यजमानस्य भवति । तत्र प्रथमः पृष्ठ्यावलम्बसंज्ञो बृहद्रथन्तरपृष्ठः पञ्चाहः ।

तत्र चत्वारो द्वादशाहिकदशरात्रसम्बन्धिनः सप्तमाद्यविवाकान्तश्छन्दोमाः । ततो दशमोऽतिरात्रः । मानवे—"इन्द्रस्य त्रिककुब्दशरात्रः पाप्मनो मोक्ष्यमाणो यजेत त्रिवृतावग्निष्टोमौ पञ्चदश उक्थ्यो मध्ये सप्तदशावग्निष्टोमावेकविंशमध्यो मध्ये त्रिणवावग्निष्टोमौ त्रयस्त्रिंश उक्थ्यः मध्ये विश्वजिदतिरात्रः । कुसुरुबिन्दं दशरात्रेण भूमानं प्रयास्यन्यजते त्रयस्त्रिवृतोऽग्निष्टोमास्त्रयः पञ्चदशा उक्थ्यास्त्रयः सप्तदशा उक्थ्याःएकविंशोतिरात्र आदित्यानां छन्दोमदशाहः पशुकामो यजेताभ्याससंग्यः पञ्चातश्चत्वारश्छन्दोमविश्वजिदतिरात्रो देवानां पूर्दशरात्रोभिचर्यमाणो यजते त्रिवृदग्निष्टोमो ज्योतिरुक्थ्यस्त्रिवृदग्निष्टोमो गौरुक्थ्योभिजिदग्निष्टोमो गौरुक्थ्यो विश्वजिदग्निष्टोम आयुरुक्थ्या विश्वजिदग्निष्टोमः सर्वस्तोमोतिरात्र" इति । काठके—"चत्वारो दशरात्रास्त्रिककुप्प्रेष्ठ्यकामस्य त्रिवृदग्निष्टोमः सप्तदशोऽग्निष्टोम एकविंश उक्थ्यः सप्तदशोऽग्निष्टोमस्त्रिणवोऽग्निष्टोमस्त्रयस्त्रिंश उक्थ्यस्त्रिणवोग्निष्टोमो विश्वजिदतिरात्रः पूर्दशरात्रोऽभिचर्यमाणस्य त्रिष्टोमो ज्योतिरुक्थ्यस्त्रिष्टोमोग्निष्टोमो गौरुक्थ्यः अभिजिदग्निष्टोमो गौरुक्थ्यो विश्वजिदग्निष्टोम आयुरुक्थ्यः, सर्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्रो जामदग्न्यः पुष्टिकामस्याभ्याससंग्यः पञ्चाहश्चत्वारश्छन्दोमा विश्वजिदतिरात्रः कुसुरुबिन्दुर्दशरात्रो यः कामयेत बहुः स्यामिति त्रयस्त्रिवृतोऽग्निष्टोमास्त्रयः पञ्चदशा उक्थ्यास्त्रयः सप्तदशा उक्थ्या एकविंशोऽतिरात्र" इति । इति दशरात्रः ।

दशाहश्च ॥२५॥ एकविंशोऽतिरात्रः ॥२६॥ पूर्वदशरात्रो-ऽभिचर्यमाणस्य ॥२७॥ उक्थ्योऽग्निष्टोमपक्षः ॥२८॥ गोपक्षोऽभिजित् ॥२९॥ आयुर्विश्वजित्पक्षः ॥३०॥ छन्दोमदशाहः पशुकामस्य ॥३१॥ पृष्ठ्यावलम्बाश्चत्वारश्छन्दोमाः ॥३२॥ पौण्डरीकः सर्वर्द्धिकामस्य ॥३३॥ दशरात्रो-ऽसत्रोत्थानः ॥३४॥ विश्वजिदतिरात्रः ॥३५॥ तुल्यमा-

---

पौण्डरीकः । तस्यैकादश्यां प्रारम्भ इति सम्प्रदायः । पौर्णमास्यामिति सूत्रान्तरेषु । सप्त दीक्षा द्वादशोपसदः । एकादश सुत्याः । सत्रोत्थानवर्जितो दशरात्रः । दश सहस्राणि गावो दक्षिणाः । तद्विभागस्तु छन्दोग सूत्रे, उक्तः । "अयुतमेकादशरात्रे दद्यात्तत्र नव पूर्वेष्वहःसु शतानि सहस्रमुत्तममि"ति । अत्र यद्यपि कात्यायनेन सामान्येन दशरात्रो भवतीत्युक्तम् । तथापि ताण्ड्ये विशेषोऽस्ति—

"अभ्यासंसंज्ञः षडहस्त्रयश्छन्दोमाश्चतुष्टोमोऽग्निष्टोमो विश्वजिदतिरात्र" इति । अयं चतुष्टोमाग्निष्टोम माश्वमेधिकं प्रथममहः । तथात्र तद्वदेव तृतीयसवन आग्रयणग्रहणानन्तरमुक्थ्यस्थालयामुपयाम गृहीतोसीन्द्राय त्वेत्युक्थ्यं गृहीत्वाऽऽसाद्य यज्ञायज्ञियस्तोत्रानन्तरमाग्निमारुतशस्त्रकाले तं गृहीतमुक्थ्यं लिप्सु वैकङ्कतेषूलूखलेषु त्रेधं विगृह्णाति त्रिधा विभागेन गृह्णाति क्रमेणेन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामिति प्रतिमन्त्रम् । परिमृज्य तूष्णीं सादनम् । आग्निमारुतचमसहोमानन्तरमेषां होमो वषट्काराद्या ग्रहणमन्त्रलिङ्गाकास्त्यागाः ।

चमसभक्षणानन्तरमेषां होमकर्तृवषट्कर्त्रोः पृथग् उलूखलस्थानामेव भक्षणम् । चतुष्टोमोऽन्तर उक्थ्यस्तस्मिन्नग्निष्टोमे महान्तमुन्नीय त्रिषूक्थ्यं विगृह्य तैः सह प्रचरेदिति । काठके–एवंविधविशेषयुक्तश्चतुष्टोमोऽग्निष्टोमो दशममहः । एकादशो विश्वजिदतिरात्रः सर्वपृष्ठः । तत्र सर्वेऽतिग्राह्याः सर्वाणि रथसंसारणादीनि पृष्ठोपाकरणानि ।

माहेन्द्रशस्त्रे तृतीयसवनोक्थ्यविग्रहेषु आग्निमारुतयोरप्तोर्यामवद्धोतृप्रत्ययः प्रतिगरः । अत्र वाश्वदाभ्यग्रहणम् । अत्यवर्जितानां सर्वेषामन्हां पत्नीसंयाजान्तता । प्रथमोत्तमवर्जं सदसि बहिष्पवमानोपाकरणम्

छन्दोगसूत्रे तु विशेषः—"अहीनवहिष्पवमानौ सदसि स्तुवीरन् प्रथमादन्होऽन्यत्रे"ति । नवाधिकानि नव नव शतानि गावोऽन्वहं दीयन्ते । अन्त्येऽहनि दशाधिकानीति स्वसूत्रानुसारेण वा विभज्य दक्षिणा-

**ध्वर्यवमतिरात्रेषु विश्वजिद्वर्जम् ॥३६॥ यथोक्तमुत्तमो यथोक्तमुत्तमः ॥३७॥ ॥५॥**

---

दानम् । अत्र प्राकृत वा प्रत्यह्यामत्यर्यं पशो न भवति ।

औपवसथ्यादारभ्य सर्वेष्वहःसु यजमानः सर्वेष्वग्निषु सुब्रह्मण्याह्वानानन्तरं समिदाधानं करोति । व्युत्क्रामतादिकर्मान्वहं क्रियते । वसतीवरीणां ग्रहणञ्च माध्यन्दिने प्रागच्छावाकप्रश्नात् । इदं तृतीयसवनमिति मिति मन्त्रेणाधवनीऽऽसेवनयनानन्तरं वा परिहरणात्पूर्वं वा हारियोजनान्ते श्वः सुत्यामिति प्रैषः । छन्दोगपक्षादत्र पृष्ठ्यस्थानेऽभ्यासंसंग्यः षडहो भवति । तेनात्र षडहेऽतिग्राह्यस्थसंसारणादीनामभावः ।

केचित्तु पृष्ठ्यमेव विकृतमाहुः । तन्मते तु अतिग्राह्या भवन्ति । उपाकरणानि त्वेतत्पृष्ठ्यानामभावान्न भवन्ति । अन्त्येऽहनि श्वः सुत्यामिति प्रैषाभावः । दक्षिणाग्निहोमादि सर्वम् । तिस्रोऽनूबन्ध्या सैधातव्युदवसानीया च ।

आश्वलायनः । "पौण्डरीकमृद्धिकामः पृष्ठ्यस्तोमश्छन्दोमा गोस्तोमो विश्वजिद्व्यूल्हो नवरात्रो महाव्रतं वैश्वानर" इति वै । पृष्ठ्यस्तोमस्तु बृहद्रथन्तरपृष्ठ्यः षडह एव मानवे दर्शनादिति सप्तमे सप्ताहे दर्शितम् । तेनातिग्राह्यग्रहणं भवत्येव ।

मानवे—"सोमधन्वा पौण्डरीक एकादशरात्रेण यजेत पारमेष्ठ्यकामः स्वाराज्यकामो वाभ्यासंसंग्यः । षडहस्त्रयश्छन्दोमा उत्तमस्य चतुष्टोमोऽग्निष्टोमो विश्वजिदतिरात्रो हीनान्यन्वहं विहृतानि सहस्राणि ददाति।

काठके—"सोमछत्तमं पौण्डरीकस्य यज्ञस्य चैकादशरात्रः पौण्डरीकः स्वराज्यकामस्याभ्यासंसंग्यः षडहः पूर्वं त्रयश्छन्दोमाश्चतुष्टोमोऽग्निष्टोमोत्तर उक्थ्यो विश्वजिदतिरात्रोत्तर उक्थ्यस्त्वाग्र उपालभ्योऽन्वहं सहस्राणि ददात्यश्वसहस्रमुत्तर उक्थ्यः" प्रजापतेर्द्वादशाह उक्तः इति । इत्येकादशरात्रः पौण्डरीकः ॥ द्वादशाहस्तु सूत्रक्रमेणैव द्वादशाध्याये उक्तः इति ।

इति पञ्चमी कण्डिका: ५ इति त्रिरग्निचित् संम्राट्स्थपति महायाज्ञि श्रीप्रजापति सुतेन याज्ञिक श्रीदेवेन कृतायां कात्यायनसूत्रपद्धतौ त्रयोविंशतितमोऽध्याय: समाप्तः ॥ २३ ॥

अहीनपद्धतिः समाप्तिमगमत ।

# चतुर्विंशतितमोऽध्यायः ।

**द्वादशरात्रादीनि रात्रिसत्त्राणि ॥१॥ एकोच्चयेन चत्वारिꣳशदन्तानि ॥२॥ यथोपदेशमहानि ॥ ३ ॥ आपूर्यमाणे दशरात्रः परः ॥४॥ प्रकृतिविहितेषु महाव्रतं दशरात्रादुत्तरमेकाहार्थे ॥५॥ पुरस्तादन्यत् ॥६॥**

---

उक्ता अहीनाः ।

अत्र सत्राण्यभिधीयन्ते । तत्र द्वादशाहः सर्वधर्मसहितः पूर्वमुक्तः । अत्र त्रयोदशरात्रादीनि सत्राण्यभिधीयन्ते । तत्र सर्वेषां सत्रधर्माणां द्वादशाह एवोक्तत्वादत्र विशेषमात्रमुच्यते । छन्दोगसूत्रे—"दीक्षाक्रयप्रसवोत्थानानि सर्वसत्रेषु पूर्वपक्ष उपपादयेयुस्तेषामप्युपपत्तौ क्रयाऽपरपक्षे स्यात् प्रसवश्च यदि द्वे त्रिषूत्थानमेके पूर्वपक्षे स्यात्" त्रिषु पूर्वपक्षेऽनुपपद्यमानेषूत्थानमेव पूर्वपक्षे स्यादित्यर्थः । "तेषां द्वादश दीक्षास्तथोपसदोऽनादशे सांवत्सरिकेभ्यश्चोर्ध्वं दीक्षाणां यथाकामी । प्रथमे पञ्चदशरात्रे एकान्नविंशतिर्दीक्षा इति धानञ्जय्योऽष्टादशेति गौतमोक्तेः विकल्पो वा ।

जातिकल्पस्तु तेषां द्वादशदीक्षास्तथोपसद इत्यन्तम् । तानि च रात्रिसत्राणि द्वादशरात्राणि त्रयोदशरात्राणि चतुर्दशरात्राणि पञ्चदशरात्राणीत्येवं क्रमेणैकैकाहर्वृद्ध्या चत्वारिंशद्रात्रपर्यन्तानि निरन्तराणि भवन्ति । तेषु यानि यान्यहान्युपदिश्यन्ते तानि तानि भवन्ति । यत्र नोपदिश्यन्ते तदर्थमियं परिभाषाऽभिधीयते ।

उपदिष्टरहोभिः सत्रस्यापूरणे द्वादशाहिको दशरात्रः पूरणार्थो भवति । स च सत्रस्यान्ते प्रागुदयनीयावद्भवति । सूत्रकारो येषां सत्राणां प्रकृतिविहितशब्देनाभिधानं करोति तेषु एकाहार्थे सत्रपूरणार्थमेकमहर्यदा मृग्यते तदा महाव्रतं दशरात्रात्परं कुर्यात् ।

महाव्रतादन्यद्यत्पूरणार्थमभिप्लवाद्युच्यते तद्दशरात्रात्पुरस्तादावपेत् । यदा सत्रपूरणाय षडहानि मृग्यन्ते तदा अभिप्लवं षडहमावपेत् । यदा पञ्चाहानि मृग्यन्ते तदा तस्याभिप्लवस्याद्यानि पञ्चाहान्यावपेत् । यदि त्रीण्येवाहानि मृग्यन्ते तदा ज्योतिर्गौरायुरित्येतानि त्रीण्यहान्यावपेत् ।

एतेषामह्नां त्रिकद्रुका इति संज्ञा । यदि चत्वार्यहानि मृग्यन्ते तदा एतानि त्रीणि त्रिकद्रुकसंज्ञानि दशरात्रात्पूर्वमनुष्ठाय दशरात्रात्परं महा-

षडहार्थेऽभिप्लवः ॥७॥ मत्स्यादितः पञ्च पञ्चाहार्थे ॥८॥ त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः ॥९॥ व्रतं च

व्रतं कुर्यात् । यदि द्वे एवाहनी मृग्येते तदा गौः आयुश्चेमे द्वे अहनी एवावपेत् । सर्वत्रावापः प्रायणीयातिरात्रोदयनीयातिरात्रयोरन्तराले कर्तव्यः । उभयतोऽतिरात्र८० सत्रमित्युक्तत्वात्तौ सर्वसत्रेषु भवत एव ।

यदा द्व्यहत्र्यहषडहादीनानां बहूनामेकत्र समवायस्तदाऽल्पमल्पं द्व्यहत्र्यहादिकं पूर्वं पूर्वमावपेत् । षडहानि पश्चात् । मानवसूत्रे "सत्रेष्वभिप्लवं षडहे प्रतीयाद्दशरात्रे द्वादशाहस्य दशाहान्यन्यत्प्रायणीयोदयनीयाभ्यां पञ्चाहे ज्योतिर्गौरायुरिति त्रिकद्रुकाः पञ्चाहे नवरात्रेऽभिजितं स्वरसाम्नो विषुवन्तमावृत्तात्स्वरसाम्नो विश्वजितं सर्वपृष्ठं त्रिरात्रे ज्योतिर्गौरायुरिति त्रिरात्रं त्रयस्त्रिंशारम्भणं प्रतिलोमं पृष्ठ्यमुपोत्तममिति । अनादेशे द्वादशाहप्रभृनीति सत्राण्युभयतोऽतिरात्राण्यहरभ्युच्चयेनाचत्वारिंशद्रात्रात्तेषामहः क्लृप्तिरिति" ।

कठसूत्रे च–"गोआयुषी चतुर्विंशः स्वरसामान इत्युक्थ्या ज्योतिरभिजिद्विश्वजिन्महाव्रतमित्यनादेशेऽग्निष्टोमाः पृष्ठ्याश्छन्दोमाश्च सदशाहः पृष्ठ्यसन्निपाते प्रतिलोम उत्तरः प्राग्दिवाकीर्त्यात् प्रतिलोमा अनुलोमस्तु दशाह आदित्याङ्गिरसामयनयोश्चानुलोमा याज्यानां रात्रिसत्राणां नित्ये द्वादशाहेऽहान्युपजायन्ते प्रागुदयनीयान्महाव्रतमुपरिष्टात्प्रायणीयादतिरात्रादहान्येकागमे । महाव्रतं द्व्यागमे गौश्चायुश्च सद्व्यहस्त्र्यागमे ज्योतिर्द्व्यहस्त्र्यहश्चतुरागमे त्र्यहो महाव्रतं पञ्चागमे त्र्यहो द्व्यहश्च सपञ्चाहः ।

षडहागमे पञ्चाहो ज्योतिश्च सोऽभिप्लवः षडह एवमत उर्ध्वं सम्पूर्णे सम्पूर्णेऽभिप्लवे वा एतेनैव विधिनाऽहानि उपजायन्ते । आचत्वारिंशतमानन्तर्येण ताण्डिनामाशताद्भाल्लविनामासहस्राच्छाट्यायनिनामपरिमितान्यावपिकानि रात्रिसत्राणां नित्ययोः प्रायणीयोदयनीययोरतिरात्रयोर्मध्यमान्यहानि वक्ष्यामः पृष्ठ्यः पूर्वं त्रयश्छन्दोमा एकादशरात्र इति" ।

सांख्यायनः—"एकाहार्थं महाव्रतमाहरन्ति सर्वस्तोमिकातिरात्रमिति । आश्वलायनः । "अथैतेषामन्हां योगविशेषान्वक्ष्यामो यथोपयुक्तानि यस्मै कस्मै कामाय भवन्त्ययमेवातोऽतिरात्रादौ प्रायणीय एषोऽन्त्य उदयनीयोऽव्यक्तो मध्योऽहीनेषु तावन्तरेण व्यूढो दशरात्र एषा प्रकृतिः सत्राणां तत्रावापस्थानमूर्ध्वं दशरात्रादेकाहार्थे महाव्रतं प्राग्दशरात्रा-

**यथोक्तं चतुरहार्थे ॥१०॥ गोआयुषी द्व्यहार्थे ॥११॥ अतिरात्रान्तरमावापस्थानम् ॥१२॥ आवापसमवे-**

दितरेषामन्हां त्र्यहार्थे त्रिकद्रुका अभिप्लवत्र्यहं पूर्वं त्रिकद्रुका इत्यावक्षते। चतुरहार्थे त्रिकद्रुका महाव्रतं च पञ्चाहार्थेऽभिप्लवपञ्चाहः। उत्तमस्य तु पष्ठात्तृतीयसवनं षडहार्थेऽभिप्लवः षडह एवमावापाः षडहान्ताः पुनः पुनः पूर्णश्च षडहस्तन्त्रतामेवं गच्छति।

अथ सत्राणि लिख्यन्ते। तत्र त्रीणि त्रयोदशरात्राणि भवन्ति। तत्र प्रथमे त्रयोदशरात्रे द्वादशाहिकदशरात्रमध्ये पृष्ठ्यषडहादनन्तरं सर्वस्तोमोऽतिरात्रो भवति। ततश्चत्वारश्छन्दोमाः। तेनैवम्—प्रायणीयोऽतिरात्रः १। पृष्ठ्यः।७। सर्वस्तोमोऽतिरात्रः ८। त्रयश्छन्दोमा उक्थाः ११ अविवाक्यम् १२। उदयनीयोतिरात्रः १३।

अत्र द्वादश दीक्षा उपसदश्च। प्रत्यहमंश्वदाभ्यग्रहणमदक्षिणम्। सर्वमत्र द्वादशाहवदिति निर्विशेषम्। मानवे-"द्वादशाहे पुरस्ताच्छन्दोमानां सर्वस्तोमोतिरात्र ऋद्धिकामास्त्रयोदशरात्रमुपेयु"रिति।

काठके—"पृष्ठ्योऽतिरात्रं छन्दोमाश्च त्रयोदशरात्रे "प्रकृतिहितं द्वितीय"मित्युक्तत्वात्प्रकृतिविहितेषु "महाव्रतं दशरात्रादुत्तरमेकाहार्" इत्यनेन दशरात्रादुत्तरं महाव्रतं भवति। तेनवम्। प्रायणीयः। पृष्ठ्यः। चत्वारच्छन्दोमाः। महाव्रतम्। उदयनीय इति।

समहाव्रतत्वान्नियमेनात्राग्निः। सर्वजिद्दीक्षा। "व्रतवन्ति सर्वजिद्दीक्षाणी"ति वक्ष्यमाणसूत्रात्। मानवे—"उपोत्तमं व्रतमुत्तरस्य प्रतिष्ठाकामास्त्रयोदशरात्रमुपेयुरि"ति। काठके—"द्वादशाहस्य दशाहानि महाव्रतं च सद्वितीय"इति।

आश्वलायनः—"द्वौ त्रयोदशरात्रौ वृद्धिकामानां प्रथमं पृष्ठ्यं छन्दोमांश्चान्तरा सर्वस्तोमोऽतिरात्रो न्यायात् कॢप्तं व्रतवन्ति प्रतिष्ठाकामा द्वितीयमि"ति। तृतीये त्रयोदशरात्रे प्रायणीयः १। चतुर्विंशमहः २। अभिजित् ३। त्रयः स्वरसामानः ६। विषुवान् ७। त्रयः स्वरसामानः १०। विश्वजित् ११। महाव्रतम् १२। उदयनीयः १३इति।

अत्र चतुर्विंशमहरादीनि सर्वाण्यपि गावामयनिकान्यहानि। अतस्तेषूद्राग्रालम्भसवनान्तजपादि गवामयनधर्मा भवन्ति। सर्वजिद्दीक्षा नित्यमग्निश्च। मानवे "चतुर्विंश उक्थ्यो नवरात्रो महाव्रतं प्रतिष्ठाकामास्त्रयोदशरात्रमुपेयुरि"ति। काठके "चतुर्विंशमभिजिदादिर्नवरात्रे महाव्रतं च सतृतीय" इति। मानवे चैकं त्रयोदशरात्रमधिकमुक्तम् "द्वाद-

तानामल्पमल्पं पूर्वम् ॥१३॥ द्वे त्रयोदशरात्रे ॥१४॥ पृष्ठ्यात्सर्वस्तोमोऽतिरात्रः ॥१५॥ प्रकृतिविहितं द्वितीयम् ॥१६॥ सम्भार्यं तृतीयम् ॥१७॥ प्रायणीयाच्चतुर्विंशमहरभिजित्त्रयः स्वरसामानो विषुवांस्त्रयः स्वरसामानो विश्वजिद्व्रतमुदयनीयोऽतिरात्रः ॥१८॥ चतुर्दशरात्राणि त्रीणि ॥१९॥ द्वौ पृष्ठ्यौ ॥२०॥ प्रतिलोमः परः ॥२१॥ मध्यमे त्रिकद्रुकाः पृष्ठ्यमभितः ॥२२॥ प्रतिलोमाः परे ॥२३॥ विवाहोदकतल्पसंशयितानामेतत् ॥२४॥ प्रकृतिविहितं तृतीयम् ॥२५॥ पञ्चदशरात्राणि चत्वारि ॥२६॥ उत्तरे प्रकृतिविहिते

---

शाहस्य मध्ये विषुवान्देवत्वकामास्त्रयोदशरात्रमुपेयुरि"ति । इति त्रयोदशरात्राणि ॥

अथ त्रीणि चतुर्दशरात्राणि । तत्र प्रथमे द्वौ पृष्ठ्यौ भवतः । तयोर्मध्ये द्वितीयः पृष्ठ्यः षडहः प्रतिलोमो भवति । तत्र प्रथमं प्रायणीयः १ पृष्ठ्यः षडहः ७ ततः प्रतिलोमः पृष्ठ्यः १३ उदयनीय इति । पृष्ठ्ये षडहस्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशानि क्रमेणाहानि भवन्ति ।

यदा प्रतिलोमः क्रियते तदा प्रथमं त्रयस्त्रिंशं द्वितीयं त्रिणवं तृतीयमेकविंशं चतुर्थं सप्तदशं पञ्चमं पञ्चदशं षष्ठं त्रिवृदिति । अनेन क्रमेणाहानि भवन्ति । मानवे "वृतावृत्तः पृष्ठ्यो देवत्वकामाश्चतुर्दशरात्रमुपेयुरिति ।

वृतावृत्तः अनुलोमावृत्तः प्रतिलोम इत्यर्थः । आश्वलायनः "त्रीणि चतुर्दशरात्राणि सर्वकामिकं प्रथमं द्वौ पृष्ठ्यावावृत्त उत्तर-"इति । आवृत्तः प्रतिलोमः । द्वितीये चतुर्दशरात्रे त्रिकद्रुकाः "पृष्ठ्यमभितः प्रतिलोमाः परे" इति सूत्रात् । प्रायणीयः १ । ज्योतिरग्निष्टोमः २ । गौरुक्थ्यः ३ । आयुरुक्थ्यः ४ । पृष्ठ्यः १० । तत आयुरुक्थ्यः ११ । गौरुक्थ्यः १२ । ज्योतिरग्निष्टोमः १३ । उदयनीय इति । १४ ।

विवाहोदकतल्पसंशयितानामेतत्सत्रं भवति । यान्पुरुषांस्तल्पे शय्यायामुदके अभिषेकाद्यर्थे विवाहे कामिमां वहेयुः ते मीमांस्यमानाः एता रात्रीरुपेयुरिति । तल्पाद्यर्थिनोऽधिकारिण इत्यर्थ इति माधवाचार्यः । मानवे "उभयतस्त्रिरात्राण्युभयतः पृष्ठ्यांस्तल्प उदके वा विवाहे वा मी-

॥२७॥ चतुर्दशरात्राभ्यां पूर्वे व्याख्याते ॥२८॥ पृष्ठ्यद्व्योर्मध्ये महाव्रतम् ॥२९॥ अतिरात्रादग्निष्टुद् द्वितीयस्य ॥३०॥

---

मांसेरंस्त एतं चतुर्दशरात्रमुपेयुरि"ति ।

काठके च—"पृष्ठ्यस्त्र्यहपरिहितो द्वितीयश्चतुर्दशरात्र" इति । आश्वलायनः "तल्पेवोदके वा विवाहे वा मीमांस्यमानानां द्वितीयं पृष्ठ्यमभितस्त्रिकद्रुका"इति । तृतीयं चतुर्दशरात्रं प्रकृतिविहितम् । तत्रापूर्यमाणे दशरात्रः पर इति दशरात्रः सिद्धः । गोआयुषी त्र्याहार्थ इति दशरात्रात्पूर्वे गोआयुषी । अल्पमल्पं पूर्वमित्युक्तत्वात् । तेनैवं सिद्धम्—प्रायणीयः १ । गौः २ । आयुः ३ । द्वादशाहिको दशरात्रः १३ । उदयनीय इति । मानवे— "गो आयुषी दशरात्रः प्रतिष्ठाकामाश्चतुर्दशरात्रमुपेयु"रिति॥ आश्वलायनः "त्र्यहोपजनं प्रतिष्ठाकामास्तृतीयमि"ति । दशरात्रस्तु स्थित एव । त्र्यहा गोआयुषी उपजनो भवति अधिका भवन्तीत्यर्थः । इति चतुर्दशरात्राणि ।

अथ पञ्चदशरात्राणि चत्वारि । तत्र उत्तरे तृतीयचतुर्थे पञ्चदशरात्रे प्रकृतिविहिते भवतः । पूर्वे प्रथमद्वितीये आद्याभ्यां चतुर्दशरात्राभ्यां व्याख्याते । तदो तान्येवाहान्यत्रापि भवन्तीत्यर्थः ।

तत्र विशेषः । आद्यस्य पृष्ठ्ययोर्मध्ये महाव्रतं भवति । तेनैवम् । प्रायणीयः १ । पृष्ठ्यः ७ । महाव्रतम् ८ । ततस्त्रयस्त्रिंशारम्भणः प्रतिलोमः पृष्ठ्यः १४ । उदयनीय इति । मानवे "पृष्ठ्यो महाव्रतं पृष्ठ्यस्त्रयस्त्रिंशारम्भणो यथा वै महाव्रतं स्याद् ब्रह्मवर्चसकामाः पञ्चदशरात्रमुपेयु"रिति । काठके "तौ महाव्रतं मध्य एकः पञ्चदशरात्र" इति । तौ पृष्ठ्याविति । पृष्ठ्योर्मध्ये व्रतमित्यर्थः ।

आश्वलायनः—"देवत्वमीप्सतां प्रथमं प्रथमस्य चतुर्दशरात्रस्य पृष्ठ्यस्य मध्ये महाव्रतमि"ति । द्वितीये पञ्चदशरात्रे मध्यमे त्रिकद्रुकाः पृष्ठ्यमभित इति इमान्यहानि । अतिरात्रादग्निष्टुद् द्वितीयस्येति सूत्रात् प्रायणीयादनन्तरमग्निष्टुत् त्रिकद्रुकाः पृष्ठ्यः त्रिकद्रुका उदयनीय इति । तेन प्रायणीयः १ । अग्निष्टुत् २ । ज्योतिः २ । गौः ४ । आयुः ५ । पृष्ठ्यः ११ । आयुः १२ । गौः १३ । ज्योतिः १४ । इति प्रतिलोमास्त्रिकद्रुकाः । उदयनीय इति ॥ १५ ॥

मानवे—"त्रिवृदग्निष्टुदग्निष्टोममुभयतस्त्रिरात्राभ्यामुभयतः पृष्ठ्यो ब्रह्मवर्चसकामाः पञ्चदशरात्रमुपेयुरि"ति । काठके "त्र्यहपरिहितो द्वितीयश्चतुर्दशरात्रः सोऽग्निष्टुत्पूर्वो द्वितीयः पञ्चदशरात्र" इति । आश्वलायनः । "ब्रह्मवर्चसकामस्य द्वितीयं द्वितीयस्य चतुर्दशरात्रस्याग्नि-

**यस्य ॥३०॥ स प्रायणीयस्तृतीयस्य ॥३१॥१॥**

**प्रकृतिविहितानि प्राग्विंशतिरात्रात् ॥१॥ विंशतिरात्रोऽभिप्लवोऽभिजिद्विश्वजितौ च ॥२॥ एकविं-**

---

ष्टुत्प्रायणीयादनन्तर" इति । तृतीये पञ्चदशरात्रे स प्रायणीयस्तृतीयस्येति सूत्रात् स एव त्रिवृदग्निष्टुदग्निष्टोमसंस्थ एकाह एव प्रायणीयातिरात्रस्थाने भवति ।

"उत्तरे प्रकृतिविहिते" इत्युक्तत्वात् त्रयोदशानामन्हां मृग्यमाणत्वात्प्रायणीयस्थाने कृतादग्निष्टुतोऽनन्तरं प्रथमं ज्योतिर्गौरायुरिति त्रिकद्रुका दशरात्रमुदयनोय इति । तेनैवम् अग्निष्टुत् १ । ज्योतिः २ । गौः ३ । आयुः । ४ । ततो द्वादशाहिको दशरात्रः १४ । उदनीय इति १५ ॥ काठके—"अग्निष्टुत् त्र्यहो दशरात्र" इति ।

मानवे—"त्रिवृदग्निष्टुदग्निष्टोमस्त्रिरात्रो दशरात्रोऽतिरात्रः सत्रे यश्चे वृद्धिमिच्छन्तस्त एतं पञ्चदशरात्रमुपेयुरि"ति । आश्वलायनः—"उभौ लोकावाप्स्यतां तृतीयं तृतीयस्य चतुर्दशरात्रस्याग्निष्टुत्प्रायणीयस्थाने न्यायकलृप्तस्त्र्यहोपजनः शेष" इति । चतुर्थ पञ्चदशरात्रे उत्तरे प्रकृतिविहिते इत्युक्तत्वात्प्रायणीयस्त्रिकद्रुका दशरात्रोऽतिरात्र इति । तत्रायं क्रमः । प्रायणीयः १ । ज्योतिः २ । गौः ३ । आयुः ४ । दशरात्रः १४ । उदयनीयः १५ । इति । आश्वलायनः—"आद्यः कलृप्तस्त्र्यहोपजनं प्रतिष्ठाकामश्चतुर्थमि"ति । इति पञ्चदशरात्राणि ।

इति प्रथमा कण्डिका ॥ १ ॥

---

अथैकं षोडशरात्रम् । तत्र प्रकृतिविहितानि प्राग्विंशतिरात्रादित्युक्तत्वात् प्रकृतिविहितन्यायेन पूरणम् । तत्र चतुर्दशाहानि मृग्यन्ते । तत्रैको दशरात्रः । "अपूर्यमाणे दशरात्रः पर" इति वचनात् । ततो व्रतं च "यथोक्तं चतुरहार्थे" इत्यनेन दशरात्रादुत्तरं महाव्रतम् । "अल्पमल्पं पूर्वमि"ति वचनात् दशरात्रात्पूर्वं ज्योतिर्गौरायुरिति त्रिकद्रुका भवन्ति ।

तत्रायं क्रमः । प्रायणीयः १ । ज्योतिः २ । गौः ३ । आयुः ४ । दशरात्रः १४ । महाव्रतम् १५ ॥ उदनीय १६ इति । मानवे—"एतास्वेव व्रतं विजितकामाः षोडशरात्रमुपेयुरि"ति । एतासु पूर्वोक्तासु चतुर्थ पञ्चदशरात्रोक्तासु रात्रिषु प्रागुदयनीयान्महाव्रतं भवतीत्यर्थः । आश्वलायनः । "षोडशरात्रं चतूरात्रोपजनमन्नाद्यकामा" इति ।

**शतिरात्रयोरतिरात्रावषोडशिकौ ॥३॥ अभिप्लवा-स्त्रयः ॥४॥ निदाघे द्वितीयं ब्रह्मवर्चसकामानाम् ॥५॥ त्र्यहस्त्रयः स्वरसामानो विषुवन्तमभितः ॥६॥ पृष्ठ्यौ च ॥७॥ उत्तरः प्रतिलोमः ॥८॥ मानव्यः सामिधेन्यः**

---

अथैकं सप्तदशरात्रम् । अस्यापि प्रकृतिविहितत्वेन दशरात्रात्पूर्वमभि-प्लवस्याद्यानि पञ्चाहानि । ततो दशरात्रः प्रायणीयोदयनीयौ चेति ।

तत्रैवं क्रमः । प्रायणीयः १ । ज्योतिः २ । गौः ३ । आयुः ४ । आयुः ५ । गौः ६ । दशरात्रः १६ । उदयनीयः १७ । इति । मानवे—"पञ्चाहो दशरात्रः श्रीकामाः सप्तदशरात्रमुपेयुः" इति । आश्वलायनः—"सप्तदश-रात्रं पञ्चरात्रोपजनं पशुकामा" इति ।

अथैकमष्टादशरात्रम् । अस्यापि प्रकृतिविहितत्वाद् दशरात्रः । ततः पूर्वोऽभिप्लवः षडहः "षडहार्थेऽभिप्लव" इत्युक्तत्वात् । तत्रायं क्रमः । प्रायणीयः १ । अभिप्लवः षडहः ७ दशरात्रः १७ । उदयनीयः १८ । मानवे—"षडहो दशरात्र आयुःकामा अष्टादशरात्रमुपेयुरि"ति । आश्व-लायनः । "अष्टादशरात्रमायुःकामाः षडहश्चात्र पूर्यते स तन्त्रस्योपजनं वक्ष्याम" इति ।

अथैकोनविंशतिरात्रम् । अस्यापि प्रकृतिविहितत्वापूर्वसत्रादेकमहरधिकं मृग्यते । तच्च महाव्रतम् ।

तत्रायं क्रमः । प्रायणीयः । १ । अभिप्लवः ७ । दशरात्रः १७ । महाव्रतम् १८ । उदयनीय इति १९ । मानवे—"एतास्वेव व्रतं ब्रह्मवर्च-सकामा एकान्नविंशतिरात्रमुपेयुरि"ति । आश्वलायनः—"सतन्त्रस्योप-जनं वक्ष्याम एकान्नविंशतिरात्रमेकरात्रोपजनं ग्राम्यारण्यान् पशूनवरु-त्स्यमाना" इति ।

अथ विंशतिरात्रमेकम् । तत्र विंशतिरात्रे प्रायणीयात्परः अभिप्लवः षडहः । ततोऽभिजिद्विश्वजितौ । ततो दशरात्रः । "अपूर्यमाणे दश-रात्रः पर" इत्युक्तत्वात । ततश्चायं क्रमः । प्रायणीयः १ । अभिप्लवः ७ । अभिजित् ८ । दशरात्रः १९ । उदयनीयः २० इति । मानवे—"षड-होऽभिजिद्विश्वजिद्दशरात्रः पुरुषकामा विंशतिरात्रमुपेयुरि"ति ।

आश्वलायनः—"विंशतिरात्रं प्रतिष्ठाकामा अभिजिद्विश्वजिता अभिप्लवादूर्ध्वमि"ति । काठके—"अभिप्लवोऽभिजिद्विश्वजिद्दशाहश्च स विंशतिरात्र" इति । शाङ्खायनः । "आदशाहप्रभृति आचत्वारिंशद्रा-त्रादेकोत्तराणि रात्रिसत्राणि तेषु नित्यो द्वादशाहो यैरहोभिर्विवर्द्धते

॥९॥ सौमापौष्ण उपालम्भ्यः ॥१०॥ प्रकृतिविहिता-

तान्युदाहरिष्याम एकाहार्थे महाव्रतमाहरन्ति सर्वस्तोमावतिरात्रमन्तरेण पृष्ठ्यं छन्दोमांश्च त्र्यहार्थे गो आयुषी द्वितीयं तृतीयं पञ्चाभिप्लविकं प्रतियन्तस्तस्माच्चोदनायां त्र्यहार्थे ज्योगद्याभिप्लविकानि चतुरहार्थे महाव्रतचतुर्थानि पञ्चाहार्थे पञ्च षडहार्थे परः सप्ताहार्थे महाव्रतसप्तमान्येतेन न्यायेन तां तां संख्यां पूरयत्यन्तरेण प्रायणीयं पृष्ठ्यं च तेषां स्थानमूर्द्धं तु दशमादन्हो महाव्रतस्य स्थानम् । अथैतान्यपवदन्त्यभिप्लवोऽभिजिद्विश्वजितौ चाहःक्लृप्तिर्विंशतिरात्र" इति ।

अथ द्वे एकविंशतिरात्रे । तत्र प्रथमे प्रायणीयोदयनीयौ अषोडशिकौ भवतः । त्रयोऽभिप्लवाः षडहा भवन्ति । प्रथमाभिप्लवादनन्तरमतिरात्रो भवति । एकविंशतिरात्रयोरतिरात्रावषोडशिकावभिप्लवास्त्रयः प्रथमादतिरात्र इत्युक्तत्वात् । ततश्चात्रायं क्रमः । प्रायणीयोऽषोडशिकः । अभिप्लवः ७ । अतिरात्रः सषोडशिकः ८ । ततो द्वौ अभिप्लवौ २० । अषोडशिक उदयनीय इति । २१ । मानवे—१ त्रयः षडहाद्दु प्रथमादतिरात्रोऽन्नाद्यकामा एकविंशरात्रमुपेयुरि"ति । काठके—"अभिप्लवोऽतिरात्रोऽभिप्लवो वैकविंशतिरात्र" इति । आश्वलायनः—"द्वावेकविंशतिरात्रौ प्रतिष्ठाकामानां प्रथमानां प्रथमं त्रयाणामभिप्लवानां प्रथमावन्तराऽतिरात्र" इति । शाङ्खायनः । "अभिप्लवोतिरात्रो द्वावभिप्लवावित्येकविंशतिरात्रः पूर्व" इति ।

अथ द्वितीयमेकविंशतिरात्रं ग्रीष्मर्त्तौ ब्रह्मवर्चसकामानां भवति । तत्र मध्ये विषुवान् । तं विषुवन्तमभितस्त्रयस्त्रयः स्वरसामानो भवन्ति ।

पूर्वं त्रयः स्वरसामानः । ततो विषुवान् । ततः पुनस्त्रयः स्वरसामान इत्येवम् । तत एतदहः सप्तकमभितः पृष्ठ्यौ भवतः । पूर्वः पृष्ठ्यः । ततः स्वरसामानः विषुवान् स्वरसामानः । पुनः पृष्ठ्यः । अयमुत्तरः पृष्ठ्य : प्रतिलोमो भवति । त्रयस्त्रिंशारंभण इत्यर्थः । अतश्चैवं क्रमः । प्रायणीयोऽषोडशिकः १ पृष्ठ्यः ७ । त्रयः स्वरसामानः १० । विषुवान् ११ । प्रतिलोमास्त्रयः स्वरसामानः १४ । ततः प्रतिलोमः पृष्ठ्यः २० । उदयनीय इति २१ । तृतीयः सौर्यस्तृतीयोऽस्त्येति भाष्यम् ।

अत्र विषुवति सोमापौष्ण उपालभ्यो भवति एकः सौर्योऽस्त्येव । द्वितीयः सोमापौष्णा इति याज्ञिकाः । मानव्यो मनुना दृष्टा ऋचः सामिधेन्यो भवति । मानवे—"पृष्ठ्यः स्वरसामानो विषुवानावृत्ताः स्वरसामानः पृष्ठ्यस्त्रयस्त्रिंशारम्भणः पृष्ठ्य इत्युत्तरमि"ति ।

न्याद्द्वात्रिंशद्रात्रात् ॥ ११ ॥ द्वाविंशतिरात्रमन्नाद्यकानाम् ॥१२॥ त्रयोविंशतिरात्रं प्रतिष्ठाकामानाम् ॥१३॥ पूर्वं चतुर्विंशतिरात्रं प्रजाकामानां पशुकामानां वा ॥१४॥ द्वितीयः सꣳसदः ॥१५॥ अषोडशिकावतिरात्रौ ॥१६॥ विशालः ॥१७॥ पार्ष्ठिकानि त्रीण्युत्तराणि प्रति-

---

अथैकं द्वाविंशतिरात्रं सर्वजिद्दीक्षमन्नाद्यकामानां भवति । तत्र "प्रकृतिविहितान्याद्वात्रिꣳशद्रात्रा"दित्युक्तत्वाद् द्वाविꣳशतिरात्रादीनि सर्वाणि एकत्रिंशद्रात्रपर्यन्तानि आवापविधिना पूरणीयानि ।

तेनायमत्रामन्हां क्रमः । प्रायणीयः १ । ज्योतिः २ । गौः ३ । आयुः ४ । अभिप्लवः षडहः १० । दशरात्रः २० । महाव्रतम् २१ । उदयनीय इति २२ ॥ मानवे—"त्र्यहः षडहो दशरात्रो महाव्रतं पशुकामा द्वाविꣳशतिरात्रमुपेयुरि"ति । आश्वलायने—"द्वाविंशतिरात्रं चतूरात्रोपजनमन्नाद्यकामा" इति । अत्राभिप्लवदशरात्रौ स्त एव ।

अथैकं त्रयोविंशतिरात्रं प्रतिष्ठाकामानां भवति । तत्राहानि । प्रायणीयः १ । अभिप्लवस्य पञ्चाहानि ६ । अभिप्लवः १२। दशरात्रः २२। उदयनीय इति २३ । मानवे । "पञ्चाहः षडहो दशरात्रः प्रतिष्ठाकामास्त्रयोविंशतिरात्रमुपेयुरि"ति ।

आश्वलायनः । "त्रयोविंशतिरात्रं पञ्चरात्रोपजनं पशुकाम इति ।

अथ द्वे चतुर्विंशतिरात्रे । तत्र प्रथमं प्रजाकामानां पशुकामानां वा ।तत्राहानि । प्रायणीयः१ । द्वावभिप्लवौ १३। दशरात्रः २३। उदयनीय इति२४।

मानवे—"षडहो दशरात्रोऽन्नाद्यकामाश्चतुर्विंशतिरात्रमुपेयुरि"ति । आश्वलायनः—"द्वौ चतुर्विंशतिरात्रौ प्रजातिकामाः पशुकामा वा प्रथमं षडहश्चात्र पूर्यते स तन्त्रस्योपजनं वक्ष्याम" इति । द्वितीये चतुर्विंशतिरात्रे विशेषः । द्वितीयं चतुर्विंशतिरात्रं संसदः संसदामयनसंज्ञम् ।

तत्र प्रायणीयोदयनीयावषोडशिकौ भवतः । अत्र विशालसंज्ञकः षडहो भवति । तत्र पृष्ठ्यस्य षडहस्योत्तराणि त्रीण्यहानि पूर्वं प्रतिलोमानि षष्ठपञ्चमचतुर्थानि भवन्ति । ततोऽनुलोमानि एकविंशत्रिणवत्रयस्त्रिंशस्तोमकानि चतुर्थं पञ्चमं षष्ठं इत्यनेन क्रमेण भवन्ति ।

अयमेव विशालसंज्ञकः षडहः । तं विशालमभितोऽग्निष्टोमावनिरुक्तौ भवतः । ततस्तं साग्निष्टोमं विशालमभितः पृष्ठ्यस्तोमौ भवतः । पृष्ठ्यस्तोमशब्देन बृहद्रथन्तरपृष्ठ्यः षडह उच्यते । तयोः पृष्ठ्यस्तोमयो-

**लोमानुलोमानि ॥ १८ ॥ तमभितोऽग्निष्टोमावनिरुक्तौ ॥१९॥ पृष्ठ्यस्तोमौ च ॥२०॥ उत्तरः प्रतिलोमः ॥२१॥ तस्मादग्निष्टोमावनिरुक्तौ ॥२२॥ पञ्चविंशतिरात्र-**

---

मध्ये उत्तरः साग्निष्टोमस्य विशालस्य पश्चात् क्रियमाणः पृष्ठ्यस्तोमः प्रतिलोमः षष्ठाहःप्रभृति भवति । तस्मात्प्रतिलोमात्पृष्ठ्यात्परौ द्वावनिरुक्तावग्निष्टोमौ भवतः । अत्र पृष्ठ्यस्तोमयोरतिग्राह्यग्रहणं भवत्येव ।

पृष्ठ्यषडहस्यैव बृहद्रथन्तरपृष्ठ्यस्तोमत्वात् पूर्णमेतत्सत्रम् । अत्रायमन्हाङ् क्रमः । अषोडशिकः प्रायणीयः १ । पृष्ठ्यस्तोमः षडहः ७ । अनिरुक्तोऽग्निष्टोमः ८ । ततस्त्रयस्त्रिंशत्रिणवैकविंशस्तोमकानि षष्ठपञ्चमचतुर्थानि पाष्ठिकान्यहानि ११ । तत एकविंशत्रिणवत्रयस्त्रिंशानि षोडश्यादीनि चतुर्थपञ्चमषष्ठानि पाष्ठिकान्यहानि १४ । ततोऽतिरात्रोक्तोऽग्निष्टोमः १५ । ततस्त्रयस्त्रिंशारम्भणः पृष्ठ्यस्तोमः षडहः २१ । ततोऽग्निष्टोमावनिरुक्तौ २३ । तत उदयनीय इति २४ ।

अनिरुक्तलक्षणमुपहव्ये उक्तम् । अत्र ताण्ड्ये "अतिरात्रे पृष्ठ्यस्तोमः षडहस्त्रयस्त्रिंशमहरनिरुक्तमुपहव्यस्य त्रयस्त्रिंशं निरुक्तं त्रिणवं द्वे एकविंशे त्रिणवं त्रयस्त्रिंशमहर्निरुक्तं त्रयस्त्रिंशमहरनिरुक्तं पृष्ठ्यस्तोमः षडहः प्रत्यङ्त्रिवृदहरनिरुक्तं ज्योतिष्टोमोतिरात्र इति । प्रत्यङिति प्रतिलोमः त्रयस्त्रिंशारम्भण इत्यर्थः ।

मानवे—"संसदामयनं पृष्ठ्यस्तोमः षडहस्त्रयस्त्रिंशमहरनिरुक्तमुपहव्ये लक्षतं त्रयस्त्रिंशमहरनिरुक्तं त्रिणवं द्वे एकविंशे त्रिणवं त्रयस्त्रिंशमहरनिरुक्तं त्रयस्त्रिंशमहरनिरुक्तं पृष्ठ्यस्तोमः षडहः प्रत्यङ् त्रिवृदहरनिरुक्तं ज्योतिष्टोमोग्निष्टोमोऽन्नाद्यकामाश्चतुर्विंशतिरात्रमुपेयुरि"ति ।

काठके—"त्रयाणां पृष्ठ्यानामेकैकस्योपरिष्टादनिरुक्तं प्रागुदयनीयात्स चतुर्विंशतिरात्रस्तत्संसदामयनमि"ति । आश्वलायनः—"स्वर्गे लोके वत्स्यन्तो ब्रध्नस्य विष्टपं परेत्ततो द्वितीयं पृष्ठ्यस्तोमस्त्रयस्त्रिंशो निरुक्तो विशालः पृष्ठ्यस्तोम एकविंशत्रिणवत्रयस्त्रिंशाः प्रतिलोमाः पूर्वस्मिंस्त्र्यहेऽनुलोमा उत्तरस्मिन्त्स विशालोऽपि वोत्तर एव त्र्यहः प्रतिलोमोऽनुलोमश्चानिरुक्तमहरावृत्तः पृष्ठ्यस्तोमस्त्रिवृदनिरुक्तो ज्योतिरुभयसामा संसदामयनमित्येतदाचक्षते" इति ।

शाङ्खायनः—"पृष्ठ्यः स्तोमः षडहस्त्रयस्त्रिंशमहरानरुक्तं तस्य माध्यन्दिने त्रयस्त्रिंशं निरुक्तं त्रिणवं द्वे एकविंशे त्रिणवं त्रयस्त्रिंशं निरुक्तं त्रयस्त्रिंशमहरनिरुक्तं त्रयस्त्रिंशारम्भणः पृष्ठ्यस्तोमः षडहस्त्रिवृदहरनिरुक्तं

**मन्नाद्यकामानाम् ॥२३॥ षड्विंशतिरात्रं प्रतिष्ठाकामानाम् ॥२४॥ सप्तविंशतिरात्रमृद्धिकामानाम् ॥२५॥ अष्टाविंशतिरात्रं प्रजाकामानां पशुकामानां वा ॥२६॥ द्वात्रिंशद्रात्रं च ॥२७॥ त्रयस्त्रिंशद्रात्राणि त्रीणि ॥२८॥ पञ्चाहाश्चत्वारः ॥२९॥ त्रिभ्योऽतिविश्वजित्**

---

ज्योतिष्टोमाग्निष्टोमचतुर्विंशतिरात्राः संसदामयनमित्याचक्षत" इति ।

अथैकं पञ्चविंशतिरात्रमन्नाद्यकामानां भवति । एतदपि प्रकृतिविहितम् । तेनात्रेमान्यहानि । प्रायणीयः १। द्वावभिप्लवौ २३ । ततो दशरात्रः २३। महाव्रतम् २४ । उदयनीय इति । २५ । सर्वजिद्दीक्षं नियमेनाग्निश्च । मानवे—"एतास्वेव व्रतं ब्रह्मवर्चसकामाः पञ्चविंशतिरात्रमुपेयुरि"ति । एतासु प्रथमचतुर्विंशतिरात्रोक्तासु रात्रिषु द्वावभिप्लवौ दशरात्रसुत्यासु इत्यर्थः । काठके—"द्वावभिप्लवौ दशाहो महाव्रतं च सपञ्चविंशतिरात्र" इति । अत्र द्वावभिप्लवौ दशरात्रश्चेति प्राक्सिद्धमेव ।

अथैकं षड्विंशतिरात्रं प्रतिष्ठाकामानां भवति । एतदपि प्रकृतिविहितम् । तत्राहानि । प्रायणीयः १। गौः २। आयुः ३ । अभिप्लवौ १५। दशरात्रः २५। उदयनीय इति २६ । मानवे—"एतास्वेव गोआयुषी पुरस्तात् षडहयोर्न व्रतं विजितिकामाः षड्विंशतिरात्रमुपेयुरि"ति । आश्वलायनः—"षड्विंशतिरात्रं द्विरात्रोपजनं प्रतिष्ठाकामा" इति ।

अथैकं सप्तविंशतिरात्रमृद्धिकामानां भवति । प्रकृतिविहितमेतत् । तत्राहानि । प्रायणीयः १ । ज्योतिः २ । गौः ३ । आयुः ४ । द्वावभिप्लवौ षडहौ १६ । दशरात्रः २६ । उदयनीय इति २७ । मानवे "एतास्वेव त्र्यहः पुरस्तात्षडहयोर्न गो आयुषी श्री कामाः सप्तविंशतिरात्रमुपेयुरि"ति । आश्वलायनः—"सप्तविंशतिरात्रं त्रिरात्रोपजन मृद्धिकामा" इति ।

अथैकमष्टाविंशतिरात्रं प्रजाकामानां पशुकामानां वा भवति । प्रकृतिविहितम् । तत्रेमान्यहानि । प्रायणीयः १ । ज्योतिः २ । गौः ३ । आयुः ४ । द्वावभिप्लवौ १६ । दशरात्रः २६ । महाव्रतम् २७ । उदयनीय २८ । इति । सर्वजिद्दीक्षं नियमेनाग्निः । मानवे—"एतास्वेव व्रतमायुः कामा अष्टाविंशतिरात्रमुपेयुरि"ति । आश्वलायनः । अष्टाविंशतिरात्रं चतूरात्रोपनं ब्रह्मवर्चसकामा इति ।

अथैनमेकान्त्रिंशद्रात्रं प्रकृतिविहितम्—

तत्राहानि । प्रायणीयः १ । अभिप्लवस्य पञ्चाहानि ६ । द्वावभिप्लवौ १८ । दशरात्रः २८ । उदयनीय २९ इति । मानवे—"पञ्चाह—षडहौ

॥३०॥ व्रतवद् द्वितीयम् ॥३१॥ अभिप्लवमभिप्लवान्तरयोरतिरात्रौ ॥३२॥ तृतीये त्रयस्त्रयः पञ्चाहा विश्वजितमभितः ॥३३॥ प्रतिलोमाः । परे ॥३४॥ प्रकृतिविहितान्या चत्वारिंशद्रात्रात् ॥३५॥ चतु-

---

दशरात्रो ब्रह्मवर्चसकामा एकान्नत्रिंशद्रात्रमुपेयुरि"ति । आश्वलायनः—"एकान्नत्रिंशद्रात्रं पञ्चरात्रोपजनं परमां विजितिं विजिगीषमाणा"इति ।

अथैकं त्रिंशद्रात्रम् । तत्राहानि । प्रायणीयः १। त्रयोभिप्लवाः १८। दशरात्रः २८। उदयनीय इति ३०। मानवे—"त्रयः षडहा दशरात्रः पुरुषकामास्त्रिंशद्रात्रमुपेयुरि"ति । आश्वलायनः—"त्रिंशद्रात्रमन्नाद्यकामाः षडहश्चात्र पूर्यते सतन्त्रस्योपजनं वक्ष्याम" इति ।

अथैकमेकत्रिंशद्रात्रं प्रकृतिविहितम् । प्रायणीयः १। त्रयोऽभिप्लवाः १८। दशरात्रः २८। महाव्रतम् ३०। उदयनीयः ३१। इति । सर्वजिद्दीक्षं नियमेनाग्निश्च । मानवे—'एतास्वेव व्रतमोजस्कामा एकत्रिंशद्रात्रमुपेयुरि"ति । आश्वलायनः—"एकत्रिंशद्रात्रमेकरात्रोपजनमन्नाद्यकामा"इति ।

अथैकं द्वात्रिंशद्रात्रं प्रकृतिविहितं प्रजाकामानां पशुकामानां च भवति । तत्राहानि । प्रायणीयः १। गो आयुषी ३। त्रयोऽभिप्लवाः २१। दशरात्रः २१। उदयनीय इति ३२। मानवे—"एतास्वेव गो आयुषी पुरस्तात् षडहानां न व्रतं पशुकामा द्वात्रिंशद्रात्रमुपेयुरि"ति । आश्वलायनः—"द्वात्रिंशद्रात्रं द्विरात्रोपजनं प्रतिष्ठाकामा" इति ।

अथ त्रीणि त्रयस्त्रिंशद्रात्राणि । तत्र प्रथमे अभिप्लवस्य चत्वारः पञ्चाहा भवन्ति । तत्र चतुर्णां मध्ये त्रिभ्योऽभिप्लवपञ्चाहेभ्यः परो विश्वजिदतिरात्रो भवति । ततश्चतुर्थः पञ्चाहः । ततो दशरात्र उदयनीयश्चेति । प्रायणीयः १। त्रयोऽभिप्लवस्य पञ्चाहाः १६ । ततो विश्वजिदतिरात्र एकाहः १७। पुनरेकोऽभिप्लवस्य पञ्चाहः २२। ततो दशरात्रः ३२। तत उदयनीय ३३। इति । मानवे—"त्रयस्त्रिंशास्त्रयः पृष्ठ्यं पञ्चाहा विश्वजिजिदतिरात्रः प्रतिष्ठाकामास्त्रयस्त्रिंशद्रात्रमुपेयुरि"ति । शाङ्खायनः—"पञ्चाभिप्लविकानि त्रयस्त्रिंशद्रात्र" इति । ब्रह्मवर्चसकामा द्वितीयं चतुर्णां पञ्चरात्राणामावृत्ता उत्तमावन्तरा सर्वस्तोमोऽतिरात्र इति ।

अथ द्वितीयं त्रयस्त्रिंशद्रात्रं महाव्रतवत् । अभिप्लवत्रययुक्तं च ।

अभिप्लवान्तरालयोश्चातिरात्रौ । द्वयोरन्तरालयोरेकैकोतिरात्रो भवतीत्यर्थः । ततो दशरात्रा महाव्रतम् । उदयनीय इति । प्रायणीयः १।

**त्रिꣳशद्रात्रमन्नाद्यकामानाम् ॥३६॥ षट्त्रिꣳशद्रात्रं प्रतिष्ठाकामानाम् ॥३७॥ सप्तत्रिꣳशद्रात्रमृद्धिकामा-**

अभिप्लवः ७। अपूर्वोऽतिरात्रः ८। अभिप्लवः १४। पुनरपूर्वोऽतिरात्रः १५। अभिप्लवः २१। दशरात्रः ३१।।महाव्रतम् । ३२ । उदयनीय ३३ इति । सर्वजिद्दीक्षा नियमेनाग्निश्च । मानवे "त्रयः षडहा मध्यममभितोऽतिरात्रो महाव्रतं प्रतिष्ठाकामास्त्रयस्त्रिंशद्रात्रमुपेयुरि"ति । आश्वलायनः—"त्रीणि त्रयस्त्रिंशद्रात्राणि प्रतिष्ठाकामानां प्रथमं त्रयाणामभिप्लवानामुपरिष्टाददतिरात्र इति । तृतीये त्रयस्त्रिंशद्रात्रे विश्वजितमभितः पूर्वं पश्चाच्च त्रयस्त्रयोऽभिप्लवस्य पञ्चाहा भवन्ति । ये विश्वजितः पश्चात्तु पञ्चाहास्ते प्रतिलोमा भवन्ति । तत्रायमन्हां क्रमः । प्रायणीयः १। त्रयोभिप्लवपञ्चाहाः १६। ततो विश्वजिदतिरात्रः १७। ततः प्रतिलोमास्त्रयोभिप्लवपञ्चाहाः ३२। उदयनीयः ३३ इति । मानवे "त्रयः पृष्ठ्यपञ्चाहा विश्वजिदतिरात्रस्त्रयः पृष्ठ्यपञ्चाहाः प्रतिष्ठाकामास्त्रयस्त्रिꣳशद्रात्रमुपेयुरि"ति । आश्वलायनः—"उभौ लोकावाप्स्यन्तस्तृतीयं षण्णां पञ्चरात्राणां मध्ये विश्वजिदतिरात्र आवृत्तास्तूत्तरे त्रय" इति । काठके—"त्रयोभिप्लवा त्र्यहो दशरात्रो महाव्रतं च स त्रयस्त्रिंशद्रात्र" इति । एतत्त्वन्येषु सूत्रेषु नास्ति ।

अथैकं चतुस्त्रिंशद्रात्रं प्रकृतिविहितम् । तत्र प्रकृतिविहितान्याचत्वारिꣳशद्रात्रादित्युक्तत्वादतः प्रभृति चत्वारिंशद्रात्रपर्यन्तानामावापोक्तप्रकारेण पूरणम् । ततश्चतुस्त्रिशद्रात्रे प्रायणीयः १। ज्योतिर्गौरायुरिति त्रिकद्रुकाः ४। त्रयोऽभिप्लवाः । २२। दशरात्रः ३२। महाव्रतम् ३३। उदयनीय ३४। इति ।

सर्वजिद्दीक्षमग्निश्च नियतः । मानवे—'त्र्यहस्त्रयः षडहा दशरात्रो महाव्रतमन्नाद्यकामाश्चतुस्त्रिꣳशद्रात्रमुपेयुरि"ति । आश्वलायनः—"चतुस्त्रिशद्रात्रं चतूरात्रोपजनमन्नाद्यकामा"इति ।

अथ पञ्चत्रिंशद्रात्रे—प्रायणीय- १। अभिप्लवस्य पञ्चाहः ६। त्रयोभिप्लवाः २४। दशरात्रः ३४। उदयनीय इति ३५। मानवे विशेषः—"त्र्यहस्त्रयः षडहा दशरात्रो गो आयुषी ब्रह्मवर्चसकामाः पञ्चत्रिशद्रात्रमुपेयुरि"ति । आश्वलायनः—"पशुकामानामुत्तराणि चत्वारिंशत्पञ्चत्रिंशद्रात्रः पञ्चरात्रोपजन" इति ।

षट्त्रिशद्रात्रं प्रतिष्ठाकामानाम् । तत्र प्रायणीयः १। चत्वारोऽभिप्लवाः ३५। उदयनीयः इति ३६। मानवे—"चत्वारः षडहा दशरात्रो विजिति-

नाम् ॥३८॥ अष्टात्रिंशद्रात्रं प्रजाकामानां पशुकामानां वा ॥३९॥ चत्वारिंशद्रात्रं च ॥४०॥ व्रतवन्त्युत्तराणि प्रथमतृतीयवर्जं सर्वैकान्नपञ्चाशद्रात्राणि ॥४१॥ प्रथमो विधृतिः ॥४२॥ अषोडशिकावातिरात्रौ ॥ ४३ ॥ २ ॥

---

कामाः षड्त्रिंशद्रात्रमुपेयुरि"ति । आश्वलायनः—"षड्त्रिंशद्रात्रे षडह उपजायते सतन्त्रस्योपजननं वदाम" इति ।

सप्तत्रिंशद्रात्रमृद्धिकामानाम् । तत्र प्रायणीयः १। चत्वारोऽभिप्लवाः २५। दशरात्रः ३५। महाव्रतम् । ३६। उदयनीय इति । सर्वजिद्दीक्षं नियमेनाग्निश्च । ३७। मानवे—"एतास्वेव व्रतं श्रीकामाः सप्तत्रिंशद्रात्रमुपेयुरि"ति । आश्वलायनः—"सप्तत्रिंशद्रात्र एकरात्रोपजनन"इति । काठके विशेषः—"चतुर्विंशमभिप्लवः पृष्ठ्योऽभिजिदादिनवरात्रो द्व्यहो दशाहो महाव्रतं च सप्तत्रिंशद्रात्र" इति । शाङ्खायनोपि—"चतुर्विंशमभिप्लवः पृष्ठ्यो गो आयुषी दशरात्रो महाव्रतमिति सप्तत्रिंशद्रात्र" इति ।

अष्टात्रिंशद्रात्रं प्रजाकामानां पशुकामानां वा । तत्र प्रायणीयः १। गोआयुषी । ३। चत्वारोऽभिप्लवाः ३७। दशरात्रः ३७। उदयनीय इति । ३८। मानवे—"एतास्वेव गो आयुषी पुरस्तात्षडहानां न व्रतमायुःकामा अष्टात्रिंशद्रात्रमुपेयुरि"ति । आश्वलायनः-"अष्टात्रिंशद्रात्रो द्विरुपजनन"इति ।

एकोनचत्वारिंशद्रात्रे प्रायणीयः १। ज्योतिर्गौरायुरिति त्रिकद्रुकाः । ४। चत्वारोऽभिप्लवाः २८। दशरात्रः ३८। उदयनीय इति ३९। मानवे—"एतास्वेव त्र्यहः पुरस्तात्षडहानां गो आयुषी ब्रह्मवर्चसकामा एकोनचत्वारिंशद्रात्रमुपेयुरि"ति । आश्वलायनः—"एकोनचत्वारिंशद्रात्रं त्रिरात्रोपजननं तां श्रियमिच्छन्त" इति ।

चत्वारिंशद्रात्रं प्रजाकामानां पशुकामानां वा भवति । तत्र प्रायणीयः १। ज्योतिः २। गौः ३। आयुः ४। चत्वारोऽभिप्लवाः २८। दशरात्रः ३८। महाव्रतम् ३९। उदयनीय ४०। इति । सर्वजिद्दीक्षं नियमेनाग्निश्च । मानवे-"एतास्वेव व्रतं पुरुषकामाश्चत्वारिंशद्रात्रमुपेयुरि"ति । आश्वलायनः—"चत्वारिंशद्रात्रं चतूरात्रोपजननं परमां विजितिं प्रतितिष्ठन्त" इति । सत्रान्तराण्यपि स एवाह—"एकचत्वारिंशद्रात्रप्रभृतीन्युत्तराणि न्यायेनाष्टाचत्वारिंशद्रात्रात्पञ्चाशद्रात्रप्रभृतीनि चाषष्टिरात्राद्विंशतिरात्रप्रभृतीनि चैकोनशतरात्रात्तत्रैकरात्रचतूरात्रोपजननानि व्रतवन्ती"ति ।

**कौसुरुबिन्दः प्रथमस्त्र्यह उक्थ्यौ तूत्तरौ ॥१॥ षोडशिदशमा उक्थ्याः ॥२॥ पृष्ठ्यं चाभितो द्वादश द्वादश ॥३॥ वर्गान्तरेष्वतिरात्राः ॥४॥ यमातिरात्रम् ॥५॥**

---

अथ सप्त सत्राण्येकान्नपञ्चाशद्रात्राणि भवन्ति । तत्र प्रथमएकान्नपञ्चाशद्रात्रो विभूतिसंज्ञकः । अत्र प्रायणीयौ षोडशिग्रहवर्जितौ भवतः।

इति द्वितीया कण्डिका: ॥ २ ॥

---

तत्र प्रायणीयादनन्तरं कौसुरुबिन्ददशरात्रस्य प्रथमस्त्र्यहो भवति । अग्निष्टोमास्त्रिवृतस्त्रय इत्येवम्। अत्र विशेषः । त्रयाणां मध्ये उत्तरौ द्वौ द्वितीयतृतीयावुक्थ्यसंस्थौ । एकः प्रथमोऽग्निष्टोम इति । ततस्त्र्यहादूर्ध्वं षोडशिदशमा उक्थ्याः नव उक्थ्या दशमः षोडशीत्येवम् । षोडशी दशमो येषां ते षोडशिदशमाः ।

तत एकः पृष्ठ्यः षडहो भवति । तं पृष्ठ्यमभितः पृष्ठ्यस्य पुरस्तादुपरिष्टाच्च द्वादश द्वादशोक्थ्या भवन्ति । द्वादश पुरस्तात् । द्वादशैवोपरिष्टात् । अत्र त्र्यहः । दशोक्थ्याः "द्वादशोक्थ्याः पृष्ठ्यः । द्वादशोक्थ्या इति पञ्च वर्गाः । तेषां चत्वारि अन्तराणि । तेषु चतुर्षूक्थ्यान्तरेष्वेकैकोतिरात्रो भवति ।

ततश्चैतान्यत्र क्रमेण भवन्ति । अषोडशिकः प्रायणीयः १। त्रिवृदग्निष्टोमः २। द्वावुक्थ्यौ त्रिवृतौ ४। अतिरात्रः ५। ततो नव उक्थ्याः १४। ततः षोडशी १५। अतिरात्रः १६। ततो द्वादश उक्थ्याः २८। ततोऽतिरात्रः २९। पृष्ठ्यः ३५। अतिरात्रः ३६। ततः पुनर्द्वादशोक्थ्याः ४८। ततोऽषोडशिक उदयनीय इति । ४९। मानवे—"अग्निष्टोमो द्वावुक्थ्यौ त्रिवृत्स्तोमस्त्रयाणामतिरात्रो नवोक्थ्याः षोडशी दशमः पञ्चदशः पञ्चदशस्तोमोऽतिरात्रो द्वादशोक्थ्याः सप्तदशस्तोमोऽतिरात्रः पृष्ठ्योतिरात्रो द्वादशोक्थ्या एकविंशस्तोमा वा वि पाप्मना वर्तमहीति कामास्त एतमेकान्नपञ्चाशद्रात्रमुपेयुरि"ति ।

आश्वलायनः—"सप्तैकान्नपञ्चाशद्रात्राणि विपाप्मना वर्त्स्यन्तः प्रथममतिरात्राणि त्रिवृन्त्यहान्यतिरात्रो दश पञ्चदशान्यतिरात्रो द्वादश सप्तदशान्यतिरात्रस्त्रिवृतां प्रथमोऽग्निष्टोमः षोडश्युत्तमः पञ्चदशानामुक्थ्य इतरे विधृतय इत्याचक्षत" इति ।

आद्योऽग्निष्टोमः पञ्चममतिरात्रः पञ्चदशः षोडशी षोडशमेकान्न-

अभिप्लवौ गोआयुषी अतिरात्रावभिप्लवावभिजि-
द्विश्वजितावतिरात्रावभिप्लवः सर्वस्तोमनवसप्तदशा-
त्रिंशं चातिरात्रं पृष्ठ्यः षड्विंशमतिरात्रोऽन्ये उक्थ्या एकान्नपञ्चाश-
द्रात्रो विघृत्या'' इति ।

द्वितीयमेकान्नपञ्चाशद्रात्रं यमातिरात्रसंस्थम् । तत्राहानि । प्रायणीयः १। द्वावभिप्लवौ १३। ततो गो आयुषी अतिरात्रसंस्थौ १५। ततः पुनर्द्वावभिप्लवौ २७ । ततोऽभिजिद्विश्वजितावतिरात्रौ २९ । ततोऽभिप्लवः ३५। ततः सर्वस्तोमनवसप्तदशौ द्वावतिरात्रौ ३७। ततो दशरात्रः ४७। महाव्रतम् ४८। उदयनीयः ४९। इति ।

अत्र शाङ्खायने विशेषः—"द्विरात्रप्रभृतिष्वहः संघातेषु यत्र होताऽऽश्विनं शंसेत्तत्र मैत्रावरुणः प्रातः सायमनुवाकमनुब्रूयादि"ति॥ अस्य भाष्यम्—"द्विरात्रग्रहणात्सिद्धे अहः सर्वास्विति संघातग्रहणं सन्धिस्तोत्रार्थम । तेनायमर्थो भवति । द्विरात्रप्रभृत्यतिरात्रगणे यस्मिन्काले होताश्विनं शंसेत्तत्समकालमेव मैत्रावरुणः प्रातरनुवाकमनुब्रूयादि"ति । तेनात्रापि शतातिरात्रे वक्ष्यमाणस्याश्विनस्याग्नेयान्ते प्रतिप्रस्थाता व्युत्क्रामतादि कृत्वेत्याद्यहः संन्धानमतिरात्रद्वयहसन्निपातो भवत्येव ।

मानवे—"पञ्चानां षडहानां द्वयोर्द्वयोः पुरस्तात् द्वौ द्वावतिरात्रौ पञ्चमस्य पुरस्ताद् द्वादशरात्रौ महाव्रतं प्रतिष्ठाकामास्त एतमेकान्नपञ्चाशद्रात्रमुपेयुरि"ति । काठके—"अभिप्लवावतिरात्रावभिप्लवावभिजिद्विश्वजिदतिरात्रावभिप्लवो द्व्यहो द्वादशाहस्य द्वादशाहो महाव्रतं चे"ति । आश्वलायनः—"यमातिरात्रं यमान द्विगुणामिव श्रियमिच्छन्तो द्वावभिप्लवौ गो आयुषो अतिरात्रौ द्वावभिप्लवावभिजिद्विश्वजितावतिरात्रावेकोभिप्लवः सर्वस्तोमो नवसप्तदशावतिरात्रौ महाव्रतमि"ति ।

तृतीयमेकान्नपञ्चाशद्रात्रमाञ्जनाभ्यञ्जनीयसंज्ञम् । तत्र षडभिप्लवाः षडहा भवन्ति । तेषां मध्ये चतुर्भ्योऽभिप्लवेभ्यः परः सर्वस्तोमोऽतिरात्रो भवति । ततः पञ्चमषष्ठावभिप्लवौ । ततो दशरात्र उदयनीय इति ।

अत्रायं क्रमः । प्रायणीयः ? । चत्वारोऽभिप्लवाः । २५ । सर्वस्तोमोऽतिरात्रः २६ द्वावभिप्लवौ ३८ । दशरात्रः ४८ । उदयनीय ४९।इति ।

अस्मिन्नाञ्जनाभ्यञ्जनीये सत्रे उपसत्सु गुल्गुलुसुगन्धिते पितुदारुभिः सह गार्हपत्येऽग्नौ सर्पिर्विपचेयुः पृथक्पृथगेकैकेन सह । न सर्वैरेकत्र । ततः सुत्यासु प्रत्यहमाग्नीध्रगृहे प्रातःसवने गुग्गुलुघृतेन सर्वे दीक्षिताश्छन्दोगसूत्राद्यवि धून्वानाः पुरस्तादुपविश्याक्ष्णोरञ्जनं शरी-

वातिरात्रौ ॥६॥ आञ्जनाभ्यञ्जनीयेऽभिप्लवाः षट् ॥७॥ चतुर्भ्यः सर्वस्तोमोऽतिरात्रः ॥८॥ तस्मिन्नुपसत्सु सर्पिर्विपचेयुर्गार्हपत्ये गुल्गुलुसुगन्धितेजनपितुदारुभिः॥९॥ यथासवनन्ते सवनेष्वाञ्जनाभ्यञ्जने कुर्वीरन्नाग्नीध्रेऽहरहः ॥१०॥ पृष्ठ्ये वा ॥११॥ सवनमुखीयेषु भक्षयिष्यन्तो वा ॥१२॥ य आत्मानं नैव जानीरंस्तेषामेतत् ॥१३॥ सम्वत्सरसम्मितं चतुर्विंशमहः ॥१४॥ अभिप्लवाश्च·

---

रस्याभ्यञ्जनं च कुर्वन्ति ।

माध्यन्दिने सवने सुगन्धितेजनपक्वघृतेन । तृतीयसवने पितुदारुपक्वेन घृतेनैवमेव कुर्वन्ति । ततश्चाञ्जनं सवनानामादिषु । अथ वा सवनमुखीयेषु चमसेषु भक्षणात्प्राक् सर्वेषु यथोक्तमाञ्जनाभ्यञ्जने कुर्वन्ति ।

अथवैतदाञ्जनाभ्यञ्जनं पृष्ठ्य एव भवति न सकले सत्रे । ये यजमाना आत्मानं नैव जानीरन् तेषामिदं सत्रं भवन्ति । अत्र जानातिरन्तर्भावितण्यर्थः । न ज्ञापयेयुरेव विद्वत्सभामध्ये स्वात्मानं प्रख्यापयितुमशक्ता इत्यर्थः । अनुलोमाञ्जनमाञ्जनम् । प्रतिलोमाञ्जनमभ्यञ्जनमिति याज्ञिकाः ।

छन्दोगसूत्रे विशेषः—"आञ्जनाभ्यञ्जने गार्हपत्य उपसत्सु सर्पींषि फाणयेयुः पृथग्वा देवसुरभीन्युक्तानि ब्राह्मणे न तैः सुत्यासूपाकरणवेलायां सवनानां पूर्वेण हविर्द्धाने आसीना आञ्जीरन्नभ्यञ्जीरन्नत्रिणी । गात्राणि चाभ्यञ्जीरन्निति भाष्ये । "भुक्त्वा मार्गोध्राय एवे" ति गौतमः । "अहरहर्वैतत्कुर्यादि"ति धानञ्जय्यशाण्डिल्यौ । "सर्वस्तोम एवे"तिगौतमः पृष्ठ्य इत्येक इति । मानवे—"षण्णां षडहानां पञ्चमस्य पुरस्तात्सर्वस्तोमोऽतिरात्रः । पृष्ठ्यश्चोपरिष्टाद् दशरात्रः आञ्जीरंश्चाभ्यञ्जीरंश्चैतेष्वहःसु गुग्गुलुफाण्टेन प्रातःसवने सौगन्धिकफाण्टेन माध्यन्दिने सवने पैतुदारुफाण्टेन तृतीयसवने प्रातरनुवाकमनुवक्ष्यतः प्रातःसवने प्रसर्पन्तश्चैवमितरयोः सवनयोर्य आत्मानं नैव जानीरंस्त एतमेकान्नपञ्चाशद्रात्रमुपेयुरि"ति ।

"त्रयाणामुत्तरेषां न्यायक्लृप्ता अभिप्लवाः प्रथमस्य तृच्वं चतुर्थात्सर्वस्तोमोऽतिरात्र उपसत्सु गार्हपत्ये गुग्गुलुसुगन्धितेजनपैतुदारु·

स्त्वारः ॥ १५॥ गोआयुषी त्रिभ्यो विषुवन्मध्यां नवरात्रः ॥१६॥ एकषष्टिरात्रे पृष्ठ्यो नवरात्रमभितः ॥१७॥ प्रतिलोमः परः ॥१८॥ सवितुः ककुभः ॥१९॥ नवरात्राश्चत्वारः ॥२०॥ अग्निष्टोमाः प्रथमसप्तमोत्तमा नववर्गाणामुक्थ्या इतरे ॥२१॥ परे षडभिप्लवे ॥२२॥ पूर्वस्य

---

भिः पृथक सर्पाभि विपञ्चयानुसवनं सत्रेषु नाराशंसेष्वाञ्जीरन्नभ्यञ्जीरंश्च ये वर्चसामभीयुर्यं वात्मानं नैव जानीरंस्त एता उपेयुराञ्जनाभ्यञ्जनीया इत्याचक्षत" इति ।

अथ संवत्सरसंमितसं चतुर्थमेकान्नपञ्चाशद्रात्रम् । तत्र प्रायणीयात्परं चतुर्विंशमहः । ततोऽभिप्लवषडहाश्चत्वारः ।

ततो गोआयुषी । तेषां चतुर्णामभिप्लवानां मध्ये त्रिभ्योऽभिप्लवेभ्यः परस्तृतीयचतुर्थाभिप्लवयोर्मध्ये विषुवन्मध्ये गवामयनिको नवरात्रो भवति । अभिजिदग्निष्टोमस्त्रयः स्वरसामानो विषुवांस्त्रयः स्वरसामानो विश्वजिदित्येवम् । ततश्चतुर्थोऽभिप्लवो गोआयुषी । ततो दशरात्रो महाव्रतमुदयनीय इति । अत्रायं क्रमः । प्रायणीयः १। चतुर्विंशमहः २। त्रयोऽभिप्लवाः २०। अभिजित् २१। त्रयः स्वरसामानः ॥२४॥ विषुवान् २५। त्रयः स्वरसामानः प्रतिलोमाः २८। विश्वजित् २९ । अभिप्लव ३५। तत आयुः ३६। ततो गौः ३६। ताण्ड्य एवं पाठात् । दशरात्रः ४६। महाव्रतम् ४८। उदयनीयः ४९। इति ।

मानवे—"चतुर्विंश उक्थ्यास्त्रयः षडहा नवरात्रः षडहो गोआयुषी दशरात्रो महाव्रतं संवत्सरसंमितं संवत्सरं काममिच्छन्तस्तस्य एतमेकान्नपञ्चाशद्रात्रमुपेयुरि"ति । आश्वलायनः—"संवत्सरकामा वाश्यन्त उत्तममतिरात्रश्चतुर्विंशस्त्रयोऽभिप्लवा नवरात्रोऽभिप्लवो गो आयुषी दशरात्रो व्रतमतिरात्रः संवत्सरसंमित इत्याचक्षत" इति ।

शांङ्खायनः—"चतुर्विंशनिस्त्रयोऽभिप्लवा अभिजित्स्वरसामानो विषुवानावृत्ताः स्वरसामानो विश्वजिच्चाभिजित्प्रभृति नवरात्र इत्याचक्षतेऽभिप्लवो गोआयुषी दशरात्रो महाव्रतमित्येकान्नपञ्चाशद्रात्रः संवत्सरसंमित" इति ।

अथ सवितुः ककुभः इत्येवंसंज्ञं पञ्चममेकान्नपञ्चाशद्रात्रं सर्वजिद्दीक्षा सत्रम् । तत्र प्रायणीयात्पराश्चत्वारो नवरात्रा भवन्ति । तेषु चतुर्ष्वपि नवरात्रेषु नवानां नवानामन्हां मध्ये प्रथमसप्तमनवमा अग्निष्टोमसंस्था

**चतुर्भ्यो व्रतम् ॥२३॥ प्रजातिकामानामेतत् ॥२४॥ प्रकृतिविहितः शतरात्रं चतुर्दशाभिप्लवं चतुरहश्च ॥२५॥ सदोहविर्धानानि चक्रीवन्ति ॥२६॥ अभिप्रयायमभिषुण्वन्ति देशानुपरोधेन ॥२७॥ अहरहरभिप्लवेषु त्रिककद्रुकेषु वा ॥२८॥ अभिप्लवाभ्यासेनाभिपूरणम् ॥२९॥ सकृत्प्रयोगी दशरात्रः ॥३०॥ व्रतवन्ति सर्वजिद्दीक्षाणि सप्तदशरात्रादीनि त्रिंशदन्तान्येक एकान्नपञ्चाशद्रात्रे चाष्टादशदीक्षाणि पार्णमासीप्रक्रमाणि ॥३१॥ शतातिरात्रेऽहानि शतरात्रसामान्यात् ॥३२॥ द्वादशाहाद्यं वा तत्प्रकृतेः ॥३३॥ शताग्निष्टोमे शतोक्थ्ये च ॥३४॥ आ-**

---

भवन्ति । इतरे षट् षट् उक्थ्यसंस्थाः । ततो दशरात्रो महाव्रतमुदयनीय इति ।

अत्रायं क्रमः । प्रायणीयः १। ततो नवरात्राश्चत्वारः ३६। तत्रैकैकस्मिन्नवरात्रे प्रथमोऽग्निष्टोमः ततः पञ्चोक्थ्याः ततः सप्तमोऽग्निष्टोमः । अष्टम उक्थ्यो नवमोऽग्निष्टोम इति । एवंविधाश्चत्वारोऽपि नवरात्रा भवन्ति । ततो दशरात्रः ४०। महाव्रतम् ४८। उदयनीय ४९। इति ।

मानवे—"पञ्चोक्थ्या अग्निष्टोमा भवन्ति उक्थ्यो मध्ये त्रिवृत्स्तोमो नवानामेतेन कल्पेन त्रयो नवरात्रा व्याख्याताः । पञ्चदश सप्तदशैकविंशस्तोमा दशरात्रो महाव्रतं प्रतिष्ठाकामास्त एतमेकान्नपञ्चाशद्रात्रमुपेयुरि"ति । आश्वलायनः—"स्वानां श्लाघ्यकामास्तृतीयं चतुर्णां पृष्ठ्यानामेकैकं नवकृत्वो नववर्गाणां प्रथमसप्तमोत्तमान्यहान्यग्निष्टोमा उक्थ्या इतरे महाव्रतं सावतुः कुकुभ इत्याचक्षत" इति ।

अथ षष्ठमेकान्नपञ्चाशद्रात्रं सर्वजिद्दीक्षं प्रजातिकामानां भवति । प्रजातिः प्रजा । तत्र सूत्रम्—"परे षडभिप्लवे पूर्वस्य चतुर्भ्यो व्रतमि"ति । परे षष्ठसप्तमे एकान्नपञ्चाशद्रात्रे षडभिप्लवे भवतः । द्वयोरपि षट् षडभिप्लवा भवन्तीत्यर्थः । तयोः परस्परमयं विशेषः । पूर्वस्य षष्ठस्य चतुर्भ्योऽभिप्लवेभ्यः परं महाव्रतं भवति । सप्तमस्य तु दशरात्रादुत्तरं प्रागुदयनीयान्न्यायप्राप्तमिति ।

तत्र षष्ठस्याह्नामयं क्रमः । प्रायणीयः चत्वारोऽभिप्लवाः २५। महाव्रतम् २६। द्वावभिप्लवौ ३८। दशरात्रः ४८। उदनीयः ४९। इति ।

ष्टिवनस्याग्नेयान्ते प्रतिप्रस्थाता व्युत्क्रामंतादि कृत्वा मैत्रावरुणाय प्रातरनुवाकमुपाकृत्यान्तर्यामं हुत्वा प्रपी·

---

मानवे— 'तृतीयेनोत्तमो व्याख्यातः सर्वस्तोमस्य स्थाने महाव्रतं नाङ्जी·रत्नाभ्यञ्जीरग्निपाप्मना वर्लमहीति कामास्त एतमेकान्नपञ्चाशद्रात्रमुपे·युरि"ति । आश्वलायनः—"एता एव प्रतिष्ठाकामा आञ्जनाभ्यञ्जनवर्जमे·तासामेव सर्वस्तोमस्थाने महाव्रतमैन्द्रमि"ति ।

अथ सप्तममेकान्नपञ्चाशद्रात्रं सर्वजिद्दीक्षम् । तत्राहानि । प्रायणीयः १। षडभिप्लवाः ३६। दशरात्रः ४७। महाव्रतम् ४८। उदयनीय ४९। इति । मानवे-"षट् षडहा दशरात्रो महाव्रतं प्रतिष्ठाकामास्त एकान्नपञ्चाश·द्रात्रमुपेयुरि"ति । आश्वलायनः—"अत्यन्थाः प्रजा बुभूषन्त एतासामिव सर्वस्तोममुद्धृत्य यथास्थानं महाव्रतमि"ति ।

अथैकषष्टिरात्रं सर्वजिद्दीक्षम् । तत्र नियमेनाग्निः । तत्र सम्वत्सरसंमित·सूत्रणान्तरं सूत्रम्-"एकषष्टिरात्रे पृष्ठ्यो नवरात्रमभित" इति । उक्तं हि-"सम्वत्सरसंमिते चतुर्विंशमहरभिप्लवाश्चत्वारो गो आयुषो त्रि·भ्यो विषुवन्मध्ये नवरात्र" इति । अत्र एकषष्टिरात्रे तं विषुवन्मध्यं नव·रात्रमभितः पृष्ठ्यो भवति । एको नवरात्रस्य पुरस्तात्पृष्ठ्यः षडहो भवति । द्वितीयो नवरात्रस्य पश्चात् । स तु प्रतिलोमत्र्यस्त्रिंशारम्भणो भवति ।

तत्रायमह्नां क्रमः । प्रायणीयः १। चतुर्विंशमहः २। त्रयोऽभिप्लवाः २०। पृष्ठ्यः २६। अभिजित् २७। त्रय स्वरसामानः ३०। विषुवान् ३१। प्रतिलोमास्त्रयः स्वरसामानः ३४। विश्वजित् ३५। प्रतिलोमः पृष्ठ्यः ४१। एकोऽभिप्लवः ४४। ततो गोआयुषी । तत्रापि प्रथममायुः ४८। ततो गौः ४९। ताण्ड्ये तथा पाठात् । दशरात्रः ५९। महाव्रतम् ६०। उदयनीय इति ॥ ६१ ॥

अत्र छन्दोगसूत्रे विशेषः । तदैकषष्टिरात्रमुपेयुस्ते देवयजनमध्यव·साय गार्हपत्य आहुतिं जुहुयुः । देव वरुण देवयजनं नो देहि स्वाहेति । मानवे-"संम्वत्सरसम्मिते पृष्ठ्यावधिकौ पुरस्तादभिजित उपरिष्टादेतद्·वृद्धिकामा एकषष्टिरात्रमुपेयुरि"ति । आश्वलायनः-"एकषष्टिरात्रं प्रतिष्ठा·कामा एतासामेव पृष्ठ्यावभितो नवरात्रे तयोरावृत्त उत्तर" इति ।

कठसूत्रे-"एतास्वेव संवत्सरसंमितास्त्रभितो नवरात्रं पृष्ठ्यौ ताण्डिनः समावपन्ति । पृष्ठ्यावभिप्लवौ भाल्लविनोऽभिप्लवौ शाट्यायनिन एक·षष्टिरात्रस्तदेव देवयजनमध्यवसाय यजेत देव वरुण देवयजनं नो देही"ति ।

अथ पवित्रे द्रोणकलशे निदधाति ॥३५॥ सशेषः होतव्यमसम् ॥३६॥ तिरोऽह्न्यादि करोति पूर्वस्याह्नः ॥३७॥

---

अथ शतरात्रं सत्रम् । तत्र सूत्रम् । "प्रकृतिविहितं शतरात्रं चतुर्दशाभिप्लवं चतुर्दशाभिप्लवं चतुरहश्चेति"। तत्र प्रायणीयः १। चतुर्दशाभिप्लवाः ८५। ज्योतिः ८६। गौः ८७। आयुः ८०। महाव्रतं ८९। दशरात्रं ९९। उदयनीय १०० इति । अत्र सदोहविर्धानानि चक्रयुक्तानि भवन्ति । मञ्जूषावत् । सर्वेष्वहःसु अभिप्रयायमभिगत्याभिषुण्वन्ति देशानुपरोधेनेति । यावदभिगच्छन्ति तदानीमेव तावत्प्रत्यागत्याभिषुण्वन्ति। अथवा अभिप्लवषडहेष्वेवाभिप्रयायमभिषवो न सर्वेष्वहःसु । अथवा त्रिरात्रादिषु त्रिककुकेष्वेव वा । तथा च छन्दोगसूत्रम्-"अहरहरेतत् कुर्युरिति धानञ्जय्यशाण्डिल्यौ अभिप्लवेष्वेवेति गौतमस्त्रिककुकेष्वित्येक" इति । केचिदत्र शतरात्रद्वयं वर्णयन्ति । एकं प्रकृतिविहितम् । द्वितीयमौपदेशिकम् । तत्र प्रकृतिविहिते प्रायणीयादनन्तरं त्रिककुभः चतुर्दशाभिप्लवाः दशरात्रस्ततो व्रतमुदयनीय इति ।

ताण्ड्ये इदमेवाम्नातमस्ति न पूर्वोक्तम् । द्वितीयं तु प्रागुक्तक्रमेणेति । मानवे-"ऽयहश्चतुर्दशो दशरात्रे महाव्रतमायुःकामाः शतरात्रमुपेयुरभिप्रयायमभिषुण्वन्ति समानं तत्राभिषुण्वन्तो"ति । तथा ताण्ड्ये च-"द्विक्षोदवसानं प्रसवोऽभिषवः क्रयस्तानि पूर्वपक्षेऽसंभवे दीक्षोदवसानं वाऽऽग्नेय ऐन्द्राग्नो वैष्णवः पौष्णो वायव्य आश्विनः बहतिरिक्ताः पशवः सत्रेषु" इति ।

काठके-"ऽयहश्चतुर्दशाभिप्लवा दशाहो महाव्रतं च शतरात्रस्तत्र हविर्धानयोश्चक्रे च स्थापयित्वा तत्रैवाभिषुण्वन्ति"। आश्वलायनः-"शतरात्रमायुःकामाश्चतुर्दशाभिप्लवाश्चतुर्होत्रजना" इति रात्रिसत्राणीति । तदेवं सर्वसत्राणामभिप्लवाभ्यासेन पूरणं कर्त्तव्यम् । दशरात्रस्तु सकृदेव प्रयुज्यते । तथैव ताण्ड्ये श्रवणात् ।

व्रतवन्ति महाव्रतयुक्तानि यानि सत्राणि भवन्ति तानि सर्वाणि सर्वजिद्दीक्षाणि भवन्ति, तेषु नियमेनाग्निचयनं भवति । एके आचार्या एवमाहुः । सप्तदशरात्रादीनि त्रिंशद्रात्रपर्यन्तानि महाव्रतरहिते द्वे एका अष्टाशद्रात्रे प्रथमतृतीये विधृत्याञ्जनीयसंज्ञे च । एतानि सत्राण्येषा दशदीक्षाणि भवन्ति पौर्णमास्यां च आरभ्यन्त इति । अन्ये तु यथाप्राप्तमिति ।

अथ शतातिरात्रं सत्रम् । तत्रातिरात्रसंस्थो दशरात्रो दशवारमावर्तत

ग्रग्रहणाद्या विप्रुड्ढोमान्तकृत्वा ॥३८॥ ॥ ३ ॥

इति सम्प्रदायः । अपूर्वाण्येव शतसंख्यान्यतिरात्रसंस्थान्यहानि द्वादशाहधर्मकाणि भवन्तीति कर्कः । अत्राश्विनशस्त्रस्याग्रे कृतेऽन्ते अध्वर्योराश्विनशस्त्रप्रतिगरे ऽप्यापूनत्वात्प्रतिपयस्यार्थं वत्सापाकरणान्तं कर्म कृत्वा आपररात्रिकं च परिस्तरणवर्जितं पात्रासादनादि सोमोपावहरणान्तं च कृत्वा होतुराश्विनशस्त्रे ऽप्यापूतत्वान्मैत्रावरुणाय प्रातरनुवाकमुपाकृत्याग्निमहोमपर्यन्तं सर्व कर्म कृत्वोद्गातृभिर्वितितं पवित्रं हस्तेन प्रपीड्य नीरसं कृत्वा द्रोणकलशस्योपरि निदधाति । सशेषं होतृचमसं च तत्रैव निदधाति ।

ततोऽध्वर्युः सूर्योदयानन्तरमाश्विने शस्त्रे समाप्ते पूर्वस्याह्नः सम्बन्धि तिरोह्न्यादिकर्म अश्विभ्यां तिरोह्न्यानाꣳ सोमानामनुब्रूहीत्यादिकं करोति । एवं तिरोह्न्यैश्चमसैरिष्ट्वा सदस्यागत्य तांश्चमसान्भक्षयित्वा क्रमेण यज्ञपृष्ठे संस्थापयेत् ।

इति तृतीया कण्डिका ॥ ३ ॥

ततः पवित्रं वितत्यैन्द्रवायवग्रहणादि विप्रुड्ढोमान्तं कृत्वाऽग्निः प्रातः सवन इति मन्त्रेणाध्वर्युः सवनसन्ततिसंज्ञं होमं सकृद् गृहीतेनाज्येन करोति । तत प्रतिप्रस्थातृकर्तृके कर्मणि विशेषो लिख्यते । प्रथमं प्रतिप्रस्थातुः शाखाच्छेदनाद्युपगूहनान्तम् । माध्यन्दिनेन गृहीताश्चेदिह वसतीवरीणां ग्रहणं सादनान्तम् । ततो व्युत्क्रामतादि पयस्यार्थं वत्सापाकरणान्तम् । यथासम्भवं समित्स्वाध्यायोपगमः ।

अपामुपस्पर्शनम् । परिस्तरणमस्त्येव । पत्नीसन्नहनादि । परिधयः सन्त्येव । शेषमासाद्यते । पवित्रकरणाद्याज्यासदनान्तम् । सोमोपावहरणम् । मैत्रावरुणाय प्रातरनुवाकोपाकरणम् । अभिषवकालेऽग्निप्रतिगरेऽभिषवो वा । महाभिषवे कृते क्षुल्लकाभिषवं कृत्वोपांशुग्रहे हुते उद्गात्रादिभिर्द्रोणकलशप्रोहणे पवित्रवितनने च कृते उदितेऽन्तर्यामं गृहीत्वा हुत्वा च पात्रमासाद्य पवित्रं प्रपीडय द्रोणकलशस्योपरि निदधाति । सशेषं होतृचमसमपि तत्रैव निदधाति ।

तत उदिते पूर्वस्याह्नः संम्बन्धि तिरोह्न्यादि आश्विनपुरोडाशचमसप्रचारादि पत्नीसंयाजान्तं पारधिप्रहरणयोक्त्रविमोकवर्जं प्रतिपत्तिपरिसमाप्तिः । तत ऐन्द्रवायवादि विप्रुड्ढोमान्तम् । ततः सवनसन्ततिहोमः । एवं सत्रसमाप्त्यन्तं प्रत्यहं कर्त्तव्यम् ।

**सवनसन्तानिं जुहोत्यग्निः प्रातः सवन इति ॥१॥**
**सम्वत्सरप्रभृतीनि गवामयनप्रकृतीनि तद्गुणदर्शनात्**

---

अथ शतातिरिष्टोमसत्रम् । तत्राग्निष्टोमसंस्थो दशरात्रमावर्त्यते दशकृत्व इति सम्प्रदायः । अग्निष्टोमसंस्थानि शतसंख्यान्यपूर्वाण्यहानीति कर्कः । दीक्षोपसदो द्वादश । अन्यत् सर्वं प्रकृतिवत् । अथ शतोक्थ्यं सत्रम् । तत उक्थसंस्थस्य दशरात्रस्य दशकृत्व आवृत्तिरिति सम्प्रदायः । शतसंख्यान्युक्थ्यसंस्थान्यपूर्वाण्येवाहानीति कर्कः । अन्यत्सर्वं द्वादशाहवत् । अथ सम्वत्सरादिकालव्यापकानि सत्राण्यभिधीयन्ते । तत्र संवत्सरप्रभृतीनि सहस्रसम्वत्सरपर्यन्तानि सत्राणि गवामयनप्रकृतीनि भवन्ति । तेन तेषु आरम्भकालोपसत्पवमानेष्टुद्राग्रालम्भसवनान्तजपादिकं सर्वं गवामयनवद् भवति । तत्र गवामयनं त्रयोदशाध्याये उक्तम् ।

आश्वलायनोक्तं गवामयनं लिख्यते । “अथ गवामयनं सर्वकामाः प्रायणीयचतुर्विंशे उपेत्य चतुरभिप्लवान्पञ्चायनान्पञ्च मासानुपयन्त्यथ पृष्ठं भरन्ति त्रीनभिप्लवान्पृष्ठ्यमभिजितं स्वरसाम्न इत्याद्याभ्यां पूर्यते ऽहोभ्यामिति तु पूर्वपक्षोऽथ विषुवानेकविंशो न पूर्वस्य पक्षसा नोत्तरस्यावृत्ताः स्वरसामानः षडहाश्चोत्तरपक्षसः स्वरसाम्नो विश्वजितं पृष्ठ्यस्त्रीनभिप्लवानिति सप्तमं द्विरात्रेणं कृत्वा च पृष्ठ्यमुखांश्चतुरभिप्लवांश्चतुरो मासानुपेत्याथोत्तरं सम्भरन्ति त्रीनभिप्लवान् गोआयुषी दशरात्रं व्रतोदयनीयाभ्यां सप्तमः पूर्यत इति स्वेकमिग्ति ।

काठके–“प्रायणीयोऽतिरात्रश्चतुर्विंशं चत्वारोऽभिप्लवाः पृष्ठ्यः स मास एवं विहिताः पञ्चायनमासास्त्रयोऽभिप्लवाः पृष्ठ्योभिजित्त्रयः स्वरसामानः प्रथमाभ्यामहोभ्यां सहस्रं भार्यः षष्ठो मासो मध्ये विषुवानेकविंशोऽग्निष्टोमस्त्रयः स्वरसामानो विश्वजित्पृष्ठ्यस्त्रयोभिप्लवा उत्तमाभ्यामहोभ्यां सह सम्भार्यः सप्तमो मासः पृष्ठ्याश्चत्वारोऽभिप्लवाः स मास एवं विहिताश्चत्वारोऽयनमासास्त्रयोभिप्लवा त्र्यहो दशाहो महाव्रतमतिरात्रश्च गवामयनं सम्वत्सरं स्यादित एकादशरात्र एकादशिना उत्तमे वैकादशरात्रे तस्य बार्हस्पत्यं शितिपृष्ठं षष्ठेऽहन्नालभेरन्द्यावापृथिव्यां धेनुं सप्तमे तस्या वायव्यं वत्समष्टम एका चेत् पृश्निं नवम आदित्यां दशमे विश्वकर्मणमृषभं महाव्रते त्रिरूपमुभयत एवतं० सकृत्रोत्तमे मासि पृष्ठ्यान्युपेयुः पृष्ठ्यस्थानेऽभिप्लवा इतरेषु मासेषु मासि मास्येकैकमहरुत्सृजेयुरूर्ध्वं षडहेभ्यः पञ्चविंशषष्ठे एकान्नविंशं०शे सप्तमे एकान्नविंशमुत्तमे त एतेष्वहःसु प्राजापत्यमजमालभेरन्निग्ति ।

॥२॥ आदित्यानामयनेऽभिप्लवास्त्रिवृत्पञ्चदशस्तोमाः॥३॥ मासाः पृष्ठ्यमध्याः ॥४॥ बृहस्पतिसवोऽभिजित्स्थाने

---

आश्वलायनः—"अथ समनीयाः क्रतुपशव ऐन्द्राग्नो वाग्नेयं वा रथन्तरं पृष्ठ्यैन्द्रं बृहत्पृष्ठ्येष्वैकादशिनान्वा प्रायणीयोदयनीययोरतिरात्रयोः स-मस्तानालभेरन्नैन्द्राग्नं वाऽन्वहं वैकैकमेकादशिनान्वैकादशिनीमाल भेरन्नैन्द्रं चेत्। पश्वयनेनेयुस्तृतीयेऽहनि दशरात्रस्य द्वात्रिंशशतमेकाद-शिनः सन्तिष्ठन्ते त एतस्मिन्नवरात्रेऽतिरिक्तपशूनालभेरन्वैष्णवं वा त्रि-णवे वैश्वदेवं त्रयस्त्रिंशे द्यावापृथिवीयां धेनुश्चतुर्विंशे तस्या एव वत्सं वायव्यं चतुश्चत्वारिंश आदित्यां वशामष्टाचत्वारिंशे मैत्रावरुणीमवि-वाक्ये वैश्वकर्मणमृषभं महाव्रते आग्नेयमुदयनीयेऽतिरात्रेऽपि वैकाद-शिनीमेव त्रयस्त्रिंशी पूरयेयुरभिजिद्विषुवन्तो"ति ।

अथादित्यानामयनं सम्वत्सरसत्रमुच्यते । तत्र गवामयनादयं विशेषः । अभिप्लवषडहाः सर्वे त्रिवृत्पञ्चदशस्तोमका भवन्ति । तत्रायुग्मान्य-हानि त्रिवृत्स्तोमकानि । युग्मानि तु पञ्चदशस्तोमकानि । गवामयने तु मासानामन्ते पृष्ठ्यो भवन्ति । अत्र तु मासाः पृष्ठ्यमध्या भवन्ति । तथा अभिजितः स्थाने बृहस्पतिसवो भूषडहाः सप्तमे मासि वर्त्तन्ते तेषां त्रयाणां मध्ये उत्तरयोर्द्वितीयतृतीययोरभिप्लवयोः स्थाने त्रिवृत्स्तो मका दशाग्निष्टोमा भवन्ति । तत उद्भिद्बलभिदौ च द्वौ । एवं द्वादश-भिर्द्वयोरभिप्लवयोः स्थानं पूर्यते ।

तथा उत्तरे पक्षे षष्ठमासस्यादौ ये त्रयोऽभिप्लवा गवामयने सन्ति तेषां त्रयाणां मध्ये मध्यमस्याभिप्लवस्य स्थाने पृष्ठ्यः षडहो भवति । तथा द्वादशाहिकदशरात्रस्य स्थाने छन्दोमदशाहो भवति । एवं विधमे-तदादित्यानामयनं सत्रं भवति ।

अत्र गवामयनवदेवारम्भकालो द्वादश दीक्षा द्वादशोपसदः पवमा-नेष्ट्यन्तादालम्भसवनान्तं जपादिकं त्रीणि शतान्येकषष्ठ्यधिकानि सौत्या-न्यहानि । तानि क्रमेण लिख्यन्ते । प्रायणीयः १। चतुर्विंशमहः २। ततो द्वावभिप्लवौ त्रिवृत्पञ्चदशौ । तत्र युग्मान्यहानि त्रिवृत्स्तोमकानि अयु-ग्मानि तु पञ्चदशानि १२। ततः पृष्ठ्यः षडहः १२। ततो द्वौ त्रिवृत्पञ्च-दशावभिप्लवौ ३०। एवं प्रथमो मासः पूर्णः १। एवमेव द्वितीयः २। एवमेव तृतीयः ३। एवमेव चतुर्थः ४। एवमेव पञ्चमः ५। षष्ठे मासे त्रयोऽभिप्लवास्त्रिवृत्पञ्चदशस्तोमाः १८। पृष्ठ्यः २४। ततस्त्रिवृद्बृहस्प-तिसवः २५। ततस्त्रयः स्वरसामानः २८। द्वे अहनी प्रायणीयचतुर्विंशे

॥५॥ इन्द्रस्तोमो विश्वजितः ॥६॥ विश्वजितः परे ये त्रयोऽभिप्लवास्तेषामुत्तरयोः स्थाने त्रिवृतोऽग्निष्टोमा

अत्र गण्येते । ३० । एवं षण्मासा जाताः । ततो मध्ये विषुवान् १। तत प्रतिलोमाख्यः स्वरसामानः ३। ततः पञ्चदशस्तोमक इन्द्रस्तोम उच्यः संस्थः ४। प्रतिलोमः पृष्ठ्यः १०। तत एकः पञ्चदशत्रिवृत्षडहोऽभिप्लवाख्यः । तत्रायुग्मानि पञ्चदशानि । युग्मानि तु त्रिवृत्स्तोमकानि १६ ततस्त्रिवृत्स्तोमका व्यूढा अग्निष्टोमा दश २६। तत उद्भिद्बलभिदौ २८ इमान्यष्टाविंशत्यहानि ।

महाव्रतोदयनीयाभ्यामस्य मासस्य पूरणं कर्तव्यम् । ततोऽष्टमे मासि द्वौ पञ्चदशत्रिवृतावभिप्लवौ षडहौ १२। तत एकः प्रतिलोमः पृष्ठ्यः षडहः १८। ततो द्वौ पञ्चदशत्रिवृतावभिप्लवौ षडहौ ३०। एवम ष्टमो मासः । एवमेव नवमदशमैकादश मासाः । द्वादशे मासि पञ्चदशत्रिवृदेकोभिप्लवः षडहः ६। तत एकः प्रतिलोमः पृष्ठ्यः १२। ततः पञ्चदशत्रिवृदेकोभिप्लवः षडहः १८। ततो गोआयुषी २०। ततश्छन्दोमदशाहः । ततः प्रथममहरष्टाचत्वारिंशम् १। ततश्चतुश्चत्वारिंशम् २। चत्वारिंशम् ३। षट्त्रिंशम् ४। द्वात्रिंशम् ५। त्रिंशम् ६। द्वे अष्टाविंशे ७।८ पञ्चविंशम् ९। चतुर्विंशमिति १०। ततो महाव्रतम् १। उदयनीय इति । २। इमे द्वे अहनी सप्तममासे गणिते । एवम् ३६१। इत्यादित्यानामयनम् ।

मानवे—"गवामयनं प्रजातिकामा उपेयुस्तेनादित्यानामयनं व्याख्या तमङ्गिरसां च त्रिवृत् पञ्चदशस्तोमः षडहानां पुरस्तात्पृष्ठ्यो मासानां प्राग् विषुवतः पञ्चदशस्त्रिवृदुपरिष्टान्मध्ये पृष्ठ्यो मासानां बृहस्पतिसवोऽभिजितः स्तोमवते विश्वजिते इन्द्रस्तोमस्तस्मादुत्तरः पृष्ठ्यः षडहो दशरात्रो व्यूढा अग्निष्टोमास्त्रिवृत उद्भिद्बलभिदौ च सोऽष्टाविंशत्यहः पृष्ठ्यः षडहो यो मध्ये गोआयुषी भवतश्छन्दोमस्तोमश्छन्दोमदशाहो गवामयनेन शेषो व्याख्यातः स्वर्गकामा उपेयुरि"ति ।

आश्वलायनः—"गवामयनेनादित्यानामयनं व्याख्यातम् । सर्व स्वभिप्लवास्त्रिवृत्पञ्चदशा मासाश्च पृष्ठ्यमध्या नवषष्ठसप्तमोत्तमाग्वर्जयित्वा बृहस्पतिसवेन्द्रस्तुतौ चाभिजिद्विश्वजितोः स्थाने सप्तमस्य च मासस्योत्तमयोरभिप्लवयोः स्थाने त्रिवृद्व्यूहो दशरात्र उद्भिद्बलभिदौ चोत्तमस्य च मासस्यादौ येऽभिप्लवास्त्रय उद्धृत्य तेषां पृष्ठ्यमध्यमाः समूढो दशरात्र" इति ।

दश ॥७॥ उद्भिद्बलभिदौ च ॥८॥ षष्ठमासादौ मध्यमस्थाने पृष्ठ्यः ॥९॥ दशरात्रस्य छन्दोमदशाहः ॥१०॥ अङ्गिरसामयनमादित्यानामयनवत् ॥११॥ अभिप्लवास्त्रिवृतः ॥१२॥ मासाः पृष्ठ्यादयः पूर्वपक्षे ॥१३॥ प्रतिलोमाः परे ॥१४॥ योऽभिप्लवमध्ये पृष्ठ्य उत्तमः सः ॥१५॥ गोआयुषी प्रतिलोमे ॥१६॥ छन्दोमदशाहश्च ॥१७॥ इ-

---

शाङ्खायनः—"सप्तदश गवामयनस्य दीक्षाः कुर्वाणाश्चतुरहे पुरस्तात्पौर्णमास्यां दीक्षेरंस्तेषां ज्येष्ठस्य पञ्चम्यां प्रसवः प्रायणीयमतिरात्रमुपेत्य चतुर्विंशं च पृष्ठ्यपञ्चमांश्चतुरो मासानुपयन्ति समासस्तूक्थ्ययुतान्पञ्च मासानुपेत्य पृष्ठ्यचतुर्थानभिप्लवानुपयति । नवरात्रं चोर्ध्वं विश्वजितः पृष्ठ्यारम्भणान्मासानुपयन्ति । पृष्ठ्याभिप्लवौ द्वावन्वहमावर्तते वैश्वदेवयुक्तानि चोत्तमानामाभिप्लविकानां पृष्ठ्यमुपेत्य त्रीनभिप्लवान्त्समासः पृष्ठ्यमुपेत्य चतुरोऽभिप्लवांस्तथायुक्तांश्चतुरो मासानुपेत्य त्रीनभिप्लवानुपयन्त्यायुर्गं दशरात्रं महाव्रतमतिरात्रं चेति गवामयनस्याहर्योगस्तत्प्रभृतीनि संवत्सरसत्राणि तेषु विकारोऽन्यत्र दशरात्रात्पृष्ठ्यस्याभिप्लवस्थाने तदभिप्लवायनम । आदित्यानामयने त्रिवृत्पञ्चदशावभिप्लवस्तोमौ पूर्वस्मिन्पक्षे पञ्चदश त्रिवृता उत्तरस्मिन्मध्ये पृष्ठ्याश्च मासाः षष्ठे मासि त्रीनभिप्लवानुपेत्य पृष्ठ्यमुपेत्य नवरात्रं चाभिजितः स्थाने बृहस्पतिसवमिन्द्रस्तोमं विश्वजितः पृष्ठ्यमुपेत्याभिप्लवं च समूढच्छन्दसं दशरात्रं त्रिवृत् स्तोममग्निष्टोमसंस्थमुद्भिद्बलभिदौ च मध्ये पृष्ठ्यांश्चतुरो मासानुपेत्य मध्ये पृष्ठ्यावभिप्लवमुपयन्ते गोआयुषी छन्दोमदशाहं चे"ति । इत्यादित्यानामयनम् ।

अथाङ्गिरसामयनं संवत्सरमभिधीयते । तच्चादित्यानामयनवद्भवति । इयांस्तु विशेषः । अभिप्लवाः सर्वे त्रिवृत्स्तोमकाः पूर्वपक्षे मासाः पृष्ठ्यादयः । उत्तरपक्षे प्रतिलोमाः पृष्ठ्यान्ताः । षष्ठमासादौ मध्यमस्य स्थाने यः पृष्ठ्यो विहितः स उत्तमस्तृतीयस्याभिप्लवस्य स्थाने भवति । गोआयुषी प्रतिलोमे पूर्वमायुस्ततो गौरित्येवम्भवतः । छन्दोमदशाहोऽप्यत्र प्रतिलोमो भवति दशमादारभ्य प्रथमान्तः ।

अत्र गवामयनवदारम्भकालदीक्षादिकं सर्वम् । त्रीणि शतान्येकाधिकषष्ट्यधिकानि सुत्याहानि भवन्ति । तानि क्रमेण लिख्यन्ते । प्रायणीयः १ । चतुर्विंशमहः २ । तत एकः पृष्ठ्यः षडहः ६ । ततश्चत्वार-

**तिवातवतोरयनमेकैकेन पृष्ठ्यस्तोमेन मासं मासम् ॥१८॥ एकाहास्तच्छब्दात् ॥१९॥ नानाऽहानि वा सङ्घातश-ब्दात् ॥२०॥ मध्ये व्रतम् ॥२१॥ उत्तरपक्षे प्रतिलोमम् ॥२२॥**

---

त्रिवृतोऽभिप्लवाः षडहाः ३० । एवं प्रथमो मासः । एवं विधा एव द्वितीयतृतीयचतुर्थपञ्चममासाः । ततः षष्ठे मासे त्रयस्त्रिवृतोऽभिप्लवाः १८ । तत एकः पृष्ठ्यः २४ । ततस्त्रिवृद् बृहस्पतिसवः २५ । त्रयः स्वर-सामानः २८ । प्रायणीयः । चतुर्विंशाभ्यामस्य मासस्य पूरणम् ३० । एवं षण्मासाः । ततो मध्ये विषुवान् १ । ततः प्रतिलोमास्त्रयः स्वर-सामानः ३ । ततः पञ्चशस्तोमक इन्द्रस्तोम उक्थ्यसंस्थः । ततः प्रति-लोमः पृष्ठ्यः १० । तत एकस्त्रिवृदभिप्लवः १६ । ततस्त्रिवृतो व्यूढा अग्निष्टोमा दश २६ । तत उद्भित् २७ । ततो बलभित् २८ । महा-व्रतोदयनीयाभ्यामस्य मासस्य पूरणं कर्तव्यम् ३० । एवमयं सप्तमो मासः । अष्टमे मासे चत्वारस्त्रिवृतोऽभिप्लवाः २४ । तत एकः प्रति-लोमः पृष्ठ्यः ३० ।

एवमष्टमो मासः । एवमेव नवमदशमैकादश मासाः । ततो द्वादशे मासे द्वौ त्रिवृतावभिप्लवौ १२ । तत एकः पृष्ठ्यः १८ । तत आयुः १९ । ततो गौः २० । ततः प्रतिलोमो दशमादह्न आरभ्य छन्दो-मदशाहः । तत्र प्रथममहश्चतुर्विंशम् १ । द्वे अष्टाविंशे ३ । त्रिंशम् ५ । षट्त्रिंशम् ६ । चत्वारिंशम् ७ । चतुश्चत्वारिंशम् ८ । अष्टाचत्वारिं-शम् ९ । चतुर्विंशम् इति । एवं द्वादशो मासः । ततो महाव्रतम् । तत उदयनीय इति । इमे अहनी सप्तममासमध्ये गणिते । एवं ३६१ ।

मानवे—"अङ्गिरसामयनं त्रिवृत्स्तोमः षडहानां पुरस्तात्पृष्ठ्यो मा-सानां प्राग्विषुवत ऊर्ध्वमुपरिष्टात्पृष्ठ्यो मासानां षडहयोश्चायुश्च गौश्चा-नुलोमश्छन्दोमदशाह आदित्यानामयनेन शेषो व्याख्यातः स्वर्गकामा उपेयुरि"ति । आश्वलायनः—"आदित्यानामयनेनाङ्गिरसामयनं व्या-ख्यातं त्रिवृतस्त्वभिप्लवाः सर्वे पृष्ठ्यादयः स्त्वाष्टमासाः पञ्चपूर्वस्य पक्षसश्चत्वारस्तूत्तरस्य पृष्ठ्यान्ता अष्टमादय उत्तमस्य च मासस्यादौ ये षडहास्त्रयः पृष्ठ्यान्ता एता एव तेऽपि स्युः पूर्वोऽस्यामभिप्लवा-वि"ति । शाङ्खायनः—"अङ्गिरसामयने त्रिवृदभिप्लवः स्तोमः पृष्ठ्यारम्भ णान्मासानुपयन्ति पूर्वस्मिन्पक्षे पृष्ठ्य उत्तरस्मिन्नायुर्गौस्समानमन्य-दादित्यानामयनेने"ति ॥ इत्यङ्गिरसामयनम् ।

अथ दृतिवातवतोरयनसंज्ञं संवत्सरसत्रमभिधीयते । तत्र दीक्षादि सर्वं

कुण्डपायिनामयनं पौर्णमासीदीक्षम् ॥२३॥ चतुर्थ्यां वा

गवामयनवत् । गवामयनिकान्येवाहानि । तत्र विशेषः । एकैकेन त्रिवृत्पञ्चदशादिना पृष्ठ्यषडहस्य स्तोमेनैकैकं मासं कुर्यात् । प्रथमे मासि प्रत्यहं पञ्चदशस्तोमो भवति । द्वितीये मासि प्रत्यहं पञ्चदशस्तोमो भवति । तृतीये प्रत्यहं सप्तदशः । चतुर्थे प्रत्यहमेकविंशः । पञ्चमे प्रत्यहं त्रिणवः । षष्ठे मासे प्रत्यहं त्रयस्त्रिंश स्तोमः । एवं षण्मासा जाताः । मध्ये विषुवतः स्थाने महाव्रतम् । उत्तरपक्षं प्रातिलोमम् । तथाहि । सप्तमे मासि प्रत्यहं त्रयस्त्रिंशस्तोमो भवति । अष्टमे त्रिणवः । नवमे एकविंशः । दशमे सप्तदशः । एकादशे पञ्चदशः । द्वादशे त्रिणव इति ।

अत्र प्रायणीयोदयनीयौ प्रथमोत्तममासंख्य मध्य एव नातिरिक्तौ । अतिरिक्तावेवेति केचित् । मानवे—"दृतिवातवतोरयने पृष्ठ्यस्यैकैकेनाह्ना विषुवतो मासान्यन्ति विषुवतः स्थाने महाव्रतं तैरेवावृत्तैरुपरिष्टात्प्रथमोत्तमे अहनी अतिरात्रे ऋद्धिकामा उपेयुरि"ति ।

आश्वलायनः—"दृतिवातवतोरयनं प्रायणीयोतिरात्रस्त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासं त्रयस्त्रिंशेन मासं व्रतं विषुवत्स्थान एतैरेव मासैः प्रतिलोमैः पक्ष उत्तरमुदयनीयोऽतिरात्र एतेषामेकाहानामतिरात्रावित्यपरमन्यत्रयादिष्टेः कालपूरणेन चेत्संस्थानियम"इति ।

शाङ्खायनः—"दृतिवातवतोरयने पृष्ठ्यस्तोमानामेकैकेन मासं महाव्रतं विषुवानावृत्तानां पृष्ठ्यस्तोमानामेकैकेन मासमि"ति । काठके—"स्तोमविकारान्वक्ष्यामस्त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासं त्रयस्त्रिंशेन मासं महाव्रतं त्रयस्त्रिंशेन मासं त्रिणवेन मासमेकविंशेन मासं सप्तदशेन मासं पञ्चदशेन मासं त्रिवृता मासं दृतिवातवतोरयनमि"ति । छन्दोगसूत्रे विशेषः । "त्रिशिनः सुत्यामासान्सर्वत्र सञ्चक्षीरन्कौण्डपायिने च हाविर्यज्ञिकांस्तापश्चिते च दीक्षोपसदां दृतिवातवतोरयनेन द्वावेकोनौ मासौ सुनुयुस्त्रिवृताविति गौतमः त्रयस्त्रिंशाविति धानंजय्यस्त्रयस्त्रिंशौ षष्ठसप्तमौ एकोनौ" एकेनाह्ना न्यूनौ उभौ वा त्रिंशिनौ स्यातां यथैतद्ब्राह्मणमिति प्रायणीयोदयनीयाभ्यामेतयोर्मासयोः पूरणमिति पूर्वसूत्रयोरभिप्रायः । प्रथमोत्तमौ षष्ठसप्तमौ वा त्रिंशिनावेकोनौ अतिरात्रौ तु अधिकावित्यस्य सूत्रस्याभिप्रायः । तेनात्र सत्रे त्रीणि शतानि त्रिषष्ट्यधिकान्यहानि भवन्ति । यथाऽष्टम्यां दीक्षित्वा सप्तदश दीक्षाः कुर्वीरन् । तथा सत्यस्मिन्न-

**ऽपरपक्षस्य ॥२४॥ मासं दीक्षाः ॥२५॥ सोममुपनह्य सु· त्यास्थानेषु मासमग्निहोत्रं जुहति ॥२६॥ दर्शपूर्णमासा· भ्यां मासम् ॥२७॥ पक्षादौ यथर्द्धविस्तत्सर्वस्मिन् ॥२८॥ सारस्वते च प्रथमे ॥२९॥ तन्त्रेण वा समस्तचोदित· त्वात् ॥३०॥ अग्निहोत्रं च ॥३१॥ पृथङ्मासाश्चातुर्मास्य पर्वभिः ॥३२॥ साकमेधा दर्शपूर्णमासवत् ॥३३॥ सोमा वा सामान्यात् ॥३४॥ न जुहोतिशब्दात् ॥३५॥ काम· मितरे॥३६॥ दृतिवातवतोरयनपूर्वपक्षेण षण्मासान् ॥३७॥**

---

न्तिमे पक्षे इत्यर्थः ।

तस्यायनविचाराः पृष्ठ्येनैकैको मासो वर्त्तत इत्येके । पृष्ठ्येन त्रिवृ· दादिस्तोमविकृतेन । पृष्ठ्यस्तोमेनेति शाण्डिल्यः । अभिप्लवपृष्ठ्याभ्या· मिति शौचिवृक्षिः । पृष्ठ्याग्न्हेकैकेनेति शाण्डिल्यायनधावञ्जप्यौ । ज्योतिष्टोमे· नेति स्तोमकायनस्तस्य रथन्तरं पृष्ठं बृहच्च व्यत्यासं यथैवार्षेयकल्पेनोक्त· मिति त्रैरकल्मिभिरिति । इति दृतिवातवतोरयनम् ।

अथ कुडपायिनामयनसंज्ञकं सम्वत्सरसत्रमभिधीयते । तस्य चैत्र्यां पौर्णमास्यां दीक्षा भवति । अथवा फाल्गुनापरपक्षस्य चतुर्थ्यां वा मासं दीक्षा भवन्ति । द्वादशोपसदः । ततः प्रायणीयातिरात्रं कृत्वा सोममुपनह्य यत्नेन बध्वा सुगुप्ते देशे स्थापयित्वा सुत्यानां स्थानेषु प्रथमे मासे त्रिंशद्दिनात्मके प्रत्यहमग्निहोत्रं जुहोति । नित्याग्निहोत्रवत्तन्त्रेण पूर्वं प्रातरग्निहोत्रम् ।

ततो द्वितीये मासे सकले प्रत्यहं दर्शपौर्णमासाभ्यां तन्त्रेण यजन्ते । ततस्तृतीये मासे प्रत्यहं वैश्वदेवपर्वणा यजन्ते । ततश्चतुर्थे मासे प्रत्यहं वरुणप्रघासान्कुर्वन्ति । ततः पञ्चमे मासे प्रत्यहं साकमेधैर्यजन्ते । ततः षष्ठे मासे प्रत्यहं च शुनासीरीयैः । एवं षण्मासाः पूर्णाः सञ्जाताः । ततो दृतिवातवतोरयनस्य पूर्वपक्षेणानुलोमेनैवोत्तरान् षण्मासान् कुर्वीरन् । तत्र विशेषः । उत्तमे तेषां षण्मासानामन्त्ये षष्ठमासे त्रयोभि· प्लवाः षडहाः १८ । ततो द्वादशाहिके । दशरात्रः २८ । ततो महाव्र· तम् । तत उदयनीय इति ।

इदं सत्रमुपरिष्टादतिरात्रं भवति । उभयतोऽतिरात्रं वा । अतः प्रायणीयातिरात्रस्य विकल्पः । तत्रापि केचित्प्रायणीयमग्निहोत्रं दर्शपूर्ण मासचातुर्मास्येभ्यः परमिच्छन्ति । तथासति प्रायणीयस्येतरसोमानां

उत्तमे अयोऽभिप्लवा दशरात्रो महाव्रतम् ॥३८॥ उप-

चानन्तर्यमव्यवधानं भवति । केचित्तु हविर्यज्ञेभ्यः पूर्वमिति । अत्र सत्रे मत्सरुकाः मूलाभिन्नापकृद्दण्डरहिताः कुण्डप्रतिरूपाः कुण्डाकारा वृत्ताकाराश्चमसा भवन्ति सर्वेऽपि ।

तथा अस्मिन्सत्रे होता १। उद्गाता २। मैत्रावरुणः ३। प्रतिस्तोता ४। प्रतिप्रस्थाता ५। गृहपतिः ६। सुब्रह्मण्यश्च ७। एते सप्तैव ऋत्विजो भवन्ति । एतासां मध्ये आद्याः पञ्च त्रीणि त्रीणि ऋत्विक्कर्माणि कुर्वन्ति । तत्र होता आध्वर्यवं पोत्रीयं हौत्रम् एतानि त्रीणि करोति । मैत्रावरुणो ब्रह्मत्वं प्रातिहर्तृत्वं मैत्रावरुणसम्बन्धि चैतानि त्रीणि करोति । प्रस्तोता ब्राह्मणाच्छंसीयं ग्रावस्तोत्रीयं प्रस्तोतृसम्बन्धि चेत्येतानि त्रीणि करोति ।

प्रतिप्रस्थाता आग्नीध्रीमौन्नेत्रे प्रतिप्रस्थातृसम्बन्धि चैतानि त्रीणि कर्माणि करोति । गृहपतिर्गृहपतिकर्मैव करोति नान्यस्य । सुब्रह्मण्योऽपि स्वकीयमेव करोति नान्यस्य । यदा चैते होत्रादयोऽध्वर्य्वादेरन्यस्य कर्म कुर्वन्ति तदा मुख्यासनेभ्यः स्वस्वस्थानेभ्योऽनुसर्पन्तस्तस्य तत् स्थानमनुसंसृप्यानुसंसृप्य तत्र गत्वा गत्वा इतरसम्बन्धानि कर्माणि कुर्वन्ति । तत्रैव यदा होताध्वर्यवं करोति तदा स्वस्थानतोऽध्वर्युस्थाने गत्वाऽऽध्वर्यवं करोति ननु स्वस्थाने स्थितः ।

एवं यदा पोत्रीयं याज्यापाठादिकं करोति तदा स्वस्थानात्पोतृधिष्ण्यात् पश्चात्पोतुः स्थाने गत्वा करोति । एवं यदा उद्गाता नेष्टृच्छावाकीयं करोति तदा स्वस्थानान्नेष्टृच्छावाकस्थाने गत्वैव करोति नौदुम्बरीसमीपे स्वस्थाने उपविष्टः ।

एवं सर्वेषां मैत्रावरुणादीनामपि ज्ञेयम् । यदा च होतुराध्वर्यवहौत्रयोर्युगपत्कालः यथा सदसि स्थितेन याज्यावषट्कारादिकरणम् आहवनीये च होमादि तदा हौत्रं परित्यज्य होत्राध्वर्यवं कर्त्तव्यम् । हौत्रं च मैत्रावरुणेन । "वचनविरोधाभ्यामन्य"इति न्यायात् । एवं यौगपद्येन विरोधे सर्वेषां स्वस्वपदार्थं परित्यज्य परकीय परकीय पदार्थानुष्ठानम् ।

मानवे—"कुण्डपायिनामयनं मासं दीक्षिता भवन्ति ते मासि राजानं क्रीणन्ति द्वादशोपसद उत्तमायामुपसदि आपराह्णिकीं संस्थाप्य सोमं च महावीरांश्च निधायाग्निहोत्रेण दर्शपूर्णमासाभ्यां चतुर्भिश्चातुर्मास्यपर्वभिरेकैकेन मासाभयमस्यर्द्धमासं पूर्णमासस्यार्द्धमासममावास्यं संस्था-

**रिष्टादतिरात्रं भवति ॥३९॥ उभयतो वा ॥४०॥ हविर्य-ज्ञेभ्योऽतिरात्रमेके सोमानन्तर्यात् ॥४१॥ अत्सरुकाः कुण्डप्रतिरूपाश्चमसाः ॥४२॥ पञ्चर्त्विजस्त्रीणि त्रीणि**

---

प्य शुनासीर्यमुत्साद्य महावीराग्निप्रणयनप्रभृति 'पयोदोहनान्तं कृत्वोप-वसन्ति श्वो भूते प्रातरनुवाकप्रभृतिभिः पृष्ठ्याहोभिरेकैकेन मासान्य-न्त्यष्टादश त्रयस्त्रिंशान्यहानि दशरात्रौ महाव्रतमुदयनीयोऽतिरात्रः सप्त दीक्षिता मत्सरुकैश्चमसैः सोमान्भक्षयन्ति । यो होता सोऽध्वर्युः स पोता य उद्गाता सोऽच्छावाकः स नेष्टा यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्ता यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुत्स प्रतिप्रस्थाता सोऽग्नीत्स उन्नेता धत्ते गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्यो न वरुण-प्रघासेष्ववभृथं यन्ति भूतिकामा उपेयुरि''ति ।

काठके—"मासं दीक्षिता भवन्ति ते मासि सोमं क्रीणन्त्युपसद्भिश्च-रित्वा सोममुपनह्य मासं प्रातराद्यग्निहोत्रं जुह्वति मासं दर्शपूर्णमासाभ्यां यजन्ते मासं वैश्वदेवेन मासं वरुणप्रघासैर्मासꣳ साकमेधैर्मासꣳ शुना-सीर्येणाग्नीषोमीयेण चरित्वा त्रिवृता मासं पञ्चदशेन मासꣳ सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासं त्रयोभिप्लवा द्व्यहो दशाहो महाव्रत-मतिरात्रश्च कुण्डपायिनामयनमत्सरुकैश्चमसै भक्षयन्ति यो होता सोऽ ध्वर्युः स पोता य उद्गाता स नेष्टा सोऽच्छावाको यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्त्ता यो ब्राह्मणाच्छंसी स प्रस्तोता स ग्रावस्तुद्यः प्रतिप्रस्थाता सोऽग्नीत्स उन्नेता गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्य"इति ।

आश्वलायनः—"कुण्डपायिनामयनं मासं दीक्षिता भवन्ति । सोमं क्रीणन्ति तेषां द्वादशोपसदो भवन्ति । सोममुपनह्य प्रचार्य पात्रा-ण्युत्साद्योपनह्य मासमग्निहोत्रं जुह्वति मासं दर्शपूर्णमासाभ्यां यजन्ते मासं वैश्वदेवेन मासं वरुणप्रघासैर्मासं साकमेधैर्मासं शुनासीरीयेण यद्-हर्मासः पूर्यते तदहरिष्टिं समाप्याग्निप्रणयनादिधर्मोत्सादनादि वौपवस-थिकं कर्म कृत्वा श्वोभूते प्रसुनुयुस्तद्धैक उपसदा य एवानन्तरं कुर्वन्ति तथा दृष्टत्वात्सौत्यान्मासानग्निहोत्रादीन्वदन्तस्तदनुपपन्नम् । पश्वर्थं ह्य-ग्निप्रणयनं तस्य च श्वः सुत्यानिमित्तमतिप्रणीते वैगुण्यं दर्शपूर्णमा-सयोस्तथाग्निहोत्रस्य सदोहविर्धानाभ्यामाग्नीध्रायाग्नीषोमप्रणयनव-सतीवरीग्रहणानि पश्वर्थानि भवन्ति । सुत्यार्थादन्यकैस्तत्काला-श्चैव तद्गुणः सिद्धस्वभावानां तद्व्यवधानादन्यत्वं यथा पृष्ठ्याभिप्ल-वयोः सुगुणानां ह्येव कर्मणामुद्धार उपजनो वा सुब्रह्मण्यत्वात् मनव-

**कर्माणि कुर्युः ॥४३॥ होताध्वर्युवपोत्रीये च ॥४४॥ उद्गाता नेष्टुरच्छावाकीये ॥४५॥ मैत्रावरुणो ब्रह्मत्वप्रातिहर्त्रे ॥४६॥ प्रस्तोता ब्राह्मणाच्छंसिग्रावस्तोत्रीये ॥४७॥ प्रतिप्रस्थाताग्नीध्रोन्नेत्रे ॥४८॥ मुख्यासनेभ्योऽनुसंसर्प-**

---

धृते ह कालाधीनत्वादुत्सर्गमेके सुत्योपसद्गुणत्वात्क्रियास्वेव प्रवृत्तो ह्यन्तमगत्वावस्थाने वोर्षस्त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासं त्रिणवेन मासमष्टादशत्रयस्त्रिंशानि द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च सर्वेण यज्ञेन यजन्ते य एतदुपयन्ति"।

शाङ्खायनः—"मासं दीक्षा. कौण्डपायिनामयनस्य क्रीत्वा राजानमुपनह्योपसद उपेत्याग्निहोत्रेण दर्शपूर्णमासाभ्यां मासं चातुर्मास्यपर्वणामेकैकेन मासं त्रिवृत्प्रभृतीनां पञ्चानां पृष्ठ्यस्तोमानामेकैकेन मासमष्टादशाहं त्रयस्त्रिंशेन दशरात्रं महाव्रतमतिरात्रञ्चेति। यो होता सोऽध्वर्युः स पोता यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्ता य उद्गाता सोऽच्छावाकः स नेष्टा यः प्रस्तोता स ब्राह्मणच्छंसी ग्रावस्तुद्यः प्रतिप्रस्थाता सोऽग्नीत्स उन्नेता सुब्रह्मण्यः सुब्रह्मण्यो गृहपतिर्गृहपतिसन्निकर्षे वैदेश्यः प्रधानस्य वशं नयेदहः सङ्घातमापद्यमानो लभेत तायमानरूपाणि सांघातिका निवर्तहिनोरन्" इति।

छन्दोगसूत्रे विशेषः "पौर्णमासीप्रभृतयो दीक्षाः कौण्डपायिनस्य तस्योपवदन्तः उपवसथकर्म कृत्वातिरात्रमुपेयुरि"ति। शाण्डिल्य एव हि गृह्यते वृत्तिः यस्मादेव वृत्तिर्गृह्यते सर्वसत्राणां तत ऊर्ध्वं प्रातराहुत्युपक्रमाः सायमाहुत्यपवर्गा एकान्नत्रिंशतमहान्यग्निहोत्रं जुहुयुः मासमेवेति।

गौतमः—"सुत्यानां तु पुरस्तादुपसथकर्म स्यादतिरात्रश्चैवं गृह्यते। वृत्तिश्च हविर्यज्ञैः सुत्यानां श्रवणादतिरात्रो न स्यादिति धानञ्जय्यः। प्रत्यन्तार्थमन्येषु चोदयन्निह विधाति। उपसदन्त एवोपवसथकर्म स्यात्। अष्टादशभ्यो वोर्ध्वं शौनासीर्येभ्यो राजानं क्रीणीयुः। दीक्षोपसदां व्यवायो न्याय्य इति शाण्डिल्यस्ते मासि सोमं क्रीणन्तीति चानन्तरदीक्षाभ्यः क्रयं दर्शयति। उपवसथकर्म चानन्तरं सुत्याभ्यः स्यादाग्नीध्रीयादङ्गारान्मार्जालीयं हृत्वा पृथक् स्थालीपाकान् श्रपयित्वा पितृयज्ञान् कुर्वीरन्।

ततो दक्षिणाग्निं प्रणयेयुः पैतृयज्ञिकायाम्। आहवनीयाद्दक्षिणतो वरुणप्रघासेषु तस्मिन्कुर्युर्यद्दक्षिणाहवनीये कृत्यमुपवसथकर्म चेत्कृतं

मितराणि ॥४९॥ सर्पसत्रं व्यत्यासं विराट् कौसुरुबिन्द

स्यात् यथा प्रकृत्यैव ते । अग्निहोत्रे मासन्दीक्षितेऽत्र स्यादध्वर्युर्जुहुयादन्वारब्धा इतरे स्युः । अग्निहोत्रे मासे प्रकृतानां सत्रिणामग्निहोत्रोच्छिष्टेन वृत्तिर्भवतीति तदेव दर्शयति तेषामन्नं क्रियतेऽतिदीक्षितार्थमन्नम् तस्याध्वर्युर्जुहुयात् । इतरेऽध्वर्युमन्वारभेरन् जुह्वानम् । हवींष्येवेऽस्त्ययने यूपावस्थ्येषु न तत्र दीक्षितान्नमित्यर्थः । हविषां हि परिमाणमुक्तमन्यत् । इह तु तथाऽऽवधेयुः यथा यजमानानां हविःशेषेण वृत्तिर्भवति । अग्निहोत्रोपस्थानं विष्णुक्रमाः समिष्टयजूंषीति न क्रियेरन्नवभृथं गच्छन्तश्चेति शाण्डिल्यः समिष्टत्वादध्वर्युर्याः सूत्रे पुरस्तादुक्ताः सर्वं क्रियेतेति धानञ्जय्यो मासं दर्शपूर्णमासाभ्यामित्यामासाभ्यामित्यामावास्येन पूर्वपक्षमितरं पौर्णमासेन । आमावास्ये पितृयज्ञः सकृद्भूत्वा न स्यादिति गौतमो न सकृन्न न स्यादिति शाण्डिल्यो हरहः स्यादिति धानञ्जय्यो मासरठं० साकमेधैरिति गृहमेधीयेनेष्ट्वा तदेव शेषरठं० संस्थापयेयुरेवं त्रिशत्कृत्व उपेता भवन्तीति । त्र्यहापवर्गास्तेषां प्रकृतौ पञ्चदशकृत्व एवाभ्यस्येयुः समासः । अग्निहोत्रं दशहोतेति । दशहोतारं नामानामध्वर्यवोऽग्निहोत्रोपस्थाने धार्यन्ते । ऋत्विज उत्तरैरभिप्रेता वषट्कारिणोध्वरे भत्सरुकैश्चमसैर्भक्षयेयुः कुण्डप्रतिरूपैः । द्वात्रसमास उक्तो ब्राह्मणेन स्वासनादुपसञ्चारं ब्रह्मा कुर्यात । तथोद्गातृप्रस्तोतारावाग्नीध्रश्च ।

ब्रह्मा स्वासनादुपसञ्चारमुपसञ्चार्य उपसञ्चार्य इतरे मैत्रावरुणीयप्रतिहर्त्रं कुर्यात् । तथा उद्गाता स्वात्मनादुपसञ्चारमितरे हौत्रे नेष्ट्रीयाच्छावाकीयं करोति । तथा प्रस्तोता स्वासनादुपसञ्चारं ब्राह्मणाच्छंसीयग्रावस्तोत्रे करोति । अथाऽऽग्नीध्रः स्वासनादुपसञ्चारं प्रतिप्रस्थात्रोन्नेत्रे कुर्यात् । गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्य इत्यसमासं तयोर्दर्शयति । अनया वीप्सया ब्राह्मणमेतयोरसमासं दर्शयतीत्यर्थः ।

अथ कुण्डपायिनामयनस्य विशेषा लिख्यन्ते । चैत्र्यामिष्टकापशुरुखासम्भरणं च । तदहरेव दीक्षा । अशक्तौ स्वकाले इष्टकापशूखासम्भरणे । चतुर्थ्यां चेति पक्षे फाल्गुनकृष्णचतुर्थ्यां पशूखासम्भरणे । अत्राशक्तिपक्षेऽतीते सम्वत्सरे स्वकाले पशूखासम्भरणे मासं दीक्षाः द्वादशोपसदः । पौर्णमास्यां दीक्षापक्षे वैशाखकृष्णद्वादश्यां प्रायणीयः । चतुर्थ्यां चेति पक्षे वैशाखशुक्लप्रतिपदि प्रायणीयः । एवं सोमानामविरोधेनोपक्रमः ॥

अप्सुदीक्षायां विशेषः । होता गृहपतिं दीक्षयित्वा मैत्रावरुणं ब्रह्म-

द्वितीयं च ॥५०॥ गवामयनं वाभिगरश्रुतेः ॥५१॥ ॥ ४ ॥

त्वकारिणं दीक्षयति । तत उद्गातारं दीक्षयति । एतेषां पत्नीः प्रतिप्रस्थाता दीक्षयति । तत प्रतिप्रस्थाता होतारं प्रस्तोतारं सुब्रह्मण्यां च दीक्षयति । एतेषां पत्नीर्ब्रह्मचारी वा स्नातको वा अन्यो ब्राह्मणो वा दीक्षयति ।

ततः प्रतिप्रस्थातारं च सपत्नीकं ब्रह्मचर्यादीनामेवान्यतमो दीक्षयति । दीक्षणीयादौ यदाध्वर्यवहौत्रे युगपदापद्येते प्रयाजाज्यभागप्रधानयागादिषु तदा विरोधादन्यो मैत्रावरुणो हौत्रं करोति । यदा चाध्वर्यवहौत्रमैत्रावरुणानां सन्निपातः । यथा पशौ प्रयाजादिषु तदा विरोधादच्छावाको हौत्रं करोति । एवं सर्वत्र सर्वेषां ज्ञेयम् ।

अग्नीषोमीयानन्तरं प्रायणीयातिरात्रः । तत्र ऋतुयाज्यावरणे होतृसम्बन्धिकरणमच्छावाकस्य क्रियते । अच्छावाकस्य तदा होतृयाज्यापाठात् । ततोऽश्विनाध्वर्यू इति वरणमुद्गातृप्रतिप्रस्थात्रोः करोति । एतच्च कर्कसम्प्रदायकारमते । अन्येषां त्वग्निष्टोमेऽप्यध्वर्युः स्वयमेवैतत् वरणं करोति । तथैवात्रापीति । मित्रावरुणौ प्रशास्तारावित्यत्राविरोधात् इन्द्रो ब्रह्मेति प्रस्तोतुः । मरुतः पोत्रादीति पोतृवरणं विरोधादच्छावाकस्यैव नेष्ट्रवरणं च । आग्नीध्रवरणं प्रतिप्रस्थातुः । भक्षणमप्यृतुग्रहाणामेत एव कुर्वन्ति । चमसा वृत्ताकारा मत्सरुकाः । पत्नीसंयाजान्तमहः । प्रतिपत्तिसमापनम् । ततः सोमस्योपनहनम् ।

ततोऽग्निहोत्रहोमः प्रातरुपक्रमः । उभयोः प्रातर्होमसायंहोमयोस्तन्त्रेणानुष्ठानं दिवैव । होमे प्राजहितो गार्हपत्यः न शालाद्वार्यः । अतिप्रणीत एवाहवनीय इति कर्कः । तत्र चतुर्गृहीतं गृहीत्वा समित्पूर्वकमाहवनीये सूर्याय हुत्वा शेषं पात्रान्तरे उत्सार्य पुनः सायंहोमार्थं प्रपूर्य चतुर्गृहीतमुन्नीय पुनः समिदाधानपूर्वकमग्नये हुत्वा पात्रान्तरात्समासिच्य कूर्चं निधाय गार्हपत्यमवेक्ष्य तन्त्रेणोत्तराहुती हुत्वा द्विः प्रकम्पनादि कुर्यात् ।

गार्हपत्यदक्षिणाग्न्योरप्येकैकस्यामाहुतौ स्रुवद्वयपरिमितं पयो होतव्यम् । प्रातर्होमस्यात्र मुख्यत्वात्तदीयं तन्त्रम् । तेन विरोधे प्रातर्होमधर्माः । एवं मासमग्निहोत्रहोमः । सर्वेषां सञ्चरेण प्रवेशनमुदकभक्षणमुपस्थानम् निष्क्रमणं च । श्वोभूते दिवैव प्रातः प्रभृत्यग्निहोत्रहोमस्तन्त्रेण । एवं मासपर्यन्तं प्रत्यहमग्निहोत्रं कृत्वा द्वितीये मासे प्रत्यहं तन्त्रेण दर्शपूर्णमासौ कर्तव्यौ ।

तत्राग्न्यन्वाधानोत्तरकालं सद्य एव शाखाच्छेदनादि दध्नाऽऽतञ्चनान्तं कृत्वा दधि निष्पादयेत् । ततः प्रातर्दोहार्थं वत्सानपाकृत्य चतुरासन ब्रह्मोपवेशनादि सर्वं कार्यम् । नात्र पिण्डपितृयज्ञः । अनङ्गत्वात् । एवं द्वितीये मासे प्रत्यहं तन्त्रेण दर्शपूर्णमासावनुष्ठाय तृतीये मासे चातुर्मास्यानां प्रथमं वैश्वदेवं पर्व प्रत्यहं कर्तव्यम् ।

ततश्चतुर्थे मासे प्रत्यहं वरुणप्रघासाख्यं पर्व कर्त्तव्यम् । तत्र करम्भपात्राणि पूर्ववत्तुः क्रियन्ते । ततः पञ्चमे मासि प्रत्यहमेकाहिकचातुर्मास्यवत्तन्त्रेण साकमेधाख्यं पर्वानुष्ठेयम् । तत्र सम्प्रदायकारमते अनीकवत्यादित्रैयम्बकान्तानां तन्त्रेण निर्वपणादिकम् । तत्र पित्र्याहविषां दक्षिणामुखेन ग्रहणं कार्यम् ।

त्रैयम्बकानादुदङ्मुखैः। गृहमध्येऽन्ते दर्विहोमः । इडान्ते पितृयज्ञः । सर्वसमाप्त्यन्ते त्रैयम्बकसम्बन्धिपरिगमनादिकमिति । एतत्तु साकमेधा दर्शपूर्णमासवत्तन्त्रेण भवन्तीति तन्त्रत्वोक्त्यर्थक्तिकल्पितम् । बह्वृचानां शाङ्खायनसूत्रे चातुर्मास्यानामैकतन्त्र्ये प्रकारविशेष उपदिष्टोऽस्ति ।

"अपि वाप्येकपर्वण्ये पशौ चैन्द्राग्नेदीनि हवींष्युपहूयेडां पित्र्यास्त्र्यम्बकादूर्ध्वमनुयाजप्रभृति" इति सूत्रम् । अतश्च युक्तिकल्पनातः सूत्रकारोक्तिः साधीयसीति कृत्वाऽस्माभिः सैवाङ्गीक्रियते । तत्र चैवम् । अग्निः समारूढनिर्मथित एव । तेनात्र समारोपाद्यभावः । इध्मस्थाने शकलपरिधिनिधानम् ।

ततो गृहमेधीयार्थं तूष्णीं शाखाच्छेदनाद्यपाकरणान्तम् । ततो द्विरासनम् ब्रह्मोपवेशनम् ततः प्रणीताप्रणयनम् परिस्तरणपात्रासादनादि अनीकवदादीनां विश्वकर्मान्तानामिह हविर्ग्रहणादिपेषणान्ते गृहमेधीयार्थं दोहं कृत्वा तण्डुलान्प्रक्षाल्य तत्र संवापः कार्यः । आसादनकाले च गृहमेधीयचरुं गार्हपत्यसमीपात्स्वयमेवादाय वेदिसमीपे मुक्त्वा तूष्णींस्तीर्णां वेदिमभिमृश्य शकलान्याधाय मत्याऽऽवृत्य चरुस्थाली पिशीलके वा यथाकृतमासादयेत् । गृहमेधीययागे च स्थाल्या एवोपस्तरणाभिधारणे, न ध्रुवायाः ।

न प्राशित्रावदानं गृहमेधीयस्य । इडाभक्षणानन्तरं प्रसक्तस्य चरोर्ऋत्विग्भिरन्यैर्ब्राह्मणैश्च यथोक्तं भक्षणं कर्तव्यम् । ततो मार्जनादिभागपरिहरणान्तं कृत्वा दर्विहोमं कुर्यात् । तत आग्नीध्रीयादेकदेशमग्निमादाय मार्जालीये स्थापयित्वा पित्र्येष्टिः कर्त्तव्या । आप्त्यान्ते मार्जालीयाद्दक्षिणस्यां वेदिं कृत्वा तत्रातिप्रणीय वेदिमध्ये संस्थाप्य स्फ्यादानादि सकला पित्र्येष्टिः कार्या । ततस्त्र्यैयम्बका जुहोतयोऽपामुपस्पर्शनान्ताः

तत उल्मुके समस्यानुयाजादितन्त्रशेषसमाप्तिः । एवं "साकमेधा दर्शपूर्णमासवदि"ति कात्यायनसूत्रात्तन्त्रेण साकमेधानामनुष्ठानमुक्तम् । छन्दोगसूत्रे तु विशेषः-"मासं साकमेधैरिति गृहमेधीयेनेष्ट्वा तदैव शेषं समापयेयुरेवं त्रिंशत्कृत्व उपेता भवन्ती"ति । तेनैकस्मिन्नेवाहनि क्रमेण सर्वं त्र्यम्बकान्तं समारोपान्तं समापनीयं न तन्त्रेणेत्यस्य छन्दोगसूत्रस्यार्थः । इति कौण्डपायिनामयनं सत्रम् ।

अथ सर्पसत्रं नामसंवत्सरसत्रमभिधीयते । तत्र पूर्वं प्रायणीयः । ततो छन्दोमानां द्वितीया विराडेकाहोऽग्निष्टोमसंस्थः । तथा कौसुरुविन्ददशरात्रस्य यद्द्वितीयमहस्त्रिवृदग्निष्टोमः । एतदहर्द्वयं व्यत्यासं प्रयुञ्जानः सर्वं सत्रं पूरयेदिति कर्का याज्ञिकाश्च । गवामयनं वा विकृतमत्र भवति । कुतः । अभिगरं श्रुतेः । "षण्डकुषण्डावभिगरापगरावि"ति श्रवणात् । तौश्च गवामयन एव दृष्टौ । अतो गवामयनमेवात्र भवतीत्ययं तु पूर्वः पक्षः । कुतः । अभिगरापगरश्रवणदर्शनमात्रम् । विराट् कौसुरुविन्दद्वितीयं नेति वचनम् । तस्माद्वाचनिकमेव न्याय्यम् ।

तत्र ताण्ड्ये—"अतिरात्रावभितोऽग्निष्टोमा मध्ये सर्वो दशदशीसंवत्सरो द्वादशी विषुवोत्सर्पसामानि विषुवति क्रियन्त" इति । प्रायणीयोदयनीयौ सषोडशिकौ । अतिरात्रावुभयतो भवतः । मध्ये सर्वाण्यप्यहान्यग्निष्टोमसंस्थानि । अतिरात्रद्वयसहितः सर्वोऽपि संवत्सरो दशस्तोमको भवति । मध्यमं तु विषुवदहो द्वादशस्तोमकस्तत्र सर्पसामानि क्रियन्ते । तानि च कल्पसूत्रे उक्तानि सन्ति ।

अत्र द्वादशो विषुवानिति विषुवत् कीर्त्तनादभिपरापगरयोश्च गवामयनवन्महाव्रत एव वर्त्तमानयोरिह विधानाच्चात्र गवामयनिकान्येवाहान्यग्निष्टोममात्रविकृतीनि दशदशिस्तोममात्रविकृतीनि दशदशिस्तोममात्रविकृतीति च लिङ्गादत्र भवितव्यानि । तथाहि तत्रत्यं ब्राह्मणम्—"अभिगरापगरौ भवतो निन्दत्येवैनानन्योन्यं शंसतीति" । नैवम् । सूत्रकारेणैवेत्थमाशङ्क्य कल्पानुसारेणैव परिहृतत्वात् ।

तथा च सूत्रकारः-"सर्पसत्रं गवामयनं स्तोमसंस्थाविकृतमित्येके षण्डकुषण्डावभिगरापगरावति ह्याह" । प्रत्यक्षविहितं त्वाषयकल्पेन तत्र ह्यनुमानं न विद्यतेऽभिगरापगरावेवोपोत्तमेऽहना स्यातामिति । अतः कल्पकारेणैकेन बाधे राड्द्वन्द्वेन पुनः पुनरभ्यस्तेन सर्वो दशदशीति कल्पवचनात्तथैवानुष्ठेयानि ।

अत्र शाङ्खायनः-"अतिरात्रावभितोऽग्निष्टोमा मध्ये दशदशी संवत्सरो द्वादशी विषुवान् सर्पसत्रस्ये"ति । आश्वलायनः-"सर्पाणामयनं गो आयु-

**तापश्चितं दीक्षाः संवत्सरमुपसदश्च तथा सुत्याः ॥१॥ गवामयनेनेयुः ॥२॥ अग्निष्टोमेन वा ॥३॥ सर्वजिदभिजिद्विश्वजितां वैकैकेन ॥४॥ त्रिकद्रुकैर्वा ॥५॥ महातापश्चितं त्रिषंवत्सरोपसत्कम् ॥६॥ तुल्यमन्यत् ॥७॥**

---

षोस्तोम मानुलोमे षण्मासान्प्रतिलोमे यज्ज्योतिर्द्वादशोस्तोमो विषुवस्थाने प्रकाशकामा उपेयुरि"ति ।

मानवे—"अतिरात्रयोर्मध्येऽग्निष्टोमाः सर्वे दशदशी संवत्सरो द्वादशी विषुवान् सर्पसामानि विषुवन्ति क्रियन्त इवरो गृहपतिर्धृतराष्ट्र ऐरावतो ब्रह्मेत्येवमादीन्सर्पानार्त्विज्येऽधीयते तत्सर्वसत्रसमृद्धिकाम उपेयुरमृतत्वकामाः स्वर्गकामाश्चे"ति । काठके—सर्वा दशदशी संवत्सरो द्वादशी विषुवान्त्सर्पाणामयनमि"ति । इति सर्पसत्रम् ।

इति चतुर्थी कण्डिका ॥ ४ ॥

---

अथ तापश्चितसंज्ञं सत्रमभिधीयते । तत्र संवत्सरं दीक्षाः । संवत्सरमुपसदः । संवत्सरं सुत्या भवन्ति । त्रीणि शतानि षष्ठ्यधिकानीत्यर्थः । संवत्सरश्चात्र सावनो न चान्द्रः । 'यज्ञादौ सावनः स्मृत' इति श्रुतेः ।

तथा च छन्दोगसूत्रम्—"त्रिंशिनः सुत्यामासांत्सर्वत्र संचक्षीरन् कौण्डपायिने च हाविर्यज्ञियांस्तापश्चिते च दीक्षोपसदामि"ति । अत्र गवामयनेनैवाविकृतेन तापश्चितं कुर्युरित्येकः पक्षः । अग्निष्टोमसंस्थेन ज्योतिष्टोमेन वा सर्वं पूरयेयुः । सर्वजितेन वा । अभिजिता वा । विश्वजिता वा । समुदितैर्ज्योतिर्गौरायुर्भिस्त्रिकद्रुकैर्वा । कल्पसूत्रे—"गवामयनं तेन क्लृप्तं ज्योतिष्टोमेन वा क्लृप्तेने"ति ।

अत्र ब्राह्मणे ऽह्नां विशेषक्लृप्त्यभावात्सत्रप्रकृतिभूतगवामयनाह्नः क्लृप्तिः । यद्वा-सर्वप्रकृतिभूतज्योतिष्टोमेनाह्नां क्लृप्तिर्द्रष्टव्या । लाट्यायनः—एतेनोक्तस्तापश्चित्तस्य दीक्षादः ।

मानवे—"मध्यमतापश्चित्तं संवत्सरं दीक्षा भवन्ति संवत्सरमुपसद्भिश्चरन्ति गवामयनं सुत्यासु प्रजातिकामा उपेयुरि"ति । काठके—"संवत्सरं दीक्षिता भवन्ति संवत्सरमुपसद्भिश्चरन्ति संवत्सरं प्रसुता भवन्ति मध्यमतापश्चित" इति ।

शाङ्खायनः—"संवत्सरं दीक्षाः संवत्सरमुपसदः संवत्सरं सुन्वतीति तत्तापश्चितमित्याचक्षत" इति । आश्वलायनः—"त्रैवार्षिकं तापश्चित्तं तस्य सौत्यः संवत्सर उक्तो गवामयनेन ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतचतुर्विंशानां वैकैकमि"ति ।

**क्षुल्लकतापश्चिते चतुर्मासशो दीक्षोपसत्सुत्यानि ॥८॥ विषुवन्तमभितो गवामयनपक्षयोः प्रथमोत्तमौ प्रथमोत्तमौ ॥९॥ सहस्रसाव्यमग्नेः ॥१०॥ अभिप्लवानां चतुःषष्टिं शतं चतुरहश्च ॥११॥ त्रिषंवत्सरः षष्टिदीक्षम् ॥१२॥**

अत्र तापश्चिते मासशश्चितिपुरीषे चतसृणां पञ्चम्यामसपत्ना विराजः प्रथमेऽहंस्तोमभागा अन्वहं मासं पुरीषं तूष्णीं नाकसत्प्रभृतिमांसं पुरीषं चोत्तमयोरन्होर्विकल्पादिपूर्वं इत्येते विशेषाश्चयनप्रकरणे एवोक्ताः । इति मध्यमतापश्चितम् ।

अथ महातापश्चित्तं सत्रम्—तत्र त्रयः संवत्सरं उपसदो भवन्ति । अन्यदीक्षा सुत्यादिनापश्चितेन तुल्यम् । अत्र च षट्त्रिंशदहशः षड्त्रिंशदहशः संवत्सर इत्युक्तत्वात्षड्त्रिंशता षड्त्रिंशताहोभिश्चित्ति पुरीषे कर्तव्ये । इति महातापश्चितम् । अथ क्षुल्लकतापश्चित्तं सत्रम् । तत्र चत्वारो मासा दीक्षाः चत्वारो मासा उपसदः चत्वारो मासा सुत्या इति । अत्र "चतुर्मासोपसत्के द्वादशाहश" इत्युक्तत्वाद् द्वादशभिर्द्वादिभिरहोभिश्चित्तिपुरीषे कर्तव्ये ।

तत्र सत्रस्य मध्ये विषुवान् भवति । तं विषुवन्तमभितो गवामयनपूर्वपक्षस्य प्रथमोत्तमौ मासौ प्रथमषष्ठौ पूर्वपक्षे भवतः । पुनरुत्तरपक्षस्य प्रथमोत्तमाविति सप्तमद्वादशौ मासौ उत्तरपक्षे भवतः । तत्र यम् । प्रायणीयः १। चतुर्विंशमहः २। ततो गवामयनस्य प्रथमो मासः। चत्वारोऽभिप्लवाः पृष्ठ्यश्च मासः इत्येवं रूपः ।

ततः पूर्वपक्षस्य षष्ठो मासः । षष्ठे त्रयोऽभिप्लवाः पृष्ठ्योऽभिजिदग्निष्टोमास्त्रयः । स्वरसामानोऽग्निष्टोमा उक्थ्या वेत्यं रूपोऽष्टाविंशतिदिनात्मकः । अस्य प्रायणीयचतुर्विंशाभ्यां पूरणम् ३०। ततो मध्ये विषुवान् १। ततो गवामयनस्य सप्तमो मासः । ततो गवामयनस्य द्वादशो मासः । षष्ठे त्रयोऽभिप्लवा गोआयुषी दशरात्रो महाव्रतमुदयनीय इति।

अत्रापि महाव्रतोदयनीयौ तृतीयमासपूरणार्थौ । एवं विधाश्चत्वारो मासा अत्र सुत्या भवन्ति । मानवे—"क्षुल्लकतापश्चित्तं चतुरो मासान् दीक्षिता भवन्ति । चतुर उप द्भिश्चरन्ति चतुर्भिः पृष्ठ्याहोभिरेकैकेन मासान्यन्ति स्वर्गकामा उपयुरि"ति । काठके-"चतुरो मासा दीक्षिता भवन्ति । चतुर उपसद्भिश्चरन्ति चतुरः प्रसुता भवन्ति क्षुल्लकतापश्चित्तमि"ति ।

शाङ्खायनः—"चतुरो मासा दीक्षा चतुर उपसदश्चतुरः सुन्वन्तीति गवामयनस्य प्रथमोत्तमौ मासावष्टाविंशनौ च विषुवन्तश्च तत्क्षुल्लक-

यथाशक्ति वा ॥१३॥ आदितस्त्रयः संवत्सराः सौत्याः ॥१४॥ महासत्राण्यतः ॥१५॥ चतुर्भागं चतुर्भागमेकैकस्य ज्यौतिष्टोमिकैः स्तोमैः॥१६॥तेष्वतिरात्र-विषुवन्तः स्युर्वा न वा ॥१७॥ आद्यन्तयोर्वाऽतिरात्रौ विषुवांश्च मध्ये मध्ये ॥१८॥ द्वादशसंवत्सरं प्रजापतेः ॥१९॥ षट्त्रिंशत्संवत्सरं शाक्त्यानां तरसमयाः पुरोडाशाः ॥२०॥ सर्वत्रा-

---

तापश्चित्तमित्याचक्षत" इति । आश्वलायनः—"क्षुल्लकतापश्चित्तं प्रथमं संवत्सरं सदीक्षोपसत्कं तस्य चत्वारः सौत्या मासा गवामयनस्य प्रथमषष्ठसप्तमोत्तमा" इति । इति क्षुल्लकतापश्चितम् ।

अथाग्निसत्रं सहस्रसाव्यं नाम सत्रमभिधीयते । तत्र सहस्रं सुत्या भवन्ति । प्रायणीय १। ततो ज्योतिः २। गौः ३। आयुः ४। इति त्रिकद्रुकाः । ततश्चतुःषष्ट्यधिकं शतमभिप्लवाः । एतावद्भिः षडहैर्नवशतानि चतुरशीत्यधिकान्यहानि भवन्ति । ९८४ । एवं ९८८ । ततो दशरात्रः । ९९८ । महाव्रतम् ९९९ । उदयनीय इति १००० । मानवे-"अतिरात्रयोर्मध्ये सहस्रमहानि शतकृत्वो दशरात्रस्यावृत्तिरग्नेः सहस्रसाव्यं विपाप्मनावेत्तमहीति कामयमाना उपेयुरि"ति ।

काठके—"सहस्रं त्रिवृतां संवत्सराणां प्रजापतेः सहस्रसाव्यमि"ति शाङ्खायनः—"अतिरात्रः सहस्रमहान्यतिरात्रोऽग्नेः सहस्रसाव्यमि"ति । आश्वलायनः—"अग्नेरग्निष्टोमं सहस्रं सहस्रं साव्यमित्येनदाचक्षत" इति । इति सहस्रसाव्यम् ।

अथ त्रिसंवत्सरं सत्रमुच्यते । अत्र षड्दीक्षा भवन्ति । यथा शक्ति वा । द्वादशोपसदः । त्रीणि वर्षाणि सुत्याः १०८० । तत्रादितस्त्रयः संवत्सराः सौत्या भवन्ति । आदित इत्यादि मासं वत्सराद्गवामयनप्रभृति त्रयः संवत्सराः । सुत्याहानि भवन्ति । गवामयनं प्रथमः संवत्सरम् । आदित्यानामयनं द्वितीयः सम्वत्सरः अङ्गिरसामयनं तृतीयः संवत्सरः इति ।

मानवे—महातापश्चित्तं त्रीणि वर्षाणि दीक्षिता भवन्ति त्रीणि वर्षाण्युपसद्भिश्चरन्ति गवामयनमादित्यानामयनमङ्गिरसां च त्रिसंवत्सरं सुत्या प्रथमोत्तमे अहनी सातिरात्रे ऋद्धिकामा उपेयुरि"ति । काठके—"एता एव दीक्षोपसदो गवामयनं प्रथमः संवत्सरा आदित्यानां द्वितीयोऽङ्गिरसां तृतीयो महातापश्चित्तमि"ति । एता एवेति संवत्सरसंख्याकामध्यमतापश्चितोक्ताः ।

**विशेषात् ॥२१॥ सवनीया वा बहुश्रुतेः ॥२२॥ शतसंवत्सरं साध्यानाम् ॥२३॥ सहस्रसंवत्सरं विश्वसृजाम् ॥२४॥ यात्सत्राणि सारस्वतानि ॥२५॥ सदो-हविर्द्धानाग्नीध्राणि चक्रीवन्ति ॥२६॥ उलूखलबुध्नो यूपः प्रकृष्यः ॥२७॥ वत्सतरीशतमृषभाधिकं गर्भिणीनामुत्सृजन्ति सहस्रपूरणाय॥२८॥ उपकिरन्त्युपरवस्थानेषु न खनन्ति ॥२९॥**

---

अत्र छन्दोगसूत्रम्—"पौर्णमासी प्रसवं त्रिसंवत्सरं तस्य यथाकामी दीक्षाणां पष्ठिरि"ति। शाण्डिल्यः-"प्रथमोत्तमौ संवत्सरौ व्यतिहरेद्वितीये-केऽभिप्लवस्तोमपृष्ठ्यदेशरोहार्थं इति यथाम्नायमेवापेयुरि"ति। शाङ्खायनः—"गवामयनं प्रथमः संवत्सर आदित्यानामथाङ्गिरसां त्रिसंवत्सरं प्रजापतिकामानामि"ति। इति संवत्सरत्रयम्।

अथ महासत्राण्युच्यन्ते। एतेषु वक्ष्यमाणेषु द्वादशसंवत्सरादिषु सहस्रसंवत्सरान्तेषु सर्वेषु महासत्रेषु एकैकस्य महासत्रस्य चतुर्भागं चतुर्भागं चतुर्थं चतुर्थं भागं ज्योतिष्टोमिकैस्त्रिवृत्पञ्चदशसप्तदशैकविंशैः स्तोमैः पूरयेत्। प्रथमं भागं त्रिवृत्स्तोमेन द्वितीयं पञ्चदशेन तृतीयं सप्तदशेन चतुर्थमेकविंशेन तत्र त्रिवृत्स्तोमा अग्निष्टोमाः। पञ्चदश सप्तदशैकविंशा उक्थ्या इति। तदुक्तं छन्दोगसूत्रे-"अग्निष्टोमास्त्रिवृत उक्थ्याः पर" इति।

एतेषु महासत्रान्तर्गतेषु प्रायणीयोदयनीयावतिरात्रौ विषुवांश्च एते त्रयोऽपि प्रतिसंवत्सरं भवेयुर्न भवेयुर्वा। अथवा सत्रस्याद्यन्तयोरतिरात्रौ भवतो न प्रतिसम्वत्सरम्। विषुवांश्च प्रतिसंवत्सरं मध्ये मध्ये भवति। तस्य संवत्सरात्मकत्वेन श्रवणात्। "आत्मा वै संवत्सरस्य विषुवानङ्गानि मासा" इति।

अत्र छन्दोगसूत्रे विशेषः-"अग्निष्टोमास्त्रिवृत उक्थ्याः पर" इति। तत्र वचनादतिरात्रा न स्युर्विषुवतश्चेति"। शाण्डिल्यः-इतरः सत्रस्थाय इति धानञ्ज्योऽति रात्रावभितः स्यातां मध्ये विषुवान् बृहत्पृष्ठो रथन्तरमध्यन्दिनः पञ्चदशः सप्तदशः प्रायणीयोदयनीयौ सत्रस्याभित आद्यन्तयोः स्यातां विषुवान् स्यात् बृहत्पृष्ठोरथन्तरमाध्यन्दिनं पञ्चदशसप्तदशौ स्तोमौ स्तोत्रेषु व्यत्यासेन स्याताम्। एकत्रिक इव एकैकस्मिन्नेव तत्संवत्सरवर्गं स्यात्। त्रिवृदादिस्थाने दीक्षा भवति। तत्रारम्भात्पूर्वं एकेन ऋषभेणाधिकं गर्भिणीनां वत्सतरीणां शतमुत्सृजन्ति ताभिरेव गवां शतस्य पूरणार्थम्।

**शुक्लपक्षसप्तम्यां दीक्षा सरस्वतीविनशने ॥३०॥ द्वादशाहवद्दीक्षोपसदः ॥३१॥ अषोडशिकावतिरात्रौ ॥३२॥ तत्रैव प्रायणीयोऽतिरात्रः ॥३३॥ सान्नाय्यश्च तस्मिन् ॥३४॥ स९ स्थितेऽध्वर्युराहवनीयसमीपे स्थित्वाभ्यध्वं९ शम्यां प्रास्यति तद्गार्हपत्यस्थानम् ॥३५॥ यथोक्तमाहवनीयस्य ॥ ३६ ॥ ॥ ५ ॥**

**यथास्थितं यज्ञाङ्गानि हरन्ति ॥१॥ पांसूनादाय**

---

अत्र द्वादशदीक्षाः। द्वादशोपसदः। अत्र शालासदो हविर्द्धानाग्नीध्राणि चक्रीवन्ति चक्रयुक्तानि मञ्जूषादिवद्भवन्ति। यथा तद्वदेव पुरुषादिभिः प्रेरितान्येव देशान्तरं प्रति चलन्ति। तथा। यूप उलूखलबुध्नो भवति। उलूखलवत्पृथुबुध्नः। उपात एव परितः प्रच्छाद्य एव नतु निखनोयः। स च देशान्तरनयनकाले प्रकृष्यः प्रकर्षणीयः। भूमिलग्न एव प्रेरणीयो न भृत्याद्यानेय इत्यर्थः।

अतश्चात्रावटसम्बन्धि कर्माभावः। तथा। उपरवस्थानेषु पांसूनुपकिरन्ति न खनन्ति। "आलिखेयुरेवैनान्न खनन्तीति सूत्रान्तरे। तत्र वैशाखशुक्लप्रतिपदि अषोडशिकः प्रायणीयोऽतिरात्रः सरस्वती विनशन एव भवति। द्वितीयायां तस्य पत्नी संयाजान्तं कृत्वा प्रतिपत्तिसमापनं कुर्यात्। ततस्तदानीमेव सान्नाय्येष्टिः।

छन्दोगकृतौ-"यदहरतिरात्रो भवति। तदहर्वत्सनाया कुर्वन्ति संस्थितेति सान्नाय्येन यन्त इति श्रुतिः "पुरा रात्रेः सायन्दोहं दोहयेरन्संस्थितेऽतिरात्रे प्रातर्दोहमि"ति छन्दोगसूत्रे। अतः पूर्वेद्युः सायं दोहानन्तरं रात्रावेव प्रातर्दोहार्थं वत्सापाकरणं कर्तव्यम्।

तत्र केवलेन दुग्धदधिरूपेण सान्नाय्येनैव यागो न पुरोडाशेन। ततः श्वः प्रभृति सर्वहविर्युक्ता दर्शेष्टिः केवलेन सान्नाय्येनैवेति। मानवे- "तत्र प्राजहितो गार्हपत्यः ततः सान्नाय्येऽष्टौ संस्थितायामध्वर्युराहवनीयसमीपे स्थित्वाऽभ्यध्वं आध्वानं प्रतिशम्यां प्रास्यति। मार्गं प्रति बलाद् दूरं प्रक्षिपति। एवं प्रेषिता शम्या यत्र पतति तत्र गार्हपत्यस्थापनम्। ततो यथोक्तमाहवनीयस्य स्थापनम्।

इति पञ्चमी कण्डिका ॥ ५ ॥

---

अथ स्थितान्येव यज्ञाङ्गानि शाला सदोहविर्द्धानाग्नीध्राणि यत्र

भौमानां यथादेशं निवपन्ति॥२॥यजनीययोरन्होर्गोऽआ-

गार्हपत्यस्थापनं कृतं तं देशं प्रतिहरन्ति । तत्र हुत्वा देवयजनान्तरे यदा देशं निवपन्ति तूष्णीमेव । अत्र छन्दोगसूत्रे विशेषः—"समश्चेद्भूमिभागः । स्यादनुपूर्वं विषमश्चेद्देदेः पांसून्हरेयुस्तथोत्तरवेदिधिष्ण्येभ्यश्च तन्निवेश्य यथायतनं निवपेयुरि"ति । पुरो देशो यदि समः स्यात्तदा सदआदिकं यथा संस्थानमेव नयेयुः । विषमदेशश्चेत्तदा शकटगमनयोग्येन प्रदेशेन पृष्ठतः पृष्ठतो नयेयुरित्यर्थः ।

ततः सदः प्रभृतिषु यथास्थानं स्थापितेषु पूर्वमानीतान्यां सून्निवपेयुः । न तत्र मन्त्रतो वेद्यादेः करणमस्ति । तत्र पुनः दर्शेष्टिः । तस्यां समाप्तायां पुनस्तस्मैशम्यध्वं शम्याः प्रासनादि । एवं सर्वस्मिन् शुक्लपक्षे प्रत्यहं दर्शेष्टिः । ततो यजनीययोरन्होर्गो आयुषी भवतः । पौर्णमास्यां गौः । अमावास्यायामायुः । तत्र चतुर्दश्यां पूर्वे शालायामेव वसतीवरीग्रहणादि कृत्वा पौर्णमास्यां गौरुक्थ्यः पत्नीसंयाजान्तः । ततः प्रतिपत्तिसमाप्तिः । प्रातः प्रतिपदि पौर्णमासम् । एवमन्वहं शम्याप्रासपूर्वकं कृष्णपक्षे पौर्णमासेष्टिः ।

तत्र चतुर्दश्यां शाखाच्छेदनादि पयस्यार्थं वत्सापाकरणान्तं प्रातरमावास्यायामायुरुक्थ्यः पत्नीसंयाजान्तः । कृष्णपक्षे प्रत्यहं पौर्णमासेष्टिः । शुक्लपक्षे प्रत्यहं दर्शेष्टिः । पौर्णमास्यां गौः । अमावास्यायामायुरित्येवं सत्रसमाप्तिपर्यन्तं कुर्वतः सरस्वत्या दक्षिणेन तीरेण प्लक्षप्रास्रवणं सरस्वत्या उत्पत्तिस्थानं प्रतिगच्छन्ति । एवं प्रतिदिनं शम्याप्रासमात्रमध्वानं गच्छतां यदा सरस्वतीमध्ये दृषद्वती नदी सङ्गमो भवति । तत्रापोनप्त्रीं यश्चरुर्भवति । पुनस्तथैव गच्छन्तो यदा प्लक्षप्रास्रवणं प्राप्नुवन्ति । तत्राग्नयेकामायेष्टिं कुर्वन्ति ।

अस्यामिष्टौ कृतायां बालकसहितां मानुषीं स्त्रियं च प्रासर्पकेभ्यो दद्युः । ततस्तत्र प्लक्षे प्रास्रवणे आग्नेयीमिष्टिं कृत्वा कारपचवदेशे उदयनीयातिरात्रः प्राग्वाऽवभृथादग्नये कामायेष्टिः । यमुनाया अवभृथं कुर्वन्ति कारपचवदेश एव । उदयनीयान्ते यज्ञोपकरणानि वा प्रासर्पकेभ्यो दद्युरिति कर्कः ।

अवशिष्टं यद्यज्ञोपकरणं घृतधान्यसुवर्णद्रव्यादिकं तदप्यन्यस्मै गुणवते दद्युरित्येक आहुः । तदुक्तं छन्दोगसूत्रे—"यज्ञोपकरणशेषांश्चाभिरूपायास्मै दद्युरि"ति । उदवसानीयान्ते वाग्नयेकामायेष्टिर्भवति । ततो यजमानायथार्थं गच्छेयुः । सारस्वतसत्रेषु पृष्ठशमनीया भाव एव । सारस्वतसत्रकर्तॄणां त्रीणि साम्युत्थानानि भवन्ति ।

युर्षी ॥३॥ पर्वान्तरेषु दर्शपूर्णमासौ ॥४॥ शम्याप्रासे शम्याप्रासे वसन्तो यजमानाश्च यन्ति दक्षिणेन तीरेण ॥५॥ दृषद्वत्यप्ययऽपोनप्त्रियश्चरुः ॥६॥ अग्नये कामायेष्टिः

---

अपरिसमाप्त्यस्यैव सत्रस्य परित्यागे कारणानीत्यर्थः। तत्रैकं गवां सहस्रस्य पूरणम्। यत्पूर्वमृषभादिकं वत्सरीणां गर्भिणीनां शतं सहस्रपूरणार्थमुत्सृष्टं भवति। यदि च ताभिर्वत्सतरीभिः पुनः पुनः प्रसूताभिः कियद्भिर्वर्षैर्यदा सहस्रपूरणं भवति।

तदैव गोसंज्ञकमतिरात्रं कृत्वा तदेव गोसहस्रं प्रार्पकेभ्यो दत्वाऽभ्युत्तिष्ठेरन्। तथा द्वितीयं समुत्थानकारणं गृहपतेर्मरणम्। तदा आयुरतिरात्रं कृत्वाऽवभृथादिकार्यम्। तथा तृतीयं साम्युत्थानकरणं सर्वज्यानिः सर्वस्वहानिः।

यदा एवमुत्पथेन गच्छता चौरादयो दीक्षितानां सर्वा गाः अपहृत्य यान्ति प्रकारान्तरेण वा सर्वासामुत्सृष्टानां गवां मरणहरणादिना हानिर्भवति तदा विश्वजितमतिरात्रं कृत्वाऽवभृथादि समापयेत्। अथवा त्रिष्वपि साम्युत्थानेषु ज्योतिष्टोमातिरात्र एव भवति न पूर्वोक्ता गौरादयः। यदा च साम्युत्थानं क्रियते तदावभृथः सरस्वत्यां न कार्यः। किं तर्हि परिपार्श्वषूदकेषु समीपवर्त्ति तडागादि जलेषु क्रियते। यदि समीपे अन्यदुदकं न भवति तदा सरस्वत्या उदकं महति पात्रे उद्धृत्य निपानादौ वा उद्धृत्य तत्रावभृथं कुर्यात्।

मानवे—"सरस्वत्या अथ ये दीक्षन्ते च क्षीणन्ति दीक्षितस्य शालाग्नीध्रीय सदोहविर्द्धानानि च वेदिमात्रे संमीमियुर्नवेदिं मिमीतेनोत्तरवेदिमुलूखलबुध्नो यूपः प्रेष्य उपोप्तेभिषु एवन्ति नोपरवात्खन्त्यतिरात्रे सवनीयस्य वपायां हुत्वेन्द्राय सान्नाय्याय वत्सानपाकरोत्यग्निष्टोमं संस्थाप्येध्माबर्हिः सन्नह्यति षोडशिनं संस्थाप्य सायं दोहयत्यतिरात्रं संस्थाप्य सान्नाय्येन यजन्ते सान्नाय्यं संस्थाप्याग्रेणाहवनीयमवस्थायाध्वर्युः प्राचीं शम्यां प्रास्यति सा यत्र निपतति तद्गार्हपत्यस्थानम्।

ततः षड्त्रिंशत्प्रक्रमेष्वाहवनीयस्तत्रानन्हृत्याग्नीन्वेदिमात्रे सदोहविर्द्धानादीनि प्रतिष्ठाप्य सान्नाय्येन यजन्ते न पूर्वपक्षं यन्ति गोरुकथ्यः पौर्णमास्यां संस्थिते पौर्णमासेन यजन्ते तेनापरपक्षं यन्त्यायुरुकथ्योऽमावास्यायां सान्नाय्ये पूर्वपक्षान्यन्तिपौर्णमासेनापरपक्षान् दीक्षिष्यमाणाः इवेतं गोवृषभमुत्सृजन्ति ता यत्र सहस्रं सम्पद्यते तदुत्थानं सर्वासूपहृतासुत्थानं गृहपतौ प्रेत उत्थाने प्लाक्षं प्रस्रवणं प्राप्योत्थानं